ननु न यत् किंचिदतीतं पूर्ववृत्तत्वेन वक्तव्यम् अतिप्रसङ्गात्। अतो- वर्त्तिष्यमाणोपयुक्तमेव पूर्ववृत्तमथ-शब्दोपस्थापितमिति तस्य हेतुत्वमपि शास्त्रान्तरश्रवणनैरपेक्ष्येण तेनैव वस्तुसामर्थ्येन सिद्धमिति किमतः-शब्देन ?। नैवम्। अथ-शब्दाक्षिप्तहेत्वसिद्धिशङ्कापरिहारार्थत्वादतः-शब्दस्य, हेतुश्च विशिष्टः, तस्य विशेषणांशविशेष्यांशयोरसिद्धिशङ्कातत्परिहारप्रकारौ सूत्रकाराभिप्रेतौ परस्ताद्दर्शयिष्येते, इति प्रयोजनवत्तरं पदद्वयम्।

मू० अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफल-केवल-कर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्म-जिज्ञासा ह्यनन्तरभाविनी॥

टी० अत्रेति-पदसूचितब्रह्मजिज्ञासापदसामर्थ्यसिद्धं वृत्तं वर्त्तिष्यमाणं तयोर्हेतुमद्भावं च विवृण्वन् उक्तमानन्तर्यमुपपादयति "अधीतेति"। कर्मज्ञान-शब्देन वृत्तमुक्तं, ब्रह्मजिज्ञासा-पदेन वर्त्तिष्यमाणमुक्तम्। अल्पास्थिरफला-नन्तस्थिरफल-शब्दाभ्यां हेतुहेतुमद्भावो दर्शितः। केवल-शब्देन ब्रह्मज्ञानपूर्वककर्मव्यावृत्तिः। कर्मज्ञानस्यैव पूर्ववृत्तत्वं कथ?मनन्तस्थिरफलापातप्रतीतिश्च कथम्? इति शङ्कया"मधीतेत्यादिपदेन तदुपादानम्। सशिरस्कवेद-शब्देन कृत्स्नाध्ययनस्य विहितत्वं, व्याख्यानपौर्वापर्यहेतुभूत-व्याख्येयपौर्वापर्यनियमो भागद्वयस्यैकप्रबन्धत्वं च सूच्यते। साङ्ग-शब्देनानन्तस्थिरफलापातप्रतीतिजनकत्वहेतुर्दर्शितः। "कल्पपदे तथाङ्गानि"[१]"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते"इत्यादिवचनान्यधीतसाङ्गसशिरस्कवेदस्येत्यत्राभिप्रेतानि। एवमधीतेत्यादिषष्ठ्यन्तविशेषणद्वयेन ब्रह्मजिज्ञासापदसामर्थ्यानुगृहीताथातःशब्दोपस्थापितोधिकारिविशेषः प्रदर्शितो भवति। समधिगतकर्मा सांसारिकफलनिर्विण्णोनन्तस्थिरफलाकाङ्क्षी हि शास्त्रमधिकरोति। "अनन्तस्थिरफलब्रह्मजिज्ञासे"ति। अनन्तस्थिरफलरूपस्य ब्रह्मणो जिज्ञासेत्यर्थः। अनन्तस्थिरफलत्वस्य ब्रह्मजिज्ञासाविशेषणत्वे जिज्ञासायास्तथात्व-

१ मनु॰ अ॰ २ श्लोक १४०॥

मागमोत्थविवेकादिजन्यज्ञानद्वारेणेति द्रष्टव्यम् । "अनन्तरभाविनी"तिपदेनाथातः—शब्दफलितं हेतोः शास्त्रान्तरनैरपेक्ष्यं विवक्षितम् । कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे कर्मणामल्पास्थिरफलत्वनिर्णयसहितानन्तरफलापातफलप्रतीतिरित्ययं विशिष्टोहेतुः । अतः—शब्देन वृत्तस्य कर्मविचारस्य हेतुतयोक्तत्वात् कर्मविचारस्य साङ्गाध्ययनजन्यानन्तस्थिरफलापातप्रतीतिपूर्वकत्वादावृत्तिविधानादिभिः कर्मणामल्पास्थिरफलहेतुत्वावगमाच्च । अयं विशिष्टोहेतु"रधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्ये"त्यनेनोक्तः । अत्रा"धिगते"तिपदेन कर्मणः फलद्वारा हानाय, ज्ञातव्यत्वं कण्ठोक्तं स्वरूपेणोपादानाय ज्ञातव्यत्वमपि, कर्मविचारपूर्ववृत्तत्वे हेतुः, अपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति हि वक्ष्यते, तत्र स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता, उपायतदितिकर्तव्यताविशेषैः सहैव ह्यनन्तस्थिरफलापातप्रतीतिरिति इति विशिष्टहेत्वन्तर्भावउपरितनग्रन्थाविरोधश्च ।

ननु कर्मविचारो ब्रह्मविचारस्य निरपेक्षहेतुश्चेत् कृतकर्मविचारैः सर्वैरपि ब्रह्म विचार्येतेति स्वर्गार्थकर्मानुष्ठानाभावप्रसङ्गः । मैवम् । अश्रुतमीमांसत्वेऽप्युपाध्यायादिवचनाद् येनुतिष्ठन्ति तेषां स्वर्गार्थानुष्ठानाविरोधात् । श्रुत्वापि ये स्वर्गार्थिनः तेषामदृष्टवैगुण्यात् असमीचीनव्याख्यानश्रवणमूलस्यामुमुक्षुत्वस्य संभवाच्च । साङ्गाध्ययनं कर्मविचारस्य पूर्ववृत्तं चेदधीतसाङ्गवेदैः सर्वैरपि कर्म विचार्येत ।

न च तथा क्रियते, वेदेधीतेप्यश्रुतकर्ममीमांसा हि बहवो दृश्यन्ते तेषां कर्मविचारानधिगतिरदृष्टदेशकालादिवैगुण्यात् न तु साङ्गाध्ययनस्य पूर्ववृत्तत्वाभावादिति चेत् तदिहापि तुल्यं, तथा साधनचतुष्टयादिलाभेप्यनधिगतब्रह्मविचारानेकपुरुषदर्शनात् साधनचतुष्टयादेर्ब्रह्मविचारं प्रति नियमेन हेतुत्वं कथमिति परिचोदिते तत्पूर्ववृत्तत्ववादिभिरप्यदृष्टादिवैगुण्याददोषइति परिहर्त्तव्यं, तदिहापि तुल्यं दुष्परिहरदूषणान्तरसद्भावस्तेषां वैषम्यम् । तस्माद् घटनिष्पत्तेः कुलालादिवद् ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियतः, दृष्टादृष्टप्रतिबन्धकविरहितस्य समीचीनः कर्मविचारो ब्रह्मविचारसामग्रीति न कश्चिद्दोषः । एवमथातः शब्दार्थो निरूपितः ।

मू० ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा, ब्रह्मण—इति कर्मणि षष्ठी "कर्तृकर्मणोः कृती"ति विशेषविधानात् ।

टी० अथ ब्रह्मजिज्ञासापदार्थं विवक्षुस्तदैकपद्यस्य समासनिबन्धनत्वात् प्रथमं समासार्थं निरूपयति "ब्रह्मण"इत्यादिना, कर्मत्वकरणत्वादिसंबन्धविशेषेषु इतरा विभक्तयः "कर्मणि द्वितीये"त्यादिभिः सूत्रैर्विहिताः "षष्ठी शेष"इति सूत्रेण संबन्धसामान्ये षष्ठी विहिता अत्रास्याः सामान्यविषयतामाशङ्क्य कर्मविषयत्वं निश्चीयते । तत्र सामान्येन समासस्यानेकविभक्तिसाधारणत्वाद्विभक्त्यन्तरशङ्काव्यावृत्त्यर्थमिह तेषामनुपपत्तिमभिप्रयन् पदं विगृह्णाति "ब्रह्मणोजिज्ञासे"ति । चतुर्थीपरिग्रहे प्रयोजनत्वसिद्धावपि प्रकृतिविकारभावाभावे चतुर्थीसमासायोगात्तदपरिग्रहः । "सप्तमी"ति योगविभागाद् ब्रह्मणि जिज्ञासेति समासेपि ब्रह्मणो विषयत्वमात्रं स्यात्,न तु प्रयोजनत्वमिति सप्तम्यपरिग्रहः। शङ्कुलाखण्डइतिवत् तृतीयासमासे विषयत्वप्रयोजनत्वे न सिद्ध्येते इत्यभिप्रायः। ब्रह्मण—इति शब्दरूपस्य षष्ठीपञ्चमीसाधारण्यात् षष्ठ्याश्चानेकार्थत्वात्तन्निर्णयार्थमाह "ब्रह्मणइती"ति । कुतइत्यत्राह "कर्तृकर्मणो"रिति । षष्ठ्याः कर्तृकर्मसाधारण्येपि जिज्ञासाकर्तृत्वं तापत्रयातुरस्यैव, ब्रह्मणस्तु कर्मत्वमित्यभिप्रायेण "ब्रह्मणइति कर्मणि षष्ठी"त्युक्तम् कर्मणि षष्ठीस्वीकारे ब्रह्मणो विषयत्वप्रयोजनत्वे सिद्ध्येतामिति भावः ।

मू० यद्यपि संबन्धसामान्यपरिग्रहेपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः, तथाप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात्कर्मणि षष्ठी गृह्यते ।

न च "प्रतिपदविधाना षष्ठी न समस्यत"इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः "कृद्योगा च षष्ठी समस्यत"-इति प्रतिप्रसवसद्भावात् ।

१ रामानुजमते ब्रह्मणः सिद्धोपायोपेयात्मतया क्रियाजन्यफलभागित्वलक्षणकर्मत्वार्थकषष्ठीपरिग्रहे प्रयोजनत्वलाभ इति तत्त्वम् ।

टी० ननु तर्हि कथं "यद्यपी"त्यादेः संबन्धसामान्यपरिग्रहशङ्काविषयस्य भाष्यस्योत्थानम्? । उच्यते । संबन्धसामान्यस्वीकारेऽपि षष्ठ्याः सामर्थ्याद् ब्रह्मणः कर्मत्वसिद्धेः, परम्परया संबन्धिनामुपायोपासकप्रतिबन्धादीनामपि जिज्ञास्यत्वसिद्धेः, प्रतिपदविहितषष्ठ्याः समासनिषेधाच्च । तत्र सामर्थ्यात् षष्ठ्याः कर्मार्थत्वसिद्धिं ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वस्य सिद्धिं च शङ्कते "यद्यपी"ति । "संबन्धसामान्यपरिग्रह"इत्यत्र परिणा ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिः सूच्यते । परितो ग्रहणेन हि परितः स्थितानामपि ग्राह्यत्वं लभ्यते । अतएव ह्युत्तरत्र "गृह्यत"इत्युक्तं न तु परिगृह्यतइति । तदुभयं परिहरति "तथापी"ति । अत्रायमर्थः—प्रधानस्य ब्रह्मणोऽप्रधानानामन्येषां च कर्मत्वस्याक्षेपसिद्धत्वादपि प्रधानकर्मत्वस्याभिधानिकत्वमितरेषां प्रधानसंबन्धादाकाङ्क्षावशाच्च कर्मत्वस्य सामर्थ्यासिद्धत्वं च स्वीकर्तुं युक्तमित्यतः प्रतिपदविहिता षष्ठी ग्राह्या "विलम्बितहेतोः शीघ्रधीहेतुर्बलीयानि"ति न्यायात् षष्ठ्याः संबन्धसामान्यविवक्षायां हि कर्मधीर्विलम्बिता स्यात् कृद्योगषष्ठीविवक्षायान्तु शीघ्रभाविनी ।

ननु कर्तृकर्मणोरुभयोरप्यर्थयोः सूत्रप्रतिपन्नत्वाद् विलम्बिता कर्मधीरिति चेन्न । कर्तुर्जिज्ञासोरधिगतकर्मणः प्रतिपन्नत्वात् कर्मार्थत्वमेव हि प्रथमतरं धियमधिरोहेत् । समासनिषेधमाशङ्क्य परिहरति "नचे"ति । चः शङ्कासमुच्चये । प्रतिप्रसवोऽपवादापवादः सर्पिषोज्ञानमित्यादिप्रयोगेषु "ज्ञोऽविदर्थस्य करणे"इत्यादिसूत्रविहितायां षष्ठ्यां समासनिषेधस्य सावकाशत्वं, सर्पिषा प्रवृत्तिरिति हि तस्य वाक्यस्यार्थः । यद्यपि ज्ञानपदं कृदन्तं तथापि सर्पिषइति षष्ठी न कृद्योगविहिता । सर्पिषोजानीतइति तिङन्तपदान्वयार्हत्वात् धातोर्विभक्तेश्च प्रवृत्तितत्करणार्थत्वाच्च । न च तत्सर्वं कृद्योगविहितत्वे सिद्ध्यति, अतोनात्र प्रतिप्रसवप्राप्तिरिति समासनिषेधस्य सावकाशत्वम् ।

ननु नेयं षष्ठी व्याख्येया अप्रयुक्तत्वात् । सूत्रे प्रयुक्त एव हि शब्दार्थबोधकः नत्वप्रयुक्तः, बोधकशब्दएव हि व्याख्येयः, अप्रयुक्तापि स्मृता विभक्तिर्बोधिकेति सा व्याख्येयेति चेन्न ।

तत्स्मरणेन विनाप्यर्थप्रतिपत्तेः । अर्थप्रतिपत्तिश्च प्रातिपदिकेन लक्षणया, लक्षणा च योग्यतादिना, अतोऽनुशासनेन तद्व्याख्यानमयुक्तम् । उच्यते । अप्रयुक्तविभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समासः, तत्र लक्ष्यार्थोपलक्षणतया विभक्तिरनुप्रविष्टा, अतो लक्ष्यार्थविशेषनिर्णयाय विग्रहवाक्यस्था षष्ठी व्याख्येया । तर्हि नानुशासनेन व्याख्येया, लाक्षणिकार्थो हि योग्यतादिनावसीयते, न हि गङ्गायां घोष इत्यत्रानुशासनवशात् कूलं लक्ष्यते अपि तु योग्यतादिनैवेति । मैवं, सर्वासु लक्षणासु योग्यतादिनैवार्थनिर्णयइति नियमाभावात् । स तु नियमः प्रातिपदिकेन प्रातिपदिकान्तरार्थलक्षणायाम् । प्रातिपदिकेन विभक्त्यर्थलक्षणायां त्वेतद्विभक्त्यर्थो लक्ष्यः, न विभक्त्यन्तरार्थइति नियमो भवति, स च शब्दानुशासनाधीनइति तदनुरोधेन तन्निरूपणं युक्तम् । तत्र संबन्धसामान्यं लक्षयित्वा तेन कर्मत्वस्याक्षेपादपि प्रथमतएव कर्मत्वस्यैव लक्षणा शब्दानुशासनानुमता युक्ता, अतः समस्तपदलक्ष्यार्थविशेषनिर्णयायानुशासनानुरोधेन लक्ष्यार्थोपलक्षणभूता विग्रहवाक्यस्था षष्ठी व्याख्येयेति, । यद्वा लुप्तविभक्तिकशब्देन विभक्त्यर्थबोधनं मुख्यं स्यात् । संबन्धिनो हि लक्षणा दृष्टा न संबन्धमात्रस्य । विभक्त्यर्थश्च स्वयं संबन्धरूपः ।

न च संबन्धस्य संबन्धान्तरानपेक्षत्वेन स्वस्मिन् संबन्धिकार्यकरत्वेन लक्षणा संभवतीति वाच्यम् । संबन्धस्य स्वपरनिर्वाहकत्वानभिज्ञानामपि विभक्त्यर्थप्रतीतेः । न हि संबन्धः सत्तया लक्षणाहेतुः किन्तु ज्ञायमानतयैव । न चेदतिप्रसङ्गात् । एवं लक्षणानुपपत्त्या प्रयोगस्यानन्यथासिद्धत्वात् समस्तशब्देन विभक्त्यर्थबोधनं मुख्यम् । अमुख्यत्वेपि का नः क्षतिः ।

ननु विग्रहवाक्येपि कथं कर्मत्वमाभिधानिकम्? प्रयुज्यमानापि ह्युपपदविभक्तिर्निरर्थिका । तद्विधानं "दाराः कलत्रमितिवत्प्रयोगसाधुत्वाय, अर्थस्त्वर्थसामार्थ्याक्षिप्तः, अतएव हि कारकविभक्तेरुपपदविभक्तेर्दौर्बल्यं, समासे त्वप्रयुक्तायाउपपदविभक्तेः कथन्तरां कर्माभिधायकत्वमिति चेदुच्यते । आभिधानिकत्ववत् कृदन्तपदप्रयोगेण शीघ्रधीविषयत्वसाम्यादाभिधानिकत्वोक्तिः । पदान्तरश्रवणापेक्षामात्राच्चाक्षेपादिवद्विलम्बाधिक्यम् । सामान्य-

षष्ठीपक्षे संबन्धसामान्यं प्रतिपाद्यं जिज्ञासाशब्दार्थगतसकर्मकत्वस्वभावालोचनयाऽर्थविशेषावगमादपि कृदन्तश्रवणमात्रभुवः कर्मत्वधियः शीघ्रत्वादिति कश्चित्परिहारः । "कर्मणि द्वितीये"तिवत् "कर्तृकर्मणोः कृती"ति सप्तम्यन्तनिर्दिष्टयोः कर्तृकर्मणोरभिधेयत्वमनुशासनस्वारस्यानुगुणमिति भाष्यकाराभिप्रेतः परिहारइति संप्रदायः कारकविभक्तेरुपपदविभक्तिवैषम्यं पदान्तरयोगविहितत्वरूपमस्त्येव ।

न च पदान्तरयोगावगम्यत्वमाभिधानिकत्वविरोधि, तस्य क्वचिन्मुख्यार्थव्यवस्थापकत्वदृष्टेः, यथा "आदित्यस्य गावः प्रकाशय[1]न्तीत्यादिषु ।" न हि तत्रादित्यादिपदान्तरयोगेन गोशब्दस्य किरणपरत्वं लाक्षणिकं पदान्तरपरामर्शसापेक्षत्वेन विलम्बितधीहेतुरुपपदविभक्तिः, कारकविभक्तिस्तु तन्निरपेक्षत्वाच्छीघ्रधीहेतुरिति प्राबल्यदौर्बल्यविभागएव न तु सार्थकत्वनिरर्थकत्वाभ्यां वैषम्यं विभक्त्यश्रवणादमुख्यत्वन्तु परिहृतम् ।

**मू० ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते ॥**

टी० एवं समासान्तर्गतविभक्त्यर्थे निरूपिते समस्तयोः पदयोः प्रथमं ब्रह्मशब्दं व्याचष्टे "ब्रह्मशब्देन चे"ति । ब्रह्मशब्दस्य प्रधाना[2]द्यर्वाचीनार्थान्तरेषु प्रयोगदर्शनादितरव्याख्यातृभिरीश्वरातिरिक्तवस्तुपरत्वेन व्याख्यातत्वाद्देवतान्तरपरत्वस्य कैश्चिदभ्युपगमाच्च तद्व्यावृत्त्यर्थं "ब्रह्मशब्देन पुरुषोत्तमोऽभिधीयत"इति प्रतिजानीते । पुरुषोत्तमशब्दस्य रूढ्या ब्रह्मशब्दस्य देवतान्तर[3]परत्वव्युदासः । अवयवश[4]क्त्या बद्धमुक्तावस्थचेतनवैलक्ष-

१ प्रकाशन्तइत्यादिषु (ख) पु० पा० ।

२ प्रधानाद्यर्थान्तरेषु (ख) पु० पा० ।

३ "हरिरेवैकः पुरुषोत्तमः स्मृतः" इत्युक्तरीत्या नारायणपदस्येव पुरुषोत्तमपदस्यापि भगवति वासुदेवे रूढतया ब्रह्मशब्दस्य देवतान्तरपरत्वनिराकृतिरिति टीकाशयः।

४ पुरुषेभ्य उत्तम इति हि व्युत्पत्तिः—तत्र चोत्तमत्वं नियामकत्वं तच्च भगवत एव न जीवानां केषामपि, यथोक्तं सूत्रकृतैव "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्चे"ति चतुर्थे, भगवानपि गीतासु "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । इति प्राह तदेवमुत्तमपदशक्त्या बद्धमुक्तोभयावस्थाश्चेतनाः परिक्षिप्यन्ते इति भावः ।

ण्यमुक्तम् । स्वेतरवैलक्षण्यमात्रं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थं स्वभावतइत्यादिना विशेषणद्वयेन तद्वैलक्षण्यं विशिनष्टि । इदं विशेषणद्वयं शब्दशक्तेरर्थसामर्थ्याच्च ब्रह्मशब्दस्य पुरुषोत्तमपरत्वप्रतिपादनोपयोगितयोक्तम् । न तु प्रवृत्तिनिमित्ततया गुणतोपि बृहत्त्वे सति शब्दशक्त्यसंकोचसिद्धेर्मुमुक्षोरशेषदोषनिवृत्तिनिरतिशयानन्दप्राप्तिहेतुत्वाच्च । वाद्यन्तरोक्तस्याऽविद्यादिदोषान्वयस्य निर्गुणत्वस्य च व्यावृत्त्यर्थमुपाध्युपहितब्रह्मस्वरूपस्यैव कर्मवश्यत्वदुःखित्वादिव्यावृत्त्यर्थं, ज्ञानादिशक्तियोगएवास्य स्वाभाविकः सार्वज्ञ्यनिरतिशयानन्दादियोगस्तु कादाचित्कइति मतस्य च व्यावृत्त्यर्थमिदं विशेषणद्वयमुक्तम् । निरस्तकतिपयदोषत्वं निरस्तनिखिलदोषत्वं च केषांचिद् बद्धानां, नित्यानां मुक्तानामप्यस्तीति तद्व्यावृत्त्यर्थं "स्वभावतो निरस्तनिखिलदोष" इत्युक्तम् । नित्यसिद्धानामपि भगवन्नित्यसंकल्पाधीनं हि नित्यनिर्दोषत्वं स्वभावतइत्युत्तरत्रानुषङ्गः तेन गुणानामप्यविद्याकल्पितत्वपक्षव्यावृत्तिः "ते ये शत" मित्यत्र पूर्वपूर्वगुणेभ्य उत्तरोत्तरगुणानामतिशयः सावधिरिति तद्व्यावृत्त्यर्थमनवधिकातिशय-शब्दः, तत्र हि ब्रह्मगुणातिशयस्य वाङ्मनसागोचरतया ऽनवधिकत्वमुक्तं, सत्यसंकल्पत्वान्तर्भूता वशित्वादिगुणाइति हि वक्ष्यते,अतः कस्मिंश्चिद् गुणे तद्विधाभेदरूपतया गुणानां बहूनामन्तर्भावाभिप्रायो गण-शब्दः । नन्वनवधिकातिशयशब्दस्य गुणविशेषणत्वे गणशब्दसामानाधिकरण्याभावाद् बहुव्रीहिर्न स्यात् । गणविशेषणत्वमप्युक्तं गुणस्वरूपस्य ह्यनवधिकातिशयत्वं न तु गणस्वरूपस्य नैवम् । गणएव विशेष्यइति बहुव्रीहिसिद्धिः,तथाप्यर्थवशाद् गणान्तर्भूतैकैकगुणव्यक्तेरनवधिकातिशयत्वं फलितं स्यात् "यथैषा परिषदभिजनवती श्रुतशीलशालिनी" त्यत्र श्रुतशीलादीनां परिषद्विशेषणत्वे प्रतीतेपि तदन्तर्भूतानामेव श्रुताद्यन्वयः, न तु समूहस्य ततोनिर्गतानां श्रुताद्यभावप्रसङ्गात् । असंख्येयत्वमपि गणविशेषणं युक्तं, गणासंख्येयत्वे गुणासंख्येयत्वं कैमुत्यसिद्धम् । अनवधिकातिशय-शब्देन नित्यसिद्धव्यावृत्तिश्च तद्गुणानां जगद्व्यापारानानुगुणत्वेन भगवद्गुणापेक्षया सातिशयत्वात् तेषामीश्वरतद्गुणविभूतिसाक्षात्कारस्यात्यन्तानुकूलस्य निरवधिकातिशयत्वेपि तादृशासं-

ख्येयगुणाभावात्तद्व्यावृत्तिः। अनुवृत्तेन "स्वभावत" इतिपदेन वा नित्यसिद्ध-व्यावृत्तिः। तेषां तादृशगुणकत्वं हि भगवन्नित्येच्छाधीनं स्वरूपेणानवधिका-तिशयत्वाच्च नित्यसिद्धव्यावृत्तिः ते[1] ह्यणुस्वरूपा अतः स्वरूपस्या[2] नवधि-कातिशयत्वं गर्भितम्। विभुत्वस्यापि गुणान्तर्भावित्वात् "बृहत्त्वं च स्वरू-पेण गुणै" श्चेत्युपपा[3] दकग्रन्थोक्तेः। "अभिधीयते" मुख्यया वृत्त्या बोध्यते। "अस्मिन् ग्रन्थे येनाक्षरं पुरुषं वेद सत्य" मिति श्रुतिश्चैतत्सूत्रानुवादिन्य-नुसंहिता भवति तत्र हि "प्रोवाच तां तत्त्वतो ब्रह्मविद्यामि" ति पुरुष-पर्यायतया ब्रह्मशब्दः प्रयुक्तः।

**मू० सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः, बृहत्त्वं च स्वरू-पेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः।**

टी० एवं प्रतिज्ञातार्थं शब्दसामर्थ्यात् प्रथममुपपादयति "सर्वत्रे" त्यादिना। तत्रार्थान्तरेषु ब्रह्मशब्दप्रयोगस्यान्यथासिद्धिं विवक्षुस्तदुपयुक्तं गुणयोगं दर्शयति "सर्वत्रे" ति सर्वत्र-ब्रह्मशब्दप्रयोगविषयेषु बृहत्त्वगु-णयोगोस्तीत्यर्थः। पुरुषोत्तमे गौणत्वमन्यत्र मुख्यत्वं च किन्न स्यादित्यत्राह "बृहत्त्वं" चेति बृहत्त्वगुणमात्रयोगिषु सर्वेषु ब्रह्म-शब्दाप्रयोगात् स्वरूप-तोगुणतश्चानवधिकातिशयबृहत्त्वं प्रवृत्तिनिमित्तमित्यर्थः।

ननु "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहत्वाद् बृंहण-त्वाच्च तद्ब्रह्मेत्यभिधीयत" इति श्रुतिस्मृतिभ्यां बृहत्त्वबृंहणत्वे च प्रवृत्ति-निमित्ततयावगते कथमिह बृहत्त्वमात्रं निमित्तमुच्यते बृह[4] त्त्वे बृंहणत्व-स्यान्तर्गतत्वादिति ब्रूमः "स चानन्त्याय कल्पत" इत्यादिश्रुतिप्रसिद्धसक-लसंकोचनिवृत्तिपूर्वकनिरवधिकज्ञानविकासरूपानन्त्यावहत्वं हि बृंहणत्वं, तद्धि सकलहेयप्रत्यनीकत्वक्षान्तिकारुण्यादिमोक्षप्रदत्वौपयिकगुणगणत्त्वम् अतएव हि "स्वभावतो निरस्तनिखिलदोष" इत्यादिकं प्रतिज्ञावाक्ये-ऽभिहितम्।

१ गरुडविष्वक्सेनादयो नित्यभूतिस्थाः।

२ रामानुजमते जीवानामणुरूपत्वेन भगवत्स्वरूपस्यानवधिकातिशयत्वं युक्त-मिति तत्त्वम्।

३ पूर्वग्रन्थार्थाभिधायकाग्रिमभाष्यपङ्क्तेः। ४ गुणतो बृहत्त्वे इति (ख) पु॰ पा॰।

ननु स्वरूपतो बृहत्त्वमेव निमित्तमस्तु किङ्गुणैरिति चेत् न। ब्रह्मगुणादेरपि स्वरूपेण बृहत्त्वाद् ब्रह्मशब्दवाच्यत्वप्रसङ्गात्। तर्हि गुणतो बृहत्त्वमेवास्तु निमित्तमिति चेन्न। शब्दशक्तेरसंकोचस्य स्वतः प्राप्तत्वात् स्वरूपेण च बृहत्त्वसद्भावात् "सत्यं ज्ञानमनन्तं ब्रह्मे"ति हि श्रुतिः

मू॰ स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगाद् भगवच्छब्दवत्। तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतः सर्वेश्वरो जिज्ञासाकर्मभूतं ब्रह्म।

टी॰ गुणतोबृहत्त्वन्नाम सद्वारकबृहत्त्वं गुणद्वारा हि तत्स्वरूपेण गुणैश्च निरतिशयबृहत्त्ववद्वस्तु पुरुषोत्तमादन्यदपि स्यादन्यदेव वा स्यादित्यत्राह "स चे"ति चः शङ्कानिवृत्तौ सर्वेश्वरशब्देनैवकारेण च "तमीश्वराणां परमं महेश्वरं" "न तत्समश्चाभ्यधिकश्च दृश्यत"इति वाक्ययुगलार्थो विवक्षितः। ततः किं? मित्यत्राह "अत" इति अतः—अनवधिकातिशयबृहति ब्रह्मशब्दस्य मुख्यत्वात् सर्वेश्वरस्यैतादृशबृहत्त्वगुणयोगित्वाच्चेत्यर्थः। कथं तत्रैव मुख्यबृहत्त्वमन्यत्रापि हि ब्रह्मशब्दः प्रयुज्यत इत्यत्राह 'तस्मादि"ति तस्मात्—ब्रह्मणः। सर्वत्र मुख्यः कुतो न स्यादित्यत्राह 'अनेकार्थे"ति। परस्माद् ब्रह्मणोन्यत्र प्रयोगस्यान्यथासिद्धत्वान्न तत्र शक्तिकल्पनम्। "अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयती"ति न्यायादित्यर्थः। अनेकशक्तिकल्पनं गौणत्वं वा न स्याद् बृहत्त्वगुणयोगिसर्वव्यक्तिष्वेकयैव शक्त्या मुख्यत्वसंभवादित्यत्राह "भगवच्छब्दवदि"ति तथाच श्रीमति वैष्णवे पुराणे भगवच्छब्दं प्रकृत्योक्तं "तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः शब्दोयं नोपचारेण अन्यत्र ह्युपचारत"इति अनेन प्रस्तुतचोद्यस्य कः परिहार उक्तो भवति?। उच्यते बृहतिधातोर्मनिन्प्रत्ययान्तत्वेन निष्पन्नस्य ब्रह्मशब्दस्य प्रधानादिषु दृश्यमानः प्रयोगोनावयवशक्तिनिबन्धनः, तथा हि सति बृहन्महच्छब्दादिवदापेक्षिकबृहत्त्वयोगिषु सर्ववस्तुषु प्रयोगः

स्याच्च च तथा प्रयुज्यते, त्रसरेणुमपि हि ततोणिष्ठतयाभिमतद्रव्यान्तरापेक्षया महिमगुणशालीति वदन्ति

न च अणुकादिषु ब्रह्मशब्दप्रयोगः ।

एवं सर्वत्र प्रयोगादर्शनात् पङ्कजशब्दव्यवस्थापककुमुदादिव्यावृत्ततामरसानुवृत्तपद्मत्वजातिवद् ब्रह्मशब्दप्रयोगविषये पञ्चपव्यक्त्यनुवृत्तान्यव्यावृत्ताकारादर्शनादनेकशक्तिकल्पने प्राप्ते, अनन्यथासिद्धस्य प्रयोगस्य शक्तिकल्पकत्वाद् ब्रह्मशब्दप्रयोगविषयेष्वन्येषु च बृहत्त्वगुणलेशयोगेन प्रयोगस्यान्यथासिद्धत्वाच्च नानेकशक्तिकल्पनं युक्तम् । तस्मात्पुरुषोत्तमएव प्रवृत्तिनिमित्तपौष्कल्यवति मुख्यत्वम् । अन्यत्रौपचारिकत्वं च । "औपचारिकस्तु प्रयोगः संकोचसहदृष्टः न तु सार्वत्रिकइति" तमिमं न्यायमभिप्रेत्य भगवच्छब्दस्य पुरुषोत्तमएव मुख्यत्वमन्यत्रामुख्यत्वं च भगवता पराशरेणोक्तम् । तथाहि ज्ञानादिमात्रं वा निरङ्कुशज्ञानादिकं वा भगच्छब्दप्रवृत्तिनिमित्तमाद्ये पिपीलिकादावपि भगवच्छब्दः प्रयुज्येत, द्वितीये तु सर्वत्र निरवधिकज्ञानाद्यभावात् प्रवृत्तिनिमित्तासिद्धेर्नैकशक्त्या सर्वत्र मुख्यत्वम् । अनेकशक्तिकल्पनं चायुक्तं प्रयोगान्यथासिद्धेरिति भगवत्पराशराभिप्रायः ।

ननु "उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिं वेत्ति विद्यामविद्यां च स वाच्यो भगवानि"ति ग्रन्थोक्तेष्वौपचारिकभगवच्छब्दप्रयोगयोग्येषु यदलौकिकार्थसाक्षात्कारित्वमस्ति तदेव प्रवृत्तिनिमित्तीकृत्य भगवच्छब्दः सर्वत्रायं मुख्यः स्यात् । नैवम् । अलौकिकार्थसाक्षात्करणमात्रस्य प्रयोगाविषयव्यावृत्तत्वाभावान्न हि समाधिपर्यन्तयोगकाष्ठानिष्ठेषु केशिध्वज–खाण्डिक्य–प्रह्लादादिषु भगवच्छब्दः प्रयुज्यते । किंच प्रत्यक्षमूलव्युत्पत्त्या गवादिशब्दानामिवागममूलव्युत्पत्त्या समयषाड्गुण्यादिमत्त्येव तस्य मुख्यत्वावगमात् "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभि"रिति निर्दोषत्वपर्यन्तानां ज्ञानादीनां प्रवृत्तिनिमित्ततया वाच्यत्वमुच्यते, निर्दोषत्वं च निमित्ततया वाच्यत्वेनोच्यते अन्यथा तदुक्तिवैयर्थ्यात् न ह्यवाच्यं सर्वं निषेद्धव्यमनुक्त्वैव ह्यवाच्यत्वं सिद्ध्यति ।

१ षाड्गुण्यादिमति इति (ख) पु॰ पा॰

न च ज्ञानशक्त्यादिष्वेकैकस्य प्रवृत्तिनिमित्तत्वं किंतु ज्ञानादिसमुदायस्यैव अन्यथा अशेषतइति पदवैयर्थ्यादैश्वर्यस्य समग्रस्येत्युक्तत्वात् गवादिष्वतिप्रसङ्गभयाच्च प्रकर्षविशेषवतां ज्ञानादीनां समुदायस्य प्रवृत्तिनिमित्तत्वमुक्तमित्यभ्युपेयम् एवं न्यायसिद्धार्थस्यागमसिद्धार्थोभाष्ये दृष्टान्तीकृतः "भगवच्छब्दवदि"ति तथा भगवता पाराशर्येण "परं जैमिनिर्मुख्यत्वात्" "स्याच्चैकस्य ब्रह्मशब्दव"दित्यादि सूत्रेषु ब्रह्मशब्दस्य भगवत्येव मुख्यत्वमुत्तरत्रोक्तम् । अतो यथोक्तएवार्थः । तथाच स्पष्टीकृतं श्रीमति गारुडे पुराणे, "वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने" इत्यारभ्य "यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः । तत्रैव मुख्यवृत्तोयमन्यत्र ह्युपचारतः" इत्येवं शब्दसामर्थ्यमुपपादितम् । अथ ब्रह्मशब्दस्यानेकार्थमुख्यवृत्तत्वेप्येतत्सूत्रस्यस्य तस्यार्थस्वाभाव्यात् पुरुषोत्तमपरत्वमुच्यते । 'तापत्रयातुरै'रिति "स एवामृतत्वाये"ति पदै"स्तमेवं विद्वानमृत इह भवति" 'नान्यः पन्था' इत्यादिश्रुत्यर्थोविवक्षितः । अतएव हि "पुरुषोत्तमोभिधीयते" इत्युक्तं श्रुतेरपि पूर्वोक्तहेयप्रत्यनीकत्वकल्याणगुणाकरत्वविशिष्टएव तापत्रयातुरैरुपास्यः, न तु तेष्वन्यतम इति भावः न हि कारागारनिगलि[1]तएव तन्मोचनार्थिभिरभ्यर्थनीयः, तथाच वैष्णवे पुराणे निर्दोषकल्याणगुणाकरस्यैव मुमुक्षूपास्यत्वमुक्तं "स सर्वभूतप्रकृतिं विकारान् समस्तकल्याणगुणात्मकोसा"वित्यादिना तज्ज्ञानमज्ञानमतोन्यदुक्तमित्यन्तेन, ब्रह्म—शब्दव्याख्यानं निगमयति अतो—निर्दोषमङ्गलगुणाकरस्य सर्वेश्वरस्यैव तापत्रयातुरैर्जिज्ञास्यत्वादत्र तापत्रयातुरजिज्ञास्यतयोक्तं ब्रह्म—सर्वेश्वरएवेत्यर्थः । यद्वा "अतः"—उक्तशब्दसामर्थ्यादर्थसामर्थ्याच्चेत्यर्थः ।

ननु ब्रह्मशब्दो व्युत्पन्नोऽव्युत्पन्नो वा भगवति मुख्यः ? अव्युत्पन्नत्वे बोधकत्वविरहिणस्तस्य न क्वचिन्मुख्यत्वम् । नापि व्युत्पन्नः स मुख्यः, अलौकिकेर्थे व्युत्पत्त्यसंभवात् कथमप्रतीते व्यवहाराविषये बुद्धिपूर्विका यादृच्छि-

१ निगडित इति तु साधु ।

की च व्युत्पत्तिः संभवति । उच्यते । यथा कामिनीचन्दनभवनादिषु प्रयोगेण सुखविषयतया व्युत्पन्नस्य स्वर्गशब्दस्य "यस्मिन्नोष्ण" मित्याद्यर्थवादपदसमभिव्याहारेणालौकिकसुखविशेषविषयतया व्युत्पत्तिः । यथा लोके क्वचिदप्यव्युत्पन्नत्वेपि यूपाहवनीय-स्फ्य-कपाल-चषाल-चात्वालादिशब्दानां वाक्यान्तरपदान्तरसमभिव्याहारात्तत्तदर्थविषयतया व्युत्पत्तिः । एवं ब्रह्मात्मेत्यादिशब्दानां लोके केषुचिदर्थेषु प्रयोगाद् व्युत्पत्तावसत्यामसत्यामपि । "यतो वा इमानि भूतानि जायन्ते" "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिप्रसिद्धार्थवाक्यान्तरपदान्तरसमभिहारात् अलौकिकपरमात्मविषयत्वव्युत्पत्तिरुपपद्यते । अतो ब्रह्मशब्दस्योक्तरीत्या भगवत्येव मुख्यवृत्तत्वं युक्तम् ।

अथ जिज्ञासा—शब्दस्य व्याख्येयत्वस्फोरणाय प्रकृतिप्रत्ययविभागं दर्शयति—

**मू॰ ज्ञातुमिच्छा—जिज्ञासा इच्छायाइष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते ।**

टी॰ "ज्ञातुमिच्छा जिज्ञासे"ति विषयवैलक्षण्याधीनाया इच्छायाः कथं विधेयत्वमित्यत्राह । 'इच्छाया' इति । ज्ञानस्य विधानार्हतामाह "इष्यमाणप्रधानत्वादि"ति सन्वाच्याया इच्छाया धात्वर्थः कर्म, कर्मणश्च क्रिया शेषभूता तत्सिद्ध्यर्थत्वात्तस्याः, यथा यागीयव्रीह्यादेः प्रोक्षणादिः । कर्त्तुः क्रियया आप्तुमिष्टतमत्वं हि कर्मत्वम् । अतः प्रकृत्यर्थभूतज्ञानकर्मिकेच्छा तत्सिद्ध्यर्था अत इच्छाया इष्यमाणज्ञानप्रधानत्वाद् इष्यमाणं ज्ञानं विधेयमित्यर्थः । जिज्ञासायाः कर्त्तव्यत्वे प्रतीयमाने ज्ञानस्य कथं विधेयत्वम् । उच्यते । यथा स्नात्वा भुञ्जीत प्राङ्मुखो भुञ्जीतेत्यत्र भुजिधातोर्विधिप्रत्ययान्तत्वाद् भोजनस्य कर्तव्यत्वे प्रतीतेपि स्नानप्राङ्मुख्यनियमयोरेव विधेस्तात्पर्यमित्यर्थस्वभावादभ्युपगम्यते, तयोरप्राप्तत्वात् "अप्राप्ते हि शास्त्रमर्थवत्" तत्र भोजनं चान्यतः प्राप्तमनूद्यते, एवमिच्छाया विधेयत्वासंभवात् तद्विषयभूतं विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते । "इष्यमाणं ज्ञानमिहाभिप्रेत" मिति हि सारे[१] ऽभिहितं । सनन्तनिर्देशश्च

१ श्रीरामानुजाचार्यैः श्रीभाष्यतः प्रथमं प्रणीतो वेदार्थसंग्रहोनाम शङ्करयादवभास्करमतत्रयनिराकरणपरो ग्रन्थः सारपदेनाभिमत इति भाति ।

"निदिध्यासितव्यः" "विजिज्ञासितव्यः" "तद्विज्ञासस्वे"त्यादिश्रुत्यनुसारेण क्रियते श्रुतिश्च उपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्वेन इच्छाविषयत्वात्तथा निर्दिशति । यद्वा "ब्रह्मजिज्ञासे"ति सनन्तनिर्देशो-विचारस्य रागप्राप्तत्वज्ञापनार्थः । एवमेव धर्मजिज्ञासेत्यत्रापि । अत्र तर्करूपं ज्ञानं विधेयं तर्कानुगृहीतवाक्यजन्यप्रमितिरूपज्ञानं तु फलत्वाच्च विधेयं प्रमितिरूपं विधेयं तर्करूपं ज्ञानमार्थमित्यपि परैरुक्तम् । अन्तर्णीतं विचार-मात्तिपतीति ततोपि प्रागुक्तपक्षः साधीयान् वेदान्तार्थविचारात्मकन्यायनिब-न्धरूपं हि शास्त्रं ब्रह्ममीमांसेति प्रसिद्धिः, प्रमितिश्च फलम् । अतएव हि ब्रह्मविचारः कर्तव्यइति भाष्ये वक्ष्यते । सनन्तस्यास्य ज्ञा—धातो-र्ज्ञानसामान्यवाचिनो विशेषाकाङ्क्षायां समुचितविशेषपर्यवसानं हि न्याय्यं ब्रह्मणो जिज्ञासा कर्तव्या न तु कपिलसुगताद्यभिमतानां प्रधानादित-त्त्वानामिति ज्ञातव्यविशेषनिर्णयपरं सूत्रं व्याख्यातं यादवप्रकाशाचार्यैः, तद्व्यावृत्त्यर्थमिह-शब्दः, इह—अस्मिन्नुपक्रमसूत्रइत्यर्थः । ब्रह्मणोजिज्ञास्य-त्वमात्रे सिद्धे हि तस्यैव जिज्ञास्यत्वसिद्धिः, न चोभयं सूत्रप्रतिपाद्यं ब्रह्म जिज्ञास्यमेव ब्रह्मैव जिज्ञास्यमिति वाक्यभेदप्रसङ्गात् ।

ननु ब्रह्मणो मुमुक्षुभिर्नियमेन जिज्ञास्यत्वं तन्त्रान्तरसिद्धानां प्रधाना-दीनाम् अजिज्ञास्यत्वेन विना न सिद्ध्यतीति, ब्रह्मजिज्ञास्यत्वसमर्थने प्रधा-नादेरजिज्ञास्यत्वसमर्थनमर्थादापततीति न वाक्यभेदप्रसङ्गइति चेत् न । अधीतक्रमेण वेदार्थे निरूप्यमाणे पूर्वभागविचारानन्तरमुत्तरभागविचारस्य प्रधानादिनिरासनिरपेक्षत्वात्, न ह्येकस्य प्रबन्धस्यैकदेशे निरूपिते तदेक-देशान्तरनिरूपणस्य प्रबन्धान्तरप्रमेयनिराससापेक्षता भवति, न हि पूर्वषट्के निरूपिते उत्तरषट्कनिरूपणं कपिलसुगतादिमतव्युदासेन विना न संभ-वति, यदि वेदान्तार्थस्य श्रद्धादृढिम्ने तदितरपक्षनिरसनमपेक्षितमिह क्रियत-इति मतं, तदनुपपन्नं कृतकरत्वप्रसङ्गात् । एतदुक्तं भवति इह प्रधानादीनाम-जिज्ञास्यत्वं किं वेदान्तानामतत्परत्वोपपादनेन समर्थ्यते ? उत कपिलसुगता-द्यागमाप्रामाण्यतत्प्रमेयदौस्थ्यप्रतिपादनेन समर्थ्यते ? न प्रथमः, ईक्षत्यधि-करणादिभिर्वेदान्तानामतत्परत्वस्य वक्ष्यमाणतयात्र वक्तव्यत्वाभावात् न

द्वितीयः वेदविरुद्धस्मृतीनामप्रामाण्यस्य पूर्वमीमांसायामेव समर्थितत्वात् सांख्यसौगताद्यभिमतप्रमेयदौःस्थ्यस्य तर्कपादे प्रतिपादयिष्यमाणत्वात्। "विप्रतिषेधाच्चासमञ्जसम्"[1] "इतरेषां चानुपलब्धेः"[2] "एतेन योगः प्रत्युक्तः"[3] "उदासीनानामपि चैवं सिद्धिः"[4] "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः"[5] इत्यादिभिः सूत्रैस्तदुक्तमोक्षतदुपायनिरासस्यापि करिष्यमाणतया चात्र वक्तव्यत्वाभावात्। किंच "एतेन सर्वे व्याख्याता व्याख्याता"-इत्यत्र। "अनावृत्तिः शब्दादनावृत्तिः शब्दा"दिति शास्त्रान्ते च सूत्राभ्यासफलमनुक्तांशज्ञापनम्। अनुक्तांशश्च सांख्ययोगावगमतइति वदतां मोक्षस्य सांख्ययोगसमुच्चयसापेक्षत्वं च प्रतिपादयतां सौगतादिवत् सांख्यादिनिरासेन शारीरकस्यैवारम्भणीयत्वप्रतिज्ञानमिति च व्याहतं सांख्ययोगयोर्विरुद्धांशाभिप्रायमनादरणीयत्वकथनमिति चेन्न। विरुद्धांशानादरणीयत्वस्य विरोधाधिकरणन्यायसिद्धत्वादेव, अतोयादवप्रकाशकृतं सूत्रतात्पर्यवर्णनमनुपपन्नमितीह-शब्दाभिप्रायः। "विधीयत"इति अज्ञातज्ञापनं विधिरिह विवक्षितम्, नत्वप्रवृत्तप्रवर्त्तनं रागतः प्रवृत्तेर्वक्ष्यमाणत्वात्। रागतःप्रवृत्तस्यापि पूर्वपक्षयुक्त्यानारम्भणीयताबुद्धौ सत्यामारम्भणीत्वज्ञापनमज्ञातज्ञापनम् अतोविधीयत-इत्यस्य स्वयमेव प्रवर्त्ततइति वक्ष्यमाणग्रन्थेनाविरोधः। इत्थं पदार्थाव्याख्याताः।

सू० मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च, पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः—"वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषे"ति।

टी० अथ सूत्रस्य वाक्यार्थमाह "मीमांसे"ति अत्र पूर्ववृत्तात् कर्मज्ञानाद् अनन्तरं तत एव हेतोरित्यथातः-शब्दार्थ उक्तः। ब्रह्म ज्ञातव्य-

१ २ अ० २ पा० १० सू०  २ २ अ० १ पा० २ सू०  ३ २ अ० १ पा० ३ सू०
४ २ अ० २ पा० २७ सू०  ५ २ अ० २ पा० ३६ सू०

मिति–ब्रह्मजिज्ञासापदार्थः "ज्ञातव्यम्" विचारयोग्यम्। 'तत एवे"त्येवकारेण शास्त्रान्तराधिगमनैरपेक्ष्यमथ–शब्दफलितमभिप्रेतम्। "उक्तं भवती"ति शब्दतोऽर्थतश्चेति भावः। कथमस्य सूत्रस्यायमर्थ इति शङ्कायां? तदुपपादयति "मीमांसे"त्यादिना। अथातइत्यादिपदानां यथोक्त एवार्थः कर्मब्रह्मविचारयोरैकशास्त्र्यात्, [1]ऐकशास्त्र्यं च नियतपौर्वापर्यभागद्वयात्मकवेदाख्यप्रबन्धव्याख्यानरूपत्वादित्यर्थः। अत्र व्याख्येयस्य पूर्वापरभावेनावस्थितभागद्वयरूपत्वं तद्धेतुकं व्याख्यानस्य पौर्वापर्यविशेषविशिष्टभागद्वयरूपत्वं च पदयोजनायां वाक्ययोजनायां च वक्तव्यं, तथापि ग्रन्थलाघवार्थं पदयोजनायाम"धीतसाङ्गसशिरस्कवेदस्ये"ति व्याख्येयस्य नियतपौर्वापर्यभागद्वयरूपत्वमुक्तम्। अत्र तु वाक्ययोजनायां व्याख्यानस्य नियतपौर्वापर्यभागद्वयरूपतयैकशास्त्र्यमुक्तम्। उभयत्रोभयमनुसंधेयम्। भाग–शब्दाभ्यां मीमांसाद्वयस्य एकावयवित्वं सूचितम्। पूर्वापरितन–शब्दाभ्यां क्रमनियम उक्तः। कर्मब्रह्म–शब्दाभ्यां वृत्तवर्तिष्यमाणकथनम्। अल्पास्थिरफलत्वानन्तास्थिरफलत्वाभ्यां तयोर्हेतुमद्भावोपपादनम्। मुक्त्युपायोपयोगितया कर्मणां स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता अतः पृथगनुक्तिः। एवं क्रमविशेषविशिष्टैकव्याख्येयव्याख्यानरूपतया कर्मब्रह्मविचारयोरैकशास्त्र्यात् सूत्रस्य यथोक्तएवार्थ इत्यर्थः।

पूर्वं प्रतिज्ञातं वृत्तिकारमतानुसारं वृत्तिग्रन्थेन संवादयति "तदाहे"ति कर्माधिगमस्यैव पूर्ववृत्तत्वं केवलं कण्ठोक्तम् ऐकशास्त्र्योक्त्याक्षिप्तं चेत्यभिप्रयन्नाह। "वक्ष्यति चे"ति

**सू॰ वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धि"रिति, अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः।**

टी॰ वृत्तादित्यादिः संहितमित्यादिश्च वृत्तिग्रन्थौ शारीरकं–ब्रह्म-

---

1 ऐकशास्त्र्यमिति युक्तः पाठः।

मीमांसा जगच्छरीरः परमात्मा—शारीरः 'तस्यैष एव शारीर आत्मे''ति श्रुतेः, तद्विषयं शास्त्रं शारीरकमित्युच्यते "षोडशलक्षणेन" षोडशाध्यायेन "संहितमि''ति नियतपौर्वापर्यैकव्याख्येयव्याख्यानरूपतया संगतमिति भावः "अर्थैकत्वादेकं वाक्य''मिति न्यायेन प्रधानप्रतिपाद्यैक्याद्व्याख्येयस्य वेदस्यैकप्रबन्धत्वं भवेत्, तच्चोपपद्यते पुरुषार्थपरत्वाद्वेदस्य ब्रह्मपरत्वाद्वा "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्य" इति हि श्रुतिस्मृती वेदार्थविचारस्यानुगतत्वान्मीमांसाया एकप्रबन्धत्वम्, अनेनैकशास्त्र्येण कर्माधिगमस्य पूर्ववृत्तत्वमाक्षिप्तम् ।

ननु यद्यैकशास्त्र्यं कर्मब्रह्मविचारयोस्तर्हि उपक्रमे साधारणार्थः प्रतिज्ञायेत—'अथातोवेदार्थजिज्ञासे'ति, नचैवं प्रतिज्ञातं, किन्तु पूर्वभागासाधारण एव प्रतिज्ञातः—'अथातोधर्मजिज्ञासे'ति । अत्र ब्रूमः अथातोब्रह्मजिज्ञासेत्युभयभागसाधारणार्थप्रतिज्ञा कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादे न सङ्गतः, ब्रह्मविचारान्तर्भावेपि पृथक्करणमुपपद्यते यथा निग्रहान्तर्भूतच्छलजात्योराह्निकभेदेन पृथगुक्तिः, यथा च निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः, पृथक्करणं च बहुयन्यप्रतिपाद्यत्वात् तत्र च पूर्वभावित्वमुपजीव्योपजीवकभावादिवक्ष्यमाणहेतुनिबन्धनम् । एतदुक्तं भवति, अर्थक्रमाद् ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन कर्मविचारः सङ्गतः प्रतिपत्तिसौकर्यलक्षणक्रमात्तु कर्मविचारस्य पूर्वभाव इति । एवं वा साधर्म्यवैधर्म्यसमयोर्जात्योः कथनेन यथा प्रतिधर्मसमोभयानुयायिन्यर्थसिद्धा । एवं भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणार्थप्रतिज्ञानमार्थं स्यात् साधारणार्थे प्रतिज्ञातेप्यसाधारणार्थस्तु पृथगेव प्रतिज्ञातव्यः, धर्मजिज्ञासायां प्रतिज्ञातायामप्य'थातः शेषलक्षणम्'' "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे''त्यादौ ह्यसाधारणार्थप्रतिज्ञा कृता, अतो भागद्वयासाधारणार्थप्रतिज्ञानेन तदनुगतसाधारणार्थप्रतिज्ञानमार्थं स्यादिति प्रथममथातोधर्मजिज्ञासेति प्रतिज्ञातं न तु—वेदार्थजिज्ञासेति । अथवा, अथातोधर्मजिज्ञासेत्येव साधारणप्रतिज्ञा अलौकिकं श्रेयःसाधनं हि धर्मः, तदनुयायिप्रतिपाद्यं धर्मश्च साध्यसिद्धभेदेन द्विविधः सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः, यथा—'ये

च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातन"मिति, तथाभियुक्तैश्चालौकिकत्वे सति श्रेयःसाधनत्वं धर्मशब्दप्रवृत्तिनिमित्तं मन्यमानैः सिद्धरूपेऽर्थे धर्मशब्दः प्रयुक्तः, द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते तेषामैन्द्रियकत्वेपि न तद्रूपेण बुद्धिधर्मतेत्यादौ तत्र द्रव्यादिसद्भावेपि क्रियाप्राधान्यात् साध्य[1]धर्मपरः पूर्वभागः। उपासनतदङ्गसद्भावेपि ब्रह्मप्रधानत्वात् सिद्धधर्मपर ऊर्ध्वभागः। अत उभयभागविचारणी प्रथ[2]मप्रतिज्ञा, तत्र धर्मशब्दस्य साध्यधर्मविषयतया प्रसिद्धिप्राचुर्येण बुद्धिस्थत्वात् पूर्वभागप्रतिपन्नत्वेन प्राथम्याद्धर्मजिज्ञासापदेनैव तन्त्रेण वा अर्थतो वा प्रतिज्ञातत्वोपपत्तेश्च तल्लक्षणमुक्तं चोदनासूत्रे। सिद्धरूपधर्मविशेषस्य च साधारणप्रतिज्ञयैवार्थतः प्रतिज्ञातत्वेपि तस्य बहुपन्थव्यवधानाच्छब्दाबोधत्वशङ्कापरिजिहीर्षया च पुनः प्रतिज्ञा कृता, तस्य लक्षणमुक्तं जन्मादिसूत्रइति युक्तमैकशास्त्र्यम्।

ननु पूर्वभागस्य साध्यधर्मप्रधानतोक्तिरुदाहृतवचनेन विरुध्यते तत्र पूर्वभागेपि सिद्धरूपस्य परस्य कर्माराध्यतया प्रधानप्रतिपाद्यत्वावगता तस्मिन्वचने वेदविच्छब्दो हि पूर्वभागाभिज्ञपरः, गोबलीवर्दन्यायाद् "विष्णुनामा स वेदेषु वेदान्तेषु च गीयत" इत्यनेनैकार्थ्याच्च।

न च गुणभावेन कर्मणां प्रतिपाद्यत्वमित्यविरोधः, प्राधान्येन प्रतिपाद्यत्वस्य जैमिनेरभिमतत्वात्, भवद्भिरपि तथोक्तत्वाच्च, सत्यम्। वस्तुतः प्राधान्यं परमात्मन एव यथा राज्ञस्तात्पर्यगोचरतालक्षणं, शब्दप्राधान्यन्तु कर्मण एव यथा राजपुरुषस्य, तच्चातिरस्कृतं तत्र तस्य परमात्माराधनरूपत्वानवगमात्

नच तदवगमोऽवश्यं संपाद्यः, अन्तवत्स्वर्गादिफलदत्वे कर्मणां परदेवताज्ञाननैरपेक्ष्यं हि श्रुतिस्मृतिभ्यामवगम्यते "यो ह वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्य-

---

१ यागस्य तिलतण्डुलादिद्रव्यसाध्यत्वेपि न तेषां स्वरूपतो धर्मत्वं परन्तु यागत्वोदितक्रियावच्छिन्नानामेवेति पूर्वमीमांसाशास्त्रं साध्यरूपधर्मपरमिति परमार्थः।

२ "अथातो धर्मजिज्ञासे"त्येव प्राथमिकी प्रतिज्ञा सिद्धसाध्योभयभेदभिन्नद्विविधधर्मप्रतिपादकशास्त्रद्वयस्य प्रतिज्ञानरूपा।

न्तदेवास्य तद्भवति" इति "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" इति च अतस्तत्त्वैरपेत्यलक्षणमपि प्राधान्यमस्ति कर्मणः, अतः पूर्वभागे कर्मणः प्रागवगतं प्राधान्यं पश्चादवगन्तव्यं परमात्माराधनरूपत्वं चाविरुद्धम्, अतः प्रतिज्ञोपपत्तेः शास्त्रैक्यं युक्तं, यद्यपि कर्मब्रह्ममीमांसयोरेकशास्त्यमविवक्षितं जैमिनिना, तथापि तदङ्गीकृत्य तदेकशास्त्रतया बादरायणेन ब्रह्मसूत्रप्रणयनं युक्तं, यतः, अतदर्थतया कृप्तमपि योग्यमपेक्षितं तादर्थ्यमर्हति, ग्रामे कल्पे पूर्वतडागवद् विवक्षितत्वसंभवश्च दर्शितः । अतः शास्त्रैक्यं युक्तम् । नन्विदमयुक्तमेकशास्त्यं शारीरकशब्दसूचितात् प्रधानप्रतिपाद्यभेदाज्ञ जैमिनीयशब्दसूचितात् कर्तृभेदात् तदुभयफलितात् प्रयोजनभेदादर्थविरोधाच्चेत्याशङ्कां, परिहरति "अतः प्रतिपिपादयिषिते"ति । अतः—वृत्तिकारोक्तावेकव्याख्येयव्याख्यानरूपत्वसंबन्धादित्यर्थः। षट्कभेदः—पूर्वमीमांसायामध्यायभेदस्तत्रोत्तरत्र च निदर्शनार्थमुक्तौ, अर्थभेदाभावेह्येकं षट्कमेकोध्यायो वा स्यात्, अतएकावयवित्वे सिद्धे सत्यवान्तरार्थभेदो न महावाक्यैकत्वविरोधी, यथा पदार्थभेदोवाक्यार्थैकत्वाविरोधीति भावः । अनेन प्रतिपाद्यभेदः परिहृतः । प्रयोजनभेदश्चार्थात्परिहृतः । षट्कद्वयचिन्तितप्रकृतिविकृतिप्रयोजनभेदस्य शास्त्रभेदकत्वाभावात्, अनेन वृत्तिग्रन्थगतषोडशलक्षणशब्दतात्पर्यं च दर्शितं पूर्वोत्तरमीमांसाशब्देन जैमनीयशारीरकशब्दौ च विवृतौ प्रतिपिपादयिषितशब्देनार्थविरोधः परिहृतः प्रतिपादयितुमिष्टं हि प्रतिपिपादयिषितं स च तात्पर्यविषयोऽर्थः, विरुद्धतया प्रतीयमानेषु देवतानिरासादिषु न तात्पर्यमित्यभिप्रायः । नन्वेवं कथमभिधीयते? "आम्नायस्य क्रियार्थत्वादि"ति सिद्धपरवाक्यानां तच्छेषत्वं हि सूत्रकारेण कण्ठोक्तं तच्च विरुद्धमतएव, अतः शास्त्रभेद इति । नैवं "पदे जुहोति" "आहवनीये जुहोति" "न हिंस्यात् सर्वाभूतानि" "पशुमालभेते"ति वत् । शास्त्रान्तरे "कर्मण्यण्" "आतोनुपसर्गे कः" इति वच्च उत्सर्गापवादन्यायेन शास्त्रैक्याविरोधात्, सामान्येन सिद्धपरवाक्यानां क्रियाशेषत्वेऽभिहिते सिद्धपरवाक्यविशेषस्य किंविधिशेषत्वं नवेति

विचार्य स्वयं पुरुषार्थविरहिणामेव सिद्धपराणां क्रियाशेषत्वं स्वयंपुरुषार्थपर्यवसायिनां तु सिद्धपरवाक्यानां न तच्छेषत्वमिति हि निर्णेतुं युक्तं, यथा होमस्य सामान्येनाहवनीये प्राप्तत्वेपि होमविशेषस्य पदे कर्त्तव्यत्वनिश्चयः, यथा च सामान्यतो हिंसानिषेधेपि हिंसाविशेषस्य कर्त्तव्यतोक्तिः, यथा च सामान्येन कर्मण्युपपदे धातोरणि प्राप्तेप्याकारान्ताद्धातोः कप्रत्ययविधिः ।

नच तत्र शास्त्रभेदः, तद्वद् देवतानिराकरणे च न तात्पर्यम् । अश्रुतवेदान्तानां कर्तव्यश्रद्धानिराकरणाय कर्मप्राधान्यपरत्वात्तस्य "न हि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते, अपि तु निन्दितादितरत् प्रशंसितुमिति" हि नीतिविदः, यद्वा वेदप्रामाण्य—कर्मावश्यकर्त्तव्यता—तात्पर्यातिशयात् तत्प्रतिपक्षनिराचिकीर्षयान्वारुह्यवादो देवतानिरासोक्तिः स्यात्, अभिमततरार्थानादरेणापि हि विपक्षव्युदासो दृश्यते यथा "अभीष्टार्थव्ययेनापि जयति नेत्रहारिणम् । लब्धनेत्रेण दुष्प्रापः स्यादर्थ इति निश्चयात्" एवमभिमततरेश्वरानादरेणापि वेदप्रामाण्यादिसमर्थने पश्चादभिमतसिद्धिरयत्नलभ्येति जैमिनेरभिप्रायः, तत्सिद्धिप्रकारश्च तदुक्ताचिसत्रन्यायाधीन इत्युपरत्र व्यक्तीभविष्यति ।

नच तत्सिद्धिमभ्युपगच्छतस्तदनादरवादव्याघातः तस्यान्वारुह्यकृतत्वात् कथमान्वारुह्यवादत्वनिश्चयः? उच्यते "संपत्तेरिति जैमिनिः" "अन्यार्थं तु जैमिनिः" "परं जैमिनिर्मुख्यत्वात्" । "ब्राह्मेण जैमिनि"रित्यादिब्रह्मसूत्रैरेव जैमिनेर्ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपगमस्य प्रतिपन्नत्वात् । महाभारते च हयशिरउपाख्यानादिषु भगवद्व्यासोपदेशलब्धपरमात्मतत्त्वज्ञानत्वावगमाच्चेति । अतोविरुद्धेश्वरतात्पर्याभावान्नार्थविरोधः । नन्वर्थविरोधो दुष्परिहरः, तथा हि विशेषातिदेशनिरूपणपरेऽष्टमाध्याये विकृतिषु प्रकृतिधर्मातिदेशे कर्तव्ये सति कस्मिन् कर्मणि कस्य कर्मणो धर्मातिदेशः प्राप्त इत्यपेक्षायां यस्य कर्मणो येन कर्मणा द्रव्यसाम्यं देवतासाम्यं वा भवति तस्मिंस्तद्धर्मातिदेष्टव्य इति स्थितं, तत्र यस्य केनचिद् द्रव्यसाम्यं केनचिद्देवतासाम्यं च भवति तस्मिन् द्रव्यसा-

म्यवत एव कर्मणो धर्मातिदेशः कृतः, न तु देवतासाम्यवत इति द्रव्यप्राधान्यमुक्तं जैमिनिना "द्रव्यदेवतासाम्ये द्रव्यं बलीय" इति ।

न च द्रव्यप्राधान्योक्तेरतिवादत्वमनुष्ठानविरोधात् द्रव्यप्राधान्येन ह्यनुष्ठानन्दृश्यते, अतोद्रव्यप्राधान्यं वदतोजैमिनेर्देवतानिरासे तात्पर्यमस्तीति । अत्रोच्यते । नात्र द्रव्यदेवतयोः सद्भावासद्भावाभ्यां प्राधान्याप्राधान्ये विवक्षिते अपि तु विलम्बिताविलम्बितवृत्तिप्रमाणविषयत्वाधीने द्रव्यं ह्यविलम्बितप्रत्ययगम्यं देवता तु विलम्बितशास्त्रगम्या विलम्बाविलम्बावेव हि श्रुतिलिङ्गादिषु प्रत्यक्षादिषु च पूर्वोत्तरप्राबल्यदौर्बल्यहेतू ।

ननु हविष्ट्वं शास्त्रैकगम्यमिति न द्रव्यस्यापि प्राधान्यमिति चेत् नैवं चरुपुरोडाशादिकं द्रव्यं हि प्रत्यक्षं हविष्ट्वाख्यधर्ममात्रमेव तत्र शास्त्रगम्यं देवतायास्तु स्वरूपं, श्रेयःसाधनत्वादिधर्मश्चोभयमपि शास्त्रगम्यम् । अतः स्वरूपतोधर्मतश्च विलम्बितमानगम्यत्वाद् देवताया अप्राधान्यं धर्ममात्रस्य शास्त्रगम्यत्वेपि धर्म्यंशेनाविलम्बितमानगम्यत्वाद्धविषः प्राधान्यमतः प्राधान्याप्राधान्ययोः प्रमाणद्वारकत्वेन स्वरूपासद्भावे तात्पर्यं नास्तीति देवतानिरासोक्तिरन्यपरा । एवमर्थान्तराण्यप्यविरोधेन नेतुं शक्यानीति नार्थविरोधः ।

ननु ब्रह्मसूत्रैरेव जैमिनिपक्षमनूद्य प्रतिक्षेपादर्थविरोधो दुष्परिहारः, तथाहि "फलमत उपपत्ते"रित्यत्रेश्वरस्य फलप्रदत्वोक्त्या "धर्मं जैमिनि"रिति धर्मस्य फलप्रदत्वमनूद्य प्रतिक्षिप्तं न श्रुतत्वोपपत्तिभ्यां कालान्तरभाविफलसाधनमात्रे जैमिन्यभिहिते ताभ्यामेवात्र फलसाधनविशेषसिद्धेरुक्तत्वात् ।

ननु शेषत्वात् पुरुषार्थवादो यथा "अन्येष्विति जैमिनि"रित्यत्र वेदान्तोदितात्मज्ञानस्य कर्मशेषतयात्मनां कर्मशेषत्वोक्तिरधिकोपदेशादिति सिद्धान्तेन विरुद्ध्यते ।

न च विकल्पेन निर्वाहः संभवति, वस्तुनि विकल्पायोगात् ।

न च जैमिनिना परमतमुपन्यस्तमिति वाच्यं जैमिनिमतत्वेन सिद्धान्तिना प्रतिक्षेपायोगात् । नैवम् । विपक्षनिरासार्थस्य जैमिनेरन्या-

रुह्यवादस्य तथोपन्यासप्रतिक्षेपोपपत्तेः । अन्यथा "परं जैमिनि"रित्यादि-सूत्राणां मिथोविरोधः, भारतोक्तिविरोधश्च, जैमिनेरन्वारुह्यवादमजानतान्तदुक्ते तत्त्वबुद्धिः स्यादिति तन्निवारणाय ब्रह्मसूत्रे तदुपन्यासनिरासौ कृतौ । अतएव "परामर्शं जैमिनि"रित्यत्र नैष्ठिकाद्याश्रमप्रतिक्षेपोपि परिहृतः, 'तद्भूतस्ये'त्यत्र नैष्ठिकाद्याश्रमभ्रंशस्य जैमिन्यनभिमतत्वाभिधानात्, नह्याश्रमानभिमतौ तद्भ्रंशानभिमतिसंभवः । अतो वीतरागव्यतिरिक्तानामग्निहोत्रादिष्वश्रद्धानिवारणार्थं आश्रमान्तरप्रतिक्षेपः पूर्ववदन्वारुह्यवादः, स च पूर्वमीमांसायामसूचितस्तथाप्यौडुलोम्यादिमतवदनूद्य निरस्तः ।

न च मधुविद्यायां वस्वाद्यनधिकारोक्ति रधिकारोक्त्या विरुध्यत इति वाच्यम् अनधिकारोक्तेर्मध्वादिदेवताभ्युपगमचिह्नत्वेन शास्त्रैक्याविरुद्धतया तदुद्घाटनवैयर्थ्याद् "भावं जैमिनि"रित्यादिसूत्रोक्तपक्षाश्च शास्त्रैक्याविरुद्धाः कर्मविचारे तेषामसमर्थनादिति न तत्पर्यनुयोगावकाशः, तस्मान्नार्थविरोधः, कर्तृभेदपरिहारस्तु प्रसिद्धत्वाच्च–

कण्ठोक्तः, अतएव शब्दसूचितो वा धूर्तस्वामिकपर्दिकर्तृकस्यापस्तम्बसूत्रव्याख्यानस्य व्याख्येयैक्यादेकप्रबन्धकत्वं हि दृष्टम् । पाणिनीयसूत्रपूर्वोत्तरवृत्त्योश्च वामनजयादित्यकर्तृकयोर्व्याख्येयैक्यादेकव्याख्यानत्वं दृष्टं तस्मादुपपन्नमैकशास्त्र्यम् ।

**सू० मीमांसाशास्त्रम"थातो धर्मजिज्ञासे"त्यारभ्यानावृत्तिः शब्दादित्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमं तथाहि ॥**

टी० अस्त्वेकशास्त्र्यं कथं पौर्वापर्यनियमः?–इति शङ्कां परिहरन् वृत्तिग्रन्थस्थं "संहित"मिति पदं विवृणोति ।

"मीमांसे"ति क्रमविशेषान्वितमैकशास्त्र्यं संहितमित्यभिप्रेतम् आरभ्यैवमन्तमिति पौर्वापर्यं नियम उक्तः "सङ्गतिविशेषेणे"ति अत्रामी सङ्गतिविशेषा अभिप्रेताः पाठक्रमश्चेतनानां त्रिवर्गे प्रथमप्रावण्यसंभवरूपौत्सर्गिकस्वभाव औपनिषदेष्वगाङ्गिभावप्रतिपादकवाक्येषु यज्ञादिकर्मणः पदार्थत्वेन संबन्धः कासुचिद्विद्यासु यज्ञतदुपकरणादीनां दृष्टिविशेषण-

त्वोक्त्या कर्मब्रह्मविद्ययोर्दृष्टान्तदार्ष्टान्तिकभावो विद्याकर्मणोरुत्पाद्योत्पादकभावात् तच्छेषभूतविचारयोस्तु तत् क्रमभावत्वोपपत्तिर्व्याख्यानभूतमीमांसायां च उत्तरभागस्य पूर्वभागोक्तन्यायसापेक्षत्वं चेति, एवं पौर्वापर्यनियामकसङ्गतिविशेषेण विशिष्टक्रमं--क्रमविशेषवदित्यर्थः ।

ननु भवतु वेदप्रामाण्यसिद्धये प्रथमाध्यायस्य पूर्वभावित्वं द्वितीयाध्यायात् पूर्वं ब्रह्मविचारः किं न स्यादिति तत्र तत्रोक्तैः सङ्गतिविशेषैः षोडशलक्षणानुपूर्वीसिद्धेस्तदनन्तरप्राप्तत्वाद् ब्रह्मविचारस्येत्यभिप्रेत्य "सङ्गतिविशेषेण विशिष्टक्रम"मित्युक्तम् । एवमैकशास्त्र्यं पौर्वापर्यनियमः शास्त्रस्यारम्भणीयत्वं च त्रयं प्रतिज्ञातं। पूर्वोक्तस्य साङ्गसशिरस्काध्ययनस्य प्रमाणं दर्शयन् साधनचतुष्टयसंपादनस्यानवसरग्रस्ततां च दर्शयन् प्रतिज्ञातार्थत्रयमुपपादयितुमाह "तथाही"ति ।

टी० प्रतिज्ञातार्थत्रयोपपादनार्थमध्ययनविधिं निरूपयति "प्रथमपि"ति ।

सू० प्रथमं ताव"त्स्वाध्यायोऽध्येतव्य"इत्य[2]ध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ।

ननु वेदप्रामाण्यसमर्थनमिव कर्मविचारसिद्धमध्ययनविधिनिरूपणं किवोपजीव्यते? इति चेत्। न । अर्वाचीनव्याख्यातृभिरर्थज्ञानपर्य[3]न्तायास्तत्त्वतन्त्रो[4]क्तत्वात्, अक्षरराशिग्रहणपर्य[5]न्तत्वं हि भगवद्बादरायणाभिमतम् "अध्ययनमात्रवत" इति हि वक्ष्य[6]ते अतस्तत्र वक्ष्यमाणोऽर्थः शास्त्रारम्भणीयत्वायात्र प्रतिपाद्यते । अध्ययनविधेरक्षरग्रहणमात्रपर्यन्तत्वे निरूपिते शास्त्रस्यारम्भणीयत्वसिद्धिः। कृत्स्नविषयत्वनिरूपणेन ऐकशास्त्र्यपौर्वापर्यनियमसिद्धिः । कथमक्षरग्रहणमात्रपरत्व आरम्भणीयत्वम्? । इत्थम् । अध्ययनविधेरर्थज्ञानपर्यन्तत्वे सत्यर्थज्ञानस्य, "अधीत्य स्नायात्" "आचार्यकुलाद्वेदमधी-

१ तत्कर्मभात्त्वोपपत्तिरिति (ख) पु० पा० । २ इत्यध्ययनविधिनैव ।
३ "अर्थज्ञानपर्यन्ततायाः" इत्युचितः पाठः । अधिपूर्वकेङ्धातोर्गुरूच्चारणानूच्चारणजन्यार्थप्रतिपत्तिपर्यन्तार्थकतायाः इत्ययं तदर्थः । ४ पूर्वमीमांसायन्थेष्वित्यर्थः ।
५ गुरूच्चारणानूच्चारणमात्रमध्ययनपदार्थो नत्वर्थावगमस्तत्र धात्वर्थतावच्छेदककोटिनिक्षिप्त इतिभावः । ६ भाष्यकारेणेति तदर्थः ।

त्याभिसमावृत्त्ये"ति यज्ञाद्यनुष्ठानशेषत्वेन विनियोगादुपनिषत्सिद्धस्य ब्रह्मज्ञानस्यापि कर्मशेषत्वापत्तेस्तस्य च ज्ञानस्य "आत्मा वा इदं" "ब्रह्म वा इदम्" "अयमात्मा ब्रह्मे"ति त्रय्यन्तस्यब्रह्मशब्दस्यात्मपर्यायत्वेनात्मविषयत्वादात्मज्ञानस्य व्रीह्यादिद्वारा प्रोक्षणादेरिव त्मद्वारा कर्मशेषत्वे सति द्वारभूतव्रीह्यादेरिव द्वारभूतात्मन[1]श्च कर्मशेषत्वं स्यात् ।

न च समुद्रध्यानवदात्मज्ञानस्यादृष्टद्वारा कर्मशेषत्वात् समुद्रवदात्मा न कर्मशेष इति वाच्यम् । कर्मशेषतयावक्लृप्तस्यात्मनो द्वारभावे संभवत्यदृष्टकल्पनाऽयोगात् । समुद्रस्य तु क्रतूपकारकत्वासंभवेन ह्यदृष्टकल्पनम्। नन्वात्मनः फलप्रदतया शेषत्वमस्त्विति चेत् । न । संप्रतिपन्नेनात्मनात्मज्ञानस्य कर्मशेषत्वे निरूढेऽप्यसंप्रतिपन्नात्मकल्पनाऽयो[2]गात् । न हि जीवविलक्षण आत्मा संप्रतिपन्नः, अतोऽनुष्ठानशेषभूत आत्मा कर्मसु कर्तृभूतो जीव एवेति वेदान्तानां जीवपरत्वेन, तदतिरिक्तेश्वरे प्रमाणाभावादप्रामाणिकेश्वरविचाररूपं शास्त्रमनारम्भणीयं स्यादिति प्राप्नुयात्, अक्षरराशिग्रहणमात्रपर्यन्तत्वे त्वर्थज्ञानस्यानुष्ठानशेषत्वाभावेन कर्मसु कर्तृभूतजीवातिरिक्तात्मप्रतिपादनसंभवात् प्रामाणिकपरमात्मविचाररूपं शास्त्रमारम्भणीयं स्यादित्यतोऽध्ययनविधिर्निरूप्यते । तत्राध्ययनस्य सक्तुहोमवत् प्रधानकर्मत्वं स्वरूपेण विधेयत्वमध्यापनविधिप्रयुक्तत्वमुपनयनस्याध्यापनाङ्गत्वं च प्राभाकराभिमतमनादृत्याध्ययनस्यावघातवद् गुणकर्मत्वं नियमस्य विधेयत्वमध्ययनस्य स्वविधिप्रयुक्तत्वमुपनयनस्याध्ययनाङ्गत्वं चेति कौमारिलाभिमतमर्थचतुष्टयमुभयानभिमतमक्षरराशिग्रहणमात्रपर्यन्तत्वं च सङ्ग्रहेण प्रतिजानीते "प्रथममि"ति । "प्रथमं तावत्"—प्रथमत एव, "यावत्तावच्च साकल्येवधौ मानेवधारणे" इति नैघण्टुकाः । प्राथम्यं शास्त्रान्तरश्रवणयोग्यावस्थापेक्षया पूर्वभावित्वम् । गर्भाष्टमोपनीतस्य ह्यध्ययनं ततः पूर्वं शास्त्रान्तरपरिश्रमानर्हत्वादध्ययनविधिपरतन्त्रस्य साङ्गाध्ययनानन्तरं कर्मविचारावश्यंभावस्य स्वरससिद्धत्वाच्च, साधनचतुष्टयादिपूर्ववृत्तान्तरनिष्पादनस्यानवसर-

१ चकारोऽत्राप्यर्थकः ।

२ नित्यत्वादिना प्रतिपन्नस्वात्मतत्त्वा एवाधिकुर्वन्ति क्रियासु नातथाभूताः इत्यसंप्रतिपन्नपरात्मकल्पना न युक्तेति भावः ।

शस्तत्वं "प्रथमं तावदि" त्यनेन फलितम् । लौकिकाक्षरग्रहणव्यावृत्त्यर्थोवेदाख्य-शब्दः, वेदाख्य-शब्देन कृत्स्नाध्ययनं च सूचितम् । न हि वेदान्तभाग¹मात्रं स्वाध्यायशब्दवाच्यम् । "अध्ययनेने" ति निर्देशेन गुणकर्मत्वं सूचितं, भावार्थस्यान्यनिष्ठत्वप्रतीतेः । यदि प्रधानकर्मत्वमविवक्षिष्यत् तदा हि स्वाध्यायेनाध्ययनं संपाद्यमितिवचनव्यक्तिरभविष्यत् । एवकारेण नियमविधित्वं द्योतितं, न तु पुस्तकनिरीक्षणादिनेत्यर्थः । "स्वाध्यायोऽध्येतव्य" इति अध्ययनविधिवाक्योपादानेन स्वविधिप्रयुक्तत्वं सूचितम् । तद्ध्यापयेदिति वाक्यमुपात्तं, प्राथम्यवचनादध्ययनस्योपनयनाङ्गत्वं च फलितं, शास्त्रान्तरपरिश्रमायोग्यगर्भाष्टमवर्षाभिप्रायेण हि प्राथम्यमुक्तम् । अध्ययनस्य च प्राथम्यम "ष्टवर्षं ब्राह्मणमुपनयीते" त्युपनयनविषयतयोक्तस्य कालस्य उपनयनद्वाराध्ययनशेषत्वे सत्येव ह्युपपद्यते । एवमर्थपञ्चकं संक्षेपेण प्रतिज्ञातं भवति—अस्मिन्नध्ययनविधिवाक्ये ऽध्ययनस्य प्राथम्यं साङ्गत्वमुपनयनाङ्गत्वं च न प्रतीतम् "उपनयीत तमध्यापयेदि" ति वाक्यान्तरेण ध्ययनस्याध्यापनविधिप्रयुक्तत्वमध्यापनस्योपनयनाङ्गकत्वं च प्रतीयतइति शङ्कायामाह ।

**सू० तच्चाध्ययनं किं रूपं? कथं च कर्त्तव्यम्? इत्यपेक्षायाम् "अष्टवर्षं ब्राह्मणमुपनयीत—**

टी० "तच्चे" ति । चः—शङ्कानिवृत्तौ । तत्—"स्वाध्यायोऽध्येतव्य" इति वाक्यप्रतिपादितमित्यर्थः, "आद्ये त्वध्ययनेनैव कदाचिदस्ति फलश्रुतिः, धारणे जपयज्ञे च या साप्येवं निवारिते" ति जपादेरप्यध्ययनशब्दवाच्यत्वात्तेषु प्रस्तुताध्ययनस्य याध्ययनत्वनिश्चयायाह "किं रूपमि" ति । किं सकृदुच्चारणरूपमाहोस्विदसकृदुच्चारणरूपं किं वा स्वतन्त्रोच्चारणरूपमुत परतन्त्रोच्चारणरूपमित्यर्थः । परतन्त्राऽसकृदुच्चारणरूपत्वे ह्याद्याध्ययनत्व सिद्धिः । "कथं"—किमङ्गकमित्यर्थः । इत्यपेक्षायाम "पेक्षितानि विधीयन्ते" इत्यन्वयः । प्राथम्यं तन्त्रोच्चारणरूपत्वमुपनयनाङ्गकत्वं च दर्शयितुमाह—"ऽष्टवर्षमि" ति । "अष्टवर्षमि" त्यनेन प्राथम्यं सिद्धम् । उपनयनद्वाराऽ-

१ संहितामारभ्यारण्यकोपनिषदन्तः सर्वो वेदः स्वाध्यायपदवाच्यइत्यर्थः ।

ध्ययनशेषत्वात् कालस्य "ब्राह्मणमुपनयीते"ति द्वितीयाश्रुत्या माणवकशेषत्वावगमादुपनयनस्य तद्गताध्ययनाङ्गत्वसिद्धिः, उपनयनस्याकर्त्रभिप्रायसूत्रविहितत्वाच्च नाध्यापनाङ्गत्वसिद्धिः। "अध्यापयेदि"त्यनेन परतन्त्रोच्चारणरूपत्वसिद्धिः।

**भू० तमध्यापयेदित्यनेन "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि, युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमानि"-त्यादि व्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते।**

टी० "द्वादशाहेन प्रजाकामं याजयेत्" "अन्नाद्यकामं याजयेत्" "निषादस्थपतिं याजयेदि"ति प्रतिपन्नस्य याजनस्येवार्थार्जनाद्यर्थतया रागप्राप्तस्याध्यापनस्याविधेयत्वादध्यापने ऽधिकारिविशेषाश्रवणाच्चाध्ययनस्याध्यापयितृपूर्वकत्वमुच्यते, इत्ययमध्ययनाङ्गविधिरिति भावः। उपाकर्मादिव्रतनियमाङ्गकत्वं साङ्गत्वं च दर्शयितुमाह "श्रावण्यामि"ति। "अर्द्धपञ्चमान्मासानित्यादी"त्यत्रादिशब्दोपात्तैः "अतऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेदि"त्यादिवचनैरङ्गाध्ययनस्य कालो दर्शितः। "व्रत"मुपाकर्मकाण्डव्रतादि नियमः "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाऽध्येतव्यमि"त्याद्युक्तदेशकालभक्ष्याभक्ष्यादिव्यवस्थारूपः। अध्यापयेदित्यनेन व्रतनियमविशेषोपदेशैश्चे"ति पृथङ्निर्देशः श्रुतित्वस्मृतित्वविभागाद्विप्रतिपन्नत्वसंप्रतिपन्नत्वविभागाच्च कृतः। उपाकर्मादिव्रतनियमवदुपनयनमप्यध्ययनाङ्गमिति भावः। किं रूपं? कथं च कर्त्तव्यम्? इत्यपेक्षायामेभिरङ्गविधायकवाक्यैरपेक्षितानि विधीयन्ते इत्यर्थः। ननु "अष्टवर्षं ब्राह्मणमि"त्यत्रोपनयनस्याऽध्ययनाङ्गत्वमवगम्यते इत्युक्तं तदयुक्तं, तस्योपनेयासत्तिद्वाराऽध्येतृसाकाङ्क्षाध्यापनाङ्गत्वं ह्यवगम्यते "उपनीय तु यः शिष्यमि"त्यादिस्मृतिवचनाच्च तदवगम्यते। उच्यते। "ब्राह्मणमुपनयीते"त्यत्र द्वितीयाश्रुत्या उपनयनस्य माणवकशेषत्वमवगम्यते माणवकशेषमुपनयनम्, अध्ययनं च तद्गतं तत्रान्तरङ्गबहिरङ्गन्यायादुपनय-

१ तदध्ययनाङ्गत्वसिद्धिरिति ख पुस्तकपाठः।

नमध्ययनाङ्गमेव । ननु "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इति वचने क्त्वाश्रुत्योपनयनस्याऽध्यापनाङ्गत्वं युक्तम् । अन्तरङ्गत्वं हि वस्तुसामर्थ्यरूपं लिङ्गं ततः क्त्वाश्रुतिर्बलीयसीति चेत् न । अन्तरङ्गत्वं हि प्रत्यक्षश्रुतिसिद्धं, क्त्वाश्रुतिस्तु स्मृतिगतानुवादरूपवचनस्था च, अतोऽस्याः स्मृतिवचनस्थत्वान्मूलश्रुतिसापेक्षत्वम्, अनुवादरूपवचनगतत्वाद्विध्यन्तरसापेक्षत्वमिति विलम्बद्वयमस्ति, श्रुतिलिङ्गादिषु विलम्बितधीहेतुत्वं हि परदौर्बल्यहेतुः, अतो विलम्बद्वयोपहता क्त्वाश्रुतिर्न बलीयसी । किंच, आत्रियोपाध्यायगुर्वादिनामविधानवत् तत्प्रकरणस्थमिदं वचनमुपनीयाध्यापयितुराचार्यनामविधानपरमिति न क्त्वाश्रुतिरुपनयनस्याध्यापनाङ्गत्वे प्रमाणं भवितुमर्हति । किंच, "स्वरितञितः कर्त्रभिप्राये क्रियाफल" इत्यात्मनेपदे प्राप्तेपि 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय' इति पुनर्विधानस्याकर्त्रभिप्रायार्थत्वादुपनयनस्य नाध्यापनाङ्गत्वं युक्तम् । "अकर्त्रभिप्रायार्थोऽयमारम्भ" इति हि तद्वृत्तिकारः ।

ननु कर्त्रभिप्रायत्वं कर्त्तर्येव फलस्याभिप्रेतत्वं, तदवधारणनिषेधार्थं पुनर्विधानम्, अतः फलमुभयान्वयि, अतो माणवकद्वारेणाचार्यान्वय्युपनयनफलमित्यध्ययनाङ्गत्वं युक्तमिति चेत् न । "अग्नीनादधीते"त्यत्र कर्त्रभिप्रायसूत्रविहितेऽप्यात्मनेपदे फलस्योभयान्वयितया पुनर्विधानस्य नियमनिषेधार्थत्वाभावेन कर्त्रभिप्रायत्वमात्रस्य निषेधार्थत्वात् । अतो नाध्यापनाङ्गत्वम् । कर्त्रभिप्रायशब्देन कर्तृव्यतिरिक्तचेतने फलानन्वयो विवक्षितः, अतो न "अग्नीनादधीते"ति व्यभिचारः, पुनर्विधानस्य तन्निवारणार्थत्वे फलस्याचार्येप्यन्वयोपपत्तेरध्यापनाङ्गत्वमिति चेत् । न । "ऋत्विजो वृणीत" इत्यत्र स्वरितेत्यादिसूत्रविहितेप्यात्मनेपदे फलस्य कर्तृव्यतिरिक्तचेतनान्वयदर्शनेन पुनर्विधानस्य नियमनिषेधार्थत्वाभावात्, अतः कर्त्रभिप्रायमात्रनिषेधार्थं पुनर्विधानमिति नाध्यापनाङ्गमुपनयनम् । क्रियाफलन्नाम क्रियानन्तरभावि फलं, तस्य कर्तर्यन्वितत्वं कर्त्रभिप्रायत्वम् । अत आचार्यकस्योपनयनक्रियानन्तरभावित्वाभावादव्यवहितफलस्य कर्तृगतत्वाभावाच्चात्मनेपदस्या-

१ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां परदौर्बल्यमर्थविप्रकर्षात् । इतिजैमिनीयस्य युक्तिमूलपरदौर्बल्यबोधकत्वमिति भावः ।

प्राप्तौ अव्यवहितफलस्याकर्त्रभिप्रायत्वेप्यात्मनेपदं "संमाननेत्या"दिसूत्रेण विधीयते। अतोऽकर्त्रभिप्रायार्थत्वेपि व्यवहिताचार्य[1]कनिष्पत्त्यर्थतयाऽध्यापनाङ्गत्वमुपनयनस्याविरुद्धमिति चेत्। नैवम्। "अग्नीनादधीते"त्यत्र स्वरितेतिसूत्रविहितेप्यात्मनेपदे अग्निसंस्कारव्यवहिताग्नित्वापत्तिरूपफलस्य कर्त्रन्वयित्वदर्शनाद्‌ततोकर्त्रभिप्रायार्थं संमाननेत्यादिसूत्रं फलमात्रस्य कर्त्रन्वयनिवारणार्थं संस्कारविशिष्टोऽग्निः फलमित्याधानकर्त्तरि न व्यवहितफलान्वय इति चेत् तर्ह्युपनयनसंस्कारविशिष्टमाणवकसिद्धिरेवाव्यवहितं फलमिति, कर्त्रभिप्रायसूत्रेणैवात्मनेपदसिद्धेरकर्त्रभिप्रायसूत्रवैयर्थ्यं स्यात्।

ननु यद्येवं व्यवहितमव्यवहितं वा फलमात्रमकर्त्रभिप्रायसूत्रेण निवार्यते तर्ह्युपनेतुः प्रवृत्तिर्नोपपद्यते यतः "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इति। नैवम्। उपनयनफलस्य माणवकान्वयित्वेप्याचार्याय वरो देय इति विध्यन्तरप्राप्तदक्षिणाफललिप्सया प्रवृत्त्युपपत्तेः॥

न च तेनाकर्त्रभिप्रायत्वविरोधः, असाधारणफलानन्वयविषयत्वादकर्त्रभिप्रायसूत्रस्य। अव्यवहितक्रियाफलस्य कर्त्तुरभिमतत्वं कर्त्रभिप्रायत्वं, तदनभिमतत्वमकर्त्रभिप्रायत्वमित्यप्ययुक्तं, क्रियाफलस्य कर्त्रनभिमतत्वव्याघातात्। आचार्यकनिष्पत्त्युपयोगिनो माणवकसंस्कारस्याचार्यानभिमतत्वानुपपत्तेः। अत उपनयनमध्येष्यमाणमाणवकासक्तिमुखेन नाध्यापनाङ्गम्, अपि त्वध्ययनाङ्गमेव। अध्ययनं च नाध्यापनविधिः प्रयुङ्क्ते, "अध्यापयेदि"ति तु "द्वादशाहेन प्रजाकामं याजये"दित्यादिवदित्युक्तम्। यद्यपि प्रजाकाममन्नाद्यकाममितिवत् तत्र प्रयोज्यव्यापारस्याध्ययनस्याधिकारिविशेषणं फलं न श्रूयते तथापि स्वाध्यायसिद्धिरधिकारिविशेषणं स्यात्, "स्वाध्यायोऽध्येतव्य" इति स्वाध्यायस्याध्ययनसाध्यत्वावगमात्। यथा "ऽग्नीनादधीते"त्यत्राग्नीनामाधानसाध्यत्वावगमादग्निसिद्धिरधिकारिविशेषणं, तद्वत्।

न च स्वविधिप्रयुक्तत्वेध्ययनविधेरनुष्ठात्रभावः। सन्ति हि प्रबन्धाध्येतारः। तथाह भगवानापस्तम्बः - "तस्मिन्नभिजन[2]विद्यासमुदेतं समाहितं

---

१ अत्रभावे प्रत्ययस्तथा चाचार्यत्वनिष्पत्त्यर्थतयेत्यर्थः।

२ अविच्छिन्नवेदवेदिसम्बन्धे कुले जन्माभिजनः विद्या च वेदविद्या ताभ्यां समुदेतं संपन्नमित्यर्थः, इदमापस्तम्बधर्मसूत्रम्।

संस्कर्त्तारमीप्सेदि"ति तेषु परविधिप्रयुक्तत्वे सत्यध्ययनं नोपपद्यते । अप्रबुद्धविषये[1] तु स्वतन्त्रस्याध्ययनविधेर्माणवकविषयत्वं ज्ञात्वा हितैषिणो माणवकम[2]ध्ययनादि कारयन्ति । अतः प्रबुद्धेष्वप्रबुद्धेषु च स्वविधिप्रयुक्तत्वमध्ययनस्य युक्तम् । परविधिप्रयुक्तत्वे नित्यस्याध्ययनस्य काम्यविधिप्रयुक्तत्वं स्यात्, ततश्चानुष्ठाननियमो न स्यात् । आचार्यककामो ह्यध्यापकः, तस्याचार्यककामनाया अभावेऽध्ययनासिद्धेः । अध्यापकबाहुल्यात्तत्सिद्धिरिति चेत्, अध्यापकेभ्योऽप्यध्येतृबाहुल्यदर्शनात् । आधानस्योत्तरक्रतुविधिप्रयुक्तत्वेपि न काम्यविधिमात्रप्रयुक्तत्वं 'वसन्ते वसन्ते ज्योतिषा यजेत'' "यावज्जीवमग्निहोत्रं जुहोती''ति नित्यविधिसद्भावादित्येवमाद्यनुसंधेयम् । अतो यथोक्त एवार्थः । अङ्गविध्युपेतेन प्रधानविधिनाङ्गस्वरूपमङ्गिस्वरूपं च कथं प्रतिपन्नमित्यत्राह ।

**सू॰ एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते ।**

"एवमि"ति । एवमङ्गविधिभिः सह प्रधानविधौ निरूपिते इत्यर्थः । सत्सन्तानेत्यादिना "तस्मिन्नभिजनविद्ये"त्यापस्तम्बवचनार्थोनुसंहितः । आत्मगुणा अक्रोधादयः । अनेन समाहित–शब्दार्थ उक्तः । वेदविच्छब्देन विद्यासमुद्देत–शब्दार्थ उक्तः । वेदविदाचार्योपनीतस्येति आचार्यविशेषणमुपनयनद्वारा माणवकार्थं, यथा उपनयनस्याध्यापनाङ्गत्वे माणवकविशेषणमाचार्यार्थं तद्वदिति भावः । व्रतनियमविशेषयुक्तस्य व्रतनियमविशेषवदाचार्यविशेषणमपि माणवकार्थमिति भावः । आचार्योच्चारणानूच्चारणमिति परतन्त्रोच्चारणरूपता दर्शिता । अक्षरराशिग्रहणफलमितिपदमसकृदावृत्तिरूपत्वस्याक्षेपकं दर्शयति, यथा "व्रीहीनवहन्ती''त्यत्र दृष्टफलत्वस्याप्यपरित्याज्यत्वेनाऽवहननस्य वैतुष्यपर्यन्तत्वाद् अश्रुताप्यावृत्तिः सिद्धा, तद्वद-

१ अप्रबुद्धविषयेषु इति पाठान्तरम् ।
२ अध्यापनादि इति युक्तः पाठः ।

त्रापि सामर्थ्यादावृत्तिः सिद्धा । दृष्टप्रयोजनापरित्यागेनैव नियमस्य विधेयत्वात् । आचार्योच्चारणानूच्चारणमित्यनेन वेदविदाचार्योपनीतस्येत्यनेन चाध्ययनस्याध्यापयितृसापेक्षत्वेन परतन्त्रोच्चारणरूपत्वं स्वविधिप्रयुक्तत्वमुपनयनाङ्गकत्वं चोक्तम् । आचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमित्यनेन 'किंरूप'मित्याकाङ्क्षा शमिता[1] वेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्येत्यनेन कथं च कर्तव्यमित्यपेक्षा पूरितापाठः । अक्षरराशिग्रहणफलमित्यनेन स्वाध्यायग्रहणकामत्वमध्ययनाधिकारिविशेषणमित्यपि सूचितम् ।

**मू०** अध्ययनं च स्वाध्यायसंस्कारः, "स्वाध्यायोऽध्येतव्य" इति स्वाध्यायस्य कर्मत्वावगमात् । संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्, संस्कार्यत्वं च स्वाध्यायस्य युक्तम् ।

टी० ॥ ननु "सक्तून् जुहोती"त्यत्र पुरुषस्य सक्तुहोमजन्यादृष्टभाक्त्वात् सक्तुहोमो यथा पुरुषसंस्कारः, तद्वदध्ययनस्य पुरुषसंस्कारत्वस्याक्षरराशिग्रहणफलत्वं न स्यात्, अपूर्वसिद्ध्यर्थतया स्वाध्यायसिद्ध्यर्थत्वाभावात्, ततश्चाक्षरराशिग्रहणफलत्वाभावेनावृत्त्यसिद्धेः सकृदुच्चारणरूपमेवाध्ययनं स्यादित्याशङ्क्याह "अध्ययनं चे"ति । उपनयनाङ्गकत्ववत् स्वविधिप्रयुक्तत्ववदिदं चोपपादनीयमिति चार्थः । स्वाध्यायसंस्कारः–,न तु सक्तुहोमवदपूर्वविषयतया पुरुषसंस्कार इत्यर्थः । कुत इत्यत्राह "स्वाध्याय"इति । तव्यप्रत्ययात् कर्मत्वावगमः । स्वाध्यायस्य हि कर्मत्वावगमः, न पुरुषस्य कर्तुः । क्रिययाप्तुमिष्टतमत्वं हि कर्मत्वम् अतोध्ययनं स्वाध्यायसंस्कारः, न तु पुरुषस्येत्यर्थः । निर्वर्त्यादेरपि साधारणं कर्मत्वं कथं संस्कार्यत्वे हेतुतयोच्यते इत्यत्र निर्वर्त्यस्वविकार्यत्वानुपपत्तिमभिप्रेत्य स्वाध्यायस्येति पुनः कीर्तनं, वस्तुसामर्थ्यसचिवकर्मत्वावगमः संस्कार्यत्वे हेतुरिति भावः । फलान्तरे संभवति प्राप्यत्वमात्रपर्यवसानं चाऽयुक्तम् । ननु न कर्मत्वावगममात्रात् संस्कार्यत्वं "सक्तून् जुहोति" "सुवर्णं भार्यमि"त्यत्र सक्तुसुवर्णयोः

[1] शमितेतियुक्तः पाठः ।

संस्कार्यत्वाभावादिति शङ्कायां संस्कारस्वरूपं शोधयति "संस्कारो ही"ति । हिनामाभ्यां[1] प्रसिद्धिः प्रतियोग्यभ्युपगमश्च सूच्यते । अपिचेतिवदनेकाव्ययतुल्यरूप एकशब्दो वा । यद्यपि सत उत्कर्षाधानं संस्कार इति भूतभाव्युपयोगिसंस्कारानुगतलक्षणं, तथापि स्वाध्यायस्य भूतोपयोगित्वासंभवात् भाव्युपयोगिसंस्कारलक्षणमत्रोक्तं, संस्कारलक्षणानुपपत्त्या "सक्तून् जुहोती" त्यादिषु प्रत्ययस्वारस्यावगतमपि कर्मत्त्वं भग्नमिति भावः । अत्र तु न तथाऽनुपपन्नमित्याह "संस्कार्यत्वं चे"ति । चः शङ्कानिवृत्तौ । कुत इत्यत्राह-

**सू० धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्त्वात्, जपादिना स्वरूपेणापि तत्साधनाच्च ।**

टी० "धर्मार्थे"ति । पुरुषार्थचतुष्टयतत्साधनेत्यनेन पूर्वोक्तव्याख्येयैकत्त्वाय प्रयोजनवदर्थावबोधित्त्वमनुगतमिति दर्शितं भवति, पुरुषार्थपरत्वं वानुगतम्, धर्मादिषु हि पुरुषार्थत्वमनुगतं, दृष्टतत्साधनयोरुभयोरपि पुरुषार्थत्त्वात् । यद्यप्यर्थकामतदुपायेषु केचिल्लोकसिद्धाः, तथापि धनेशसुरेशादिविभूतिरूपातिशयितार्थकामतत्साधनानां लोकासिद्धस्य पशुपुत्रान्नादेश्चित्रादिसाध्यत्वस्य च लौकिकप्रमाणागोचरत्त्वात् पुरुषार्थचतुष्टयस्य वेदवेद्यत्वोक्तिर्युक्ता । अवबोधित्वात्,—अनुष्ठानौपयिकबोधजनकत्वादिति भावः । अर्थावबोधकत्त्वस्य हु[2]मादावव्याप्तत्वादाह "जपादिने"ति । स्वरूपेणापि अर्थज्ञानानुष्ठानाभ्यामृते जप्यमानेनाक्षरमात्रेणापीत्यर्थः । आदिशब्दादध्यापनग्रहणम् । अनुष्ठानानुगुणं ज्ञानं, जपादि चाध्ययनसंस्कृतेन स्वाध्यायेनैवेत्युक्तं भवति । यद्वा पुरुषार्थतत्साधनावबोधित्वेन सह तत्साधनत्वं च—शब्देन समुच्चीयते । तत्साधनत्वं द्विधा—जपादिना ध्रियमाणेन स्वरूपेण चेति । अतोऽवान्तरसमुच्चेतव्यसमुच्चयपरोऽपि—शब्दः ।

**सू० एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति ।**

टी० एवं नियमविधित्वं चोपपादितं भवति । अर्थज्ञानपर्यन्तत्त्वं

१ हिनामशब्दाभ्यामिति ख॰ पाठः ।

२ हुम्फडाद्यनर्थकपदेषु नार्थबोधकतेति भावः ।

किं शब्दस्वारस्यादभ्युपगम्यते? उतार्थानुपपत्त्या? इति विकल्पमभिप्रेत्य तत्र शब्दस्वारस्यं प्रतिवदन्नध्ययनविधिनिरूपणमुपसंहरति "एवमि" ति। "मन्त्रवदि" ति। पृथङ्निर्देशो व्रतान्तर्भावेन तदनन्तर्भावेन वाऽध्ययनोपकारकमन्त्राभिप्रायः। अस्ति हि शन्नोमित्रादिमन्त्राणां व्रताननुप्रवेशेनापि जपमात्रेणोपकारकत्वं, नियमाः पूर्वोक्ताः। यद्वा यथा बालस्य उपनयनकाले सन्ध्योपासनादिकाले च विधीयमानमुच्चारणं नियमवदक्षरपठनमेव नार्थधीसंपादनम्। नहि बालानां मन्त्रार्थावबोधसंभवः, तद्वदिति। "अक्षरराशिग्रहणे" ति। सनियामकोच्चारणमध्ययनशब्दस्य मुख्योर्थः, वेदानां किंचिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचानः, कल्पाध्यायी ऋषिः, कल्पसूत्रप्रवचनाध्यायी भ्रूण इत्यादिप्रयोगात्। नहि स्वशाखैकदेशाध्यायिनोर्थज्ञानसंभवः, अङ्गाध्ययनस्य पृथगुपादानेन तद्विरहे अर्थज्ञानप्रसङ्गाभावात्। स्वाध्यायशब्दश्च नार्थज्ञानवाची, अपि तु स्वशाखामात्रवाचीति तत्कर्मत्वं स्वाध्यायस्यैव युक्तं, न त्वर्थज्ञानस्य। अध्ययनस्य प्रयोजनाकाङ्क्षायां दृष्टे संभवत्यदृष्टकल्पनाऽयोगात्। अक्षरग्रहणस्याऽऽसन्नत्वाद्धर्मादिष्वनुगतत्वाच्च तत्स्वीकारो युक्तः। व्यवहितत्वादसार्वत्रिकत्वाच्च नार्थज्ञानमित्यभिप्रायः। सकृदुच्चारणावधिकत्वव्यावृत्त्यर्थमक्षरग्रहणे पर्यवसानमुक्तम्। मात्रचा विधिव्यापारस्यार्थज्ञानपर्यन्तत्वव्युदासः पर्यवस्यतीति। यथा "ऽग्नीनादधीते"-ति वाक्यमाधानमात्रपरं नतूत्तरक्रतुविनियोगपरं, यथा च "कारीर्या वृष्टिकामो यजेत" इति वाक्यं वृष्टिसिद्धिपर्यन्तकर्मपरं न तु वृष्ट्युपरितनोपयोगपरं, तथेति भावः। एवं शब्दस्वारस्यादर्थज्ञानपर्यन्तत्वं निरस्तम्, अथाऽर्थानुपपत्तिं परिहरति त्रिधा चाऽनुपपत्तिशङ्का—विधेरक्षरग्रहणमात्रपरत्वे ग्रहणशेषतया विनियुक्तस्य स्वाध्यायस्यार्थपरत्वे प्रमाणाभावादविवक्षितार्थत्वं स्यात्, मीमांसायाः प्रवर्त्तकाभावादनारम्भणीयत्वं स्यात्, अक्षरराशिग्रहणमात्रस्य दुःखरूपतया विधेः प्रयोजनपर्यवसानं न स्यादिति। एतच्छङ्कात्रयनिराकरणमुखेनाऽध्ययनविधेरर्थज्ञानपर्यन्ततां, तन्निमित्तां विचारानारम्भशङ्कां च व्युदस्यन् वेदाख्यैकप्रबन्धव्याख्यानरूपतया कर्मब्रह्मविचारयोरैकशास्त्र्यमपि दर्शयति।

सू० अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् ।

टी० ॥ "अध्ययनगृहीतस्ये"ति । इह साङ्गाध्ययनं विवक्षितम् अधीतसाङ्गसशिरस्कवेदस्य ।

ननु च साङ्गवेदाध्ययनादिति पूर्वापरानुगुण्यात् तेन हि प्रयोजनवदर्थापातप्रतीतिसिद्धिः । अर्थाः—यज्ञोपासनादयः, ते स्वर्गमो[1]क्षादिप्रयोजनवन्तः, प्रयोजनवदर्थ—शब्देन काकदन्तवत्परीक्ष्य[2]त्वशङ्काव्युदासः । प्रयोजनवदर्थावबोधित्वदर्शनादित्यनेन विधेः परम्परया पुरुषार्थपर्यवसायित्वमुक्तं भवति । अध्ययनस्य साक्षात्प्रयोजनमक्षरराशिग्रहणमित्युक्तम् अध्ययनगृहीतस्येति पदेन । अयमर्थः । किं साक्षात्पुरुषार्थपर्यवसायित्वं विधेर्विवक्षितम् ? । उत परम्परया? । साक्षात्प्रयोजनपर्यवसायित्वं विधेरर्थज्ञानपर्यन्तत्वेपि नोपपद्यते, अनुष्ठानापूर्वद्वारा स्वर्गस्यैव प्रयोजनत्वात्, अध्ययनविधेः स्वर्गपर्यन्तत्वानभ्युपगमाच्च । परम्परया चेद् अस्मत्पक्षेपि संभवति, स्वभावत—इति,-शब्दस्य बोधकत्वशक्तिस्वाभाव्यादित्यर्थः । व्युत्पन्नपदपदार्थं प्रति शब्दस्यार्थावबोधकत्वं स्वाभाविकमिति लोकसिद्धम् । एवकारो विधिनैरपेक्ष्यपरः, अन्यत्र विनियोगस्तु न स्वाभाविकं शब्दस्यार्थपरत्वं निरुपाधिजपविधिवत् "याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिःस्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीं वेदमेव जपेन्नित्यमि"त्यादिविधानं हि न वेदस्यार्थपरत्वं निवारयति । स्वाध्यायः स्वतोर्थबोधकश्चेत् किं मीमांसयेत्यत्राह ॥

सू० गृहीतात्स्वाध्यायादवगम्यमानान् स्वप्रयोजनवतोऽर्थानापाततो दृष्ट्वा ।

टी० "गृहीतादि"ति । गृहीतात्—गृहीतमात्रात्, अध्ययनगृहीतस्येत्युक्तेः, तेन मीमांसाख्येतिकर्तव्यताराहित्यं विवक्षितम्, आपातप्रतीतेः

---

१ एकस्यैवोपायस्य सकामनिष्कामात्मकानुष्ठानवैचित्र्येण स्वर्गमोक्षादिविविधप्रयोजनजनकतेति भावः ।

२ काकदन्तवदपरीक्ष्यत्वशङ्काव्युदास इति पाठान्तरम् ।

संशयविपर्ययसहत्वात्त्वरकरणाय मीमांसेति भावः । अध्ययनगृहीतस्ये-त्यादिना वेदस्य बोधकत्वस्वभावत्वमुक्तं, तत्र प्रयोजनवदर्थशब्दः परम्परया पुरुषार्थपर्यवसानज्ञापनाय, उपरि तन्निमित्तापातप्रतीतिजनक-तायाः सहकारिवैकल्यनिबन्धनत्वम् इत्यपौनरुक्त्यम् । नहि वेदस्यापात-प्रतीतिजनकत्वं स्वभावः, प्रमितिजनकत्वस्वभावत्वान्मीमांसाख्यपरिकर-शून्यस्य तदभावो न श्रुतेः प्रमितिजनकत्वस्वभावविरोधी । यथा आलो-कादिसहकारिविरहे रूपाद्यनुपलम्भश्चक्षुरादीनां रूपादिसाक्षात्कारजनक-त्वस्य स्वाभाविकत्वं न विहन्ति तद्वद्, आपातप्रतीतावपि प्रयोजनवत्त्वेन प्रतीतिरस्तीति दर्शयितुं पुनः प्रयोजनवदर्थशब्दः, प्रयोजनवदर्थापात-प्रतीतिर्हि तन्निर्णयरागजननी । नहि निष्प्रयोजनकाकदन्ताद्यापातप्रतीति-स्तन्निर्णयरागं जनयति । आपाततोऽवगम्यमानान् दृष्ट्वेत्यन्वयः । अर्थानामव-गम्यमानत्वं दृष्ट्वेत्यर्थः । स्वात्मनो बुद्ध्युत्पत्तिं दृष्ट्वेतिवत् प्रयोजनवदर्था-पातप्रतीतेः स्वानुभवसिद्धत्वान्न तदपह्नवः शक्य इति भावः । व्याकरणा-दिफलस्वरूपविलक्षणे मीमांसाफलस्वरूपे दर्शयति ।

सू० तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमां-
साश्रवणेऽधीतवेदः पुरुषः स्वयमेव प्रवर्त्तते ।

टी० ॥ "तत्स्वरूपे"ति । स्वरूपविशेषाः—अङ्गिनः, प्रकारविशेषा—अङ्गानि, पूर्वपक्षोक्तस्वरूपप्रकारतः सिद्धान्तितत्स्वरूपप्रकारयोर्वैषम्यं विशे-ष-शब्देन विवक्षितम् । प्रयोजनवदर्थ-स्वाध्याय-वेदमीमांसा-शब्दाः पूर्वोत्तरभागसाधारणाः स्वयमेव नतु विधिना तदुपपादकमधीतवेदः पुरुष इति पदद्वयम् । अधीतवेद इत्यध्ययनविधिव्यापारस्यानुष्ठितांशे पर्यवसितत्वान्मीमांसायां तस्य प्रवर्त्तकत्त्वं द्योतितं, चेतनत्वात् फलव-दर्थापातप्रतीत्या स्वयमेव प्रवर्त्तेत इति पुरुष-शब्दस्याभिप्रायः । नन्व-क्षरराशिग्रहणपर्यन्तत्वपक्षे रागतः प्रवृत्तिर्नोपपद्यते "वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्" "निष्कारणः षडङ्गो वेदोऽध्येयः" "वेदमध्यापयेद्द्विजः"-"सकल्पं सरहस्यं चे"त्यादिविहिताङ्गाध्ययनस्याप्यक्षरग्रहणपर्यन्ततया व्याकरणादेरर्थावबोधाभावात् प्रकृतिप्रत्ययादिज्ञानाभावेनापातप्रतीत्यभा-

वात् । नैवम् । व्याकरणादीनां वेदाङ्गत्वादकिंचित्करस्याङ्गत्वायोगात् । दृष्टकिंचित्कारे संभवति तत्प्रहाणेन चादृष्टपरिकल्पनायोगात् पदाद्यवबोधरूपो दृष्टकिंचित्कार एव स्वीकार्य इत्यङ्गत्वान्यथानुपपत्त्यैव व्याकरणाद्यर्थावगमसिद्धेः प्रयोजनवदर्थापातप्रतीतिसिद्ध्या मीमांसारम्भोपपत्तेः । "अधीतवेदः पुरुषः स्वयमेव प्रवर्त्तत" इत्यनेन "अथातो धर्मजिज्ञासे"ति सूत्रमप्यर्थाद् व्याख्यातं भवति । विधेरक्षरग्रहणपर्यन्तत्वे प्रवर्त्तकाभावात् स्वाध्यायस्यार्थपरत्वे प्रमाणाभावाच्च मीमांसा नारम्भणीयेति पूर्वः पक्षः । साङ्गाध्ययनानन्तरं शब्दस्य स्वतोऽर्थावबोधित्वदर्शनात् प्रवर्त्तकान्तराभावेपि रागात्प्रवृत्त्युपपत्तेरारम्भणीयेति सिद्धान्त इति ।

ननु कर्मविचारस्य रागप्राप्तत्वे "ऽधीत्य स्नायादि"ति समावर्त्तनस्मृतिर्बाधिका स्यात्, वैधत्वे स्मृतेरपि श्रुतेर्बलीयस्त्वात् स्मृतिरवकाशप्रदा स्यात् । नैवम् । अध्ययनविधेरक्षरग्रहणपर्यन्तत्वार्थज्ञानपर्यन्तत्वयोः किमभिप्रेत्यैतदुक्तं? यद्यर्थज्ञानपरत्वं तर्ह्यधीत्य स्नायादिति स्मृतिमताध्ययनशब्दस्य तत्तुल्यार्थत्वान्न विरोधः । यद्यक्षरग्रहणपर्यन्तत्वं, ततोऽपि तुल्यार्थत्वान्न विरोधः । किंच, विरोधे सत्यपि प्रत्यक्षश्रुतिरप्यस्ति यथा छान्दोग्ये "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्त्य कुटुम्बे शुचौ देशे" इत्यादि, ततश्च स्मृतिवचनोपेता स्नानश्रुतिर्बलीयसी तस्माद् श्रुतिस्मृतिवचनयोः प्राबल्यदौर्बल्यकथनं निरर्थम् । नन्वेवं श्रुत्यापि रागतः प्रवृत्तिर्बाध्यत इति चेत् । न । समावृत्तस्यापि रागतः श्रवणोपपत्तेः । नन्वध्ययनानन्तरभावित्वे समावर्त्तनस्य तत्पूर्वकगृहस्थकर्मानुष्ठानावरुद्धश्रवणावसरालाभान्मीमांसाऽनारम्भः प्रसज्यते । नैवम् । समावृत्तस्यापि श्रोतुः श्रावयितुरिवावसरसंभवात् । आचार्यस्य ह्यध्यापनं विहितं नतु गृहस्थस्य श्रवणमिति । चेत् । न । अध्यापनस्य याजनप्रतिग्रहवद्राग[1]प्राप्तत्वात्, रागप्राप्तं "प्रतिग्रहादिना धनमर्जयेदि"त्यादिशास्त्रानुमतमध्यापनमिति चेत् श्रवणमपि शास्त्रानुमतम् अनिषिद्धत्वादनुष्ठानोपयुक्तत्वाच्च ।

१ यज्ञानुष्ठानोपयोगित्वादिति ख· पु· पाठः ।

ननु "संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतिमन्विच्छन्नि"ति श्वेतकेतुरित्यारभ्य तच्छास्त्रैर्विप्रतिषिद्धं निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते "अग्निहोत्रमतिथय" इत्यादिना श्रवणं गृहस्थस्य निषिद्धमिति चेत्। न। साकल्येन मासद्वयं गुरुकुलवासस्यानुष्ठानोपरोधित्वेन तस्यैव निषिद्धत्वात्। निवेशे हि वृ[2]त्ते नैयमिकानि श्रूयन्ते "अग्निहोत्रमतिथय" इति ह्युच्यते आचार्यस्याप्यनुष्ठाना[3]नुरोधिनः श्रावणस्य शास्त्रानुमतत्वम् अतोऽनुष्ठानानुपरोधोपरोधप्रयुक्तानुमत्यननुमतिविषयत्वं श्रावणस्य श्रवणस्य च तुल्यम्, अत एव हि युधिष्ठिरादीनां गार्हस्थ्यनिष्ठानामपि भीष्मादिभ्यः श्रवणं भारतादिषु प्रतिपाद्यते। यद्यपि श्रावणकाल एव श्रवणकालः, तथापि श्रोतुरुदकाहरणकाष्ठसंपादनादिभिरनुष्ठानोपरोध इति चेन्न। अध्ययनविधिप्रयुक्तस्योदकाहरणादेस्तन्निवृत्त्या निवृत्तत्वात्। वित्तख्यात्यादिप्रयोजनान्तरस्पृहया शिष्यस्नेहेन च गुरोः श्रावणमुपपद्यते श्रावयितुर्ज्ञातार्थत्वादनुष्ठानमुपपद्यते। श्रोतुरज्ञातार्थत्वान्नेति चेन्न। उपनयनप्रभृत्यनुष्ठानवद्धितैषिवचनादनुष्ठानोपपत्तेः। तर्हि हितैषिवाक्यमेव स्यात् किमर्थं मीमांसाश्रवणमिति चेत्, हितैषिवचनस्य प्रमाणमूलत्वनिश्चयार्थं प्रष्टॄणां परेषां स्वयमुपपादनार्थं च हितैषिवचनादनुष्ठानसंभवे शूद्रादीमनुष्ठानप्रसङ्ग इति चेन्न। "न शूद्राय मतिं दद्यात्" "न चास्योपदिशेद्धर्मं नचास्य व्रतमादिशे"दि"त्यादिनिषेधवचनसद्भावात्। नहि यज्ञादिकं ब्राह्मणाः शूद्रायोपदिशन्ति। न च शुश्रूषादिरहितशूद्रविशेषविषयत्वेनेदृशनिषेधवचनानां संकोचः कार्यः, संकोचकाभावात्। नहि शूद्रस्य यज्ञाद्यर्हत्वविषयं वचनान्तरं दृश्यते। किंच यजमानेन कृत्स्नवेदस्य मन्त्रविशेषाणां च जप्यतावचनात्तेषामध्ययनलभ्यत्वादध्ययनस्य चोपनयनसापेक्षत्वादुपनयनस्य च त्रैवर्णिकाऽधिकारत्वान्न शूद्राद्यधिकारप्रसङ्गः। ननूपनयनविधिस्त्रैवर्णिकाध्ययनविषयतया नेतुं शक्यते, अतः शूद्रस्याध्ययनमुपनयननिरपेक्षमिति तस्य याजमानाद्युच्चारणसंभव इति चेत्।

२ प्रवृत्ते इति ख॰ पु॰ पाठः।

३ नानुपरोधि न इति ख॰ पु॰ पाठः।

न । "तस्माच्छूद्रसमीपे नाध्येतव्यमि"ति "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिव्हाच्छेदो धारणे शरीरभेद" इत्यादिना शूद्रस्य वेदश्रवणादेर्निषिद्धत्वाद्, अध्ययनं चेदुपनयनाङ्गकं तत् त्रैवर्णिकाधिकारमेवेति न तत्र शूद्राद्यधिकार इति मन्त्रविशेषोच्चारणानुपपत्तेः । न हितैषिवचनाच्छूद्रादेः क्रत्वनुष्ठानप्रसङ्ग इति नापशूद्राधिकरणविरोधः । किंच यथा "यावज्जीवमग्निहोत्रं जुहोती"त्यादिविधिः"न स्वाङ्गं स्वव्यवधायकमि"ति न्यायात् स्वोपयोगिनोऽप्यर्थार्जनादेरागप्राप्तस्याप्यवसरप्रदः, तथाऽनुष्ठानोपयोगिमीमांसाश्रवणस्य समावर्त्तनविधिरवकाशप्रदः स्यात् क्त्वाप्रत्ययस्य च समानकर्तृकत्वपूर्वकालीनत्वमात्रमर्थः, नत्वानन्तर्यम् । नत्वानन्तर्यमेव विधेयत्र चेद्विधिवैयर्थ्यं दुःखात्मकगुरुकुलवासनिवृत्तेः स्वतः प्राप्तत्वादिति चेत् । न । आनन्तर्यपरत्वेपि विधिवैयर्थ्यात् तच्च गुरुकुलवासस्य दुःखात्मकत्वादेव । अतः सनियमसंस्कारविशेष एव स्नानमिति तद्विधेयं नत्वानन्तर्यं तस्मादधीत्येति क्त्वाश्रुतेर्न विरोधः । तस्मात्स्वयमेव प्रवर्त्तते ।

ननु "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वा स्थाणुं वर्च्छति गर्तं वाऽऽपद्यते प्रवामीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति । अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति श्रेयाँश्च भवति अयातयामान्यस्य छन्दांसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यादि"ति श्रुत्या "अविदित्वा ऋषिं छन्दो दैवतं योगमेव च योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु स"इति स्मृत्युपबृंहितयाऽर्थज्ञानविधानं फलितम् । मन्त्रप्रतिपाद्यदेवताज्ञानस्यात्र विहितत्वात्तुल्यन्यायतया दैवतशब्दस्य मन्त्रप्रकाश्यानुष्ठेयार्थप्रकाशनार्थतया च विद्यादिभागार्थज्ञानस्यापि विधेयत्वापत्तेः । योगो मन्त्राणां विनियोगः तज्ज्ञानस्य ब्राह्मणभागार्थज्ञानसापेक्षत्वाच्चेति चेत् । न । प्रतिग्रहतुंसंवेशनादेरिव रागप्राप्तत्वान्निवृत्तेः । नहि 'ब्राह्मणः प्रतिग्रहादिना धन[1]मार्जयेत्" "ऋतावुपेयादि"ति वचनं रागतः प्राप्तिं प्रतिग्रहादेर्निरुणद्धि ।

१ पुस्तकद्वयेपि 'धनमार्जयेदि'त्येव पाठ उपलभ्यते धनमर्जयेदिति तु युक्तं प्रतीमः ।

किंचानेनैव वाक्येनार्थज्ञानं विहितमित्यध्ययनविधेरर्थज्ञानपर्यन्तत्वं नाश्रयणीयं, यथा क्रतूनां विध्यन्तरसिद्धत्वादाधानविधेरुत्तरक्रतुविधिपर्यन्तत्वं नाऽऽश्रीयते तद्वत्। न चेदं वेदवाक्यमध्ययनस्यार्थधीपर्यन्तत्वमवगमयति, नच स्वयमर्थज्ञानं विधत्ते, अर्थज्ञानस्याऽन्यतः सिद्धत्वात्। अत्र मन्त्रमात्रस्य ऋष्यादिविज्ञानविधानप्रतीतिश्च। ततश्च वेदस्य साङ्गतयाऽध्येतव्यत्वं सिध्येत् नत्वर्थज्ञानं, छन्दोदैवतादिज्ञानस्य छन्दःकल्पव्याकरणनिरुक्तादिसापेक्षत्वान्मीमांसानपेक्षत्वाच्च। विनियोगविषयसन्देहे सति मीमांसापेक्षा स्यादिति चेत् तर्हि सन्देहापाकरणाय रागतः प्रवृत्तिः स्यात् "यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" इतीदमपि वचनं नार्थज्ञानपर्यन्तत्वमध्ययनविधेरवगमयति। "अधीतमविज्ञात"मित्यत्रैवाध्ययनार्थज्ञानयोः पृथङ्निर्देशात्। रागप्राप्तस्य विधातुमशक्यत्वाच्च। वेदानां "किंचिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचान" इत्यादयः कल्पसूत्रप्रयोगाश्च अध्ययनादर्थज्ञानं पृथग्भूतमवगमयन्ति। अतः श्रवणस्य दुःखरूपत्वेन तन्द्रालुतया वा अर्थार्जनाद्यन्यपरतया वा यो न शृणोति तत्प्ररोचनार्थमिदं "यदधीतमि"त्यादिवचनम्। यथा "अक्षैर्मादीव्य कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमान" इति वाक्यं तन्द्रालुप्ररोचनार्थं, प्ररोचनया हि प्रवृत्तिरुत्कटा स्यात् नह्येतावता कृषेरर्थार्जनस्य च रागप्राप्तत्वभङ्गेन सर्वत्र वैधत्वमेव स्यात्तद्वदिदमपि वचनं श्रवणस्य रागप्राप्तत्वं न विहन्ति। तस्माद्रागत एव प्रवर्त्तते। एवमन्यतः प्रवृत्तौ संभवन्त्यां शब्दशक्त्युल्लङ्घनेन मीमांसाश्रवणस्य विधेयत्वकल्पनमयुक्तम्। ऐकशास्त्र्यं रागतः प्रवृत्तिश्चास्तु कथं पौर्वापर्यनियमस्तत्राह "तच्चे"ति।

मू० तच्चकर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलं दृष्ट्वा।

टी० ॥ तत्र—वेदे कर्मविधिस्वरूपे निरूपिते—इति कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव निरूपणं प्राप्तमिति कर्मविचारस्य पूर्वभावित्वमिति भावः।

ननु नहि कर्मणामल्पास्थिरफलत्वमनन्तास्थिरफलत्वं च पूर्वपक्षे सिद्धान्तरूपेण क्वचिन्निरूपितम्, तत्कथमल्पाऽस्थिरफलत्वावगतिरित्यत्राह "स्वरूपे निरूपिते" इति। केवलं कर्मविधिस्वरूपमेव निरूपितम् अल्पास्थिरफलत्वज्ञानं चावृत्तिविधानादिना फलितमिति भावः। यद्वा कर्मविधिस्वरूपन्निरूपितं नत्वाराध्यपरदेवतेति भावः। तदाराधनत्वेन कृते ह्यनन्तास्थिरफलत्वसिद्धिः।

मू० अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति, तथाच वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं, ब्रह्मज्ञानस्य चाऽक्षयफलत्वं दर्शयन्ति।

टी० "अध्ययनगृहीतस्वाध्याये" ति। अध्ययनस्य कृत्स्नस्वाध्यायविषयत्वादुपनिषदश्च स्वाध्यायशब्दान्तर्गतत्वादिति भावः। एकदेश-शब्देनैकप्रबन्धांशत्वं सूचितम्। साधारणवेदशब्दनिर्दिष्टशब्दराशावनन्यपरं प्रदेशं पृथङ्निर्दिशत्युपनिषच्छब्देन, वेदान्त-शब्देन विचारपौर्वापर्यनियमहेतुर्दर्शितः। मीमांसा-शब्दोक्ते व्याख्याने प्रदेशभेदं विशिनष्टि "शारीरकशब्देन-"अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेने" त्याद्युक्तानुषङ्गिकाल्पास्थिरफलव्यावृत्त्यर्थममृतत्वरूप-शब्दः। आनुषङ्गिकाणामल्पास्थिरफलत्वेऽपि प्रधानफलस्यानन्तास्थिरफलत्वेनापातप्रतीतिरस्तीत्यर्थः। कर्ममीमांसासंस्कृतमनस्कत्वादत्राप्यानुषङ्गिकं प्रधानफलं च संभवतीति श्रोतुः प्रतीयते एव।

ननु फलत्वादिदमप्यनित्यमिति बुद्धिः स्यात् नैवं विपक्षे बाधकाभावात्, यथा भौमसुखात् स्वर्गादिसुखं विलक्षणं प्रतिपन्नं तत्रापि परस्परवैलक्षण्यं देशकालस्वरूपभेदात् प्रतिपन्नं तथैव तस्मादपि विलक्षणं सुखं संभवतीत्यतीव रागजननायास्यापि प्रतीतिः स्यात् अधिकरोति-अधिकारी भवति एवं कर्मविचारकृदेवाधिकारी भवति न तु साधनचतु-

ष्टयवानित्यभिप्रायः। एवमैकशास्त्य-क्रम--नियमारम्भणीयत्वान्युपपादितानि। कैर्वेदान्तवाक्यैरारम्भणीयत्वौपयिकापातप्रतीति? रित्यत्राह "तथा-चे"ति। यथा सूत्रं व्याख्यातं तथेत्यर्थः, चशङ्कानिवृत्तौ प्रसिद्धौ वा केवल-शब्देन ज्ञानाङ्गकर्मव्यावृत्तिः।

सू० "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते" "अन्तवदेवास्य तद्भवति" "नह्यध्रुवैः प्राप्यते ध्रुवं कर्मभिः" "प्लवा ह्येते अदृढा यज्ञरूपाः" "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्स-मित्पाणिः-

टी० ॥ ननु कर्मविचारेण निर्णीतेपि कर्मफलक्षयिष्णुत्वे पुनश्चाल्पास्थिरफलत्वप्रतीतिजनकवाक्यानि किमर्थमुदाह्रियन्ते? अनन्तस्थिरफलापातप्रतीतिजनकान्येव हि वाक्यान्युदाहर्त्तव्यानि। उच्यते। अधिगतकर्मणः पुरुषस्य हि निर्णीतार्थसंवादिवाक्यदर्शनात् कर्मफलास्थिरत्ववद् ब्रह्मज्ञान-फलात्यन्तत्वस्य प्रामाणिकत्वं संभवतीति श्रद्धास्थिरीकरणार्थं "तद्यथे"ति। लोक्यतइति-लोकः फलम्। "अन्तवदेवास्य तद्भवतीत्य"नेन ज्ञानविधुरकर्मणोनेककालानुष्ठितस्य बहुविधस्यापि क्षयित्वमुक्तं भवति "यो ह वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्ष-सहस्राणी"त्येतद्वाक्यपूर्वकत्वात्तस्य वाक्यस्य अन्तवदित्युक्ते क्रियास्वरूपस्यान्तवत्त्वं लोकसिद्धतयाऽनुपदेश्यमिति फलस्यैवान्तवत्त्वमर्थसिद्धं स्फुटी-कर्त्तुं "तद्यथे"ति वाक्योपादानं, सांसारिकफलस्याऽध्रुवत्वं स्यात् कर्मभिरेव ध्रुवं फलं संपाद्यतामिति शङ्काव्युदासाय उपादत्ते "नह्यध्रुवैः प्राप्यते" इति ध्रुवं तदिति वाक्यखण्डः। तदुपपादकत्वेन प्रतीयमानं वाक्यान्तरमुदाहरति "प्लवाह्येते अदृढा यज्ञरूपा" इति। संसारपारं तारयितुन्नालं मध्ये भङ्गुरत्वादित्यर्थः। सूत्रयोजनानुगुणतरं कर्मणामल्पास्थिरफलत्वं ब्रह्मोपासनस्यानन्ताक्षयफलत्वं च दर्शयद्वाक्यमुपादत्ते "परीक्ष्य लोकानि"ति। अस्मि-

न्वाक्ये न्यायसिद्धार्थानुवादेन गुरूपसत्तिर्विधीयते। कर्मचितान्—कर्मसञ्चितान् कर्मसंपाद्यान् परीक्ष्य—मीमांसान्यायैर्निरूप्य। ब्राह्मणः—अधीतसाङ्गसशिरस्कवेदः, य इत्यध्याहार्यं, स इत्युत्तरत्र श्रवणात्। अकृतः—नित्यः। अत्र पुरुषो विशेष्यः, लिङ्गवशाद् अक्षरं पुरुषमित्यनन्तरोक्तेश्च। कृतेन—कर्मणा नास्ति—न सिध्यति न लभ्यते इतिकरणं[1] द्रष्टव्यम् इति यो निर्वेदमायात् सः तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्। एवकारेण नियमविधित्वं गम्यते। समित्पाणिः—न रिक्तपाणिः। "रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरुमि"ति हि स्मर्यते।

मू० श्रोत्रियं ब्रह्मनिष्ठं, तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्"—

टी० ॥ श्रोत्रियं—श्रुतवेदान्तं, ब्रह्मनिष्ठं—ब्रह्मसाक्षात्कारवन्तं, श्रुतवेदान्तोपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इति भावः। अभिगच्छेदित्यन्वयः। शमो बाह्येन्द्रियनियमनरूपः प्रशान्तचित्तायेत्यन्तःकरणनियमनस्योक्ततया पारिशेष्यात्। एतेन श्रवणोपयुक्तमवधानं विवक्षितं नतूपासनोपयुक्तात्यन्तेन्द्रियजयादि। तस्मै स विद्वान् प्रोवाचेत्यन्वयः। "येने"ति। निर्देशो विज्ञानाभिप्रायः। तद्विज्ञानार्थमिति हि प्रकृतं सामान्यतः कारणाभिप्रायो वा लिङ्गव्यत्ययो वा अक्षरं स्वरूपेणाविकारं सत्यं—गुणवतोप्यविकारम्, आभ्यामचिज्जीवव्यावृत्तिः। तां ब्रह्मविद्यां प्रोवाच प्रब्रूयादित्यर्थ इति वेदान्तसारे व्याख्यातम्। "छन्दसि लुङ्लङ्लिट" इति लिट्।

ननु "प्रशान्तचित्ताय शमान्विताये"ति शमादेः पूर्ववृत्तत्वं प्रतीयते। न। श्रवणोपयोग्यवधानमात्रस्य विवक्षितत्वात्। नात्रोपासनाङ्गभूतात्यन्तविषयवैतृष्ण्यं विवक्षितं, तद्धि शमदमाद्युपेतः स्यादिति निरूपयिष्यते। अतो निरूप्यसंपाद्यैस्तैर्निरूपणात् प्रागेव विशिष्टत्वमनुपपन्नं, श्रुतिश्च शास्त्रजन्यज्ञानवतः पुरुषस्य तदुत्तरभाविशमाद्यङ्गकमुपासनं दर्शयति। "तस्मादेवं-

---

१ इतिपदमध्याहर्तव्यमर्थवशादिति भावः।

विच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदि"ति अत्र ह्येवंविदिति शास्त्रजन्यज्ञान[1]त्वमुक्तं भूत्वा पश्येदित्युपासनस्य शमाद्यङ्गकत्वं ज्ञापितम्। केवलानन्तस्थिरफलपरवाक्यान्युदाहरति ॥ "ब्रह्मविदि"ति।

मू० "ब्रह्मविदाप्नोति परं, न पुनर्मृत्यवे, तदेकं पश्यति, न पश्यो मृत्युं पश्यति, स स्वराड्भवति, तमेव विद्वानमृत इह भवति, तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यते अयनाय पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"त्यादीनि।

टी० ॥ अत्रानुवाके यतो वाचो निवर्त्तन्त इति श्रवणादनन्तस्थिरफलत्वसिद्धिः। प्राप्यस्य ब्रह्मणोऽनन्तस्थिरत्वेपि प्राप्तेः कादाचित्कत्वशङ्काव्यावृत्त्यर्थमपुनर्निवृत्तिमाह "न पुनरि"ति। यद्वा विद्ययाऽनन्तस्थिरफलरूपब्रह्मप्राप्तिमाह "ब्रह्मविदि"ति। विद्यया ब्रह्मप्राप्तेः प्रतिबन्धनिवृत्तिपूर्वकत्वमाह "न पुनरि"ति। मृत्युः–प्रमादः, मोहो वा "मोहो मृत्युः संमतो यः कवीनां प्रमादं वै मृत्युमहं ब्रवीमी"त्युभयत्र मृत्युशब्दव्यपदेशात्। प्रमादो यथाऽवस्थितात्मस्वरूपाऽज्ञानं, मोहो-भ्रान्तिज्ञानं, दिङ्मोह इत्यादिव्यपदेशात्। न मृत्युनिवृत्तिमात्रमेव, तत्कार्यमपि[2] निवर्त्तितमित्याह "न पश्यो मृत्युं पश्यती"ति। अस्य वाक्यस्योपरि "न रोगं नोत दुःखतामि"ति हि श्रूयते। न पुनरित्यादिवाक्यं ब्रह्मणि दृष्टे मृत्युप्रमुखनिवृत्तिरिति ज्ञापनार्थं, न पश्यो मृत्युमित्यत्रापि पश्य–शब्दस्य ब्रह्मदर्शीत्यर्थः। तदेकं[3] पश्यतीत्यनन्तरोदाहृतवाक्ये विषयस्य दर्शितत्वात् "स स्वराड् भवती"ति कर्मवश्यो न भवतीत्यर्थः। स्वराट्

१ शास्त्रजन्यज्ञानवत्त्वमित्यर्थः।

२ तत्कार्यमपि निवर्तत इत्याहेति युक्तः पाठः।

३ तदेव पश्यतीति पुस्तकान्तरपाठः।

स्वतन्त्रो विज्ञेय इति नैघण्टुकाः । तमेव[1] विद्वानिति वाक्येन निर्विशे[2]षचिन्मात्रज्ञान-देवतान्तरोपासनाद्युपायान्तरव्यावृत्तिसिद्धिः । पुरुषोत्तमोपासनस्यैवोपायतयोक्तत्वात् तदुपासनरूपज्ञानं च नात्मैक्यविषयमपि तु पृथक्त्वविषयमिति दर्शयति "पृथगात्मानमि"ति । ततः—पृथक्त्वज्ञानात् तेन जुष्टः—प्रीतिविषयीकृतः अनुगृहीतो ऽमृतत्वमेतीत्यर्थः । इत्यादीनि वेदान्तवाक्यानीति पूर्वेणान्वयः । उदाहृतस्पष्टार्थवाक्यमात्रतृप्तः कश्चिच्चोदयति "ननुचे"ति ।

सू॰ ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनां च क्षयित्वं ब्रह्मोपासनस्याऽमृतत्वफलत्वं च ज्ञायते एव, अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्त्तताम् किमर्था धर्मविचारापेक्षा ।

टी॰ ॥ पूर्वत्र चोद्यान्तराणां कण्ठोक्त्यभावेपि परिहारकण्ठोक्त्या तान्यभिप्रेतानि, अतश्च—शब्देन तैरर्थसिद्धैः सह समुच्चयो युक्तः । "साङ्गे"ति कर्मज्ञानपूर्ववृत्तत्ववादिनापि साङ्गाध्ययनस्यापेक्षितत्वं स्वीकृतमिति तदधिकव्युदासार्थं एवकारः । अध्ययनस्य साङ्गत्वादङ्गानां चार्थज्ञानहेतुत्त्वान्मीमांसानिरपेक्षं स्वर्गादेव केवलकर्मफलत्वं स्वर्गादेश्च क्षयिष्णुत्वं ब्रह्मोपासनस्याक्षयफलत्वं च ज्ञायते इत्यर्थः । ब्रह्मोपासनस्येत्यादि ग्रन्थो दृष्टान्ताभिप्रायः । ज्ञायत एवेत्येवकारो ज्ञातत्वसंप्रतिपत्तिसूचकः । ज्ञानसामग्री हि सिद्धेति भावः । ततः किमित्यत्राह "अनन्तरामि"ति । कर्मणोऽल्पास्थिरफ[3]लत्वज्ञानेन मुमुक्षासिद्ध्यर्थो हि कर्मविचारः

---

१ निर्विशेषचिन्मात्रज्ञानस्य मोक्षोपायत्वे "तमेव विद्वानि"ति कर्तृकर्मभावप्रदर्शनानुपपत्तिरित्याशयः ।

२ नारायणपदस्य श्रुतिस्थस्य चिदचिच्छरीरकदेवतासार्वभौमपरतया देवतान्तरपरपदान्तराणां च नारायणसमर्पकतायाः सौष्ठवेनैव संभवा'त्त'मिति पदेन नारायणपरेण देवतान्तरव्यावृत्तिरर्थतः फलतीति भावः ।

३ कर्मणोऽल्पास्थिरफलत्वाज्ज्ञानेनेति पुस्तकान्तरपाठोऽयुक्तः ।

तन्निरपेक्षमेवाल्पास्थिरफलत्वज्ञानान्मुमुक्षासिद्धेः ब्रह्मजिज्ञासैव कर्त्तव्या-धर्मविचारे प्रयोजनाभावादित्यर्थः । परिहरति–

**मू० एवं तर्हि शारीरकमीमांसायामपि न प्रवर्त्ततां, साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात् । सत्यम् । आपाततः प्रतीतिर्विद्यते एव, तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापाततः—**

टी० ॥ "एवमि"ति । एवं तर्हि उदाहृतवाक्यमात्रतृप्तोसि चेत् । "कृत्स्नस्ये"ति–ब्रह्मणोपीति भावः । वेदान्तवाक्यान्यपि स्फुटार्थानि ह्यस्माभिरुदाहृतानि तेषामर्थोपि मीमांसानपेक्षं ज्ञायते अतोऽनन्तस्थिरफलज्ञानायन ब्रह्मविचारः कर्त्तव्य इत्यर्थः । सत्यमित्यर्द्धाङ्गीकारे । आपातप्रतीतावभ्युपगमः, ब्रह्मविचारे नैरपेक्ष्येऽनभ्युपगमः "आपाते"ति । आपातप्रतीतिरज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहं ज्ञानम् । संशयविपर्ययौ च कारणवाक्यगतसद्ब्रह्मात्माकाशप्राणवैश्वानरादिशब्दैरर्थतत्त्वस्य दुर्निश्चयत्वात् 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" "असद्वा इदमग्र आसीदि"त्यादिभिरात्माऽनित्यत्वादिप्रतीतेः 'अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेने"त्यादिनाऽल्पास्थिरफलत्वावगमाच्चेह स्याताम् । अतः साङ्गाध्ययनमात्रेण तयोरनतिवृत्तेस्तद्व्युदासस्य न्यायानुगृहीतवाक्यफलत्वाच्च ब्रह्मविचारः कर्त्तव्यइति चेदित्यर्थः । भवान्–अनुदाहृतवाक्यान्तरपर्यालोचनायामपि प्रवृत्तस्त्वमिति भावः । तथैव एतया दृष्ट्याऽत्रापि संशयविपर्ययनिरासस्यापेक्षितत्वं जानन्ननुदाहृतवाक्यानि पश्येदित्यर्थः । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "पूर्णाहुत्या सर्वान् कामानवाप्नोति सर्वान् लोकान् पशुबन्धयाज्यभिजयति""अपाम सोमममृता अभूम "अनन्तं ह वा अपारमक्षय्यं लोकं जयति योग्निनाचिकेतं चिनुते नास्येष्टापूर्तं क्षीयते योग्निनाचिकेतं चिनुत" इत्यादीनि हि "अमृतत्वं भजन्ते, सोऽश्नुते सर्वान् कामान्, इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्नि"त्यादिभिर्ब्रह्मवेदनफलवाक्यैस्तुल्यानि वाक्यानि दृश्यन्ते अत औप-

निषद्वाक्येष्विवानुदाहृतवाक्येषु संशयविपर्ययबाहुल्यात्तन्निरासाय कर्मविचारः कर्त्तव्य इत्यर्थः ।

सू० प्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्त्तते । अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्त्तव्य इति चेत्, तथैव धर्मविचारोऽपि कर्त्तव्य इति पश्यतु भवान् ।

ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं किंचिद् वक्तव्यम्, न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः, अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः ।

टी० ॥ एवं फलद्वारा ज्ञानाय कर्मज्ञानापेक्षा दर्शिता । अथ स्वरूपेणोपादानाय च नियमेन कर्मज्ञानापेक्षास्तीति दर्शयितुं मुमुक्षोः कर्मणोनियमेनानपेक्षितत्वलक्षणं परपक्षमुपक्षिपति "ननु चे" ति । नियमेनापेक्षितत्वस्य विवक्षितेतरगामित्वव्युदासार्थः प्रथम एवकारः, द्वितीयस्तु नियमेनानपेक्षितस्य पूर्ववृत्तत्वनिवृत्त्यर्थः, ततः किमित्यत्राह "न धर्मे" ति । कुत इत्यत्राह "अधीते" ति । ये ब्रह्मविद्याधिकारिणस्तेषां सर्वेषामवश्यापेक्षितं हि नियमेनापेक्षितं, वेदान्तमात्राध्यायिनस्तु तत्रैवापातप्रतीतिर्बुभुत्सा च स्यात् तस्य कर्मविषयापातप्रतीत्यभावात्, न कर्मविचारस्य नियमेनापेक्षेत्यर्थः । यद्वा अधीतकृत्स्नवेदस्यापि जन्मान्तरसुकृतवशाद्वेदान्तवाक्य एव बुभुत्सा जायते चेत्तस्य न कर्मविचारापेक्षेति तदा "अधीतवेदान्तस्ये" ति पदमयोगव्यवच्छेदपरं, नत्वन्ययोगव्यवच्छेदपरं, कृत्स्नवेदाध्ययनादपेक्षितवेदान्तभागोऽप्यधीत एवेत्यर्थः ।

सू० कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते, तदनधिगतकर्मणो न शक्यं कर्त्तुमिति चेत्, अनभिज्ञो हि भवाञ्छारीरकशास्त्रविज्ञानस्य,

टी० ॥ एवं हानार्थमपि कर्मणो ज्ञातव्यत्वं निषिद्धम् उपादानार्थमपि न ज्ञातव्यमित्युपपादयितुं वेदान्तमात्रबुभुत्सोरपि कर्मविचारापेक्षां शङ्कते "कर्माङ्गे"ति। एकस्य साम्नः पञ्च भागाः सन्ति ते प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः। एते भागा भक्तिशब्दाभिधेयाः। तासु पञ्चसु भक्तिषु प्रस्तावो हिङ्कारपूर्वङ्गीयते, उद्गीथः प्रणवपूर्वङ्गीयते, तत्र पञ्चविधसामोपासनं क्वचिद्विधीयते "लोकेषु पञ्चविधं सामोपासीते"ति, क्वचित्सामावयवेषु पञ्चस्वेकैकावयवोपासनं विधीयते, क्वचिच्चावयवावयवभूतप्रणवाद्युपासनं विधीयते, तत्रोद्गीथावयवभूतप्रणवोपासनं विधीयते "ओमित्येतदक्षरमुद्गीथमुपासीते"ति। कर्माङ्गाश्रयाणि—कर्माङ्गभूतोद्गीथादिविषयाणि, अनधिगतकर्मण उद्गीथाद्युपासनं चिन्तनं न शक्यं कर्तुमिति प्रतिज्ञा। कर्माङ्गाश्रयाणीति हेतुगर्भविशेषणम्। कर्माङ्गोद्गीथाद्याश्रयाण्युपासनानीत्युक्ते सति हेतावुद्गीथशब्दस्य वैयर्थ्यं स्यात्, उपासनमात्रस्य च पक्षीकारः प्रतीयेत, अतो यथोक्तैव वचनव्यक्तिर्युक्ता। अनधिगते कर्मण्युद्गीथादिविषयोपासनचिन्ताया अशक्यत्वात् कर्मविचारोपेक्षितइति चेदित्यर्थः। सोपालम्भं परिहरति "अनभिज्ञ"इति। शास्त्रे प्रधानतया प्रतिपाद्यं ज्ञानमिति त्वया न ज्ञातमित्यर्थः।

**मू० अस्मिन् शास्त्रे ऽनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलभूतमिथ्याज्ञाननिवर्हणायात्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बिकर्मज्ञानं क्वोपयुज्यते, प्रत्युत विरुद्धमेव ॥**

टी० ॥ अत्र किं प्रधानप्रतिपाद्यं ज्ञान? मित्यत्राह "अस्मिन्नि"ति। भेदो ज्ञातृज्ञेयज्ञानरूपः, वैविध्यन्तदवान्तरभिदाबाहुल्यम्, एवंविधभेददर्शनस्य हेतुरविद्या। तस्याः कोहेतु? रित्यनवस्थापरिहारार्थमनादि—शब्दः। एवमविद्याकृतभेददर्शननिमित्तकं जन्मजरामरणादिकमेव सांसारिकं दुःखम्। आदि—शब्देन नरकगर्भवासादिग्रहणम्। संसारः प्रकृतिसंबन्धः, तत्प्रभवं सांसारिकम्। निरसनीयत्वाय दुःखस्वरूपत्वोक्तिः। सागर—शब्दस्तदानन्त्य-

पर', "निमग्नस्ये"ति दुःखनिवृत्त्युपायापेक्षाहेतुतयोक्तमधिकारिस्वरूपमुक्तम् । प्रयोजनमाह "निखिले"ति मिथ्याज्ञानं–भ्रान्तिज्ञानं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापाया"दिति प्रयोगात् भ्रान्तिज्ञानं च भेददर्शनम् । यद्वा मिथ्याभूतमज्ञानं मिथ्याज्ञानम्, ज्ञाननिवर्त्यत्वाय मिथ्या–शब्दः, "तस्य निवर्हणाय" तन्निवर्हणमेव मोक्ष इत्यभिप्रायः, तत्साधनं किं? मित्यत्राह "आत्मैकत्वविज्ञान"मिति सर्पभ्रमस्य रज्जुयाथात्म्यज्ञानं हि निवर्त्तकम् न तु कर्मविशेषः, एवं भेददर्शनस्याविद्याकृतत्वादैक्यज्ञानमेव तन्निवर्त्तकमिति तत्रैव तात्पर्यं वेदान्तवाक्यानामित्यर्थः, ततः किमित्यत्राह "अस्य ही"ति "क्वापयुज्यते" न कुत्रचित् ज्ञानस्वरूपोत्पत्तौ तत्फलोत्पत्तौ ज्ञानोत्पत्तिसाधनानुग्रहे वा नोपयुज्यत इत्यर्थः, न केवलमुपयोगाभावः प्रतिकूलत्वमपीत्याह "प्रत्युते"ति द्वैतवासनाजनकत्त्वादित्यभिप्रायः ।

सू० उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानस्वरूपत्वाविशेषादिहैव क्रियते, स तु न साक्षात्सङ्गतः, अतो यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यं, बाढं तदपेक्षितं च कर्मज्ञानमेव कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुतेः ।

टी० ॥ तथाप्युपनिषत्स्वधीतत्त्वाद् ब्रह्ममीमांसायां निरूप्यमाणत्वाच्चोद्गीथाद्युपासनं ब्रह्मविद्यापेक्षितमित्युद्गीथादिविचारः साक्षात्सङ्गत इत्यत्राह "उद्गीथादी"ति तर्हि कथमुपनिषत्स्वध्ययनं ब्रह्मविचारे तद्विचारश्चेत्यत्राह "ज्ञानस्वरूपत्वाविशेषादि"ति ज्ञानस्वरूपत्वसाम्यात् बुद्धिस्थतया कृतः, न तु प्रधानार्थोपयोगित्त्वादिति भावः । ततः किं-मित्यत्राह "सत्त्वि"ति तु–शब्दद्वयं शङ्काद्वयव्यावर्त्तकम् । प्रधानप्रतिपाद्योपयुक्तस्यैव पूर्ववृत्तत्वं निगमयति "अत"इति "किमपि" कर्मविचारादन्यदिति भावः प्रधानार्थोपयोगित्वेन सङ्गतिः साक्षात्सङ्गतिः । येन केनाप्याकारेण साम्याद्बुद्धिस्थत्वं प्रसङ्गात्सङ्गतिः, अतः प्रासङ्गिकोद्गीथाद्युपासन-

चिन्तापेक्षितस्य प्रधानार्थविरुद्धस्य कर्मविचारस्य न पूर्ववृत्तता युक्ता अपि तु प्रधानप्रतिपाद्यात्मैकत्वविज्ञानापेक्षितमेव किमपि वृत्तं वक्तुं युक्तमित्युक्तं भवति। अत्र भास्करीयाः प्रत्यवतिष्ठन्ते "बाढ"मिति बाढमित्यङ्गीकारे यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तमित्येतावन्मात्रविषयोऽङ्गीकारः, "तदपेक्षितं चे"ति प्रतिज्ञा त्वया यदनपेक्षितमित्युक्तं तदेवापेक्षितमित्येवकाराभिप्रायः, कुतइत्यत्राह "कर्मसमुच्चितादि"ति समुच्चित–शब्दः साहित्यमात्रपरः, न समसमुच्चयपरः। अस्मद्विद्या आत्मविद्या चेति समुच्चित्योपदेशादित्यत्र समुच्चित्यशब्दवत् कर्मज्ञानाभ्यामिति न निर्दिष्टम्, अपि तु कर्मसमुच्चिताज्ज्ञानादिति विशेषणविशेष्यभावेन निर्दिष्टम्, अतोज्ञाने प्राधान्यमवगम्यते कर्माङ्गकाज्ज्ञानादित्यर्थः, श्रुतिश्च "यज्ञेन दानेन" इत्यादिर्विवक्षिता।

सू० वक्ष्यति च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः? केन ने?ति विभागो न शक्यते ज्ञातुम्, अतस्तदेवपूर्ववृत्तम्।

टी० ॥ कर्मणोविद्याङ्गत्वे सूत्रकाराभिमतिं दर्शयति "वक्ष्यतिचे"ति चः प्रतिपादकसमुच्चये अङ्गतया कर्मणोनुष्ठानमपेक्षितमस्तु तज्ज्ञानस्य कथं पूर्वभावित्वं कर्मज्ञानं ब्रह्मविचारपाश्चात्यं किं न स्यात्? इत्यत्राह "अपेक्षितेचे"ति प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकत्वेनाङ्गतयापेक्षा विवक्षिता तृतीयस्य चतुर्थे पादे समावृत्ताकृतदारमृतदारादीनामाश्रमविशेषवर्त्तिनां च ब्रह्मविद्यानिष्ठानां कर्मस्वनुष्ठेयाननुष्ठेयविभागस्य निरूपयिष्यमाणत्वमभिप्रेत्योक्तं "केन समुच्चयः केन नेती"ति यद्वा नित्यनैमित्तिकयोः समुच्चयः, न तु काम्यनिषिद्धयोरिति विभागो न ज्ञायतइत्यर्थः, अयमर्थः। पदार्थज्ञानपूर्वकं हि वाक्यार्थज्ञानम्, "यज्ञेन दानेने"त्यादिवाक्ये यज्ञादिकर्मणां पदार्थीभूतत्वाद्वाक्यार्थज्ञानस्य च पदार्थज्ञानपूर्वकत्वाद्यज्ञादिकर्मविचारस्य पूर्वभावित्वम्, नहि "व्रीहीनवहन्ती"त्यादिवाक्यार्थज्ञानं व्रीह्यादिपदार्थज्ञानेन विनोपपद्यते पदार्थसंसर्गरूपत्वाद्वाक्यार्थस्य।

ननु गामानयेत्यादिवाक्याद्व्युत्पत्तौ गवानयनादिरूपं वाक्यार्थः पूर्वं प्रतिपाद्यावापोद्वापमुखेन पश्चात्पदार्थप्रतिपत्तेर्न पदार्थधीपूर्वकत्वनियमो वाक्यार्थज्ञानस्य । उच्यते । व्युत्पन्नाच्छब्दादर्थप्रतिपत्तौ सर्वत्र पदार्थज्ञानपूर्वकमेव वाक्यार्थज्ञानं व्युत्पत्तिदशायां तु प्रमाणान्तरेण शब्दान्तरेण वा वाक्यार्थावगमः पूर्वं स्यात् न तु तस्मादेव शब्दात्, तस्यागृहीतसंबन्धत्वेन बोधकत्वायोगात्, व्युत्पत्तावपि न वाक्यार्थधियः पूर्वभावनियमः, अम्बाताततमातुलादिपदानां पदान्तरासंसृष्टानामेव प्रथमव्युत्पत्तिदर्शनात् अस्य शब्दस्यायमर्थ इति व्युत्पत्तौ वाक्यार्थज्ञानस्य पूर्वभावाभावाच्च । नचास्मिन्नेव वाक्ये यज्ञादिशब्दव्युत्पत्तिसंभवः, विविदिषानिष्पत्तिरूपवाक्यार्थस्याप्रत्यक्षत्वेन गवानयनादाविव व्युत्पत्त्यनुपपत्तेः । अतः पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमित्युक्तम् । वाढमित्यादिकं सिद्धान्तिनश्चोद्यपरमिति च व्याख्यातृभिर्व्याख्यातं तदानीमपि पदार्थवाक्यार्थभावः क्रमविशेषहेतुतया विवक्षितः । किंचापेक्षिते चेत्यङ्गतयापेक्षितत्वस्य विवक्षितत्वात् कर्मणां च ज्ञानोत्पादकतया तदङ्गत्वादुत्पाद्योत्पादकयोः पौर्वापर्यनियमाद्विचारविषययोः कर्मज्ञानयोः पूर्वापरभावेन तच्छेषभूतयोर्विचारयोरपि तत्क्रमभाक्त्वं न्याय्यमिति चाभिप्रायः, शेषभूतस्य शेषिक्रमानुरोधित्वं हि न्यायसिद्धम्, यथा "सारस्वतौ होमौ भवत इति युगपदुत्पन्नयोरपि सारस्वतहोमयोर्याज्यापुरोनुवाक्यामन्त्रानुसारेण सरस्वतीयागस्य पूर्वभावे सरस्वद्यागस्य पश्चाद्भावे च प्राप्ते तदङ्गानामपि तेनैव क्रमेणानुष्ठानं निर्णीतम् दृष्टान्ते, दार्ष्टान्तिके च शेषिणोः क्रमनियामकहेतुवैषम्यमेव तयोः क्रमे निश्चिते शेषस्य शेषिक्रमानुरोधित्वं तत्र चात्र च तुल्यम् । एवंचोपासनस्यैव विचारं प्रति शेषित्वात् तृतीय[1]लक्षणे कृतस्योपासनचिन्तनस्यैव कर्मविचारापेक्षया पश्चाद्भाव इति न वाच्यं विद्याविषयतत्फलचिन्तनस्यापि तदपेक्षितत्वेन कृत्स्नाया अपि ब्रह्ममीमांसायाः कर्मविचारपश्चाद्भावप्राप्तेः ॥ निगमयति "अत" इति वाढमित्यादेः सिद्धान्तिचोद्यपरत्वादपि भास्करमतपरत्वं तूचितम् । "कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुते"रित्यस्य ग्रन्थस्य भास्करी-

---

१ एतच्छास्त्रीयतृतीयाध्याये ।

यभाष्ये श्रूयमाणत्वात्, अङ्गभावस्य तदभ्युपगतत्वेन तद्विषयसूत्रोपादान-विरोधाच्च शब्दतोऽर्थतश्च भास्करमतप्रत्यभिज्ञानात् सिद्धान्तिवाक्यस्यापि तदन्तरभावि[1]भावाच्च भास्करपक्षं यादवप्रकाशपक्षं चोपजीव्य "बाढ"मित्यादिना पार्श्वस्थश्चोदयतीति च निर्वाहः साम्प्रदायिकः । तत्रैवं योजना "कर्मसमुच्चिताद्" इति समसमुच्चयो विवक्षितः कर्मसमुच्चिताज्ज्ञानादिति विशेषणविशेष्यभावेन निर्देशो ज्ञानस्य मोक्षोपायत्वप्रसिद्धिप्राचुर्यनिबन्धनः श्रुतिश्च "विद्यां च"इत्यादिः, अस्मिन्वाक्ये मृत्युशब्द उपेयप्राप्तिविरोधिकर्मवाची प्रतिबन्धनिवृत्तिर्ब्रह्मप्राप्तिश्चेति साध्यद्वयं क्रमेण कर्म, ज्ञानं चेति साधनद्वयमपि हि यादवप्रकाशीयैरभ्युपगतम् अतो "विद्यां चाविद्यां च"इति वाक्ये पूर्वखण्डः साधनद्वित्वपरः, उत्तरखण्डस्तु साध्यद्वित्वपर इति तेषां निर्वाहः "वक्ष्यति च"इति च-शब्दः प्रतिपाद्यसमुच्चये अङ्गभावं च वक्ष्यतीत्यर्थः, ज्ञानोत्पत्तेः पश्चात्कर्मणो ब्रह्मप्राप्तिप्रतिबन्धनिवर्त्तकत्वं ज्ञानोत्पत्तेः पूर्वं कर्मणो ज्ञानोत्पादकतया तदङ्गत्वमपि हि तदभ्युपगतम्, अङ्गभावपरं सूत्रमुपादत्ते "सर्वापेक्षे"ति सर्वापेक्षेत्यादिसूत्रमङ्गाङ्गिभावपरं "सहकारित्वेन च"इति सूत्रं समसमुच्चयप्रतिपादकमिति हि तेषां प्रक्रिया अङ्गभावे समुच्चये च श्रुतिवाक्ये सूत्रे चोदाहर्त्तव्ये अपि ग्रन्थलाघवार्थं समुच्चये श्रुतिरङ्गभावे सूत्रं चोदाहृतम्, अङ्गभावप्रतिपादकवाक्यविषयसूत्रोपादानेन भास्करमतं चावलम्बितं भवति, एवमुभयथा कर्मणोऽपेक्षा दर्शिता ततः किम्? इत्यत्राह "अपेक्षितैवे"ति समप्रधानतयाङ्गतया चापेक्षित इत्यर्थः । अन्यत्सर्वं पूर्ववत् । यद्यपि यादवप्रकाशमते कर्मविचारस्य पूर्ववृत्तत्वमनभिमतं तथापि समुच्चयेनाङ्गतया च कर्मणोऽपेक्षितत्त्वस्य तदुपपादितत्वात्तावन्मात्रमुपजीव्य पार्श्वस्थेन मतद्वयावलम्बिना चोदयित्रा पूर्ववृत्तत्वापादनमुखेन चोदितमिति न निगमनग्रन्थविरोधः । समुच्चय-शब्दस्य प्रधानतयान्वये स्वारस्यादङ्गत्वपरसूत्रोपादानात्तदनन्तरं साध्यद्वित्वस्य साधनद्वित्वस्य च निराकरिष्यमाणत्वाच्च मतद्वयावलम्बनमुखेन चोदितमिति निर्वाहः पूर्वाचार्यैः कृतः ।

[1] तदन्तर्भावाच्चेति ख॰ पु॰ पाठः ।

मू० नैतद्युक्तम्, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः ।

टी० ॥ अत्र प्रतिवदति "नैतद्युक्त"मिति हानार्थं कर्मणो ज्ञातव्यत्वं प्रागेव प्रतिक्षिप्तम्, वेदान्तमात्राध्यायिनः कर्मविषयापातप्रतीत्यभावेन कर्मविचारनैरपेक्ष्यवचनात् मुमुक्षुत्ववशाद्वेदान्तमात्रबुभुत्सावतः कर्मज्ञानानपेक्षावचनाच्च अत्रोपादानार्थं कर्मणो ज्ञातव्यत्वं निराचिकीर्षुः समसमुच्चयेनाङ्गभावेन च द्विविधेप्युपादाने समसमुच्चयार्थमुपादानं प्रथममपाकर्तुं साधनद्वित्वं साध्यद्वित्वं च वाक्यद्वयेन प्रतिक्षिपति "सकलविशेष"-त्यादिना यदा वाढमित्यादिग्रन्थो भास्करमतेन "सिद्धान्तिमतेन वा चोद्यपरः तदानीं पूर्वपक्षी संभावितसमस्तप्रकारेण कर्मणोऽपेक्षां प्रतिक्षेप्तुकामः किं त्वया समसमुच्चयो विवक्षितः, उताङ्गभाव? इति विकल्पमभिप्रेत्य प्रथमं समुच्चयपक्षं प्रतिक्षिपतीति निर्वाह्यम् । सकलविशेषाः सजातीयविजातीयस्वगतव्यावृत्त्यन्वयरूपविशेषाः, तेषां प्रत्यनीकं सर्पाद्याकाराणां रज्जुत्वमिव तेषान्निवर्त्तकमिति भावः 'चिन्मात्रमि"ति मात्रचा ज्ञातृत्वज्ञेयत्वव्यावृत्तिः । यद्वा सकलविशेषप्रत्यनीक-शब्देन सजातीयविजातीयभेदप्रत्यनीकत्वं, चिन्मात्रमिति मात्रचा स्वगतभेदशून्यत्वं विवक्षितं प्रत्यनीक-शब्देन नित्यानर्हत्वं विवक्षितं न हि शुक्तिशकलं कदाचिद्रजतत्वसंबन्धार्हं नित्यानर्हत्वादेव हि शुक्तिज्ञानस्य रजतत्वनिवर्त्तकत्वम् "ब्रह्मविज्ञानादेवाविद्यानिवृत्ते"रिति रज्जुत्वज्ञानादेव हि सर्पत्वनिवृत्तिर्न तु कर्मणेति भावः । एवं साधनद्वित्वं निरस्तं कथं साधनद्वित्वव्युदासः?

मू० अविद्यानिवृत्तिरेव हि मोक्षः, वर्णाश्रमविशेषसाध्यसाधनेतिकर्त्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत् ॥

टी० ॥ साध्यद्वित्वं हि विद्यत इति शङ्कायां साध्यद्वित्वं व्युदस्यति 'अविद्यानिवृत्तिरेव हि मोक्ष"इति ब्रह्मणो नित्यप्राप्तत्वात् प्रतिबन्धनिवृत्तिरेव साध्या न तत्प्राप्तिः । हि-शब्दस्यायमभिप्रायः, या प्रतिब-

र्थनिवृत्तिः कर्मसाध्यत्वेन त्वयोक्ता सैव ज्ञानसाध्या श्रुतिस्मृतिसूत्रैरभिहिता "तमेव विदित्वातिमृत्युमेति" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" "निचाय्य तं मृत्युमुखात् प्रमुच्यते" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" एवमेवं "विदि पापं कर्म न श्लिष्यते" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" "तदधिगम उत्तरपूर्वाघयो"रित्यादिभिः, तस्माद्वाक्यद्वयेन न साध्यसाधनद्वित्वमस्तीत्युक्तं भवति। अविद्यानिवृत्तिरेव मोक्षस्तु ततः किं कर्मनैरपेक्ष्यस्येत्यत्राह "वर्णाश्रमे"ति अनेन पदेन पूर्वोक्तं कर्मणोभेदावलम्बित्वं विवृतं भवति, आदि-शब्देन निषिद्धानि प्रायश्चित्तानि कर्माणि च विवक्ष्यन्ते अनन्त-शब्देन वर्णादीनां बाहुल्यम्। विकल्पो भेदः "सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्ते"रिति मूलाज्ञाननिवृत्तेः फलं हि भेददर्शननिवृत्तिः। अतो भेददर्शननिवृत्तिरज्ञानानिवृत्यन्तर्गतेत्यर्थः कथमिव साधनं न कथंचिदपीति यावत्। "न हि वचनविरोधे न्यायः प्रभवतीति"नियमात्।

मू० श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति "अन्तवदेवास्य तद्भवति" "तद्यथेह कर्मचितोलोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "ब्रह्मविदाप्नोति परं" "ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वातिमृत्युमेती"त्याद्याः।

टी० ॥ श्रुतिसिद्धं कर्मणोपेक्षितत्वं न बाध्यमिति शङ्कायामुक्तोपपत्तये श्रुत्यानुकूल्यं दर्शयति "श्रुतयश्चे"ति न केवलोपपत्तिः तदनुग्राह्यमप्यस्तीति च शब्दस्य भावः। पूर्वं भेदावलम्बितया विरोध उक्तः, अत्र तु फलानित्यतया विरोधश्च युक्त्यन्तरत्वेन दर्शितः। "अनित्यफलत्वेने"ति नित्यफलस्य मोक्षस्य कथमनित्यफलदं कर्म साधनमित्यर्थः। श्रुतय इत्येकस्मादनेकवाक्यानां प्राबल्यंविवक्षितम्। दर्शयन्तीत्यनेनास्पष्टार्थात् स्फुटार्थानाम् "अन्तवदेवास्ये"ति कर्मसाध्यत्वे मोक्षस्यानित्यत्वं नित्यत्वे कर्मणोऽतत्साधनत्वं वा स्यात् कर्मणोन्तवत्फलत्वनियमादिति भावः।

अनेन वाक्येन कर्मणामनित्यत्वमुक्तम् । "तद्यथेत्य"नेन कर्मक्षयस्य फलद्वारकत्वमुक्तम् । पूर्ववाक्यमनेककालानुष्ठितसकलकर्मणामन्तवत्त्वज्ञापनार्थम् । "अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवती"ति हि श्रूयते तत एव कर्मनैरपेक्ष्यवादे अस्य वाक्यस्य प्रथमत उपादानम्, ब्रह्मविदाप्नोतीति ज्ञानस्य मोक्षसाधनत्वमुक्तम् । प्राप्यप्राप्तृभेदनिषेधार्थं "ब्रह्म वेद ब्रह्मैव भवती"त्युपात्तम् । "तमेवे"ति प्रतिबन्धनिवृत्तेर्ज्ञानफलत्वं ज्ञापितम् । ज्ञानव्यतिरिक्तस्य कर्मादेरुपायत्वनिषेधश्चानेन सिद्धः, "नान्यःपन्था" इति ह्यनन्तरवाक्यम् । एवं ज्ञानस्यैव मोक्षोपायत्वपरतर्कानुगृहीतस्पष्टार्थानेकवाक्योप[१]पादनेन "विद्यां चाविद्यां चे"ति समुच्चयपरत्वेन परोक्ता श्रुतिश्चातदर्थेत्युक्तं भवति तस्या एकत्वादस्फुटार्थत्वादतर्कोपेतत्वाच्च श्रुत्यन्तराविरोधेन वर्णनीयत्वात् । एवं ज्ञानस्यैव मोक्षोपायत्वे प्रमाणतया श्रुतयउपपत्तयश्च दर्शिताः ।

मू० यदपि चेदमुक्तम्, यज्ञादिकर्म्मापेक्षाविद्येति तद्वस्तुविरोधाच्छ्रुत्यन्तरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते न फलोत्पत्तौ "विविदिषन्ती"ति श्रवणाद्विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह ॥

टी० ॥ अथ यज्ञादिश्रुतेः कर्मापेक्षितत्वपरतां व्युदस्यति "यदपि चे"त्यादिना सिद्धान्तिभास्करयादवप्रकाशानां त्रयाणामपि कर्माभिमतमितीदृशं प्राधान्यं सूचयत्यपि–शब्दः । समुच्चयपरवाक्यस्य श्रुत्यन्तरानुगुणयेन निर्वाहे सति यज्ञादिश्रुतिश्च निर्वाह्येति समुच्चयाभिप्रायश्च–शब्दः, अपिचेत्यखण्डशब्दोवा तदानीमप्युक्तप्रकारेण समुच्चयपरः । "यज्ञादिकर्मापेक्षाविद्ये"ति अनया वचनव्यक्त्या समुच्चयेन विद्यापेक्षितं यत्कर्मोक्तमित्यर्थः, वस्तुविरोधाद्द्वैतवासनाजनकत्वमनित्यफलदत्त्वं च श्रुत्यन्तरपर्यालोचना–सन्प्रत्ययार्थनिरूपणम् । चः समुच्चये विविदिषोत्पत्तावुपयोगप्रकार-

१ वाक्योपादानेनेति ख० पु० पा० ।

माह "अन्तःकरणे" ति न फलोत्पत्तौ न मोक्षोत्पत्तौ "यज्ञेन दानेन तपसा नाशकेन ब्राह्मणा विविदिषन्ती" ति हि श्रुतिः न तु मुच्यन्त इति भावः। अक्षरपर्यालोचना कथमित्यत्राह 'विविदिषन्ती' ति "श्रवणादि" ति एवं च यज्ञादिश्रुतिपर्यालोचनया च ज्ञानकर्मणोः समुच्चयः प्रत्युक्तः "न फलोत्पत्ता" विति फल-शब्दस्य मोक्षे स्वारस्यादेवं योजना कृता। यद्वा यज्ञादिकर्मापेक्षाविद्येतिवचोभङ्ग्याङ्गतयापेक्षितं यत्कर्मोक्तमित्यर्थः "न फलोत्पत्तौ" न वेदनोत्पत्तावित्यर्थः, विविदिषापेक्षया फलं हि वेदनम्, अन्यत्सर्वं पूर्ववत्। अस्यां योजनायां यज्ञादिकर्मापेक्षाविद्येति निर्देशस्वारस्यमस्ति- अङ्गाङ्गिभावसूत्रस्मारकत्वादस्य निर्देशस्य। अथवा यज्ञादीति प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकतयाङ्गं यत्कर्मोक्तं तन्नोपयुक्तमित्यर्थः। न फलोत्पत्तौ मोक्षोत्पत्तौ करणभूतविद्यानुग्राहकत्वेन नोपयुक्तमित्यर्थः। अस्यां योजनायामङ्गाङ्गिभावसूत्रस्मारकनिर्देशस्य फलोत्पत्ताविति निर्देशस्य च स्वारस्यमस्ति विविदिषन्तीत्युक्तिरसिना जिघांसतीतिवदिति यज्ञादेर्वेदनोपयोगित्वं स्यादिति शङ्कायां वेदनोत्पत्तौ हेतुत्वे कर्मणाम् इतिकर्तव्यतात्वङ्करणत्वं चानुपपन्नाहमित्याह 'विविदिषायामित्यादिना वाक्यद्वयेन, तत्र शमादिभिः सह समुच्चयेन विकल्पेन चेति कर्तव्यतात्वं प्रथमं व्युदस्यति विविदिषायामित्यादिवाक्येन। एवकारद्वयेन कर्मणः समुच्चयो विकल्पश्च व्युदस्यते शमादीनामिन्द्रियव्यापारोपरतिरूपत्वेन यज्ञादिकर्मणस्तत्प्रवृत्तिरूपत्वेनान्योन्यविरोधित्वान्नसमुच्चयउपपद्यत इत्यभिप्रायेण शमादीनामेवेत्युक्तम्। तुल्यबलयोर्हि विकल्पः, "भूत्वात्मानं पश्येदि" ति शमादीनामात्मदर्शनं प्रति साक्षात्साधनत्वस्य न्यायनैरपेक्ष्येण शीघ्रप्रतिपन्नतया बलीयस्त्वात्। विविदिषन्तीति यज्ञादेरिच्छासाधनत्वे स्वरसतः प्रतिपन्नेपि स्वारस्यभङ्गेनासिना जिघांसतीत्यादि दृष्टान्तपर्यालोचनरूपन्यायसापेक्षतया कर्मणो विद्यासाधनत्वस्य विलम्बेन प्रतिपन्नतया दुर्बलत्वाच्च न विकल्प इत्यभिप्रायेणाह "श्रुतिरेवाहे" ति।

मू० "शान्तोदान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदि" ति तदेवं जन्मान्तरशतानुष्ठितानभिसं-

ह्रितफलविशेषकर्मम्रृदितकषायस्य विविदिषोत्पत्तौ सत्याम् ॥

टी० ॥ तथापि[1] विविदिषापेक्षितत्वात् कर्म च ज्ञानं प्रत्युपयोगि, तत्कथमेतत्त्यज्यते, शमादिरुपादीयते इति शङ्कायां कर्मणः शमादिवैषम्यमाह "अन्तरङ्गोपायता"मिति "भूत्वा पश्येदि"त्यन्तरङ्गत्वं स्पष्टम्, विविदिषायाः पूर्वं हि कर्मोपयोगः, शमादि तु पश्चादप्युपयुज्यत इत्यभिप्रेत्य "जाताया"मित्युक्तम् । ज्ञानं प्रति कर्मणः करणत्वमपि नास्तीत्याह "तदेव"मिति करणत्वं संभवतीत्याशङ्क्य निरस्यते, न त्वभ्युपगतत्त्वात् विशुद्धमनो हि करणं "मनसा तु विशुद्धेने"ति श्रुतेः "तत्" उक्तेभ्यो हेतुभ्यः । "एवं" समुच्चयेन विकल्पेन चेतिकर्त्तव्यतात्वेनुपपन्ने स्वर्गादिसाधनस्य कर्मणो-विविदिषासाधनत्वानुपपत्तिपरिहारायानभिसंहितफल-शब्दः । विविदिषाया अपि तत्साध्यत्वेन फलत्त्वात्तस्यानभिसंहितत्त्वव्यावृत्त्यर्थं "फलविशेषे"त्युक्तम् । विविदिषासिद्ध्यर्थमिदानीमनुष्ठानाय कर्मज्ञानापेक्षाशङ्काव्यावृत्त्यर्थं जन्मान्तर-शब्दः । अनेकजन्मसंसिद्ध-इति वचनादिदानीमप्यनुष्ठेयमित्याशङ्कापरिहारार्थः शत-शब्दः, कार्यकल्प्यं हि कारणम्, इदानीं विविदिषोत्पत्तिदर्शनाज्जन्मान्तरशतानुष्ठानं कल्पनीयमिति भावः, तेन कर्मणा मृदितकषायस्य नष्टपापस्य "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते" इति स्मृतिः । एवं विविदिषोत्पत्तौ सत्यां ज्ञानोत्पत्तौ करणमाह ।

मू० "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "सत्यं ज्ञानमनन्तं ब्रह्म" निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "अयमात्मा ब्रह्म" "तत्त्वमसी"त्यादिवाक्यजन्यज्ञानादविद्या निवर्त्तते वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम वेदान्तवाक्यान्यात्मैक्य-

१ तथा विविदिषापेक्षितत्वात् इति· ख· पु· पाठः ।

विद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसनायास्यार्थस्यानवरतभावना निदिध्यासनम्। एवं श्रवणमननादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्त्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम्॥

टी० ॥ "सदेवे"ति सदेवेत्यादिकारणवाक्यम्। "सत्यं ज्ञान"मिति शोधकवाक्यम्। सत्यज्ञानादिवाक्यफलितव्यावृत्तिविशदीकरणाय "निष्कल"मित्यादिवाक्यमुपात्तम्। "अयमात्मा ब्रह्मे"त्यैक्यवाक्यम्। उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतमैक्यवाक्यं दर्शयति"तत्त्वमसी"ति। अस्मिन्वाक्ये ब्रह्मणा जीवविशेषस्यैक्यं श्रुतं, श्रुतमैक्यं सर्वात्मनामिति ज्ञापनार्थ"मयमात्मा ब्रह्मे"ति वाक्यम्। इत्यादिवाक्यं ज्ञानोत्पत्तौ करणं न कर्मेत्यर्थः। वाक्यजन्यज्ञानमविद्यानिवर्त्तकं चेत् श्रवणादिपूर्वकध्यानविधिवैयर्थ्यमित्याशङ्क्याह 'वाक्यार्थे'ति। चः-शङ्कावर्त्तकः, तेषां स्वरूपमाह "श्रवणं नामे"ति। प्रतिपादकानि-निष्पादनक्षमाणि वाक्यजन्यज्ञानादिति ह्युक्तम्। "एतद्विरोधि"आत्मैकत्वविद्याविरोधि, श्रवणादीत्येवंरूपाणि स्युः कथमेषां वाक्यार्थज्ञानोपयोग? इत्यत आह "श्रवणमननादिभिरि"ति। वाक्यार्थज्ञानोत्पत्तिविरोधिनिरसनमुपयोग इत्यर्थः। "इति"। उक्तस्य हेतोः ज्ञानकर्मसमुच्चयाङ्गाङ्गिभावानुपपत्तिहेतुभ्य इत्यर्थः। "एवंरूपस्य" बन्धनिवृत्तौ कर्मनिरपेक्षवाक्यार्थज्ञानोपक्रमभूतस्य श्रवणस्य न तु प्रासङ्गिकार्थस्य "अवश्यापेक्षितम्"। नियमेनाऽपेक्षितम्। अपेक्षितं च किं-मित्यत आह॥

सू० तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्,

इहामुत्र च फलभोगविरागो, मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम् । अनेन विना जिज्ञासानुपपत्तेः, अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ॥

टी० ॥ "तच्चे"ति । कुत एतदपेक्षितमित्यत्राह "अनेन विने"ति । "जिज्ञासानुपपत्तेः" विचारा[1]नुपपत्तेः । अनुपपत्तिमुपपादयति "अर्थस्वभावादि"ति । कथमर्थस्वभावः ? इत्थं, नित्यानित्यवस्तुविवेकादनित्यसांसारिकफलोपभोगविरागो नित्यपुरुषार्थेच्छा च स्यात्ततः श्रवणादौ प्रवृत्तिः, मनोऽवधानहेतुतया तदुपयोगिनी शमादिसंपच्चेति "अर्थस्वभावादेव" पूर्वत्रक्तता देवेत्येवकाराभिप्रायः । ज्ञानस्यैवोपायत्वं कर्मणोऽनपेक्षितत्त्वं चार्थस्वभावाद्धि पूर्वमुक्तम् । यद्वा "अनेन विना जिज्ञासानुपपत्तेरि" ति शमाद्यर्थस्वभावादित्यर्थः । शमादि पूर्ववृत्तमस्तु कर्म च पूर्ववृत्तं स्यादित्यत्राह "अर्थस्वभावादेवे"ति येनार्थस्वभावेन शमादेः पूर्ववृत्तत्वं तेनैवार्थस्वभावेनान्यस्य पूर्ववृत्तत्वनिषेध इति प्रथमस्यैवकारस्य भावः । पूर्ववृत्तान्तरव्यावृत्त्यर्थं द्वितीय एवकारः । अत्रार्थस्वभाव-शब्देन शमाद्यर्थस्वभाव उक्तः, ज्ञानार्थस्वभावः कर्मार्थस्वभावश्चाभिप्रेतः, ज्ञानस्य कर्मनिरपेक्षो-

मू० एतदुक्तं भवति—ब्रह्मस्वरूपाच्छादिकाऽविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम् । बन्धश्चापारमार्थिकः स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते ॥

टी० पायत्वस्वाभाव्यात् कर्मणोभेदावलम्बित्वेन विरुद्धस्वभावत्वाच्च शमादेर्निवृत्तिरूपत्वेन प्रवृत्तिरूपकर्मविरोधिस्वभावाच्च साधनचतुष्टयमेव पूर्ववृत्तं न त्वन्यदित्युक्तं भवति । "इदमेव पूर्ववृत्तमिति ज्ञायत" इति, इदमेवशब्दावयोगान्ययोगव्यवच्छेदपरौ, इदं-शब्दो हि साधनचतुष्टयपूर्ववृत्तत्वपरः, एवकारः कर्मव्युदासपरः, शमाद्यर्थस्वभावात्तदयोगव्यवच्छेदः । तस्माज्ज्ञानकर्मणोरर्थस्वभावाच्चान्ययोगव्यवच्छेदः । सकलवि-

१ जिज्ञासापदस्य विचारलक्षकतायाः पूर्वमुक्तत्वादिति भावः ।

शेषप्रत्यनीकं ब्रह्म चेत् कथं संसारप्रवृत्तिः? कथं वाक्यार्थज्ञानादेवाविद्यानिवृत्तिः? अन्तःकरणस्य केन वा मालिन्यम्? कथं कर्मणा नैर्मल्यम्? ते चायोगान्ययोगव्यवच्छेदहेतुभूतार्थस्वभावाः कथमिति शङ्कायामुक्तार्थं संकलय्य दर्शयन् शङ्काश्च परिहरति "एतदुक्त"मिति। ब्रह्मस्वरूपाच्छादिका-शब्देन सकलविशेषप्रत्यनीकत्वेपि स्वरूपतिरोधानाद् भेददर्शनसंभव इत्युक्तम्, भेदो ज्ञातृज्ञेयादिः । अपारमार्थिकं भेददर्शनमेव बन्धमूलं न कर्मेत्यर्थः कर्मापि भ्रान्तिमूलमिति भावः । यद्वा अपारमार्थिकं भेददर्शनमेव, न सत्यभूतं किंचिदपीति भावः । तथा सति हि कर्मापेक्षा, बन्धो-जन्मजरामरणादिः, "बन्धश्चापारमार्थिक" इति अविद्यामूलापारमार्थिक-भेददर्शनकार्यत्वादिति भावः । ततः किं कर्मनैरपेक्ष्यस्येत्यत्राह "स चे"ति। "अपारमार्थिकत्वादेवे"ति । पूर्वोक्तादेवापारमार्थ्यात् कर्मनैरपेक्ष्यसिद्धिरित्येवकाराभिप्रायः, "ज्ञानेनैव" न कर्मणेत्यर्थः, नह्यपरमार्थसर्पनिवृत्तेरज्जुज्ञानेन विना वैनतेयोपासनादिकर्मापेक्षा । एवं समुच्चयः प्रत्युक्तः । ज्ञानं प्रत्यपि कर्मणो न साधनत्वमित्याह ॥

सू० निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यं तस्यैतस्य वाक्यजन्यज्ञानस्य स्वरूपे तदुत्पत्तौ कार्ये वा कर्मणो-नोपयोगः, विविदिषायामेव तूपयोगः, सा च पापमूलर-जस्तमोनिवर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोग-मभिप्रेत्य "ब्राह्मणा विविदिषन्ती"त्युक्तमिति ॥

टी० ॥ "निवर्तकं चे"ति निवर्तक[1]बोधः प्रमाणजन्य इति यावत्। प्रमाणजन्यं शुक्तिज्ञानं हि रजतनिवर्तकम् । अत्र शमादेरितिकर्तव्यतात्वेन कर्मण इतिकर्तव्यतात्वमपि विरोधान्नेत्यभिप्रेतम् । ततः किमित्यत्राह "तस्ये"ति । तस्य—कर्मनिरपेक्षस्य, एतस्य—अद्वैतविषयस्य, तदेतच्छब्दयोः प्रस्तुतवाचित्वाविशेषेपि दूरस्थान्तिकस्थविशेषणविशिष्टपरामर्शित्वं ह्युचि-

१ निवर्तकोबोध इति तु युक्तोभाति पाठः ।

तम्। अद्वैतविषयत्वे हेतुमाह "वाक्यजन्यस्ये"ति। तत्त्वमस्यादिवाक्यजन्यत्वादद्वैतविषयत्वमित्यर्थः। "कार्ये—मोक्षे। तर्हि कुत्रोपयोग? इत्यत्राह "विविदिषायामि"ति। तु—शब्देन करणेतिकर्त्तव्यतात्वव्युदासः। उपयोगः कथमित्यत्राह? "स चे"ति। पापमूलेत्यादिना अन्तःकरणनैर्मल्यद्वारेणेति पूर्वोक्तं विवृतं भवति। रजस्तमोनिवर्हणादिकं नास्ति वाक्ये श्रुतमित्यत्राह "इतीममि"ति। अभिप्रेत्य—शब्देन शङ्कापरिहारः, इतिहेतोः वस्तुविरोधादितिकर्त्तव्यतात्वकरणत्वानुपपत्त्यादिहेतुभ्य इत्यर्थः। इममुपयोगम्—रजस्तमोनिवर्हणसत्त्वविवर्द्धनरूपं परम्परयोपयोगमित्यर्थः। विविदिषन्तीत्युक्तमित्येतदुक्तं भवतीत्यन्वयः। प्रकृतमुपसंहरति।

**सू० अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्। अत्रोच्यते। यदुक्तमविद्यानिवृत्तिरेव हि मोक्षः सा च ब्रह्मविज्ञानादेव भवतीति तदभ्युपगम्यते॥**

टी० ॥ "अतः कर्मज्ञानस्ये"ति। अतः—हानार्थमुपादानार्थं च कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः। अत्र व्याख्यातृभिरुक्तौ सङ्ग्रहश्लोकौ "विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात्। ज्ञानमात्रस्य हेतुत्वे श्रुतेः सामर्थ्यतोऽपि च। शमाद्यङ्गकतास्नानात्र धीकर्मसमुच्चयः। श्रवणादिक्रमोच्चिद्वाक्यजा धीर्विमोचिके"ति। "विरोधादि"ति। कर्मणामनित्यफलतया भेदवासनाजनकतया च विरोधो विवक्षितः। "सामर्थ्यत"इति। ज्ञानस्य मिथ्यार्थनिवर्त्तकत्वे कर्मनिरपेक्षत्वरूपं वस्तुसामर्थ्यं विवक्षितम्। लघुसिद्धान्तारम्भः। राद्धान्तमारभते "अत्रोच्यत"इति। अस्मिन् पूर्वपक्षे सिद्धान्त उच्यत इत्यर्थः पूर्वपक्षोक्तेष्वर्थेष्वविरुद्धांशाभ्युपगमेन प्रतिवदति "यदुक्तमि"ति "अविद्यानिवृत्तिः—प्रतिबन्धनिवृत्तिः, साधनद्वित्वसाध्यद्वित्वनिरासोऽभिमत इत्यर्थः। यः प्रतिबन्धनिरासः कर्मसाध्य उक्तः, तस्य "तमेव विदित्वातिमृत्युमेतीत्यादिषु ज्ञानसाध्यत्वमुक्तम्, ब्रह्मप्राप्तिस्तु स्वतःसिद्धा। एवकाराभ्यां साध्यान्तरं साधनान्तरं च व्यावर्त्यते। यद्यप्यनिष्टनिवृत्तिरिष्टप्राप्तिश्च द्वयमस्ति तथापीष्टतमब्रह्मप्राप्तेः स्वतः—सिद्धायाः पृथगुपायसाध्यत्वा-

भावात् प्रतिबन्धनिवृत्तिरेव हि साध्या स्वत एव सर्वसाक्षात्कारक्षमं ज्ञानं प्रतिबन्धके निवृत्ते सति ब्रह्मस्वरूपरूपगुणविभवादिकं सर्वं साक्षात्करोति यथा सेतौ भग्ने जलं स्वयमेव गच्छति न केन चिन्नेतव्यं तद्वत्, यथाश्मानयने मार्गसमीकरणतत्प्रा[१]पणे उभे अपि पृथग्यत्नसाध्ये न, तथेत्यर्थः ॥ यद्वा भावान्तरस्यैवाभावत्वादविद्यानिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः । साध्यसाधनद्वित्वनिरासोऽभ्युपेतश्चेत् प्रतिपत्तिविषयः कः? इत्यत्राह ॥

सू० अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति? विवेचनीयम् । किं वाक्याद्वाक्यार्थज्ञानमात्रम्? उत तन्मूलमुपासनात्मकं ज्ञानमिति? न तावद्वाक्यजन्यम्, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः ।

टी० "अविद्ये"ति साधनस्वरूपविशेषे विप्रतिपत्तिरित्यर्थः किंरूपं? किं कर्माङ्गत्वानर्हं न भवदुक्तं ज्ञानम् उत कर्माङ्गत्वार्हमस्मदुक्तं ज्ञानमित्यर्थः । किं रूपमित्यभिप्रेतं विवृणोति "किमि"ति किं वाक्यादित्यादिना परमतं स्वमतं च वदति न तु परमतविकल्पः प्रथमं परपक्षप्रतिक्षेपः क्रियते स्वपक्षस्थापनं तु पश्चादित्यभिप्रेत्याह "न तावदि"ति न तु दुष्यशिरसोऽन्यतरदूषणं क्रियते कुत इत्यत्राह "तस्ये"ति "विधानमन्तरेणापी"ति प्रमाणज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रं कर्त्तुमकर्तुमन्यथा कर्तुं चाशक्यत्त्वात् । अतः पुरुषतन्त्रत्वाभावान्न तद्विधेयमिति तैरेवोक्तमिति भावः । वाक्यादेव—स्वरूपपरवाक्यादेव व्युत्पत्तिमन्तं पुरुषं प्रति न्यायानुगृहीतस्य वाक्यस्यार्थबोधकत्वं स्वतःसिद्धं न तु विध्यधीनं तच्छ्रवणे पुरुषस्य प्रवृत्तिश्च रागादेवेत्युपपादितम् । यद्यपि न रागात्तथाप्यध्ययनविधिरेवाधीतकृत्स्नवेदस्य वाक्यविचारे प्रवर्त्तक इति "प्रज्ञां कुर्वीते"त्यादिविधिर्निरर्थक एव ।

---

[१] मार्गस्थपाषाणस्य गृहानयने मार्गसमीकरणतदानयने भवत एकयत्नसाध्ये इत्यर्थः ।

न च प्रमाणज्ञानस्य श्रेयःसाधनत्वमलौकिकमिति तादृप्येण तस्य विधेयत्वं शुक्तिरूप्यादिभ्रमनिवर्त्तकज्ञानस्येव बन्धनिवर्त्तकज्ञानस्य दृष्टार्थत्वाभ्युपगमात् अतो विधिर्व्यर्थम् । तेनासकृदावृत्तिसाक्षात्काररूपत्वयावज्जीवानुष्ठेयत्वपराणां "यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यादीनां मुक्तिः शरीरपातानन्तरभावित्वपराणां नाडी[1]विशेषनिष्क्रमणवादिनीनां मार्गपराणां वा नेकश्रुतीनां नैरर्थक्यं प्रसज्येत । एवमनेकश्रुतिविरोधस्य प्रदर्शनार्थं तस्य विधानमन्तरेणापीत्युक्तम् । अथ प्रत्यक्षविरोधं दर्शयति ॥

सू० तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च

न च वाच्यं भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्त्तकं ज्ञानं न जनयति ।

टी० ॥ "तावन्मात्रे"ति तावदंशस्ततोऽधिकोऽप्यस्तीति तद्व्यावृत्त्यर्थं तावन्मात्रेणेत्युक्तम् । बहुशास्त्रविरोधप्रत्यक्षविरोधरूपमिदं दूषणद्वयं वदता भगवतापस्तम्बेनापि वाक्यार्थज्ञानमात्रस्य मोक्षसाधनत्वं निरस्तम् । यथा बुद्धेः क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् बुद्धेश्चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत एतेन परं व्याख्यातमिति शास्त्रैरिति बहुवचनेन पूर्वोदाहृतानेकश्रुतिविरोधोऽभिप्रेतः । विप्रतिषेधोऽधिकबलेन प्रतिषेधः । न तु प्रकरणसमवत् तुल्यबलेन प्रतिषेधः । बहुशास्त्रविरोधः प्रबलतरः "भूयसां स्यात् बलीयस्त्वमि"ति न्यायाभिप्रायेण विप्रतिषिद्धमित्युक्तम् । यत्तु परैरस्य दूषणस्य प्रतिवचनं द्विधाकृतं तदनुभाष्य दूषयति ।

न च "वाच्यमि"ति वाक्यं ज्ञानोत्पत्तिमिदानीं न जनयतीति कश्चिन्निर्वाहस्तमाह "भेदे"ति इदानीमपि ज्ञानोत्पत्तिर्दृश्यत इति चेत् तत्परिहारायाह "अविद्याया निवर्त्तकमि"ति पश्चादपि वाक्यादेवाविद्यानिवर्त्तकविशदज्ञानोत्पत्तिश्चेदिदानीमेव जनयत्वित्यत्राह "भेदवासनायामि"ति प्रतिबन्धकाभावश्च सामग्र्यन्तर्भूतः । अतः सामग्रीवैकल्यात्

१ नाडीविशेषः सुषुम्णारूपः ।

ज्ञानमनुत्पन्नं ध्यानादिविधयः प्रतिबन्धकनिरासौपयिका इति भावः अनेन शास्त्रप्रत्यक्षविरोधौ परिहृतौ भवतः सनकादीनां ज्ञानाधिकत्वेन श्रुतिस्मृतिप्रसिद्धानामपि ज्ञानानुदयोऽनुपपन्न इति शङ्कायां निर्वाहान्तरमाह ॥

सू० जातेपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय चन्द्रैकत्वे ज्ञातेपि द्विचन्द्रज्ञानानिवृत्तिवदनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः । सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् ॥

टी० ॥ "जातेपी"ति अविद्याया एकत्वात् प्रपञ्चप्रतिभासस्यैकस्य ब्रह्मणः स्वरूपत्वाच्च "सर्वस्ये"त्युक्तम् । न दोषाय अनिवर्त्तकत्वं दोषाय न भवति । ज्ञानोदये विभ्रमानिवृत्तौ दृष्टान्तं दर्शयति "चन्द्रैकत्व"इति अनिवृत्तं चेद् भेददर्शनं बन्धकं स्यात् इत्यत आह "अनिवृत्तमपी"ति "छिन्नमूलत्वेन" छिन्नाविद्याख्यामूलत्वेनाकार्यकारि यथा दग्धः पटः पूर्वसंवेशेन प्रतीयमानोप्याच्छादनादिकार्यायोग्यः क्रमेण विनश्येत् यथा कुलालभ्रमितं चक्रं भ्रमयितृव्यापारोपरमेपि पूर्ववेगवशात् किंचित्कालं स्वयमेव भ्रमत् क्रमेणोपरमेत तद्वदिति भावः । "अत्रेति करणस्य न वाच्यमित्यनेनान्वयः प्रथमं ज्ञानानुत्पत्तिं दूषयति "सत्यामि"ति न्यायानुगृहीतवाक्यमेव सामग्री प्रतिबन्धिका भेदवासनास्तीति चेत्तत्राह "सत्यामपी"ति निवर्त्या वासना निवर्त्तकोत्पत्तिप्रतिबन्धिका न भवतीत्यर्थः आदि-शब्दादिन्द्रियं गृह्यते यथा चिरतरतिमिरवासितगुहायां प्रदीपो नोत्पद्यते तस्मिन् दीप्तिमति दीपिते सद्य एव तमो विनश्येत् । यथा क्वचिद्देशे सर्प इति वाक्याच्चिरं भ्रमितः पुरुषो न तत्र सर्प इत्याप्तोपदेशाज्जानाति यथा च वनं न दग्धमिति श्रुत्वा चिरं भ्रान्तस्य पश्चात्तत्र गत्वाङ्गारादिलिङ्गदर्शनेन दग्धमिति ज्ञानं जायते यथा चिरं सर्पत्वेन

वासिते वस्तुनि समीपगमनानन्तरमिन्द्रियव्यापारेण रज्जुज्ञानं सहसैव जायते तद्वदित्यभिप्रायेणाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनादित्युक्तम् वेदान्तवाक्यं हि दार्ष्टान्तिकम् । अत आप्तोपदेशस्य प्रथमोपादानम् । अथ द्वितीयनिर्वाहकमनूद्य निरस्यति ॥

सू० सत्यपि वाक्यार्थज्ञानेऽनादिवासना[1]मात्रया भेदज्ञानमनुवर्त्तत इति भवता न शक्यते वक्तुम् । भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्, ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्त्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः ॥

टी० ॥ "सत्यपी"ति मात्रया अल्पमित्यर्थः । भवता ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्ववादिनेति भावः । भवतेति सूचितमर्थं विवृणोति "भेदे"ति वासनाया अपि मिथ्यात्वाविशेषात्तस्या अपि ज्ञानेन निवर्त्यत्वमवश्याश्रयणीयमिति भावः । किं ज्ञानोत्पत्तावपि वासना न निवृत्तेत्युच्यते उत तन्निवृत्तावपि निर्हेतुकं भेददर्शनं भवतीति शङ्काद्वयं हृदि निधाय प्रथमां परिहरति "ज्ञानोत्पत्तावपी"ति ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वाद्वासनापि ज्ञानैकनिवर्त्त्या नोचेन्निवर्त्तकान्तरमपि ज्ञानत्वाविशेषान्न निवर्त्तयेदित्यर्थः । स्वयमेव वासना नश्यतीति चेत्तदयुक्तम् । स्वयमेवेति बाधकज्ञाननैरपेक्ष्यस्य विवक्षितत्वे वासनाया नश्यन्त्या अपि सत्यत्वप्रसङ्गात् स्वयमेव नश्यतीति स्वेनैव स्वनाशकरणं विवक्षितं चेद्व्याघातः फलोपधायककारणनाशादिनाश्यत्वेपि सत्यत्वेपि सत्यत्वप्रसङ्गोऽवर्जनीय एव कर्म-शब्दादिषु तथैव वैशेषिकैर्वर्णितत्वात् तेषां च पारमार्थ्यादर्शनात् । किंच स्वाप्नार्थोत्पत्त्यादिवद् वासनाया अपि मिथ्यात्वेन तदुत्पत्तिस्थिती अपि मिथ्याभूते इति तद्विनाशोपि मिथ्याभूतः । अतोविनाशविषयभ्रमः पुनस्तिष्ठतीति निःशेषभ्रमनिवृत्तिर्न स्यात् ॥

---

१ अनादिवासनयेत्यपि पाठान्तरम् ।

मू० वासनाकार्यं भेदज्ञानं छिन्नमूलम् अथवानुवर्त्तत इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः पारमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वान्मिथ्याज्ञानानिवृत्तिरविरुद्धा प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्त्तते ॥

टी० ॥ अथ द्वितीयां शङ्कां परिहरति "वासने"ति छिन्नमूलं—छिन्नवासनाख्यमूलम् "बालिशभाषित"मिति । अकारणकार्योत्पत्तिप्रसङ्ग इत्यर्थः, यद्यकारणं भेददर्शनं भवति तर्हि मुक्तिरपि ज्ञाननिरपेक्षा स्यात् श्रवणादिभिर्विना वाक्यार्थज्ञानं स्यात् अविद्यया विना जगद्भ्रमश्च स्यात् अधिष्ठानेन विना अविद्यापि कार्यकरी स्यादिति भावः। कथं सत्यपि बाधकज्ञाने चन्द्रद्वित्वानिवृत्तिरित्याह "द्विचन्द्रे"ति तु—शब्दो विवक्षितार्थवैषम्यपरः। बाधकसन्निधावपि तिमिरादिदोषस्य पारमार्थ्यात् ज्ञानबाध्यत्वाभावः, तत्पारमार्थ्यं च व्यावहारिकतयापि परेणाभ्युपगन्तव्यम्। अन्यथाप्तोपदेशानन्तरं रज्जुसर्पव्यवहारोच्छेदवद्दोषोऽपि मिथ्येति वचनानन्तरं दोषनिवृत्त्या चन्द्रद्वित्वादिव्यवहारोच्छेदप्रसङ्गात् । अतो दोषस्य विद्यमानत्वाद् भेदभ्रमस्य समूलत्वम्। अनेन बाधकसन्निधौ बाध्यसद्भावोऽप्यकारणककार्योत्पत्तिश्चेतीदं दूषणद्वयं दृष्टान्ते परिहृतं भवति। परमते तु दूषणद्वयं तिष्ठत्येव । तर्ह्याप्तोपदेशादिवैयर्थ्यमित्यत्राह "प्रबले"ति रज्जुसर्पभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिः फलत्वेनोक्ता। आदि—शब्दात् पलायनादि गृह्यते द्विचन्द्रज्ञाने च स्वस्यादुष्टकरणत्वधीनिवृत्तिरौषधादिप्रवृत्तिश्च फलम्, ऐन्द्रजालिकभ्रमादिषु भ्रमहेतोः प्राबल्यात् । वस्तुतो भ्रमत्वेऽप्यसत्यविषयत्वनिश्चयप्रतिबन्धः स्यादिति तद्व्यावृत्त्यर्थं प्रबलप्रमाण—शब्दः "निवर्त्तत"इति प्रतिभासे विद्यमानेऽपि विषयसत्यत्वाभावनिश्चयद्वारा भयादिनिवृत्तिहेतुराप्तोपदेश इत्यर्थः। यद्वा यथावदर्थस्वरूपापरोक्ष्यप्रवृत्तिद्वारा भयादिनिवृत्तिहेतुरित्यर्थः। तु—शब्दः शङ्काव्यावर्त्तकः ज्ञानानुत्पत्तिपक्षस्य बहुभिमतत्वात् सिंहावलोकनेन तं दूषयति ॥

सू० अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न भेत्स्यति, भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरुद्धभावनायाश्चाल्पत्वादनया तन्निरासानुपपत्तेः । अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् ॥

टी० ॥ "अपि चे"ति नायं सर्पारज्जुरितिवद्दृष्टद्वारा हि भेदनिरासः । अदृष्टमुखेन चेद् भेदसत्यत्वप्रसङ्गात् । अतो भूयस्या भेदवासनाया अल्पीयस्या द्वैतवासनया निरासोऽनुपपन्नइत्यर्थः । नन्वदृष्टद्वारा निवर्त्यत्वे निवर्त्यसत्यत्वं नाविष्टम्[1] । ध्याननिवर्त्त्यसर्पवद्व्यवहारदशायां वासनायाः सत्वत्वाभ्युपगमात् । उत्पन्ने तु ज्ञाने तदुत्पत्तिस्थितिविनाशाश्च बाधिताः स्युरिति । नैवम् । ध्याननिवर्त्त्यसर्पस्यानित्यत्वमेव न कदाचिदपि बाध्यत्वं सिद्धमिति, तद्वदेवादृष्टनिवर्त्त्यवासनाया अपि वास्तविकसत्यत्वप्रसङ्गात् । नत्वैक्यभावनारूपं निदिध्यासनं प्रतिबन्धनिवर्त्तकं चेदुक्तदोषः स्यात्, न तु न प्रतिबन्धनिवृत्त्यै किं तु वाक्यार्थज्ञानोदयसहकारीति । नैवम् । स्मृतिरूपस्य निदिध्यासनस्यानुभवसापेक्षतया तस्य वाक्यार्थज्ञानजननसहकारित्वात् ।

ननु यद्यपि परोक्षानुभवस्य ध्यानमनुपकारकं तथापि निदिध्यासनसहकृतं वाक्यमपरोक्षधीहेतुः स्यात् । नैवम् । निदिध्यासनसहकृतत्वेपि शब्दत्वादेवापरोक्षधीहेतुत्वायोगात्, ज्योतिष्टोमवाक्यवत् एवं शास्त्रप्रत्यक्षविरोधादविरोधनिर्वाहानुपपत्त्या वाक्यार्थज्ञानमात्रस्य निवर्त्तकत्वासंभवात्, पारिशेष्याद् वाक्यार्थज्ञानादन्यदेव मुक्त्युपायज्ञानं विधित्सितमित्याह "अत" इति न केवलं पारिशेष्यम् अनुग्राहिकाः श्रुतयश्च सन्तीत्याह ॥

१ नाविष्टम्-अदृष्टद्वारकनिवर्त्यत्वं न निवर्त्यसत्यत्वव्याप्यम् ।

सू० तथाच श्रुतयः "विज्ञाय प्रज्ञां कुर्वीत" "अनुविद्य विजानाति" "ओमित्येवात्मानं ध्यायथ "निचाय्य तन्मृत्युमुखात्प्रमुच्यते" "आत्मानमेव लोकमुपासीत" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" सोऽन्वेष्टव्यः स विजिज्ञासितव्य" इत्येवमाद्याः ॥

टी० ॥ "तथाचे"ति विज्ञायेत्यादिवाक्यद्वयेन ज्ञानसामान्यशब्दः वाक्यद्वयोपादानं च उपसर्गभेदेऽपि विधिप्रत्ययान्तत्वतद्राहित्ययोश्चार्थभेदो नास्तीति ज्ञापनार्थम् । "ध्यायथे"ति विशेषशब्दः—"निचाय्ये"ति ज्ञानस्य प्रत्यक्षसमानाकारता दर्शिता चाय् दर्शन इति हि धातुः, उपासीतेत्यनेन ज्ञानस्योपासनशब्दवाच्यत्वं सिद्धम् "अन्वेष्टव्य"इति मननशिरस्कश्रवणोक्तिः, निदिध्यासितव्यः, विजिज्ञासितव्य इत्युपादानेन सनन्तत्वेऽपीष्यमाणज्ञानपरं वाक्यमिति दर्शितम् । सनन्तपदद्वयस्योपादानं सामान्यविशेषशब्दत्वात् । "इत्येवमाद्या"इति इति—शब्द उपात्तश्रुतिवाक्यस्वरूपमात्रपरः । एवं- शब्दः सनन्तत्वविधिप्रत्ययान्तत्वतद्राहित्योपसर्गभेदादिप्रकारपरः । उदाहृतवाक्येषु ज्ञानसामान्यवाचिपदानां विशेषाकाङ्क्षायां वाक्यार्थज्ञानस्वरूपो विशेषः पर्यवसानभूमिः स्यादिति शङ्कानिवृत्त्यर्थः ॥

सू० अत्र "निदिध्यासितव्य" इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीते"त्येवमादिभिर्वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् तदनुविद्य विज्ञायेत्यनूद्य "प्रज्ञां कुर्वीत विजानातीति ध्यानं विधीयते ॥

टी० ॥ "अत्रे"ति अत्र उपात्तेषु वाक्येषु, इत्येवमादिभिर्ध्यानं विधीयत इत्यन्वयः । "निदिध्यासितव्य"इत्यादिनेत्यादि—शब्देन सन्निहितज्ञानविशेषवाक्यान्तरं विवक्षितम् । ऐकार्थ्यं च सर्वशाखा[1]प्रत्ययन्यायात् स हि अनुक्ताकाङ्क्षितस्वीकारफलस्तत्र "छागो वा मन्त्रवर्णादि"ति न्यायात्

१ वैदिकेषु यावच्छाखासु प्रतीतोऽर्थो ग्राह्यो न त्वेकत्र यथाश्रुताक्षरलभ्य इत्येतदर्थफलकन्यायावलम्बादित्यर्थः ।

सामान्यवाचिशब्दानां विशेषे पर्यवसानम् । "अनुविद्य विजानाति विज्ञाय प्रज्ञां कुर्वीते"त्यत्र केन पदेन वाक्यार्थज्ञानमनूद्यते? केन वा ध्यानं विधीयते? इत्यपेक्षायामाह "अनुविद्य विज्ञायेत्यनूद्ये"ति अनुवादः किमर्थः? इत्यत्राह "ध्यानोपकारकत्वादि"ति प्रज्ञां कुर्वीत विजानातीति वाक्यद्वयोपादानस्य पूर्वोक्तमेव फलम् । एवं स्मृतिष्वपि सामान्यशब्दः सति विशेषोपस्थापके तत्पर्यवसितो दृष्टः । "निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् । रजस्वलामुखास्वादः सुरापानसमानि त्वि"त्यत्र निषिद्धसामान्यस्य भक्षणसामान्यं पातित्यहेतुरवगतम् । "छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विज" इत्यत्र निषिद्धविशेषस्य भक्षणसामान्यं पातित्यहेतुर्दृष्टः । अत्र पूर्वग्रन्थश्चरमग्रन्थार्थे पर्यवस्यति । भवतु सामान्यशब्दो विशेषपर्यवसायी, अत्र तु ज्ञानसामान्यवाचिनः शब्दाः श्रोतव्य इति श्रवणरूपज्ञानविशेषे पर्यवस्यन्त्वित्यत्राह ।

सू० श्रोतव्य इति चानुवादः, स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्त्तत इति श्रवणस्य प्राप्तत्वात्, श्रवणप्रतिष्ठार्थत्वान्मननस्य मन्तव्य इति चानुवादः, तस्माद्ध्यानमेव विधीयते ॥

टी० ॥ "श्रोतव्य इति चे"ति चः शङ्कानिवृत्तौ समुच्चये वा, विज्ञायानुविद्येतिवदयं चानुवाद इत्यर्थः । तत्संक्षेपेणोपपादयति "स्वाध्यायस्ये"ति । आपातप्रतीत्या स्वतःप्राप्तिः श्रवणस्य स्यात्, मनने तादृशहेतुत्वाभावात्तत्र पर्यवसानं मास्त्वित्यत्राह "श्रवणप्रतिष्ठार्थत्वादि"ति चः पूर्ववत् "तस्माद्ध्यानमेवे"ति न तु वाक्यार्थज्ञानमित्यर्थः ।

ननु श्रोतव्य इति पुस्तकनिरीक्षणादिव्यावृत्त्यर्थो विधिः किं न स्यात्? । नैवम् । वेदान्तवाक्यानामपि पुस्तकनिरीक्षणादिव्युदासस्याध्ययनविधिसिद्धत्वाद् ब्रह्ममीमांसाया विलेखनपठनादेरप्रतिषिद्धत्वात् गुरूपसत्तौ श्रवणशब्दस्य मुख्यार्थत्वाभावात्तस्याश्चात्राविहितत्वेपि "गुरुमेवाभिगच्छेदि"ति वाक्यान्तरसिद्धत्वाच्च ।

ननु न्यायोपेतवाक्यमात्रानवगम्यकेवलोपदेशगम्यार्थविशेषश्रवणं श्रोतव्य-इति विधेयमिति चेन्न मननपूर्वभावितयाऽस्य श्रवणस्य न्यायानुगृहीतवाक्यजन्यज्ञानरूपतावगमात् शब्दस्वारस्याच्च ।

नच मन्तव्य इत्यारम्भणसंशीलरूपमननविधिरिति वाच्यम् । श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञानइव मन्तव्यशब्दस्य तत्प्रतिष्ठापने प्रसिद्धिप्राचुर्यात्तस्य चापवादाभावादुभयोरप्राप्तार्थद्वयविधायित्वे वाक्यभेदप्रसङ्गात् सति गत्यन्तरे विशिष्टविधानाश्रयणस्यान्याय्यत्वाच्च । विधिर्हि पदावगतेष्वर्थेष्वेकत्रोपक्षीणशक्तिर्लाघवाय तदितरेषु स्वतोऽनुवादमपेक्षमाणः प्रापकाभावाद्विशिष्टे तात्पर्यं भजते, अत्र त्वनुवादसंभवान्न विशिष्टविषयविधिकल्पनं युक्तम् । तस्मादनुवादः । अनेन श्रवण-शब्दस्य यादव[1]मिश्रोक्तनिर्वाहो निरस्तः । अत्र द्रष्टव्य-शब्द उपायोपेयदशासाधारणत्वादुपरि नियामकस्फुटार्थवाक्यान्तरेण सह व्याख्यायते ।

ननु न साधारणत्वं द्रष्टव्य इति तव्यता दर्शनस्य विधेयत्वप्रतीतेः फलस्य चाविधेयत्वात् । उच्यते निदिध्यासनवद्दर्शनस्य विधाने वाक्यभेदप्रसङ्गान्निश्चितानुवादश्रवणमननसाहचर्याच्च विधित्वनिश्चयप्रतिबन्धादुपायस्य दर्शनरूपस्य त्वविषयप्रमाणादर्शने विशिष्टविधित्वाश्रयणायोगात् "मनसैतान् कामान् पश्यन् रमते य एतं ब्रह्मलोके परात्परं पुरिशयं पुरुषमीक्षते" इत्यादिभिः फलदशायां दर्शनस्य प्रामाणिकत्वाच्च श्रोतव्य-इतिवक्तव्यदर्थमनादृत्य फलसमर्पकत्वं द्रष्टव्यशब्दस्य शङ्कितुं युक्तमिति अत उपरिष्टाद्व्याख्येयत्वम् ।

**भा० वक्ष्यति "चावृत्तिरसकृदुपदेशादि"ति तदिदम् अपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते ॥**

टी० ॥ अथोपासनस्य विधित्सितत्वदार्ढ्याय सूत्रकारोक्तिं दर्शयति "वक्ष्यति चे"ति । तादृशसूत्रासंभवव्युदासाय सूत्रमुपादत्ते "आवृत्तिरि"ति ।

[1] यादवाचार्यो द्रविडदेशोद्भवो ब्राह्मणस्तेन व्याससूत्रेषु भाष्यं निरमायि तदपि चाद्वैतपरमेव परं तु शङ्करमतापेक्षया भास्करीयदर्शन इव महानतिशयो वैपरीत्यं च, श्री ६ रामानुजाचार्याः पूर्वे वयसि यादवाचार्येभ्यः पठितवन्तः, अतएव श्रुतप्रकाशिकाकृतो यादवाचार्यनाम्नि मिश्रपदमुपात्तवन्तः । यादवभाष्यमधुनाप्यस्मद्देशेऽउपलभ्यते ।

उपासनशब्दाश्रवणात् सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह "तदिदमि" ति आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पदम् । कस्यावृत्ति? रित्यपेक्षायामाह "तदिदं वेदनमि" ति तदिदं तृतीयाध्यायावसाने "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते" रिति प्रस्तुतं मोक्षफलकं ज्ञानमित्यर्थः । यद्वा प्रज्ञां कुर्वीतेत्यादि सामान्यशब्दोक्तं वेदनमसकृदावृत्तिरूपमुपासनमित्यर्थः ।

सू० विद्युपास्त्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात् "मनो ब्रह्मेत्युपासी" तेत्यत्र "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन यएवं वेद" "न स वेद" "अकृत्स्नो ह्येषः" "आत्मेत्येवोपासीत" "यस्तद्वेद यत्स वेद स मयैतदुक्त" इत्यत्र "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति ।

टी० ॥ "अवगम्यत" इत्यन्तेनावृत्तिरसकृदिति सूत्रांशो व्याख्यातः । उपदेशादिति पदं व्याचष्टे "विद्युपास्त्योरि" ति स्थलत्रयमुदाहरति "मन" इति मनो ब्रह्मेति वाक्यं रात्रीरुपेयादितिवत् प्रतितिष्ठन्तीह वा एते य एता रात्रीरुपयन्तीत्यत्र य एता रात्रीरिति सत्रानुवादवद्वा एवं वेदेति पूर्वविहितोपासनस्य फलार्थमनुवादः । वितरणविक्रमा[1] दिहेतुभेदात् कीर्त्तियशसोर्भेदः । मनो ब्रह्मेत्युपासीतेत्यादिप्रकरणे यस्तद्वेदेत्यादिप्रकरणे च वेदनोपासनवाचिशब्दयोर्विप्रकर्षात् प्रकरणैकत्वज्ञापनायात्रेत्युक्तम् "अनु म" इति यां देवतामुपास्से एतां देवतामनुशाधि, अनुपूर्वः शासिर्विविच्य ज्ञापनार्थः । विविच्य ज्ञापयेत्यर्थः, "व्यवहिताश्चेति" सूत्रेण छन्दस्युपसर्गाणां व्यवहितप्रयोगः । न स वेदेत्यत्र सन्निकर्षादत्र शब्दाप्रयोगः । न स वेदेत्यस्या "थ योऽन्यां देवतामुपास्त" इत्येतद्वाक्योपक्रमत्वादुपक्रमोपसंहारयोरुपासनशब्दः मध्ये वेदनशब्दः इदं च पूर्वस्मिन्वाक्ये उपक्रमोपसंहारदर्शनादित्यनेनाभिप्रेतम् यस्तद्वेद तस्य ब्रह्मणो वेदिता यो रैक्वः, यद् वेद तस्य रैक्वस्य वेद्यं यद् ब्रह्म स वेदिता रैक्व, एतद्द्वयं च उभयं तव मयोक्तमित्यर्थः । सामान्यविशेषन्यायेन

१ वितरणजन्या कीर्त्तिर्विक्रमजन्यं यशः ।

प्रकरणान्तरोक्तज्ञानसामान्यवाचिनां शब्दानां प्रकरणान्तरोक्तविशेषे पर्यवसायित्वं पूर्वमेव स्वयमेव भाष्यकारेण दर्शितम् । सूत्रव्याख्याने त्वेकैकप्रकरणे व्यतिकरेणोपक्रमोपसंहारदर्शनमुपदेशादिति पदस्यार्थत्वेनोक्तम् । उभयत्रोभयं हेतुत्वेन वाच्यं तथाप्यविस्तरार्थमेकैकमुक्तम् । अत एव हि चतुर्थाध्याये उभयमपि हेतुत्वेन वक्ष्यते । तदिदमित्यादिकं सूत्रव्याख्यानम् । अन्यथा तदिदमपवर्गोपायतया विधित्सितं वेदनमिति नोच्येत, किंतु ध्यानमुपासनमित्येवोच्येत । इतरथा शङ्कितोक्तिप्रकरणानौचित्यात् पश्चादपि ध्यानं च तैलधारावदविच्छिन्नस्मृतिसंतानरूपमिति पूर्वप्रकृतध्यानशब्देन निर्देशात् पूर्वग्रन्थे ध्यानस्योपासनत्वं विवक्षितं चेत् पश्चादुपासनमविच्छिन्नस्मृतिसंतानरूपमित्युपासनशब्देनोच्येत ।

**सू० ध्यानं च—तैलधारावदविच्छिन्नस्मृतिसंतानरूपा ध्रुवा स्मृतिः "स्मृत्युपलम्भे सर्वग्रन्थीनां विप्रमोक्ष" इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् ।**

टी० ॥ एवं प्रकृतसूत्रार्थं विवृत्य पूर्वप्रकृतस्य ध्यानस्य ध्रुवानुस्मृतित्वमुपपादयति "ध्यानं चे" ति वेदनस्यासकृदावृत्तिं वदतः सूत्रकारस्यायं भावः । यथा ज्ञानसामान्यवाचिनां शब्दानां विशेषपर्यवसायित्वेनासकृदावृत्तिरूपज्ञानपरत्वं सिद्धम् । एवं विशेषान्तरोपस्थापकेषु सत्सु तद्विशेषपर्यवसायित्वं न्याय्यमिति । तस्मात्सूत्रकारेण कण्ठोक्तां ज्ञानस्यासकृदावृत्तिरूपतामुपपाद्य तेनाभिप्रेतं श्रुत्यन्तरोपस्थापितं विशेषान्तरमाह "ध्यानं चे" ति अनेन ग्रन्थेनासकृदावृत्तेर्व्यवहितत्वशङ्कानिरासार्थं विजातीयप्रत्ययान्तराव्यवहितत्वमुक्तम् । अत्र विच्छिन्नाविच्छिन्नस्मृतिसंततिसाधारणो ध्यानशब्दश्चेत् ध्यानं चेत्यादिना विशेषान्तरे पर्यवसानमुक्तं भवति, ध्यानशब्दस्याविच्छिन्नस्मृतिसंतानसाधारणत्वे ध्यानशब्दो व्याख्यातो भवति, अविच्छिन्नस्मृतिसंततित्वे वचनमाह "ध्रुवे" ति स्मृतेर्ध्रुवत्वं नाम विजातीयप्रत्ययान्तराव्यवहितं संततित्वं, स्मृतिव्यक्तीनां क्षणिकत्वात् 'अपवर्गोपायत्वश्रवणाद्दि"-ति तत्रापवर्गोपायभूतवेदनस्यासकृदावृत्तिरुक्ता । अत्रापि तदुपायत्वप्रत्यभिज्ञानात्तस्या एवाविच्छिन्नस्मृतिसंततिरूपत्वं विवक्षितमिति भावः ।

सू० सा च स्मृतिर्दर्शनसमानाकारा "भिद्यते हृदयग्रन्थि-श्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर" इत्यनेनैकार्थ्यात् एवं च सति "आत्मा वाऽरे द्रष्टव्य" इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते।

टी० ॥ तस्या दर्शनरूपत्वमुच्यते "सा चे"ति न केवलं विषयैक्यतः साम्यम्, अपित्वापरोक्ष्येणापीत्याकार-शब्दस्य भावः। हृदयस्य-मनसो ग्रन्थयो-रागादयः। यद्वा मञ्चाः क्रोशन्तीतिवद्धृदयशब्दस्तत्स्थजीवपरः हृत्स्थानमयतीति व्युत्पत्तेर्वा, तस्य ग्रन्थिः-प्रकृतिसंबन्धः, हृदयशब्दोपलक्षितं वा शरीरं ग्रन्थिः। संशयशब्दो विपर्ययस्यापि प्रदर्शनार्थः। देहात्माभिमानादिरूपाऽविद्येत्यर्थः, कर्माणि पुण्यपापरूपाणि अविद्यासंचितकर्मकृतप्रकृतिसंबन्धनिवृत्तिर्दर्शनसमानाकारोपासनेनेत्यर्थः। "एवं च सती"ति उपायदशापन्नज्ञानस्य दर्शनरूपत्वे स्फुटार्थवाक्यान्तरसिद्धे सतीत्यर्थः। चः शब्दो-द्रष्टव्यशब्दस्य फलदशाभिप्रायत्वशङ्कानिवृत्त्यर्थः। दर्शनशब्दस्य ज्ञानसामान्यपरत्वसंभवेपि "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमि"ति श्रवणादीनां पृथगुक्तत्वाद्द्रष्टव्य इतिपदं साक्षात्काररूपत्वपरं,दृष्ट-शब्दश्च तत्तुल्यार्थः, स चोपायदशाभिप्रायः, तस्मिन् दृष्टे हृदयग्रन्थिर्भिद्यत इत्युक्तत्वात्। "येनाहं नामृती स्याम्" "अमृतत्वस्य तु नाशास्ति वित्तेन" "एतावदेवारे खल्वमृतत्व"-मिति पूर्वापरवाक्येषु फलस्य निर्दिष्टत्वात् प्रकरणान्तरोक्तस्य साक्षात्कारस्येहापि वक्तुमपेक्षिततत्वादपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च।

टी० ॥ ननु ध्रुवानुस्मृतेरेव दर्शनरूपत्वविधिर्युक्तः, ध्रुवानुस्मृतिदर्शनयोर्भिन्नप्रकरणाम्नातयोर्दहरशाण्डिल्यादिवेद[1]नानामिव परस्परानपेक्षोपायत्वप्रतीतेः। नैवम्। "द्रष्टव्यो निदिध्यासितव्य" इत्येकवाक्यविहितत्वात्। नचात्रापि विद्याद्वयविधानं शङ्क्यं, रूपभेदाभावात्, तत एव वाक्यैकत्वे संभवति वाक्यभेदाश्रयणायोगात्, विद्यान्तराणामिव तयोर्वि-

१ अत्रत्यवेदनशब्दो विद्यार्थकः।

कल्पप्रसङ्गाच्च। तयोर्निरपेक्षोपायत्ववादिनो विकल्प इष्ट इति चेत् न, तस्याष्टदोषदुष्टस्य सति गत्यन्तरेऽभ्युपगन्तुमयुक्तत्वात्, दृश्यते हि व्रीहियवशास्त्रयोस्तस्याष्टदोषदुष्टत्वम् । व्रीह्यनुष्ठाने यवशास्त्रस्य प्रामाण्यत्यागः, अविद्यमानाप्रामाण्यकल्पनं, यवानुष्ठाने तस्य त्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यत्यागश्चेति यवशास्त्रे चत्वारो दोषाः, यवानुष्ठानवेलायामेव प्रथमप्रयोगस्वीकृतव्रीहिशास्त्रप्रामाण्यत्यागः, तदप्रामाण्यकल्पनं च तृतीय प्रयोगे व्रीहिषूपादीयमानेषु द्वितीयप्रयोगस्वीकृतव्रीहिशास्त्रप्रामाण्यत्यागस्त्यक्तप्रामाण्यस्वीकारश्चेति व्रीहिशास्त्रे चत्वारो दोषाः, इहापि यथासंभवं दोषप्राप्तिः । यद्वा प्रतिपत्तिबाधोऽनुष्ठानबाधोऽपूर्वबाधः फलबाधश्चेति । एकैकशिरसि[1] दोषचतुष्टयादष्टदोषदुष्टत्वम् । अतो गत्यन्तरे सति विकल्पायोगाच्च न ध्रुवानुस्मृतिदर्शनयोः पृथगुपायत्वम् । नापि समुच्चयः । च-शब्दाश्रवणात् दर्शपूर्णमासयोरिव द्वन्द्व[2]निर्देशाभावाच्च परमात्मनोतीन्द्रियत्वात्तत्साक्षात्कारस्य चक्षुषा शब्दश्रवणस्येव प्रक्रान्तयोगं प्रत्यशक्यविधानत्वाच्च शब्दविषययोः स्मरणचाक्षुषज्ञानयोरिव समुच्चयोनुपपन्नः ।

ननु परमात्मनो योगपरिशुद्धमनोग्राह्यत्वाच्च दर्शनस्य चक्षुषा शब्दज्ञानतुल्यतेति तद्दर्शनोपायभूतव्यापारस्य विधेयत्वोपपत्तेः समुच्चयसंभव इति सत्यं, कस्तद्दर्शनोपायः? ततस्तु "तं पश्यते निष्कलं ध्यायमान" इति श्रुतेर्ध्यानमेवेति चेत् तर्हि द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिः स्यात् उभयोरपि दर्शनोपायध्यानविधिपरत्वाविशेषात् । द्रष्टव्य इति दर्शनोपाये विहिते, क उपाय? इत्यपेक्षायां निदिध्यासनं विधीयते, द्रष्टव्यपदाभावे निदिध्यासनस्य तदुपायत्वं न ज्ञायत इति तज्ज्ञापनार्थत्वान्न पुनरुक्तिरिति चेत् न, द्रष्टव्यपदश्रवणेपि दर्शनस्य ध्यानसाध्यत्वाप्रतीतेः, न हि दर्शनकामेनेति श्रूयते तथा सति हि स्वर्गयागयोरिव साध्यसाधनभावावगमः स्यात् ।

---

१ यवानुष्ठानव्रीह्यनुष्ठानपक्षयोरेकैकपक्ष इत्यर्थः ।

२ द्वन्द्वस्यैकक्रियान्वयित्वलक्षणसाहित्ये साधुत्वेन द्वन्द्वनिर्देशमहिम्ना तत्र समुच्चयोऽबोध्यत इति भावः ।

न च ध्यानं प्रति श्रवणमननयोरिव दर्शनं प्रति ध्यानस्य दृष्टकिंचित्कारः, अतो मानान्तरेण तयोः साध्यसाधनभावावगम इति वैयर्थ्यम् किंच ध्यानसाध्यं दर्शनं चेत् ध्यानदर्शनयोः समुच्चयश्च न संभवति दर्शनं प्रति समुच्चये, दर्शनस्य दर्शनं साधनमित्यात्माश्रयप्रसङ्गात् ।

न च मोक्षं प्रति समुच्चयसंभवः, ध्यानस्य साध्यदर्शनव्यवहितस्य मोक्षं प्रति दर्शनेन सहाव्यवहितकिंचित्कारायोगात्, न हि यागनिष्पत्त्यर्थानां प्रोक्षणावघातादीनामपूर्वनिष्पत्तौ यागेन सह समुच्चयः, यदि साक्षात्कारं प्रति ध्यानेन सहाव्यवहितकिंचित्कारोपपत्तये दर्शनसमानाकारं ज्ञानान्तरं विधेयमित्युच्येत तदयुक्तम् । स्वर्गं प्रति ज्योतिष्टोमस्येव निदिध्यासनस्य स्वसाध्यं प्रति निरपेक्षोपायताप्रतीतिस्वारस्यभङ्गप्रसङ्गात् । न हि "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति वाक्यप्रतिपन्नं ज्योतिष्टोमस्य स्वर्गसाधनत्वं कर्मान्तरसापेक्षमवगम्यते । नचात्र च-शब्दो द्वन्द्वसमासो वा अतो दर्शनसमानाकारतारूपविशेषणस्य किं विशेष्यमि ? त्याकाङ्क्षायां विशेष्यान्तरं च न दृश्यते निदिध्यासनं च सन्निहितम्, अतस्तदेव दर्शनसमानाकारतया विधित्सितमिति युक्तमभ्युपगन्तुम् । ततश्च वाक्यभेदोऽपि न स्यात्, निदिध्यासनस्य निरपेक्षोपायताप्रतीतिस्वारस्यं च न बाध्येत

ननु विशिष्टविध्याश्रयणं चेदुपदेशैकगम्यार्थश्रवणशुभाश्रयमननदर्शनरूपताविशिष्टनिदिध्यासनविधिः किन्न स्यात् ? । नैवम् । चतुर्ष्वंशेषु तात्पर्यकल्पनादपि द्वयोस्तत्कल्पनस्य लघुत्वात्, लघुपक्षसंभवे गुरुपक्षाश्रयणायोगाच्च । नचास्मिन्वाक्ये विधानाभावादौपदेशिकार्थाधिगमालम्बनसंशीलनयोरसिद्धिः शङ्कनीया, "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनि"रित्यनन्यथासिद्धवाक्यान्तरसिद्धत्वात् तद्धि निरूपयिष्यते "सह कार्यन्तरविधि"रिति सूत्रेण, तस्माद्दर्शनसमानाकारत्वगुणविशिष्टनिदिध्यासनविधिः । नन्वेवमपि न सर्वोपासनानां दर्शनसमानाकारनिदिध्यासनरूपतासिद्धिः "द्रष्टव्यो निदिध्यासितव्य" इति वाक्यस्य मैत्रेयीब्राह्मणस्थत्वात्, अतस्तत्र प्रतिपाद्यस्यैवोपासनविशेषस्य तादृग्रूपता प्रतिपाद्या स्यात् । नैवम् । "आत्मनि

खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमि"ति तत्रत्येनैव वाक्येन जगत्कारणविषयसर्वोपासनानां दर्शनसमानाकारनिदिध्यासनरूपतावगमात्, नहीदं वाक्यं विद्याविशेषविधायकम्, कारणज्ञानेन सर्वज्ञातताप्रतिज्ञापरत्वात् कारणमेव सर्वविद्योपास्यम् । कश्च ध्येय? इत्युपक्रम्य "कारणं तु ध्येय" इति कारणस्यैव ध्येयत्वविधानात्कारणविषयं चोपासनमत्र दर्शनसमाकारनिदिध्यासनरूपमवगम्यते। अस्मिन्वाक्ये विज्ञात-शब्दो हि निदिध्यासनपरः "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "दृष्टे श्रुते मते विज्ञात" इति स्थानप्रमाणात् । अतोस्य वाक्यस्य सर्वविद्यासाधारणाकारणमात्रविषयत्वात् जगत्कारणविषयमुपासनं चेद्दर्शनसमानाकारनिदिध्यासनरूपमित्यवगम्यते। किंच नानाविद्यानां विकल्पस्य वक्ष्यमाणत्वात् गुरुपक्षविषयशास्त्रवैयर्थ्यप्रसङ्गेन लघुगुरुपक्षविकल्पायोगाद्, वस्तुसामर्थ्यस्य प्रकरणाद् बलीयस्तया च ध्रुवानुस्मृतिरूपत्वं दर्शनरूपत्वं वक्ष्यमाणं भक्तिरूपत्वं च सर्वविद्यासाधारणाकारं भवितुमर्हति ॥

सू० भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता ।

टी० ॥ नन्विन्द्रियजन्मनोऽनुभवस्य ह्यपरोक्षत्वं तत्कथं स्मृतेः संभवती? त्यत्राह "भवति च"ति भावना-वासना, दर्शनरूपता-दर्शनसमानाकारता वृत्ते वृत्ते च पश्यामीत्यादिष्वपि दर्शनसमानाकारत्वं स्मृतेश्च दृष्टमिति भावः, तच्च विशदतराभासरूपत्वं, नचैतदनुभवासाधारणं स्मृतेरपि तत्सद्भावस्य प्रा[1]माणिकत्वात् ।

ननु दर्शनसमानाकारत्वविधानमयुक्तं, दर्शनवाचिशब्देन तत्समानाकारोपस्थापनस्यामुख्यत्वात् "न विधौ परः शब्दार्थ" इति न्यायविद इति चेत्, "नचैतैरेव दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यत्र दर्शपूर्णमासशब्दयोर्लक्षणया श्येनादिवाक्येषु श्येनादिशब्दानां गौण्या वृत्त्या कर्मनामधेयत्वाभ्युपगमात् "अर्द्धमन्तर्वेदि मिनुयादर्द्धं बहिर्वेदी"त्यत्र मध्यदेशलक्षणाया अङ्गीकृतत्वाच्च विशदतरत्वस्य फलरूपत्वादपुरुषतन्त्रस्य कथं विधान? मिति चेन्न, आज्यावेक्षणस्येव विधानोपपत्तेः । तत्राज्यसाक्षात्कारहेतु

[1] तत्संभवस्य प्रामाणिकत्वादिति ख० पु० पाठः ॥

भूतव्यापारविषयो विधिरिति चेत् इहापि विशदतरत्वावहस्मृतिसंतति-
विषयमनोव्यापारविधिरित्युपपन्नम् ॥

सू० वाक्यकारेणैतत्सर्वं प्रपञ्चितम्। "वेदनमुपासनं स्यात् तद्वि-
षये श्रवणादिति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं
वेदनमुपासनमि"त्युक्तं, "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृत-
त्वात्प्रयाजादिवदि"ति" पूर्वपक्षं कृत्वा "सिद्धं तूपासनशब्दा-
दि"ति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्।
उपासनं स्याद् ध्रुवानुस्मृतिदर्शनान्निर्वचनाच्चेति तस्यैव वे-
दनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णि-
तम् ॥

टी० ॥ अथ सूत्रकाराभिप्रायविदां वचनं दर्शयति "वाक्यकारे-
णे"ति "एतत्सर्व"मिति सूत्रकारेण कण्ठोक्तमभिप्रेतं चेत्यर्थः "प्रपञ्चित"-
मिति पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः प्रपञ्चनं च वेदनमुपासनं स्यादित्या-
दिवाक्यचतुष्टयेन वाक्यमेकैकं व्याचष्टे "सर्वासूपनिषत्स्वि"ति न केवलं
छान्दोग्य इत्यर्थः, "मोक्षसाधनतया विहितं वेदन"मिति - घटादिज्ञानव्या-
वृत्तिः। "विहित"मित्यनुदितश्रवणादिव्यावृत्तिः। अस्यार्थस्य पूर्वपक्षसिद्धा-
न्तरूपेण स्फुटीकरणार्थं सकृत्प्रत्ययं कुर्यादिति वाक्यश्रवणेन वेदनमुपासनं
स्यादिति वाक्यस्य पूर्वपक्षपरत्वशङ्काव्यावृत्त्यर्थं च सकृदित्यादिकं व्याचष्टे
"सकृदि"ति सकृदित्यादिवाक्यमेव पूर्वपक्षपरं न तु वेदनमुपासनं स्यादिति
वाक्यम् अनन्तरमेवोपासनरूपत्वस्य सिद्धान्तित्वादिति भावः। तथा सिद्धा-
न्तितत्वं दर्शयति "सिद्धं त्वि"ति। सिद्धन्तु सिद्धान्तस्त्वित्यर्थः। यद्वा वेद-
नमुपासनं सिद्धमित्यर्थः। उपासनशब्दादित्येतद्व्याचष्टे "वेदनमसकृदावृ-
त्त"मिति अस्याविच्छिन्नस्मृतिसंतानरूपत्वं सूत्रकाराभिप्रेतं वाक्यकारक-
ण्ठोक्तं दर्शयति "उपासनं स्यादि"ति दर्शनात्—लोके दर्शनात्। निर्वचना-
त्—श्रुतिवाक्यात् "तस्यैवे"ति मोक्षसाधनतया विहितस्येत्यर्थः। "उपासन-

रूपस्ये' ति हेतुगर्भम् । उपासनरूपत्वात्—उपासनशब्दवाच्यत्वादसकृदावृत्तस्येत्यर्थः । असकृदावृत्तं ज्ञानं ह्युपासनम्, एवमविच्छिन्नस्मृतिसंततिरूपत्वमुपपादितम् । सूत्रकारकण्ठोक्तमसकृदावृत्तिरूपत्वं तदभिप्रेतं ध्रुवानुस्मृतत्वं च वदतो वाक्यकारस्यायं भावः ॥

सू० सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता, दर्शनरूपता च प्रत्यक्षतापत्तिः, एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामि" ति अनेन केवलश्रवणमननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा "यमेवैष आत्मा वृणुते तेनैव लभ्य" इत्युक्तम् ॥

टी० ॥ एतत्तुल्यन्यायतया विशेषान्तरोपस्थापकवाक्ये सति वेदनादिशब्दास्तत्पर्यन्ताः स्युरिति, तस्मात् पूर्वोक्तं दर्शनाकारत्वमपि वाक्यकाराभिप्रेतमित्यभिप्रयन्नाह "सेयमि" ति सेयमसकृदावृत्तिरूपा, ध्रुवानुस्मृतिरूपा चेत्यर्थः । दर्शनशब्दस्यार्थदर्शी तत्त्वदर्शीत्यादिप्रयोगात् परोक्षापरोक्षसाधारण्यमाशङ्क्याह "दर्शनरूपता च" "प्रत्यक्षतापत्तिरि" ति प्रत्यक्षसमानाकारतापत्तिरित्यर्थः । "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञातइदं सर्वं विदितम्" "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रवणादिपरोक्षज्ञानपूर्वसूत्रेष्वपि पृथङ्निर्देशादिति भावः । सूत्रकारवाक्यकारयोः कतिपयविशेषं वदतोः सति विशेषान्तरोपस्थापके तत्पर्यवसायित्वस्याभिप्रेतत्वाच्छ्रुत्यन्तरसिद्धं विशेषान्तरमस्तीत्याह "एवमि" ति । अनेन श्रवणादीनां मुक्त्युपायत्वनिषेधाच्चोपासनस्य मोक्षोपायत्वमिति शङ्काव्युदासश्च भवति । एवम्—उक्तेन प्रकारेण सामान्यविशेषन्यायेन प्रत्यक्षतापन्नामित्यर्थः । "अपवर्गसाधनभूतामि" ति । प्रतीकोपासनव्यवच्छेदः । "नायमात्मे" ति प्रवचन—शब्दो मननं लक्षयति मननफलत्वात् प्रवचनस्य,

मननस्याचार्यप्रवचनफलत्वाद्वा प्रोच्यतेनेनेति करणव्युत्पत्त्या वा प्रवचनं मननं मेधा निदिध्यासनं परिशेषात्, अस्मिन्वाक्ये श्रवणादीनामनुपायत्त्वं प्रतीतं ध्रुवानुस्मृतिविशेषणत्वेन न किंचित्प्रतिपन्नम् अतस्तद्व्याचष्टे "अनेने"ति केवलश्रवणमनननिदिध्यासनानां वक्ष्यमाणविशेषणविरहितानामपीत्यर्थः यथा "न पृथिव्यामग्निश्चेतव्य" इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनं निषिध्यते न तु पृथिवीमात्रे तद्वदिति भावः । विवक्षितविशेषणं वाक्यतात्पर्यनिरूपणेन दर्शयिष्यन्वाक्यस्यार्थान्वयं दर्शयति "यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्त"मिति ॥

सू० प्रियतम एव हि वरणीयो भवति, यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति ॥

टी० ॥ वरणीयेन लभ्योऽस्तु ततः कथं ध्रुवानुस्मृतेर्विशेषितत्त्व? मिति शङ्कायां तद्दर्शयितुं लोकसिद्धप्रतीतिमाह "प्रियतम एव ही"ति प्रीतिविषयमात्रस्य न वरणीयत्वं किन्तु स्वयमुपस्थितस्य स्वीकार एव, अतस्तद्व्यावृत्त्यर्थं "प्रियतम" इत्युक्तम्। ततः किमित्यत्राह "यस्ये"ति यस्योपासकस्यायं परमात्मा निरतिशयप्रीतिविषयः स एवास्य परमात्मनो निरतिशयप्रीतिविषयो भवति, चेतनत्वे सति भगवता वरणीयत्वं भगवति निरतिशयप्रीतिमत एव भवति । यद्वा स्वतःप्रियत्वं स्वस्मिन् प्रीतिमत एव पुत्रक्षेत्रादिषु भगवतः प्रीतिः स्वस्मिन् प्रीतिमत्पुरुषवरणार्था पत्रपुष्पफलादिषु तत्संबन्धनिबन्धना । "स एवे"त्येवकारेण केवलश्रवणादिव्यावृत्तिः ॥

सू० यथायं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तं "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय" इति च ॥

टी० ॥ भगवति प्रीतिमति भगवत्प्रीतिविषयत्वमिति कथमिदमवगम्यत? इत्यपेक्षायामत्र प्रमाणतया स्मृतिवचनमर्थोपन्यासपूर्वकं

दर्शयन्वरणप्रकारमपि विवृणोति "यथे"ति"अयं"—भगवति निरतिशयप्रीतिमान्, प्रियतमः—निरतिशयभगवत्प्रीतिविषयो भवन्नित्यर्थः, ददामि बुद्धियोगमित्यस्यार्थविवक्षया "स्वमेव भगवान् प्रयतत" इत्युक्तम्। अनेन वरणप्रकारो दर्शितः। भगवतैवोक्तमित्येवकारेण भगवदाग्रतिशयः सूचितः "तेषामिति सततयुक्तानां—सततयोगं काङ्क्षमा[1]णानाम् "आशंसायां भूतवच्चे"ति कर्तरि क्तः प्रीतिपूर्वकं ददामीत्यन्वयः। अनेन परस्परविषयप्रीतिरुपास्योपासकयोर्दर्शिता सततयुक्तशब्दार्थस्फुटीकरणायाह "प्रियो ही"ति अत्यर्थम् अतिक्रान्ताभिधेयं प्रियत्वं वाचामगोचरमित्यर्थः, ध्रुवानुस्मृतिं विशिनष्टीति हि पूर्वमुक्तम्। अत्र यो भगवति प्रीतिमान् भवति तस्मिन्नुपासके भगवतः प्रीतिमत्त्वमुक्तम्। तत्कथं ध्रुवानुस्मृतेर्विशेषितत्वमित्यत आह॥ "अत" इति॥

मू० अतः साक्षात्काररूपा स्मृतिः, स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य स एव परमात्मना वरणीयो भवतीति तेनैव लभ्यते परमात्मेत्युक्तं भवति, एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते॥

टी० ॥ अतः—उक्तार्थस्य लोकस्मृतिभ्यां सिद्धत्वादित्यर्थः। यद्वा ध्रुवानुस्मृतिवचनाद्वरणीयस्य भगवति निरतिशयप्रीतिमत्त्ववचनाच्चेत्यर्थः साक्षात्काररूपा स्मृतिरित्यनेन पूर्वोक्ताकारविशिष्टाया विशेषान्तरमिति दर्शितम्। "स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिये"ति "अर्थेनैव विशेषो हि निराकारतया धियामि"ति भावः। स्वयमप्यर्थप्रिया—अनुभूयमानोऽनुभव इतिवदयं निर्देश औपचारिकः। अत्यर्थप्रतिरूपेत्यर्थः। यद्वा अत्यर्थप्रिया अत्यर्थानुकूलरूपा, स्मर्यमाणस्य भगवद्विषयस्य निरुपाधिकनिरवधिकानुकूलत्वेन तद्विषयानुस्मृतिरपि निरतिशयानुकूला भवति। यद्वा ध्रुवानुस्मृतिः स्वयमत्यन्तानुकूलत्वान्मुक्त्यवस्थायामपि प्रीतिरूपज्ञानेन प्रतिसंधीयत इति, प्रिया। अत एव हि "या प्रीतिरविवेकाना"मित्यादिना सा प्रार्थ्यते। प्रीतिरूपध्रुवानुस्मृतेरपवर्गोपायत्वमुक्तम्, अन्यत्र भक्तेरुपायत्वमुच्यते

१ काङ्क्षतेः परस्मैपदित्वेन काङ्क्षमाणानामिति शानच् परं चिन्तनीयः।

कथमनयोरैकार्थ्यमित्यत्राह । "एवंरूपे"ति । यद्वा "शेमुषी भक्तिरूपे"ति भक्तिरूपज्ञानस्योपायत्वं प्रागुक्तम्, कथमिदानीं प्रीतिरूपध्रुवानुस्मृतेरुपायत्वं प्रतिपाद्यते ? इत्यत्राह । "एवंरूपे"ति एवंरूपा–साक्षात्कारप्रीतिरूपत्वपर्यन्ता ध्रुवानुस्मृतिरेव भक्तिशब्दवाच्येत्यर्थः ।

**सू० उपासनपर्यायत्वाद्भक्तिशब्दस्य, अतएव श्रुतिस्मृतिभिरेवमभिधीयते ॥**

कुत इत्य? त्राह ।"उपासने"ति ।"उपासनपर्यायत्वा"दिति। उपासनादिशब्दानां भक्तिशब्दस्य चैकार्थवृत्तित्वं विवक्षितम् । न तु घटकुम्भशब्दयोरिव पर्यायत्वम्। एकार्थवृत्तित्वं च "सेवा भक्तिरुपास्ति"रिति नैघण्टुकोक्तेरेव गम्यते, "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते । भज इत्येष धातुर्वै सेवायां परिकीर्त्तितः। तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी"त्यादि चानुसंधेयम् ॥ यद्यपि साक्षात्काररूपत्वभक्तिरूपत्वादिपराणां वाक्यानां विद्याविशेषविषयप्रकरणगृहीतत्वेपि सर्वोपासनासाधारणत्वं लघुगुरुयत्नविकल्पानुपपत्तेः प्राप्तं, तथापि प्रपदेन तु लघुगुरुयत्नविकल्पानुपपत्तिरूपन्यायो वचनबलप्रतिक्षिप्तः । न हि वचनविरोधे न्यायः प्रभवति, वचनविरोधाभावादुपासनेषु तस्य प्रवृत्तिः वेदान्तेषूपासनपराणां वाक्यानामैक्यार्थ्यसिद्ध्यर्थं भक्तिदशापन्नस्यैवोपासनस्यापवर्गोपायवेदनत्वमुक्तं, स्मृतिवचनप्रदर्शनं च श्रुत्यर्थवैशद्याय कृतम्। इदानीं तु श्रुतिस्मृत्योरैकार्थ्येन मुक्त्युपायवेदनस्य भक्तिरूपोपासनत्वमुपपाद्यते । "अत एवे"ति । अपवर्गोपायवेदनस्य भक्तिरूपापन्नत्वादित्यर्थः ।

**सू० "तमेव विदित्वातिमृत्युमेति" "तमेवं विद्वानमृत इह भवति" "नान्यः पन्था अयनाय विद्यते" नाहं वेदैर्न तपसा न दानेन नचेज्यया शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा भक्त्या त्वनन्यया शक्य अहमेवंविधोर्जुन? ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप? पुरुषः स परः पार्थ? भक्त्या लभ्यस्त्वनन्यया" इति ॥**

टी० ॥ "तमेव विदित्वे"ति वाक्यं श्वेताश्वतरोपनिषदि श्रूयते तत्र "तस्मात्सर्वगतः शिव" इति शब्दश्रवणाच्छिवस्य परमात्मत्वविषयभ्रमः कस्यचिन्मन्दधियः स्यादिति तन्निवृत्त्यर्थं "वेदाहमेतं पुरुषं महान्तम्" "महान् प्रभुर्वै पुरुषः स त्वस्यैव प्रवर्तक इत्युपक्रमोपसंहारयोरवगतपरमपुरुषपरैव सोपनिषदिति पुरुषसूक्तैकार्थ्यं दर्शयितुं तमेवं विद्वानिति वाक्यमुपात्तम्, तमेवं विद्वानिति वाक्येन नान्यः पन्था इति परमपुरुषवेदनव्यतिरिक्तोपायनिषेधः कृतः, नाहं वेदैरित्यादिना तद्भक्तिव्यतिरिक्तोपायनिषेधः कृतः, उभयोरप्युपबृंहणीयवचनयोः प्रमाणतमत्वेन सर्वाविगीतयोरैकार्थ्ये वेदनादिशब्दानां भक्तिपर्यन्तत्वे सिद्ध्यतीति भावः। उपायान्तरनिषेधकण्ठोक्ताज्ञानदर्शनप्राप्तीनां भक्तिसाध्यत्वकण्ठोक्त्या च नाहं वेदैरिति वचनमुपात्तम्।

ननु "भक्त्या मामभिजानाति" "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मिति भक्तिजन्यज्ञानस्यैवाव्यवहितोपायत्वमवगम्यते न तु भक्तेरिति शङ्का च नाहं वेदैरित्यनेन परिहृता भवति। अत्र ज्ञानदर्शनयोरिव प्राप्तेरपि भक्तिसाध्यत्वावगमात् भक्त्या प्रवेष्टुं च शक्य इतीह्यन्वयः भक्त्या मामिति वचनेपि ततो मां विशत इति तच्छब्दपरामृष्टाया भक्तेरेव प्राप्त्युपायत्वमवगम्यते। तत इति भक्तिपरामर्शाभावे तदनन्तरमित्यनेन पौनरुक्त्यप्रसङ्गात् अतश्च भक्तिरेवाव्यवहितोपायः "पुरुषः स परः पार्थे"त्यत्र च भक्त्या लभ्य इति भक्तेः प्राप्तिसाधनत्वं स्वरसतोवगम्यते। अनेन पुरुषशब्दप्रत्यभिज्ञापितपुरुषसूक्तप्रतिपाद्यवस्त्वैक्यवत् तत्प्रतिपत्त्युपायैक्यं न्याय्यमिति सूचितम् ॥

सू० एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति- "यज्ञादिश्रुतेरश्ववदि"त्यभिधास्यते ॥

टी० ॥ अस्त्वेवं वेदनस्य भक्तिरूपोपासनत्वसिद्धिः, ततः प्रकृतस्य कर्मापेक्षित्वस्य किमायात?मित्यत्राह "एवमि"ति एवंरूपाया आप्रयाणमितिरूपत्वविशेषणविशिष्टायाः। वाक्यकारसूत्रकाराभ्यामभिप्रेताः कण्ठोक्ताश्च मोक्षोपायज्ञानावस्थाविशेषाः कर्मसाध्या इति भावः। "ध्रुवा-

नुस्मृतेः साधनानी"ति । यथा असिना जिघांसतीत्यत्रासेर्हननसाधनत्वं न त्विच्छासाधनत्वं यथा यज्ञेन विविदिषन्तीत्यत्रापि विद्यासाधनत्वमेवोक्तं न तु तदिच्छासाधनत्वं यज्ञादेर्वेदनेच्छासाधनत्वेन विनियोगायोगादिति-भावः । तथा हि । सर्वेषां पुरुषाणामवान्तरसाध्योपाये प्रवृत्तिः परमसाध्येच्छया विना नोपपद्यते । यथा यागाद्युपायभूतद्रव्यार्जनादौ प्रवृत्तिः, यागादिसाध्यापूर्वादिविषयेच्छया विना नोपपद्यते । तथेच्छा-सिद्ध्यर्थमनुष्ठानमिच्छासंपाद्यवेदनेच्छया विना नोपपद्यते । अतो वेदने-च्छायां जातायां वेदनोपायभूतेच्छासिद्ध्यर्थानुष्ठानं तस्यां जातायां च तदर्थमनुष्ठानमपेक्षितमिति तदनुष्ठानविधिवैयर्थ्यं स्यात् । किंच । स्वसि-द्धिसापेक्षा स्वसिद्धिरित्यात्माश्रयः । वेदनेच्छया इच्छासिद्ध्यर्थकर्मानुष्ठानम् इच्छासिद्ध्यर्थकर्मानुष्ठानाद्वेदनेच्छासिद्धिरित्यन्योन्याश्रयणं वा । अतोविवि-दिषासाधनत्वं कर्मणो न युक्तम् । नन्विच्छार्थे कर्मानुष्ठानस्यात्माश्रयादि-ग्रस्तत्वे क्वचिदपीच्छा न संभवेत् । इच्छाहेतुभूतकर्मानुष्ठानायोगात् । न चे-च्छायाविषयवैलक्षण्यज्ञानमात्राधीनत्वं वैलक्षण्ये ज्ञातेपि कस्यचिदिच्छानु-त्पत्तिदर्शनात् । अतः कस्यचिदिच्छोत्पत्तेः कर्महेतुकत्वमाश्रयणीयं, तच्च तवानुपपन्नं, नैवं भोगादृष्टोद्बोधितपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञाना-दिच्छोत्पत्तेः, न चाज्ञातसुकृतवशाद्धर्मरुचिवद्यज्ञादिना वेदनेच्छासिद्धि-रिति वाच्यम् । बह्वर्थव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतरूपत्वासं-भवात् यज्ञेन विविदिषन्तीति वाक्यस्य त्वर्थश्चिन्त्यते अतो बुद्धिपूर्वकमेव-यज्ञाद्यनुष्ठानं तत्र मोक्षोपायवेदनेच्छाया अभावे बह्वर्थव्ययायाससाध्यक-र्मणां फलान्तराभिसंधिपूर्वकत्वनियमान्न विविदिषां साधयति फलान्तराभि-संधिविधुरं तु यज्ञादिकं वेदनेच्छया विना नोपपद्यते प्रयोजनानुद्देशेन प्रेक्षा-वतः प्रवृत्त्ययोगात् प्रकृष्टप्रयोजनतदुपायेच्छाविरहे क्षुद्रप्रयोजनपरित्या-गायोगाच्च अतोवान्तरसाध्येच्छासिद्ध्यर्थमनुष्ठानं परमसाध्यवेदनेच्छया विना नोपपद्यत इति स्वसिद्ध्यर्थकर्मानुष्ठानस्य स्वसिद्धिसापेक्षत्वादात्माश्र-यादि स्यादेव "अभिधास्यत" इति अत्रोपपादयिष्याम इत्यर्थः ॥

मू० यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याप्रयाणादनुवर्त्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्म्माणि यावज्जीवमनुष्ठेयानि ॥

टी० ॥ विविदिषासाधनत्वे यज्ञादेरात्माश्रयादिदोषाभावमभ्युपगम्याह "यद्यपी"ति तस्यैव, इच्छाविषयभूतस्य "ध्यानरूपस्ये"ति वाक्यार्थज्ञानव्युदासः, ध्यानस्याप्येकदिनानुष्ठेयत्वव्युदासार्थमाह 'अहरहरि"ति अहरहरनुष्ठानफलमाह "अभ्यासे"ति अहरहरनुष्ठानेपि मासर्त्तुसंवत्सराद्यवधित्वव्यावृत्त्यर्थमाह "आप्रयाणादि"ति आप्रयाणादनुवर्त्तमानत्वेपि एकद्वित्रिदिनान्तरितव्यावृत्त्यर्थमहरहरनुष्ठीयमानस्येत्युक्तम्, तत्रापि स्मृतिविच्छेदव्युदासार्थं ध्यानरूपस्येत्युक्तम् । तदुत्पत्तये—विविदिषोत्पत्तये वेदनस्याव्यवहितप्रकृतत्वेप्यर्थवशात्तच्छब्दो विविदिषापरः, विविदिषासाधनत्वं ह्यभ्युपगम्योच्यते ॥

मू० वक्ष्यति च "आप्रयाणात्तत्रापि हि दृष्टम्" अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्सहकारित्वेन चेत्यादिषु वाक्यकारश्च ध्रुवानुस्मृते र्विवेकादिभ्य एव निष्पत्तिमाह ॥

टी० ॥ आप्रयाणादहरहरुपासनानुवृत्तौ यावज्जीवं कर्मणोपेक्षितत्वे च किं प्रमाणमित्यत्राह। "वक्ष्यतिचे"ति चः "अङ्गानिवृ"त्तौ । सूत्रसंदर्शनेन तद्विषयभूतश्रुतिवाक्यमपि दर्शितं भवतीत्यभिप्रायेणोपासनानुवृत्तिपरं सूत्रं दर्शितम् । आप्रयाणादिति । "स खल्वेवं वर्त्तयन्यावदायुषमि"ति श्रुतिः। यावच्छब्दस्य साकल्यार्थत्वात्। अहरहरनुष्ठानसिद्धिः, तावत्कर्मापेक्षायामाह। "अग्निहोत्रे"ति। आश्रमधर्माणामाश्रमशेषत्वेपि विद्याङ्गत्वमप्यस्तीत्याह

"सहकारित्वेन चे"ति इत्यादिषु सूत्रेषु इममर्थं वक्ष्यतीत्यर्थः । उक्तं कर्मणो-विद्याङ्गत्वमुपासनस्य शमाद्यङ्गत्वं च विरोधान्नोपपद्यत इत्याशङ्क्य विरोधं परिहरिष्यन् तद्विषयश्रुतिवाक्यप्रदर्शनेनाप्रमाणतां च निराचिकीर्षुराह "वाक्ये"ति सूत्रकाराभिप्रायज्ञैरप्येवमुक्तमिति भावः । ध्रुवानुस्मृति-शब्देन तत्र लब्धिरित्यत्र तच्छब्दो व्याख्यातः । विवेकादिभ्य एव न तु केवलकर्मणा केवलशमादिना चेत्यर्थः, वाक्यकारग्रन्थ उपादीयते ॥

सू० तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्चेति । विवेकादीनां स्वरूपं चाह ॥

टी० ॥ "तल्लब्धि"रिति ॥ उपासनं स्याद् ध्रुवानुस्मृतिरिति हि प्रकृतम् । अतो ध्रुवानुस्मृतिलब्धिरित्यर्थः । विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्य इति द्वन्द्वसमासः स चेतरेतरयोगार्थः एष्वन्यतमेन तल्लब्धेर्दुष्करत्वात् समुच्चये संभवति पाक्षिकबाधगर्भविकल्पो ह्ययुक्तः, तस्याष्टदोषदुष्टत्वात्, समुच्चयस्य चात्र संभवात् एवं विवेकादिविधायिनां वाक्यानां समुच्चये तात्पर्यमिति दर्शयितुमितरेतरयोगद्वन्द्वेन वाक्यकारनिर्देशः । ननु समुच्चयादर्थान्तरमितरेतरयोगः, तत्कथमितरेतरयोगद्वन्द्वेन समुच्चयलाभः? । उच्यते । अन्वाचयादिसहपठितात् समुच्चयाद् विकल्पप्रतिसंबन्धिसमुच्चयोऽर्थान्तरम् । एकस्मिन् कार्ये मिथोनिरपेक्षसाधनानामन्वयोऽन्वाचयसहपठितः । विकल्पसमभिव्याहृतसमुच्चयस्त्वेकस्मिन् कार्ये मिथः सापेक्षाणामन्वयः स एव चेतरेतरयोग इत्यविरोध इति निवृत्तिरूपशमादेः, प्रवृत्तिरूपयज्ञादेश्च विरोधान्न समुच्चय इति चेन्न भिन्नविषयत्वेन विरोधाभावात्, अविहिताप्रतिषिद्धकाम्यविषया हि शमादयः संभवात् उपपन्नत्वात्, निर्वचनाच्च श्रुतिवचनात् प्रमाणोपपत्तिभ्यामित्यर्थः विवेकादयः किं रूपाः? कथं वा शमादेः कर्मणश्चाविरोधः? इत्यत्राह "विवेकादीनां स्वरूपं चाहे"ति न केवलं परिगणनामात्रं तत्स्वरूपं च वाक्यकार एवाहेत्यर्थः ॥

सू० जात्याश्रयनिमित्तदुष्टादन्नात्कायशुद्धिर्विवेक इत्यत्र निर्व-

चनम् "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रिति । विमोकः—कामानभिष्वङ्ग इति "शान्त उपासीते"ति निर्वचनम् आरम्बणसंशीलनं—पुनःपुनरभ्यासः, निर्वचनं च स्मार्त्तमुदाहृतं भाष्य[1]कारेण, "सदा तद्भावभावित" इति ॥

टी० ॥ प्रथमं विवेकस्वरूपविषयवाक्यमुदाहरति "जात्याश्रये"ति आहारविषयविवेचनं विवेक-शब्देन विवक्षितं भवति, दुष्टाहारात् सात्त्विकाहाराणां विवेचनं विवेकः, जातिदुष्टाः कलञ्जगृञ्जनादयः । आश्रयो—द्रव्यस्वामिपुरुषः,अभिशस्तपतितचण्डालादिद्रव्यमाश्रयदुष्टम् । उच्छिष्टकेशाद्युपहतं निमित्तदुष्टम् । एतत्त्रिविधदोषरहिताहारविवेचनफलभूतकायशुद्धौ विवेकशब्द उपचरितः । यद्वा विविक्ताहारसेवया राजसतामसाप्यायितदेहात् स्वदेहस्य विवेचनं विवेकः । अशुद्धेभ्यो विवेचनं हि शुद्धिरिति शब्दो भाष्यकारीयः । अत्र निर्वचनमिति च भाष्यग्रन्थः । निर्वचनं निष्कृष्टं वचनम् अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनमित्यर्थः । आहारशुद्धावित्यादिर्निर्वचनं, विमोकः—कामानभिष्वङ्गः—विषयमभुक्त्वा स्यातुंच शक्नोति येन स विकारोभिष्वङ्गः "कामात् क्रोधोऽभिजायत"इत्यादिवचनात् क्रोधाद्यभावश्चात्र फलितः—"शान्तउपासीते"ति निर्वचने शान्तशब्देन रागद्वेषाद्यभावो-विवक्षितः, आरम्बणम्—आलम्बनं शुभाश्रयः, तस्य संशीलनं कथमेतत्साधनं साध्यं हीदं "शुचौ देशे प्रतिष्ठाप्ये"त्याद्युक्तदेशकालविशेषाभ्यसनीया योगशब्दवाच्या ध्रुवानुस्मृतिर्हि साध्या, इदं तु योगकालकर्त्तव्यध्यानानुग्राहकं सदा संशीलनं "सदा तद्भावभावित" इति हि वक्ष्यति, सदा भगवत्संशीलनाभावे योगकालेपि कालान्तरसंशीलितं विषयान्तरं बुद्धिस्थं स्यात्, अतो न साध्याविशिष्टत्वम् आरम्बणसंशीलनस्य, निर्वचनं च स्मार्त्तमुदाहृतं भाष्यकारेणेत्यनेन पूर्वोपात्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायते । "अथ मुनि"रिति श्रौतनिर्वचनम् । तस्य न्यायोपन्याससापेक्षत्वेन "सहकार्यन्तरवि-

[1] अत्र भाष्यकारशब्देन द्रमिडाचार्योऽभिधित्सितो रामानुजाचार्याणाम् ।

धि"रित्यधिकरणे व्याख्येयत्वात्, स्मार्त्तनिर्वचनस्य च स्पष्टार्थत्वाच्च स्मार्त्तनिर्वचनमुदाहृतम् "तस्मात्सर्वेषु कालेषु मामनुस्मर" त्येवमन्तं वचनजातमिहाभिप्रेतम् ॥

मू० "पञ्चमहायज्ञानुष्ठानं शक्तितः क्रिये"ति निर्वचनं "क्रियावानेष ब्रह्मविदां वरिष्ठः" "तमेतं वेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेने"ति च सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानीति निर्वचनम् ॥

टी० ॥ 'पञ्चमहायज्ञे''ति शक्तितः, न हि शास्त्रमशक्यं विदधाति "क्रियावानेष''इति सन्निहितवाक्यम्। "ब्रह्मे''ति ब्रह्मविदां मध्ये वरिष्ठः, न हि ब्रह्मविविदिषूणामित्युक्तम्। क्रिया-शब्दार्थविशदीकरणायाह "तमेत''मिति सत्यं-भूतहितम्। आर्जवं-मनोवाक्कायानामैकरूप्यम्, दया-स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्। अहिंसा-करणत्रयेणापि परपीडानिवृत्तिः, । दानं-लोभराहित्यम् अभिध्या-परकीये स्वबुद्धिः । यद्वा निष्फलचिन्ता। अथवा पराकृतापराधचिन्ता[1] तद्राहित्यमनभिध्या ॥

मू० "सत्येन लभ्यस्तेषामेवैष विरजो ब्रह्मलोक"इत्यादि देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च, तज्जं दैन्यमभास्वरत्वं मनसोवसादस्तद्विपर्ययोऽनवसाद इति निर्वचनम् "नायमात्मा बलहीनेन लभ्य इति ॥

टी० ॥ "सत्येने''ति इत्यादीत्यादि-शब्देन आर्जवादिप्रतिपादकवाक्यजातं क्रोडीकृतम् "देशे''त्यादि अनवसादानुद्धर्षयोरवसादोद्धर्षविपर्ययरूपत्वादवसादोद्धर्षलक्षणमात्रमुक्तं वाक्यकारेण, तद्विपर्ययरूपोनजर्थोऽर्थात्सिध्यतीति वाक्यकाराभिप्रायः। शोकवस्तु-शोकनिमित्तवस्तु अतीतं पु-

१ परकृतापकारचिन्ता इति ख० पु० पा० ।

ऽमरणादि। आदि—शब्देन भयनिमित्तमागामि विवक्षितम् अतीतविषयो हि शोकः, आगामिविषयं च भयम् "अभास्वरत्वमि" ति दैन्यशब्दविवरणम् अभीष्टकार्यप्रवृत्त्यक्षमत्वरूपं दैन्यमित्युक्तं भवति "भास्वरत्वविरोधी" ति वा दैन्यविशेषणं, च-शब्दोभिन्नक्रमः तज्जं च—दैन्यजं चेत्यर्थः, बन्धुजनदैन्ये दृष्टे हि दैन्यं स्यात् देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृतिहेतुकं मनसो भास्वरत्वाभावरूपं भास्वरत्वविरोधि वा दैन्यं दैन्यजं च दैन्यं मनसोवसाद इत्यर्थः। यद्वा भिन्नवाक्यतया योजनीयं देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृतिजनितं मनसो भास्वरत्वमवसादः। किमुक्तं भवती? त्याह "तज्जं दैन्य" मिति तच्चाभास्वरत्वं, तज्जम्—उक्तहेतुजं दैन्यमिति व्याख्येयव्याख्यानरूपं वाक्यद्वयमिति "तद्विपर्यय" इत्यादिभाष्यग्रन्थः। बलहीनेन-मनोबलहीनेन॥

सू० तद्विपर्ययजा तुष्टिरुद्धर्षस्तद्विपर्ययोऽनुद्धर्ष इति, अतिसंतोषश्च विरोधीत्यर्थः, निर्वचनमपि "शान्तोदान्त" इति, एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति, तथाच श्रुत्यन्तरम् "विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत" इति।

टी० ॥ तद्विपर्ययजा—देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजा तुष्टिरुद्धर्ष इत्येतावदेव वाक्यं तद्विपर्ययोऽनुद्धर्ष इत्यर्थसिद्धं कथं स्वाध्यायशौचसंतोषतपांसि नियतात्मवानित्यपेक्षितस्य त्याज्यत्व? मित्यत्राह "अतिसंतोषश्च विरोधी इत्यर्थः" इति च। न केवलं संतोष एव विरोधी अतिसंतोषश्च विरोधीति वार्थः, यथान्यविषयेष्वेव प्रवृत्तिः स्यात्तथा संतोषोऽतितोषः स त्याज्य इत्युक्तं भवति। निर्वचनमपीत्यपि—शब्दः सर्वनिर्वचनसमुच्चये। एवं पदार्था व्याख्याताः। तल्लब्धिरित्यादेर्वाक्यकारग्रन्थस्य वाक्यार्थमाह। "एवमि" ति। "एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठाने" ति। पृथङ्निर्देशेन प्रवृत्तिनिवृत्तिरूपकोटिद्वयविभागो दर्शितः। एतेन पदद्वयेन केव-

लशमादि केवलकर्म च व्यावर्तितम्। शमादि कर्म च समुच्चित्याङ्गमित्यर्थः । यद्विविदिषासाधनमिति त्वयोक्तं तेनैव विद्यानिष्पत्तिरित्येवकाराभिप्राय इत्युक्तं भवति इति वाक्यार्थो भवतीत्यर्थः। विद्यां चाविद्यां चेति श्रुतेः शङ्कयादवप्रकाशाभिमतयोजनाव्युदासार्थं व्याचिख्यासुरुपादत्ते।"तथाचे"ति। अनेन कर्मणोपेक्षितत्वे सन्निहितश्रुत्यन्तरं च दर्शितं भवति । तथा च श्रुत्यन्तरं यदन्यथा भवद्भिर्व्याख्यातं तच्चास्मदुक्तार्थानुगुणमिति तथा–शब्दमन्तर–शब्दं च प्रयुञ्जानस्य भावः । सन्निहिततया यज्ञादिवाक्यवैलक्षण्यं चान्तरशब्दाभिप्रेतम् ॥

मू० अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म, अविद्यया कर्मणा ।

टी० ॥ अस्मिन्वाक्ये न कर्मवाची शब्दः श्रूयत इत्यत्राह "अत्रे"ति अत्र–श्रुतिवाक्ये नन्वनात्मन्यात्मबुद्धिर्येत्यादिषु अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मास्तु ततः किमुक्तं भवती? त्याशङ्कायां पदान्तराण्यपि विवृण्वन् वाक्यार्थमाह "अविद्यये"ति अविद्यया–कर्मणा, विद्यया–ज्ञानेनेत्यत्र कर्मज्ञानशब्दाभ्यां "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति स्मृतिः स्वोपजीव्यार्था स्मारिता भवति, कर्माणि कषायपक्तिः–कषायपक्तिनिमित्तानि कषायशब्दः पापपरः, धर्मेण पापमनुदतीत्यनेनैकार्थ्यात् कषायशब्दस्य रागादिपरत्वेपि तत्पाकहेतुत्वं पापनिवर्हणद्वारा ज्ञानं परमा गतिः–परमगत्युपायः उभयत्र कारणे कार्योपचारः कर्मभिः कषाये पक्वे ततो ज्ञानं प्रवर्तते–प्रसरतीत्यर्थः अत्रापार्यविरोधिनिरासकत्वं कर्मणः स्पष्टम् ।

न च विविदिषा प्रवर्त्तते मोक्षः प्रवर्त्तत इति वोक्तम् अपितु ज्ञानं प्रवर्त्तत इत्येवोक्तम् ॥

मू० मृत्युं–ज्ञानोत्पत्तिविरोधिप्राचीनम् कर्म, तीर्त्वा–अपोह्य विद्यया–ज्ञानेनामृत्युं–ब्रह्माश्नुते–प्राप्नोतीत्यर्थः ॥

टी० ॥ अस्य वाक्यस्यार्थमुपजीव्याह "मृत्युं ज्ञानोत्पत्तिविरोधी"ति न तु ब्रह्मप्राप्तिविरोधि। न च विविदिषाविरोधीत्यर्थः। उपेयविरोधिकर्मणो ज्ञाननिवर्त्यत्वं श्रुतिस्मृतिशतसिद्धम्। यथा "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः"। एव"मेवं विदि पापं कर्म न श्लिष्यते"। "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"। "निचाय्य तं मृत्युमुखात् प्रमुच्यते" "ज्ञात्वा देवं मुच्यते सर्वपाशैः"। "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे"ति। एवमुपेयविरोधिनो ज्ञाननिवर्त्यत्वश्रवणेन परिशेषान्नान्यः पन्था इत्युपेयविरोधिनिरासे उपायान्तरनिषेधस्वारस्यात् समुच्चयपक्षे कर्मणोऽप्युपायतया वेदनव्यतिरिक्तकृत्स्नगोचरान्यशब्दस्य संकोचप्रसङ्गात्। "यज्ञेन विविदिषन्ती"ति कर्मण उपायहेतुत्वस्य कण्ठोक्त्या "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत" इति स्मृत्यानुगुण्याच्च सामान्येन मृत्युशब्देन प्रतिपन्नमपि निरसनीयम् उपायविरोधिकर्मरूपे विशेषे पर्यवस्यति। तथा विविदिषासाधनत्वस्य प्रागुक्तान्योन्याश्रयनिरस्तत्वेन परिशेषाद्विविदिषन्तीत्यत्र प्रकृतिप्रत्ययार्थयोर्वेदनतदिच्छयोरविशेषेण यज्ञादीनां साधनत्वे प्रतीतेऽपि "ततो ज्ञानं प्रवर्तत" इति स्मृत्यानुगुण्यादिष्यमाणप्रकृत्यर्थप्राधान्यस्य नीतिविद्भिर्निर्णीतत्वाच्च प्रकृत्यर्थभूतवेदनसाधनत्वं सिद्धम्। तस्मादुपायविरोधि कर्मैवात्र मृत्युशब्दवाच्यमविद्यानिवर्त्यमित्यभिप्रायः। उपासनरूपं न्यासरूपं चोपेयविरोधिनिरासकं ज्ञानम् उत्तरपूर्वाघयोरुभयोरपि निरासकं स्यादिति तद्व्यावृत्त्यर्थं प्राचीनमित्युक्तम्। उपायविरोधिनिरासकं कर्म प्राचीनमेव पापं शमयति न नूतनाघमित्यर्थः। तीर्त्वेति पदं व्याचष्टे। "अपोह्ये"ति। न त्वेतं सेतुं तीर्त्वेतिवत् प्राप्तिवचन इत्यर्थः। अविद्यया तीर्त्वेति पदद्वयव्याख्यानेन शङ्करमतयोजनाव्यावृत्तिः, अज्ञानेन संसारं प्राप्य स्थित इति तद्योजना, तन्मते अविद्याया ज्ञातव्यत्वं च हेयत्वेन, अविद्याशब्दो विविदिषाविरोधिनिवर्तककर्मवाचीति वा शङ्कराभिमतयोजना स्यात् अविद्याशब्द उपेयविरोधिनिवर्तककर्मवाचीति यादवप्रकाशाभिमतयोजना, ज्ञानोत्पत्तिविरोधीति मृत्युशब्दव्याख्यानेन तदुभयव्युदासः ॥

मू० मृत्युतरणोपायतया प्रतीता विद्या, विद्येतरद्विहितं कर्मैव।

टी० ॥ अयमविद्या-शब्दः संसारहेतुभूताज्ञानपरः किन्न स्यात्? कथं च तस्य कर्मवाचित्वमि? त्यत्राह "मृत्युतरणे" ति तरतेरुत्तरणवाचित्वं स्वरससिद्धम्, प्राप्तिवाचित्वे तु स्वारस्यभङ्ग इत्यभिप्रेतम्। अविद्याशब्दस्य कर्मवाचित्वं दर्शयति "विद्येतरदि" ति तदन्यार्थे नञिति भावः. विहितं कर्मैवेत्येवकारेणाज्ञानमविहितं कर्म च व्यावर्त्यते, अत्र "विद्यां चाविद्यां चे" ति च-शब्दावुक्तसमुच्चयपरौ विद्यानुबन्धि कर्मानुबन्धि च यदनुक्तं तत्समुच्चेतव्यं विद्यानुबन्धिशमदमादि, कर्मानुबन्धि फलाभिसंधिकर्तृत्वाभिमानराहित्यादिकं तदुभयं च-शब्दसमुच्चेतव्यम्। यद्वा "धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ" १ इत्यत्र च-शब्दवदत्राप्युक्तार्थविरोधिसमुच्चयपरौ च-शब्दौ स्याताम् विद्याविरोधि कर्मविरोधि च च-शब्दाभ्यां हानार्थं ज्ञातव्यतया समुच्चिते भवतः विद्या-ब्रह्मज्ञानं तद्विरोधि तदितरविषयतद्विषयरागद्वेषादिकम् अविद्या विद्याङ्गं कर्म तद्विरोधि संसारहेतुभूतं फलाभिसंध्यादिसहितं कर्म पापञ्च ज्ञातव्यमिति तदुभयं हानार्थम् ज्ञातव्यमिति च-शब्दयोरभिप्रायः। यद्वा। प्रतिपदद्योतकौ चशब्दौ भवतः। "यथा धर्मे चार्थे च कामे चे" ति। प्रतिपदं यदभिधेयं तस्य समुच्चयद्योतकत्वं प्रतिपदद्योतकत्वं तत्रापि स्यात् ॥

मू० यथोक्तम् "इयाज सोपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः, ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यये" ति ज्ञानविरोधि च कर्म पुण्यपापरूपम्, ज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्।

टी० ॥ अस्मिन्वाक्ये अविद्याशब्दतरणशब्दयोरुक्तार्थपरत्वस्यापनायोपबृंहणवचनं दर्शयति "यथोक्त" मिति। ज्ञानव्यपाश्रयः—आगमोत्यज्ञानवान्। ब्रह्मविद्यामधिष्ठाय—उपासनात्मकज्ञानं साध्यत्वेनावलम्ब्येत्यर्थः ज्ञानविद्याशब्दयोरर्थभेदबुभुत्सायामागमोत्थविवेकादिजन्यज्ञानयोः प्रकृतत्वात् तत्परत्वाश्रयणं हि युक्तम्। तर्तुं मृत्युमित्यनेन तरतेः प्राप्तिवाचित्व-

शङ्का व्युदस्ता, न हि संसार[1]प्राप्तं ब्रह्मविदा केशिध्वजेन नृपेण यज्ञादिकर्मानुष्ठीयते, मृत्युशब्दस्य विविदिषाविरोधिकर्मपरत्वमपि न शङ्कनीयम्. ज्ञानव्यपाश्रय इत्यनेन शास्त्रजन्यज्ञानवत्ताया अभिहितत्वात् ब्रह्मविद्यामधिष्ठायेत्युक्तत्वाच्च । न हि ब्रह्मविदिच्छामधिष्ठायेत्युक्तम् । कथं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्मेति पुण्यपापसाधारणकर्मशब्देन कर्ममात्रं निरसनीयमित्युक्तं श्रुतिर्हि "धर्मेण पापमपनुदती"ति पापरूपविशेषस्य निरसनीयत्वमाहेति शङ्कायां तत्रापि पापशब्दस्य पुण्यपापपरत्वं दर्शयितुं पुण्यपापयोरुभयोरपि पापशब्दवाच्यत्वोपपादनाय तयोर्ज्ञानोत्पत्तिविरोधित्वमाह "ज्ञानविरोधि चे"ति चःशङ्कानिवृत्तौ पुण्यपापे उभे अपि ज्ञानविरोधिनी चेत् कथं तयोरन्यतरस्य पापस्य निरसनीयत्वमन्यतरस्य पुण्यस्य निरासकत्वं च श्रूयत इत्यत्राह "उभयोरपी"ति तयोर्द्वयोरपि निवर्त्यत्वं फलाभिसंध्यादिरहितस्य धर्मान्तरस्यैव निवर्तकत्वं च विवक्षितमिति भावः । कथमुभयोः पापशब्दवाच्यता? तत्राह "ब्रह्मज्ञानोत्पत्ती"ति "अनिष्टफलतये"ति प्रवृत्तिनिमित्तसूचनम् । अलौकिकत्वे सत्यनिष्टफलासाधारणकारणत्वं पापत्वमिति भावः । अत एव शास्त्रादावीश्वरे च नातिव्याप्तिः 'वासुदेवे मनो यस्य जपहोमार्चनादिषु तस्यान्तरायो मैत्रेय? देवेन्द्र[2]त्वादिकं फलम्", "एते वै निरयास्तात? स्थानस्य परमात्मन" इत्यादिभिः पुण्यस्यापि मुमुक्षुं प्रत्यनिष्टफलप्रदत्वं सिद्धम् । श्रुतिश्च दुष्कृतेन सह पूर्वनिर्दिष्टं सुकृतमपि पाप्मशब्देन निर्दिशन्ती निगमयति "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इति । न चानुक्तपापान्तरविषयपापशब्दः, दुष्कृतशब्दस्य संप्रतिपन्नसमस्तपापसाधारणतयानुक्तपापान्तरासंभवेन तद्विषयत्वायोगात्संभवेपि न तन्मात्रपापान्तरविषयः पाप्मशब्दः, उक्तसर्वहेयनिवृत्तिसंवादितयोपात्ते "अपहतपाप्मा ह्येष ब्रह्मलोक" इत्यनन्तरवाक्ये पाप्मशब्दस्य सर्वहेयविषयत्वदर्शनात् । न ह्यनु

१ संसारं प्राप्तुमिति पुस्तकान्तरपाठः ।

२ देवदेहप्राप्तिर्वा विशेषत इन्द्रशरीराप्तिरेव वा तस्य भगवत्यनन्यस्यान्तरायो व्यवधायिका भवति तादृशशरीरलाभेऽपि तेषां विद्विष्ट इति भावः ।

क्तक्रियपापनिवृत्त्युक्तौ उक्तसर्वहेयनिवृत्तिसंवादसिद्धिः शोकादिषु पापशब्दस्यामुख्यत्वेपि सुकृतदुष्कृतयोः प्रवृत्तिनिमित्तसंभवाच्च मुख्यत्वं त्याज्यम् क्वचिदमुख्यस्य सर्वत्रामुख्यत्वनियमाभावात्, अतः "सर्वे पाप्मान" इत्यत्राजहल्लक्षणा, छत्रि-न्यायात् "धर्मेण पाप"मित्यत्र तु मुख्यत्वमेव ॥

मू० अस्य च ज्ञानोत्पत्तिविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण, पापस्य च ज्ञानोत्पत्तिविरोधित्वम् "एष एवासाधु कर्म कारयति तं यमधो निनीषती"ति श्रुत्याऽवगम्यते ॥

टी० ॥ कथं पापस्य ज्ञानविरोधित्वं? रजस्तमसोर्हि तदवगम्यत इति शङ्कायां द्वारद्वारिभावादविरोधमाह "अस्ये"ति पापस्य रजस्तमसोश्च ज्ञानविरोधित्वे प्रामाणिके सति द्वारद्वारिभावः कल्पनीय इत्यत्राह "पापस्य चे"ति नन्वियं श्रुतिर्निरयनिनीषाविषया किन्न स्यात्? उन्नयनप्रत्यनीकत्वादधोनयनस्येति । ब्रूमः—अत्र विवक्षितमुन्नयनहेतुत्वं ह्युपासननिष्पादनरूपम् । न चोन्नयनमपि नाकादिनयनमिति शङ्कनीयं "यमेभ्यो लोकेभ्य उन्निनीषती"त्यवगतस्य समस्तलोकेभ्य उन्नयनस्यापवर्गप्रापणरूपत्वात् तर्हि गर्भजन्मजरामरणादिसंसारप्रापणमधोनयनं स्यात् न तूपासननिरोध इति चेत् न । उन्नयनस्य ज्ञानोत्पादनद्वारकत्वावगमात् "यं त्वं मनुष्याय हिततमं मन्यस" इत्युपक्रमवाक्येन मामुपास्स्वेति विधित्सितस्य उपासनस्य ह्यव्यवहितोपायत्वमवगतम् । "नान्यः पन्था" इत्यादीनि च श्रुत्यन्तराणि तथाऽवगमयन्ति, तच्च कर्मणामपवर्गं प्रत्यव्यवहितोपायत्वे विरुध्येत, अत उपक्रमाद्यविरोधात् साधुकर्मणामपवर्गं प्रत्युपायत्वमुपासनद्वारकमवसीयते, अतः कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते । किं च यद्यप्युन्नयनाधोनयने स्वर्गनरकप्रापणरूपे तथाप्यसाधुकर्मणां ज्ञानविरोधित्वं सिद्ध्यति तथा हि उन्निनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनो वैषम्यनैर्घृण्यप्रस-

ङ्गात् नेतव्यचेतनगोचरं यद्वृत्तद्वयं गतिद्वयनिनीषानिमित्तातिप्रभूतपुण्यपाप-कर्तृविषयं विज्ञायते। तत्र गतिद्वयपर्याप्तोत्तरोत्तरसाध्वसाधुकर्मकारयितृत्वमीश्वरस्य, न भूतावेशादिवज्जीवबुद्ध्यनपेक्षं भवति। तथा सति ज्ञान-चिकीर्षाद्यभावाद्वायूदकादिनुन्नतृणादेरिव संसारिणां शास्त्रवश्यत्वाभावेन कर्मफलभोगानुपपत्तेः। एवं संसारिकर्मफलभोक्तृत्वान्यथानुपपत्तिरूपं न्याया-नुगृहीतम् "एष एवे"त्यादिकं वाक्यद्वयं ज्ञानप्रदानद्वारककारयितृत्वविष-यमवसीयते, तथा सति स्मृत्यनुग्रहश्च भवति। "न देवा यष्टिमादाय रक्षन्ति पशुपालवत्। यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्। यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवं बुद्धिं तस्यापकर्षन्ति सोपनीतो विन-श्यती"ति ह्युच्यते तथा "पुण्यं प्रज्ञां वर्द्धयति क्रियमाणं पुनः पुनः। वृद्ध-प्रज्ञः पुण्यमेव नित्यमारभते नरः पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः। नष्टप्रज्ञः पापमेव नित्यमारभते नरः"। इति च, तत्र बुद्धिमपकर्षन्ति प्रज्ञां नाशयन्ति च सम्यग्ज्ञानहानिपूर्वकतद्विपरीतज्ञान[१]निष्पत्तिरिह विवक्षिता अन्यथा कर्मान्तरप्रारम्भानुपपत्तेः, यद्यपीदं वचनजातं सर्वदेवतासामान्य-विषयं, तथापि भगवज्ज्ञानस्य सम्यग्ज्ञानसामान्याबहिर्भावादसाधुकर्मणस्त-द्विरोधित्वसिद्धिः। तथा विशेषतश्चोच्यते "ददामि बुद्धियोगन्तं येन मामुप-यान्ति ते। आसुरीयोनिमापन्ना मूढा जन्मनि जन्मनि मामप्राप्यैव कौन्तेय? ततो यान्त्यधमां गति"मिति एवं न्यायस्मृत्युपबृंहितया तया श्रुत्या सामा-न्येन ज्ञानविरोधित्वमसाधुकर्मणां सिद्धम्। अस्मादपि निर्वाहात् पूर्वोक्तउप-पन्नतरः प्रकरणानुगुण्यात्, एवं पापस्य ज्ञानविरोधित्वे प्रमाणं दर्शितम्। अथ रजस्तमसोर्ज्ञानविरोधित्वे, सत्त्वस्य ज्ञानहेतुत्वे च प्रमाणं दर्शयति॥

सू० रजस्तमसोर्यथार्थज्ञानावरणत्वं, सत्त्वस्य च यथार्थज्ञान-हेतुत्वं भगवतैव प्रतिपादितं "सत्त्वात्संजायते ज्ञान"मि-त्यादिना, अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयं तन्नि-

१ तद्विपरीतज्ञाननिवृत्तिरिति पाठान्तरम्।

रसनं चानभिसंहितफलेनानुष्ठितेन धर्मेण, तथा च श्रुतिः "धर्मेण पापमपनुदती"ति ॥

टी० ॥ "रजस्तमसो"रिति ततः किं प्रस्तुतस्य कर्मापेक्षितस्ये?-त्यत्राह"त"श्चेति, अतः—पापस्य ज्ञानविरोधित्ववचनात्। ततोपि किमि?-त्यत्राह "तन्निरसनं"चेति, पापशब्दाभिधेययोः पुण्यपापयोरुभयोरपि निरसनीयत्वेन पापनिरासककर्मासंभवमाशङ्क्योक्तम् "अनभिसंहितफलेने"ति अनेन स्वर्गादिफलप्रदकर्मव्यावृत्तिः। अनुष्ठितेन—न तु ज्ञातमात्रेणेति भावः। तत्र किं प्रमाण?मित्यत्राह "तथा च श्रुति"रिति, इदानीं निरासकविशेषे प्रमाणतयोदाहृतस्य वाक्यस्यार्थनिर्णयोपयोगितयैतद्वाक्यस्थनिरसनीयवाचिपदस्यार्थः पूर्वमेव शिक्षितः, निरासकवाचिपदस्यार्थोनन्तरमुक्तः। नन्वयं धर्मशब्दः कृच्छ्रचान्द्रायणादिप्रायश्चित्तरूपधर्ममात्रविषयः किं न स्यात्? अनभिसंहितफलधर्मविषयरतिः कुतो निर्णीयते? उच्यते "यज्ञेन दानेन तपसाऽनाशकेन" "शान्तो दान्त उपरतस्तितिक्षुः" "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" "यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्" "यज्ञो-दानं तपश्चैवं पावनानि मनीषिणां शमो दमस्तपः शौच"मित्यादिश्रुतिस्मृतिभिर्मुमुक्षोरपेक्षितत्वेनोक्तानां यज्ञदानतपःशमादीनामत्र श्रूयमाणत्वात् विज्ञानानन्दो ब्रह्मयोनिरित्यादिनास्य प्रकरणस्य ब्रह्मविद्याविषयत्वावगमाच्चायं धर्म-शब्दो मुमुक्ष्वपेक्षितानभिसंहितफलधर्मविषय इत्यवगम्यते। अत्र यज्ञदानादिपर्यायेषु दानेन द्विषन्तो मित्रा भवन्तीत्यादिना सांसाकफलकीर्तनम् अन्नवानन्नादो भवतीत्यादिवत् ब्रह्मवेदनानुगुणानुषङ्गिकफलाविषयं मन्तव्यं भूयो न मृत्युमुपयाहि विद्वान्"ति। विद्वान्निति विद्वान् प्रधानफलश्रवणात्। यद्यपीदं वाक्यं न मुमुक्षुमात्रविषयं तथाप्यमुमुक्षुमात्रविषयं च न भवेत् प्रवृत्तिनिमित्तसाधारण्यात्, न हि काम्यफलप्रदत्वं धर्मशब्दार्थः। अलौकिकेष्टासाधारणसाधनेनालौकिकमनिष्टासाधारणकारणमपनुदेदिति ह्यर्थः स्यात्। ततश्च मुमुक्षुं प्रति काम्यकर्मणोऽनिष्टफलदत्वेन धर्मशब्दवाच्यत्वायोगात् पापशब्दवाच्यान्तर्भावाच्च पक्षधर्मताबलादनभिसंहितफलेन धर्मेण पुण्यपापयोरपि अपनोद्यत्वमुक्तं स्यात्।

सू० तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं, सर्वाश्रमकर्मापेक्षम्, अतोपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्ममीमांसायाः पूर्ववृत्ता वक्तव्या ॥

टी० ॥ ज्ञानस्य कर्मसापेक्षत्वं निगमयति "तदेव"मिति । तत्–श्रुतिस्मृतितदनुग्राहकोपपत्तिसूत्रवाक्यकारवचनेभ्यः । एवमुपायप्रतिबन्धनिरसनार्थं सर्वाश्रमिणान्तत्तदाश्रमधर्माङ्गकोपासनाधिकारस्य वक्ष्यमाणत्वं हृदि निधाय सर्वाश्रमकर्मापेक्षमित्युक्तम् । ततः किं कर्मविचारस्य ब्रह्मविचारपूर्ववृतत्व? इत्यपेक्षायामनुष्ठानस्य ज्ञानसापेक्षत्वात्, ज्ञानस्य मीमांसाधीनत्वाच्च तदधिगमः पूर्ववृत्त इत्याह "अत"इति, अतः–ब्रह्मज्ञानस्य फलाभिसन्धिरहिताश्रमकर्मापेक्षत्वात्, ज्ञानं हि हानार्थमुपादानार्थं वा अत्र तूभयार्थमित्यत्राह । "अपेक्षिते"ति फलद्वारकं हानं स्वरूपेणोपादानम् । मीमांसाशब्दस्य पूर्वोत्तरसाधारणत्वात् कर्ममीमांसावसेयमित्युक्तं सैव–या त्वया विरुद्धेति निरस्ता सैवेत्यर्थः ।

सू० अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्

टी० ॥ यदनपेक्षितं परेणोक्तं तदेवापेक्षितमित्युक्तं यत्तु परेणापेक्षितमित्युक्तं तस्यानपेक्षितत्वमुच्यते "अपि चे"त्यादिना "नित्यानित्यविवेकादयश्चे"ति चस्त्वत्यर्थः प्रत्युतेति यावत् मीमांसाश्रवणमन्तरेणेत्यर्थः । न संपत्स्यन्त–इत्यनेन पश्चाद्भावित्वमुक्तं कुत? इत्यत्राह "फले"ति फलविशेषो–भोगमोक्षरूपः, करणविशेषो–यज्ञोपासनादिः, इतिकर्तव्यताविशेषः–प्रयाजादिः साधनसप्तकं च, अधिकारिविशेषो–बुभुक्षुर्मुमुक्षुश्च एषां निश्चयादृते कर्मस्वरूपं साङ्गं यज्ञात्मकमुपासनात्मकं च भाष्यकारश्च याग-

दिकमुपासनात्मकं च कर्मेति हि वक्ष्यति "प्रकाशश्च कर्मण्यभ्यासादि"ति च सूत्रम् "उपासनात्मके कर्मणी" ति तस्य भाष्यम् उपासनस्य कर्मत्वं स्मृतिसन्ततिरूपतया तस्य प्रप[1]ञ्चसाध्यत्वात् "वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । शरीरजैः कर्मदोषैर्याति स्थावरतां नर" इत्यत्र मनुश्च "मानसैः कर्मदोषै" रित्युक्तवान्, फलं चोभयं भोगो मोक्षश्च, "तत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनामि" ति आदि–शब्देन आत्मनो "निर्वाणमय एवायमि" त्युक्तज्ञानानन्दस्वरूपत्वादिकं विवक्षितम् । अत्र साध्याविशिष्टत्वं हेतोः प्रतीयत इति चेत् नैवं, मीमांसायां फलकरणेतिकर्तव्यतादीनां प्रत्यधिकरणं तत्तन्न्यायैर्यो निर्णयः क्रियते स हेतुः । एवं तत्तधिकरणन्यायानुगृहीतश्रुतिवाक्यसमुदायजन्या या प्रमितिरुपायोपेयविषया सा साध्या, तत्तदवान्तरवाक्यार्थनिश्चयैस्तत्तत्समुदायरूपमहावाक्यर्थनिश्चयः साध्य इत्यर्थः । यथा पदार्थनिश्चयैर्वाक्यार्थनिश्चय इत्युक्ते सति न साध्याविशिष्टता तद्वत्, अत एव हि करणेतिकर्तव्यतादिशब्दैः पूर्वं पृथगुक्त्वा पश्चात्कर्मस्वरूपशब्देनोक्तं फलकरणेत्यादिभाष्यस्य कर्ममीमांसामात्रविषयत्वे तत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनामिति वक्तुमयुक्तं निरुपपदमीमांसाशब्दस्य मीमांसाशास्त्रमित्यादिभाष्ये भागद्वयविषयतया प्रयुक्तत्वाच्च यथोक्त एवार्थः । तस्मात्कर्मब्रह्मविचारानन्तरभावी नित्यानित्यवस्तुविवेकः । तत इहामुत्र फलभोगविरागो मुमुक्षुत्वं च शमदमादिसाधनसंपच्च शमदमाद्युपेतः स्यादिति ब्रह्ममीमांसायां हि शमदमादिस्वरूपं निरूप्यते अस्मिन् चतुष्टये सिद्धे ब्रह्मविचारः, ब्रह्मविचारात् तत्सिद्धिरित्यन्योन्याश्रयः स्यात्, अतः पश्चाद् भाविनः पूर्ववृत्तत्वमनुपपन्नं, साङ्गाध्ययनजा[2]पातप्रतीतेरेव नित्यानित्यविवेक इति चेत् तदयुक्तं, न ह्यापातप्रतीतिरिहामुत्रफलभोगविराग–मुमुक्षुत्वयोर्हेतुः, नित्यानित्यवस्तुविपर्ययप्रतीतेः । किं च आपातप्रतीतिरुभयभागविचारसाधारणी, तत्र प्रथमं कर्मविचार एव प्रवृत्तिर्युक्ता, उभयत्र बुभुत्साया

(१) प्रयत्नसाध्यत्वादिति पाठान्तरमेव युक्तं, प्रपञ्चपदस्य पारिभाषिकस्य श्रीसंप्रदाये सत्त्वेऽपि तस्येहानन्वितार्थकत्वादिति ध्येयम् ।

(२) साङ्गाध्ययनजन्ययथाश्रुताचरलभ्यप्रतिपत्तेरेवेत्यर्थः ।

अविशिष्टत्वात् प्रथमातिक्रमे कारणाभावाच्च, शास्त्रान्तरेणापि नित्यानित्यविवेकादिर्नोपपद्यते, प्रथममेवाध्ययनविधिवश्यतया पुरुषस्य शास्त्रान्तरानवकाशात्। किं च शास्त्रान्तरेषु परमाणुकारण[1]त्वब्रह्मात्मकप्रधानकारणत्वगगनादिनित्यत्वनिमित्तमात्रेश्वरादयो वेदान्तविरुद्धा एवार्था बहव उपलभ्यन्ते, अतः शास्त्रान्तरजन्यो नित्यानित्यविवेको वेदान्तविरुद्धत्वान्न तद्विचारं प्रति पूर्ववृत्तो भवितुमर्हति। किं च शास्त्रान्तरेषु षट्पदार्थषोडशपदार्थज्ञानादीनां मोक्षसाधनत्वप्रतिपादनेन वेदान्तश्रवणनैरपेक्ष्याच्च न तज्जन्यविवेकस्य पूर्ववृत्तत्वं युक्तं "यतोऽभ्युदयनिःश्रेयससिद्धिस्स धर्म्मः"। "छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम" इति तत्र तत्रोच्यते किं च "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदि"ति श्रुतिरेवंविच्छब्देन शास्त्रजन्यज्ञानमनूद्य पश्येदिति प्रतिपन्नस्योपासनस्याङ्गतया शमादीनुपदिशति, अतः शमादीनां श्रवणपूर्ववृत्तत्वं श्रुतिविरुद्धं प्रशान्तचित्तायेत्यादिश्रुतिस्तु श्रवणौपयिकावधाननिष्पादनार्थेत्युक्तम्। इतिहासपुराणश्रवणान्नित्यानित्यविवेक इति चेत् तर्हि तत एव ब्रह्मस्वरूपावगमात् ब्रह्मविचारस्य नारम्भणीयत्वं स्यात् इतिहासपुराणयोरपि संशयविपर्ययबाहुल्यात् तन्निरासाय ब्रह्मविचारोऽपेक्षित इति चेत् संशयविपर्ययबाहुल्यादेव नित्यानित्यविवेकोपि तत्र दुःसंपाद इति न साधनचतुष्टयस्य पूर्ववृत्तत्वं युक्तम्। यत्तु नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्मौ इत्यारभ्य वाचस्पतिनोक्तं, नित्यस्य धर्मिणो नित्यत्वं सत्यत्वं तत एवोपादेयत्वम्, अनित्यस्य धर्मिणोऽनित्यत्वम् असत्यत्वं, तत एव हेयत्वमित्येवं नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेक इति, तत्र ब्रूमः। अनित्यस्य तावदसत्यत्वं वक्ष्यमाणप्रकारेण निरस्तं वेदितव्यम्, यन्नित्यं तदुपादेयं यदनित्यं तद्धेयमिति उभयमप्यनुपपन्नम् सुखदुःखनिवृत्तितत्साधनतदुपयोगिनामेवोपादेयत्वबुद्धिदर्शनात् तद्व्यतिरि-

(१) परमाणुकारणतावादिनो नैयायिकवैशेषिकादयः प्रधानकारणतावादिनः सांख्यादयो गगननित्यत्ववादिनो नैयायिकादयो निमित्तमात्रेश्वरवादिनः पाशुपततार्किकादयः।

कस्यैवानुपादेयताबुद्धिदर्शनाच्च नित्यमपि दुःखरूपं दुःखनिमित्तं वा यदि स्यात् तद्धेयमित्येव प्रतीयेत, अनुभयं चेदुपेक्ष्येत, अनित्यमपि सुखरूपं वा सुखनिमित्तं वा भवति चेत्तदुपादीयते, निरू[1]पकस्य तु हेयमिति चेत् न प्रकृष्टसुखान्तरदर्शनात्यन्तदुःखसाध्यत्वदुःखोदर्कत्वविरहे सति निरूपकस्यापि तत्रोपादेयताबुद्धिदर्शनात् क्षीरौदनलाभात् कणः संत्यज्यते, अन्धकूपपतिता वराटिका तदुद्धरणक्लेशस्य तल्लाभसुखातिशायित्वात् त्यज्यते, विषमिश्रमन्नं मरणभयात्, स्रक्चन्दनादि तु ततः प्रकृष्टसुख[2]लाभादाद्यन्तयोस्तीव्रदुःखानुबन्धाभावाच्च परिमितमप्युपादीयते, तस्मादनित्यस्य हेयत्वं नानित्यत्वमात्रप्रयुक्तम् । यद्युच्येत नित्यस्य दुःखासंभिन्नसुखरूपत्वादुपादेयत्वं तदसंभवादनित्यस्य च हेयत्वमिति । उच्यते । नित्यस्य दुःखासंभिन्नसुखरूपत्वं किं व्याप्त्यावगम्यते? उत शास्त्रात्? न प्रथमः । नित्यस्य कालादेः सुखरूपत्वादर्शनात्, नित्यस्यात्मनो दुःखासंभिन्नसुखरूपत्वादर्शनाच्च आत्मनो हि दुःखमुपलभ्यते अहं दुःखीति शास्त्रतश्चेत् यदि वेदाद्वेदजन्यं च किमापातज्ञानम्? उत प्रमितिरूपं? प्रथमे कर्मब्रह्मभागसाधारण्यात् कर्मविचारातिक्रमेण ब्रह्मविचारं प्रति तस्य पूर्ववृत्तत्वानुपपत्तिः, निश्चयरूपं चेत् मीमांसाद्वयफलम् आगमान्तरमूले विरुद्धतयानुप्रयोगात् तस्यैतन्नैरपेक्ष्याच्च पूर्ववृत्तत्वानुपपत्तिः । अथोच्येत यन्नित्यं तदुपादेयमिति, नैवं प्रतीतिः, किंतु नित्यं सुखं संभवति चेत्तदुपादेयमिति, सति तस्मिन् अनित्यमनुपादेयमिति, तत्र तावन्नित्यसुखसंभवज्ञानस्य ब्रह्मविचारोपयोगो नित्यफलोपादित्साद्वारेणेति वक्तव्यं, शास्त्रान्तरेषु कर्मकाण्डे च नित्यफलसंभावनाया निवारकाभावात्, नित्यानित्यविवेकानन्तरं तेषामप्यारम्भणीयत्वस्यात् तेषु हि नित्यं फलं प्रतीयते, तदसदिति चेत् तदसत्त्वमप्रामाण्यादन्यपरत्वाद्वा भवेत्, तदुभयं कर्ममीमांसया विना न सिद्ध्यतीति तस्याः पूर्ववृत्तत्वमभ्युपेत्य आद्यसूत्रं तज्ज्ञापनपरमितिचेत् न । तस्य स्वशास्त्रारम्भोप-

(१) विशेषदर्शिनो हेयोपादेयगोचरबुद्धिमतः ।

(२) अत्र यद्यपि प्रथमपुस्तके "प्रकृष्टसुखालाभा"दिति पाठः परस्मिंस्तु "प्रकृष्टसुखलाभाभावादिति पाठः, परमर्थतत्त्वमवगत्य द्वावप्युपेक्षिष पाठौ न्यवीविशं चापरमेवामुं पाठमिति पाठापपाठज्ञा विज्ञा एवावधारयन्तु ।

यिकविषयप्रयोजनपरत्वेन शास्त्रान्तराप्रामाण्यादिप्रतिपादनपरत्वाभावात्। स्वार्थोपयोगित्वात् तदप्रामाण्यादिकमभिप्रेतमिति चेत् तर्हि। तस्य स्वोपजीव्यज्ञानमपेक्षितमिति कर्मविचारस्य तर्कपादस्य च पूर्ववृत्तत्वमापाद्येत[1] शास्त्रान्तर[2]प्रामाण्यं हि कर्ममीमांसाप्रथमपादावसेयम् अन्यपरत्वं वाक्यान्तर्विरोधादिभिर्नित्यफलाविवक्षाध्यावसायश्च तत्रत्यन्यायाधीनः शास्त्रान्तरप्रमेयदौ[3]स्थ्यं च तर्कपा[4]दे दर्शयिष्यते। किं च आद्यसूत्रादेव शास्त्रान्तरगतनित्यफलासत्त्वावगमश्चेत् अन्योन्याश्रयः–ब्रह्मविचारे प्रवृत्तस्यान्यत्र नित्यफलासत्त्वावगमः, तदवगमात् ब्रह्मविचारे प्रवृत्तिरिति, न चैवं सति धर्मजिज्ञासासूत्रेप्यन्योन्याश्रयः शङ्कनीयः, पित्रादिप्रेरणया कृतसाङ्गाध्ययनस्य पुरुषस्य प्रयोजनवदर्थापातप्रतीत्यैव प्रवृत्त्युपपत्तेः, येषां धर्मविचारो वैधः, तेषामेवान्योन्याश्रयः, वैधत्वज्ञानाद्विचारो विचाराद्वैधत्वज्ञानमिति। किं चानित्यफलहेयताज्ञानस्य च स्वर्गादिफलजिहासाद्वारेण ब्रह्मविचारोपयोगो वक्तव्यः, स्वर्गादिफलस्यानित्यत्वं दुःखसंभिन्नत्वं च कथमवगम्यते? शास्त्रान्तरेणेति चेत्, तत्रैव नित्यपुरुषार्थसिद्धेर्नैराकाङ्क्ष्येण ब्रह्मविचारप्रवृत्त्ययोगात् तत्पूर्ववृत्तत्वानुपपत्तिः, यत्सुखं तदनित्यमिति स्वोत्प्रेक्षिततर्कमात्रेण चेत्, तेनैव नित्यपुरुषार्थसंभावनया ब्रह्मविचारः प्रतिबध्येत दुःखनिवृ[5]त्तेरन्तराहित्यात् स्वाभाविकसुखस्यानादिभावत्वाद[6]न्तरविरहोपपत्तेश्च न नित्यपुरुषार्थासंभावनेति चेन्न, दुःखनिवृत्तिश्चेत् दुःखानुबन्धिनी दुःखनिवृत्तित्वात् संप्रतिपन्नवत्, सुखं चेत् सुखत्वादेव कृतकमित्येवंरूपकुतर्कोत्प्रेक्षितासंभवेन केवलतर्कशरणानां नित्यपुरुषार्थसंभावनाया दुरुपपादत्वात्, शास्त्रसिद्धनित्येतरविषया व्याप्तिरिति चेत् न वेदान्तश्रवणपूर्वको व्याप्तिनिश्चयः, तत्पू

(१) पूर्ववृत्तत्वमापद्यतेति पुस्तकान्तरपाठं सम्यञ्चं प्रत्येमि।
(२) शास्त्रान्तराप्रामाण्यं हीति पुस्तकान्तरपाठः।
(३) शास्त्रान्तरप्रतिपाद्यपदार्थानां युक्तिपथातिक्रमः।
(४) वेदान्तशास्त्रस्य द्वितीयाध्यायप्रथमपादे।
(५) जन्याभावस्य ध्वंसविरहादिति भावः।
(६) अनादिभावत्वाच्चान्तर्विरहोपपत्तेश्चेति पुस्तकान्तरपाठः, स्वाभाविकसुखस्यानादिभावत्वादन्तर्विरहोपपत्तेश्चेति तु युक्तो भाति पाठः।

र्वकं वेदान्तश्रवणमित्यन्योन्याश्रयप्रसङ्गात्, अतो ब्रह्मविचारं प्रति नित्यानित्यगतधर्मविवेकोपयोगाय नित्यानित्यविभागे प्रत्यक्षाप्रवृत्तेस्तर्कस्यातिप्रसक्तेः शास्त्रान्तराणां ब्रह्मविचारानैराकाङ्क्ष्यापादकत्वात् तद्विरोधेनानुपयोगाच्च वेद एव प्रमाणीकर्त्तव्यः । तत्रापातप्रतीतेरुभयभागसाधारण्यान्नित्यानित्यनिश्चयस्य मीमांसाद्वयफलत्वेनान्योन्याश्रयणस्य दुस्तरत्वाच्च नित्यानित्यगतहेयोपादेयत्वज्ञानं—नित्यानित्यवस्तुविवेक इत्युक्तम् ।

ननु शास्त्रान्तरेषु नित्यफलसंभावनाया निवारकाभावान्नित्यविवेकादिमतस्तत्रापि प्रवृत्तिप्रसङ्ग इति यदुक्तं, तन्न शास्त्रान्तरनिवारकत्वादाद्यसूत्रस्य, ब्रह्मैव जिज्ञास्यं न प्रकृतिपुरुषाविति हि सूत्रार्थ इति, तदयुक्तं साधनचतुष्टयपूर्ववृत्तत्ववादिभिरस्यार्थस्यानङ्गीकृतत्वात्, तापत्रयज्ञानपूर्ववृत्तत्ववादिभिर्ह्ययमर्थ उक्तः । न चायमर्थ उपपन्नः, तथाहि न तावदयमर्थः सूत्रकृतोपदिश्यते, न चाज्ञाप्यते किं तूपपाद्यत इति वक्तव्यम्, न्यायनिबन्धनत्वात् सूत्राणाम्, उपपत्तिश्च शास्त्रान्तरदौर्बल्यमेव वा स्वशास्त्रप्राबल्यमेव वा समुच्चितमुभयं वा, न प्रथमः, स्वशास्त्रस्य च दौर्बल्ये ब्रह्मणोप्यजिज्ञास्यत्वात्, न द्वितीयः शास्त्रान्तरस्य च प्राबल्ये ब्रह्मण एव जिज्ञास्यत्वासिद्धेः । तृतीये सूत्रवैयर्थ्यं, पूर्वमीमांसायामेव चोदनासूत्रप्रभृतिभिस्तदुभयसिद्धेः । तत एव च तस्याः पूर्ववृत्तित्वापत्तिः । अवश्यापेक्षितत्वादेव वेदप्रामाण्यमात्रे सिद्धेपि ब्रह्मणि प्रामाण्यं न तावता सिद्ध्यतीति चेत्, तर्हि यैर्हेतुभिर्ब्रह्मणि प्रामाण्यासंभवशङ्का ते परिहर्त्तव्याः स्युः, ते च सिद्धे व्युत्पत्त्यनुपपत्त्यादय इति तत्परिहारेण ब्रह्मणि वेदान्तप्रामाण्यसमर्थनपरत्वेऽस्मदीय एव पक्षः परिगृहीतः स्यात् । अत एव दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वमपि निरस्तम् । तथाहि किमैहिकदुःखज्ञानं पूर्वम्? उत नारकदुःखज्ञानम्? उत स्वर्गादेरप्यल्पास्थिरतया तापत्रयान्तर्गतत्वज्ञानं? न प्रथमः, आयुर्वेदादिभिस्तन्निरसनोपायावगमात् वेदान्तविचारनैरपेक्ष्यात्, न द्वितीयः, निरयदुःखहेतुभूतपापापनोदकव्रतनियमविधायकशास्त्रबाहुल्याद्वेदान्तनैरपेक्ष्यात्, तृतीये तु कर्मविचारापेक्षा स्यादेव, प्रथमत एवाध्ययन-

वधिविषयस्य शास्त्रान्तरावगमावसरविधुरत्वात्, सत्यप्यवसरे स्वर्गाद्यल्पास्थिरत्वज्ञापकैस्तैरेव शास्त्रैर्मुक्त्युपायस्यावगतत्वेन वेदान्तनैरपेक्ष्यात्, वेदान्तविरुद्धार्थाभिधायिनां तेषामवगमस्य वेदान्तज्ञानपूर्ववृत्तत्वायोगात्, आपातप्रतीतेरितिहासपुराणयोश्चाल्पास्थिरत्वानन्तस्थिरत्वविपर्ययप्रतीतिहेतुत्वाच्च ।

**स्रु० एषां साधनत्वं च विनियोगावसेयम्, विनियोगश्च श्रुतिलिङ्गादिभ्यः ।**

टी० पूर्वं व्याख्येयस्वभावात् क्रमनियम उक्तः, व्याख्यानस्वभावादपि तत्सिद्धिरिदानीमुच्यते "एषामि"ति एषां–शमादीनां साधनत्वं, चः समुच्चये, विनियोगावसेयं–विनियोगः–अङ्गत्वज्ञापनं, ततः किमि?-त्यत्राह "विनियोगश्चे"ति ॥

**स्रु० स च तार्तीयः, उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि, तान्यपि–**

टी० ॥ ततोपि किमि? त्यत्राह "स च तार्तीय"इति तृतीयाध्यायोक्त इत्यर्थः । इदं प्रदर्शनार्थमुक्तं कर्मविचारोक्तकृत्स्नन्यायसापेक्षत्वाद्ब्रह्मविचारस्य, एतानि हि कर्ममीमांसाध्यायानां प्रमेयाणि प्रथमे अध्याये प्रमाणलक्षणं वृत्तं द्वितीयेऽध्याये शास्त्रभेदः, कर्मभेदो वा, भेदहेतुश्च शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयानि, तृतीयेऽङ्गनिरूपणम् । अङ्गत्वज्ञापकानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि, चतुर्थे क्रत्वर्थपुरुषार्थभेदनिरूपणेन पुरुषार्थैः क्रत्वर्थानां प्रयुक्तिर्निरूपिता, पञ्चमे क्रमः क्रमप्रमाणानि क्रत्वर्थपाठप्रवृत्तिमुख्यकाण्डानि, षष्ठेऽधिकारिनिरूपणं, सप्तमे सामान्यातिदेशो निरूपितः, अष्टमे विशेषातिदेशः, नवमे ऊहः, दशमे बाधः, एकादशद्वादशयोस्तन्त्रप्रसङ्गौ, यथोक्तं "धर्मधीर्मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः" इति, एतन्न्यायसापेक्षत्वं संकर्षसापेक्षत्वं च ब्रह्मविचारे तत्र तत्र द्रष्टव्यं, तस्मात् "स च तार्तीय" इति प्रदर्श-

नार्थमुक्तम् । अथ कर्मविचारापेक्षत्वे अभ्युच्चययुक्तिरुच्यते "उद्गीथादी"ति परेण प्रसङ्गात् सङ्गतिरुक्ता, अत्र तु साक्षात्सङ्गतिरुपपाद्यते "कर्मसमृद्ध्यर्थान्यपी"ति कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं तन्निर्वचनादिति वा[1]क्यकारवचनं स्मारितम् । ब्रह्मदृष्टिरूपाणि—अब्रह्मणि ब्रह्मत्वेन दृष्टिर्ब्रह्मदृष्टिः, ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानसापेक्षाणीत्यर्थः, इतिर्हेतौ इहैव चिन्तनीयानि न तु कर्मविचारे, "तान्यपि कर्माणि" यत्समृद्ध्यर्थान्युद्गीथाद्युपासनानि तान्यपीत्यर्थः ॥

सू॰ कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादनानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि ।

टी॰ ॥ अनभिसंहितफलानि-अनभिसंहितफलत्वात् ब्रह्मविद्योत्पादनानीत्यर्थः, इतिर्हेतौ तत्साद्गुण्यापादनानि साद्गुण्यं प्रबलप्रतिबन्धकेसत्यशीघ्रफलप्रदत्वं तदापादनानि ब्रह्मविद्यां शीघ्रं संपादयन्तीत्यर्थः, एतानि—उद्गीथाद्युपासनानि अत इहैव सुतरां सङ्गतानि प्रधानानुपयोगित्वत्वन सादृश्यादिना धीस्थत्वंप्रसङ्गात् सङ्गतिः, अन्यतरापेक्षया उभयापेक्षया वा सङ्गतिः साक्षात्सङ्गतिः, अत्र तूभयोरपेक्षितत्वं प्रतिपादितं ब्रह्मदृष्टिरूपाणीत्युद्गीथाद्युपासनस्य ब्रह्मज्ञानापेक्षाभिहिता ब्रह्मविद्योत्पादनानीति ब्रह्मज्ञानस्य उद्गीथादिविद्यपेक्षाभिहिता एतदभिप्रायेण सुतरामित्युक्तम् इहैवेत्युभयापेक्षाय अत्रैव विद्यमानत्वात् सुतरां सङ्गतिरिहैव न तु कर्मविचारे इत्यर्थः ।

ननु कथमुद्गीथादिविचारस्य ब्रह्मविचार एव सुतरां सङ्गतिः ? कर्मविचारेऽपि हि सुतरां सङ्गतिरस्ति उभयापेक्षया सङ्गतिर्हि सुतरां सङ्गतिः कर्माङ्गाश्रयत्वात् उद्गीथादिधियां तद्विचारस्य कर्मापेक्षास्ति कर्मणामपि स्वसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षास्तीत्युभयापेक्षाया विद्यमानत्वात् उच्यते

(१) वाक्यकारश्च नाम्ना टङ्क इति प्राचां प्रसिद्धिः, अयं च वाक्यकारो-द्रमिडगुहदेवाभ्यां प्राचीनोऽथवार्वाचीनोऽथैकस्मात्प्राचीनोऽन्यतरस्मात्तु नूतन इत्यर्थावधारणविधुरा वयमद्यत्वेपीति न शक्ता वक्तुं किमपि, परमेते त्रयोऽपि श्रीरामानुजाचार्येभ्योऽतिप्राचीना इत्यसंशयः ।

कर्मसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षा केवलकर्मणां विद्याङ्गकर्मणां च तुल्या अतः कर्मसमृद्ध्यर्थत्वहेतुः साधारणः, कर्माङ्गाश्रयत्वं पूर्वभागविचारसङ्गते-रसाधारणो हेतुर्ब्रह्मज्ञानसापेक्षत्वमुत्तरभागविचारसङ्गतेः साधारणो हेतुः एवं साधारणासाधारणहेतुद्वयवत्तासाम्येपि, ब्रह्मदृष्टिरूपोद्गीथाद्युपास-नानां ब्रह्मज्ञानसापेक्षत्वात् तेन विना तच्चिन्तनमशक्यं पूर्वभागविचारे न हि कर्मविचारात् पूर्वं ब्रह्मविचार उपपद्यते, प्रागुक्तसङ्गतिविशेषविशि-ष्टत्वात्तयोः, उत्तरभागे तु ब्रह्मज्ञानस्य सुलभत्वात् निर्वृत्तकर्मविचारस्यो-द्गीथाद्युपासनचिन्तनं कर्तुं शक्यम् । अत एव शक्यत्वादुद्गीथाद्युपासनानि उपनिषद्भागे विहितानि, अत एव ब्रह्ममीमांसायां निरूपितानि च, एवं वेदान्तभागविहितत्व-मीमांसायां विचारितत्व -शक्यत्वरूपवैषम्यत्रयवि-शेषितायां उभयापेक्षाया उत्तरभागे एव विद्यमानत्वात्तन्निबन्धना सुतरां सङ्गतिस्तत्रैवेत्यभिप्रायेण "सुतरामिहैव सङ्गतानी"त्युक्तम् । अयं चाभ्युच्चय-हेतुः,यदप्रधानस्यास्यार्थस्य साक्षात्सङ्गतत्वात्तस्याप्यवश्यापेक्षितः कर्मविचार इति प्रधानप्रतिपाद्यस्य नियमेनापेक्षितत्वरूपः प्रधानहेतुः पूर्वमेवोक्तः ।

## मू० तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ।

टी० ॥ ततः किं प्रकृतानन्तर्यस्ये?त्यत्राह "तेषां चे"ति उद्गीथाद्यु-पासनानां सर्वसंमता साक्षात्सङ्गतत्वे हि विगानम् उद्गीथाद्युपासने चिन्त्ये सति तस्य कर्मज्ञानापेक्षा सर्वाविगीता । यत्त्वधीतवेदान्तस्य कर्मा-धिगमापेक्षा नास्तीत्युक्तं, तदसङ्गतं वेदान्तेष्वपि उपायपरमुक्तिपरवाक्य-मात्राध्यायिनः पुरुषस्य ब्रह्मविचारेपि तृतीयचतुर्थाध्यायमात्रश्रवणप्रस-ङ्गात् तृतीयचतुर्थयोः प्रथमद्वितीयोक्तन्यायसापेक्षत्वमस्तीति चेत् तर्हि कृत्स्नस्य ब्रह्मविचारस्य कर्मविचारन्यायसापेक्षत्वात्तस्यैव पूर्ववृत्तत्वं जन्मा-न्तरसुकृतविशेषेण कस्यचिद् ब्रह्मविचारमात्रापेक्षेति चेत् तस्य सुकृतविशेषेण तृतीयचतुर्थमात्रापेक्षा किन्न स्यात्? अथवा सुकृतातिशयात् कृत्स्न-ब्रह्मविचारनिरपेक्षता किन्न स्यात्? किं च वेदान्तेषूपायफलपरवाक्यमात्रा-ध्ययनमशास्त्रीयमिति त्वयापि वक्तव्यं, तद्वेदान्तमात्राध्ययनस्यापि तुल्यं

कृत्स्नस्वाध्यायाध्ययनस्य विहितत्वात्, अतो विध्यतिलङ्घिनां यदपेक्षितं तदेव पूर्ववृत्तमित्यसङ्गतं कृत्स्नाध्यायिनोऽपि सुकृतवशात् क्वाचित्कश्रवणापेक्षायाः पूर्वमेव दत्तमुत्तरम्। "विरोधादप्रमाणत्वादित्यादिग्रन्थसङ्गृहीतानि दूषणानि अत्रोच्यते—इत्यादिना सिद्धान्तभाष्येण परिहृतानि—तथा हि कर्मणामनित्यफलत्वेन विरोधोऽनभिसंहितफलत्वात् परिहृतः, भेदवासनाजनकत्वेनैक्यज्ञानविरोधस्तु 'पृथगात्मान'मिति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुत्या परिहृतः, अयं विरोधो वक्ष्यमाणवस्तुसामर्थ्यान्तर्गतश्च, मोक्षस्य सकलभेददर्शननिवृत्तिरूपतायाः प्रपञ्चमिथ्यात्वोपपादनसापेक्षत्वात् ऐक्यज्ञानस्योपायत्वेऽपि कर्मणामदृष्टद्वारेणोपयोगादविरोधः। अप्रमाणत्वं किं 'क्रियावानेष ब्रह्मविदां वरिष्ठ' इत्यादिसन्निहितविनियोजकप्रमाणदर्शनात् परिहृतं ? विविदिषार्थचित्तशुद्ध्युपयोगस्तु वेदनोत्पत्त्युपयुक्तमनोनैर्मल्यहेतुत्वोपपादनेन विविदिषार्थत्वेऽपि तस्याहरहरुत्पत्त्यपेक्षोपपादनेन च प्रत्युक्तः, ज्ञानमात्रस्य हेतुत्वश्रवणं च साधनद्वित्वानभ्युपगमाद् दत्तोत्तरम्। सामर्थ्यं नाम—मिथ्याभूत[1]स्य बन्धस्य ज्ञानैकनिवर्त्यत्वरूपं वस्तुसामर्थ्यं, तत्तु प्रपञ्चमिथ्यात्वदूषणेन प्रतिवक्ष्यते, शमाद्यङ्गकताम्नानकृतो विरोधश्च प्रवृत्तिरूपयज्ञादेर्निवृत्तिरूपशमादेश्च भिन्नविषयत्वेनाविरोधात् परिहृतः, शमादयो ह्यविहिताप्रतिषिद्धनिषिद्धकाम्यविषया इत्युक्तं, वाक्यार्थज्ञानस्यैव मोक्षोपायत्वं प्रत्यक्षविरोध—शास्त्रविरोधाभ्यां निरस्तं, तत्र निवर्त्यवासनाया निवर्त्तकोत्पत्तिप्रतिबन्धकत्वाभावेन श्रवणादेर्भेदवासनानिरासार्थमनपेक्षितत्वात्तद्व्यर्थ्यपरिहारस्यानुपपन्नत्वाच्छ्रवणादिक्रमोन्निद्र[2]वाक्यजा धीर्विमोचिकेत्यपि परास्तं साधनचतुष्टयस्य पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः, स पूर्वं ब्रह्मस्वरूपाच्छादिकेत्यादिना प्रतिज्ञातः, तदुपपादनदूषणयोर्बहुग्रन्थकार्यत्वात्तदुभयं न कृतम्।

मू॰ यदप्याहुः "अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैव पर-

(१) मिथ्याभूतं बन्धस्य ज्ञानैकनिवर्त्यत्वरूपमिति पुस्तकान्तरपाठः।

(२) श्रवणादिक्रमेणोन्निद्रमर्थबोधसामर्थ्यमुपयातं, साक्षात्कारात्मकज्ञानजनकवाक्यमिति तु निष्कृष्टमित्यर्थः।

मार्थस्तदतिरेकिनानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम् ।

टी० ॥ अथ तदुपपादनायोपक्रमते पूर्वमुपायोपदेशपरवाक्यपर्यालोचनया वस्तुसामर्थ्यव्यतिरिक्तहेतव उपन्यस्ता निरस्ताश्च, विधित्सितं ज्ञानमिति ह्युक्तं, वस्तुसामर्थ्यं तु सिद्धपरवाक्यसिद्धं, वस्तुस्वरूपोपदेशपरैरिति हि वक्ष्यते, अतः स्वरूपपरवाक्यपर्यालोचनामुखेन तदुपपादयितुमारभते "यदप्याहु" रिति, अपिना उपपादयिष्यमाणस्यार्थस्य प्राधान्यं सूच्यते "आहु" रिति ग्रन्थकारबहुत्वम् । अनेनास्य ग्रन्थस्य तत्तत्प्रबन्धोक्तसकलार्थगर्भितत्वं दर्शितम्—"सर्वे वेदान्ता आरभ्यन्त" इति । यदप्याहुस्तदनादरणीयमित्युपर्यन्वयः । प्रथमं ब्रह्मैकमेव सत्यमिति प्रतिजानीते "अशेषे" ति अशेषविशेषा वक्ष्यमाणज्ञात्रादयः, विजातीयसजातीयस्वगता वा स्वगतेष्वप्यन्वयिनो-व्यावृत्तिरूपाश्च विशेषाः अशेष–शब्देन विवक्षिताः, तत्प्रत्यनीकं स्वज्ञानेनैव निवर्तकं शुक्तिरिव रजतस्येत्यर्थः, निर्विशेषत्वे शून्यता स्यादित्यत्राह "चिन्मात्र" मिति, चिच्छब्देन तुच्छत्वव्यावृत्तिः, स्वयंप्रकाशत्वं हि चित्त्वं मात्रचा-ज्ञेयत्वव्यावृत्तिः । यद्वा प्रत्यनीकत्वरूपधर्मोपि मात्रचा व्यावर्त्यते । यद्वा मात्रचा वस्तुतः समस्तविशेषविरहो विवक्षितः, ब्रह्मैवेत्येवकारेण सगुण-ब्रह्मव्यावृत्तिः । परमार्थः—तत्त्वावेदकप्रमाणविषयः, सगुणवाक्यानां न तत्परत्वं फलविशेषार्थमुपासनेऽन्यपरत्वादिति भावः । कथं ब्रह्मण एव सत्यत्व ?-मन्यदपि हि प्रतीयत इति शङ्कायां ब्रह्मण एव परमार्थत्वसिद्धये तद्व्यतिरिक्तस्य तज्ज्ञाननिवर्त्यत्वाय च विश्वस्य मिथ्यात्वं प्रतिजानीते "तदि" ति "अथात आदेशो नेति नेती" त्यादौ "प्रकृतैतावत्त्व" मिति सूत्रविषये कृत्स्नस्य मिथ्यात्वेन ब्रह्मणोपि मिथ्यात्वं परैः पूर्वपक्षीकृत्य निरस्तमिति तदभिप्रायेणोक्तं—"तदतिरेकी" ति "नेह नानास्ती" त्यादिनिषेधवाक्यस्य ब्रह्मव्यतिरेकेपि निषेध्यनानात्वं सिद्ध्यतीति दर्शितं—"नानाविधे" ति पूर्वमशेषविशेषशब्दोपात्तविशेषविवरणार्थं नेह नानास्तीत्यादिवाक्यगतनानाशब्दविवरणार्थं च नानाविधशब्दवाच्यभेदो विवृतः—"ज्ञातृज्ञेये" ति तत्कृतज्ञान-

भेदः—ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः, अनेन वृत्तिस्फुरितचैतन्यभेदस्य स्वरूपप्रयुक्तताव्यावृत्तिः । भेदशब्देनैकैककोटिषु अवान्तरभेदा विवक्षिताः, आदि-शब्देन निरसनीयदुःखरूपजन्मजरामरणान्युच्यन्ते । सर्वम्—इति वक्ष्यमाणश्रुतिगतसर्व-शब्दस्यायमर्थ इति भावः । "तस्मिन्नि"ति, निरधिष्ठानभ्रमपक्षव्युदासः, एवकारेणाधिष्ठानबहुत्वनिषेधः, तथा सति हि प्रपञ्चस्य तज्ज्ञाननिवर्त्यत्वसिद्धिः । यद्वा तस्मिन्नित्येकवचनेनाधिष्ठानैकत्व सिद्धिः, नानाऽध्यासा नानाधिष्ठानका दृष्टाः, तत्कथमेकाधिष्ठानकत्वमिति विरोधं स्वयंप्रकाशवस्तुनोऽधिष्ठानत्वविरोधं च स्फोरयत्येवकारः, मिथ्याभूतं—मिथ्याभाववद्वक्ष्यमाणमिथ्यात्वलक्षणवदित्यर्थः ।

सू० "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" "अथ परा यया तदक्षरमधिगम्यते" "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" ।

टी० ॥ ब्रह्मण एव सत्यत्वे व्यतिरिक्तमिथ्यात्वे च किं प्रमाणमि?-त्यत्राह "सदेवे" ति सदेवेति विजातीयभेदो व्यावर्त्यते, एकमेवेति सजातीयभेदः, अद्वितीयमिति स्वगतभावाभावरूपभेदः, षड्विधतात्पर्यलिङ्गोपेतसद्विद्यागतत्त्वादिदं वाक्यं प्रथममुपात्तम् । अथैवकारफलितनिषेधकण्ठोक्तिमत्परविद्यावाक्यमुपादत्ते "अथे"ति, इदं च कारणत्वशङ्कितदोषव्युदासोपक्रम[1]ककारणवाक्यं भूतयोनिमित्युक्त्वा अनन्तरं तस्यैव प्रपञ्चनात्, अद्रेश्यमग्राह्यं प्रत्यक्षागोचरमनुमानाद्यगोचरम् । अथ वा चक्षुरगोचरमिन्द्रियान्तरागोचरम् । अगोत्रम्—अनामकम् । अवर्णम्—अनैल्पादिकम् । अचक्षुः श्रोत्रमपाणिपादं—ज्ञानकर्मेन्द्रियरहितं, नित्यं विभुं—कालदेशाभ्यामनवच्छिन्नं, सर्वगतं—सर्वेण जगताधिष्ठानतया गतम् । आश्रितं—वस्तुपरिच्छेदरहित-

(१) अत्र पुस्तकान्तरे "कारणत्वशङ्कितदोषव्युदासोपक्रमकारणवाक्यम्" इत्येव पाठः ।

मित्यर्थः । सुसूक्ष्मम्—अदृश्यत्वं न तुच्छत्वादिदूरत्वादिना, किन्तु सुसूक्ष्मत्वादित्यभिप्रायः, वाक्यभेदादनेकतच्छब्दान्वयोपपत्तिः ।

मू० "सत्यं ज्ञानमनन्तं ब्रह्म" "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "यस्याऽमतं तस्य मतं मतं यस्य न वेद सः" "अविज्ञातं विजानतां विज्ञातमविजानताम्" "न दृष्टेर्द्रष्टारं पश्येः, न मतेर्मन्तारं मन्वीथाः" "आनन्दो ब्रह्म" "इदं सर्वं यदयमात्मा" "नेह नानास्ति किंचन" ।

टी० ॥ अथ शोधकवाक्यमुपादत्ते । "सत्यमि"ति । अनृतजडपरिच्छिन्नव्यावृत्तनिर्विशेषवस्तुपरमिदं वाक्यं, कारणवाक्यैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्यात् सामानाधिकरण्यान्यथानुपपत्त्या चेति वक्ष्यते । निष्कलं—कला अवयवा निरवयमित्यर्थः, तत्र लिङ्गं[1] निष्क्रियत्वं, शान्तम्—ऊर्मिषट्करहितम् । अशनाया[2] पिपासे च शोकमोहौ, जरामृत्यू चोर्मयः, निरवद्यं—निरञ्जनं—कर्मसंबन्धतत्फलरहि[3]तम्, अनेन सत्यज्ञानादिवाक्यगतव्यावृत्तिः स्फुटीकृता । अथ चिन्मात्रशब्दाभिप्रेतां ज्ञेयत्वव्यावृत्तिमाह "यस्ये"ति अमतमविज्ञातमिति—श्रवणमननादिरूपज्ञानाविषयत्वोक्तिः । अथ चिन्मात्रशब्दाभिप्रेतां ज्ञेयत्वव्यावृत्तिमाह "यस्ये"ति "अमतमविज्ञातमि"ति । श्रवणमननादिरूपज्ञानाविषयत्वोक्तिः । अथ ज्ञातृत्वनिषेधपरं वाक्यमाह "न दृष्टे"रिति, अत्रापि पूर्वोक्तज्ञानावस्थाभेदो विवक्षितः, अस्य पुरुषार्थत्वायाऽसुखाद्व्यावृत्तिरुच्यते "आनन्दो ब्रह्मे"ति, आनन्दशब्दोऽसुखाद्व्यावृत्तिमात्रपरः । अत एव ह्यानन्दीत्यनुक्तिः, इत्थं ब्रह्मणो निर्विशेषचिन्मात्रत्वे श्रुतिवाक्यजातमुपन्यस्तम् । अथ व्यतिरिक्तमिथ्यात्वे प्रमाणमुपन्यस्यते, तत्र प्रथमं मिथ्याभूतस्य जगतो ब्रह्मण्यधिष्ठानेऽध्यस्तत्वं दर्शयति । "इदं सर्वं यदयमात्मे"ति

(१) यन्निष्क्रियं तन्निरवयवमिति हि व्याप्तिः ।

(२) क्षुत्पिपासार्थकयोरशनायापिपासाशब्दयोः प्रकृतोपयोगिगौणार्थमाह 'शोकमोहा'विति ।

(३) निरवद्यशब्देन सर्वावद्यसंबन्धमूलभूतकर्मसंबन्धराहित्यं, निरञ्जनपदेन च कर्मफलीभूतसुखदुःखासंबद्धत्वं विवक्षितमिति भावः ।

सामानाधिकरण्येन अधिष्ठानेनाध्यस्तसामानाधिकरण्यं हि बाधार्थं दृष्टम् । रज्जुसर्प इति, पूर्वं सर्वं तस्मिन्नेवेति प्रतिज्ञातं ब्रह्मणः सर्वाध्यासाधिष्ठानत्वं चानेन वाक्येन दर्शितम् । व्यतिरिक्तनिषेधकश्रुत्युक्तिं दर्शयति "नेह नानास्ति किंचने"ति ।

मू० "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति,, "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कंविजानीयात्" "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यम्" ॥

टी० ॥ नाना पश्यन्नत्यन्ताज्ञ इति दर्शयति "मृत्यो"रिति तमसोवा एष तमः प्रविशतीतिवत्, इवशब्देन नानात्वस्यापारमार्थ्यं दर्शितं मिथ्याभूतं चेत् कदाचिन्निवृत्तिः स्यादित्यत्राह "यत्र हीति" "यत्र–यदा द्वैतमिव भवति इवशब्दः पूर्ववत्, तदा इतर इतरमितरेण पश्यतीत्यर्थः "केने"ति वक्ष्यमाणत्वादितरेणेत्यध्याहारः । "यत्र त्वि"ति यत्र–यदा अस्य सर्वमात्मैवाभूत् तदा कः केन कं पश्येत् क–इत्यध्याहार्यम् इतर इत्युक्तत्वात् पश्येद्विजानीयादिति ज्ञानपर्वभेदोक्तिः, इदं कृत्स्नमिथ्यात्वं दृष्टान्तेनोपपादयन्तीं श्रुतिमुदाहरति "वाचे"ति । विकारो घटादिसंस्थानं नामधेयं वाचारम्भणं–वागालम्बनं व्यावहारिकमित्यर्थः, तस्मान्मृत्तिकेत्येव सत्यं ब्रह्मणि नानात्वं पश्यतः पूर्वोक्तमृत्युशब्दाभिहिताज्ञानकार्यं भयं दर्शयति–

मू० "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" "न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि" "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" "प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरं वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्" "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" ।

टी० ॥ "यदा ही"ति उदरम्—उ—अवधारणे तदेव[1]त्वं तदु सत्य-
माहुस्तदेव ब्रह्म परमं कवीनामितिवत्, अरम्—अल्पम् । यद्वा उत्—अरम्
उदित्यस्य भवतीत्यनेनान्वयः । "व्यवहिताश्चे"ति सूत्रात्, अरं—शीघ्रं यदा
ह्येवेत्यादेः पश्चादुपादानं सिद्धान्ते परिहारसौकर्यार्थं, तच्च पूर्वोक्तवाक्या-
नामेकन्यायपरिहार्यत्वात्, ब्रह्मणो निर्विशेषचिन्मात्रत्वे व्यतिरिक्तमिथ्यात्वे
च श्रुतिर्दर्शिता, तत्र निर्विशेषत्वे सूत्रं प्रदृश्यते "न स्थानत" इति उभयलिङ्गं
साकारत्वं सा[2]कारनिराकारत्वं च सर्वत्र स्थितस्यापि ब्रह्मणो नास्ति निरा-
कारमित्यर्थः । अन्यमिथ्यात्वे सूत्रमाह "माये"ति स्वाप्नमर्थजातं कार्त्स्न्येन
मायामात्रं कुत? इति चेत् अनभिव्यक्तस्वरूपत्वात् दुर्निरूपत्त्वात् बाधित-
त्वादित्यर्थः, स्वाप्नार्थमिथ्यात्ववज्जगन्मिथ्यात्वं दृष्टान्ततया दर्शितम् । अ-
स्मिन्नर्थद्वये उपबृंहणवचनानि दर्शयति "प्रत्यस्तमितभेदमि"ति प्रत्यस्तमि-
तभेदम्—सजातीयविजातीयभेदरहितम् । सत्तामात्रं स्वगतभेदरहितम्, अत
एव वचसामगोचरं तर्हि तुच्छत्वं स्यान्न सत्तेत्यत्राह "आत्मसंवेद्यमि"ति स्व-
यंप्रकाशमित्यर्थः । ब्रह्मसंज्ञितमिति ब्रह्मेति संज्ञामात्रमेव न तु ब्रह्म[3]त्वादि-
गुणयोग इति भावः । निर्विशेषं चेत् कथं जगदवभास? इत्याकाङ्क्षायामु-
पादत्ते "ज्ञानस्वरूपमि"ति प्रपञ्चमिथ्यात्वमनेन श्लोकेनोच्यते अत्यन्त-
निर्मलं—सकलविशेषरहितम् । अर्थस्वरूपेण जडस्वरूपेण अर्थनानात्वस्य
भ्रान्तिसिद्धत्वादेक एव परमार्थ इति दर्शयति "परमार्थस्त्वमिति" ।

मू० तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् । परमार्थस्त्व-
मेवैको नान्योऽस्ति जगतः पते ? । यदेतद् दृश्यते मूर्तमे-
तद् ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयो-
गिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्व-
रूपं पश्यन्तोभ्राम्यन्ते मोहसंप्लवे ये तु ज्ञानविदः शुद्ध-

(१) "तदेवर्तं तदु सत्यमाहुः" इति पुस्तकान्तरपाठं समीचीनं मन्ये ।
(२) पुस्तकान्तरे तु "साकरत्वं निराकरत्वं च" इत्येव पाठः ।
(३) बृहत्त्वादिगुणयोग इति युक्तः पाठः ।

चेतसस्ते खिलं जगत् ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ? तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् विज्ञानं परमार्थो हि द्वैतमिथ्यात्वदर्शिनः । यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ? । तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते । वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायो स्तथासौ परमात्मनः सोऽहं च सर्वं स च सर्वमेतदात्मस्वरूपं स त्यज भेदमोहम्—इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः

टी० ॥ एतद्विवृणोति श्लोकद्वयेन "यद्वैतदि"त्यादिना, भ्रान्तिश्चेत् कस्य चिन्निवर्त्तेतेत्याकाङ्क्षायां केषांचित्तन्निवृत्तिं दर्शयति "ये तु ज्ञानविद" इति ज्ञानसत्यत्वं जडमिथ्यात्वं चोक्तम् । अथ ज्ञानाकाराणामात्मनामैक्योक्तिं दर्शयति "तस्ये"ति "एकमयम् । एकम् आत्मपरनिर्देशकृते भेदशङ्कामपि व्युदस्यति" "यद्यन्योऽस्ती"ति अत्र दृष्टान्तमाह "वेणुरन्ध्रे"ति । अस्योपपादितस्यार्थस्योपदेशं दर्शयति "सोऽहमि"ति यथोपदिष्टमकरोदित्याह "तत्याजे"ति । अथात्मनां ब्रह्मणैक्योक्तिं दर्शयति "विभेदजनक"इति अथ भगवद्गीतायां सर्वात्मनां परस्परं ब्रह्मणा च सहैक्योक्तिमुदाहरति "अहमात्मे"ति

मू० "विभेदजनके ज्ञाने नाशमात्यन्तिकं गते आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यति" "अहमात्मा गुडाकेश ? सर्वभूताशयस्थितः" क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ? "न तदस्ति विना यत्स्यान् मया भूतं चराचरमि"त्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैर्निर्विशेषचिन्मात्रं ब्रह्म सत्यमन्यत्सर्वं मिथ्येत्यभिधानात्

टी० ॥ सर्वभूतशब्देन शरीराण्युच्यन्ते एतत् स्फुटयति "क्षेत्रज्ञं चे"ति. सर्वक्षेत्रेष्वित्यनेन भूतशब्दस्य शरीरपरत्वं स्फुटीकृतं, तत्रैव व्यतिरिक्तमिथ्यात्वोक्तिं दर्शयति "न तदस्ति विना यदि"ति वस्तुस्वरूपोपदेशपरैः, न तूपायपरैः, अनन्यपरैरिति भावः, निर्विशेषचिन्मात्रमिति पूर्ववदर्थः अभिधानादित्यस्य शेषविशेषेत्यादिपूर्वप्रतिज्ञावाक्येन सहान्वयः । ननु किमन्यत्र सतोऽन्यत्र ख्यातत्वं मिथ्यात्वम्? उतात्यन्तासत्त्वं? पूर्वस्मिन् कल्पे क्वचित् पारमार्थ्यमभ्युपगतं स्यात्, द्वितीये तु निवर्त्यमेव नास्तीति शास्त्रवैयर्थ्यम् अत्यन्तासत्त्वं चानुपपन्नं ख्यातेः स्वयंप्रकाशस्य वस्तुनो भ्रमाधिष्ठानत्वं नोपपद्यते, स्वयाथात्म्याप्रकाशमूलो ह्यध्यासः पराधीनप्रकाशस्य जडस्यैव तत्संभवः। अतः प्राक् प्रतिज्ञातं प्रपञ्चमिथ्यात्वं ब्रह्मणो भ्रमाधिष्ठानत्वं चायुक्तमित्यस्मिन् चोद्यद्वये प्रथमं परिहर्तुं मिथ्यात्वलक्षणमाह ।

**मू० मिथ्यात्वं नाम-प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वं, यथा रज्ज्वाद्यधिष्ठानं सर्पादेः। दोषवशाद्धि तत्र तत्कल्पनम् ।**

टी० ॥ "मिथ्यात्वं नामे"ति निवर्त्यत्वमित्युक्ते मुद्गरादिनिवर्त्यघटादावतिव्याप्तिः, तत्परिहाराय ज्ञानशब्दः, तावता शक्तिमदीश्वरादिसंकल्परूपज्ञाननिवर्त्ये वस्तुन्यतिव्याप्तिः सा यथावस्थितज्ञानमात्रनिवर्त्यत्वस्य विवक्षितत्वात्, परिहृता भवति, प्रबलभ्रान्तिज्ञाननिवर्त्यसत्यरजतादिष्वतिव्याप्तिपरिहाराय यथावस्थित-शब्दः, यथावस्थितज्ञाननिवर्त्यमित्युक्ते समानाधिकरणधीर्जायेत तदा भ्रान्तिज्ञाननिवर्त्ये व्यभिचारस्तदयथावस्थितं वस्यः, तत्र ज्ञानस्वरूपं हि यथावस्थितं, विषयस्यैव ह्ययथार्थत्वम् । अतो ज्ञानमिति सामानाधिकरण्यशङ्का व्यावृत्त्यर्थं यथावस्थितवस्तुज्ञाननिवर्त्यमित्युक्तं, ज्ञानप्रागभावे व्यभिचार इति तद्व्युदासार्थं प्रतीयमानत्वपूर्वक-पदं ज्ञानप्रागभावोपि कदाचित्प्रतीयमानत्वपूर्वको, निवर्त्येत इतिचेत् न, नियमस्य विवक्षितत्वात्, यथा "सिद्धे शब्दार्थसंबन्ध" इत्यत्र सिद्ध एवेत्यवधारणस्य विवक्षितत्वान्नित्यत्वसिद्धिः, यथा "अब्भक्षो वायु-

भक्ष" इत्यादौ अप एव भक्षयतीत्यवधारणासिद्धेः, तद्वत् भूदलनज्ञान[1]नि-वर्त्यस्य रज्जुसर्पस्य यथावस्थितवस्तुज्ञाननिवर्त्यत्वाभावादव्याप्तिरिति चेत् न, तस्यापि यथावस्थितवस्तुज्ञानेन निवर्तयितुं योग्यत्वात्, अत एव हि निवर्त्यत्वमित्युक्तं न तु निवृत्तत्वमिति ।

न च सर्पभ्रमजनिते रज्जुधीनिवर्त्ये परमार्थभूते भयेऽतिव्याप्तिरिति वाच्यं, भयस्य क्षणिकतया स्वयमेव निवृत्तस्य रज्जुज्ञाननिवर्त्यत्वाभावात् रज्जुज्ञानं ह्युत्तरभयोत्पत्तिं प्रतिबध्नाति, अतः प्रतीयमानत्वविशेषणपूर्वकयथा-ऽवस्थितवस्तुगोचरज्ञानमात्रनिवर्तनीयत्वं मिथ्यात्वमित्यर्थः अनेन लक्ष-णेन सदसद्वैलक्षण्यं फलितं, तत्र प्रतीयमानत्वपूर्वकेत्यसद्व्यावृत्तिः । अस्य मिथ्यात्वलक्षणस्य संप्रतिपन्नमिथ्याभूतेष्वनुगतत्वं दर्शयति "यथे"ति अथो-क्तलक्षणस्य पक्षेऽतिदेशे कर्तुमुचितेऽपि स्वप्रकाशवस्तुनोऽध्यासानुपपत्तिरू-पद्वितीयं चोद्यं परिहर्त्तुमाह 'दोषवशाद्धि तत्र तत्कल्पनमि'ति जड-त्ववज्जडत्वमपि नाध्यासप्रयोजकं जडेऽपि दोषाभावे सत्यध्यासादर्शनं, अतो दोष एव हि सर्वत्र कल्पकः, कल्पने दोषवशाधीने स्वतः परतो वा प्रका-शोऽभ्रमाधिष्ठानत्वोपयोगी, पुरोवर्त्तिनि भासमाने हि रजतभ्रम इति दार्ष्टा-न्तिके परिहर्तुं दृष्टान्ते कल्पनस्य दोषाधीनत्वमुक्तम्, इत्थं प्रतीयमानत्व-पूर्वकं यथावस्थितवस्तुज्ञाननिवर्त्यत्वं मिथ्यात्वं, मिथ्याभूतार्थकल्पनं च दोषवशादिति दृष्टान्ते शिक्षितमर्थद्वयं दार्ष्टान्तिकेऽतिदिशच्छङ्काद्वयं चार्थान्निराकरोति–

**मू० एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्र-ह्मस्वरूपावबोधबाध्यं मिथ्यारूपम् ।**

टी० ॥ "एवमि"ति अत्यन्तवैसादृश्यरहितकतिपयाध्यास एका-धिष्ठाने दृष्टः । यथा सर्पभूदलनाम्बुधाराद्यध्यासो रज्जुमात्रे । कथमेकस्मि-न्नधिष्ठाने युगपन्मिथोऽत्यन्तविसदृशानन्तप्रपञ्चाध्यासः? इत्येका शङ्का "यः

(१) ज्ञाननिवृत्तस्येति तु युक्तः पाठः ।

सर्वज्ञ" इत्यादिषु सर्वज्ञतादिगुणकत्वेन प्रमिते ब्रह्मणि कथं वाध्यास ? इति द्वितीया, चिन्मात्रवपुषीत्यनेन पूर्वोक्तां स्वयंप्रकाशत्वकृतामध्यासानुपपत्तिं स्फोरयति "परे ब्रह्मणी"ति शङ्काद्वयं परिहृतं भवति, विलक्षणाधिष्ठानत्वात् कृत्स्नाध्यास उपपन्न इति, वैलक्षण्यं च सर्वसाधारणसन्मात्ररूपत्वं सर्वज्ञत्वादिगुणा परे ब्रह्मणि, परे ब्रह्मणि तु चिन्मात्ररूपतया सर्वज्ञत्वादिगुणानन्वयादध्यास उपपन्न इति चाभिप्रायः। इदमिति प्रतीयमानताकारपरामर्शिना पदेन यथावस्थितब्रह्मस्वरूपावबोधबाध्यमिति पदेन च पूर्वोक्तमिथ्यात्वलक्षणमनूदितं भवति। दोषपरिकल्पितमित्यनेन दोषवशादिनोक्तादिष्टं विविधकृत्स्नाध्यासं दर्शयति "दोषे"ति, मिथ्यारूपं मिथ्यात्वलक्षणापेतत्वात् रज्जुसर्पवन्मिथ्येत्युक्तं भवति। दोषः कः स किं परमार्थः ? उतापरमार्थः ? परमार्थत्वे ज्ञाननिवर्त्यत्वं न स्यात्, अपरमार्थत्वे प्रपञ्चवत् कल्पकान्तरापेक्षायामनवस्था स्यात्, स किं ब्रह्मण्यतिरोहिते कल्पयति ? तिरोहिते ? अतिरोहिते चेदनुपपन्नं, रज्जुत्वे प्रकाशमान इवाध्यासोदयविरोधात्।

**सू० दोषश्च स्वरूपतिरोधानविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या "अनृतेन हि प्रत्यूढा, स्तेषां सत्यानां सतामनृतमपिधानम्" "न सदासीन्नासदासीत्तदानीं तमश्चासीत्तमसा गूढमग्रे प्रकेतम्"।**

टी० ॥ अविरोधे पश्चादप्यनिवृत्तेः, तिरोहिते चेत्तिरोधानं किं स्वतः? किं वा परतः? यदि स्वतः, अनिवर्त्यत्वं, निवृत्तौ स्वरूपोच्छेदो वा, यदि परतः, तत्परं वाच्यं, किं च नानाध्यासानां नानादोषमूलत्वं दृष्टम्। अतोऽनेकदोषा अभ्युपगन्तव्या इतीमाः शङ्काः परिहर्तुमाह "दोषश्चे"ति चः शङ्कानिवर्तकः। को दोष–इत्यस्य प्रतिवचनम् "अविद्ये"ति तस्याः पारमार्थ्यापारमार्थ्यविकल्पे सदसदनिर्वचनीयेत्यपारमार्थ्याभ्युपगमः। अनवस्थापरिहारोऽ"नादी"ति, तिरोहितातिरोहितविकल्पस्य प्रतिवचनं, स्वरूपतिरोधानशब्देन, तच्च किं स्वतः परत ? इत्यत्र परत इत्यङ्गीकृतं, तिरोधानस्य

हेतुनिर्देशात् नानाध्यासस्यैकदोषमूलत्वमुक्तं "विविधे"त्यादिना, विक्षेपोऽध्यासः । आच्छादिकाऽविद्या[1] विक्षेपेपि काऽविद्येत्यविद्याया एकस्या एवावस्याद्वयं तदभिमतं तिरोधानविक्षेपहेतुत्ववचनात् सूचितम् । एवं भूतामविद्यां प्रतिज्ञाय, एतदनुगुणं प्रमाणमाह "अनृतेनेत्यादिना प्रत्यूढाः— प्रतीपं नीताः, प्रत्यूढ-शब्दवैशद्यार्थमुपादत्ते "तेषामि"ति नात्र बहुवचने तात्पर्यम् अदितिः पाशान् प्रमुमोक्त्वितिवत्, अस्याः सदसदनिर्वचनीयत्वमुच्यते "नासदासीन्नोसदासी"दिति, किमासीदित्यत्राह "तम आसीदि"ति ।

न्यू० "मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम्" "इन्द्रोमायाभिः पुरुरूप ईयते" "मम माया दुरत्यया" "अनादिमायया सुप्तो यदा जीवः प्रबुध्यत" इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते ।

टी० ॥ तमो नामाक्षरं तमसि लीयत इति प्रकृतिरुच्यत इति शङ्कायामुदाहरति । "मायान्तु प्रकृतिमि"ति । विविधाध्यासहेतुत्वं दर्शयति "इन्द्रो मायाभि"रिति अस्या ऐक्यज्ञानेन विना अनिवर्त्यत्वमाह । "ममे"ति अनादित्वमाह "अनादी"ति । अत्रेशितव्यसापेक्षमहेश्वरत्वेन्द्रत्वबहुवचनश्रवणाद्विजातीयसजातीयस्वगतभेदसाहित्यं प्रतिपन्नमिति तदपनुत्तये व्याचष्टे "निर्विशेषे"ति सगुणत्वे प्रतिपन्नेऽपि स्वरूपपरवाक्यानुगुण्याद्दोषप्रतिपादनतत्पराणां वाक्यानां न प्रतिपन्नभेदे तात्पर्यमिति भावः । ब्रह्मैव—इन्द्रादिशब्देन प्रतिपन्नमपि स्वरूपपरवाक्योपदिष्टं ब्रह्मैवेति भावः । अनादित्वसदसदनिर्वचनीयत्वतिरोधायकत्वविविधाध्यासकरत्वान्युपात्त—

(१) "आच्छादिकाऽविद्याविक्षेऽपि" अत्र पुंवद्भावे "आच्छादकाऽविद्याविक्षेपेऽपि" इत्येव युक्तमिति युक्ताः प्रतिपद्यामहे, यदि तु पुस्तकद्वयस्ययथाश्रुतपाठे श्रद्धादार्ढ्यं तदा "आच्छादनम्—आच्छादिका "धात्वर्थनिर्देशे ण्वुल्" स्त्र्यधिकारोक्तः आच्छादनस्य हेतुरविद्या इति—आच्छादिकाऽविद्येति कथंचित्साधुभावः शक्यसमर्थनः ।

तत्तद्वाक्यप्रतिपन्नान्याह 'अनाद्यविद्ययेत्यादिना स्वगतशब्देनाधिष्ठानतया संबन्धो विवक्षितः। न तु सजातीयविजातीयसहपठितस्वगतनानात्वम्।

मू० यथोक्तं "ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥ यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्। तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥ तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्वचित्कदाचिद्द्विज ? वस्तुजातम्। विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम्॥

टी० एवं दोषवाचिवाक्यगतमिन्द्रमहेश्वरादिपदजातमर्थस्वारस्येन स्वरूपपरवाक्यप्राबल्यान्निर्विशेषवस्तुपरं व्याख्यातम्। अथ दोषवाचिभिरेवोपबृंहणवाक्यैर्निर्विशेषस्य वस्तुन एव दोषसंबन्धित्वमुक्तमिति दर्शयति "यथोक्तमि"ति। चिन्मात्रब्रह्मणो ज्ञानविजृम्भितत्वं जगतः प्रतिज्ञायते "ज्ञानस्वरूप" इति न वस्तुभूतः—वक्ष्यमाणशैलाब्धिधरादिवस्तुभूतो न भवतीत्यर्थः, "विज्ञानविजृम्भितानी"ति विज्ञान—शब्देन विविधं ज्ञायतेऽनेनेति करणव्युत्पत्त्याऽविद्याऽभिधीयते, प्रतिज्ञातं प्रपञ्चस्यापि वा कल्पितत्वं व्यतिरेकमुखेनोपपादयति "यदे"ति शुद्धम्—अविद्यारहितं, निजरूपि—भेददर्शनरहितं, तन्निमित्तकर्मक्षये अपास्तरागादिदोषं समन्तात् कल्प्यतेऽनेनेति संकल्पः, अविद्यावस्तुषु—धर्मिभूतपदार्थेषु वस्तुभेदाः—देवाद्याकारभेदाः। मध्ये वस्त्वस्ति किं महीघटत्वमिति श्लोकद्वयं जगदुपलब्धिप्रकारेण वस्तुभेदासत्यत्वोपपादकत्वेनोपपाद्यप्रमेयाधिक्याभावादत्रानुपात्तं, तच्च सिद्धान्ते दर्शयिष्यते। विजातीयभेदाभावमुपसंहरति "तस्मादि"ति पूर्वार्द्धेन। अथात्मबहुत्वस्य काल्पनिकत्वमुच्यते विज्ञानमित्यर्द्धेन पूर्वोक्तमात्मैक्यमेकं सदैकमित्यत्र एकशब्देनानूद्य स्वगतनानात्वन्निषिध्य परमपरेशादिशब्दानामपि वस्तुमात्रपरत्वं प्रतिपादयति

मू० "ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं त"
इति अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्ववि-
ज्ञानेन निवृत्तिं वदन्ति "न पुनर्मृत्यवे तदेकं पश्यति न
पश्यो मृत्युं पश्यति ।

टी० "ज्ञानमि"ति विशुद्धमित्यादिपदैरविद्याराहित्यं तत्कृतभेद-
दर्शनवैधुर्यं तन्मूलशोकलोभादिविधुरता चोच्यते, सदैकं—जन्मवृद्ध्यादिरहि-
तम् । यतोन्यन्नास्ति—तद्यथोक्तस्वरूपमित्यर्थः । एतच्च परमतमित्याह "सद्भा-
व"इति एतद्भुवनाश्रितं भुवनेनाधिष्ठानतयाऽऽश्रितं, संव्यवहारभूतं—सम-
न्ताद्व्यवहारविषयभूतं यद्वर्तते तत्रापि कारणमविद्येत्युक्तं, तच्च न परमतं
सिद्धान्त एवोच्यत इत्यर्थः । एवं सिद्धपरवाक्यपर्यालोचनया ब्रह्मण एव सत्य-
त्वं व्यतिरिक्तस्याविद्यापरिकल्पितत्वं च तत्त्वमित्युक्तम् । ततः किं प्रस्तुतस्य
कर्माङ्गकत्वानहंवाक्यार्थज्ञाने मोक्षोपायत्वस्ये?ति शङ्कायामुपायपरवाक्या-
नामपि सिद्धपरवाक्ये प्रतिपन्नार्थानुगुणोपायपरत्वमाह "अस्या"इति चः—
शङ्कानिवर्तकः अस्या—इत्यनेन सदसदनिर्वचनीयत्वादिविशेषणविशिष्टता
विवक्षिता । तस्या निवृत्तौ प्रमाणं दर्शयति "न पुनरि"ति मृत्युरत्राविद्या
तन्निवृत्तिश्चैक्यज्ञानादित्याह "तदेकं पश्यती"ति मृत्युकार्यस्य रोगादे-
रपि निवृत्तिं ज्ञापयति "न पश्यो मृत्यु"मिति न रोगं नोत दुःखतामिति
हि तच्छेषः, निर्विशेषवस्तुज्ञानानन्तरमेवाभयप्राप्तिं दर्शयति ।

मू० "यदा वै ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने-
ऽभयं प्रतिष्ठां विन्दते अथ सोऽभयङ्गतो भवति" "भिद्यते
हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि

तस्मिन्दृष्टे परावरे" "ब्रह्म वेद ब्रह्मैव भवति "तमेव विदित्वातिमृत्युमेति नान्यः पन्था" इत्याद्याः श्रुतयः अत्र मृत्यु-शब्देनाविद्याऽभिधीयते ।

टी० "यदा ह्यी"ति अदृश्ये-प्रत्य[1]क्षाद्यविषये । अनात्म्ये-आत्म्यं-व्याप्यं शरीरम् अशरीरे । अनिरुक्ते-अनामनिर्वचनीये । अनिलयने-अनाधारे अभयम्-अभयार्थम्, अव्ययीभावसमासः, प्रतिष्ठानिष्ठात्वादिभिर्बन्धमूलत्वेनाभ्युपगतस्य कर्मणोऽप्यविद्याकल्पितत्वात् तस्यापि ज्ञानेन निवृत्तिमाह "भिद्यत" इति हृदयग्रन्थिरविद्यादि । पूर्ववाक्येषु किंचिद्भेदः प्रतीयत[2] इव भातीति तद्व्यावृत्तये ज्ञानस्य ऐक्यविषयत्वज्ञापनाय ऐक्यापत्तिं फलं दर्शयति "ब्रह्म वेदे"ति यथोपासनं हि फलम् । अत ऐक्यज्ञानमेव बन्धनिवर्त्तकमिति भावः । उपायान्तरनिषेधार्थमुदाहरति "तमेवे"ति नात्राविद्यानिवृत्तिः प्रतीयते तद्वाचिशब्दाश्रवणादित्यत्राह "अत्रे"ति "मृत्युर्धावति पञ्चम" इत्यादेर्मृत्युशब्दस्य यमादिषु प्रयोगदर्शनात्तद्व्यावृत्त्यर्थमुक्तं "मन्त्रे"ति बन्धनिवृत्तिपरवाक्येष्वित्यर्थः । तत्र प्रयोगं दर्शयति ।

मू० यथा सनत्सुजातवचनम् । "प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमी"ति । "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्मे"त्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च । "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद" । "आत्मेत्येवोपासीत" "तत्त्वमसि" "त्वं वा अहमस्मि भगवो देवते? अहं च त्वमसि भगवो देवते ?

१ दृशधातोर्ज्ञानसामान्यार्थत्वमिति भावः ।
२ प्रतीत इति भवतीति पुस्तकान्तरस्थः पाठः ।

टी० "यथे"ति । प्रमादं वै-इति वचनात् पूर्वत्र मोहो मृत्युः संमतो यः कवीनामित्युक्तं मोहो-विपरीतज्ञानं तन्मृत्युरिति, परमतं, सनत्सुजातस्य तु प्रमादो मृत्युर्मतः प्रमादो-यथावद्प्रतिपत्तिः स्वरूपाग्रहणे हि अन्यथा प्रतिपत्तिः, तस्मान्मोहस्यापि हेतुरात्मन्यनवधानरूपः प्रमाद इति तद्धेतुभूताविद्यैव प्रमाद-शब्देन विवक्षितेति सैव मृत्युरित्यभिप्रायः उपात्तेषु वाक्येषु ज्ञानस्याविद्यानिवर्त्तकत्वं प्रतिपन्नं ब्रह्मणो निर्विशेषचिन्मात्रत्वं, तेनात्मन एकत्वविज्ञानं निवर्त्तकमिति च न प्रतिपन्नमित्यत्राह "सत्यं ज्ञानमि"ति सत्यज्ञानादिसर्वेषामन्यव्यावृत्तत्वप्रदर्शनार्थमुपात्तं, पुरुषार्थत्वायासुखाद्व्यावृत्तिज्ञापनार्थमुपात्तं "विज्ञानमानन्दमि"ति आदि-शब्देनास्थूलमित्यादि गृह्यते, एवं ब्रह्मणो निर्विशेषत्वे शोधकवाक्यान्युदाहृतानि । अथ ब्रह्मैक्यप्रतिपत्तौ श्रुतिमुपादत्ते । "अथ य"इति अथ योऽन्यामित्यैक्योपासनविधिर्भेदवासनानिरासार्थः, विहितोपासनस्यैक्यविषयतां ज्ञापयितुमैक्योपदेशं दर्शयति । "तत्त्वमसी"ति उपदेशानुगुणमुपासकोदेवतां प्रत्याह । "त्वं चे"ति उपदिष्टार्थमात्मन्यनुसंधत्ते ।

सू० "तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यादिवाक्यसिद्धम् । वक्ष्यति चैतदेव "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति तथा च वाक्यकारः "आत्मेत्येव तु गृह्णीयात्" सर्वस्य तन्निष्पत्तेरित्यनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता । ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यज्ञानेन क्रियते ।

टी० ॥ "तद्योऽहमि"ति अस्यार्थस्य श्रुतिविवक्षितत्वसिद्धये सूत्रं दर्शयति "वक्ष्यति चे"ति "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" "आत्मेत्युपासीत तथाऽभ्युपगच्छन्ति मुमुक्षव उपासन इत्यर्थः । ग्राहयन्ति च ज्ञापयन्ति च तथा शास्त्राणि, सूत्रकाराभिप्रायविदां वाक्यं दर्शयति "तथा चे"ति तन्निष्पत्तेस्तत्र कल्पितत्वादित्यर्थः । न केवलं श्रुति,स्तदनुग्राहकत-

कोऽप्यस्तीत्याह। "अनेन चे"ति चः समुच्चये कर्मनिरपेक्षज्ञाननिवर्त्यत्वायाह "मिथ्यारूपस्ये"ति हेतुत्वं गर्भितं, सकारणस्याविद्याभेददर्शनसहितस्य बन्धस्य निवृत्तिर्युक्ता, न हि मिथ्यासर्पनिवृत्तौ नायं सर्पो रज्जुरेषेति ज्ञानादृते कर्मापेक्षास्तीति भावः । अथानुमानागमयोर्व्याप्तिग्रहणलिङ्गदर्शनधर्मिप्रतिपत्त्यर्थं व्युत्पत्त्यर्थं च प्रत्यक्षसापेक्षत्वादनुग्राोऽभिनद्रोऽयत्वात्, "आदित्यो यूपः" "यजमानः प्रस्तर" इत्यादिषु अनुमानागमौ प्रत्यक्षविरुद्धार्थप्रतिपादनाशक्तौ दृष्टौ, तस्माच्च प्रत्यक्षविरुद्धार्थप्रतिपादनक्षमा श्रुतिरित्यभिप्रायेण भेदवादी चोदयति

"ननु चे"ति श्रुतिवाक्येष्ववान्तरचोद्येषु परिहृतेष्विदमपि चोद्यमस्तीति चार्थः, स्वाप्नादिषु सर्पभूदलनादिषु च कतिपयभेदनिवृत्तिर्दृष्टा तद्व्यावृत्त्यर्थः सकल–शब्दः । अत्र किं प्रत्यक्षत्वाच्च बाध्यत्वम्? उत परोक्षत्वान्मूलित्वाच्च न बाधकत्वम्? इति शङ्काद्वयं हृदि निधाय प्रथमं प्रत्यक्षत्वादबाध्यत्वमित्येतत्परिहरति ।

**सू० कथं वा रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते? तत्र द्वयोः प्रत्यक्षयोर्विरोधः, इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत्। तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः? पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत् शास्त्रप्रत्यक्षयोरपि समानमेतत् ।**

टी० ॥ "कथं चे"ति स तु प्रत्यक्षाभास इति चेत् न प्रतीतिदशायामाभासत्वानवगमात् पश्चात्प्रमाणबा[१]धेन ज्ञायत इति चेत् प्रपञ्चग्राहिप्रत्यक्षस्यापि तुल्यं, भेदस्य श्रुतिबाधादित्येतदत्राभिप्रेतम्। मूलित्वात्परोक्षत्वाच्च न बाधकं शास्त्रमिति शङ्कते "तत्रे"ति "इह त्वि"ति तुल्यत्वव्यावृत्तये तु–शब्दः "प्रत्यक्षमूलस्ये"ति मूलित्वाच्च शास्त्रं बाधकमिति भावः, तुल्यत्वे प्रयोजके सति बाध्यबाधकभावोविपर्ययेणापि स्यादिति

१ प्रमाणाबाधेनेति पुस्तकान्तरपाठस्तु पुनरयुक्त एवानन्वितार्थत्वादिति ध्येयम्।

तदप्रयोजकम्, अतस्तत्र बाध्यबाधकभावे प्रयोजकान्तरं त्वया वक्तव्यं तदेवास्माकमपि प्रयोजकमित्यभिप्रायेणाह "तुल्ययो"रिति बाध्यबाधकभावानियमव्यावृत्तये। भेद[1]बाधाभिमतत्वेन प्रयोजकान्तरं शङ्कते "पूर्वोत्तरयो"रिति पूर्वोत्तरयोर्बाध्यबाधकयोस्त्वदुक्तं प्रयोजकमत्रापि तुल्यमित्याह "शास्त्रे"ति मूलमूलित्वादिसद्भावे मूलस्य प्रत्यक्षस्य च बाधकत्वमितरस्य बाध्यत्वं च दृष्टम्, अतो मूलमूलित्वपरोक्षत्वापरोक्षत्वादिवैषम्यराहित्ये सति दुष्टकारणजन्यत्वतदभावौ बाध्यबाधकभावे प्रयोजकाविति शङ्कायामाह

**सू० एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्व—सापेक्षत्व—निरपेक्षत्वादि न कारणं ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् । तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते, एवं च सति द्वयोः प्रमाणयोर्विरोधे**

टी० ॥ "एतदुक्तमि"ति तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावावप्रयोजकावित्यभिप्रायेण तुल्य—शब्दः प्रयुक्तः, विशिष्टस्य हेतुत्वे विशेषणांशस्यापि हेतुत्वात्तुल्यशब्देनैकदेशोपादानं, दुष्टकारणजन्यत्वतदभावविशेषणीभूतं तुल्यत्वं विवक्षितं तुल्यत्वे सति विपरीतप्राबल्यदौर्बल्यकारणाभावे सति दुष्टकारणजन्यत्वतदभावौ न प्रयोजकावित्यर्थः । सापेक्षत्वनिरपेक्षत्वं मूल[2]मूलिभावः । आदि—शब्देन परोक्षापरोक्षभावविलम्बाविलम्बा विवक्षिताः श्रुतिलिङ्गादिषु विलम्बाविलम्बाभ्यां हि प्राबल्यदौर्बल्ये । यद्वा[3] अप्रयोजकत्वेनोक्तं तुल्यत्वं दृष्टान्ततयाऽनुदितं वैषम्यान्तराभावे सति दुष्टकारणजन्यत्वतदभावावप्यादि—शब्देन विवक्षितौ, एतेषामप्रयोजकत्वमेकेन दृष्टान्तेनोपपादयति "ज्वाले"ति अन्यथेत्यध्याहर्तव्यम् "प्रत्यक्षोपमर्दायोगा"दिति अयोगप्रसङ्गादित्यर्थः, ज्वालाभेदानुमाने हि मूलमूलिभावोऽस्ति विल-

१ भेदबाध्यभिमतत्वेनेति पुस्तकान्तरपाठः ।

२ यथा प्रत्यक्षानुमानयोरनुमानं मूलीति स्वमूलं प्रत्यक्षमपेक्षत इति तन्मुखनिरीक्षणसापेक्षं तन्निर्बलमिति प्रत्यक्षबाध्यं विशेषस्त्वात्रत्योमदीयप्रमाणपरीक्षायां निरीक्षणीयः ।

३ यद्वेति पुस्तकान्तरपाठः ।

म्बाविलम्बौ च प्रत्यक्षसापेक्षत्वादनुमानस्य तुल्यत्वे सति दुष्टकारणजन्यत्व तदभावयोः प्रयोजकत्वमप्यनेन व्युदस्तं भवति तद्राहित्येपि बाध्यबाधकभावदर्शनात् । तत्र किंविषयं प्रत्यक्षं बाध्यमित्यत्राह? "तत्र ही"ति ऐक्यग्राहिप्रत्यक्षं बाध्यमित्यर्थः । तर्हि किं प्रयोजक?मित्यत्राह "एवं चे"ति तुल्यत्वादीनां प्रयोजकत्वेऽनुपपन्ने सति "द्वयोरि"ति प्रत्यक्षयो,रनुमानयो,रागमयोः,प्रत्यक्षानुमानयो, रागमानुमानयोः, प्रत्यक्षागमयोर्वेत्यर्थः ।

सू० यत्संभाव्यमानान्यथासिद्धि तद् बाध्यम् । अनन्यथासिद्धमनवकाशमितद् बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति, तस्मादनादिनिधनाविच्छिन्नसंप्रदायासंभाव्यमानदोषगन्धानवकाशशास्त्रजन्य—

टी० यत्संभाव्यमानान्यथासिद्धी"ति सावकाशत्वादन्यथासिद्धमित्यर्थः, अनन्तरमनन्यथासिद्धमनवकाशमित्युक्तेः, विषयान्तरलाभोऽप्रमाणकोटिनिवेशो वा सावकाशत्वं, तेन स्वोपस्थापितार्थविषयप्रामाण्यं विनापि संभावितोदयत्वमन्यथासिद्धत्वं विरुद्धार्थप्रमाणाबाधेनापि संभवदुदयमिति यावत् "अनन्यथासिद्धमनवकाशमि"ति अनन्यथासिद्धत्वं नाम तदर्थप्रमाणतां विनाऽनुदयत्वं विरुद्धार्थप्रमाणाबाधेनानुदयत्वमिति यावत् तच्चानवकाशत्वात्, अनवकाशत्वं नाम विषयान्तरालाभोऽप्रमाणकोटिनिवेशाभावो वा, अप्रमाणकोट्यनन्तर्भाव–विषयान्तरलाभाभावाभ्यां विरुद्धार्थोपस्थापकप्रमाणाबाधेनानुदयत्वमित्यर्थः । इति सर्वत्र उक्तप्रकारेण सजातीययोर्विजातीययोर्वा प्रमाणयोर्विरोध इत्यर्थः । एवं बाध्यबाधकभावे प्रयोजकमस्तु ततः किं प्रस्तुतशास्त्रप्राबल्यस्ये?त्यत्राह "तस्मादि"ति तस्मात्–अन्यथासिद्धत्वानन्यथासिद्धयोरेव बाध्यबाधकभावे प्रयोजकत्वात् । अनादिनिधनाविच्छिन्नसंप्रदाये"ति अविच्छिन्नसंप्रदायत्वादनादिनिधनं संप्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वं ह्यपौरुषेयत्वसाधकम् । "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः

प्रसूतयः" "अनादि निधनं ब्रह्मे"त्यादिवचनानि चानादिनिधनशब्देन स्मारितानि, अत एवासंभाव्यमानदोषगन्धं, पौरुषेयत्वप्रयुक्तं हि भ्रमविप्रलिप्साप्रमादाशक्तिरूपदोषचतुष्टयवत्त्वम् । अत एवानवकाशम् । शास्त्रजन्यशब्दस्यावबोधशब्देनान्वयः ।

मू० निर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन संभाव्यमानदोष—सावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव ।

टी० बाध्यबाधकभावाङ्गीकारस्य विरोधसापेक्षत्वाद्विरोधं दर्शयति "निर्विशेषेत्या"दिना नित्यं—कालापरिच्छिन्नं शुद्धम्—अविद्यारहितम्—अत एव मुक्त—शब्दोऽविद्याकृतजन्मादिराहित्यपरः—बुद्धम्—भासमानं स्वप्रकाश—शब्दः पूर्वं बुद्ध—शब्दोक्तभासमानत्वस्य पराधीनत्वव्युदासार्थः । स्वयमेव प्रकाशस्वभावत्वं स्वप्रकाशत्वं, तच्च चिन्मात्रशब्दवाच्यत्वात्, स्वयंप्रकाशत्वं हि चित्त्वं चित्स्वरूपत्वं च श्रुतिसिद्धं मात्र—शब्दोज्ज्ञेयत्वव्युदासपरः, ब्रह्मात्मभावावबोधेन—एवं भूतस्य ब्रह्मणः स्वस्य चैक्यावबोधेनेत्यर्थः । "संभाव्यमाने"ति संभाव्यमानदोषत्वात् सावकाशम्—अप्रमाणकोटौ लब्धनिवेशम् । अत एवान्यथासिद्धत्वमपि फलितम् । अन्यथासिद्धत्वं विपरीतप्रमाणमबाधित्वाप्युदयसंभवः "प्रत्यक्षादी"ति आदि—शब्दादनुमानादिकमुच्यते "विविधे"ति देवादिरूपेण स्वकार्यजन्मजरामरणादिरूपेण च विविधो ज्ञातृज्ञेयादिविकल्पः, स एव बन्धस्तन्निवृत्तिरित्यर्थः । संभाव्यमानदोषश्च कः? इत्यत्राह ।

मू० संभाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्या दोषः ।

टी० ॥ "संभाव्यते चे"ति भेदप्रपञ्चो—भेदसमुदायः । यद्वा भेदरूपः—प्रपञ्चः, विविधविकल्पशब्दः प्रपञ्चविशेषणं भेदविशेषणं वा, भेदो—

१ लब्धावसरत्वमेवेहान्यथासिद्धत्वं न तु वैशेषिकवत् ।

ज्ञातृज्ञेयादिः, स च ब्राह्मणादिरूपेण विविधः–देवमनुष्यादिरूपेण विकल्पवान्, अर्वाचीनाः केचित्काचतिमिरादिकं दोषमाचक्षते तदयुक्तं, तस्य क्वाचित्कत्वात् काचादिदुष्टं प्रत्यक्षं सपक्षीकृत्य व्यतिरिक्तस्य काचादिदुष्टत्वमनुमीयत इति चेत् न। अतिप्रसङ्गात् अनादिनिधनत्वेन यच्छास्त्रमुक्तं तस्यापि शब्दत्वादिना दुष्टकर्तृकत्वानुमानं हि सुशकं, तत्र कर्ता योग्यानुपलम्भनिरस्त इति चेत्, तदत्रापि तुल्यमिति काचादिदोषत्वकल्पनाऽनुपपत्त्यातद्व्यावृत्त्यर्थमाह "अनादी"त्यादिना भेदवासनादिरूपा–आदि–शब्देन भेदवासनाहेतुभूतं भेददर्शनं विवक्षितम्। अनयोर्हेतुहेतुमद्भावादन्योन्याश्रयपरिहाराय अनादि–शब्दः, बीजाङ्कुरन्यायादिति भावः. भेददर्शनं भेदवासना च हि कार्याविद्या, अत उक्तं "भेदवासनादिरूपाविद्ये"ति "आदित्यो यूप इत्यादिषु यूपादित्यैक्याद्यप्रतिपादनं न प्रत्यक्षविरोधात् किं त्वन्यपरत्वात् "यत्परः शब्दः स शब्दार्थ" इति हि न्याययविदः, अन्यपरत्वं च तात्पर्यलिङ्गाभावादवगम्यते "आदित्यो यूप" इति वाक्यं यूपाञ्जनविधिशेषत्वादन्यपरमिति परस्याभिप्रायः। यच्चिदोषमुक्तं तत्रापि बाध्यबाधकत्वनिमित्तभूतोऽर्थविरोधोऽस्ति, अतोऽवश्यमन्यतरस्य बाध्यत्वं स्यात् तत्र यद् बाध्यत्वे प्रयोजकं दुष्टकारणजन्यत्वं तत्तु नास्ति कथमत्र निर्वाह? इत्याशयेन चोदयति–

सू॰ नन्वनादिनिधनाविच्छिन्नसंप्रदायतया निर्दोषस्यापि शास्त्रस्य "ज्योतिष्टोमेन स्वर्गकामो यजेते" त्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत। सत्यम्।

टी॰॥ "नन्वि"ति प्राबल्यदौर्बल्यहेतुर्नास्तीत्याह "अनादी"ति। अपिर्विरोधसूचकः। अर्थविरोधं दर्शयति "भेदावलम्बिन" इति सत्यमित्यर्द्धाङ्गीकारे भेदावलम्बिनो बाध्यत्वमङ्गीकृतं, दुष्टकारणजन्यत्वेऽनङ्गीकारः। अन्यथासिद्धत्वानन्यथासिद्धत्वयोरेव बाध्यबाधकभावे प्रयोजक-

२ न्यायेयुक्तिः।

त्वम् । पूर्वोक्तं दुष्टकारणजन्यत्वमपि हि अन्यथासिद्धिप्रकारविशेषः। अत्रापि मुखभेदेनान्यथासिद्धिमुपपादयति ।

सू० पूर्वापरावच्छेदे पूर्वशास्त्रवत् मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव ।

टी० ॥ "पूर्वापरे"त्यादिना अपच्छेदन्यायात् बाध्यत्वं प्रत्यक्षस्यापि तुल्यं, तत्र दोषमूलत्वं च बाध्यत्वेऽधिकहेतुः, अपच्छेदे पूर्वापरशास्त्रयोः पौर्वापर्यं प्रमित्युत्पत्तिक्रमात्र पाठक्रमात् "पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्त्तारमुद्गाता उद्गातारं ब्रह्मा ब्रह्माणं यजमान"इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते "बहिष्पवमानं प्रसर्पतां यद्युद्गाताऽपच्छिद्येत अदक्षिणः स यज्ञः संस्थाप्यस्तेन पुनर्यजेत तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात् अथ प्रतिहर्त्ता–

टी० ऽपच्छिद्येत सर्ववेदसं दद्या"दिति, तदिदं शास्त्रद्वयं विषयः, अत्रोद्गातृप्रतिहर्त्रोः प्रयोगभेदेनापच्छेदे स्वं स्वं प्रायश्चित्तशास्त्रं प्रवर्तते एकस्मिन् प्रयोगे यौगपद्येनापच्छेदे सति उद्गातुः प्रायश्चित्तं प्रवर्त्तते, तस्य वर्गप्रधानत्वात् प्रधानापच्छेदस्यैव समाधेयत्वात्, विकल्पेनानुष्ठानं वा एकस्मिन्नेव पौर्वापर्येणापच्छेदे पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं, परस्य प्राबल्यं च कर्ममीमांसायामुक्तं "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदि"ति अत्रानुपसंजातविरोधित्वेन पूर्वमुदयात् पूर्वस्य प्राबल्यं, परस्य सत्प्रतिपक्षतयैवोदयाद्दौर्बल्यमिति पूर्वः पक्षः, राद्धान्तस्तु पूर्वस्योत्पत्तिकाले विरोध्यभावात्तदबाधेनाप्युत्पत्तिः संभवति, परस्य तु स्वोत्पत्तिकाले विरोधिसद्भावात्तदबाधेनोत्पत्त्यनुपपत्त्या पूर्वमबाधित्वैवोत्पन्नमित्यनन्यथासिद्धत्वादुत्तरस्य प्राबल्यमिति पूर्वबाधेन नोत्पत्तिरुत्तरस्य सिद्ध्यतीति हि न्यायविदः, ननूत्तरशास्त्रमुदयेत चेत् पूर्वाबाधेनानुदयः स्यात् पूर्वशास्त्रमुत्तरोत्पत्तिबन्धकं किञ्च स्यात्, नैवं निमित्तस्योत्पन्नत्वात् नैमित्तिकं हि शास्त्रमुदितमेव

१ मुखभेदः प्रकारान्तरावलम्बनं तेनेत्यर्थः ।

तत्रोत्तरस्योत्थानः पूर्वाबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधितमेव । किंच यथोदितदक्षिणाकत्वेन कर्मसमापनं हि शास्त्रेण पूर्वमेव स्वतः प्राप्तं, तत्तु प्रायश्चित्तशास्त्रेणान्यथाकृतम्, एवं पूर्वसिद्धान्यथाकरणमकरणत्वादत्रापि पूर्वमेव बाध्यत इति कर्मविचारे निश्चितम् । एवमुत्तरशास्त्रस्येव मोक्षशास्त्रस्य निरवकाशत्वात् भेदावलम्बि शास्त्रं पूर्वशास्त्रवत् बाध्यत इत्यर्थः । परत्वं च पाठक्रमादर्थक्रमाच्च त्रिवर्गफलत्वेन, कर्मणि हि प्रथमप्रावण्यं निरूपकस्य तत्त्वपरस्य मुमुक्षा तादृशपौर्वापर्यरहितेषु विरोधिगर्भेषु वेदान्तवाक्येषु सगुणोपासनपरेषु कथन्निर्वाह? इत्यत्राह ।

भा० वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात्परस्य ब्रह्मणः, ननु च "यः सर्वज्ञः स सर्ववित्" "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया" च "स सत्यकामः सत्यसंकल्प इत्यादि ब्रह्मस्वरूपप्रतिपादनपराणां कथं बाध्यत्वं? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः—एतदुक्तं भवति "अस्थूलमनण्वह्रस्वं सत्यं ज्ञानमनन्तं ब्रह्म "निर्गुणं निरञ्जन"-मित्यादिवाक्यानि—

टी० ॥ "वेदान्तवाक्येष्वपी"ति अपिः समुच्चये पूर्वोत्तरभागयोर्विरोधः परिहृतः,उत्तरभागे च विरोधः परिह्रियत इत्यर्थः । कथमत्रापच्छेदन्यायावतार? इत्यत्राह 'निर्गुणत्वादि' ति पर—शब्देनार्वाचीनसगुणब्रह्मव्यावृत्तिः. । अपच्छेदन्यायावतरणफलभूतनिर्गुणावबोधदर्शनादपच्छेदन्यायोऽवतीर्ण इति बोद्धव्यमित्यर्थः । "जक्षत्क्रीडन्रममाण इत्यादिफलश्रुतेस्तात्त्विकत्वातात्त्विकत्वनिरूपणानादरेण प्रथमं सगुणोपासने प्रावण्यं, निरूपको हि निर्गुणपरब्रह्मवेदनाधिकारीति तत्र पौर्वापर्यमिति भावः, उपासनपरसगुणनिर्गुणवाक्ययोः फलद्वारा पौर्वापर्यमुक्तं, तत्तु स्वरूपपरसगुणनिर्गुणवा-

क्ययोर्नास्तीति कथं तत्र बाध्यबाधकभाव? इति चोदयति "ननु चे"ति विधिनिषेधरूपं पौर्वापर्यं हृदि निधायाह "निर्गुणे"ति कानि निर्गुणवाक्यानि? कथं तेषां सामर्थ्यं? मित्यत्राह "एतदुक्त"मिति अस्थूलेत्यादि-वाक्यं गुणविशेषनिषेधपरं सत्यज्ञानादिवाक्ये व्यावृत्तिगर्भिता निर्गुणमित्यादिवाक्यं गुणसामान्यनिषेधपरम् आदि-शब्देन यत्तदद्रेश्यमित्यादि गृह्यते । विरोधं स्फोरयति ।

सू० निरस्तसमस्तविशेष–कूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति इतराणि च, सगुणम्, उभयविधवाक्यानां विरोधेऽनेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदपहीनम् ।

टी० ॥ "निरस्ते"ति कूटस्थ–शब्दोनिर्विकारत्ववाची सर्वाधिष्ठानवाची वा कूटवत्तिष्ठतीति हि कूटस्थः, नित्यचैतन्यमित्यन्तैः पदैरुदाहृतनिर्गुण इत्यर्थः संक्षिप्तः । इतराणि–यः सर्वज्ञ इत्यादीनि पूर्वापात्तानि वाक्यानि चस्समुच्चये सगुणनिर्गुणपरत्वादुभयविधवाक्यविरोधः, तेनैव पूर्वोत्तरभागविरोधे य उत्तरस्य प्राबल्यहेतुरुक्तस्तेनैवेत्यर्थः । निर्गुणवाक्यानां बलीयस्त्वं कुत? इत्यत्राह "गुणापेक्षत्वेन परत्वादि"ति निषेध्यविषयोनिषेध उदेति न हि निर्विषयो निषेधः, प्रागेव प्रसक्तस्य विषयस्य प्रतिषेध्यत्वम् । अतोनिषेध्यसापेक्षत्वेन निषेधस्य परत्वमित्यर्थः । सगुणवाक्यवैयर्थ्यमप्युपासनशेषत्वात् परिहृतमित्यभिप्रायेण न किंचिदपहीनमित्युक्तम् । यद्वा "यः सर्वज्ञ इत्यादिवाक्यानामप्युपासनशेषत्वाभिप्रायेणाह "वेदान्तवाक्येष्वपीत्यादिना । उपासनपराणामिति तान्यपि वाक्यानि फलविशेषार्थमुपासनपराणि न तु तत्त्वपराणीति भावः । अपच्छेदन्यायावतारमुपपादयति "निर्गुणत्वादि"ति पूर्ववदर्थः । निर्गुणत्वमसिद्धं पूर्वपरभावाभावेनापच्छेदन्यायानवकाशात् गुणानां बाध्यत्वासिद्धेः । अत एव सगुणवाक्यानां वैयर्थ्यपरिहारश्च न घटते स्वरूपपरतयैव प्रतिपन्नानामुपासनपरत्वकल्पनं हि बाध्यत्वसिद्ध्यधीनमिति चोदयति–

सू० ननु च "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते, नेत्युच्यते सामानाधिकरण्येनैकार्थत्वप्रतीतेः ।

टी० "ननु चे"ति परिहरति "निर्गुणे"ति अन्यत्सर्वं पूर्ववदेव । निर्गुणवाक्यैः सहोपात्तस्य सत्यज्ञानादिवाक्यस्य सगुणपरत्वबुद्ध्या चोदयति "ननु चे"ति चश्चोद्यसमुच्चये सत्यज्ञानादयो गुणाः प्रतीयन्त इत्यत्र सत्यज्ञानशब्दौ सत्यत्वादिपरौ यथा "द्व्येकयोर्द्विवचनैकवचने" इति पाणिनीयसूत्रस्यद्व्येकशब्दौ द्वित्वैकत्वपरौ, अन्यथा द्व्येकेष्विति वक्तव्यं तथा श्रीवत्साङ्कमिश्राः–"गुणाः सत्यज्ञानप्रभृतय उते"ति एतद्वाक्यवैशद्याय प्रथमं सामानाधिकरण्यं निरूप्यते, तद्धि विशदतरमुपन्यस्तं प्रमेयमालायामाचार्यपादैः, तथा हि भगवता पतञ्जलिना "लटः शतृशानचावप्रथमासमानाधिकरणे" "तत्पुरुषः समानाधिकरणः कर्मधारय" इत्यादि सूत्रस्य समानाधिरणशब्दविवरणार्थं सामानाधिकरण्यलक्षणमुक्तं "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति"–अस्यार्थः–प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तं प्रकृष्टा वृत्तिः प्रवृत्तिः शब्दस्यार्थे वृत्तिर्नाम तद्बोधनं, तत्र विशेष्यभूतप्रधानार्थविषया वृत्तिः प्रवृत्तिः, विशेष्यप्राधान्यं च गुणानां प्रतिपत्तिर्हि गुणिप्रतिपत्त्यर्थेत्यनेन सिद्धं, तस्याः प्रवृत्तेर्निमित्तं द्वारं "निमित्तमात्रं भव सव्यसाचिन्"? इत्यादिप्रयोगात् तच्च विशेष्यीभूतं जातिगुणादिकं समानमेकमधिकरणं विशेषणानामाधारभूतं विशेष्यम् । एकस्मिन्नर्थे वृत्तिरित्येक–शब्देन सामान्यशब्दस्य सदृशार्थपरत्वं व्युदस्तं, समानशब्दसामर्थ्यादेकशब्दः साधारणपरः समानशब्दो हि साधारणे प्रयुज्यते "समानकर्तृकयोः पूर्वकाल"इति, अर्थशब्दश्च विशेष्यभूतप्रधानाभिधेयपरः, अनेनाधिकरणशब्दोविशेष्यपरत्वेन व्याख्यातः, एतदुक्तं भवति–त्रिविधाः शब्दाः केचिद्विशेषणतो विशेष्यतश्चैकार्थाः–यथा घटः कुम्भः, नीलं कृष्णमित्यादयः । केचिच्चोभयतश्च भिन्नार्थाः, यथा गौरश्वः पुरुषो महिषः, नीलं शुक्लं पीतमित्यादयः, केचिच्च विशेषणतो भिन्नार्था विशेष्यतश्चैकार्थाः यथा नीलमुत्पलं, देवदत्तः श्यामो युवा लोहिताक्ष इत्यादयः, तत्र पूर्वकोटिद्वय-

व्यावृत्ततृतीयकोटिनिविष्टानां शब्दानां सामानाधिकरण्यं तत्र भिन्नप्रवृत्तिनिमित्तानामित्यनेन विशेषणतो विशेष्यतश्चैकार्थानां घटः कुम्भ इत्यादीनां न सामानाधिकरण्यमित्युक्तम्, एकस्मिन्नर्थे वृत्तिरित्यनेन चोभयतोभिन्नार्थानां गौरश्वो महिष इत्यादीनां न सामानाधिकरण्यमित्युक्तं, तस्माद्विशेषणतो भिन्नार्थानां विशेष्यतश्चैकार्थानां नीलमुत्पलमित्यादीनामेव सामानाधिकरण्यमिति, तत्र प्रवृत्ति–शब्दयोरेवं वार्थः प्रवृत्तिरभिसंधानं तस्य निमित्तमभिधेयम्, अर्थ–शब्दश्चाभिधेयवचनः, भिन्नाभिधेयानां शब्दानामेकस्मिन्नभिधेये वृत्तिः सामानाधिकरण्यं भिन्नविशेषणाभिधायिनां शब्दानामेकस्मिन्विशेष्ये वृत्तिः सामानाधिकरण्यमित्युक्तं भवति, भिन्नपदसामर्थ्येन निमित्तशब्दनिर्दिष्टं विशेषणभूतमभिधेयम्, एकशब्दसामर्थ्येन चार्थशब्दनिर्दिष्टविशेष्यभूतमभिधेयमित्यवगम्यते अत उभयथाप्यनेकविशेषणाभिधायिनां शब्दानामेकस्मिन्विशेष्ये पर्यवसानं सामानाधिकरण्यमिति भिन्नप्रवृत्तिनिमित्तानामित्यादिसामानाधिकरण्यलक्षणवाक्येनोक्तं भवति, उक्तादर्थादपि पूर्वोक्तस्साधीयान् समानाधिकरणपदेषु प्रातिपदिकं विशेषणान्वयपरं तत्स्थसमानविभक्तिर्विशेष्यैक्यपरा समानविभक्त्यैक्यबोधनं वृत्तिशब्देन विवक्षितं, तेन राजा तस्य पुत्रश्च दर्शनीयावित्यत्र राजतच्छब्दयोः सामानाधिकरण्यव्यावृत्तिः, तत्र हि प्रकृतपरामर्शितच्छब्दप्रातिपदिकादैक्यावगमः, न तु समानविभक्त्या । ननु नीलान्युत्पलानीत्यत्र सामामाधिकरण्यं न स्यात् विशेष्यबहुत्वादेकार्थवृत्तित्वानुपपत्तेः, नैवम् एकस्मिन्निति पदस्य समभिव्याहृतपदान्तरोपस्थापिताकारानधिकरणत्वव्यावृत्त्यर्थत्वात् तत्तत्पदोपस्थापितानेकविशेषणापेक्षया साधारणत्वं ह्येकशब्दार्थः, न हि नीलान्युत्पलानीत्यत्र नीलत्वानधिकरणेषूत्पलत्वं वर्त्तते अतस्तत्र सामानाधिकरण्यमुपपन्नम्, अतः सामानाधिकरण्यलक्षणग्रन्थस्य यथोक्त एवार्थ इति, अत्र मृषावा[1]दिन आहुः समानाधिकरणवाक्यमखण्डार्थं, तथा हि सामानाधिकरण्यस्य तावदेकार्थपरत्वमविगीतं तत्र समानाधिकरणप-

(१) अत्र मृषावादिपदेन जगन्मृषात्ववादिनः शाङ्कराअभिधीयन्ते ।

दानि किं विशेषणमात्रपराणि उत तद्विशेषणविशिष्टपराणि उत स्वरूपमात्रपराणी?ति विवेचनीयं न तावद्विशेषणमात्रपराणि विशेषणानामनेकत्वादेकार्थत्वासिद्धेः, नापि विशिष्टपराणि विकल्पासहत्वात् किं क्रमेण युगपद्वा विशिष्टार्थप्रतिपादनं पदानां न तावत् क्रमेण तत्र किं प्रथमपदप्रतिपन्नस्य विशिष्टस्य पदान्तरं स्वोपस्थापितविशिष्टेन तादात्म्यं विदधाति;? उत विशेषणान्तरान्वयं, प्रथमे विशिष्टैक्ये विधीयमाने विशेष्यांशयोरिव विशेषणांशभूतयोर्जातिगुणयोरप्यैक्यं प्रसजेत्, द्वितीये च विशेषणानामन्योन्यसमवायप्रसङ्गः प्रथममेकेन विशेषणेन विशिष्टतयाऽवगतस्य वस्तुनः पश्चाद्विशेषणान्तरविशिष्टतया बोधनं हि विशेषणान्तरान्वयप्रतिपादनं, तत्र विशिष्टं प्रति विशेषणतयान्वीयमानं पूर्वविशेषणस्यापि विशेषणं भवतीति विशेषणानामन्योन्यविशेषणविशेष्यभावप्रसङ्गो हि दुर्वारः । अवर्जनीयं च पदानां क्रमेणार्थप्रतिपादनं, कुतः उद्देश्योपादेयविभागवत्त्वात् सर्ववाक्यानां, नापि युगपत् उद्देश्योपादेयविभागहानिप्रसङ्गेन युगपत्प्रतिपादनासंभवात्, संभवेऽपि विशेषणानां परस्परैक्यप्रसङ्गाच्च तथा हि प्रातिपदिकानां विशिष्टार्थपरत्वे प्रातिपदिकार्थैक्यपरस्य समानविभक्तिनिर्देशस्य विशिष्टैक्यपरत्वमवश्याश्रयणीयमिति विशेष्यैक्यवद्विशेषणानामप्यैक्यं प्रतिपाद्यं स्यात् तदनुपपत्त्या विशेष्यस्यापि नैक्यं प्रतिपादयितुमलं समानविभक्तिनिर्देश, किं च विशिष्टपरत्वे विशेषणविशेष्याभ्यामनेकार्थत्वं विशेषणबहुत्वाच्चानेकार्थत्वं, ततश्च सामानाधिकरण्यं न सिध्यति । किं च विशेषणानां व्यावर्तकत्वस्वभाव्याद्विशेषणभेदेन विशेष्यभेदप्रसङ्गो दुर्वारः, तथा हि भेदकं विशेषणं भेद्यं विशेष्यमिति विशेषणविशेष्ययोः स्वरूपविवेकः, दृश्यते च विशेषणानां विशेष्यभेदकत्वं यथा खण्डो, मुण्डः, घटः, पट, इत्यादिषु

ननु नीलमुत्पलं देवदत्तः श्यामो युवेत्यादिषु विशेषणभेदे विशेष्यैक्यं दृश्यते, नैष दोषः, तत्र हि स्वतः प्राप्तं विशेषणानां विशेष्यभेदकत्वं प्रत्यक्षविरोधेनापोद्यते प्रत्यक्षागोचरे तु ब्रह्मणि विशेषणभेदप्रयुक्तो विशेष्यभेदः केन वार्यते । तस्माद्वस्तुमात्रपरमेव सामानाधिकरण्यवाक्यं नीलमु-

न्तमित्यादिवाक्य इव सत्यादिवाक्येऽप्येकवचनान्तधर्मिवाचिपदैक्येन वि-
शेष्यैक्यसिद्धिरिति चेत् न, खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र विशेष्यभेदात् ।

ननु विशेषणभेदो न विशेष्यैक्यविरोधी प्रत्यक्षमेव तु तद्विरोधि
प्रत्यक्षगोचरे ब्रह्मण्येकवचनान्तधर्मिवाचिपदैक्येन स्वतःप्राप्तमेकत्वं
दुर्निवारमिति चेत् न, खण्डो मुण्डः पूर्णशृङ्गो गौरिति परोक्षविषयवाक्येऽपि
विशेष्यभेदप्रतीतेः, अतो न धर्मिवाचिपदैक्यं परोक्षे ब्रह्मण्यैक्यप्रतिपाद-
नक्षममन्यस्माद्विशेषणभेदप्रयुक्तो विशेष्यभेदो दुर्वारः, ततश्चैकार्थत्वं न
सिद्ध्यति, अतः पारिशेष्यात् समानाधिकरणपदानां स्वरूपमात्रप्रतिपादन-
परत्वमेवास्थेयम् । एवं तर्हि पदानां पर्यायत्वम् एकेनैव स्वरूपं प्रतिपन्न-
मिति पदान्तरप्रयोगवैयर्थ्यं प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यल-
क्षणहानिश्च प्रसज्येत नैवम् एकस्यैवार्थस्य तत्तदर्थविरोधिप्रत्यनीकपरत्वेन
पदानामर्थवत्त्वमपर्यायत्वं निमित्तभेदलाभात् सामानाधिकरण्यलक्षणसि-
द्धिश्च अत एव जगत्कारणत्वशङ्कितान् तत्त्वजडत्वपरिच्छिन्नत्वदोषव्या-
वृत्तिः सत्यज्ञानादिवाक्येन क्रियते ।

न च व्यावृत्तिरूपधर्मवत्त्वं ब्रह्मणः प्रसजति, ब्रह्मस्वरूपस्यैव सक-
लेतरव्यावृत्तिरूपत्वात्, यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्पदार्थस्वरू-
पमेव न धर्मान्तरं, धर्मान्तरानुपलम्भात् तदभ्युपगमेऽनवस्थानाच्च. अतः
कार्ष्ण्यव्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमिति पदानां शौक्ल्यस्वरूपमात्रविष-
याणां व्यावर्त्यभेदेन यथा न पर्यायत्वमर्थवत्त्वमेकार्थत्वं च, अत एव सामा-
नाधिकरण्यलक्षणवत्त्वं च, तथा सत्यादिपदानामपि व्यावर्त्यभेदेन न पर्या-
यत्वादिदोषप्रसक्तिः । नन्वेवं तत्तत्पदार्थविरोधिव्यावृत्त[1]परत्वे लक्षणा स्यात्
नैवम्, अबाध्योपस्थापने हि लक्षणा, यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गा-
पदस्य कूलोपस्थापने, न हि कूलं गङ्गापदवाच्यम्, अत्र तु सत्यादिपदानां
वाच्यैकदेशभूतविशेषणपरित्यागेऽपि, वाच्ये प्रधानांशभूतविशेष्यस्वरूपप्रति-

१ व्यावृत्तिपरत्वे इति पाठान्तरम् ।

१ समानशक्यताऽवच्छेदककत्वे सति विभिन्नशक्यतावच्छेदककत्वम्पर्यायत्वम् ।

पादनाच्च लक्षणाप्रसङ्गः, तथाऽपि विशिष्टवाचिनः शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यभङ्ग इति चेत् नैष दोषः, समानाधिकरणवाक्येष्वैकार्थ्यपरत्वबलात् विशेषणपरित्यागेन स्वरूपमात्रपरत्वमेव पदानां स्वारसिकं, तथा व्युत्पत्तेः, व्यधिकरणवाक्येषु तु पदानां विशिष्टपरता स्वारसिकी, लक्षणाऽभ्युपगमेऽपि न दोषः, वाक्यतात्पर्यानुगुणा हि लक्षणा तद्विरोधिमुख्यवृत्तेर्बलीयसी दृष्टा, यथा गङ्गापदे, समानाधिकरणवाक्यस्य हि ऐक्य एव तात्पर्यमिति सर्वसंमतम् ।

ननु सर्वपदानां लक्षणा न दृष्टा युक्ता च, केनचिन्मुख्यवृत्तेन तात्पर्ये निश्चिते हि पदान्तरलक्षणा युक्ता, सर्वपदलक्षणाऽङ्गीकारे किन्तात्पर्यनिश्चायकम्? उच्यते, दृष्टा तावद्विषं भुङ्क्ष्वेत्यादिषु सर्वपदलक्षणा, तत्र विषपदन्निषिद्धभोज्यं लक्षयति, भुङ्क्ष्वेति भोजननिवृत्तिं, तत्र योग्यतादिवशाद्वाक्यतात्पर्यनिश्चयः, सत्यादिवाक्येषु समानविभक्तिबलादैक्यतात्पर्यनिश्चयः, तद्विरोधाय प्रातिपदिकानां लक्षणा स्वीकृता, एकपदलक्षणायामपि वाक्यतात्पर्यविरोध एव हेतुः, यथा गङ्गायां घोष इत्यादिषु, तदविरोधे एकस्यापि न दृष्टा, यथा गङ्गायां मत्स्याः प्रतिवसन्तीत्यादिषु, अतो वाक्यतात्पर्याविरोधाय एकस्येव सर्वपदानां लक्षणा न दोषः, तस्मात्समानाधिकरणवाक्यं वस्तुमात्रपरमेवेति । एतदभिप्रायेण प्रत्यवतिष्ठते "नेत्युच्यत" इति, सत्यज्ञानादयो गुणाः प्रतीयन्त इति परिचोदिते नेत्युच्यत इति वदतोऽयं भावः प्रतीयन्त इति आपातप्रतीतिमात्रविवक्षा चेत्तया न किंचित्प्रयोजनं, प्रमितिविवक्षा चेत् न तु प्रमितिर्जातेत्युपपाद्यत इति कुत? इत्यत्राह सामानाधिकरण्यैनैकार्थत्वप्रतीतेरिति शङ्कते—

मू॰ अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत् अनभिधानज्ञो देवानाम्प्रियः, एकार्थत्वं नाम —सर्वपदानामर्थैक्यं, विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्ज्जनीयः ।

टी० "अनेके"ति, यथा व्यधिकरणवाक्येषु भिन्नार्थपर्यवसायिकारकपदार्थापरित्यागेऽपि प्रधानार्थस्य कार्यस्यैकत्वम् "अर्थैक्यादेकं वाक्यमि"त्यत्र निश्चीयते तथा समानाधिकरणवाक्येष्वपि विशेषणभूतगुणवाचिशब्दार्थापरित्यागेऽपि विशेष्यैक्यं सिद्धतीत्यर्थः। चोदयन्तमुपालभते "अनभिधानञ्च" इति व्यधिकरणसमानाधिकरणवाक्ययोरभिधानविशेषानभिज्ञ इत्यर्थः देवानाम्प्रियो—मेषः, अज्ञ इत्यर्थः, परिहरति "एकार्थत्व"मिति एकार्थत्वञ्चाम—सर्वपदानामेकाभिधेये पर्यवसानञ्च तु वाक्यस्येत्यर्थः, पृथक्पृथगर्थपर्यवसायिनां पदानामेकप्रधानार्थान्वयादर्थैकत्वं व्यधिकरणवाक्यएव, समानाधिकरणवाक्ये तु पदानामेवैकार्थपर्यवसायित्वमुक्तं भवति। ततः ? किं ? मित्यपेक्षायां समानाधिकरणपदानां विशेषणमात्रपरत्वे विशिष्टपरत्वे च दूषणमेकयन्थेनाह "विशिष्टे"ति, विशिष्टेत्यादिना कृत्स्नवाक्येन विशिष्टपक्षे दूषणमुक्तं विशेषणभेदेन विशेषणानामन्योऽन्यतोविशेष्याच्च भेदेन विशेषणैर्विशेष्येण चानेकार्थत्वं स्यादित्यर्थः । अर्थशब्दो विशेष्यपरतया च विवक्षितः, तेन विशेषणभेदेन विशेष्यभेदः स्यादिति दूषणान्तरमुक्तं भवति। किं च विशेषणभेदेन विशेष्यभेद इत्युक्ते व्यतिरेकवशाद्विशेष्याभेदे विशेषणाभेदश्च स्यादित्युक्तं भवति । विशिष्टैक्यप्रतिपादिका समानविभक्तिर्हि अविशेषण विशेषणैक्यमपि प्रतिपादयतीत्यर्थः । एवं विशिष्टपरत्वे युगपदभिधानपक्षे दूषणमुक्तं भवति, उद्देश्योपादेयविभागहानिप्रसङ्गश्चार्थसिद्धः, क्रमेणाभिधाने अन्योन्यसमवाय आनन्दमयाधिकरणे वक्ष्यते, विशेषणभेदेनार्थभेद इत्येतावतांऽशेन विशेषणमात्रपरत्वे च दूषणमुक्तं भवति, विशेषणानामनेकत्वादेकार्थत्वहानिरित्यर्थः । एवं पदानां प्रतिपाद्यभेदः प्रसज्जितः, ततः किमि ? त्यत्राह ।

मू० ततश्चैकार्थत्वं न सिद्ध्यति, एवं तर्हि सर्वपदानां पर्यायता स्यात् अविशिष्टार्थाभिधायित्वात् एकार्थाभिधायित्वेऽपि अपर्यायत्वमवहितमनाः शृणु, एकत्वतात्पर्यनिश्चयादेक-

स्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेन सर्वपदाना-मर्थवत्त्वमेकार्थत्वमपर्यायता च ।

टी० "ततश्चैकार्थत्वं न सिद्ध्यती" ति सामानाधिकरण्यलक्षणासिद्धि-रित्यर्थः । अतोवस्तुमात्रपरमिति परिशेषसिद्धं. तदनुवादेन चोदयति "एव-मि" ति एवं तर्हि—वस्तुमात्रपरत्वे, कुत ? इत्यत्राह "अविशिष्टार्थाभिधायि-त्वादि" ति, अनेन ततश्चैकार्थत्वं न सिद्ध्यतीत्यत्र फलितार्थो विवृतः । अत्र पर्यायत्वे चोद्ये प्रवृत्तिनिमित्तभेदाभावात् सामानाधिकरण्यलक्षणहानिः, एकेतरपदवैयर्थ्यं चेति चोद्यद्वयमभिप्रेतं, परिहरिष्यमाणत्वात् । उक्तं चोद्यं परिहर्तुमाह "एकार्थ" ति । अवहितमनाः शृणु—प्रतिवचनस्यानेकवाक्यसा-ध्यत्वान्मध्ये न चोदनीयं, किन्त्वर्थस्य गहनत्वादवधातव्यमिति भावः । अनुपपत्तित्रयं परिहरति "एकत्वे" त्यादिना एकत्वतात्पर्यनिश्चयः समा-नविभक्त्या अर्थवत्त्वं प्रयोजनवत्त्वं व्यावर्त्यभेदकृतव्यावृत्तिभेदादपर्यायत्वं व्यावृत्तिरूपप्रवृत्तिनिमित्तलाभात् सामानाधिकरण्यलक्षणसिद्धिः । व्याव र्त्यबहुत्वात् पदानां तद्व्यावृत्तिरूपप्रयोजनवत्त्वं चेत्यर्थः ।

मू० एतदुक्तं, भवति लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतर-पदार्थविरोधिरूपम् ।

टी० ॥ ननु तत्त्वमसीत्यादिवाक्यवदन्वयमुखेनोपलक्षणं स्यात् कि-मर्था व्यावृत्तिः, बहुत्वादनेकार्थत्वमापतितं व्यावर्त्याकारानन्त्यात् कतिप-यपदैर्न तद्व्यावृत्तिः शक्यते कर्तुं, ब्रह्मणो येभ्यो व्यावृत्तिः कानि च तानि वस्तूनि ? ब्रह्मणोऽनेकव्यावृत्तिमत्त्वात् सधर्मकत्वं, व्यावृत्तीनां धर्मत्वानभ्यु पगमे पदानां पर्यायत्वमित्याद्यनेकशङ्कापरिहारार्थमाह "एतदुक्तं भवति" इति, लक्षणतः—स्वरूपलक्षणतः, न तु तटस्थलक्षणतः । अनेन जगत्कारण-त्वशङ्कितदोषव्यावृत्तये ब्रह्मणः सकलेतरविरोधित्व प्रतिपादयदिदं शोध-कवाक्यं व्यावृत्तिपरं भवितुं युक्तमित्युक्तं भवति ।

मू० तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते, तत्र

सत्पदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तपरं, ज्ञानपदं चान्याधीनप्रकाशाज्जडरूपाद्वस्तुनो व्यावृत्तपरम्, अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम् ।

न च व्यावृत्तिर्भावरूपो ऽभावरूपोवा धर्मः—

टी० ॥ बहुव्यावृत्तिभिरनेकार्थत्वप्रसङ्गं परिहरति "तद्विरोधिरूप"-मिति। "फलतो व्युदस्यत" इति, इदं वाक्यं स्वरूपमात्रपरमेव अत ऐकार्थ्यं, व्युदासस्तु फलित इति भावः। व्यावर्त्त्याकारबहुत्वात् कतिपयपदैर्व्यावृत्तिरशक्येत्येतत्परिहरति "सर्वमनेन पदत्रयेण फलतो व्युदस्यत" इति प्रयोजकरूपेण व्युदासे सर्वमप व्युदस्तं भवतीत्यर्थः। विरोधीनि कानी?-त्यत्राह "तत्रे"ति तर्हि जगत्कारणत्वेन तुच्छता व्यावृत्ता। किमर्थमसत्याद्व्यावृत्तिरित्यत्रोक्तं "विकारस्पदत्वेनासत्यादि"ति स्तब्धशिलादिसाधारणजडशब्दविवरणार्थमन्याधीनप्रकाश—शब्दः। यद्यपि सत्यादिष्वेकैकपदेन समस्तव्यावृत्तिसिद्धिः, तथाऽपि ब्रह्मणि शङ्कितस्वेतरपदार्थगतविरोध्याकारस्यैकपदेनानिवर्त्तनात् पदत्रयसाफल्यम्। व्यावृत्तिभिः सधर्मकत्वं परिहरति 'न चे'ति प्राभाकरपक्षे सिद्धान्तिमते च भावरूपधर्मः, वैशेषिकादिमतेत्वभावरूपधर्मः, तस्माद्भावरूपोऽभावरूपो वेत्युक्तं, व्यावृत्तिर्धर्मो न चेत् किं स्यादि?त्यत्राह

मू० अपि तु सकलेतरविरोधि ब्रह्मैव, यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिः, तत्तत्पदार्थस्वरूपमेव न धर्मान्तरम्। एवम् एकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम् ।

टी० ॥ "अपि त्व"ति, शुक्त्यादौ हि धर्मस्य व्यावृत्तित्वं रजतादिविरोधित्वादभ्युपगम्यते, एवं ब्रह्म च सकलेतरविरोधित्वात्स्वयमेव व्यावृत्तिरित्यर्थः। स्वरूपस्यैव व्यावृत्तित्वे दृष्टान्तमाह "यथे"ति शौक्ल्यादेः

कार्ण्यादिव्यावृत्तिर्न धर्मान्तरम् अनुपलम्भात्, धर्मान्तरत्वे ऽनवस्थानाच्चेत्यभिप्रायः। तर्हि पदानां पर्यायत्वं स्यादित्याशङ्क्य कार्ण्यव्यावृत्तं पीतिमव्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमिति दृष्टान्तवाक्याभिप्रायेण परिहरति "एकस्ये"ति व्युदसनीयव्युदासभेदेन पदानां सप्रयोजनकत्वं, तत एवापर्यायत्वमित्यर्थः। प्रतियोग्यवच्छिन्नवेषे[1]ण प्रवृत्तिनिमित्तलाभात् सामानाधिकरण्यलक्षणसिद्धिश्चेत्यभिप्रेतम्। पर्यायत्वादिप्रसङ्गपरिहार ऐकार्थ्याविरोधेन कृत इत्यभिप्रायेणोक्त'मेकार्थमि"ति, स्वरूपमात्रपरत्वादैकार्थ्यं हि रक्षितम्। अर्थवत्तरमिति तरप्प्रत्ययेन दृष्टान्ताच्छौक्ल्यात् भेदवाद्यभिमतगुणपरत्वाच्च प्रयोजनाधिक्यमभिप्रेतम्। अपरोक्षभूतो हि शौक्ल्यादिदृष्टान्तः, तत्र स्पष्टार्थं कार्ण्यादिव्यावृत्तमित्यादिपदप्रयोगः प्रत्यक्षगोचरे तु परे ब्रह्मणि सकलेतरव्यावृत्तिवचनमधिकप्रयोजनमिति दृष्टान्तात् प्रयोजनाधिक्यं, जगत्कारणभूतस्य ब्रह्मणः शङ्कितदोषव्यावृत्तिरेवापेक्षिता न तु गुणान्तरमिति भेदवादिपक्षात् प्रयोजनाधिक्यम्। एवं सत्यज्ञानादिवाक्यस्यानुग्राहकस्तर्क उक्तः, तर्कानुगृहीतेन वाक्येन कोऽर्थः प्रतिपन्न? इत्यत्राह।

**सू० तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव "सदेव सोम्येदमग्रआसी" "देकमेवाद्वितीय"मित्यादिभिरैकार्थ्यं "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्रआसीत्" "आत्मा वा इदमेक एवाग्रआसीत्" इत्यादिभिर्ज्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते—"सत्यं ज्ञानमनन्तं ब्रह्मे"ति।**

टी० ॥ "तस्मादि"ति तस्मादुक्तन्यायानुगृहीतत्वादस्य वाक्यस्येत्यर्थः "एकमि"ति समानविभक्तिनिर्देशफलितमैक्यमुक्तम् एव—कारेण स्वरूपत ऐक्यं गुणतो भेद इत्यंशतो ऽनेकार्थत्वव्यावृत्तिः। एतद्विशदयति "निर्धूतनिखिलविशेष"मिति निर्विशेषस्य तुच्छताव्यावृत्त्यर्थम् "स्वयंज्यो-

१ प्रतयोग्यवच्छिन्नविशेषेणेति पुस्तकान्तरपाठः।

ति''रिति पदम् । ''इत्युक्त''मिति सत्यज्ञानादिवाक्येनेति शेषः । इत्थं सामानाधिकरण्यान्यथानुपपत्त्या सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम् । अथ कारणवाक्यैकार्थ्येन शोधकवाक्यान्तरैकार्थ्येन च हेतुद्वयेन वस्तुमात्रपरत्वमुपपाद्यते ''एव''मित्यादिना । तत्र प्रथमं कारणवाक्यैकार्थ्यं हेतुरुच्यते ''एव''मिति । एवं—निर्विशेषपरत्वेन निर्वाहे सत्येव कारणवाक्यैकार्थ्यमित्यर्थः । कारणवाक्यैकार्थ्यं कुतोऽपेक्षितम् ? ऐकार्थ्ये सति कथं वा निर्विशेषपरत्व-मित्यत्राह ''यत''इत्यादि, यतो वा इमानीत्यादिलक्षणवाक्यम् । एतस्य कारणत्वानुवादेन लक्षणपरत्वात् कारणत्वप्रापकं वाक्यमाह ''सदेवे''ति उपलक्षितस्योपलक्षणं नाम चन्द्रस्य शाखेव तटस्थज्ञापकं ''सत्यं ज्ञानमनन्तं ब्रह्मे''त्यनेन वाक्येनेत्यर्थः । कारणवस्तुनः स्वरूपशोधकत्वात् कारणवाक्यैकार्थ्यमस्यापेक्षितमित्युक्तं भवति । अस्तु कारणत्ववाक्यैकार्थ्यं तत्तु सगुणब्रह्मकारणत्ववादिभि''र्यस्सर्वज्ञः स सर्ववित्''''यस्य ज्ञानमयं तपः'' ''तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते''''तमीश्वराणां परमं महेश्वरम्'' ''स कारणं करणाधिपाधिपः'' इत्यादिवाक्यैरेव स्यादित्यत्राह ।

**सू॰ तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतं, जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितस्वरूपं, तदविरोधेन वक्तव्यम् ।**

टी॰ ''तत्रे''ति तत्र कारणवाक्यैकार्थ्येऽपेक्षिते सर्वशाखाप्रत्ययन्यायो ह्यनुक्तार्थस्वीकारफलः, तेनात्रानुक्तस्योपनिषदन्तरोक्तस्याप्यर्थस्य स्वीकर्तव्यत्वे सति सगुणमात्रपरासूपनिषत्सु निर्गुणमपि ब्रह्मोक्तं भवति । तत्रापच्छेदन्यायेन निर्गुणवाक्यानां बलीयस्त्वात् सर्वत्र सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मैव प्रतिपादितं भवतीत्यभिप्रायः । ततः किमित्य? त्राह ''जगदि''ति जगत्कारणेत्यादिपदैः कारणवाक्योक्तमर्थमनुवदति प्रतिपिपादयिषितं—तात्पर्यभूमिः, वस्तुमात्र एव तात्पर्यमित्यर्थः, तदविरोधेन वक्तव्यं—कारणवाक्यप्रतिपन्नब्रह्मस्वरूपशोधकत्वात्तदविरोधेनानेन वाक्येन

वक्तव्यमित्यर्थः । नरपतिरद्वितीय इत्यादिवत्समाभ्यधिकराहित्येऽप्यद्वितीयत्वमुपपन्नमिति तदैकार्थ्येऽपि न निर्गुणपरत्वसिद्धिरित्यत्राह–

मू० अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते, अन्यथा "निरञ्जनं निर्गुण"मित्यादिभिश्च विरोधः । अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वेन लक्षणा स्यात्

टी० "अद्वितीयत्वश्रुति"रिति, सदेव एकमेवेति विजातीयसजातीयव्यावर्तकावधारणद्वयसमभिव्याहृतत्वादिदमद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहत इत्यभिप्रायः । एवं कारणवाक्यैकार्थ्यात् सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम् । अथ शोधकवाक्यान्तरैकार्थ्यं हेतुरुच्यते "अन्यथे"ति । अन्यथा–सत्यादिवाक्यस्य विशिष्टपरत्वे निरञ्जनं निर्गुणमित्यादिभिर्विरोधः स्यात्, अतस्तदविरोधायेदं वाक्यं निर्विशेषवस्तुमात्रपरमित्यर्थः । अन्यथा निर्गुणं निरञ्जनमित्यादिभिर्विरोधश्चेत्यनेनाद्वितीयत्वश्रुतेर्गुणतोऽपि सद्वितीयतानिषेधपरत्वं चार्थादुपपादितं भवति । हेतुत्रयेणोपपादितमर्थं निगमयति "अतश्चे"ति, अतः–पूर्वोक्तसामानाधिकरण्यान्यथाऽनुपपत्त्या पश्चादुक्तकारणवाक्यशोधकवाक्यान्तरैकार्थ्यरूपहेतुद्वयेन चेत्यर्थः । एतल्लक्षणवाक्यं–स्वरूपलक्षणवाक्यम् । अखण्डैकरसं–निर्विशेषतैकस्वभावमेव प्रतिपादयतीत्यर्थः । अथ मुख्यार्थपरित्यागेन लक्षणास्वीकारदोषमुद्घाटयति । "ननु चे"त्यादिना, स्वार्थप्रहाणेन–स्वार्थो हि विशेषणद्वारकं विशेष्यं तत्प्रहाणेनेत्यर्थः । लक्षणात्वमभ्युपगम्याऽदोषतां प्रतिजानीते ।

मू० नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्

सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसम्मतम्।
ननु च सर्वपदानां लक्षणा न दृष्टचरी ।

टी० "नैष दोष" इति मुख्यार्थत्वमुत्तरत्राभिधास्यते । हेतुमाह "अभिधानवृत्तेरपी"ति, तात्पर्यवृत्तिर्नाम–तात्पर्यादागता वृत्तिः, तत्पर-त्वरूपा वा, सा चात्र लक्षणावृत्तिर्विवक्षिता. वाक्यतात्पर्यविरोधिमुख्यवृ-त्तेरपि वाक्यतात्पर्यानुगुणलक्षणावृत्तेर्बलीयस्त्वादित्यर्थः। कस्मिन्नर्थे तात्पर्यं यदनुरोधाय लक्षणास्वीकार? इत्यत्राह "सामानाधिकरण्यस्ये"ति ऐक्य एव तात्पर्यम्–इति तात्पर्यनिश्चायिका समानविभक्तिरिति भावः, आनन्दमया-धिकरणे सिद्धान्तिना ह्येतदुच्यते । सर्वसंमतं–विशिष्टैक्यवादिभिरन्यैश्च संमतमित्यर्थः । गङ्गायां घोष इत्यादिषु सर्वपदलक्षणा न दृष्टेति चोदयति "ननु चे"ति, तात्पर्यनिश्चायककतिपयमुख्यवृत्त्या तदनुगुणमन्येषां पदानां लाक्षणिकत्वमाश्रयणीयम् ।

सू० ततः किं वाक्यतात्पर्यविरोधे सत्येकस्यापि न दृष्टा? समभि-व्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति. द्वयो-स्त्रयाणां सर्वेषां वा तदविरोधायैकस्येव लक्षणा न दोषाय तथा च शास्त्रज्ञैरभ्युपगम्यते–

टी० सर्वपदलक्षणायां तु तन्न संभवतीत्यभिप्रायः, तात्पर्याविरुद्ध-पदमुख्यार्थस्वीकारस्तात्पर्यविरुद्धपदलक्षणास्वीकारस्याविरुद्ध इत्याशयेनाह "ततः किमि"ति । ततः किमित्यभिप्रेतं विवृण्वन् प्रतिबन्दिमुखेन विपक्षे बाधकं दर्शयित्वा परिहर्तुं विपक्षे बाधकं प्रतिबन्दीमाह "वाक्यतात्प-र्य"ति, यद्यविरुद्धपदमुख्यार्थत्वं विरुद्धपदलक्षणाविरोधि तर्हि गङ्गायां मत्स्याः प्रतिवसन्तीत्यादिषु अविरोधेन एकस्यापि पदस्य लक्षणानङ्गीका-रात् गङ्गायां घोष इत्यादिष्वपि पदस्य लक्षणा न स्यात् इत्यभिप्रायः। गङ्गायां मत्स्या इति वाक्ये विरोधाभावाल्लक्षणानङ्गीकारः, गङ्गायां घोष इत्यत्र विरोधाल्लक्षणा न दोष इति चेत् तदत्रापि तुल्यमित्याह "समभि-

व्याहृते''ति सर्वपदलक्षणा च विषं भुङ्क्ष्वेत्यादिषु दृष्टेत्यभिप्रायः, "एतत्तात्पर्यमिति निश्चिते सती''ति अपवादकरहितसमानविभक्तिनिर्देशो निश्चायक इति भावः । द्वयोस्त्रयाणामित्यादि अविरोधविरोधावेव मुख्यलक्षणावृत्तिस्वीकारे प्रयोजकौ न तु पदानामेकत्वद्वित्वादिकमित्यर्थः । न केवलं भुङ्क्ष्वेत्यादिषु लौकिकप्रयोगेष्वेव सर्वपदलक्षणाऽगत्याश्रिता, अन्यैरपि परीक्षकैराश्रितेत्याह "तथा चे''ति तथा सर्वपदलक्षणाया अदोषत्वमभ्युपगम्यते अभ्युपगमे हेतुसद्भावादभ्युपगमः फलित इति भावः ।

सू० कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्योऽर्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव ।

टी० ॥ कैः परीक्षकैः ? केषु वाक्येषु ? सर्वपदलक्षणाश्रितेत्यत्राह 'कार्यवाक्यार्थे''ति लौकिकवाक्येषु सर्वपदलाक्षणिकत्वमुपपादयति "अपूर्वकार्य एवे''ति क्रियार्थं लाक्षणिकमस्तु ततः कथं सर्वपदलक्षणे ? त्यत्राह "कार्यान्विते''ति पदानामन्विताभिधायित्वेन कारकपदानामपूर्वकार्यान्विताभिधायिनां तदन्वित एव मुख्यार्थ इति तदन्वयपरित्यागे लक्षणैवेत्यर्थः

ननु गङ्गायां घोषः प्रतिवसतीत्यादिषु गङ्गापदस्य लाक्षणिकत्वेऽपि तदन्विताभिधायिनां पदान्तराणाममुख्यत्वं न दृष्टमिति चेत् न, गङ्गापदलक्षितस्य वाक्यार्थत्वाभावात्, इह तु वाक्यस्य प्रधानप्रतिपाद्यभूतकार्यार्थसमर्पकपदस्य लाक्षणिकत्वादन्विताभिधायिनां लक्षणा स्यादेव, अत एव कार्यवाक्यार्थवादिभिरित्युक्तम् ।

ननु कमलानि निमीलन्ति कुमुदान्युन्मिषन्ति चेति वाक्यार्थभूतनिमीलनादेर्लाक्षणिकत्वेऽपि तदन्विताभिधायिनां कमलादिपदानां न

लाक्षणिकत्वं दृष्टमिति चेन्न, अनभिप्रायज्ञश्चोदयति भवान्, सर्वपदानां निमीलनरूपवाक्यार्थपरत्वस्य कैश्चिद्व्यवस्थापितत्वाभावात्, निमीलनोपस्थापकपदलक्षणायामपि न तदन्विताभिधायिनां लाक्षणिकतापत्तिः, त्वया तु सर्वपदानां कार्यपरत्वाऽभ्युपगमात्तत्कार्यसमर्पकपदलाक्षणिकत्वे तदन्वितस्वार्थाभिधायिनां लक्षणा प्राप्नोति, तथा हि कार्यवाक्यार्थवादिना पदानां किं विशिष्टकार्यैकदेशे पदशक्तिर्निश्चीयते ? उत विशिष्टस्थायि, कार्यैकदेशे ? प्रथमे विशिष्टकार्यैकदेशत्वाविशेषात् स्वार्थेषु कारकपदानामिव लिङादेः क्रियाकार्ये मुख्यत्वप्रसङ्गः, द्वितीये विशिष्टस्थायिकार्यैकदेशपरत्वग्रहणस्य सर्वपदानामविशिष्टत्वात् लिङादेः क्रियाकार्य इव कारकपदानां क्रियाकार्यान्वितपरत्वे लक्षणा स्यात्, पदानां विशिष्टकार्यैकदेशपरत्वेऽपि लिङादेः क्रियाकार्ये लाक्षणिकत्वं, कार्याऽन्वितमात्रे कारकपदानां मुख्यत्वमिति चेत्, यदि कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिष्टं क्रियाकार्ये लिङादेर्लाक्षणिकत्वं कथं स्थायिकार्यपरत्वेन वेदप्रयुक्तत्वनिश्चयाल्लक्षणयाऽपि क्रियाकार्यबोधनसंभवादिति चेत्, कारकपदानामपि स्थायिकार्यान्वितपरत्वेन वेदप्रयोगदर्शनात् लक्षणयाऽपि क्रियाकार्यान्वितपरबोधनोपपत्तेः क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकं स्यात् ।

ननु गोपदस्य सास्नादिमन्मात्रमुख्यत्वेऽपि प्रमाणान्तरेण खण्डत्वादिविशेषसिद्धिवत्, लिङादेः कार्यमात्रपरत्वे कार्यविशेषस्य प्रमाणान्तरेण सिद्ध्यभावात्, उभयत्र एकशक्तिकल्पनायोगाच्छक्तिद्वयकल्पने गौरवाच्च लिङादेरपूर्वकार्ये मुख्यत्वमिति क्रियाकार्यप्रतिपादनं लाक्षणिकम्, अन्यथा शब्दशक्तेः कार्यमात्रविषयत्वात् प्रत्यक्षाद्यविषयत्वाच्च कार्यविशेषो निष्प्रमाणकः स्यादिति चेत् न, कार्यविशेषस्य प्रामाणिकत्वे तत्र शक्तिकल्पनं, शक्तिकल्पने तस्य प्रामाणिकत्वमित्यन्योन्याश्रयप्रसङ्गात् । किं च यदि कार्यविशेषस्याप्रामाणिकत्वपरिहाराय तत्र शक्तिः कल्प्यते तर्हि कारकपदानां कार्याऽन्वितमात्रपरत्वे कार्यविशेषान्वयस्य प्रमाणान्तरागोचरत्वादुभयत्र शक्तिकल्पने गौरवाच्च कार्यविशेषान्वये प्रमाणं न स्यादिति

तत्परिहाराय कार्यविशेषान्वये कारकपदानां मुख्यत्वमिति क्रियाकार्यान्वितपरत्वं लाक्षणिकं स्यात्, लिङादिसमभिव्याहारबलात्कारकपदानां कार्यविशेषान्वयपरत्वसिद्धिरिति चेत्, तर्हि स्वर्गकामपदसमभिव्याहारबलाल्लिङादेः कार्यविशेषान्वयपरत्वसिद्धिरिति लिङादि कार्यमात्रपरं स्यात्, तस्माल्लिङादेरपूर्वकार्य एव मुख्यवृत्तत्वेन क्रियाकार्यस्यामुख्यत्वे कारकपदानामपि क्रियाकार्यान्वितपरत्वं लाक्षणिकमित्येवाभ्युपगन्तव्यं, कारकपदानामन्वयांशे लक्षणा न सर्वत्रेति चेत्, समानाधिकरणवाक्येऽपि पदानां प्रातिपदिकांश एव लक्षणा न समानविभक्तावितिं तुल्यम् । सर्वपदलक्षणानुपपत्तिपरिहारमुपसंहरति—

**सू० अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः ।**

टी० "अत" इति अतः—सर्वपदलक्षणायाउपपत्तिसिद्धत्वाल्लौकिकैः[1] परीक्षकैश्चाङ्गीकृतत्वाच्चेत्यर्थः, यदप्याहुरित्यारभ्य कृतां शास्त्रेण स्वाभिमतार्थसिद्धिमुपसंहरति—

**सू० अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणं, प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तं, सति च विरोधे बलीयस्त्वं वक्तव्यं, विरोध एव न दृश्यते निर्विशेषसन्मात्रब्रह्मग्राहित्वात्प्रत्यक्षस्य ।**

टी० ॥ "अत इदमेवे"ति अतः—निर्विशेषवस्तुनि तस्यैव पारमार्थ्ये, व्यतिरिक्तस्य मिथ्यात्वे, तस्य दोषपरिकल्पितत्वे, दोषस्य च सदसदनिर्वचनीयत्वे, ज्ञानमात्रनिवर्त्यत्वे चोक्तैरुपपत्तिसहितैः श्रुतिवाक्यैरित्यर्थः, इदमेवार्थजातं—पूर्वोद्दिष्टमेवार्थजातं न तु सगुणवस्त्वादिकं, प्रतिपादयन्तो वेदान्ताः प्रमाणमिति, वाक्यान्तराणां काल्पनिकार्थपरत्वेन तत्त्वावेदकत्वाभावादुक्तार्थविषयमेव वाक्यजातं तत्त्वे प्रमाणमित्यर्थः, पूर्वं प्रत्यक्ष-

१ अप्राप्तशास्त्राऽध्ययनजन्यबुद्धिप्रकर्षा लौकिकास्तैः ।
२ प्राप्तशास्त्रजन्यबुद्धिप्रकर्षाः परीक्षकास्तैः ।

विरोधे शास्त्रप्राबल्यं शास्त्रे च भेदावलम्बिनां बाध्यत्वं चोक्तम् । अथ प्रत्यक्षविरोधो नास्तीत्युपपादयितुं प्रक्रमते "प्रत्यक्षादी"ति. शास्त्र-प्रत्यक्ष-विरोधे शास्त्रप्राबल्य प्रतिपादकग्रन्थेन वक्ष्यमाणार्थसङ्गतिरिति भावः। चः समुच्चये अविरोधपक्षस्य च बुद्धिस्थत्वात्तस्य चान्वाचयोक्तस्य च समुच्चयः, विरोधाभ्युपगमेऽपीत्यर्थः सति चेत्यत्र च-शब्दो हि-शब्दार्थः, अविरोधं प्रतिजानीते "विरोध एव न दृश्यत"इति हेतुमाह "निर्विशे षे"ति विषयविषयिभावव्यावृत्त्यर्थं "सन्मात्रब्रह्मेत्यु" क्तम्। प्रतीतिविरोधेन चोदयति ।

मू० ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते ? विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकज्ञानवदेकव्यवहारहेतुतैव स्यात्, सत्यं, तथैवात्र विविच्यते कथं घटोऽस्तीत्यत्रास्तित्वघटत्वद्वयस्य व्यवह्रियते ।

न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति ।

टी० "ननु चे"ति विरोधमुपपादयति घटोऽस्तीत्यादिना न हि केवलमस्तीति प्रतीतिः, अपि तु घटोऽस्ति पटोऽस्तीत्येव हि प्रतीतिरित्यर्थः, प्रतीतेर्भ्रान्तिरूपत्वसंभवात्तद्व्युदासार्थं व्यवहारविरोधमाह "विलक्षणे"ति। परिहरति "सत्यमि"ति, घटोऽस्ति पटोऽस्तीत्यत्रास्तिव्यवहारस्यैकरूपत्वात्तावन्मात्रे भेदावभासमात्रे चाङ्गीकारो भेदव्यवहारस्य प्रत्यक्षमूलत्वे भेदावभासस्य प्रत्यक्षत्वे चानङ्गीकारश्च सूच्यते सत्यम्-इत्यङ्गीकारेण, तथैव-यथा सन्मात्रस्यैव प्रत्यक्षत्वमेकव्यवहारहेतुतैव च स्यात् तथैवेत्यर्थः, अत्र-घटादिविषयस्वरूपविषयव्यवहारसमुदाये, विविच्यते यथेदं रजतमित्यत्र इदंव्यवहारस्य प्रत्यक्षमूलत्वं रजतव्यवहारस्य भ्रान्तिमूलत्वं तथा विविच्यत इत्यर्थः, तत्रेदमंशरजतांशव्यवहारयोर्बाधितत्वाबाधितत्वाभ्यां विवेकः, अत्र स्वरूपविषयभेदविषयव्यवहारयोरपि अबा-

धितत्वाविशेषेऽपि कथं विवेक? इत्यभिप्रायेणाह "कथमि"ति, यौक्तिकबाधोऽस्तीत्याशयेनाह "घटोऽस्ती"ति किमस्तित्वं, भेदश्चैकः पदार्थः? उत द्वौ, द्वित्वे च? किं तदुभयव्यवहारयोः प्रत्यक्षमूलत्वम्? उतान्यतरस्य? द्वयोरपि प्रत्यक्षमूलत्वे प्रत्यक्षं किं युगपत् उभयग्राहि? उत क्रमेणे?ति विकल्पान् हृदि निधाय अस्तित्वलक्षणस्वरूपतद्भेदयोरैक्यं न संभवति भेदग्रहणस्य स्वरूपग्रहणप्रतियोगिस्मरणसापेक्षत्वात्, सन्मात्रग्रहणस्य तन्निरपेक्षत्वाच्चेत्यभिप्रयन्नाह "अस्तित्वं तद्भेदश्चे"ति "भिन्न"इति व्यवहार इव घट इत्यसाधारणव्यवहारेऽपि घटस्य पटाद्व्यावृत्ततया प्रतीतौ प्रतियोगिसापेक्षत्वात् घटव्यवहार एव भेदव्यवहार उत्युच्यते द्वित्वे च द्वयोरपि प्रत्यक्षमूलत्वं नेत्याह "न च द्वयोरपी"ति, द्वयोरपि व्यवहारयो :स्वरूपविषयभेदविषयव्यवहारयोः प्रत्यक्षं युगपद्वा क्रमेण वा मूलं स्यादिति विकल्पमभिप्रेत्य यौगपद्यं दूषयति ।

मू० तयोर्भिन्नकालज्ञानफलत्वात्प्रत्यक्षज्ञानस्य चैकक्षणवर्त्तित्वात् तत्र स्वरूपं भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयं, भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न स भेदः प्रत्यक्षेण गृह्यते ।

टी० "तयोरि"ति, प्रतियोग्यपेक्षारूपवैषम्यादित्यभिप्रेतं, क्रमपक्षं प्रतिक्षिपति "प्रत्यक्षज्ञानस्य चे"ति । चः–समुच्चये एवं युगपत् क्रमेण चोभयव्यवहारस्य प्रत्यक्षमूलत्वमनुपपन्नमिति तयोरन्यतरस्य प्रत्यक्षविषयत्वमाह "तत्रे"ति, भेदः प्रत्यक्षविषयः स्यादित्यत्राह "भेदे"ति अस्तित्वभेदयोरैक्यायोगे तद्व्यवहारयोर्भिन्नकालज्ञानफलत्वे च य एव हेतुः, तेनैवेत्येवकाराभिप्रायः ।

मू० अतो भ्रान्तिमूल एव भेदव्यवहारः, किंच भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते, भेदस्ता-

वन्न वस्तुनः स्वरूपं, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेः ।

न च वाच्यं स्वरूपे गृहीतेऽपि भिन्न—इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात् तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति, स्वरूपमात्रभेदवादिनो हि-प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा स्वरूपभेदयोः स्वरूपत्वाविशेषात्, यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात् हस्तः कर इति वत्, घटो-भिन्न इति पर्यायत्वं च स्यात् । नापि धर्म्मः—

टी० प्रत्यक्षस्य स्वरूपमात्रविषयत्वे कथं भेदव्यवहारसम्भव ? इत्यत्राह "अतोभ्रान्ती" ति तथा च संवित्सिद्धौ "यौगपद्यक्रमायोगाद्व्यवच्छेद-विधानयोः । ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रम" इति व्यवच्छेदो—भेदग्रहणं विधानं—स्वरूपग्रहणम् एवं भेदे प्रमाणानुपपत्तिरुक्ता । अथ प्रमेयानुपपत्तिमाह "किं चे" ति, किं चेत्यादिना प्रमाणानुग्राहकतर्काभावोऽप्युपपादितोभवति । दुर्निरूपत्वं प्रतिजानीते "भेदोनामे" ति, विकल्पासहत्वादिति भावः । न्यायविद्भिः—न त्वापातप्रतीतिमात्रतृप्तैरिति भावः । स्वरूपधर्मविकल्पं हृदि निधाय स्वरूपपक्षं दूषयति "भेदस्तावदि" ति । कुत ? इत्यत्राह "वस्तुस्वरूपे" इति "स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेरि" ति, प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरित्यर्थः । स्वरूपग्रहणस्य शब्दव्युत्पत्तिव्युत्पन्नशब्दस्मरणनिरपेक्षत्वेऽपि भिन्न इति व्यवहारस्तु तत्सापेक्षो यथा भवति तथा प्रतियोगिग्रहणमपि भेदव्यवहारसामग्र्यन्तर्भूतम् अतस्तत्स्मरणाभावात् तदानीमेव भेदव्यवहाराभावः, न तु भेदाग्रहणादिति परमतमाशङ्क्याह "न चे" ति । कुत? इत्यत्राह "स्वरूपे" ति, यथा न स्वरूपग्रहणे प्रतियोग्यपेक्षा तथा भेदव्यवहारे चेति च—शब्दार्थः, हि—शब्दो हेतौ, स्वरूपग्रहण इव भेदव्यवहारे प्रतियोग्यपेक्षाया असम्भ-

वादित्यर्थः । असम्भवः कुत? इत्यत्राह "स्वरूपे"ति, स्वरूपभेदयोः स्वरूपत्वमविशिष्टमस्तु ततः किं प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्ते? रिति शङ्कायां तद्विवृणोति "यथे"ति । स्वरूपपक्षे दूषणान्तरमप्याह "हस्तः कर"इति पर्यायत्वे सति सह प्रयोगस्याऽज्यः स्यादिति भावः । स्वरूपपक्षे मृषावादिभिर्दूषणान्तराण्यप्युक्तानि उदाहृतदूषणपरिहारेण तान्यपि प्रत्युक्तानि भवन्तीति भाष्ये न कण्ठोक्तानि । तान्युच्यन्ते स्वरूपपक्षे भिन्न इति व्यवहर्तुं न युक्तं भिन्नो हि भेदयोगी एतद्व्यवहारसिद्धये यदि स्वरूपभूतभूतभेदान्तरं स्वीक्रियते तत्रापि भिन्न इति व्यवहारस्यायुक्तत्वात् तत्स्वरूपभेदान्तरमाश्रयणीयमित्यनवस्था । किं च शब्दान्तरेण धर्म इत्युक्तं स्यात् तदा धर्मपक्षदूषणान्यापतेयुः । किं च भेदः किमनुवृत्तः? उत व्यावृत्तः,? व्यावृत्तश्चेत् स किं स्वरूप? मुत धर्मः? प्रथमे घटस्य भेदव्यवहारे कृते पटविषयभेदव्यवहारो न स्यात् व्यावृत्तत्वात्, धर्मश्चेत् पूर्वदोषो धर्मप्रयुक्तदूषणानि च स्युः, यद्यनुवृत्तः स च स्वरूपं चेत् शब्दान्तरेण सन्मात्रमङ्गीकृतं स्यात्, धर्मपक्षे पूर्ववत् । किं च भिदिधातोर्हि विदारणमर्थः, एकस्य वस्तुनो भेदो नाम–द्विधाभावः, तत्खण्डस्यापि तथा स्यात्, अतो वस्तुनि भेदाभ्युपगमे विदारणपरम्परया वस्तुनाश एव स्यात् इत्येवमादीनि । अथ धर्मपक्षं दूषयति "नापी"ति । कुत? इत्यत्राह ।

सू० धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः, अन्यथा स्वरूपमेव स्यात्, भेदे च तस्यापि भेदस्तद्धर्मः, तस्यापीत्यनवस्था । किं च जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं, भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणमिति अन्योन्याश्रयणम्, अतो भेदस्यापि दुर्निरूपत्वात्सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ।

टी० "धर्मत्व"इति, स्वरूपाद्धर्मस्य भेदाभावेऽनिष्टमाह "अन्यथे"ति । स्वरूपधर्मयोर्भेदोऽस्तु ततः कि? मित्यत्राह "भेदे चे"ति, तस्यापि

भेदस्तद्धर्मः–तस्य धर्मतया स्वीकृतस्यापि भेदस्य स्वरूपापेक्षया यो भेदः सोऽपि तस्य धर्मतया स्वीकृतस्य भेदस्य धर्मः । यद्वा स्वरूपाद्धर्मस्य योभेदः स्वीकृतः, तस्य धर्मिभूताद्धर्मात् भेदोऽपि धर्मः, अन्यथा स्वरूपमेव स्यात् तदा स्वरूपपक्षदूषणानि स्युः, सोऽपि भेदो धर्मः, तस्यापि स्वरूपाद्भेदः इत्यनवस्थेत्यर्थः । एवं धर्मपक्षेऽनवस्थामुक्त्वाऽन्योन्याश्रयणमाह "किं चेत्यादिना, अथा च तत्, धर्मिणि प्रतियोगिनि च गृहीते भेदग्रहणं भेदे गृहीते धर्मिप्रतियोगिग्रहणमिति । धर्मे धर्मिणि च गृहीते भेदग्रहणं भेदे गृहीते धर्मधर्मिग्रहणमिति । अयं घट इत्यत्रेदंशब्दनिर्दिष्टस्य घटत्वजातिविशिष्टत्वग्रहणं पटजातीयाद्भेदग्रहणपूर्वकम् । अन्यथा घटजातीयत्वविरोधात् पटाद्भेदग्रहणमिदंशब्दनिर्दिष्टस्य घटजातीयत्वग्रहणपूर्वकम् अन्यथा पटत्वप्रसङ्गादिति । एवं धर्मिधर्मग्रहणे, धर्मितया प्रतियोगितया च ग्रहणे, तत्तत्सजातीयत्वग्रहणे च, त्रिधाऽन्योन्याश्रयणमुक्तम् । साधकप्रमाणाभावमुपसंहरति "अत" इति, अतः–स्वरूपधर्मपक्षोक्तैर्दूषणैर्दुर्निरूपत्वादित्यर्थः । इत्थं साधकप्रमाणाभाव उक्तः, साधकप्रमेयानुपपत्तिरूपतर्कश्च तत्क्षेपभूतः सामग्रीविषयेण वार्थस्वभावविषयेण वा निरूपणेन विषयविशेषे प्रमाणव्यवस्थापनं हि तर्ककृत्यम् ।

सू० किं च घटोऽस्ति पटोऽस्ति, घटोऽनुभूयते पटोऽनुभूयत इति सर्वे पदार्थाः सत्ताऽनुभूतिघटिता एव दृश्यन्ते, अत्र सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्त्तमानं दृश्यत इति तदेव परमार्थः । विशेषास्तु व्यावर्त्तमानतयाऽपरमार्था रज्जुसर्पादिवत्, यथा रज्जुरधिष्ठानतया ऽनुवर्तमाना सती, परमार्था, व्यावर्त्तमानास्सर्प्पभूदलनाम्बुधारादयोऽपरमार्थाः

ननु च रज्जुसर्प्पादौ रज्जुरियं न सर्प्प इत्यादिरज्ज्वाद्यधिष्ठानयाथात्म्यज्ञानेन बाधितत्वात् सर्प्पादेरपारमार्थ्यं, न व्यावर्तमानत्वात्, रज्ज्वादेरपि पारमार्थ्यं नानुवर्त्तमानतया

किं त्वबाधितत्वात्, अत्र तु अबाधितानां घटादीनां कथमपारमार्थ्यम्? उच्यते—

टी० अथ बाधकप्रमाणमुपन्यस्यति "किं चे"ति। तत्रानुमानं त्रिवत्तुर्व्याप्तिं दर्शयति "घटोऽस्तीत्यादिना "वैधर्म्याच्च न स्वप्नादिवदि"त्यत्र सूत्रकारेणैव दृश्यत्वानुमानस्य निराकरिष्यमाणत्वाच्च तन्निरासस्य मिथ्यात्वानुमानानां सर्वेषां दूष्यत्वप्रदर्शनार्थत्वात् पूर्वपक्षे व्यावर्त्तमानत्वे हेतुरुपन्यस्यते अनुवृत्तत्वप्रदर्शनाय घटोऽस्ति पटोऽस्तीत्युक्तम्। सदनुभूत्योरेकत्वं वक्ष्यमाणं हृदि निधायानुभूतेरनुवृत्तिं दर्शयति "घटोऽनुभूयते पटोऽनुभूयत"इति। ततः किमि? त्यत्राह "अत्रे"ति, व्यावर्त्तमानतया—उत्तरोत्तरप्रतीतिविषयेष्वविद्यमानतया। रज्जुसर्पादिवत्—रज्ज्वादिवत् सर्पादिवच्चेत्यर्थः, तद्विवृणोति "यथेत्यादिना बाधितत्वाबाधित्वाभ्यां द्वयोरपि हेत्वोः सोपाधिकत्वं दर्शयंश्चोदयति।

"ननु चे"ति, उपाधिनिवृ[१]त्त्या पक्षे साध्यनिवृत्तिमाह "अत्र त्वि"ति विपरीतोपाधिसद्भावाच्च व्याघात इति चाऽभिप्रायः। परिहरति "उच्यत"इत्यादिना।

सू० घटादौ दृष्टा व्यावृत्तिः, सा किंरूपेति विवेचनीयं, किं घटोऽस्तीत्यत्र पटाद्यभावः? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्, अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः सा व्यावर्त्तमानानामपारमार्थ्यं साधयति, रज्जुवत्सन्मात्रमबाधितमनुवर्तते, तस्मात्सन्मात्रातिरे[२]कि सर्वमपरमार्थं, प्रयोगश्च भवति—सत्—परमार्थमनुवर्त्तमानत्वात् रज्जुसर्पादौ रज्ज्वादिवत्, घटादयोऽपरमार्थाः व्यावर्त्तमानत्वात् रज्ज्वाद्यधिष्ठानसर्पादिवदिति

१ स्वाभावेन हेतुना पक्षे साध्यनिवृत्तेरेवोपाधिफलत्वं न तु हेत्वाभासानामिव स्वातन्त्र्येणानुमितिप्रतिबन्धकत्वमिति तत्त्वम्।

२ सन्मात्रातिरेकेणेति पाठान्तरम्।

टी० प्रथमं संप्रतिपन्नांशमाह "घटादौ दृष्टा व्यावृत्तिरि"ति, सपक्षेषु सर्वेषु विद्यमानः पक्षे अविद्यमानो ह्युपाधिः, तत्र परोक्तोपाधित्वेनोक्तस्य धर्मस्य पक्षे विद्यमानत्वकथनेन व्यावर्त्तमानत्वहेतोः सोपाधिकत्वं दूषयिष्यंस्तदुपयोगित्वेन घटादिषु दृष्टा व्यावृत्तिः किं संवादफलभूता? उत बाधफलभूते?ति विवेचनीयमित्याह "सा किंरूपे"ति, बाधफलभूतत्वं दर्शयितुं व्यावृत्तिस्वरूपमाह "किं घटोऽस्तीत्यत्रे"ति घटोऽस्तीति प्रतीते विषये पटाभाव इत्यर्थः । "सिद्धं तर्ही"ति रज्जौ भूदल[1]नादीनामभावो हि बाधितत्वमिति भावः, तस्मात् बाधफलभूतैवेत्याह "अत" इति बाधो नामादुष्टकारणजा निषेधबुद्धिः, तेन पुरोवर्त्तिन्यभावो व्यावृत्तिः । एवं निरुपाधिकत्वाद्व्यावर्त्तमानत्वमपारमार्थ्यसाधकमित्याह "से"ति, अबाधफलभूतानुवृत्तिः परमार्थत्वे प्रयोजकत्वात् अनुवर्त्तमाने पारमार्थ्यं दर्शयति "रज्जुवदि"ति, अबाधः–अविरोधि[2]त्वम् । अनुवृत्तिर्नाम तत्कृतो विषयतयाऽन्वयः पुरोवर्त्तिनि सद्भावो वा, इत्थं व्याप्तिः शिक्षिता । न केव[3]लं तर्कः अनुग्राह्यमप्यस्तीत्याह "प्रयोगश्च भवती"ति ।

मू० एवं सत्यनुवर्त्तमानाऽनुभूतिरेव परमार्था, सैव सती ।

ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नं, नैवं, भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः । अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति, तस्मात्सदनुभूतिरेव, सा च स्वतःसिद्धाऽनुभूतित्वात् अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः ।

१ भूकम्पजलप्रवाहादिना दलितायां भुवि भवति सर्पभ्रम इति लोकसिद्धम् ।

२ यदबाधितमनुस्यूतं यथा भिन्नेष्वपि घटपटादिषु सदात्मकत्वं तदविरोधि दृष्टं विरोधिनोरपि घटपटयोः सदात्मकत्वस्यैकरूप्यादिति प्रकृते अबाधः–अविरोधित्वमेवेत्याशयानः प्राह "अबाधः" इति

३ तर्कस्यायथार्थज्ञानरूपत्वेन प्रमाजनकत्वासंभवात्कथं तस्योपयोग इति शङ्कायामाह "अनुग्राह्यमप्यस्तीति ततश्च न तर्कोऽनुमितिजनकः किन्तु अनुमित्यौपयिकव्याप्तिग्रहशङ्काविघटक इति तस्याप्रमात्मकत्वं नानुमितेः प्रमात्मकत्वभञ्जकमिति प्रघट्टकार्थ इति सूक्ष्ममीक्ष्यताम् ।

टी० मायावेदान्तिनो हि ज्ञानमात्रपारमार्थ्यवादिनः, तत्कथं सतः पारमार्थ्यसाधन ? मित्यत्राह "एवं सती" ति, एवं सति—व्यावर्त्तमानत्वानुवर्त्तमानत्वयोरपारमार्थ्ये पारमार्थ्ये च प्रयोजकत्वे सिद्ध इत्यर्थः । तर्हि परमार्थद्वयं स्यादित्यत्राह "सैव सती" ति, अथ सदनुभूत्योर्विषयविषयिभावरूपं भेदमुद्घाटयंश्चोदयति "ननु चे" ति, भिन्नत्वं साध्यं, विषयतयेति हेतुः । परिहरति "नैवमि" ति, तत्र साध्यांशं दूषयति "भेदोही" ति, पुरस्तादेव—ज्ञेयभेदनिषेधादेव ज्ञानभेदोऽपि निरस्तः इत्यर्थः । हेत्वंशंदूषयति "अत" इति, "न प्रमाणपदवीमनुसरती" ति विषयविषयिभावो भ्रान्तिसिद्ध इत्यर्थः, भेदस्य भ्रान्तिसिद्धत्वमपिना समुच्चीयते । श्रुतिप्रतिपन्नार्थांस्तर्केणापि साधयन् विषयविषयिभावे निरस्ते ग्राहकाभावात् शून्यत्वशङ्कां च व्यावर्तयन् स्वप्रकाशत्वमुपपादयति "सा चे" ति, चः—शङ्कानिवृत्तौ, तत्र व्यतिरेकिणं हेतुमाह "अनुभूतित्वा" दिति, विपक्षे बाधं दर्शयति "अन्यतः सिद्धावि" ति, यदन्यतः सिद्धं तदनुभूतिदृष्टं, यथा घट इति व्याप्तिरर्थाद्दर्शिता ।

सू० किं च अनुभवान्तरापेक्षा चानुभूतेर्न शक्या कल्पयितुं सत्तयैव प्रकाशमानत्वात्, न ह्यनुभूतिर्वर्त्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ।

टी० अस्य व्यतिरेकिणः पराभिमतं प्रत्यनुमानं सोपाधिकमिति दर्शयन् अर्थादनुमानान्तरमप्याह "किं चे" त्यादिना । अनुमानान्तरं कण्ठोक्तम् आर्थः प्रत्यनुमाननिरासो वा स्यात्, अनुमानान्तरस्य कण्ठोक्तत्वे किंच—शब्दस्वरसः । प्रत्यनुमाननिरासस्य कण्ठोक्तत्वे 'न शक्या कल्पयितु' मिति निर्देशस्वरसः, किंचेति न केवलं स्वमतोपपत्तिः परमतानुपपत्तिश्चेत्यर्थः । अनुमानान्तरं चेति वार्थः । अनुभवान्तरापेक्षा चेति पूर्वोक्तसमुच्चेतव्यद्वये । किंच—शब्दसमुच्चितादन्यसमुच्चयपरश्च—शब्दः । न शक्या कल्पयितुं—ज्ञानं परप्रकाश्यं वस्तुत्वात्, भासमानत्वाद्वा घटादिवदिति प्रत्यनुमानम् । एवमादिभिः परप्रकाश्यत्वं न शक्यं वक्तुमित्यर्थः । कुत ? इत्यत्राह "सत्तये-

वे''ति, सत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्कानिवृत्तये तं विवृणोति "न ही"ति, विद्यमानदशायां कदाचिदप्रकाशमानत्वं पराधीनप्रकाशत्वे प्रयोजकम् अतः प्रत्यनुमानं सोपाधिकमित्यर्थः । विद्यमानदशायां सर्वदा भासमानत्वादिति व्यतिरेक्यनुमानान्तरमिति स्फुटतरं, यथा संवित्सिद्धौ "यद्यप्रकाशमाना धीः कदाचिदवतिष्ठते" इत्यारभ्य "घटादाविव तत्रापि कल्पनीयं प्रकाशकमि"ति अनेन ग्रन्थेन स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्का परिहृता । विद्यमानत्वे सर्वदा प्रकाशमानत्वं सुखादाव-प्यस्तीत्यनैकान्त्यमिति चेत् न सुखादिव्यतिरिक्तत्वे सतीति विशेषणस्या-भिप्रेतत्वात्, सिद्धान्तिमते सुखादेरपि ज्ञानविशेषत्वेन पक्षेऽन्तर्भावात् नानै-कान्त्यम् । एवमनुमानान्तरमुक्तं शङ्कितप्रत्यनुमानस्य सोपाधिकत्वं च दर्शितम् ।

**सू० अथैवं म[१]नुषे उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते घटोऽनुभूयत इति, न हि कश्चिद्घटोऽयमिति जानंस्तदा-नीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति ।**

टी० अथ प्राकट्यानुमेयपक्षं निराचिकीर्षुरनुवदति "अथैवं मनुष"-इत्यादिना, प्रथमं स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिमुपपादयति "उत्पन्नाया"मिति, अनेन स्वोक्तस्य वस्तुत्वात् भासमानत्वादित्यादिप्रत्य-नुमानस्य सोपाधिकत्वव्युदासश्च सेत्स्यतीति भावः । उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासत इत्यत्र घटोऽयमितीत्यध्याहर्त्तव्यं, घटोऽयमिति—वि-षयमात्रमवभासत इत्यर्थः । घटोऽयमिति जानन्निति हि वक्ष्यते, यथा संवि-त्सिद्धौ "घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते । न वित्तिरिति युष्माकं गोष्ठीषु न नु घुष्यत" इति घटोऽनुभूयत इत्यस्योत्तरत्रान्वयः पूर्वत्रान्वय-श्चेत् विषयमात्रमवभासत इत्यनेन विरोधः स्यात् । कथं विषयमात्रस्या-वभासः? घटोऽनुभूयत इत्यनुभवोऽपि प्रकाशत इति शङ्कायां विषयमात्र-स्यैवावभासमुपपादयति "घटोऽनुभूयत इत्यादिना, यदा घटोऽयमिति

१ अथैवं त्वं मनुषे इति पुस्तकान्तरपाठः ।

जानाति न हि तदानीमेव घटोऽनुभूयत इति जानाति । कुत ? इत्यत्राह "अविषयभूतामनिदम्भावा"मिति, अविषयभूतां–घटशब्दार्थव्यतिरिक्ताम्। अनिदंभावाम्–अयंशब्दार्थव्यतिरिक्तां, घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः, सन्निहितदेशवर्तमानकालविशिष्टत्वम् इदंशब्दार्थः, उभयव्यतिरिक्तो ह्यनुभवः स तु घटोऽयमित्यनुभववेलायां नानुभूयत इत्यर्थः । "अविषयभूतामि"ति साधारणनिर्देशः पटादीनामपि प्रदर्शनार्थः । अत एवाघटभूतामित्यनुक्तिः । यद्वा घटोऽनुभूयत इति पूर्वेणान्वयः । इतिर्हेतौ यतो घट एवानुभूतिकर्म न त्वनुभूतिरपि तदानीमनुभूतिकर्म भवति तस्माद्विषयमात्रमवभासत इत्यर्थः । अस्यैव विवरणं "न ही"ति ।

**मू० तस्माद् घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसन्निकर्षवदनुभूतेः सद्भाव एव हेतुः ।**

टी० शब्दलिङ्गालो[1]कादीनां प्रकाशकानां ज्ञाततयैव प्रकाशकत्वं दृष्टम्, अतोऽनुभूतिरप्रकाशा चेत् प्रकाशकत्वमपि न स्यादित्यत्राह "तस्मादि"ति सत्तया प्रकाशकं ज्ञायमानतया प्रकाशकमिति द्विविधं प्रकाशकं, तत्र सत्तया प्रकाशककोटिनिविष्टं ज्ञानमित्यर्थः । क एवं नियामक ? इत्यत्राह "तस्मादि"ति, स्वसत्तयैव प्रकाशमानत्वहेतोरसिद्धेरस्मदुक्तहेतोः सोपाधिकत्वनिरासाच्चेत्यर्थः । यद्यनुभूतिः स्वयमेव न प्रकाशते तर्हि किं तस्यां प्रमाणं ? मित्यत आह ।

**मू० तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते, एवं तर्ह्यनुभूतेरजडाया अर्थवज्जडत्वमापद्येत इति चेत् किमिदमजडत्वं नाम ? न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः ।**

---

१ शब्दलिङ्गयोर्ज्ञातयोः प्रकाशकत्वेऽपि आलोकस्य स्वरूपसत एव नारचाक्षुषत्वाद्यवच्छिन्नहेतुतया न तस्य ज्ञातसत्ताऽपेक्षितेति कीदृशं श्रुतप्रकाशिकाकृतामालोकस्य ज्ञातसत्त्वोपयोगित्वाभिधानमिति कृतधिय एवावधारयन्तु यदि तु योजनमावश्यकं तदा तु लिङ्गभूतालोकादीनामित्यर्थोपवर्णनेन कथंचित्संगतिः संभवति ।

टी० "तदनन्तरमि"ति, अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेन कादाचित्क[1]त्वात् कार्यं, कार्यत्वात् सहेतुकमित्यनुमानेन ज्ञायत इत्यर्थः । विषयगतप्राकट्यलिङ्गेन कथं स्वगतज्ञानमनुमीयत ? इति चेत् स्वस्मै प्रकाशमानत्वात् स्वगतज्ञानानुमानमुपपद्यते, यदि ज्ञानपश्चाद्भाविना प्रकाशलिङ्गेन ज्ञानमनुमीयते तर्हि घटोऽनुभूयत इति वक्तुमयुक्तं घटोऽन्वभावीत्येव तु वक्तुं युक्तमिति शङ्कायामुक्तं "तदनन्तरमि"ति प्रत्यासत्त्यतिशयाद्वर्त्तमानत्वव्यपदेश इत्यर्थः । अर्थेन्द्रियसंप्रयोगसमनन्तरमेव घटोऽनुभूयत इति प्रतीतेः प्राकट्यलिङ्गेन ज्ञानानुमानानवकाशत्वशङ्का चानेन परिहृता तदनन्तरमिति पद्मपत्रवेधवदनुमानशैघ्र्यात्तथा प्रतीतिरुपपद्यतेति भावः । मृषावादी स्वदर्शनासङ्ग्राऽनिष्टं प्रसञ्जयति "एवं तर्ही"ति जडत्वं–ज्ञानव्यतिरिक्तत्वम् अचित्त्वमित्यर्थः, इह चानुभूतिरजडेति विपर्यये पर्यवसानं प्रसञ्जनीयस्य जडत्वस्यानिष्टत्वं च प्रतिज्ञिप्सुमजडत्वं विकल्प्य दूषयति "किमिदमि"ति, किमिदं–न किमपि दुर्निरूपमित्यर्थः । अनन्तरं शिरोद्वयप्रदर्शनाभावात् दुर्निरूपत्वविवरणमुत्तरयन्त्यः, विकल्पपरो वा किंशब्दः ?, अजडत्वं नाम किं हेतुत्वेनोक्तं विद्यमानदशायां सर्वदा प्रकाशमानत्वम् ? उत साध्यतयाऽभिमतं स्वयमेव स्वस्य प्रकाशकत्वमिति विकल्पोऽभिप्रेतः, तत्र प्रथमे कल्पेऽपि किमुत्पत्तिकालेऽपि प्रकाशाव्यभिचारो विवक्षित ? उतोत्पत्तिक्षणादूर्ध्वं प्रकाशाव्यभिचार ? इति विकल्पोऽभिप्रेतः, तत्राद्ये शिरस्यसिद्धिः पूर्वमेवोक्तेति मत्वा द्वितीयेऽनैकान्तिकत्वमाह ।

मू० सुखादिष्वपि तत्सम्भवात्, न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते अतोऽनुभूतिः स्वयमेव नानुभूयते अर्थान्तरं स्पृशतो ऽप्यङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति, तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम् ।

---

१ नित्यसदत्यन्तासतोर्न कादाचित्कत्वं तस्य चिवरश्रृङ्गयोरनुपलम्भादिति कादाचित्कत्वेन कार्यत्वसिद्धिः, कार्यत्वेन च सहेतुकत्वसिद्धिरिति भावः ।

टी० "सुखादिष्वि"ति, तद्विवृणोति "न ही"ति, शिरोऽन्तरं दूषयति "अत"इति, अत–इति अतः–हेतोरसिद्ध्यनैकान्तिकत्वाभ्यां साध्यमपि नेत्यर्थः, अनेन जडत्वं नानिष्टमिति दर्शितम् । अनुमानान्तरेण साधयिष्यत इत्यत्राह "अर्थान्तरमि"ति, व्याहतत्वान्न किञ्चिदपि प्रमाणमिममर्थं साधयितुमलमित्यर्थः । यथाहुः "अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति। स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हती"ति, एवं जडत्वप्रसङ्गरूपतर्कस्य विपर्यये पर्यवसानाभावो व्याप्त्यभाव इष्टप्रसङ्गत्वं व्याघातलक्षणप्रतितर्कपराहतत्वं च दर्शितम् । इति अथैवं मनुष इति पूर्वेत्रान्वयः । अथ स्वयंप्रकाशत्ववादमाह "तदिदमि"ति, अनाकलितानुभवविभवस्य–स्वव्यतिरिक्तस्य कृत्स्नस्य प्रकाशकः सन्ननुभवः स्वात्मन्यनन्यापेक्ष इति एको विभवः, प्राकट्यहेतुको यो व्यवहारः प्रकाशत इति तं च जनयितुमयमेव क्षम इत्यपरः । एवं द्विविधोऽनुभवविभवो नाकलितो येन सोऽनाकलितानुभवविभवः तस्य स्वमतिविजृम्भितं–प्रमाणतर्कनिरपेक्षस्वोत्प्रेक्षामात्रविजृम्भितमित्यर्थः, स्वमतिमाहात्म्यमित्यधिक्षेपो वा पारिशेष्यात्स्वयंप्रकाशत्वमभ्युपगमयितुं प्रथमं प्राकट्यलिङ्गं प्रतिक्षिपति ।

**मू०. अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः ।**

टी० अनुभूतीत्यादिना, अनुभूतिव्यतिरेकिण इत्यनेनासाधारण्यप्रतिक्षेपः फलितः, विषयधर्म–शब्देन आत्मधर्मव्युदासः, तेन रूपादिवत् साधारण्यं फलितम् अनुभूतिव्यतिरेकिविषयधर्मः प्रकाशः प्रत्यक्षयोग्यो न वा, न चेत् लिङ्गज्ञानाभावात् अनुमानानुदयः, योग्यश्चेदन्यैरप्युपलभ्यः स्यात् रूपादिवदिति भावः । अपेक्षाबुद्धिजन्यस्य द्वित्वादेर्यथा तत्तदेकपुरुषवेद्यत्वं तद्वत् प्राकट्यमपि तदेकपुरुषवेद्यमिति चेत् न द्वित्वादिसंख्याः प्रागेव सन्ति यथैकत्र सर्वा दिशस्तत्तदुपाध्यपेक्षाबुद्ध्याभिव्यङ्ग्याहिताः एवमपेक्षाबुद्ध्यभिव्यङ्ग्यद्वित्वादि तस्यैव प्रकाशते यद्गतमभिव्यञ्जकम् । अत्र तु रूपादिवज्जन्यधर्मत्वाभ्युपगमात् सर्वैरुपलभ्येत अभिव्यङ्ग्यत्वे हि व्यञ्जक-

वत एवावभासते सिद्धाञ्जनवतो निधिरिव, न तु जन्यं जनकस्यैवावभासते, न हि कुलालस्यैव घटः प्रकाशते । किंच रूपादिवदिति धर्मस्य निराश्रयोत्पत्त्ययोगादतीतानागतयोरर्थयोर्ज्ञायमानयोरपि प्राकट्यायोगात् प्राकट्याभावेऽपि ज्ञानं प्रतीयत इति तत्र रूपादिवत् प्राकट्यानुपलब्धेः प्राकट्येन ज्ञानानुमानं न सम्भवतीति भावः । यथा संवित्सिद्धौ "अतीतेऽनागते चार्थे कथं प्राकट्यसम्भवः । न हि धर्मिण्यसत्येव धर्मः सम्भवमृच्छती"ति अतीतानागतयोरपि द्वित्वादिवत् प्राकट्यं जन्यत इति चेन्न द्वित्वादेरपि निराश्रयोत्पत्त्ययोगात् तत्र द्वित्वाद्यनुत्पत्तावपि घटादेरिव द्वित्वादेरपि धीस्थतया व्यवहारोपपत्तेश्च । ये पुनर्द्वित्वादिकं नाभ्युपयन्ति न तान् प्रति द्वित्वादिकं प्रतिवन्दीकार्यं विषयविषयिभावसम्बन्धस्य विद्यमानाश्रयत्वनियमाभावात्, विषयविषयिभाव एव प्राकट्यमिति चेत् न, सम्बन्धस्य सम्बन्धिभ्यां विना प्रतीत्यनुपपत्त्या सम्बन्धिज्ञानं च प्रतीयत इत्यनुमेयमेव न स्यादिति प्राकट्यं लिङ्गं न भवति ।

**सू० उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यार्थधर्मकल्पनानुपपत्तेश्च ।**

टी० ॥ एवं प्राकट्याख्यं वस्त्वनुपलब्धमप्यन्यथाऽनुपपत्त्या कल्प्यत इत्याशङ्क्य कल्पकस्यान्यथासिद्धिं दर्शयति "उभये"ति, अनुभूत्येत्युक्ते प्राकट्यस्य नामान्तरमुक्तं स्यादिति शङ्कानिरासार्थम् उभयाभ्युपेत–शब्दः, यां प्राकट्यजनकत्वेन ह्यभ्यधाः, तयैवेत्येवकाराभिप्रायः, अशेषव्यवहारो हानोपादानादिव्यवहारः, तस्यानुभूत्यैव सम्भवाच्च तेन प्राकट्यं कल्प्यम् । ज्ञातो घटः प्रकटो घट इति व्यवहारश्च दृष्टो घटो दिष्टो घट इति व्यवहारवदन्यथासिद्ध इत्यशेष–शब्दाभिप्रायः, न हीच्छाजन्येन वस्तुगतेष्टत्वेन इच्छाऽनुमीयते घटः प्रकाशत इति घटकर्तृकतया प्रकाशः प्रतीयते घटमनुभवतीति घटकर्मकतया अन्यकर्मकर्तृकतयाऽनुभवः प्रतीयते एवमेकस्यैव कर्मकर्तृव्यवहारानुपपत्त्या कल्प्यत इति चेत् न कारकभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावात् तथा परशुमुद्यम्य वृक्षे

निपातयति परशुना वृक्षं छिनत्तीत्युक्तौ परशोः कर्मत्वकरणत्वे श्रुते अथापि नार्थभेदः, वृक्षस्याधिकरणत्वकर्मत्वे श्रुते तथापि नार्थभेदः, तथा-व्यवहारभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावान्न व्यवहारः प्राकट्यकल्पक इत्यभिप्रायेण चाशेषव्यवहारोपपत्तावित्युक्तं, घटः प्रकाशत इति व्यवहारो घटगतातिशयेन विना नोपपद्यते अन्यथा तस्य पटेऽपि व्यवहारस्य प्रसङ्गात् । स चातिशयः प्राकट्यमिति चेन्न योऽतिशयो व्यवस्थापकः स कथं घट एव स्यात् न पटे, इन्द्रियसंप्रयोगवशादिति चेत् तेन ज्ञानमेव व्यवस्थाप्यतां किमतिशयान्तराभ्युपगमेनेत्ययमर्थोऽप्यशेषव्यवहार-शब्देनाभिप्रेतः । यत्तु घटोऽयमित्यनुभववेलायां नानुभूत्यनुभव इति तन्न अनुभूयत इति शब्दाप्रयोगस्याविवक्षानिबन्धनत्वेनाननुभवप्रयुक्तत्वाभावात् लोके ह्यनुभूतकृत्स्नार्थविवक्षाऽस्ति चेत् तं सर्वं वदन्ति एकदेशविवक्षा चेदनुभूतैकदेशं वदन्ति एकदेशविवक्षाऽपि नास्ति चेत् न किंचिदपि वदन्ति अतोऽनुभूयत इति शब्दाप्रयोगो न तदप्रकाशत्वहेतुः । इदमप्यशेषव्यवहा-रशब्देनाभिप्रेतं विकलस्याविकलस्यापि व्यवहारस्याशेषशब्देन क्रोडीकर्तुं शक्यत्वात् एवं व्यवहारस्यान्यथासिद्धत्वादनन्यथासिद्धस्यैव कल्पकत्वात् न प्रकाशः कल्प्य इत्यर्थः ।

**भू० अतो नानुभूतिरनुमीयते, नापि ज्ञानान्तरसिद्धा ।**

टी० ॥ प्राकट्यानुमेयत्वानुपपत्तिं निगमयति "अत" इति, अतः—अनुपलब्धिव्यवहारान्यथासिद्धिभ्यां प्राकट्याभावादनुभूतिर्न प्राकट्यानुमेये-त्यर्थः, मानसप्रत्यक्षवेद्यत्वानुपपत्तिमभिप्रेत्याह "नापि ज्ञानान्तरसिद्धे"ति इदमत्र परोक्तमनुमानं, ज्ञानं मानसप्रत्यक्षग्राह्यं क्षणिकत्वे सत्यात्म-विशेषगुणत्वात् सुखदुःखप्रयत्नादिवदिति, आत्मविशेषगुणत्वादित्युक्ते धर्मादिष्वनैकान्त्यं स्यादिति तद्व्यावृत्त्यर्थं क्षणिकत्वे सतीत्युक्तं, क्षणिकविशेषगुणत्वादित्युक्ते शब्दादौ व्यभिचारः, क्षणिकात्मगुणत्वा-दित्युक्ते आत्मनः[1] संयोगे व्यभिचारः स्यादिति तत्परिहारार्थमा-

१ आत्ममनःसंयोगादेः क्षणिकत्वेन तत्र व्यभिचारो द्रष्टव्यः ।

त्म–विशेष–शब्दौ, तदिदमनुपपन्नं क्षणिकत्वगुणत्वयोर[1]न्यतरासिद्धत्वात्, दृष्टान्तश्च साधनविकलः, किंच यत् मानसप्रत्यक्षवेद्यं तदबुभुत्सितग्राह्यं दृष्टं यथा सुखादि, अतश्च तद्विषयज्ञानं नियतमिति वक्तव्यं, तस्मात् घटादिज्ञानविषयं यत् ज्ञानं तस्याप्यबुभुत्सितग्राह्यत्वात् मानसप्रत्यक्षवेद्यत्वं स्यात्, तद्विषयज्ञानस्यापि तथेत्यनन्तसंविदावलिसमुदायस्यावर्जनीयत्वात् ज्ञानान्तरानवकाशः स्यात् । मानसप्रत्यक्षग्राह्यत्वस्याबुभुत्सितग्राह्यत्वव्याप्यत्वं नास्ति स्वापादावुच्छ्वासनिश्वासप्रयत्ने सत्यपि तद्ग्रहणाभावादिति चेत् न, तदानीं जीवात्मनि प्रयत्नस्यैवासम्भवात् देहधारणादयः परमात्मसङ्कल्पाधीनास्तदानीमिति हि वेदान्तवादिनः, अन्तराभूतग्रामवत् इत्यधिकरणेऽयमर्थः सुनिर्णयः । स्वापे देहपरिवर्तनादिस्त्वङ्गप्रत्यङ्गतोदाद्दंशमशकादिजन्यदुःखादिना वाऽत्यल्पबोधे सति भवति तदानीं च प्रयत्नो धीविषयः, अतो हेतोरव्यभिचारात् मानसग्राह्यं सर्वमबुभुत्सितग्राह्यमिति अनवस्था स्यादेव, यदि बुभुत्सितग्राह्यं तर्ह्यन्योन्याश्रयणं, ज्ञाने सतीच्छा, इच्छायां सत्यां ज्ञानमिति, किं च मानसप्रत्यक्षवेद्यस्य बुभुत्सितग्राह्यत्वेऽपि सुखादिषूपलब्धिनियमदर्शनात् बुभुत्सानियमः कल्प्य इति, तद्वदेव ज्ञानेऽपि बुभुत्सानियमसिद्धिः, उपलब्धिश्च नियतं स्यात्, अतो बुभुत्सान्तरितज्ञानपरम्पराया अविरतिः स्यात्, ज्ञानं बुभुत्सितग्राह्यं सुखादि तु न तथेति चेत् न, मानसप्रत्यक्षत्वाविशेषे नियामकाभावात्, सुखादिषु, घटादिविषयप्रथमज्ञाने च बुभुत्सा, द्वितीयादौ तु नेति चेत् न, नियामकाभावात्, मानसग्राह्यत्वाविशेषात् प्राप्तां बुभुत्सां को वारयेत् । मानसग्राह्यत्वे सति हि बुभुत्सा सुखादिकं घटादिविषयप्रथमज्ञानं च मानसग्राह्यं द्वितीं-

१ अत्रायमभिसंधिः, वाद्यनभ्युपेतपदार्थसाधने वादी न तावन्निग्रहणीयो यावन्नाभ्युपगमिताः प्रकृतपदार्थास्तथा च ज्ञानस्य मानसप्रत्यक्षग्राह्यत्वे हेतूकृतं यत् क्षणिकात्मविशेषगुणत्वं तत्र क्षणिकत्वगुणत्वयोर्वेदान्तिकस्यैव ज्ञानेऽनभ्युपेततया न तेन हेतुना साध्यसिद्धिसंभवो नापि ते एव प्रथमतः साधनीये इति साम्प्रतं तथा सति कथाया एवापर्यवसानप्रसङ्गात् अत एवानुपदमेव "दृष्टान्तश्च साधनविकल" इत्युक्तं, सुखदुःखप्रयत्नेष्वात्मविशेषगुणत्वानङ्गीकारेण तत्र हेतोरसत्त्वे साधनवैकल्यापातासत्त्वात्मस्वरूपविश्रान्तसुखे गुणत्वस्य क्षणिकत्वस्य चानभ्युपगमेन दुःखप्रयत्नयोस्त्वन्तःकरणधर्मयोरात्मविशेषगुणताया दूरापास्तत्वेन युक्तं साधनवैकल्यकीर्तनम् ।

यादिज्ञानं न मानसप्रत्यक्षवेद्यमिति चेत् न तत्रापि[1] नियामकाभावात् । किंच क्षणिकात्मविशेषगुणत्वे सत्यपि द्वितीयादिज्ञानं न मानसग्राह्यं चेत् हेतोरनैकान्त्यं, यदि प्रत्यक्षेण गृह्यते तदा मानसग्राह्यमिति चेत् तर्हि पक्षो-हेतुश्च प्रत्यक्षग्राह्यशब्देन विशेष्यौ स्याताम् । किंच[2] अन्यैरप्युक्तानि दूषणान्त-

१ मानसग्राह्यत्वं किं मानसप्रत्यक्षविषयत्वस्वरूपयोग्यत्व ? मुत तथाविधप्रत्यक्षविषयत्वोपहितत्वं ? न तावदाद्यः, मानसप्रत्यक्षस्वरूपयोग्यताया द्वितीयादिज्ञानव्यक्तिष्वप्यक्षतया तत्रापि बुभुत्साया आवश्यकत्वेन बुभुत्सान्तर्गतज्ञानपरम्पराया अविरतिप्रसङ्गस्य विजातीयज्ञानान्तरोत्पादानवकाशप्रयोजकस्यावर्जनीयत्वापत्तेः, न च यत्र द्वितीयादिज्ञानस्य प्रत्यक्षमुत्पन्नं तत्रैव तद्योग्यत्वं कल्पयिष्यते, कल्पयिष्यते च तत्र तज्ज्ञानज्ञानमपि फलबलात्, यत्र तु न ज्ञानस्य ज्ञानं तत्र तद्योग्यत्वमपि न कल्प्यत इति नाविरतज्ञानधारोत्पादप्रसङ्गदोष इति वाच्यम् । योगीश्वरादिज्ञानव्यक्तिविषयत्वस्य सर्वज्ञानव्यक्तिसाधारण्येन तादृशव्यक्तौ मानाभावात् । योगीश्वरादिज्ञानविषयत्वस्यानभ्युपगमे च स्वीयज्ञानागोचरतादृशान्तिमज्ञानव्यक्तौ प्रमाणविरहेणैव न तत्सिद्धिः । किंच मानसग्राह्यत्वे सति हि बुभुत्सेत्यपि दुर्भणितं, ज्ञानस्य स्वरूपेऽवगते तत्र बुभुत्सायाः संचारस्य कथमप्यसंभवात् अत एवेच्छानां स्वविषयसिद्धिप्रतिवध्यत्वमिति युक्तिविदः । तस्मान्मानसप्रत्यक्षस्वरूपयोग्यत्वं बुभुत्सानिर्वाहकं, सा च ज्ञानज्ञाननिर्वाहिकेत्यतिशिथिलम् । नापि मानसप्रत्यक्षविषयत्वोपहितत्वमिति द्वितीयोऽप्यवकल्पते कल्पः, तादृशधर्मो हि प्राथमिकज्ञानव्यक्तौ सुखादिव्यक्तौ चाङ्गीकरणीयो न तु द्वितीयादिज्ञानव्यक्तावन्यथा ज्ञानधाराप्रसङ्गस्यावर्जनीयत्वापत्तेः, तत्किं प्राथमिकत्वं ? यन्नास्ति ज्ञानज्ञाने, यच्चास्ति पराननुव्यवसीयमानज्ञानव्यक्तौ, सन्ति प्रायः सर्वाः अपि ज्ञानव्यक्तयो यत्किंचिज्ज्ञानान्तरा इति नानुव्यवसीयेरन् यदि च न ज्ञानान्तरमपेक्ष्य, परं स्वसजातीयज्ञानव्यक्तीरपेक्ष्य प्राथमिकत्वं विवक्ष्यते, तदा तत्साजात्यमपि दुर्वचमेव यदनुव्यवसीयमानज्ञानव्यक्तिष्वेव नाननुव्यवसीयमानासूत्तरासु ज्ञानव्यक्तिषु, यथा हि अयं घट इत्येषा प्राथमिकत्वेनाभिमता ज्ञानव्यक्तिरनुव्यवसीयत इत्युच्यते तथा घटविषयकज्ञानविषयकज्ञानव्यक्तिरप्यनुव्यवसीयतां, तस्या अपि स्वात्मना प्राथम्यात्, न हि सापि पूर्वमुत्पन्नेत्यपूर्वतां जह्यात्, यदि च सा पूर्वोत्पन्नज्ञानविषयिणीत्येतावतैव तस्या नानुव्यवसाय इति वानरमुष्टिरवष्टभ्यते तदापि किं ज्ञानज्ञानं न क्वाप्यानुभविकं ? यदेवमभिधाय स्वस्थः स्याः, न हि लोकयात्रामनिर्वाह्य किंचित् कल्पयितुं युक्तं, प्रतिपद्यन्ते हि प्रमाणिका घटविषयकज्ञानविषयकज्ञानवानहमिति । यदि च सत्यां बुभुत्सायां तथा प्रतिपत्तिर्नासत्यामिति न दोष इति ब्रूयास्तदापि ज्ञानसद्भावे, ज्ञानासद्भावे वा, यथा न बुभुत्सोदयसंभवस्तथाभिहितप्रायमेवेति न किंचिदेतदित्याकूतेन प्रकाशिकायामुक्तं "नियामकाभावा"दिति ।

२ "किंचान्यैरप्युक्तानि" इत्यादिना प्रकाशिकायां यानि द्वितीयादिज्ञानस्य मानसग्राह्यत्वाभावे दूषणान्युक्तानि तानीमानि खण्डने श्रीहर्षोक्तानि ततश्च खण्डनानन्तरं प्रकाशिकेति तु निर्विवादं, परं श्रीभाष्यमपि खण्डनानन्तरमेवेत्युत्प्रेक्षामहे अत एवेहैव प्रकाशिकाकृता ज्ञानस्य मानसग्राह्यत्वाभावे खण्डनोक्तदूषणान्युदाहृत्य "एवमाद्यभिप्रायेण "नापि ज्ञानान्तरसिद्धेत्युक्त"मित्युक्तम् । अथवा श्रीभाष्यमाचार्यचरणैः श्रीहर्षकृत-

राण्युच्यन्ते यदि द्वितीयज्ञानं न मानसग्राह्यं तस्य द्वितीयस्य निष्प्रमाणकत्वेन शून्यता च स्यात्ततश्च प्रथमस्य, ततस्तद्विषयघटादेरपि शून्यता स्यात्। द्वितीयादिज्ञानं स्वतःसिद्धं चेत्, प्रथमज्ञानमपि तथा स्यादिति एवमाद्यभिप्रायेण "नापि ज्ञानान्तरसिद्धे"त्युक्तम्। अथ पारिशेष्यात् स्वयंप्रकाशत्वं सिद्धमित्याह।

सू० अपि तु सर्वं साधयन्त्यनुभूतिः स्वयमेव सिद्ध्यति, प्रयोगश्च—अनुभूतिरनन्याधीनस्वधर्मव्यवहारा स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्।

टी० ॥ "अपि त्वि"ति. "सर्वमि"ति अन्यथा संविदः शून्यत्वेन तदधीनसिद्धि सर्वं शून्यं स्यादिति तत्परिहाराय स्वयंप्रकाशत्वमवश्याभ्युपगन्तव्यमित्यभिप्रायेण सर्वं साधयन्त्यनुभूतिः स्वयमेव सिद्ध्यतीत्युक्तं, यथा संवित्सिद्धौ "तदेवापश्यतां सर्वशून्यत्वात् बिभ्यतां सताम्। गतिः स्वयंप्रकाशत्वादृते नान्योपलभ्यत" इति। अथ तर्कानुग्राह्यं स्वयंप्रकाशत्वे प्रमाणमुपन्यस्यति 'प्रयोगश्चे"ति, न केवलं पारिशेष्यात् स्वतःसिद्धत्वं, साधकप्रमाणमप्यस्तीति चार्थः। अनुभूतिरित्यादिना अनुमानद्वयं ग्रन्थलाघवार्थमविभागेनोक्तम्। अनुभूतिरनन्याधीनस्वधर्मा, स्वसम्बन्धादर्थान्तरे तद्धर्महेतुत्वात्। अनुभूतिरनन्याधीनस्वव्यवहारा, स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वात् इत्येवं विभागः, अत एव हि परत्र व्यवहारविशेषहेतोः स्वास्मिन्नपि तद्व्यवहारहेतुत्वमित्युत्तरत्र[1] वक्ष्यते प्राकट्यमभ्युपगम्य तदुपजीवनेन प्रथम-

खण्डनात्प्रागेव प्रणायि, अत एव ज्ञानस्य मानसप्रत्यक्षग्राह्यत्वमनुमिमानोवादी मानसप्रत्यक्षवेद्यस्य बुभुत्सितग्राह्यत्वादिविकल्पमुपकल्प्य परास्तः प्रकाशिका कृता, तदभिप्रायेणैव च "नापि ज्ञानान्तरसिद्धे"ति भाष्यमवतारितं, परं तु खण्डनकृदुक्तदूषणानामपि संभवे तेषामप्यनुपेक्षणीयतायां तान्यपि प्रदर्शितानि नैतावता श्रीभाष्यश्रीहर्षखण्डनयोः पौर्वापर्यविनिर्णयः खण्डनकृदुक्तयुक्तीनामन्यत्राप्युपलम्भेन तदुपदर्शनस्य खण्डनग्रन्थानैकान्तिकतया श्रीभाष्ये खण्डनोत्तरकालीनत्वसाधनाक्षमत्वादित्यैतिहासिका एवावधारयन्तु।

१ भाष्यकारेण स्वयमेवेत्यर्थः।

मनुमानमुक्तं, तदनुपजीव्य तु द्वितीयं, प्राकट्याभ्युपगमस्य न स्वयंप्रकाशताविरोधित्वं तस्य ज्ञानानुपमापकत्वानभ्युपगमात् धर्मवत्वेनान्याधीनधर्मवत्वे च साध्ये सिद्धसाध्यता स्यात्। अनुभूतित्वादिधर्माणां हेत्वन्तरनैरपेक्ष्यात्, न ह्यनुभूतित्वजातिर्हेत्वधीना नित्यत्वात्, जात्यनभ्युपगमेऽप्यनुभूतित्वस्यानुभूतिसामग्रीव्यतिरिक्तहेत्वनपेक्षत्वात् सिद्धसाध्यता अतोऽनन्याधीनस्वधर्मेत्युक्तं, स्वस्य धर्मः स्वोत्पाद्यतया सम्बन्धी धर्मः स्वधर्मः परत्र स्वसाध्यधर्मात्यन्तसजातीयधर्म्म इत्यर्थः। अर्थान्तरे तद्धर्महेतुत्वादिति हेतूक्तेः स्वधर्मशब्दनिर्दिष्टधर्मो हि तच्छब्दोक्तः परत्र स्वसाध्यधर्मात्यन्तसजातीयः स्वस्मिन्नवश्यं भावी धर्मः स्वधर्मत्वेन विवक्षितः। अत एव स्वस्मिन् रूपित्वा[1]नापादनात् रूपस्य दृष्टान्तस्य साध्यविकलत्वाशङ्का व्युदस्ता स्यात् दण्डान्तरनिरपेक्षं स्वस्मिन् दण्डित्वमनापादयति दण्डे व्यभिचारश्च परिहृतः स्यात्। अन्य–शब्दश्च स्वात्यन्तसजातीयान्यपरः। अन्यथा हेतुमात्रनिरपेक्षत्वे दृष्टान्तस्य साध्यविकलत्वप्रसङ्गात्, चक्षुराद्यपेक्षं हि रूपस्य चाक्षुषत्वं तादृशहेत्वपेक्षानियमराहित्यमनन्याधीन–शब्देन विवक्षितम्, अन्यापेक्षामात्रविरहे साध्ये परज्ञानस्यानुमेयत्वदर्शनेन बाधितत्वप्रसङ्गात्, न हि ज्ञानान्तरागोचरत्वमेतदनुमानसाध्यम्, अपि तु स्वात्यन्तसजातीयानपेक्षप्रकाशाहत्वमात्रं, तच्च परज्ञानस्य सम्भवतीति न बाधितविषयत्वम्। अनन्याधीनस्वव्यवहारेत्यत्रापि व्यवहारवत्त्वे साध्ये सिद्धसाध्यता, अतोऽनन्याधीनशब्दः। अन्यशब्दस्यात्यन्तसजातीयपरत्वाद्गुगाद्यपेक्षया बाधितत्वशङ्का परिहृता स्यात्, घटादीनां हानादिव्यवहारे स्वात्यन्तसजातीयानपेक्षो हेतुरनुभूतिरिति सिद्धसाध्यत्वव्युदासाय स्वशब्दः, स च परत्र स्वसाध्यव्यवहारात्यन्तसजातीयपरः, व्यवहारस्यात्यन्तसजातीयत्वं नामाभिन्नप्रवृत्तिनिमित्तकत्वं व्यवहारानुगुण्यमात्रं हि प्रकाशत इति व्यवहारस्य निमित्तं परज्ञानव्यवहारे कालात्ययापदेशपरिहारायापेक्षानियमराहित्यं विवक्षितं, हेतुमाह।

---

[1] रूपित्वापादनादिति पु॰ पा॰।

सू० यः स्वसम्बन्धादर्थान्तरे तद्धर्म्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ ।

टी० ॥ "स्वसम्बन्धादि"ति धर्महेतुत्वे व्यवहारहेतुत्वे च हेतौ विवक्षिते ऽनैकान्त्यं स्यादिति तत्परिहाराय तच्छब्दः, स्वस्य योधर्मो व्यवहारश्च तदत्यन्तसजातीयो धर्मो व्यवहारश्च स तच्छब्द–विवक्षितः, स्वस्याग्निसम्बन्धात् स्वस्मिन् पूर्वरूपसजातीयरूपान्तरतद्व्यवहारहेतुर्घटोऽग्निसापेक्ष इति तत्र व्यभिचारपरिहारायार्थान्तर इत्युक्तं, किंचार्थान्तरशब्दो-निर्दिष्टजातीयाद्विजातीयपरः, तेन परस्मिन् द्रव्ये संयुक्त[1]तद्व्यवहारहेतोर्द्रव्यस्य परद्रव्यसापेक्षतया ऽनैकान्त्यं परिहृतं स्यात्, द्रव्यं हि द्रव्यस्यात्यन्तसजातीयम् ।

ननु घटो हि पटे संयुक्तत्वादिकमापादयन् स्वस्य तथात्वे घटान्तरापेक्ष इत्यनैकान्त्यं, नैवं स्वसजातीयापेक्षानियमविरहरूपस्य साध्यधर्मस्य तत्र विद्यमानत्वात्, न हि घटः स्वसंयुक्तत्वादौ स्वात्यन्तसजातीयं घटमेवापेक्षत इति नियमोऽस्ति। पुत्रे पुत्रत्वतद्व्यवहारहेतौ पितरि स्वस्य पुत्रत्वतद्व्य[2]वहाराय पित्रन्तरसापेक्षे व्यभिचारपरिहाराय "स्वसम्बन्धादि"त्युक्तं, विद्यमानः स्वसम्बन्धोविवक्षितः परत्र स्वसम्बन्धतुल्यकालस्वगतधर्मात्यन्तसजातीयधर्मतत्सापेक्षव्यवहारहेतुत्वादित्यर्थः । न हि पित्रादिप्रवासनिधनयोः पुत्रादौ पुत्रत्वं तद्व्यवहारश्चापगच्छति । अत एव स्वस्मिन्ननन्यापेक्षद्वैधीभावमनापादयति परत्र द्वैधीभावहेतौ द्रव्ये व्यभिचारश्च दूरोत्सारितः ।

ननु सिद्धान्तिनोऽप्यभिमतमिदमनुमानं चेतनः स्वसम्बन्धतुल्यकालं शरीरत्वं शरीरे जनयन् स्वस्मिन् शरीरत्वतद्व्य[3]वहारयोर्नान्यानपेक्षः, अपि तु परमात्मसापेक्षः, परमात्मा च चेतनत्वादत्यन्तसजातीयः, अतस्तत्रानै-

१ संयुक्तत्वतद्व्यवहारहेतोरिति पुस्तकान्तरपाठः ।

२ पुस्तकान्तरे पुत्रत्वव्यवहारायेत्येव पाठः ।

३ शरीरतत्त्वतद्व्यवहारयोरिति पु॰ पा॰ ।

कान्त्यमिति, नैवं स्वव्यापकधर्महेतुत्वस्य विवक्षितत्वात्, न हि चेतनत्वव्यापकं शरीरत्वम्, ईश्वरस्य चेतनस्य शरीरत्वाभावात्, अतः स्वधर्मशब्दाभिप्रेतेन स्वावश्यंभावित्वेन परिहारः—एतदुक्तं भवति धर्म शब्दः प्रकाशपरो वा धर्ममात्रपरो वा अन्य—शब्दश्च अन्यमात्रपरो वा स्वात्यन्तसजा[1]तीयान्यपरो वा तत्र हेतुमात्रानपेक्षप्रकाशत्वे दृष्टान्तस्य साध्यविकलत्वं, रूपं हि चक्षुराद्यपेक्षप्रकाशं, स्वात्यन्तसजातीयानपेक्षप्रकाशत्वे साध्ये व्यर्थविशेषणत्वं हेतोः, हेतुत्वमात्रेण साध्यसिद्धेः, न हि यस्य कस्यचिद्धेतुः सन् घटादिः स्वप्रकाशे घटान्तरमपेक्षते । हेत्वनपेक्षधर्मत्वे—ऽनुभूतित्वादिना सिद्धसाध्यता परश्वधादिष्वनैकान्त्यं च, काष्ठद्वैधीभावहेतोः परश्वधस्य स्वद्वैधीभावे हेत्वन्तरसापेक्षत्वात्, स्वात्यन्तसजातीयानपेक्षधर्मत्वे चानुभूतित्वादिना सिद्धसाध्यता, विषयप्रकाशके परज्ञाने लिङ्गापेक्षप्रकाशत्वदर्शनात् बाधश्च, रूप[2]स्य रूपान्तरानपेक्षस्वगतरूप[3]त्वहेतुत्वाभावात् दृष्टान्तस्य साध्यविकलता, पुत्रगतपुत्रत्वहेतौ पित्रन्तरसापेक्षपुत्रत्वधर्मे पितरि अनैकान्त्यं च, परद्रव्यगतसंयुक्तत्वहेतौ द्रव्यान्तरसापेक्षसंयोग[4]द्रव्ये चानैकान्त्यम् अत एवमादिदोषपरिहारार्थमित्थं प्रयोक्तव्यम्—अनुभूतिः, स्वजन्यपरगतधर्मात्यन्तसजातीयधर्म्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा, स्वविजातीये स्वावश्यंभाविधर्मात्यन्तसजातीयस्वसम्बन्धतुल्यकालधर्महेतुत्वादिति हेतुः, तथा अनुभूतिः, स्वजन्यपरगतव्यवहारात्यन्तसजातीयव्यवहारभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा, स्वविजातीये स्वावश्यंभाविव्यवहारात्यन्तसजातीयस्वसम्बन्धतुल्यकालव्यवहारहेतुत्वादिति हेतुः, व्यवहारस्य स्वावश्यंभावित्वं नामावश्यं भाविधर्मनिबन्धनत्वं, व्याप्तिदर्शनपूर्वकं दृष्टान्तमाह "य" इति ।

**सू॰ रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन्**

---

१ स्वात्यन्तसजातीयभूतान्यपरो वेति पाठान्तरम् ।
२ रूपे इति पुस्तकान्तरपाठः ।
३ रूपत्वहेतुत्वाभावादिति पुस्तकान्तरपाठः ।
४ द्रव्यान्तरसापेक्षसंयोगे द्रव्ये चेति पुस्तकान्तरपाठः ।

स्वस्मिन् न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ, अतोऽनुभूतिरात्मनः प्रकाशमानत्वे, प्रकाशत इति व्यवहारे च, स्वयमेव हेतुः ।

टी० य–इति साध्यसाधनधर्मौ सपक्षे दर्शयति "रूपादिर्हीति, पक्षधर्मताबलसि[1]द्धमर्थमाह "अतोऽनुभूति"रिति, 'प्रकाशत इति व्यवहार" इति, अनुभूतिः प्रकाशत इति व्यवहारे, इति अनुभूतिरिति व्यवहारे चेत्यर्थः ।

ननु स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वं सोपाधिकं सम्बन्धविशेषादर्थान्तरे तद्धर्मव्यवहारहेतुत्वस्यैव स्वस्मिंस्तद्धर्मव्यवहारयोरनन्याधीनत्वे प्रयोजकत्वात्, स च सम्बन्धविशेष आश्रयाश्रयिभावरूपः, स च रूपादावस्ति न तु पक्ष इति, नैतत्, अस्य साध्यसमव्याप्त्यभावेनानुपाधित्वात् आश्रयाश्रयिभावविरहे ऽपि सम्बन्धमात्रादर्थान्तरे प्रकाशत इति व्यवहारहेतोर्दीपस्य स्वस्मिन्नपि तद्व्यवहारेऽत्यन्तसजातीयानपेक्षत्वं हि दृष्टं, पूर्वं ज्ञानस्य परप्रकाशत्ववादिभिः स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिर्व्याहतिश्चोक्ते तत्र घटो ऽयमित्यनुभववेलायामनुभूयत इति शब्दस्याप्रयोगात् असिद्धिरुक्ता शाब्दव्यवहारे वैकल्यपौष्कल्ययोर्विवक्षाविशेषहेतुकत्वेनार्थोऽनुभवेऽननुभवे च प्रयोजकत्वाभावकथनादसिद्धिः परिहृता व्याहतिश्च नास्ति, तथा हि अङ्गुल्यग्रस्य स्वात्मस्पर्शादिषु व्याहतिरुपलब्धिनिबन्धना, दीपादिषु च प्रकाश्यत्वप्रकाशकत्वे दृश्येते निरूप्य[2]माणे कर्मकर्तृभावे विरोध एव नास्ति, निरासको दीपः निरसनीयं तमः, दीप उत्पादकः, ज्ञानमुत्पाद्यं, ज्ञानमुत्पादकं व्यवहार उत्पाद्यः इति । किंच यद्यपि कर्मकर्तृभावस्य स्वतोविरोधात् भेदकत्वमुपलब्धिसिद्धं, तथापि ज्ञापकेषु विरोधनियमाभावश्चोपलब्धिसिद्धः, ज्ञातरि मनसि, शब्दशब्दे, पदमिति पदे, तथेदृशार्थान्तरेष्वविरोधो हि उपलभ्यते उत्पादकेष्वेव तु विरोधनियमः, तत्र चाकारान्तरेण चेदविरोधः ।

१ पक्षाधर्मताबलसिद्धधर्ममाह ।

२ युक्त्या सिद्धिमुपेयुषि ।

ननु घटादिषु व्यवहारार्हत्वं स्वव्यतिरिक्तज्ञानहेतुकं दृष्टं, ज्ञाने व्याप्तिर्भज्यते चेत् व्यवहारस्य ज्ञानपूर्वकत्वव्याप्तिभङ्गेन अज्ञातस्यैव ज्ञानस्य व्यवहारास्पदत्वं स्यात्, नैवं घटादिषु ज्ञेयव्यतिरिक्तज्ञातृदृश्यत्वेऽपि स्वेनैव ज्ञात्रा ज्ञातरि दृश्यत्वमिति सर्वाविगीतमिति तत्र परेणापि कर्म-कर्तृविरोधव्याप्तिभङ्गोऽभ्युपगन्तव्यः, तथा घटादौ स्वव्यतिरिक्तकरणज-न्यज्ञानदृश्यत्वेऽपि मनसि तद्भग्नं, स्वानुमाने मनस एव करणत्वात्, तथा सर्ववाच्यानां स्वव्यतिरिक्तशब्दवाच्यत्वेऽपि शब्दशब्दे पदपदे च तद्भग्नं, घटादीनां स्वव्यतिरिक्तवाग्व्यवहार्यत्वेऽपि वागिन्द्रिये तद्भग्नम्, अतः कर्म-कर्तृभावस्य विरोधव्याप्तिर्नास्ति व्यवहारस्य ज्ञानपूर्वकत्वं तु न कैश्चि-दपि भग्नं, ज्ञानव्यवहारस्य ज्ञानकर्मतापूर्वकत्वविरहः प्रसज्यते चेन्नानिष्टः, अवभासपूर्वकत्वविरहस्याभग्नव्याप्तिकत्वान्न तद्विरहप्रसङ्गः । तस्मादव-भासमानस्यैव ज्ञानस्य व्यवहारास्पदत्त्वम्, अतः स्वविषयपरविषयव्यवहा-रानुगुण्यं ज्ञानस्य युक्तम् । अथ ज्ञातृज्ञेयनिरसनं ज्ञानस्य स्वयंप्रकाशत्वं च बौद्धपक्षेऽपि समानमिति तद्व्यावर्त्तकं ज्ञानस्य नित्यत्वं साधयति ।

**सू० सेयं स्वयंप्रकाशानुभूतिर्न्नित्या च प्रागभावाद्यभावात्, तद-भावश्च स्वतःसिद्धत्वादेव, न ह्यनुभूतेः स्वतःसिद्धायाः प्रागभावः स्वतोऽन्यतोवाऽवगन्तुं शक्यते, अनुभूतिः स्वा-भावमवगमयन्ती सती तावन्नावगमयति तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगम-यति ?**

टी० ॥ "सेयमि"ति, सेयं—परमार्थभूतसन्मात्रैक्या प्रमाणाविषयभूता चेत्यर्थः । यद्वा स्वयंप्रकाशत्वहेतुभूतधर्मवत्तया प्रसिद्धेत्यर्थः । स्वयंप्रकाश-त्वस्य नित्यताहेतुत्वविवक्षया "स्वयंप्रकाशे"त्युक्तं, चः साध्यसमुच्चये सौग-तसाम्यशङ्कानिवृत्तौ वा । कुत ? इत्यत्राह "प्रागभावा"दिति । स च कथ-मिति शङ्कायां ग्राहकाभावादित्यभिप्रायेणाह "तदभावश्चे"ति । स्वतःसि-द्धत्वेन प्रागभावाद्यभावं विकल्पमुखेन उपपिपादयिषुर्विकल्पशिरोद्वयेऽनुप-

पत्तं प्रतिजानीते "न ही"ति, स्वतःपत्ते अनुभूतिः किं सती स्वाभावमवगमयति? उतासतीति विकल्पमभिप्रेत्य सत्त्वपत्तं दूषयति "अनुभूति"रिति, कुत इत्यत्राह? "तस्या"इति । ग्राह्याभावादित्यर्थः । अनुभूतिः किमनुमित्यादिरूपा स्वाभावमवगमयति? उत प्रत्यत्तरूपेति विकल्पे लिङ्गाद्यभावात् प्रथमः कल्पो न संभवतीत्यभिप्रेत्य द्वितीयः कल्पो ग्राह्याभावाद्दूषितः पूर्वाभिप्रेतविकल्पशिरसोरसत्त्वपत्तं ग्राहकाभावेन दूषयति—

सू० एवमसत्यपि नावगमयति, अनुभूतिः स्वयमसती कथं स्वाभावे प्रमाणं भवेत्?, नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूतेरनन्यगोचरत्वात् अस्याः प्रागभावं साधयत् प्रमाणमनुभूतिरियमिति विषयीकृत्य तदभावं साधयेत् स्वतःसिद्धत्वेनेयमिति विषयीकारानर्हत्वान्न तत्प्रागभावोऽन्यतः शक्यावगमः, अतोऽस्याः प्रागभावाद्यभावादुत्पत्तिर्न्न शक्यते वक्तुमित्युत्पत्तिप्रतिब[1]द्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ।

टी० "एवमि"ति । पूर्वतराभिप्रे[2]तयोर्विकल्पशिरसोरन्यत इति पत्तं दूषयति "नापी"ति । अनुभूतिरनन्यगोचरा स्यात् ततः किमभावाग्रहणस्य?, अभावो ह्यन्यगोचरत्वमर्हतीत्यत्राह "अस्या"इति, अस्याः—न ह्यन्यस्य प्रागभावो ग्राह्यः, अपि त्वनुभूतेरेव, तस्मात् तां विषयीकृत्यैव तदभावो ग्राह्यः, तस्या विषयीभावानर्हत्वात् न तत्प्रागभावग्रहणं शक्यमित्यर्थः । एवं प्रागभावाभावादुत्पत्त्यभावः । ततश्च परिणामादिसर्वविकारान्तराभावमप्युपपादयति "अतोऽस्या"इति । अतः—स्वतःपरतःपत्तयोरुभयोरप्यभावस्य दुर्ग्रहत्वादित्यर्थः । विकारमात्रविरहे साध्येऽनुत्पन्नत्वमन्तवति प्रागभावेऽनैकान्तिकं स्यात्, अतो भावरूपविकारविरहस्य साध्यत्व-

१ उत्पत्तिव्याप्याः ।
२ पूर्वतराभिहितयोरिति पाठान्तरम् ।

ज्ञापनाय भाव-शब्दः । यद्वा भावस्य विकार इति षष्ठीसमासः, ततश्च भावाभावरूपविकारमात्रविरहे साध्ये प्रागभावे व्यभिचारशङ्कानिवृत्त्यर्थं भावत्वे सत्यनुत्पन्नत्वं विकारान्तराभावे प्रयोजकमिति फलितम् । अनुभूतिर्नान्तवती भावरूपत्वे सत्यनुत्पन्नत्वात् यदन्तवत् तद्भावरूपत्वे सत्यनुत्पन्नं न भवति, यथा घट इति । बौद्धाभ्युपगतक्षणिकत्वव्यावृत्त्यर्थं नित्यत्वायानुत्पत्तिस्तद्व्यापक[3]विकारान्तराभावश्च साधितौ ।

**मू० अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापकविरुद्धोपलब्धेः । न ह्यनुत्पन्नं नानाभूतं दृष्टम्**

टी० ॥ अथ तदभ्युपगताऽनेकत्वव्यावृत्त्यर्थं सजातीयभेदं व्युदस्यति "अनुत्पन्नेयमि"ति । व्यापकविरुद्धोपलब्धेः—नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः । अथ व्याप्तिं दर्शयति "न ही"ति । अस्य ग्रन्थस्य यदनुत्पन्नं तदनानाभूतं दृष्टमित्यर्थो वक्तुं न युज्यते, ब्रह्मव्यतिरेकेणानुत्पन्नस्य अनानाभूतस्य कस्यचिन्मायावेदान्तिभिरनभ्युपगमात् यदनानाभूतं तदनुत्पन्नमित्युक्ते व्यापकजन्मनिवृत्त्या व्याप्यनानात्वनिवृत्तिरुक्ता न स्यात्, तस्मादयमर्थः—यन्नानाभूतं तदनुत्पन्नं न दृष्टम्, अपि तूत्पत्तिमदेव दृष्टमिति जन्मनो नानात्वव्यापकत्वं दर्शितम् । अनेनोत्पत्तिनिवृत्त्या नानात्वनिवृत्तिरित्यर्थसिद्धम् । यद्वा यथा न ह्यनग्नि धूमवद्दृष्टमित्युक्ते अग्निमदेव धूमवदित्युक्तं स्यात्, तद्वदिहाप्यनुत्पन्नं नानाभूतं न दृष्टमित्युक्ते उत्पत्तिमदेव नानाभूतमित्युक्तं स्यात् ततश्चोत्पत्तिर्व्यापिकेत्युक्तं भवति । अनुभूतिर्नाना न भवति अनुत्पन्नत्वात् यन्नानाभूतं तदुत्पत्तिमद्दृष्टं यथा घट इति व्यतिरेक्यनुमानमनुभूतिं पक्षीकृत्योक्तं, गगनादिषु व्यभिचारोदुर्वचः, तेषामुत्पत्तिमत्त्वेन वेदान्तिभिरभ्युपगमादिति भावः । एवं सजातीयभेदो निषिद्धः ।

**मू० भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न**

---

३ तद्व्याप्तविकारान्तराभावश्चेति पाठः पुस्तकान्तरे ।

संभवति, अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्म्मः, यतो निर्द्धूतनिखिलभेदा संवित्।

टी० ॥ अस्मिन्नर्थे विकारान्तराभावे च भेदं विकारान्तरं च पक्षीकृत्यान्वय्यनुमानमाह "भेदादीना"मिति, आदि-शब्देन उत्पत्त्यादयो विवक्षिताः। भेदादयो नानुभूतिधर्मा अनुभाव्यत्वात् रूपादिवदिति। व्यावृत्तिरूपधर्मोऽपि नास्तीत्युपपादयति "अतोऽनुभूते"रिति । अन्योऽपि-व्यावृत्तिरूपोऽपीति भावः। यद्वा विकारनानात्वजडत्वनिषेधान्नित्यत्वैकत्वस्वयंप्रकाशत्वरूपधर्मवत्त्वशङ्काव्युदासार्थं पूर्वोक्तनानात्वादिनिरासार्थं च व्यतिरेक्यनुमानमाह "अनुभूतेरि"ति । अन्योऽपि-नित्यत्वादिरूपोऽपीत्यर्थः। अनुभूतिर्न व्यावृत्तिरूपधर्मभाक् अनुभवस्वरूपत्वात् यद्व्यावृत्तिरूपधर्मभाक् तदननुभूतिर्दृष्टं यथा घटादीति व्यतिरेकि। यदि व्यावृत्तिरूपधर्मं पक्षीकृत्यानुभूतिधर्मत्वाभावः साध्यः स्यात्तदा अनुभाव्यत्वं हेतुः, यथा रूपादीति सपक्षः, इदमन्वयि। एवं स्वगतभेदो निरस्तः पूर्वमेव ज्ञेयभेदो निरस्तः "अत्रायं पुरुषः स्वयंज्योतिर्भवती"त्यादिषु वेदान्तवाक्येष्वात्मनो नित्यत्वस्वयंप्रकाशत्वादयः प्रतिपन्नाः, अत्र तु संविदो नित्यत्वादिरुच्यते तत् कथं सङ्गच्छत? इत्यत्राह "यत"इति। निर्धूतनिखिलभेदा-सकलभेदनिषेधेन विजातीयभेदोऽपि निषिद्ध इति विजातीयभेदस्य ज्ञातुर्मिथ्यात्वेन न स आत्मा, अपि तु परमार्थभूता संविदेवात्मेत्यर्थः। यद्वा वेदान्तैरात्मनः प्रतिपादितं सजातीयविजातीयस्वगतनानात्वराहित्यं संविद एवोपपन्नमिति सैवात्मेत्यर्थः।

मू० अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा, अजडत्वाच्च अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्त्तमानमनात्मत्वमपि हि संविदो व्यावर्त्तयति

ननु चाहं जानामीति ज्ञातृता प्रतीतिसिद्धा, नैवं, सा

भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य, अनुभूतेः स्वात्मनि कर्तृत्वायोगात्, अतो मनुष्योऽहमित्यत्यन्त-

टी० "स्वरूपे"ति, स्वरूपातिरिक्त आश्रयो हि ज्ञाता स नास्ति संवित्स्वरूपातिरिक्तत्वादेवापरमार्थ इति स नात्मेति परमार्थभूता संविदेवात्मेत्यर्थः। स्वप्रकाशरूपा सैवात्मेति वेदान्तैरात्मनः प्रतिपादितं स्वयंप्रकाशत्वं संविद उपपन्नमिति सैवात्मेत्यर्थः। यद्वा तुच्छत्वशङ्कानिरासार्थमुक्तं "स्वप्रकाशरूपे"ति, स्वयंप्रकाशत्वं स्वतन्त्रसाधकं चेत्याह "अजडत्वाच्चे"ति, इदं व्यतिरेकि, संविदात्मा अजडत्वात् यन्नात्मा तज्जडं यथा घटादीति। एतद्विवृणोति "अनात्मत्वे"ति, अनात्मत्वव्याप्तं-व्याप्तमिति कर्तरि क्तः, व्यापकमित्यर्थः प्राप्त इतिवत्, तर्केण ज्ञातृत्वे प्रतिक्षिप्ते आत्मनोऽहंप्रत्ययगोचरत्वस्य स्वानुभवप्रत्यक्षसिद्धत्वेन चोदयति

"ननु चे"ति, चश्चोद्यसमुच्चये। प्रतीतिसिद्धा-स्वानुभवरूपप्रतीतिसिद्धेत्यर्थः। अत्राह "नैवमि"ति, प्रतीतेर्भ्रान्तित्वमाह "सा भ्रान्तिसिद्धे"ति, अनुभवसिद्धे विष[1]यत्वेन पूर्वं प्रतीता रजतता यथा शुक्तिज्ञानबाधितत्वात् भ्रान्तिसिद्धा भवति तथेत्यभिप्रायेणाह "रजततेव शुक्तिशकलस्ये"ति, भ्रमाधिष्ठानत्वोपपत्तये शकल-शब्दः, वि[2]कल्प[3]वपुषः शुक्तेर्भ्रमास्पदत्वायोगात्। यद्वा ज्ञातृत्वे प्रतीयमाने तत्र ज्ञानांशस्य पारमार्थ्यं कर्त्रंशस्यापारमार्थ्यं च दृष्टान्ततया "रजततेव शुक्तिशकलस्येत्युक्तं" तत्र हीदमंशः परमार्थः, रजततैवापर[4]मार्थेति। भ्रान्तिसिद्धत्वमुपपादयति "अनुभूते"रिति, ततः किमि? त्यत्राह "अतो मनुष्य" इति, कर्तृत्वायोगमुपपादयति।

---

१ अनुभवविषयत्वेनेति पुस्तकान्तरम्।

२ अविकलवपुषः शुक्तेर्भ्रमाधिष्ठानत्वं न संभवति स्वाधोदेशावच्छेदेन मालिन्यवत्यास्तस्या रजतवैसादृश्येन भ्रमास्पदत्वायोगादिति "अविकलवपुषः" इत्येव साधीयान् पाठ इति प्रतिपद्यामहे।

३ अविकलवपुष इति तु पाठान्तरम्।

४ रजततैवापरमार्थ इति युक्तः पाठः सर्वत्र पुस्तकेषूपलभ्यमानः, "रजततैवापरमार्था" इति पाठस्तु अयुक्ततम इति पाठापपाठज्ञा विज्ञा एव विजानन्तु।

सू० बहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तं, ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वं, तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थम्, अविक्रिये साक्षिणि सन्मा[1]त्रात्मनि कथमिव सम्भवति? ।

टी० "ज्ञातृत्वं ही"ति, यद्वा ज्ञातृत्वं नाम किं ब्रह्मस्वरूपभूतज्ञानाश्रयत्वम्? उतान्तःकरणक्रियारूपज्ञानाश्रयत्वमिति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति "अनुभूते"रिति, पूर्वोक्तयुक्तिभिरनुभूतेरेव पारमार्थ्ये सिद्धे तस्या ज्ञातृत्वं स्वात्मनि कर्तृत्वं स्यात्, तत्तु व्याहतमित्यर्थः । कर्तृत्वमाश्रयत्वं ज्ञातृत्वं भ्रान्तपुरुषप्रतीतिसिद्धत्वाच्चाध्यस्तमित्यभिप्रायेणाह "अत" इति, पिण्डस्योत्पत्त्यादिभिरात्मव्यतिरिक्तत्वस्य संप्रतिपन्नत्वादत्यन्तबहिर्भूतेत्युक्तम् । अथ न केवलं स्वापेक्षया कर्तृत्वमनुपपन्नम्, अपि तु स्वपरविभागनिर्विशेषं कर्तृत्वमात्रमेवानुपपन्नमित्यभिप्रायेण द्वितीयं शिरो दूषयति "ज्ञातृत्वं ही"ति, ततः किमि?त्यत्राह "तच्चे"ति, विक्रियात्मकम् । उत्पत्तिविनाशयोगात् क्रियायास्तदाश्रयत्वमपि कादाचित्कमिति तद्विकाररूपमित्यर्थः । जडं—ज्ञेयम्, अत एव विकारिद्रव्याहङ्कारग्रन्थिस्थं जडत्वविक्रियात्मकत्वसाम्यादिति भावः । ग्रन्थिर्नाम बन्धनस्याशैथिल्यकरो ग्रन्थ[2]नविशेषः । अहङ्कारस्य सर्वभ्रमाश्रयत्वात् ग्रन्थिरित्युक्तम् । एतद्विरोधिरूपमाह "अविक्रिय" इति साक्षित्वाभ्युपगमेन ज्ञातृत्वमभ्युपगतं भवतीति शङ्कायां साक्षित्वमपि ज्ञानस्वरूपत्वानुगुणमित्यभिप्रायेण—

सू० दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वं, सुषुप्तिमूर्च्छादावहंप्रत्यया[3]भावेऽप्यात्मानुभवदर्शनेन ना-

१ चिन्मात्रात्मनीति पुस्तकान्तरपाठः ।

२ ग्रथनविशेष इति पुस्तकान्तरपाठः ।

३ अहंप्रत्ययापायेऽपीति पुस्तकान्तरपाठः ।

धर्मधर्मिभेदेन ज्ञानद्वैविध्यस्य निजतन्त्रे सुप्रसिद्ध्या तदभिप्रायेण विकल्पनम् ।

त्मनोऽहंप्रत्ययगोचरत्वं, कर्तृत्वे ऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वाऽनात्मत्वादिप्रसङ्गाद्दुष्परिहरः ।

टी० "साक्षिणीत्युक्तम्" अविद्यानुभवरूपत्वमेव साक्षित्वमिति ज्ञानत्वाविरोध इति भावः । चिन्मात्राऽऽत्मनि स्वयंप्रकाशे जडं ज्ञातृत्वमजडस्य न संभवतीति भावः । कर्तृत्वादिर्नात्मधर्मः, दृश्यधीनसिद्धित्वात् रूपादिवदित्यन्वयिनमभिप्रेत्याह "दृश्यधीनसिद्धित्वादेवे"ति, कर्तृत्वादेरित्यादि–शब्देनाहंगोचरत्वं गृह्यते य एव भेदादीनामनुभूतिधर्मत्वाभावे हेतुः, तेनैवेत्यकाराभिप्रायः । अहमर्थो ह्यात्मा तेन समानाधिकरणतया प्रतीतो ज्ञाता आत्मा स्यादित्याह "सुषुप्तिमूर्च्छादावि"ति, नाहं खल्वित्यादिश्रुत्युपजीवनेनाहंप्रत्ययापायेऽपीत्युक्तम् आत्मनः कर्तृत्वाहंप्रत्ययगोचरत्वाभावे व्यतिरेक्यनुमानत्रयं प्रसङ्गरूपेणाह "कर्तृत्व"इति, आत्मा न कर्त्ता, न चाहंप्रत्यगोचर इति प्रतिज्ञाद्वयम्, अजडत्वात्, प्रत्यक्त्वात्, आत्मत्वादिति हेतुत्रयं, यत्कर्तृ यदहंप्रत्ययगोचरः, तज्जडं, परागनात्मा च दृष्टं यथा शरीरमिति । यद्वा आत्मा न कर्त्ता, न चाहंप्रत्ययगोचरः, जडत्वादिप्रसङ्गात् देहवदिति । जडत्वं–दृश्यतैकस्वरूपत्वं, परात्त्वं–परस्मै भासमानत्वम्, आत्मत्वं–पुरुषार्थप्रतिसंबन्धित्वं, देहं प्रति नियन्तृतया व्यापित्वं वा, तदाभावोऽनात्मत्वम् आदि–शब्देन क्षयिष्णुत्वादिकं विवक्षितम् । अहंप्रत्यगोचरस्य देहस्यानात्मत्वे सिद्धे ह्यहंप्रत्ययगोवरस्य कर्तुरनात्मत्वप्रसक्तिरित्यत्राह ।

मू० अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलस्य स्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव, तथा ऽहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् ।

टी० "अहंप्रत्यगोचरादि"ति, क्रियाफलस्वर्गादेर्भोक्तुरित्यनेन देहा-

तिरिक्तत्वं सिद्धम् । प्रामाणिकानां—चार्वाकातिरिक्तानाम् अनात्मनोऽहङ्कारस्य कर्तृत्वे कथमात्मनः संसारभोक्तृत्वमि? ति च शङ्काशरीरप्रतिबन्धा-निरस्ता । स्वर्गादिभोक्तुरात्मत्वे सिद्धे ज्ञातैवाऽऽत्मा स्यादित्यत्राह "तथे"ति, शरीरातिरिक्तात्मनोऽभ्युपगमो हि प्रमाणबलात्क्रियते तथा ज्ञातुरपि विलक्षणत्वेन प्रमाणसिद्धत्वात्तथाऽभ्युपगन्तव्यमित्यर्थः । यद्वा अप्रामाणिकाहंप्रत्ययगोचरत्वेन हि शरीरस्यानात्मत्वादि प्रमाणिकाहंप्रत्ययगोचरस्य तु कथमनात्मत्वादी? त्यत्राह "अहंप्रत्ययगोचरादि"ति, देहस्याप्रामाणिकाहंप्रत्ययगोचरत्वं प्रमाणबाधादेव हि ज्ञायते एवं कर्मफलभोक्तुरौपाधिकाकारवतो-ज्ञातुरप्यात्मत्वं प्रमाणबाधितं चेदात्मनस्तद्विलक्षणत्वं स्वीकार्यमित्यर्थः । अतः प्रामाणिकाप्रामाणिकविभागाभावेनाहंप्रत्ययगोचरत्वमात्रमेवानात्म-त्वसाधकमिति भावः ।

सू० एवमविक्रियाऽनुभवस्वरूपस्यैवाभिव्यञ्जकोजडोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति, आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः, दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति, तत्कृतोऽयं जानाम्यहमिति भ्रमः, स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्व? मिति मा वोचः, रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वापि[1]दर्शनात् ।

टी० अविक्रियात्मनः कथं ज्ञातृत्वसंभव? इत्यत्राह "एवमि"ति, यद्वा ज्ञातृत्वमहङ्कारयन्यिस्यमिति पूर्वमुक्तं कथमहङ्कारस्य ज्ञातृत्वसंभव? इत्यत्राह "एवमि"ति, अभिव्यञ्जकत्वप्रयुक्तोऽयमहङ्कारस्य संविदाश्रयभाव इत्यर्थः । अभिव्यञ्जकस्त्वहङ्कारः कथमस्य स्वाश्रयतयाऽभिव्यञ्जकत्वमि? त्यत्राह "आत्मस्थतये"ति, स्वभाव—शब्देनौत्सर्गिकत्वं विवक्षितम्

१ तदभिव्यञ्जकत्वदर्शनादिति पुस्तकान्तरम् ।

क्वचित्तु प्रमाणबाधश्चेत्र तथेति भावः । दृष्टान्तं दर्शयति "दर्पणे"ति, आत्मस्थतयाऽभिव्यञ्जनं न दर्पणत्वप्रयुक्तम् ।

न च प्रतिबिम्बत्वप्रयुक्तम्, अभिव्यञ्जकत्वमात्रप्रयुक्तमिति दर्शयितुं खण्डादिग्रहणम्, आदि–शब्देन गुणादि, एवं व्यङ्ग्यव्यञ्जकभावकृतो ज्ञातृत्वावभासः संविद इत्यत्राह "तत्कृत" इति, जडस्याभिव्यञ्जकत्वमयुक्तं, स्वयंप्रकाशस्य वस्तुनोऽभिव्यङ्ग्यत्वं चायुक्तं, संविदभिव्यङ्ग्यस्य च विशेषेण तदभिव्यञ्जकत्वमयुक्तमितीमामाशङ्कां स्वयमेवोत्थाप्य प्रतिक्षिपति "स्वयंप्रकाशया"इति, कुत? इत्यत्राह "रविकरे"ति,

मू० जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः, यतो ऽहं जानामीति ज्ञाताऽयमहमर्थः, चिन्मात्राऽऽत्मनो न पारमार्थिको धर्मः। अत एव सुषुप्तिमुक्त्योर्नान्वेति, तत्र ह्य[1]हमुल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणाऽऽत्माऽवभासते, अत एव सुप्तोत्थितः कदाचिन्मामप्यहं न ज्ञातवानिति परामृशतीति ।

टी० करतलस्य किरणाभिव्यञ्जकत्वं क्व दृष्ट? मित्यत्राह "जालके"ति, एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तम् । एतदेव परमार्थवस्तुभासनवेलायामनवभासनप्रतिपादनेन उपपादयति "यत"इति,अनेनाहंप्रत्ययापायेऽपीति पूर्वोक्तार्थो विवृतो भवति । "यत"इति साध्यस्य हेतुतया निर्देशः, अग्निमत्त्वेन धूमवत्त्वमितिवत्, मुक्तिसमभिव्याहारेण सुषुप्तावप्यहंप्रत्ययापायस्यागमसिद्धत्वं सूचितम् । तदा कथं भासत? इत्यत्राह "तत्र ही"ति, नाहं खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति स्वापविषया श्रुतिः "अहङ्कारं बलं दर्पं कामक्रोधं परिग्रहं विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पत"इति मुक्तविषया स्मृतिः "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव चे"ति

१ अहमर्थोल्लेखविगमेनेति पुस्तकान्तरम् ।

हेत्रान्तर्भावश्चोच्यते अहङ्कारस्य "अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते" इति तस्य भ्रान्तिसिद्धत्वमुच्यते हि-शब्दः श्रुतिस्मृतिप्रसिद्धिद्योतनार्थः न केवलं श्रुतिः सुषुप्तिविषया, परामर्शश्च तथाऽस्तीत्याह "अत एव चेति," अत एवेति साध्यस्य हेतुत्वेन परामर्शः । कथं साध्यसाधनयोर्विपरीतनिर्देशः? इत्थं ज्ञप्तौ यत्साध्यं तदुत्पत्तौ साधनं, यदुत्पत्तौ साधनं तज्ज्ञप्तौ साध्यं तस्मादग्निमत्त्वादेव हि धूमोद्गम इतितदुत्पत्तौ हेतुत्वमपेक्ष्य अत एवेत्युक्तं, ततः किं प्रस्तुतपूर्ववृत्तचिन्तया? इत्यत्राह ।

**सू० तस्मात्परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्त्तत इति, तन्मूलभूताऽविद्यानिवर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति ।**

टी० "तस्मादि"ति, तस्मादित्यनेन यदप्याहुरशेषविशेषेत्यारभ्योक्तं प्रमाणतर्काभ्यां स्वमतोपपादनमभिप्रेतं, "निरस्तसमस्तभेदविकल्पेति भेदविकल्प-शब्देन ज्ञातृज्ञेयादिभेदस्यावान्तरवैविध्यं विवक्षितं, निर्विशेष-शब्देन स्वगतनित्यत्वादिभेदव्यावृत्तिः । कुतः? इत्यत्राह "चिन्मात्रैकरसे"ति, चिन्मात्रत्वादित्यर्थः । अनेन शून्यत्वव्युदासश्च । कूटस्थं-निर्विकारं सर्वाधिष्ठानं वा "नित्यसंविदेवे"ति, चिन्मात्र-शब्दः स्वयंप्रकाशत्वपरः संविच्छब्दो विशेष्यपर इत्यपौनरुक्त्यं, चिन्मात्रस्य कथं भेदसंभव? इत्यत्राह "भ्रान्त्ये"ति, भ्रान्त्या विवर्त्तत इति करिकलभवन्निर्देशः[1] । शुद्धम्-अविद्यारहितम् । बुद्धं-स्वयंप्रकाशम् । मुक्तम्-परमार्थतो भेददर्शनजन्मादिरहितम् ।

१ अयमाशयः, "कलभः करिशावकः" इत्यभियुक्तोक्तेः कलभशब्दः करिशावकार्थ एवेति करिकलभ इति नोचितं वक्तुं, तथाऽपि विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमभिव्याहारे विशेष्यमात्रपरतायाः सिद्धान्तसिद्धतया यथा करिकलभ इति व्यवहारस्तथैव भ्रान्तेर्विवर्त्तपदार्थतावच्छेदककुक्षिनिक्षेपेऽपि भ्रान्त्या विवर्तते इति भाष्यकारप्रयोग इति न किंचिदप्यापष्ठवम्

एवंविधब्रह्मात्मैकत्वविद्यालब्धये सर्वे वेदान्ता आरभ्यन्त इत्यर्थः । वेदान्तानामारम्भणीयत्वं नाम तद्विचारस्या[1]रम्भणीयत्वं सर्वे वेदान्ता आरभ्यन्त-इति यदप्याहुरिति पूर्वेणान्वयः । ब्रह्ममीमांसाशास्त्रं किमनारम्भणीयम्? उतारम्भणीयम्?मिति विचारे बन्धस्य परमार्थत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानप्रतिपादकवेदान्तवाक्यविचाररूपं शास्त्रमनारम्भणीयमिति पूर्वपक्षं कृत्वा बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानार्थं वेदान्तविचार-रूपं शास्त्रमारम्भणीयमिति हि ब्रह्माज्ञानपक्षे प्रथमाधिकरणार्थः शिक्षितः। अतोबन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानप्रधानस्य शास्त्रस्य कर्मविचारो न पूर्ववृत्त इत्युक्तं भवतीति वैष[2]म्यम् । उपाय आत्मैकत्ववि-ज्ञानम्, उपेयं निर्विशेषचिन्मात्रं ब्रह्म, निवर्त्यं च मिथ्याभूतम्, एतत्त्रयं कर्मविचारस्यानपेक्षितत्वाय पूर्वं विस्तरेणोपपादितं निगमनग्रन्थे संक्षिप्तं भवति ।

अथ कर्मविचारपूर्ववृत्तत्वविरोधिवस्तुसामर्थ्यनिरासार्थं परोक्तानामुपायोपेयनिवर्त्यानां प्रमाणतर्काभासमूलत्वं प्रतिजानीते-

**मू० तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगत—**

टी० "तदिद"मिति, स्वाभिमतानामेव तेषां प्रमाणतर्कोपपन्नतां च संक्षेपेण प्रतिजानाति अर्थाद्बहुशास्त्रज्ञानां बहुग्रन्थकाराणामपि परेषां स्खलनानुपपत्तिशङ्कां च सम्यग्ज्ञानोत्पत्तिसामग्रीवैकल्यप्रतिपादनमुखेन परिहरति "तदिदमित्यादिना, परमपुरुषशब्देनोपेयं, वरणीयतेत्यादिनोपायम्, अनादीत्यादिना निवर्त्यम्, अनधिगतेत्यादिना परपक्षनैर्मूल्यं, न्यायानुगृहीतेत्यादिना स्वपक्षस्य समूलतामर्थतोऽनेकविद्वत्परिग्रहं च प्रतिजानीते तदिदमित्यनन्तरवाक्यप्रकृतं परोक्तोपायोपेयनिवर्त्यत्रयं विवक्षितम्। औपनिषदपरमपुरुष—शब्देन "तं त्वौपनिषदं पुरुषं विद्मी"ति श्रुतिं स्मारयति

---

१ विचारद्वारकमारम्भणीयत्वं वेदान्तानामिति तु विवक्षितम् ।

२ भगवद्बोधायनमतानुवर्तिनां श्रीरामानुजाचार्याणां प्रथमसूत्रस्थाथशब्दस्य पूर्ववृत्तकर्मविचारशास्त्रानन्तर्यार्थकत्वमातिष्ठमानानां मतापेक्षया वैषम्यमिति तदर्थः ।

एतेनास्मदभिमतः प्रमाणप्रमेयविशेषसंबन्धःश्रुत्यैव वक्तव्य इति सूचयति परम—शब्देनेश्व[१]रातिरिक्तत्वव्यावृत्तिः । वरणीयताहेतुगुणविशेषविरहिणा मित्यनेन यमेवैष वृणुत" इत्यभिमतोपायविशेषकथनं फलितम् । अनेन पदेन बहुशास्त्रज्ञबहुग्रन्थकाराणां भ्रमानुपपत्तिशङ्का च परिहृता भवति सम्यक्शास्त्रार्थज्ञानोत्पत्तौ भगवद्भक्तेरपि सामग्र्यन्तर्भावेन केवलशास्त्रप-रिश्रमस्य विकलहेतुत्वात् यथा "यस्य देवे परा भक्तिरित्यादिका श्रुतिः स्मृतिश्च "विद्या राजन्न ते विद्या मम विद्या न हीयते । विद्याहीनस्तमो-ध्वस्तः नाभिजानासि केशवम् ॥ धृतराष्ट्रः, गावद्गणे ते का विद्या या ते विद्या जनार्दने यया त्वमभिजानासि त्रियुगं मधुसूदनम् संजयः, मायां न सेवे भद्रं ते न वृथाधर्ममाचरे । शुद्धभावङ्गतो भक्त्या शास्त्राद्वेद्मि जना-र्दनमिति, अत्र भक्त्या शुद्धभावङ्गतः शास्त्रात् जनार्दनं वेद्मीत्यनेन यथा-वच्छास्त्रार्थज्ञानोदयस्य भक्तिसापेक्षत्वं सिद्धम् । "जायमानं हि पुरुषं यं पश्ये-न्मधुसूदनः सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थनिश्चयः॥ पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतमिति वच-नाच्च तत्त्वार्थज्ञानस्य भक्तिप्रीतिभगवत्कटाक्षसापेक्षत्वं ज्ञायते । ननु यय त्वमभिजानासि, भक्त्या वेद्मी,ति प्रश्नप्रतिवचनाभ्यां विद्याभक्तिशब्दयोरै-कार्थ्यं प्रतीयते भक्तिरूपा च विद्या मोक्षायेति प्रागुपपादितं ततश्च शास्त्रज्ञानमूला भक्तिः, भक्तिमूलं शास्त्रज्ञानमित्यन्योन्याश्रय इति चेत् नैवं श्रवणवेलायामेव पदार्थतया ऽवगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगो-चरत्वात् विद्याभक्तिशब्दयोः, तेन सम्यग्वाक्यार्थनिर्णयलाभः पूर्वपक्षतयो-पन्यस्यमानेऽपि सुगताभिमतवेदाप्रामाण्यादौ हि भवति प्रद्वेषो वैदिकानां, भगवद्गुणादिषु त्वनुरक्तचित्तता भवति, न चैषा साक्षात्कारकल्पनिरन्तरध्या-नरूपा भक्तिः, अतो नान्योन्याश्रयः । अथ शास्त्रार्थयाथात्म्यज्ञानोत्पत्तिहे-तुभूतभक्तिविरोधिनमाह "अनादी"ति । यद्वा सम्यग्ज्ञानहेतुभूतभक्त्यभा-वात् सम्यग्ज्ञानविरोधिपापानुबन्धमाह"अनादी"ति,वासनाशब्देन पापस्य

१ शाङ्करमते सकलविशेषप्रत्यनीकाद् ब्रह्मणोऽतिरिक्तःशबलेश्वर इति तद्व्या-वृत्तये परमशब्दः इति भावः ।

दृढमूलत्वेन दुर्निवारत्वमुक्तं, वासनया पापं पापेन वासना, अज्ञानेन पाप वासना पापवासनया अज्ञानमिति चान्योन्याश्रयपरिहारायानादि-शब्दः। शेमुषी-मोक्षोपयोगिज्ञानम्। अशेष-शब्दस्योपायोपेयनिवर्त्यविषया विश्वशेमुषी दूषितेति भावः। अनेनार्थात् स्वपक्षे विवर्त्यं चोक्तं भवति कर्मण एव मोक्षप्रतिबन्धकत्वात्। दूषितशेमुषीकत्वफलं सम्यग्ज्ञानाभावमाह "अनधिगते"ति. प्रत्यक्षविरोधे शास्त्रप्राबल्यस्य परोक्तत्वात् पदशः समुदायेन च सविशेषपरत्वं प्राधान्येन च प्रथमं शब्दप्रमाणमाह।

**मू॰ पदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्त्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतवाक्यप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम्।**

टी॰ "पदे"ति, प्रकृतिप्रत्यययोगेन पदत्वमिति न ज्ञातमिति पदशब्दस्य भावः।"वाक्यस्वरूपे"ति, वाक्यम्-अनेकपदार्थसंसर्गविशेषाभिधायि इति न च ज्ञातमिति भावः। तदर्थयाथात्म्यं-तात्पर्यविषयः "प्रत्यक्षादी"ति आदि-शब्दादनुमानं, सकल-शब्देन स्पार्शनचाक्षुषादिप्रत्यक्षावान्तरभिदा विवक्षिता अन्वयव्यतिरेकाद्यनुमानावान्तरभिदा च विवक्षिता। यद्वा तत्तद्वाद्यभिमतार्थापत्त्यादिप्रमाणान्तरविषयः सकल-शब्दः। वृत्तं बोधनं "तदितिकर्त्तव्यतारूपे"ति तर्केण प्रमाणबाधवचनात् प्रमाणानुग्राहकस्तर्क इति च न ज्ञातमिति भावः। प्रमाणानुग्राहकतयैव वयं तर्कमङ्गीकुर्म इत्यत्राह "समीचीनन्याये"ति, अनुग्राहकबुद्ध्या स्वीकृतस्यापि तर्कस्य प्रमाणविरुद्धत्वात् सोऽसमीचीन इति भावः। अपच्छेदनयादिसमीचीनन्याया एव हि स्वीकृता इत्यत्राह "न्यायमार्गाणामि"ति, अयमपच्छेदन्यायविषयः। अयं सामान्यविशेषन्यायविषय इति तत्तन्यायसंचारविषयविभागोऽनवगत इति भावः। तर्हि किमवलम्ब्य प्रबन्धाः कृताः? इत्यत्राह "विकल्पासहे"ति कुतर्काः प्रमाणविरुद्धाः मूलशैथिल्यमिथोविरोधादिदोषान्तराक्रान्ताश्च तर्काः, ते च त्रिचतुरपदस्थायिनो न भवन्ति किन्तु विक-

ल्पितान्यतरशिरःपरिग्रह एव भङ्गुरा इत्याह "विकल्पासहे"ति, तर्कस्य विकल्पासहत्वं नाम तद्विषयसाधनादिविकल्पासहत्वमेव। "विविधे"ति, ब्रह्मणोऽनुभाव्यत्वेऽननुभूतित्वं, प्रत्यक्षं सन्मात्रग्राहि, वेदान्तवेद्यं ब्रह्म प्रमाणान्तरगोचर[1]मित्यादिरूपं कुतर्काणामन्योन्यव्याहतिवैविध्यं विवक्षितम्, ईदृशकुतर्क एव कल्कम् असा[2]रभूतं बौद्धैरात्तसारम् ऋजीषमित्यर्थः। एतेन कल्पितम् उत्कीर्णम्। इतिर्हेतौ, केषांचित्समीचीनार्थान्तरविषयज्ञानेऽसति ह्यस्यासमीचीनत्वनिश्चयः कथम्? इत्यत्राह "न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भि"रिति, अनेन पूर्वोक्तविपरीताकार उक्तः। बहुवचनेन स्वपक्षस्य भगवद्बोधायनाद्यनेकशिष्टपरिग्रहः सूचितः। "अनादरणीय"मिति शिष्यशिक्षासु पूर्वपक्षोपन्यासकौशलार्थमप्यादर्त्तुमयोग्यमित्यर्थः। अशेषविशेषप्रत्यनीकचिन्मात्रमित्यारभ्य सर्वे वेदान्ता आरभ्यन्त इत्यन्तेन यदप्याहुः, तदनादरणीयमित्यन्वयः, एवं सङ्क्षेपेण प्रतिज्ञातमर्थमुपपादयितुमुपक्रमते।

मू॰ तथा हि निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुं सविशेषवस्तुविशेषविष[3]यत्वात्सर्वप्रमाणानाम्।

टी॰ "तथा ही"ति,

ननु पूर्वपक्षिणा प्रथमं वेदान्तवाक्यविशेषानुदाहृत्य तत्र निरूपणीयं सर्वं निरूप्य ततश्च तद्व्यतिरिक्तप्रमाणतर्काः प्रदर्शिताः, अतः

१ सर्वगौडद्राविडपुस्तकेषु प्रमाणान्तरागोचरम् इति पाठसत्त्वेऽपि गोचरशब्दस्य नित्यपुंस्त्वकतया प्रकृते बहुव्रीह्यादिरूपलिङ्गविपर्यासकहेतोश्च विरहेण लिङ्गविपर्यासकविग्रहावलम्बने प्रतिपिपादयिषितार्थाप्रतीतेश्च "ब्रह्म प्रमान्तरागोचर" इत्येव युक्तः पाठ इति युक्ताः प्रतिपद्यामहे।

२ कुतर्ककल्पनापटवो हि बौद्धास्तैः कल्पितेषु दुर्युक्तिसहस्रेषु काश्चिद्दुर्युक्तय एतैरुपात्तास्तासामसाररूपत्वं परस्परविरुद्धार्थबोधकतया प्रमाणासहकारित्वेन, ऋजीषरूपत्वं च सकृदात्तसाराणां बौद्धयुक्तीनां पुनरुपयोगेन, बौद्धाः स्वतन्त्रास्ते यथेच्छं युक्तीश्चालयितुं क्षमेरन् वेदतन्त्रतया परे तु युक्तीरुपाददाना अपि न यथेच्छमुपयोक्तुमलमित्यपार्थकं तदीययुक्त्यादानमित्यर्थः।

३ सविशेषवस्तुविषयत्वादिति पु॰।

सिद्धान्ते च तेन क्रमेण तत्प्रतिक्षेपो युक्तः । तत्कथं प्रथमं सकलप्रमाणाविषयत्वनिरूपणं सङ्गच्छते? उत्तरत्र च कथं प्रत्यक्षादिर्निर्विशेषविषयत्वनिरासपूर्वकं वेदान्तवाक्ययोजना क्रियते? उच्यते प्रत्यक्षविरोधे[1] शास्त्रप्राबल्याभ्युपगमात् परेण वेदान्तवाक्यानि प्रथममुदाहृत्य पश्चात्तदन्यद्वक्तव्यं सर्वमुक्तं, प्रबलतयाऽभिमतप्रमाणपुरस्कारो ह्युचितः, सिद्धान्तिना तु प्रत्यक्षविरोधे शास्त्रप्राबल्यानभ्युपगमात् प्रत्यक्षादेर्निर्विशेषविषयत्वव्युदसनपूर्वकं तदविरोधेन वेदान्तवाक्यानि स्वरसतो व्याख्यास्यन्ते तत्र निर्विशेषचिन्मात्रपारमार्थ्यस्य परेण प्रथमप्रतिज्ञातस्य सामान्येन सकलप्रमाणबहिष्कृतत्वरूपं दूषणं प्रथमं प्रतिजानीते–

"निर्विशेष" इति, अर्थात्प्रमाणाभावश्च स्वपक्षानुगुणोनिरूपितो भवति । खपुष्पमपि स्वानुभवसिद्धमिति वक्तुं शक्यमिति तद्व्यावृत्त्यर्थमिदं–शब्दः परसंप्रतिपत्तिपदं प्रमाणं न किंचिदपीति भावः । यद्वा न काचिदपि प्रमाणव्यक्तिर्निर्विशेषगोचरेत्येकवचनाभिप्रायः । कुत? इत्यत्राह "सविशेष" ति ।

---

१ शास्त्रस्य प्रत्यक्षस्य च विरोधे शास्त्रप्राबल्यानभ्युपगमे बीजं तु न प्रत्यक्षस्योपजीव्यत्वं तस्य इदं रजतमिति भ्रमात्मकज्ञानोत्तरकालीने प्रतियोगिग्राहकपूर्वज्ञानोपजीव्यके नेदं रजतमिति प्रतिबन्धकीभूतज्ञाने व्यभिचारात्, न हि प्रतियोगिग्राहकतया पूर्वज्ञानमुपजीव्यमित्युदीच्यं बाधज्ञानं न प्रतिबन्धकमिति प्राज्ञ आशङ्कतापि किन्तु परीक्षितप्रामाण्यकत्वं बाधकतावच्छेदकं तच्च शास्त्रप्रत्यक्षोभयसाधारणम्, अत एव तु प्रात्यक्षिकमपि ग्रहनक्षत्राद्यल्पपरिमाणकत्वं ज्यौतिषशास्त्रेण तदीयानेकसहस्रक्रोशपरिमाणकत्वग्राहकेण बाध्यते प्रात्यक्षिकमपि चाधित्यकास्थानां भूमिष्ठमहीरुहाल्पपरिमाणकत्वं तदीयबृहत्त्वग्राहिकयाऽनुमित्या बाध्यते, इति न प्रत्यक्षमित्येव बाधकं, नाप्युपजीवकमित्येव बाध्यमिति व्यवस्थितिः । ततश्चानाघ्रातदोषगन्धासंभाव्यमानाप्रामाण्यकेन शास्त्रेण दोषशताकुलं प्रत्यक्षमेव बाध्यमिति युक्तं, तथाऽपि यथाश्रुतशास्त्रार्थस्य "आदित्यो यूपः" "यजमानः प्रस्तरः" इत्यादिस्थले सर्वैरपि परित्याज्यतया परीक्षितप्रामाण्यकत्वमेव प्रतिबन्धकतावच्छेदकमिति वक्तव्यं, परीक्षा च सजातीयसंवादविजातीयविसंवादाभावरूपैव वक्तव्येति संवादविसंवादाभावयोरन्ततः प्रात्यक्षिकयोरेव शरणीकरणीयतया शास्त्रविरोधे प्रत्यक्षमेव प्रमाणमित्यगत्याङ्गीकरणीयमापन्नम् । किंच शब्दतोऽप्यर्थावगमो योग्यतातात्पर्यग्रहादिद्वारक एव वक्तव्यस्तेषां चान्ततः साक्षात्परम्परया वा प्रत्यक्षमूलकतैवेति परीक्षाया बलरूपायाः प्रत्यक्ष एव पक्षपातात्तदेव परीक्षितप्रामाण्यकं विजयत इति प्रकाशिकाकृतां तात्पर्यम् । अत्रत्यो विस्तरस्तु मदीयग्रन्थान्तरे द्रष्टव्यः ॥

ननु विशेषा हि निर्विशेषाः, तत् कथं निर्विशेषवस्तुनोऽप्रामाणिकत्वम्? उच्यते धर्मेण धर्मी सविशेषः, धर्मिणा च धर्मः सविशेषः कस्यचिद्धर्मभूतं धर्मि वा यन्न भवति तत्प्रमाणशून्यमिति हि ग्रन्थार्थः, विशेषो व्यावर्त्तकः । धर्मी च स्वगतधर्मस्याश्रयान्तरगतधर्माद् व्यवच्छेदक इति विशेषशब्दवाच्यः, किंच विशेषोनिर्विशेष इति शब्दौ किं पर्यायौ? न वा, आद्ये सह प्रयोगानुपपत्तिः, द्वितीये तु न निर्विशेषत्वं बोध्यभेदमन्तरेणापर्याय[1]-त्वायोगात् ।

ननु कथं सर्वप्रमाणानां सविशेषविषयत्वं? न हि गन्धादिग्राहिप्रमाणं गन्धादिकं साश्रयमावेदयति, नैवमाश्रय एव विशेष इति नियमाभावात् संविदोऽपि सर्वविशेषणतया सर्वार्थवैशिष्ट्यमुपपद्यते अयं गन्धोऽनुभूयत इति कालादिविशेषावच्छिन्नतयैव गन्धादिप्रतीतिश्च सविशेषविषयतोपपत्तिः । तथा प्रतीतिश्च वक्ष्यते । तर्हि न वयं प्रमाणान्तरेण निर्विशेषवस्तुसिद्धिमभ्युपगच्छामः स्वानुभवसिद्धं हि तदित्यत आह—

**सू॰ यस्तु स्वानुभवसिद्ध[2]मिति स्वगोष्ठीनिष्ठसमयः, सोऽप्यात्मसाक्षिकसविशेषानुभ[3]वनिरस्तः, इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभवानाम् ।**

टी॰ "यस्त्व"ति, तु—शब्देन समयं विशिंषन् समयवैशिष्ट्यमूलं स्वानुभवलक्षणप्रमाणवैषम्यमभिप्रैति । "स्वगोष्ठीनिष्ठ" इति परवाद्यसंमतत्वं दर्शयति । आत्मसाक्षिकानुभवस्य सविशेषत्वं दर्शयति "इदमह"मिति, विशिष्टविषयत्वादिति विशिष्टो विषयः स्वयमनुभव एव शिलापुत्रकस्य शरीरमितिवदयं निर्देशः । अन्यथा स्वानुभवनिर्विशेषत्वनिरासे घटादिसविशेषत्वसाधनस्यानुपयोगात् अनुभूयमानोऽप्यनुभव इत्युपरितनग्रन्थस्याप्येवमेवार्थः स्वानुभवसिद्धमित्यनेनैकार्थ्यात् न चानुभवशब्दोऽनुव्यवसायपरः,

१ विभिन्नशक्ततावच्छेदककत्वे सति समानशक्यतावच्छेदककत्वस्यैव पर्यायताप्रयोजकत्वमिति भावः ।

२ स्वानुभवसिद्ध इति पु॰ ।

३ सविशेषानुभवादेव निरस्त इति तु पाठान्तरम् ।

न ह्यनुव्यवसायरूपं प्रत्यक्षमिष्टम् अतीतविषयतया प्रत्यक्षत्वानुपपत्तेः परज्ञानं प्रमुषितसंस्कारं स्वज्ञानं चानुमेयम् अन्यत्तु स्मृतिविषयः।

न च स्मृतिविषयत्वमिह विवक्षितम्, अनुभवशब्दस्यातदर्थत्वात् अतोऽनुभूयमानत्वम् अवभासमानत्वम् इदमहं–शब्दाभ्यां सकर्मकर्तृक ए-वानुभव इत्युक्तम्। अदर्शमित्यनेनापरोक्षत्वविशेषान्वयोऽभिप्रेतः, अतीतत्वं त्वविवक्षितं तदा स्वतःसिद्धत्वायोगात् "केनचिद्विशेषेणे"ति उक्तेष्वप्यन्य-तमविशेषणमन्ततो गत्वाऽप्यवर्जनीयमिति भावः। यद्वा अदर्शमित्यत्रेति–शब्दः प्रकारवचनः प्रकृतसजातीयं विशेषं यावत्संभवं गृह्णाति, तेन परोक्ष-त्ववर्तमानत्वादिकं "केन चिदि"ति विवक्षितं स्यात् परोक्षत्वं विषयद्वारा।

ननु न हि वयमिदमहमदर्शमिति प्रतीतिमपलपामः सा तु तर्क-व्यवस्थापितविषया निर्विशेषे प्रमाणमित्यत्राह–

सू० सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभासेन नि-र्विशेष इति निष्कृष्यमाणः सत्ताऽतिरेकिभिः स्वासाधा-रणैः स्वभावविशेषैर्निष्कृष्टव्य इति निष्क[1]र्षकहेतुभूतैः सत्ताऽतिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते।

टी० "सविशेषोऽपी"ति, स्वव्याघातस्य दर्शयिष्यमाणत्वात् युक्त्या-भासेनेत्युक्तं "निर्विशेष इति निष्कृष्यमाण"इति यदा निर्विशेष इति निष्कृ-ष्यते तदानीमेव हि निष्कृष्टव्य इत्यर्थः। कथं निष्कृष्टव्यः? इत्यत्राह "सत्तातिरेकिभिः स्वासाधारणै"रिति, सत्तानतिरेकी चेत् पक्षाविशिष्टो हेतुः[2]

१ निष्कर्षहेतुभूतैरिति पाठस्तु साधीयान्।

२ यथा हेत्वाभासानां साक्षादनुमितिप्रतिबन्धकत्वं, यथा चोपाधेर्व्यभिचारोन्नायकतया दूषकत्वं न तथा पक्षाविशिष्टस्य, किन्तु यथोद्देश्यतावच्छेदकविधेययोरैक्येन उपनयवाक्यस्य बोधानुपधायकतया परार्थानुमानौपयिकसामग्रीवैकल्येन हेतुपक्षताऽवच्छेदकयोरैक्ये तत्रानुमित्यनुत्पादस्तथा हेतुपक्षयोरैक्यस्थलेऽपि प्रतिज्ञावाक्यत एव हेतोरवगततया कस्मादिति जिज्ञासाशमकत्वेन हेतुवाक्यस्य, कुतोऽस्य गमकत्वमिति जिज्ञासाशमकतया चोदाहरणस्यावश्यकत्वेऽपि पक्षस्य पुरस्तादेवावगततया पक्षस्यैव च हेतुत्वेन

स्यात् तदयुक्तं पक्षव्यावर्तको हि हेतुः । किंचान्यस्य द्रव्यान्तराद्व्यावर्त्तकध-र्मस्यैव व्यावृत्तिरूपत्वसंभवः स्वरूपे प्रतिपन्ने स्वस्यान्यतादात्म्यभ्रमविरोधि-नश्च स्वरूपमेव व्यावृत्तिः, यथा शुक्तित्वादेः, ब्रह्मणस्तु वस्त्वन्तरस्यान्य-स्माद्व्यावृत्तिरूपधर्मत्वाभावात् स्वरूपे भासमाने भ्रमसहत्वाच्च न स्वरूप-व्यावृत्तिरिति वक्ष्यमाणशौक्ल्यादिदृष्टान्तवैषम्याभिप्रायेण सत्तातिरेकिभि-रित्युक्तं, साधारणश्चेद्धेतुश्चानैकान्तिको भ्रमाविरोधी च स्यात् यथा शौक्ल्यादि असाधारणं शुक्तित्वमेव हि रजतभ्रमविरोधि अतः स्वासाधार-णैरित्युक्तम् । स्व—शब्देन व्यधिकरणासिद्धिपरिहारः । स्वभावविशेषैः=धर्म-विशेषैः । एवं सामान्येनार्थशरीरमुक्तम् अतस्त्वयाऽपि निरासकहेतुतया-ऽभिमतानां सत्तातिरेकित्वस्वासाधारणधर्मत्वे अवर्जनीये इत्यभिप्रायेण सत्तातिरेकिभिः स्वासाधारणैरिति पुनः कथनं, ये ये हेतवः सविशेषघटा-

---

व्याप्यः पक्षे न वेति जिज्ञासाया असंभवेन तदुपशमकस्योपनयवाक्यस्य प्रयोगायोगेन परार्थानुमित्यनिर्वाहेण तस्यैव दूषकत्वात् । न चोद्देश्यतावच्छेदकविधेययोरैक्यस्थले-ऽपि नोपनयवाक्यस्य बोधाजनकता, विधेयकोटावधिकावगाहिनः शाब्दबोधस्य घटो-नीलघट इत्यादिस्थलीयबोधानुरोधेनाङ्गीकरणीयतया उद्देश्यतावच्छेदकविधेययोरैक्यस्थ-लेऽपि औपनयिकबोधस्य व्याप्त्यवगाहित्वेनाधिकावगाहनस्यावश्यकतया तदुपपत्तेरिति वाच्यम् । औदाहरणिकबोधस्य व्याप्त्यवगाहितया पुनरुपनयवाक्येन व्याप्तिविषयकबोधे पौनरुक्त्यभीत्या हेतुमान्पक्षः इत्याकारकतया एवोपनयवाक्यस्यावश्यकत्वेन उद्देश्यता-वच्छेदकविधेययोरैक्ये औपनयिकबोधस्य विधेयांशेऽधिकानवगाहनेन बोधानुदयस्यावर्ज-नीयत्वात्, अत एव तु तत्र व्याप्यः पक्षे न वेत्येव जिज्ञासा न तु हेतुर्व्याप्यो न वेति । न च माभूदुद्देश्यतावच्छेदकविधेययोरैक्ये उपनयवाक्याद् बोधस्तथाऽपि हेतुपक्षयोरैक्ये बोधः केन निवार्यतां, न हि पक्षस्य हेतोश्चैक्ये प्रतिज्ञावाक्येन पक्षोऽवगत इति जिज्ञासितोऽपि पक्षः पुनर्नावगन्तुं शक्य इति शङ्क्यमिति वाच्यम् । जिज्ञासया तथा संभवेऽपि जिज्ञासाया असार्वत्रिकत्वेन तत्स्थलीयबोधानिर्वाहस्यैव दूषकताबीजत्वात् अत एव तु साध्याविशिष्टस्यापि दूषकत्वमितरथा तत्रापि जिज्ञासयाऽवगतसाध्यगोच-रानुमितेर्वक्तव्यत्वेन साध्याविशिष्टस्यापि दूषकतोन्मूलितैव स्यात् । न चैवं साध्यावि-शेषस्य साक्षादेवानुमितिप्रतिबन्धकतया हेत्वाभासत्वमेव स्यादिति वाच्यम् सिद्धिमुद्रया प्रतिबन्धकताभिन्नप्रतिबन्धकताया एव हेत्वाभासलक्षणे प्रवेशनीयतयाऽऽपत्त्यभावात् । अथवा सिद्धिविषयताया इच्छास्थले प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तितयैव नातिप्रसङ्गः साध्यवत्पक्ष इति द्रष्टव्यम् । तदेतत्सर्वमभिप्रेत्योक्तं प्रकाशिकायां पक्षव्या-वर्तको हि हेतुः, हेतोः पक्षव्यावर्तकता चोपनयावच्छेदेन विवक्षिता यथा धूमवान्पर्वत इति, सा च हेतुपक्षयोरैक्ये न संभवतीति सुस्फुटमेव ।

दिवस्तुव्यावृत्ताः सामान्येन सकलविशेषाभावसाधकास्ते ऽर्थसामर्थ्यात् सामान्यान्तर्गतं स्वात्मानमपि निवर्तयेयुरेवेत्यत्राह "अतः कैश्चिदिति ।

**मू० अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न क्वचिन्निर्विशेषवस्तुसिद्धिः ।**

टी० ॥ अतः—तेषां सत्तातिरेकित्वस्वाधारणत्वयोरवश्याभ्युपगन्तव्यत्वादित्यर्थः । "कैश्चिदि"ति स्वासाधारणैः प्रामाणिकैरित्यर्थः । "विशिष्टस्यैवे"ति, निर्विशेषत्वसाधकनिवृत्तौ निर्विशेषत्वासिद्धेस्तदनिवृत्तौ तैरेव सविशेषत्वप्रसङ्गाच्चेत्यभिप्रायः । "अन्य"इति, निर्विशेषत्वसाधकहेतवो येभ्यो घटादिभ्यो व्यावृत्ताः तद्गता इहाप्रामाणिका रूपादयो विशेषा अस्मिन्निरस्यन्ते न तु सर्वविशेषाः, अनग्निमत्त्वव्यावृत्तो[1] धूमः पक्षे ऽनग्निमत्त्वमेव निवर्तयति न त्वाकारान्तरमित्यर्थः । "न क्वचिदि"ति,—स्वानुभवे, प्रत्यक्षादिप्रमाणान्तरेष्वपीत्यर्थः, स्वव्याघात[2]प्रसङ्गेन सकलविशेषनिवृत्तेः साधयितुमशक्यत्वान्न निर्विशेषवस्तुसिद्धिरित्युक्तं भवति। एवं कर्मकर्तृव्युदासमभ्युपगम्य सविशेषत्वमापादितम् । अथ कर्मकर्तृनिरास एव दुःशक इत्याह—

**मू० धियो हि धीत्वं, स्वप्रकाशता च, ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः, स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः ।**

---

१ अनग्निमद्व्यावृत्त इति तु युक्तः पाठः ।

२ अत्रेदमाकूतं, यदि केनचिद्धेतुना निर्विशेषत्वं वस्तुनः साध्येत तर्हि स हेतुः पक्षवृत्तिराहोस्वित्पक्षावृत्तिरिति वक्तव्यं, तत्राद्येऽपि पक्षे हेतुः पक्षातिशायकोऽथवा पक्षस्वरूपविश्रान्त इति विवेचनीयं, तत्र यदि हेतुः पक्षवृत्तिः पक्षातिशायकश्च तदा व्याघातः, न हि पक्षं विशिंषन्नपि पक्षस्य निर्विशेषत्वसाधक इति युज्यते वक्तुं, यदि तु पक्षावृत्तिस्तर्हि हेतुः स्वरूपासिद्ध इत्यसमर्थः । यदि तु पक्षवृत्तिरपि पक्षानतिशायको हेतुरिति ब्रूषे, तर्हि पक्षाविशिष्टो हेतुरित्यकिंचित्करः सः । यदि तु विशेषे प्रमाणविरहान्निर्विशेषत्वसिद्धिं समीहसे, तर्हि विशेषे प्रमाणविरह एवासिद्धस्तस्य बहुधोपपादितत्वादिति सुष्ठूक्तं श्रुतप्रकाशिकायां "स्वव्याघातप्रसङ्गेन"इति ।

टी० ॥ "धियो ही"ति, धीत्वं-विषयप्रकाशकत्वं, स्वप्रकाशता-अनन्याधीनप्रकाशत्वम्। एतदुभयं स्वप्रकाशवादे साधनतया साध्यतया च परेणोपन्यस्तम्। ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेरिति नियमेन स्वाश्रयं प्रति विषयप्रकाशकतयाऽवभासमानत्वाद् धीत्वस्वप्रकाशत्वे सिध्यत इत्यर्थः। धीत्वं विषयसाधनत्वं तथाऽवभासमानत्वादिति न साध्याविशिष्टतापत्तिः, यद्युपलब्धिसिद्धं सकर्मकत्वं नाङ्गीकुरुषे ततः सकर्मकत्वहेतुकं स्वप्रकाशत्वमपि न सिध्येदिति भावः। यद्वा धीत्वं धीस्वरूपमात्रं, हि-शब्दः उपलब्धेः सर्वसंप्रतिपत्तिं दर्शयति।

ननु न कर्मकर्त्रवच्छिन्नं ज्ञानमात्मभूतम्। अन्यदेव तु स्वापाद्यवस्थाऽनुभूतं निर्विशेषं साध्यत इत्यत्राह "स्वापे"ति, अनुभवः=आत्मस्फुरणं, न हि तदा धर्मभूतज्ञानस्फुरणं, स्वावसरे=अहमर्थस्यैवात्मत्त्वसमर्थने, निपुणतरं=परप्रयुक्तयुक्त्यैवेति भावः। सुखमहमस्वाप्सं मामप्यहं न ज्ञातवानित्यादिना परोक्षपरामर्शेनैवेति यावत्। यद्वा निपुणतरं=विशदतरम्। एतदुक्तं भवति, किं त्वया स्वानुभवाधीनं निर्विशेषत्वं कर्मकर्त्रवच्छिन्नस्य ज्ञानस्योच्यते? उताहमिति भासमानस्यात्मस्वरूपभूतज्ञानस्य? उत तदुत्तीर्णस्य वा? आद्ये कर्मकर्त्रवच्छेदनियमादेव न निर्विशेषत्वं, द्वितीये प्रत्यक्त्वानुकूलत्वादिभिः सविशेषत्वमवर्जनीयमिति वक्ष्यते, तृतीये शून्यत्वादेव न निर्विशेषत्वं साध्यमिति मुखान्तरेण सविशेषत्वमाह-

सू० स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेकविशेषाः सन्त्येव, ते च न वस्तुमात्रमिति शक्योपपादनाः, वस्तुमात्राऽभ्युपगमे सत्यपि विधाभेदविवाददर्शनात् स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात्, अतः प्रामाणिकविशेषै-

टी० "स्वाभ्युपगताश्चे"ति, आदि-शब्देन स्वयंप्रकाशत्वैकत्वानन्दत्वादयोऽपि विवक्षिताः, ते वस्तुमात्रमिति ह्युक्तमित्यत्राह "ते चे"ति, उपपादयति 'वस्त्वि'ति, बौद्धैः क्षणिकत्वमुक्तम्, अनेन तु नित्यत्वं, वैशेषिकादिभिश्च जडत्वबहुत्वे, अनेन तु स्वप्रकाशत्वैकत्वे, स्वरूपं तु तैः सर्वैर-

भ्युपगतम्, अतो विप्रतिपत्तिविषयः संप्रतिपत्तिविषयश्चैक एवेति वक्तुमयुक्तमित्यर्थः। विमत्यनन्तरभाविना तदुपपादनेन च स्वरूपातिरिक्ततां द्रढ[1]यति "स्वाभिमते"ति, क्षणिकवादिनं प्रति ब्रह्मनित्यत्वं साधयता त्वया स्वरूपमात्रातिरेकेण किंचित्साधितमस्ति वा न वा? अस्ति चेत् सधर्मत्वं, नो चेत् सिद्धसाधनत्वं, स्वरूपमात्रस्याभिमतत्वात्, संविन्नित्येति प्रतिज्ञावाक्यगतौ धर्मधर्मिशब्दौ किं पर्यायौ न वा? आद्ये साधनायासो निष्फलः, द्वितीये स्वरूपातिरिक्तधर्माङ्गीकार इति भावः। स्वमतोपपादनाच्च वस्तुमात्रमिति शक्योपपादना इत्यन्वयः। पूर्वं सविशेषत्वनिरासकहेतुभिः सविशेषत्वमुक्तम्। अनन्तरं साध्यधर्मैः, ततः कतिपयविशेषसाधकहेतुभिः। एते निरासकसाध्यसाधनधर्मा अपरमार्था इत्यत्राह "अत"इति, अतः—विशेषव्युदासकत्वेन साध्यत्वेन साधनत्वेन च केषांचिद्धर्माणां त्वयोक्तत्वात् परमार्थभूतैस्तैस्तैर्विशिष्टमित्यर्थः। प्रामाणिकैरित्यनेन कैश्चिदिति पूर्वोक्तस्यार्थस्यापि विशेषो दर्शितः।

सू० विशिष्टमेव वस्त्विति वक्तव्यं, शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यं पदवाक्यरूपेण प्रवृत्तेः, प्रकृतिप्रत्यययोगेन हि पदत्वं, प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्।

टी० ॥ "विशिष्टमेवे"ति, पूर्वोक्तसत्तातिरेकित्वस्वासाधारणत्वाभावे भ्रमोच्छेदो न स्यात्, निरासकधर्मापारमार्थ्ये शुक्तित्वापारमार्थ्ये रजतसत्यत्ववन्निरसनीयाकारसत्यत्वं प्रसजेत्, साध्यधर्मापारमार्थ्ये च नित्यत्वादिविपरीताकारस्य स[2]त्यत्वप्रसङ्गः, साधकापारमार्थ्ये च साध्यनित्यत्वादिविपरीताकारस्य सत्यत्वमापद्येतेति भावः। इत्थं स्वानुभवप्रसङ्गात् तत्रापि सविशेषत्वमुपपादितम्। अथ प्रथमप्रतिज्ञातं सर्वप्रमाणानां सविशेष-

१ दर्शयतीति पुस्तकान्तरपाठः।

२ नित्यत्वादिविपरीताकारानित्यत्वप्रसङ्ग इति पुस्तकान्तरपाठः।

विषयत्वं वक्तुमारभते, तत्र परेण प्रत्यक्षाद् बलीयस्त्वेनोक्तत्वात् सविशेष-बोधकत्वातिशयस्य स्वाभिमतत्वाच्च प्रथमं शब्दस्य सविशेषविषयत्वमाह "शब्दस्य त्वि"ति, तु-शब्दः परोक्तबलीयस्त्वस्य सूचकः। विशेषेणेति पदेन सविशेषवस्तुबोधकत्वातिशय उच्यते। यद्वा सर्वप्रमाणानां सविशेषगोचरत्वे प्रतिज्ञाते चिद्वस्तुन्यन्तरङ्गतया स्वप्रकाशवृत्तिन्निरूप्य तदनन्तरमात्मनि प्रत्यक्षादिभ्योऽन्तरङ्गत्वेनोभयवादिसंमतस्य शास्त्रस्य सविशेषविषयत्वमाह "शब्दस्य त्वि"ति, सविशेषगोचरत्वे प्रमाणान्तरेभ्योऽतिशयो-विशेषेणेत्युच्यते, तु-शब्देन तदौपयिक[1]कं शब्दस्य सविशेषगोचरप्रत्यक्षादि-पूर्वकत्वं विशेष उच्यते, प्रतिज्ञातस्य हेतुमाह "पदवाक्यरूपेणे"ति, ततः किं सविशेषपरत्वस्येऽति शङ्कायां पदरूपेण प्रवृत्तिं विवृणोति "प्रकृती"ति, ततः किमित्य? त्राह "प्रकृतिप्रत्यययोरि"ति, पदस्यैवेति, वाक्यं तावदास्तां पदमेव सविशेषपरमिति भावः। वाक्यरूपेण प्रवृत्तिं विवृणोति।

**सू० पदभेदश्चार्थभेदनिबन्धनः, पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम्।**

टी० ॥ "पदभेदश्चे"ति, पदभेदः—पदानां परस्परभेदः, न केवलं प्रकृतिप्रत्ययभेद एवार्थभेदहेतुः पदभेदोऽपीति चार्थः। अन्यथा पदान्तरवैयर्थ्यादिति भावः। पदभेदस्यार्थभेदनिबन्धनत्वेऽपि वाक्यैकत्वात् निर्विशेषत्वसिद्धिरिति शङ्कायां वाक्यस्य सविशेषविषयत्वं वदन्निर्विशेषे प्रमाणाभावमुपसंहरति "पदसंघाते"ति, तत्तत्पदाभिधेयानां संसर्गविशेष एव वाक्यप्रतिपाद्यः। न तु तत्तत्पदार्थप्रहाणेनार्थान्तरमित्यर्थः।

ननु निर्विशेष-शब्देन निर्विशेषवस्तु किं प्रतिपन्नं? उताप्रतिपन्नम्?। उत सविशेषं वस्तु प्रतिपन्नम्?। आद्ये निर्विशेषवस्तुनः शब्देन प्रतिपादनान्निषेधोऽनुपपन्नः, द्वितीये तु निषेध्याप्रतिपत्तेर्निषेधोऽनुपपन्नः, तृतीये तु

१ तत्तदौपयिकमिति पुस्तकान्तरपाठः।

सविशेषनिरासः कृतः स्यात्, नैवं भ्रान्तिप्रमितिविभागात् निर्विशेषवस्तुनि शब्दस्य प्रमाणभावो हि निषिध्यते न तु भ्रमहेतुत्वम् । अतो निर्विशेषशब्दजनिता मिथोऽन्वयानर्हार्थगोचरा भ्रान्तिः प्रमितिजनकैः शब्दैर्बाध्यत इति युक्तम् । अधिकरणतदसाधारणनिषेध्यप्रतिपन्नधर्मतो विशेषशब्दस्य संकोचानभ्युपगमे ह्यधिकरणालाभान्निषेधकशब्दस्यानन्वय एव स्यात्, न हि निर्विभक्तिकः पदान्तरानन्वितो निर्विशेषशब्दोऽर्थाभिधायी अतः संकोचाभावे व्याघातः । यद्यपि कथंचिद्विभक्त्यर्थो न विवक्षितः, तथाऽपि निर्विशेषपदस्य बहुव्रीहित्वादन्यपदार्थाभिधानमवर्जनीयं तत्पुरुषपदप्रयोगे चाधिकरणाभिधानमवर्जनीयम् । अतो यदि निर्विशेषशब्दः प्रमाणभूतवाक्यस्थः, तदा विषयविभागो द्रष्टव्यः सकलविशेषशून्यप्रतिपादनासामर्थ्यात्, नगरे को विशेषः ? इत्युक्ते न कश्चिदपीत्यादिषु वाक्येषु विशेषनिषेधः संकुचितविषयो दृष्टः, तथा शास्त्रेष्वपि "अविशेषास्ततो हि-त" इति गन्धादिगुणान्वितानामपि पृथिव्यादीनां शान्तत्वघोरत्वमूढत्वरूपकतिपयविशेषविरहविवक्षया अविशेष–शब्दः प्रयुज्यते । एवं ज्ञानस्वरूपआत्मन्यन्तरङ्गतया स्वानुभवशब्दौ निरूपितौ । अथ व्यतिरिक्तप्रमाणेषु मूलभूतस्य प्रत्यक्षस्य सविशेषविषयत्वमुपपादयति–

**सू० प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः, सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयं, निर्विकल्पकमपि सविशेषविषयमेव सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसंधानहेतुत्वात् ।**

टी० "प्रत्यक्षस्येत्यादिना, निर्विकल्पकानुभूतार्थस्य सविकल्पके प्रतिसंधानस्य वक्ष्यमाणत्वात्तदुपयोगित्वेन च सविकल्पकस्वरूपं दर्शितम् । अथ निर्विकल्पकस्य सविशेषविषयत्वं प्रतिजानीते 'निर्विकल्पकमपी"ति, एकजातीयपिण्डेषु द्वितीयादिपिण्डग्रहणस्य सविकल्पकत्वं प्रथ-

मपिण्डग्रहणस्य निर्विकल्पकत्वं च हृदि निधाय हेतुमाह "सविकल्पक" इति, विशिष्टप्रतिसंधा[1]नमिति षष्ठीसमासः कर्मधारयो वा। स्वस्मिन्—निर्विकल्पके, अनुभूतजात्यादिपदार्थविशिष्टवस्तुविषयस्य सविकल्पके प्रतिसंधानस्य हेतुत्वादित्यर्थः। प्रथमपिण्डस्य विशिष्टतयाऽवगतत्वमर्थलब्धं प्रथमपिण्डे जातिविशिष्टतया प्रतीते हि द्वितीयादिषु जात्यनुवृत्तिबुद्धिलक्षणं प्रतिसंधानं घटते। कथं प्रतिसंधानं? सकलविशेषशून्यविषयं हि निर्विकल्पकमिति हेत्वसिद्धिमाशङ्क्याह—

सू० निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणं, न सर्वविशेषरहितस्य, तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्, अनुपपत्तेश्च केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते।

टी० निर्विकल्पकं नामेति, सकलविशेषवैधुर्याभावमुपपादयति "तथाभूतस्ये"ति, सकलविशेषशून्यग्रहणं किं दर्शनादभ्युपगम्यते? किं वा-अनुपपत्त्या कल्प्यत, इति विकल्प्य न तावद्दर्शनमित्याह "कदाचिदपी"ति, कल्पनं व्युदस्यति "अनुपपत्तेरि"ति, निर्विशेषज्ञानबाधिकैवानुपपत्तिर्दृश्यते तत्कल्पिका तु दूरतो निरस्तेति भावः। अदर्शनं विवृणोति "केन चिदि"ति, प्रकारविशेषनियमो नेति भावः। उत्तरत्र ग्रहणायोगादिति पञ्चम्या हेतुत्वं स्फुटम्। अत्र पञ्चमीस्थाने हि—शब्दः। इदमित्थमिति प्रतीतिमेव विवृण्वन् अर्थात् सकलविशेषशून्यग्रहणकल्पनामपि व्युदस्यति

सू० त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणाऽयोगात्, अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणं, द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते, तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताऽऽ-

[1] अत्र विशिष्टप्रतिसंधानेत्येव प्रतीकधारणं युक्तं तथैव भाष्ये पाठोपलम्भादिति ध्येयम्।

कारता न प्रतीयते द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वं, सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिः, न प्रथमपिण्डग्रहणे गृह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम् ।

टी० ॥ "त्रिकोणे"ति, अनुपपत्तिं विवृणोति "ग्रहणायोगादि"ति, अध्याहृतशङ्कावाक्येन ग्रहणायोगादिति पञ्चम्यन्तान्वयः, त्रिकोणं-गोमुखं ग्रहणायोगात् दृष्टव्याप्तिविरोधेन सकलविशेषशून्यग्रहणकल्पनस्यानुपपन्नत्वादित्यर्थः । अनुपपत्तेरित्यनेन विपक्षे बाधकतर्कोऽप्यभिप्रेतः, सविशेषविषयत्वाभावे प्रत्ययत्वमेव हीयेतेति अस्य तर्कस्यानुग्राह्यं प्रमाणं प्रत्यक्षं योग्यानुपलम्भश्च । यद्वाऽनुपपत्तेरित्यनेन सविशेषविषयत्वे साधकप्रमाणं विवक्षितं प्रथमाक्षसन्निपातजं ज्ञानं सविशेषविषयं ज्ञानत्वात् संप्रतिपन्नवदिति । एवं साधकप्रमाणाभावबाधकप्रमाणसद्भावाभ्यां विवक्षितकतिपयविशेषशून्यग्रहणं निर्विकल्पकमिति सिद्धम् । अनेन निर्विकल्पकशब्दस्य संकुचितवृत्तित्वं फलितं, स च संकोचः कस्मिन्विषये? इत्यत्राह "अत" इति, अतः-उक्ता[१]र्थदर्शनानुपपत्तिभ्यामित्यर्थः प्रथमद्वितीयपिण्डयोर्निर्विकल्पकसविकल्पकशब्दौ न संकेतितौ अतस्तयोः पिण्डयोर्वैषम्यं वक्तव्यमिति शङ्कायां ग्राह्याकारभेदं दर्शयति "तत्रेत्यादिना वाक्यद्वयेन, गोत्वानुवृत्तिप्रतीत्यप्रतीत्योः सविकल्पकनिर्विकल्पकशब्दयोः प्रवृत्तिनिमित्ततां दर्शयति प्रथमप्रतीत्यादिना वाक्यद्वयेन, पूर्वग्रन्थोक्तं गोत्वं संस्थानशब्देन विशेषितं, तेन पराभिमतविलीनाज्यगतघृतत्वादेरिव प्रत्यक्षत्वे व्यञ्जकापेक्षया विलम्बो नास्तीति दर्शितं तदेव संस्थानमनन्तरग्रन्थे सास्नादिशब्देन निर्दिश्यते एवमनुवृत्तिग्रहाग्रहाभ्यां सविकल्पकत्वं निर्विकल्पकत्वं चोक्तं

१ उक्तादर्शनानुपपत्तिभ्यामिति पुस्तकान्तरपाठः ।

नानुवृत्तिमात्राग्रहणान्निर्विकल्पकत्वं किंतु जात्यग्रहणाच्च, अनुवृत्त्यग्रहणे हि जातिरेवागृहीता स्यादिति शङ्कायामाह–

**सू० न पुनः संस्थानरूपजात्यादेरग्रहणात्, संस्थानरूपजात्यादेरप्यैन्द्रियकत्वाविशेषात् ।**

टी० "न पुनः संस्थाने"ति, अत्राग्रहणानुपपत्तिद्योतकः संस्थानरूपशब्दः, गोत्वादेरसाधारणधर्मभूताऽनुवृत्त्यग्रहणात् गोत्वादिर्न गृहीत इति शङ्कायामग्रहणानुपपत्तिमेव विवृणोति "संस्थानरूपजात्यादेरपी"ति, ग्रहणकारणभूतेन्द्रिययोग्यतायामपि स एव हेतुरिति द्योतनाय पुनः संस्थान-शब्दोक्तिः, निर्विकल्पकस्य सविशेषविषयत्वे प्रमाणत्वेन सविकल्पके निर्विकल्पकानुभूतार्थविशिष्टप्रत्यभिसंधानं पूर्वमुक्तं पराभिमतनिर्विकल्पकाभावे योग्यानुपलम्भः प्रत्यक्षं च प्रमाणं, तयोरनुग्राहकतर्कश्चानेनोक्तो भवति किं प्रमाणाऽनुपपत्त्या प्रमेयानुपपत्त्या वा वस्तुमात्रग्रहणाभ्युपगम इति विकल्पमभिप्रेत्य प्रमाणानुपपत्तिं प्रथमं व्युदस्यति "ऐन्द्रियकत्वाविशेषादि"ति, अनेन पृथिव्यपृथक्सिद्धगन्धव्यावृत्तिः । कथमैन्द्रियकत्वं ? समवायस्यानैन्द्रियकत्वात्तदयुक्तमिति चेत्तर्हि सविकल्पकेऽपि विशिष्टग्रहणमनुपपन्नम् अतो न भिन्नेन्द्रियग्राह्यत्वमिति न प्रमाणानुपपत्तिः । असंनिहितत्वं प्रमेयानुपपत्तिः । अपृथक्सिद्धत्वेन तन्नास्तीति परिहरति–

**सू० संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते ।**

"संस्थानेने"ति, अनेन चाक्षुषत्वेऽपि पृथक्सिद्धदण्डादिव्यावृत्तिः । एकेन्द्रियग्राह्यत्वे सत्यपृथक्सिद्धत्वात् प्रमाणप्रमेयानुपपत्तिर्नास्तीति ससंस्थानमेव वस्तु गृहीतमित्यर्थः । एवं पूर्वं संस्थानरूपशब्देनाभिप्रेतोऽर्थो विवृतो भवति अनुवृत्त्यग्रहणान्न संस्थानरूपजात्यग्रहः शङ्कनीयः प्रकारप्रकारिभावेन ग्रहणोपपत्तेरिति भावः । प्रथमपिण्डग्रहणेऽनुवृत्त्यग्रहणात् गोत्वं न गृहीतं चेत् द्वितीये पिण्डेऽपि गोत्वं दुर्ग्रहम् । अनुवृत्त्यग्रहणात्, अनेकव्यक्त्यन्वयरूपा ह्यनुवृत्तिः, सा चान्वयिनः पदार्थस्य पूर्वव्यक्तिनिष्ठ-

तापरामर्शेनैव द्वितीयादिषु गृह्यते अतः प्रथमपिण्डे गोत्वाग्रहात्तदन्वयापरामर्शेन द्वितीयव्यक्त्यन्वयरूपाऽनुवृत्तिर्द्वितीयेऽपि दुर्ग्रहेति तत्रापि गोत्वमगृहीतम् । एवं प्रथमद्वितीयव्यक्त्यन्वयापरामर्शाच्च तृतीयेऽप्यनुवृत्तिरगृहीतेति गोत्वमगृहीतम् । एवं व्यक्त्यन्तरेष्वपि गोत्वं दुर्ग्रहं स्यात् अतः प्रथमपिण्डग्रहण एव गोत्वग्रहणमभ्युपेतव्यम् । एवं सकलविशेषशून्यवस्तुग्रहणं व्युदस्तं जात्यादयो विशेष्यं च पृथक् पृथक् निर्विकल्पके गृहीतं सविकल्पक एव विशिष्टतया ग्रहणमिति पक्षश्चार्थान्निरस्तो भवति । विशेषणं विशेष्यं च पृथक् पृथग् गृहीतमिति कथमवगतं? दण्डकुण्डलादिषु विशेषणविशेष्ययोः पृथक् पृथग्ग्रहणपूर्वकत्वदर्शनादिति चेत्तत्र किमपृथक्स्थितिवेलायां पृथग्ग्रहः? उत पृथक्स्थितिवेलायां, न प्रथमः, विशिष्टत्वेनैव ग्रहणात्, पृथक्स्थितिवेलायां तु विशिष्टग्रहणमेव नास्तीति न तत्प्रतीतिहेतुत्वम् । अतः पृथग्ग्रहणस्य विशिष्टग्रहणहेतुत्वाभावान्न गोत्वादौ पृथग्ग्रहणप्रसङ्गः ।

ननु विशेषणविशेष्यभावस्य सप्रतियोगिकत्वात् तज्ज्ञानस्य प्रतियोगिस्वरूपज्ञानमपेक्षितमिति विशिष्टप्रतिपत्तेर्जात्यादिपदार्थस्वरूपमात्रग्रहणपूर्वकत्वं स्वीकार्यम् । उच्यते प्रतियोगिज्ञानापेक्षा नाम किं विशिष्टज्ञाने प्रतियोग्यवभासनियमः? उत तत्तज्ज्ञानस्य विशिष्टज्ञानहेतुत्वं प्रथममभ्युपगच्छामः । द्वितीये च जात्यादयः पदार्थाः प्रथमं मिथोव्यावृत्ततया गृहीता न वा, न चेदव्यावृत्ततया गृहीतानां पूर्वोत्तरज्वालानामिव विशेषणविशेष्यभावप्रतियोगिताप्रतीतिर्नोपपद्येत यदि व्यावृत्ततया गृहीताः, तदा व्यावृत्तिश्च विशेषणविशेष्यभावेन पारतन्त्र्यादिलक्षणेन तदौपयिकाकारान्तरेण वा यदि न स्यात् विशेषणविशेष्यभावव्यत्यासप्रतीतिः प्रसज्येत वस्तुसामर्थ्याद्वास्तव एव विशेषणविशेष्यभावः प्रतीयत इति चेत् तर्हि वस्तुसामर्थ्यंनाम विशेषणविशेष्यभावरूपं तदौपयिकाकारान्तररूपं वा स्यात् वस्तुस्वभावस्य सत्तयोपकारकत्वे वस्तुस्वभावादेव विशिष्टप्रतीतिसंभवात् स्वरूपमात्रग्रहणकल्पनमयुक्तं, ज्ञाततयोपकारकत्वे तेन स्वभावेन व्यावृत्ततया विशेषणस्य प्रागवगतिरस्तीति प्रथमत एव विशिष्टप्रतीति-

राभ्युपगता स्यात् ततो वरं द्रव्यस्यैव प्रथमं विशिष्टतया प्रतीत्यभ्युपगमः, तस्यापि स्वभावस्य स्वविशेष्यभूतं विशेषणं प्रति विशेषणत्वं न प्रथममवगतं, किंतु स्वरूपमात्रमिति चेत् तर्हि विशेषणतत्स्वभावयोर्विशेषणविशेष्यभावव्यत्यासः प्रतीयेत तत्परिहाराय तस्य वस्तुस्वभावस्याकारान्तराभ्युपगमे अनवस्था, यदि व्यत्यासविशिष्टप्रतीतिप्राथम्यप्रसङ्गपरिहाराय जात्यादीनां स्वरूपमेव विशेषणभावो विशेष्यभावश्च न त्वाकारान्तरमित्यभ्युपगम्यते तदा प्रथमप्रतिपत्तिर्विशेषणतया विशेष्यतया च स्यात्, तदप्रतिपत्तौ स्वरूपस्यागृहीतत्वप्रसङ्गात्, तथैव प्रतीतौ प्रथमत एव विशिष्टप्रतीतिः स्यात्, एकस्यां प्रतीतौ विशेषणतया विशेष्यतया च जात्यादीनां प्रतिपन्नत्वात्, अतः प्रथमत एव परस्परप्रतियोगिकविशेषणविशेष्यभावप्रतिपत्तिः संभवतीत्यभ्युपगन्तव्यम् । एवं सति विशिष्टग्रहणस्य पृथग्ग्रहणपूर्वकत्वे भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिः स्यात् पक्षव्यतिरिक्तव्यवच्छेद्याभावेऽप्युक्ततर्कबलात् पक्षव्यवच्छेद्य[1]त्वसिद्धेरुपाधित्वं युक्तं, यथा प्रध्वंसाभावस्यादिमत्त्वादन्तवत्त्वे भावरूपादिमत्त्वमुपाधिर्भवति भावोन्मज्जनप्रसङ्गरूपतर्कबलात्, यथा चाग्निमत्त्वाद्धूमानुमाने आर्द्रेन्धनवत्त्वमुपाधिः सर्वत्राग्निमति धूमोपलम्भप्रसङ्गतर्कबलाद्भवति तद्वत्, अतः प्रथमपिण्डग्रहण एव गोत्वं गृह्यते द्वितीयादिष्वनुवृत्तिग्रहणमित्यभ्युपेत्यम् । अतो यथोक्तस्वरूपे एव निर्विकल्पकसविकल्पके अनुवृत्तिग्रहाग्रहौ हि सविकल्पकनिर्विकल्पयोः प्रयोजकौ कथितौ तत्कथं द्वितीयादिग्रहणस्य सविकल्पकत्व ? मित्यत्राह—

सू० अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत्संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव ।

टी० "अत इति, अतः—प्रथमग्रहण एव संस्थानवस्तुग्रहणात् अनुवृत्तिग्रहणविधुरप्रथमेतरग्रहणेषु कथं सविकल्पकत्व ? मित्यत्राह 'द्वती-

१ पक्षव्यवच्छेदकत्वसिद्धेरिति पाठान्तरम् ।

थादी''ति, द्वितीयादिपिण्डग्रहणेषु—द्वितीयादित्वेन पिण्डग्रहणेषु, अनेन संस्कारसचिवग्रहणं सविकल्पकमितरन् निर्विकल्पकमिति सिद्धम् । एतेन न केवलं जात्यनुवृत्त्यैव सविकल्पकत्वं जातिगुणादिष्वन्यतमानुवृत्तिविशिष्टग्रहणमपि सविकल्पकमिति सिद्धं सर्वविधानुवृत्तिविकलग्रहणमेव निर्विकल्पकं, यथैकव्यक्तौ प्रथमाक्षसन्निपातजं ज्ञानम् । नन्वेकव्यक्तावपि संस्कारजन्यं देशकालाद्यनुवृत्तिविशिष्टग्रहणं सविकल्पकं स्यात्, स्यादेव संस्कारजन्यदेशकालाद्यनुवृत्ति विशिष्टग्रहणं सविकल्पकं स्यात्, स्यादेव संस्कार[1]जत्वानुवृत्तिगोचरत्वाविरोधात् एकजातीयद्रव्येषु प्रथमपिण्डग्रहणमित्युक्तिस्तु जात्यन[2]नुवृत्तिप्रदर्शनार्था संस्थानिवत्संस्थानवदिति दृष्टान्तद्वयदर्शनं स्पष्टीकरणार्थं पिण्डधर्मः संस्थानं तद्धर्मोऽनुवृत्तिरिति धर्मधर्मिभावरूपसाम्यनिबन्धनं च दृष्टान्तद्वयोपादानम् । एवं सविकल्पकनिर्विकल्पकयोः संस्कारसचिवत्वतद्विरहौ सामग्रीवैषम्यं, गोत्वाद्यनुवृत्तितद्विरहौ ग्राह्याकारवैषम्यमित्युक्तं भवति। द्विविधस्यापि प्रत्यक्षस्य सविशेषविषयत्वं निगमयति

सू० अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् । अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् । इदमित्थमिति प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते ? तत्रेत्थंभावः सास्नादिसंस्थानविशेषस्तद्विशेष्यं द्रव्यमिदमंशइत्यनयोरैक्यं प्रतीतिपराहतमेव, तथा हि प्रथममेव वस्तु प्रतीयमानं सकलेतर[3]व्यावर्त्तमानमेव प्रतीयते, व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेः ।

टी० ''अत'' इति, प्रसङ्गात् भेदाभेदं निराकरोति ''अत एवे''ति, अत एव—प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसमर्थनेन सर्वत्र—पिण्डद्वयजातिव्यक्तिगुणगुणिक्रियातद्वत्कार्यकरणेष्वित्यर्थः । कथ?मित्यत्राह ''इदमि-

१ संस्कारजन्यत्वानुवृत्तिगोचरत्वाविशेषादिति पाठान्तरम् ।
२ जात्यनुवृत्तिप्रदर्शनार्था इति पु॰ पाठः ।
३ सकलेतरव्यावृत्तमिति पुस्तकान्तरपाठः ।

त्थमि''ति, भेदाभेदवादिनाऽपि पिण्डानामन्योन्यभेदाभेदसमर्थने इदमिदं न भवतीति भेदः, इदमिदं भवतीत्यभेद इत्येकस्यैव युगपद्भावाभावरूप-व्याहतिपरिहारार्थं जात्यात्मनाऽभेदो व्यक्त्यात्मना भेद इत्याकारद्वयेन भेदाभेद उपपादितः, जातिगतोऽभेदः, व्यक्तिगतश्च भेद इति नैकस्य द्व्यात्मकतेति शङ्कापरिहाराय जातिव्यक्त्योश्चान्योन्यभेदाभेद उक्तः, तन्नि-र्वहणायाकारान्तरान्वयादर्शनात् प्रतीतिरेव शरणमित्याश्रिता, अतस्तन्नि-रासाय प्रथमं जातिव्यक्त्योर्भेदेनैव प्रतीतेरभेदस्य प्रतीतिविरोधं दर्शयति "इदमित्थ''मिति, इदंभावो विशेष्यम् इत्थंभावो विशेषणम् । इत्थमंशः कः? इदमंशः कः? इत्यत्राह "तत्रे''ति, अत्र जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः प्रथमपिण्डग्रहणे अभेदेन ग्रहणम् एकशब्दानुविद्धप्रत्ययो मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः सहोपलम्भनियमश्चेति । अत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकौ, अन्यौ द्वा-वभेदसाधकौ, इदं हेतुचतुष्टयमाशङ्क्याह 'तथा ही''ति । तान् हृदि कृत्वा प्रथमपिण्डग्रहणे अभेदेन ग्रहणं व्युदस्यति प्रथममेवेत्यादिना, सकलेतर-व्यावृत्तं-सकलविजातीयव्यावृत्तमित्यर्थः, ततः किं भेदेन ग्रहणस्ये? त्यत्राह "व्यावृत्तिश्चे''ति, गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीते-र्व्यावृत्तिश्च निश्चीयते इत्यर्थः । अनेनाखण्डवाक्यार्थभङ्गश्चार्थतः कृतो-भवति शौक्ल्यादिवैधर्म्यस्येहाभिप्रेतत्वात्, तच्च पूर्वं दर्शितं गोत्वादिवि-शिष्टतया प्रतीतिरस्तु तथाप्यभेदश्च स्वप्रमाणेन प्रसज्यते चेन्न निवार्य-तदित्यत्राह–

सू॰ सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरप्यत्यन्तभेदः प्रतीत्यैव सुव्यक्तः, तत्र दण्डकुण्डलादयः पृथक्संस्था-नसंस्थितास्स्वनिष्ठाश्च कदाचित्क्वचिद् द्रव्यान्तरविशेष-णतयाऽवतिष्ठन्ते, गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थ-भूताः सन्तो द्रव्यविशेषणतयाऽवस्थिताः ।

टी० "सर्वत्रे"ति, सर्वत्र–गोत्वतदाश्रयादिषु दण्डकुण्डलादिषु च, दण्डदण्डिनोरिव जातितद्वतोरपि विशेषणविशेष्यभाव एवाभेदविरोधीत्यर्थः। "विशेषणविशेष्यभावे"ति, गोत्वव्यक्त्योरनुवृत्तिव्यावृत्त्यग्रहेऽपि विशेषणविशेष्यभावरूपेणाकारान्तरेण भेदो गृहीतः, न ह्येकेनैवाकारेण भेदग्रह इत्यस्ति नियम इति भावः। उभयत्राऽत्यन्तभेदोऽस्ति चेत् मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमेकशब्दानुविद्धप्रत्ययः सहोपलम्भनियमश्च कथमेकत्र दृश्यते? नान्यत्रेत्यत आह "तत्रे"ति, तत्र–गोत्वतदाश्रयदण्डदण्ड्यादिवर्गे, पृथक्संस्थानविशिष्टस्वपर्यवसितकादाचित्कविशेषणभावो मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्यप्रत्यये प्रयोजकः, द्रव्यसंस्थानतयैव पदार्थत्वेन तत्पर्यन्तत्वात् तद्विशेषणतयैव स्थितिर्मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजिका, सहोपलम्भनियमतदभावयोरप्यपृथक्सिद्धत्वपृथक्सिद्धत्वे एव प्रयोजके न तु भेदाभेदावित्यर्थः, सहोपलम्भनियमे द्वयोरेव सहभावात् सहोपलम्भो द्वित्वसाधकः, तन्नियमस्तु भिन्नयोरेकस्मिन्नपि नास्तीत्यसाधारणानैकान्तिकत्वादनुभयसाधकः। किंच विरुद्ध एव हि द्वित्वसाधकसहोपलम्भनियमो हि द्वित्वस्य नियमं दर्शयति एकशब्दानुविद्धप्रत्ययस्त्वेकोदण्डीत्यादिषु दण्डान्तरव्यावर्तकत्वदर्शनेन धर्म्यन्तरनिषेधपरत्वान्न धर्मधर्मिणोरभेदसाधक इति भावः। यद्येवं जातिकुण्डलादेर्वैषम्यं यदि विशेषणविशेष्यभावसाम्यादुभयत्र भेदः साध्यते तर्हि सहोपलम्भनियमादिवैषम्येणैकत्वमपि[1] स्यादित्यत आह–

सू० उभयत्र विशेषणविशेष्यभावः समानः, तत एव तयोर्भेदप्रतीतिश्च।

टी०॥ "उभयत्रे"ति, विशेषणविशेष्यभावादिविशेषात्तत्प्रयुक्तभेदप्रतिपत्तिरनिवार्या विशेषणविशेष्यभावे सति भेदस्योभयसंप्रतिपत्तेः[2] सहोपलम्भनियमे ऐक्यं हि विमतम्, अतोऽसंप्रतिपन्नभेदविरुद्धाभेदः कल्प्यः, यथा

१ वैषम्ये एकत्वमपि इत्यपि पाठान्तरम्।
२ भेदस्यापि संप्रतिपत्तेरिति पाठान्तरम्।

शीतोष्णत्वाद्यवान्तरवैषम्यं न द्रव्यत्वादिसाधारणाकारविरोध्यद्रव्यत्वकल्पकम्, एवं सहोपलम्भनियमो न भेदविरोध्याकारकल्पक इति भावः। यद्वा पृथक्संस्थितानां दण्डादीनामविशेषणानामेव सतां कदाचित् सहभावमात्राद्विशेषणत्वमध्यस्तमित्यत्यन्तभिन्नेषु विशेषणत्वाभावाद्विशेषणत्वं नात्यन्तभेदसाधनसमर्थमित्यत्राह "उभयत्रे"ति, व्यावृत्तप्रतीतौ व्यावर्त्तकतयोपयुज्यमानत्वं विशेषणत्वं, तच्च दण्डादिष्वपि मुख्यमिति विशेषणत्वादत्यन्तभेदो युज्यत इति भावः। गोत्वतदाश्रयादिष्वेव सहोपलम्भनियमो नान्यत्रेति व्यवस्थासिद्ध्यर्थमैक्यं कल्पनीयमिति चेत् तत्राह "इयांस्त्वि"ति, इयानेव, न त्वधिकं कल्पनीयमित्यर्थः। यदि सहोपलम्भनियमव्यवस्थार्थमैक्यं कल्प्यते तदयुक्तं, तत्रैवैक्यं नान्यत्रेति व्यवस्थार्थमर्थान्तरकल्पनाप्रसङ्गात् यद्यैक्यं तत्र स्वाभाविकं, तर्हि सहोपलम्भनियमः स्वाभाविक इति न प्रतिपन्नविरुद्धार्थान्तरकल्पनागौरवमाश्रयणीयमिति भावः। यद्वा विशेषणविशेष्यभावप्रसक्तभेदप्रतिपत्तिर्यथोभयत्र तुल्या तथा सहोपलम्भनियमो दण्डादावपि स्यात् जातिव्यक्त्योर्वा स न स्यादित्यत्राह—

**सू० इयांस्तु विशेषः पृथक्स्थितिप्रतिपत्तियोग्या दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हा इति, अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते प्रतीतिप्रकारो हि इदमित्थमित्येव सर्वसम्मतः।**

टी० ॥ "इयानि"ति, न हि साधारणाकारेऽभ्युपगतेऽवान्तरभेदस्त्याज्य इत्यर्थः। घटे पटस्याभावो भेदः, तत्र तस्य सद्भावो ऽभेद इति भावाभावविरोधस्य "न हि दृष्टेऽनुपपन्नं नामे"ति न्यायात् प्रतीतिपराहतत्वमाशङ्क्याह "अत" इति, अतः—इत्थं भेदसामानाधिकरण्येनाभेदस्य प्रतीत्यभावात्। कथं प्रतीतिप्रकार इत्यत्राह "प्रतीतिप्रकारो ही"ति, यदि विशेषणविशेष्ययोरैक्यमस्ति तर्ह्यन्यतरदेव प्रतीयेत अन्यतरप्रतीतिर्वाऽस्तु

तथाऽपि नैक्यं, यथा पूर्वानुभूतयोः पुरुषयोरेकस्मिन् दृष्टे न हि पुरुषैक्यं, जातिव्यक्त्योः संबन्धनियम एवैक्यमिति चेन्न भेदसाधकसंबन्धनियमस्य भेदनियतसंबन्धनियम्यत्वात् द्वयोर्हि संबन्धः, तन्नियम एवैक्यं चेत् संबन्धस्वरूपभङ्गप्रसङ्गः, एवं भेदाभेदनिरासस्य सूत्रकाराभिमतत्वमाह—

**भू० तदेतत्सूत्रकारेण "नैकस्मिन्नसंभवादि" ति सुव्यक्तमुपपादितम् । अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसंबन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः । वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञा[1]वत् स्ववाग्विरोधमपि न जानाति ।**

टी० "तदेतदि" ति, अथ प्रमाणान्तराणां प्रत्यक्षमूलत्वात् तेषामपि सविशेषविषयत्वमाह "अत" इति, प्रत्यक्षादिदृष्टधूमादिसंबन्धविशिष्टाग्न्यादिविषयत्वादित्यर्थः । स्वाभिमतमुक्तं प्रमाणत्रयं,प्रमाणान्तराभ्युपगमेऽपि तेषां सविशेषविषयत्वमाह "प्रमाणसंख्येत्यादिना प्रमाणानि सविशेषविषयाणि स्युः तानि तर्कपराहतानीति शङ्कायामस्मिन् सर्वप्रमाणसविशेषविषयत्वविस्तरोक्तिसमयेऽपि पूर्वं तत्संग्रहोक्ताविव बुद्धिस्थस्वसिद्धिवादेऽपि न निर्विशेषत्वसिद्धिरिति ज्ञापनाय सविशेषत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयमिति पूर्वोक्तं स्मारयन्विरोधं च दर्शयति "वस्तुगते" ति । यद्वा पूर्वं स्वानुभवसिद्धे विशिष्टे निर्विशेषत्वनिष्कर्षो निष्कर्षकैर्धर्मैः सविशेषत्वापादनेन दूषितः, तत्सर्वं प्रमाणनिर्विशेषविषयत्वनिष्कर्षेऽप्यतिदिशति "वस्तुगते" ति, एवं निर्विशेषचिन्मात्रपारमार्थ्यव्यतिरिक्तापारमार्थ्यप्रतिज्ञाबाधः सामान्येन सर्वप्रमाणसविशेष-

[1] जननीवन्ध्यात्वप्रतिज्ञायामिवेति द्राविडपुस्तकपाठः ।

गोचरत्वेन दर्शितः। अथ परोक्तं प्रमाणतर्कजातं विशेषतो दूषयितुमुपक्रमते। शास्त्रबलीय[1]स्त्वमिच्छता परेण प्रथमं शास्त्रमुपन्यस्तं तदनिच्छता प्रत्यक्षाविरुद्धेऽर्थे शास्त्रं प्रमाणयता सिद्धान्तिना प्रत्यक्षस्य सन्मात्रविषयत्वं निराक्रियते तत्र प्रत्यक्षस्य सन्मात्रविषयत्वे भेदस्य दुर्निरूपत्वे च परोक्तं कुतर्कमनूद्य निरस्यति—

**सू० यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयं, भेदश्च विकल्पासहत्वाद् दुर्निरूप इत्युक्तं, तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितं, संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव।**

टी० "यत्त्विति, यत्त्वित्यादिना ग्रन्थद्वयेन प्रमाणानुपपत्तिप्रमेयानुपपत्त्यनुभाषणं "तदपी"ति, न केवलं सविशेषविषयत्वोपपादनं निर्विशेषविषयत्वोपपादनानुपपत्तिश्चेत्यपि—शब्दस्य भावः। यद्वा न केवलं भिन्नविषयत्वं स्थापितं सन्मात्रविषयत्वमपि दूरोत्सारितमित्यपि—शब्दस्य भावः। "जात्यादेरेवे"ति स्वपरनिर्वाहकत्वाद्व्यावृत्तिरूपधर्मान्तरनिरपेक्षस्य

---

१ शाङ्करमते शास्त्रप्रत्यक्षयोर्विरोधप्रसक्तौ शास्त्रं बलीयस्तस्यासंभाव्यमानदोषगन्धत्वेन प्रत्यक्षस्य च विविधदोषशबलतया बाध्यताया एव युक्तत्वादित्याकूतम्। रामानुजमते तु परीक्षितप्रामाण्यकं प्रत्यक्षमेव बलीयो, युक्तं चैतत्कथमन्यथा "यजमानः प्रस्तरः" इत्यादौ प्रत्यक्षोपरोधेऽर्थान्तरकल्पनं श्रुतेर्युज्येत, कथं वा "आयुर्वै घृत"मित्यादावायुर्जनके लक्षणाऽवलम्बनं घटेत। यद्यपि च बाधकतावच्छेदकं परीक्षितत्वं शब्दप्रत्यक्षोभयसाधारणं, तथाऽपि परीक्षाया अन्ततः सर्वत्रैव प्रत्यक्षैकसाध्यतया शास्त्रस्यापि परीक्षितप्रामाण्यकत्वं बाधकतावच्छेदककुक्षिनिक्षिप्तं प्रत्यक्षैकनिबन्धनमिति प्रत्यक्षमुखनिरीक्षणसापेक्षमेव शास्त्रं प्रत्यक्षबाधकमिति प्रत्यक्षं शास्त्रापेक्षया बलीय इति सिद्धान्तिवचो बलोपेतमिति भावः।

प्रतियोगिनिरपेक्षस्यैव चेति भावः। दूरोत्सारितं प्रतियोगिस्मरणकृतविलम्बे सत्यपि ज्ञानस्य यावत्कार्यसिद्धि स्थिरत्वं[1] कल्प्यम्। तथाऽपि प्रतियोगिनिरपेक्षजात्यादेर्भेदत्वेनैकक्षणवर्त्तित्वेऽपि प्रत्यक्षस्य भेदस्य सुग्रहत्वात् दूरोत्सारितमिति भावः। जात्यादेरेवेत्यभिप्रेतं भेदस्य स्वपरनिर्वाहकत्वं परोक्तयुक्त्यैव दर्शयति संवेदनवदित्यादिना संवेदनवद्रूपादिवच्चेत्यनेन परोक्तपक्षसपत्नौ द्वावपि सपत्नीकृतौ। अनेन परोक्तदूषणस्य परिहृतत्वं दर्शयति—

**सू०** अत एव च नाऽनवस्थाऽन्योन्याश्रयणं च, एकक्षणवर्त्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किंचिदिह तिष्ठति, अपि च सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतिपत्तिर्विरुध्यते।

टी० "अत एवे"ति, अत्र प्रथमच—शब्दस्य स्वपरनिर्वाहकत्वोपपादनेन दूषणपरिहारश्च सिद्ध इति भावः। द्वितीयश्च—शब्दो दूषणद्वयसमुच्चये, अनवस्थापरिहारसिद्धौ तदर्थस्वपरनिर्वाहकत्वसिद्धिः, तदर्थस्वपरनिर्वाहकत्वसिद्धावनवस्थापरिहार इत्यन्योन्याश्रय इति चेन्न भ्रमनिवृत्त्यन्वयव्यतिरेकाभ्यामेव स्वपरनिर्वाहकत्वसिद्धेरनवस्थापरिहारात् प्रत्यक्षज्ञानस्य त्रिचतुरक्षणमात्रवर्त्तित्वेऽप्येकक्षणवर्तित्वमभ्युपगम्य परिहरति "एकक्षणवर्त्तित्वेऽपीत्यादिना। अत्रैवमनुसंधेयम्, किं प्रतीतिरनभ्युपगता? उताङ्गीकारेऽपि मूलं नास्ति? किं वा मूलं दुर्निरूप? मिति, विषयो वा किं नास्ति? उत सन्नपि दुर्निरूपः? इति, तत्र प्रथमं प्रतीत्यनभ्युपगमो नोपपद्यते, वेदान्तानामनारम्भणीयत्वप्रसङ्गात् वादिप्रतिवादिरूपेण कथाऽनुपपत्तेश्च मूलमप्यस्ति कार्यस्य संप्रतिपन्नत्वेन कारणस्य कल्पनीयत्वात्, कार्यं हि प्रतीतं कारणकल्पनायां प्रमाणं, न पुनः स्फुटावधारितं कार्यं कार-

[1] यावत्कार्यसिद्धिसत्त्वं कल्प्यमिति पाठान्तरम्।

णनिरूपणायाऽपह्नवमर्हतीति नीतिविदः । दुर्निरूपत्वमपि नास्ति कार्यो-त्पत्त्यनुरूपत्वं हि कारणस्य सुनिरूपत्वं कार्योत्पत्त्या कारणस्य तदनुरूपत्वं सिद्धमिति न दुर्निरूपत्वं, विषयोऽप्यस्त्येव, यदि न विषयः, तर्हि त्वयै-त[1]दनुयुक्तेन वक्तव्यं प्रपञ्चबाध्यत्वज्ञानं किं सविषयम्? उताविषय? मिति, सविषयत्वे विषयोऽङ्गीकृत एव, नो चेत् बाध्यत्वमपि नेति प्रपञ्चपारमार्थ्यं स्यात् अतोऽस्त्येव विषयः ।

न च बाध्यविषयत्वं, तथा सति भेदबाधकप्रमाणजन्यप्रतीतेरपि मिथ्याविषयत्वेन भेदपारमार्थ्यप्रसङ्गात् । एतान् प्रत्याहुः "स्वशास्त्रनिर्णये सत्ये सत्याः स्युर्लोकनिर्णयाः । स्वशास्त्रनिर्णयेऽसत्येऽसत्याः स्युर्लोक-निर्णयाः" इति, उक्तविकल्पेषु पूर्वे चत्वारः पक्षाः अपि चेत्यादिना भाष्येण वक्ष्यमाणेनाभिप्रेता इति तेषां निरस्तत्वं तत्र ज्ञास्यते । अत्र प्रथमं पञ्चमं बाध्यविषयत्वपक्षं प्राधान्यात् परिजिहीर्षता भाष्यकारेण प्रत्यक्षबाधस्ता-वत् दृष्ट इति यौक्तिकबाधः परिह्रियते, तत्र प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वेन तद्विशिष्टविषयतया क्षणान्तरापेक्षाभावात् क्रमयौगपद्यविक-ल्पायोगरूपा प्रमाणानुपपत्तिः परिहृता, एवं प्रत्य[2]यानुपपत्तौ स्वरूपपक्षे प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तिश्चेष्टतया परिहृता, हानोपादानरूपस्य गोत्वादिशब्दावलम्बिनश्च व्यवहारस्य प्रतीतेश्च प्रतियोगिनिरपेक्षत्वाच्छ्व-ब्दव्यवहारविशेषे प्रतियोगिसापेक्षत्वस्य दाराः कलत्रमापः इत्यादिषु स्त्री-त्वनपुंसकत्वबहुत्वादिवच्छब्दस्वभावायत्तत्वान्नार्थदूषणत्वं व्यावृत्तादि-शब्दप्रयोगेष्वेव प्रतियोगिसापेक्षत्वदर्शनात् गोत्वादिप्रतिपत्तिव्यवहारेषु तदभावाच्च शाब्दस्य व्यवहारविशेषस्य प्रतियोगिसापेक्षत्वं शब्दविशेषस्व-भावाधीनमित्यन्वयव्यतिरेकाभ्यां निश्चीयते, शब्दस्वभावश्च प्रवृत्तिनिमि-त्तसाधारण्यात्तदवच्छेदकोपाधिपुरस्कारेणार्थविशेषप्रतीतिहेतुत्वं गोत्व-शब्दो ह्यसाधारणो गोत्वं स्वरूपेण दर्शयति, भेदशब्दस्तु व्यावृत्ति-बुद्धिहेतुत्वरूपप्रवृत्तिनिमित्तसाधारण्यात्तदवच्छेदकमहिषादिपदार्थान्तर-

१ त्वयैव तदनुयुक्तेनेति पुस्तकान्तरपाठः ।
२ एवं प्रमेयाऽनुपपत्तौ इति पुस्तकान्तरपाठ एव साधीयानित्यर्थतत्त्वज्ञाः ।

रूपोपाधिपुरस्कारेण गोत्वं दर्शयति । पर्यायत्वप्रसक्तिश्च परिहृता व्यावृत्तिरूपे परे ब्रह्मणि ब्रह्मशब्देन सह स्वरूपशब्दवदधिकार्थाविवक्षायामपि भिन्नशब्दस्य प्रयोगसंभवात्, उपाधिशब्दानां हि वाच्यानतिरेकेऽपि तटस्थोपाधिभेदादपर्यायत्वमुपपद्यते तन्निच्छौ प्रयोगाप्रयोगौ भेदस्य व्यावृत्त्यनुवृत्तिविकल्पोऽपि परिहृतः, व्यावृत्त इत्यभ्युपगमे स्वरूपव्यावृत्तशब्दयोरिव भेदशब्दस्यानुवृत्तप्रयोगसंभवाद्भिन्नो हि भेदयोगीत्येतच्च स्वरूपस्यैव जात्यादिभेदविशिष्टत्वेन भिन्नशब्दप्रयोगसंभवात् परिहृतं, धर्मभूतजात्यादौ हि भिन्न इति प्रयोगो भवन्मते व्यावृत्तिरूपे ब्रह्मणि व्यावृत्तशब्दवदौपचारिकः, धर्मान्तरराहित्येऽपि तद्योगकार्यव्यावृत्तिबुद्धिहेतुत्वात् धर्मपक्षेऽनवस्थाऽन्योन्याश्रयणे च परिहृते प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वात्तस्यैव स्वपरनिर्वाहकत्वाभ्युपगमाच्च । अविद्याया ब्रह्मणो भेदोऽस्ति वा न वा? न चेत् ब्रह्मणो जडत्वादिप्रसङ्गः, अस्ति चेत् स भेदः स्वरूपं वा? धर्मो वे?तीति विकल्पे दूषणपरिहारसाम्यं द्रष्टव्यम् । किंच स्वरूपधर्मविकल्पदूषणपरिहारा अभेदेऽपि तुल्याः, अभेदः स्वरूपं चेत् प्रतियोगिनिरपेक्षाभेदव्यवहारप्रसङ्गः, "परमात्मना भवत्यभेदी" घटध्वंसे घटाकाशो न भिन्नो नभसा यदेत्यादिष्वभेदः सप्रतियोगिको ह्यवसीयते ब्रह्माऽद्वितीयमिति पदानां पर्यात्वं स्यात्, धर्मश्चेत् सविशेषत्वं ततश्चापसिद्धान्त इति । इत्थं विषयदुर्निरूपत्वपक्षे प्रतिक्षिप्ते भेदप्रतीत्यनभ्युपगम एव परेषां शरणमिति तन्निराकरोति "अपि चेत्यादिना प्रथमं प्रतिपत्तिविरोध उच्यते "सन्मात्रे"ति ।

मू० यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो-
भेदः प्रत्यक्षेण न गृहीतः किमित्यश्वाऽर्थी महिषदर्शनेन निवर्त्तते, सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्तत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दाः एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते । किंच अश्वे हस्तिनि च संवेदनयो-

रेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वात्, विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात् ।

टी० यदि चेत्यादिना व्यवहारविरोधः, सर्वाम्वित्यादिना शब्दविरोधः । नन्वेकत्र स्मर्यन्त एव सर्वे शब्दाः सर्वप्रतीतीनां सन्मात्रविषयत्वाभ्युपगमात्, नैवं घटे प्रतिपन्ने तत्र पटव्यवहारप्रतिषेधप्रसङ्गस्याभिप्रेतत्वात् । अत्र प्रतिदूषणं सन्मात्रशब्दानुवृत्तिर्दू[1]ष्योर्थोऽयं प्रमैवेति स्मरणार्थो किंचेत्यादिना प्रतीत्यवान्तरजातिविशेष विरोध उक्तः । अत्र सन्मात्रशब्दाप्रयोगः किंच-शब्देन दूष्यार्थप्रतिसंधानात् धारावाहिकज्ञानेषु कालभेदोऽस्तीति तद्व्यावृत्त्यर्थं विशेषाभावादित्युक्तं, स्मृतिवैलक्षण्यं न स्यादिति ज्ञाततयैव परामर्शप्रसङ्ग इत्यर्थः धारावाहिकबुद्धिष्विव ज्ञाततापरामर्शाभावोपपत्तिरिति चेन्न तत्राप्रतिसंधानस्य तात्त्विकबुभुत्साभावा[2]ऽधीनत्वात् अत्र तु सत्यामपि बुभुत्सायां ज्ञाततापरामर्शाभावो विषयभेदमेव व्यवस्थापयति—

सू० प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति, सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत ।

न च चक्षुषा सन्मात्रं गृह्यते, तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात्, नापि त्वचा, स्पर्शवद्वस्तुविषयत्वात्, श्रोत्रादीन्यपि न सन्मात्रविषयाणि, किंतु शब्दरसगन्धलक्षणविशेषविषयाण्येव अतः सन्मात्रस्य च ग्राहकं न किंचिदत्र दृश्यते, निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव

१ दूष्योऽर्थोऽथमेवेति पाठान्तरम् ।

२ तादात्विकबुभुत्साभावाऽधीनत्वादित्येव युक्तः पाठस्तथैवार्थसंगतेः ।

ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात् ।

टी० प्रतिसंवेदनमिति, विशेषाभ्युपगमशङ्का परस्य गत्यन्तराभावद्योतनार्था सर्वेषामित्यादिना करणव्यवस्थाऽभावप्रसङ्ग उक्तः । करणानां व्यवस्थासिद्ध्यर्थं विषयभेदानाह "न चे"त्यादिना, अत्र पूर्वोक्तविशिष्टविषयप्रतिपत्तिविरोधविवरणम् अकारणकत्वदुर्निरूपाकारणकत्वनिरसनं च कृतं भवति "रूपैकार्थसमवेते"ति रूपसमानाश्रयसमवेत इत्यर्थः, समवेतशब्दो विशेषणतैकस्वभावपरः, विशेष्यत इति विशेषः, तेन सन्मात्रविलक्षणपरस्परभिन्नविषयत्वसिद्धिः ।

ननु सर्वं प्रत्यक्षं सविशेषविषयमित्युक्तं शब्दगन्धरसानां साश्रयतया धर्मान्तरवत्तया वा ग्रहणाभावात्तद्ग्राहिणः प्रत्यक्षस्य कथं सविशेषविषयत्वं ? नैतदेवं गुणकर्मणोरपि तत्तत्संस्थानवत्तया कालविशिष्टतया च सविशेषत्वेन गृह्यमाणत्वात्, एतच्च निर्विकल्पकमपेक्ष्योक्तं, सविकल्पके तु देशादीनां बहूनां विशेषणत्वं संभवत्येव । इन्द्रियाणां लोकसिद्धहेतुभिः सन्मात्रविषयत्वप्रतिक्षेपमुपसंहरति "अत" इति, प्रत्यक्षस्य सन्मात्रविषयत्वं पराभ्युपगतार्थान्तरविरुद्धं चेत्याह "निर्विशेषे"ति, शास्त्रस्याप्राप्तविषयतयाऽर्थवत्त्वं लोकसिद्धत्वात् भेदस्य शास्त्राविषयत्वं वदद्भिः परैरेवाभ्युपेतम् । श्रुतिप्रामाण्यविरोध उक्तः पराभिमतार्थान्तरविरोधमाह—

मू० सन्मात्रब्रह्मणः प्रमेयभावश्च ततो जडत्वनाशित्वादयस्त्वयैवोक्ताः, अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षं, संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् ।

टी० "सन्मात्रब्रह्मण" इति, ततः फलितमनिष्टमाह "तत" इति, एवमुपपादितं प्रत्यक्षस्य सन्मात्रग्राहित्वप्रतिक्षेपं स्वाभिमतार्थान्तरव्युत्पादनाय प्रत्यक्षस्य विशिष्टविषयत्वे पर्यवसाययति "अत" इति, अत इत्या-

द्विभाष्येऽर्थद्वयमुक्तं वस्तुसंस्थानरूपजातिः, जात्यादिरेव भेद इति च तत्र प्रथमं संस्थानमेव जातिरित्युपपादयति संस्थानेत्यादिना, किं दर्शनेन अनुपपत्त्या वा संस्थानातिरिक्तजात्यभ्युपगम इति विकल्पमभिप्रेत्य दर्शनं नेत्याह "संस्थानातिरेकिणी"इति, अयं सास्नादिमान् अयमपि सास्नादिमान्, अयं पृथुबुध्नोदराकारः अयमपि तदाकार इति सास्नादिरनुवृत्तबुद्धिव्यवहारविषयो दृश्यते तदतिरिक्तोऽनुवृत्तधीव्यवहारविषयो न कश्चिद्दृश्यते तस्मादित्यर्थः। यद्वा जातितया स्वाभिमतात् संस्थानात् पराभिमतजातेरसाधारणं रूपमुक्तम् "एकाकारबुद्धिबोध्यस्ये"ति, कल्पनमप्यनुपपन्नमित्याह—

मू० तावतैव गोत्वादिजातिव्यवहारोपपत्तेरतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः, संस्थानं नाम स्वासाधारणरूपमिति यथावस्तु संस्थानमनुसंधेयम् ।

टी ॥ "तावते"ति, व्युत्पत्तिरनुगतप्रयोगश्च व्यक्तिजातिविशेषादिशब्दानामिव गवादिशब्दानामपि सुसदृशोपाधिवशादुपपद्यत इति भावः। नामान्तरेण पराभिमतजातेरभ्युपगतत्वशङ्काव्युदासायाह "अतिरेकवादेऽपी"ति, परैरवयविनोऽसमवायिकारणत्वेन संस्थानं स्वीकृतं, किमिदं संस्थानं नाम? किमवयवसंयोगविशेषः? उत स्वरूपमात्रम्? उतान्यत् किमपि? प्रथमे निरवयवेष्वात्मादिषु संस्थानाभावादात्मत्वादिजातिर्न स्यात् द्वितीये प्रत्ययस्य विशिष्टविषयत्वं न स्यात् अनुगतव्यवहारश्च न स्यात् जातिमात्रोच्छेदश्च स्यात्, तृतीये गत्यभावादस्मत्पक्षाङ्गीकार इति शङ्कायां निरवयवेष्वपि जातिव्यवहारसिद्ध्यर्थं जात्य[1]जातिव्यवहारसाधारणं संस्थानमात्रं दर्शयति "संस्थानं नामे"ति, घटस्य द्रव्यत्वं संस्थानं मा भूदित्यसाधारणशब्दः रूपमपृथक्सिद्धविशेषणं, तेन गर्भदासादिव्यवच्छेदः।

---

१ द्राविडपुस्तके तु जात्यजातिसाधारणमित्येव पाठः ।

ननु स्वासाधारणमित्यत्र स्वशब्दः किं व्यक्तिपरः ? उत सजातीयपरः, ? व्यक्तिपरत्वे च किमेकव्यक्तिपरः ? उत सर्वव्यक्तिपरः ? प्रथमे एकव्यक्त्यतिरिक्तव्यक्तिषु गोत्वं न स्यात्, स्वशब्दसर्वव्यक्तिपरत्वे महिषव्यक्तावपि गोत्वं स्यात् असाधारणशब्दश्च निष्फलः, सजातीयपरत्वे जातेः संस्थानविशेषत्वात् समानसंस्थानविशेषाणामसाधारणं रूपं संस्थानमित्युक्तं स्यात् ततश्चात्माश्रयः संस्थाननिरूपणस्य तत्प्रतिपत्तिसापेक्षत्वात्, नैवं, स्वशब्दस्य प्रकृतपरत्वात्, प्रकृतत्वं च तद्व्यवहारगोचरतया बुद्धिस्थत्वम् । एवं तर्हि खण्डे बुद्धिस्थे गोत्वं तदसाधारणमिति मुण्डे गोत्वं न स्यात्, खण्डस्य वा गोः गोत्वं संस्थानं न स्यात् मुण्डेऽपि विद्यमानतया गोत्वस्य खण्डासाधारणत्वाभावादिति चेन्न, खण्डं प्रति गोत्वस्य संस्थानरूपत्वाभावात्, खण्डत्वमेव हि खण्डस्य संस्थानं, किं तव खण्डो बुद्धिस्थः ? उत गौः ? उत खण्डगौः[1] ? प्रथमे खण्डत्वमेव खण्डाधारणमिति न मुण्डे गोत्वाभावप्रसङ्गः, अत एव खण्डं प्रति गोत्वस्य संस्थानरूपत्वाभावश्च नानिष्टः, द्वितीये गोर्गोत्वमसाधारणमिति महिषादौ गोत्वं निवर्तते गोषु च वर्तत इति न कश्चिद्दोषः, तृतीये यथा नीलोत्पलस्य नीलत्वविशेषितमुत्पलत्वमसाधारणम् एवं खण्डस्य गोः खण्डत्वविशेषितं गोत्वमसाधारणमिति मुण्डे खण्डत्वविशेषितगोत्वमेव निवर्तते न गोत्वमात्रमिति न काचिदनुपपत्तिः । नीलत्वविशेषितमुत्पलत्वमिन्दीवरशब्दप्रवृत्तिनिमित्तत्वादेकं संस्थानं, खण्डत्वगोत्वे तु मिथो विशेषणविशेष्यभावेऽपि नैकं संस्थानम्, एकशब्दप्रवृत्तिनिमित्तत्वाभावादिति भिदा, अतःस्वासाधारणरूपसंस्थानम् । कस्तर्हि जातिरूपसंस्थानानां शौक्ल्यादिभ्यो भेदः ? स्वभावतारतम्याभावादिति ब्रूमः शौक्ल्यादिषु हि शुक्लं शुक्लतरमिति तारतम्यं विद्यते शब्दादिष्वप्युपाधितो वा स्वतो वा तीव्रतरत्वादितारतम्यमुपलभ्यते खरत्वमृदुत्वादिस्वभावतारतम्यं स्पर्शादिष्वस्ति, संख्यास्वपि न्यूनाधिकभाव उपलब्धः, परिमाणे च स्फुटतरः । एवं गोत्वादिषु गोतरो गोतम इति तारतम्यं नोपलभ्यते एवमादिवैषम्यं

---

१ खण्डो गौरिति द्राविडपुस्तकपाठो युक्तः, खण्डगौरिति त्वपपाठः समासे टचि खण्डगव इत्यस्यैव युक्तत्वादिति त्वभियुक्ताः प्रतिपद्यामहे ।

द्रष्टव्यम् । संस्थानसामान्यलक्षणपक्षं त्यक्त्वा जातिरूपसंस्थानलक्षणमिह विवक्षितं चेत् प्रकृताकारेण सुसदृशव्यक्तयः समस्ताः स्वशब्देन विवक्षिताः प्रकृताकारेणेत्यात्माश्रयः परिहृतः संस्थाननिरूपणस्य संस्थानप्रतिपत्तिनैरपेक्ष्यात् सुसदृशशब्देन महिषादावतिप्रसङ्गः परिहृतः, समस्त-शब्देन मुण्डादिष्वभावप्रसङ्गः परिहृतः खण्डासाधारणत्वाभावात् गोत्वस्य, ननु व्यावृत्तं संस्थानमनुवृत्तव्यवहारस्य कथं निष्पादकम्? उच्यते यथा व्यक्तित्वजातिविरहेऽपि बहुव्यक्तिषु व्यक्तिशब्दप्रयोगः, यथा गोत्वाश्वत्वजातिषु जात्यन्तराभावेऽपि जातिशब्दप्रयोगः, भिन्नेषु भिन्नत्वजात्यभावेऽपि भिन्नशब्दप्रयोगः, खण्डादिषु खण्डत्वादिजात्यभावेऽपि खण्डादिशब्दप्रयोगः, यथा च नित्यद्रव्येषु विशेषमिच्छतां विशेषेषु विशेषत्वाभावेऽपि विशेषशब्दप्रयोगः, तद्वद् गवादिशब्दव्यवहार उपपद्यत इति । किं च कोऽयमनुवृत्तव्यवहार? इति निरूप्यङ्गकारौकारविसर्जनीयानामानुपूर्वी यावदाकाशभाविनां देशतः कालतश्च नोपपद्यत इति तस्या उच्चारणनिबन्धनत्वादुच्चारणस्य च विनाशित्वादानुपूर्वी च प्रतिप्रयो[1]गविनाशिनीत्यानुपूर्वीविशेषविशिष्टस्य शब्दस्य कथमनुवृत्तिः, सुसदृशत्वमेव शब्दानामनुवृत्तिरिति चेदर्थानामपि गोत्वादीनां तथाभूतैवानुवृत्तिरित्यङ्गीक्रियताम् ।

ननु किमिदं सौसादृश्यम्? उच्यते सदृशव्यवहारासाधारणहेतुर्विषयधर्मः सादृश्यं, स च भ्रातृत्ववत् प्रतियोगिनिरूप्यपदार्थः प्रतिव्यक्ति व्यावृत्तः, अतो न वृत्तिविकल्पादिदौर्व[2]स्यं निर्दिष्टाकारपौष्कल्यतः सादृश्यं सौसादृश्यमिति विशेष्यवाचिशब्दप्रवृत्तिनिरूपितपौष्कल्यं विवक्षितं, पौष्कल्यशब्देन गवयनिष्ठगोसादृश्यं न सौसादृश्यमिति सिध्यति । नन्वेवं तर्हि प्रथमेतरगोव्यक्तिषु गवा सुसदृश इत्येव प्रयोगः स्यात् न तु गौरिति चेत्, यदि विवक्षा तदा प्रयुज्यताम् । अयं गौः, अयं गवा सुसदृश इति प्रयोगेऽर्थभेदाभावात्, किं तर्हि न प्रयुज्यत? इति चेत् व्यवहारगौरवादिति ब्रूमः, गौरिति व्यवहारे हि लाघवात् सौकर्यमस्ति ।

१ प्रतियोगिविनाशिनीति ।

२ दौर्घट्यमिति द्राविडपुस्तके, दौर्वस्यमिति गौडपुस्तकपाठस्तु न युक्तस्तत्र दौरवस्थ्यमित्यस्यैवोचितत्वादिति ध्येयम् ।

ननु तर्हि तत्सदृशे तच्छब्दो माणवकेऽग्निशब्दवदौपचारिकः स्यात् न, सौसादृश्यलक्षणानुवृत्त्यभावनिबन्धनत्वादौपचारिकत्वस्य, न हि माणवकाग्न्योः सौसादृश्यं, किं तु सादृश्यलेशमात्रं, पक्षे तु सौसादृश्यलक्षणानुवृत्तिरुपलभ्यते, तस्य च मुख्यताहेतुत्वं वृद्धव्यवहारसिद्धं, यथा जात्यादिशब्दानाम्, अतोऽनुवृत्तप्रयोग उपपन्नः कस्मिंश्चिदर्थे कस्यचिच्छब्दस्य व्युत्पत्तिस्तत्सुसदृशेऽर्थे सुसदृशस्य तद्वाचकशब्दस्य प्रयोगे हेतुरिति यथादर्शनमभ्युपगन्तव्यम् अप्रतिपन्नमर्थान्तरं कल्पयित्वा वृत्तिविकल्पादिदोषाणां प्रतीतिशरणतया परिहारादपि परिदृष्ट एव वस्तुनि प्रतीतिबलेन चोद्यपरिहारो हि लाघवन्यायादुपपद्यते, व्याप्तिग्रहणं च सौसादृश्यलक्षणानुवृत्तेरेवोपपद्यत इति तदपि न त्वदभिमतजातिकल्पकम्, अतः संस्थानानतिरिक्ता जातिः।

ननु संस्थानस्यासाधारणाकारत्वात्तेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च शुक्त्यादौ रजतादिभ्रमो न स्यात्, न ह्यसाधारणाकारस्फूर्तौ भ्रमसंभव इति चेत् न केवले[1]नाऽपि संस्थानेन प्रतिपन्ने वस्तुनि प्रतिपन्नसंस्थानाविरोध्याकारविषयभ्रमोपपत्तेः प्रतिपन्ना[2]कारविरोध्याकारभ्रमस्यैव ह्युत्पत्त्यसंभवः, इदं शुक्लमिति प्रमि[3]तौ न काष्ण्यादिभ्रमः, शौक्ल्यं हि शुक्लस्यासाधारणं न शुक्तेः, अतो ऽसाधारणाकारप्रतीतिर्भ्रान्तिश्चोपपद्यते। एवमपेक्षिकं चेदसाधारण्यं तर्ह्यसाधारणशब्दवैयर्थ्यं स्यात्, न हि किमपि रूपं कस्यचिदसाधारणं न भवतीति चेन्न शुक्त्यपेक्षया शौक्ल्यस्य संस्थानत्वव्युदासार्थत्वादसाधारणशब्दस्य, अतः स्वासाधारणरूपं संस्थानं ततो नातिरि[4]क्ता जातिरिति सिद्धम्। इत्थं संस्थानमेव जातिरित्युपपाद्य गोत्वादेरेव भेदत्वं पूर्वप्रस्तुतमुपपादयति—

---

१ केनापि संस्थानेनेति द्राविडपाठः साधीयान्।
२ प्रतिपन्नसंस्थानविरोध्याकारभ्रमस्येति द्राविडं पुस्तकम्।
३ प्रतीतौ इति पाठान्तरम्।
४ ततो ऽनतिरिक्ता जातिरिति पाठान्तरम्।

मू० जातिग्रहणेनैव भिन्न इति व्यवहारसंभवात् पदार्थान्तरादर्शनादर्थान्तरवादिनाऽप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः । ननु च जात्यादिरेव भेदश्चेत् तस्मिन् गृहीते तद्व्यवहारात् भेदव्यवहारोऽपि स्यात्, सत्यं, भेदश्च व्यवह्रियत एव गोत्वादिव्यवहारात्—

टी० ॥ "जातिग्रहणेने"ति, प्रतियोगिनिरपेक्षो गोत्वादिः प्रतियोगिसापेक्षभेदो भवितुं नार्हतीति, अतः प्रतियोगिसापेक्ष इतरेतराभावो गोत्वाद्यतिरिक्तो भेदोऽभ्युपगन्तुमुचित इति शङ्कायामुच्यते "जातिग्रहणेनैव भिन्न इति व्यवहारसंभवा"दिति । अयमर्थो गोत्वादिव्यतिरिक्तभेदमङ्गीकुर्वताऽप्यभावाभावे प्रतियोगिनिरपेक्षभावरूपपदार्थस्यैव प्रतियोगिसापेक्षाभावत्वमङ्गीकृतम्, अन्यथाऽनवस्थानादनुपलम्भाच्च, तद्वदत्रापि संभवति प्रतियोगिसापेक्षत्वस्य प्रतियोगिनिरूपितत्वेनप्रवृत्तिनिमित्तकशब्दस्वभावाधीनत्वेनार्थस्वरूपभेदहेतुत्वाभावादिति, एवमनुपपत्तिर्नास्तीत्युक्तम्। दर्शनं च नेत्याह "पदार्थान्तरादर्शनादि"ति । नामान्तरेणेतरेतराभावाभ्युपगमशङ्कां व्युदस्यति "अर्थान्तरे"ति, अर्थान्तरवादिना—इतरेतराभावरूपोभेदोऽप्यस्तीति वदतेत्यर्थः, पूर्वं प्रतियोग्यपेक्षव्यवहार इत्युक्तम् अत्र तन्निरपेक्षगोत्वादिभेद उक्तः, तर्हि भेदव्यवहारोऽपि प्रतियोगिनिरपेक्षः प्रसज्जेदित्यभिप्रायेण चोदयति "ननु चे"ति, एकार्थविषयानेकबाधसमुच्चयपर इदृशश्च-शब्दः, सत्यमिति प्रतियोग्यनपेक्षभेदस्वरूपव्यवहारोऽभ्युपगमः, भेदशब्दादिव्यवहारविशेषे तदनभ्युपगमः, "भेदश्च व्यवह्रियते एवेति," न केवलं गृह्यते प्रतियोगिनिरपेक्षं व्यवह्रियते चेति चार्थः । उपपादयति "गोत्वादिव्यवहारादि"ति, कथं गोत्वादिव्यवहारे सति भेदव्यवहार? इत्यत्राह "गोत्वादि"रिति,

१ तद्व्यवहारवद् भेदव्यवहारोऽपीति द्राविडपुस्तकपाठः साधीयानिव लक्ष्यते ।

सू० गोत्वादिरेव हि सकलेतरस्य व्यावृत्तिः, गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः, भेदग्रहणेनैव ह्यभेदनिवृत्तिः, अयमस्माद्भिन्न इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात् प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम् ।

टी० गोत्वादिरेव कथं व्यावृत्ति? रित्यत्राह "गोत्वादावि"ति, निर्दिष्टसामान्यानन्तरपरसामान्यापेक्षया तद्विशेषाणां सजातीयत्वं विवक्षितम्, अत्र तिर्यक्त्वेन सजातीयो महिषादिर्गोत्वस्य व्यवच्छेद्यः, व्यावृत्तिः सजातीयबुद्धिव्यवहारनिवृत्तिहेतुत्वमस्तु ततः किं जात्यादेर्भेदत्व? इत्यत्राह "भेदग्रहणेनैव ह्यभेदनिवृत्ति"रिति, अभेदनिवृत्तिरिति अभेदधीनिवृत्तिः, एवं गोत्वादेः प्रतीतौ हानोपादानादौ गोत्वादिशब्दव्यवहारे च न प्रतियोग्यपेक्षेत्युक्तं, तर्हि कथमयमस्माद्भिन्न इत्यत्र प्रतियोग्यपेक्षेति शङ्कायामाह "अयमस्मादि"ति, न हानादिव्यवहारे, नापि शाब्दव्यवहारमात्रे अपि तु शाब्दव्यवहारविशेष एवेति ज्ञापयति तु-शब्दः, भेदश्च व्यवह्रियत एवेत्यादिना भेदग्रहणेनैव ह्यभेदनिवृत्तिरित्यन्तेन कस्यचिद्वस्तुनो वस्त्वन्तराद् व्यावर्तकधर्मस्यैव स्वयमेव स्वव्यावृत्तिरूपत्वसंभवः । परनिर्वाहकत्वाभावे स्वनिर्वाहकत्वासंभवात् स्वरूपे प्रकाशमाने भ्रमविरोधिनश्च न व्यावृत्तिरूपधर्मान्तरापेक्षेत्युक्तं भवति, एवं च सति ब्रह्मणः कस्यचिद्वस्तुनो वस्त्वन्तराद्व्यावर्तकधर्मरूपत्वाभावात् स्वरूपे भासमाने ऽध्याससहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति सिध्यति—

ननु धर्मिणः स्वरूपमेव तद्गतभावाभावरूपसकलधर्मान्तरापेक्षया भेद इत्यन्ततो गत्वाऽभ्युपगन्तव्यं भेदान्तराभ्युपगमे तस्मात्स्वरूपस्य भेदापेक्षायामनवस्थाप्रसङ्गात्, सत्यं, स तु स्वरूपभेदोनाध्यासविरोधी तन्निवृत्तौ धर्मान्तरान्वयसापेक्षत्वात् पटद्रव्यस्य रूपाद्यतिरेकभ्रमो हि स्पर्शसामानाधिकरण्यबुद्धिनिवर्त्यः, अतो धर्मिस्वरूपस्य स्वगतधर्मापेक्षया भ्रमविरोधिभेदो धर्मान्तरान्वयः । अतो धर्माणां स्वरूपस्यैव स्वाश्रयस्य स्वविरु-

द्धर्मान्तरधर्म्यन्तरापेक्षयाऽध्यासविरोधिभेदत्वसंभवः । विशिष्टस्य तु वस्तुनः स्वरूपमेव विशिष्टं स्वविरुद्धविशेषणविशिष्टवस्त्वन्तराद्व्यावृत्तिरिति च युक्तम्, अर्थान्तरैक्यभ्रमविरोधित्वात् तत्र विशेषणापेक्षया विशेष्यस्य स्वरूपमेव भेदः, विशेष्यापेक्षया विशेषणस्य स्वरूपमेव भेदः, तदुभयापेक्षया च संबन्धस्य स्वरूपमेव भेदः, विशिष्टस्य विशिष्टान्तरापेक्षया स्वरूपमेव भेदः, स्वरूपमेव भेद इति[1] निर्देशस्तु पदार्थस्वरूपमितिवदनतिरिक्तार्थः । तत्तदसाधारणशब्दवाच्यं स्वरूपञ्च स च शब्दो व्युत्पत्तिसिद्धः प्रतियोगितयाऽभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपम्, अतः कस्यचिद्धर्मत्वाभावात् धर्मविशिष्टत्वाभावात् स्वरूपे भासमानेऽपि भ्रमसहत्वाच्च ब्रह्मणः स्वरूपमेव जडत्वाद्यध्यासविरोधिनी व्यावृत्तिर्भवितुं नार्हतीति सिद्धम् । इत्थं प्रमाणप्रमेयानुपपत्ती परिहृते । अथ परोक्तमनुमानमनूद्य दूषयति—

मू० यत्पुनर्घटादीनां विशेषाणां व्यावर्त्तमानत्वेनापारमार्थ्यमुक्तं, तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम् ।

टी० "यत्पुनरित्यादिना, पुनः—शब्दः केवलतर्कादप्यनुमानस्य वैषम्यं द्योतयति दूष्यत्वानुमानस्य सूत्रकारैरेव दूषयिष्यमाणत्वाद् वक्ष्यमाणदूषणस्य मिथ्यात्वविषयसर्वानुमानानां दूष्यत्वप्रदर्शनार्थत्वाच्च व्यावर्त्तमानत्वानुमानमिह दूष्यते, साधारणदूषणानि कालात्ययापदेशसोपाधिकत्वव्याघाताः, तत्राश्रयः प्रतीतो न वा, न चेदाश्रयासिद्धिः, प्रतीतत्वे प्रतीतिश्च प्रत्यक्षादिप्रमाणैः सत्यत्वेनेति तस्य मिथ्यात्वसाधनं धर्मिग्राहकमानबाधितं, प्रतिपन्नोपाधौ बाधितत्वस्य मिथ्यात्वे प्रयोजकतया सोपाधिकत्वं च वक्ष्यते, तत्र च देशकालविषयभ्रमेष्वपि वस्त्वन्तरस्योपाधित्वादनुदितबाधकज्ञानेषु, भ्रान्तिष्वपि वेदयितृपुरुषज्ञानेन बाधितत्वाच्च विशेषणविशेष्यांशसिद्धौर्विशिष्टोपाधिसिद्धिरिति विस्तरेण वक्ष्यामः । साध्यधर्मस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये चेदद्वैतहानिः । दूष्यत्वहे-

[1] स्वरूपस्य भेद इति द्राविडपाठः ।

तोरनैकान्त्यं च परमार्थेऽपि तस्य वृत्तेः, अपारमार्थ्ये प्रपञ्चसत्यता "बाधकबाधे बाध्यस्वरूपाबाध" इति न्यायात् अत एव हि "द्वौ नञौ प्रकृतमर्थं सूचयत" इति शाब्दप्रसिद्धिः। धर्मे धर्मान्तरारोपणेन प्रत्यवस्थानादियं नित्यसमा जातिरिति न वाच्यम् अप्रामाणिकधर्मपरम्परापादनेन दूषणं हि नित्यसमा, मिथ्यात्वमिथ्यात्वं प्रामाणिकं माध्यमिकोक्तस्य ज्ञानबाध्यत्वस्य भवता बाध्यत्वाभ्युपगमात् परमार्थरज्जौ रज्जुबुद्धेः सर्पबुद्ध्या बाध्यत्वस्य बाध्यत्वदर्शनाच्च। तर्हि सत्यत्वेऽपि सत्यत्वं किमस्ति? उत नास्ति? न चेद् सत्यं जगत्स्यात्, अस्ति चेत्तस्यापि सत्यत्वमित्यनवस्थेति चेन्न स्वपरनिर्वाहकत्वाभ्युपगमात्, यदि त्वया मिथ्यात्वेऽपि स्वपरनिर्वाहकत्वमङ्गीक्रियते तर्हि मिथ्यात्वस्यैव स्वमिथ्यात्वनिर्वाहकत्वाभ्युपगमान्मिथ्यात्वं मिथ्यात्वान्तरमनपेक्ष्य स्वयमेव मिथ्येति प्रपञ्चः सत्यः स्यात्, साधनस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये अद्वैतहानिः। अपारमार्थ्ये धूमबुद्ध्या गृहीतबाष्पवदसाधकत्वमिति व्याहतिः, भेदवादिनाऽपि हि न प्रपञ्चसत्यत्वहेतुसत्यत्वसाधनपूर्वकमनुमानान्युपन्यस्यन्ते तथाऽपि तदुपपद्यते तद्वन्ममापीति चेन्न सत्यत्वासाधनेऽपि नास्माकं स्वाभ्युपगमव्याहतिः। तव तु मिथ्यात्वाभ्युपगमसाधकत्वाभ्युपगमनव्याहतिरिति वैषम्यात्।

ननु न साधनधर्मपारमार्थ्यमपेक्षितं, नाशके मुद्गरे नष्टेऽपि पूर्वनष्टो घटो नष्ट एव दृष्टः, नोत्पन्नः, तद्वद्बाधकज्ञानस्य मिथ्यात्वेऽपि तद्बाधितस्य मिथ्यात्वं तिष्ठत्येवेति चेन्न कारकज्ञापकयोर्वैषम्यात् नाशको हि कारकः, अतस्तन्नाश्यस्य तस्मिन्नष्टेऽपि नाश एव तथा दर्शनात्, बाधकश्च[1] ज्ञापकः, तस्मिन् बाधिते तद्बाध्यं च सत्यमेव स्यात् अपवरकस्यघटाभावे केनचिदुक्तेऽस्तीति वचनेन बाधिते घटसत्यत्वदर्शनात्।

ननु बाधकबाधे पूर्वबाधितस्य सत्यत्वं वक्तुमयुक्तं वृन्तविषयभ्रमरत्वभ्रमबाधेऽपि भ्रमरत्वबुद्धिबाधितस्य पालाशपुष्पविषयाग्निभ्रमस्य अबाधितत्वदर्शनादिति चेत्तत्र किं वस्तुनिवृत्तिर्बुद्धिनिवृत्तिर्वोच्यते? न प्रथमः,

१ बाधकं च ज्ञापकमिति द्राविडपुस्तकम्।

दात्वस्य परमार्थभूतत्वेनाबाध्य[1]त्वात्, बुद्धिनिवृत्तिश्चेत् सा न बाधकाधीना ज्ञानानां क्षणिकत्वात् स्वयं निवृत्तेः, भ्रमबुद्धिस्तु तत्कालीनदावबुद्ध्युत्पत्तिप्रतिबन्धिका, तत्प्रतिबन्धकत्वं च भ्रमपारमार्थ्यबुद्धेरेव, अन्यथा पूर्वभ्रमनिवृत्त्यभावदर्शनात् ततश्च त्वन्मते कदाचिदपि न निःशेषभ्रमनिवृत्तिः सिध्यति, बुद्धिनिवृत्तेर्बाधकज्ञानजन्यत्वपक्षेऽपि निवर्त्तकज्ञानानां सर्वेषां भ्रान्तिरूपोत्तरोत्तरनिवर्त्तकज्ञानसा[2]पेक्षतया भ्रमपरम्परापत्तेः, उत्तरस्य कस्यचित् ज्ञानस्य स्वयंनाशे काल्पनिकघटादिनाशस्येव तन्नाशस्य काल्पनिकत्वात्तन्नाशक्लृप्तिरूपभ्रान्तिः स्थितेति निःशेषभ्रमनिवृत्तिरूपो मोक्षोऽनुपपन्न इति कृत्स्नमिथ्यात्वनिःशेषाविद्यानिवृत्तिव्याघातः । एवमादिव्याघाता अनुसंधेयाः, सोपाधिकत्वं चानन्तरमेव वक्ष्यते, दृश्यत्वव्यावर्त्तमानत्वयोरसाधारणं दूषणं ब्रह्मण्यनैकान्तिकत्वम् । अध्यस्तं स्वाधिष्ठानसमानाधिकरणतया वेद्यं यथा इदं रजतमिति, एवं घटस्सन् पटस्सन्नित्यधिष्ठानस्य सतः प्रपञ्चस्य चैकधीवेद्यत्वाद्दृश्यत्वमनैकान्तिकं, यद्यपि नभो मलिनमित्यध्यासे नभसोऽचाक्षुषत्वादेकधीवेद्यत्वमध्यस्ताधिष्ठानयोर्न नियतं, तथाऽपि सन्मात्रस्य प्रत्यक्षग्राह्यत्वं परोपगतमिति स्थिरमनैकान्त्यम् ।

ननु दृश्यत्वनियमोऽत्र हेतुतया विवक्षितः, दृश्यत्वनियमः सतो नास्ति, सतः स्वयंप्रकाशत्वात्, तदपि कथं? सदनुभूत्योर्भेदाभावादिति चेन्न अन्योन्याश्रयणात्, सदनुभूत्योर्भेदाभावे सिद्धे सतः स्वयंप्रकाशत्वेन दृश्यत्वनियमासिद्धेर्दृश्यत्वहेतोरनैकान्त्यपरिहृतिः, अनैकान्तिकत्वे परिहृते भेदभाव इति, यद्यनुमानान्तरेण भेदनिषेधः, तर्ह्यस्य सिद्धसाध्य[3]त्वात् एवं परोपगमेनानैकान्त्यमुक्तं, किंच ब्रह्मणो दृश्यत्वं श्रुतिसिद्धं "दृश्यते त्वग्र्यया बुद्ध्या" "आत्मा वा अरे द्रष्टव्य" इति अनुभूतित्वादित्याद्यनुमानेन दृश्यत्वाभावे साध्ये कालात्ययापदेशः, यत्तदद्रेश्यमिति वाक्याद्दृश्यत्वश्रुतिर्बाध्येति चेन्न दृश्यत्वसामान्यनिषेधपरत्वात्तस्याः, दृश्यते

१ बाध्यत्वदर्शनादिति द्राविडपाठः ।
२ ज्ञानापेक्षतयेति तु युक्तोभाति पाठः ।
३ तर्ह्यस्मिन्सिद्धसाध्यतेति द्राविडः पाठः ।

त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरित्यस्य दृश्यत्वविशेषविधानविषयत्वाच्च ।

"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः, मनसा तु विशुद्धेने"-त्यादौ दृश्यत्वविशेषनिषेधदर्शनाददृश्यमित्यादिसामान्यनिषेधस्य तत्पर्यवसायित्वाच्च अद्रेश्यमित्यादिसामान्यश्रुत्या दृश्यत्वाभावसाधकानुमानेन च ब्रह्मणो न दृश्यत्वमिति चेत्तर्हि न हिंस्यात् सर्वाभूतानीति सामान्यनिषेधश्रुत्या हिंसात्वादित्यनुमानेन चाग्नीषोमीयहिंसानिवृत्तिप्रसङ्गात्, अतो ब्रह्मणि दृश्यत्वमनैकान्तिकम्, अनैकान्त्ये परिजिहीर्षिते ब्रह्मणो मिथ्यात्वमभ्युपगन्तव्यं स्याद्, दृश्यतैकस्वभावत्वं हि हेतुत्वाभिमतमिति नानैकान्त्यं, ब्रह्म हि स्वयंप्रकाशमिति न दृश्यतैकस्वभावमिति चेन्न तदानीं हेतोर्भागासिद्धिः स्यात, चिदचिदात्मके प्रपञ्चे जीवांशस्य स्वयंप्रकाशत्वात् अचिदंशमात्रपक्षीकारे हेतोर्जीवगतनित्यत्वादिधर्मेष्वनैकान्तिकत्वं, ते हि तद्धर्मभूतज्ञानवेद्या एव परमार्थभूताश्च, व्यावर्त्तमानत्वमपि ब्रह्मण्यनैकान्तिकम् अनृतादिभ्यो व्यावृत्तत्वेनाभ्युपगमात् । तच्च स्वरूपमात्रमिति न शक्यं वक्तुं, ब्रह्मणः कस्यचिद्धर्मत्वाभावादध्याससहत्वाच्च व्यावर्त्तमानत्वस्य स्वरूपत्वेऽपि तत्स्वकार्यकरम् अनुभूतित्ववत् हेतोः स्वरूपानतिरेकेऽपि साधनदशायां कार्यकरत्वं न तु दूषणदशायामिति नियामकाभावात् । किंच ब्रह्मणि स्वरूपं व्यावृत्तिश्चेत् घटादिष्वपि तथाऽस्तु, यदि ब्रह्मणि स्वरूपातिरिक्ता सा, तर्हि घटादिष्वपि तथा स्यात् सर्वथाऽनैकान्त्यमवर्जनीयं, जडादिव्यावृत्तत्वं ब्रह्मणोऽपरमार्थश्चेद्वस्तुतो ब्रह्म जडमेव स्यात् अपरमार्थशब्दश्च निष्फलः, घटादावपि व्यावर्त्तमानत्वस्य मिथ्यात्वेन व्यावर्त्याभावात्, ततश्चानैकान्त्यं सुस्थम् अपरमार्थस्यैव हेतुतया त्वयाङ्गीकृतत्वात् तस्य च विपक्षेऽपि वर्त्तमानत्वात्। किंचानुवर्त्तमानस्य सन्मात्रस्य व्यावर्त्तमानेभ्यो घटादिभ्योव्यावृत्तिरस्ति वा न वा? अस्ति चेत् तत एव व्यावर्त्तमानत्वहेतुर्ब्रह्मण्यनैकान्तिकः, नो चेत् घटादिष्विव व्यावर्त्तमानत्वं ब्रह्मणि स्यात्, व्यावर्त्तमानेभ्योव्यावर्त्तमानत्वाभावात्, यथा रजताद्व्यावृत्तं रजतं, तथा वर्त्तमानाद्व्या-

वृत्तमपि हि व्यावर्त्तमानमेव भवति । अथ उभयथाऽपि ब्रह्मण्यनैका-न्तिकम् ।

ननु ब्रह्म जडादिव्यावृत्तमेव व्यावर्त्तमानत्वं च सत्यं, तच्च स्वरूपमिति नाद्वैतहानिः, तस्य च सत्यत्वान्न जडत्वादि च ब्रह्मणः, ततश्च नानैकान्त्यम्, अपरमार्थभूतं घटादिगतं व्यावर्त्तमानत्वं हि हेतुरिति चेत् यद्यपरमार्थभूतं व्यावर्त्तमानत्वं हेतुतया विवक्षितं तर्हि असिद्धो हेतुः, घटादीनां मिथोव्यावृत्तेरसत्यत्वोपगमात् । यत्पुनरित्यादिना सोपाधिकत्वं प्रतिजानीते पूर्वं परेण बाधस्यापि पक्षाद् व्यावृत्त्युपपादनेनोपाधित्वं प्रत्युक्तं तद्व्युदासाय पक्षे बाधाभावं दर्शयितुं बाधं शिक्षयति–

सू० द्वयोर्ज्ञानयोर्हि विरोधे बाध्यबाधकभावो, बाधितस्यैव व्यावृत्तिः । अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति, यस्मिन्देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत् तत्र विरोधाद्बलवतो बाधकत्वं बाधितस्य तस्य च निवृत्तिः ।

टी० "द्वयोरि"ति, विरोधे सत्येव बाध्यबाधकभावः, न त्वस्ति नास्तीति प्रत्ययमात्रयोरित्यर्थः । "बाधितस्यैव व्यावृत्ति"रिति, प्रतिपन्नोपाधौ बाधितस्यैव मिथ्यात्वसाधिका व्यावृत्तिः, न त्वगृहीतत्वमात्रं मिथ्यात्वसाधकमित्यर्थः । अत्र व्यावृत्तिविशेषो व्यावृत्ति–शब्दोक्तः उत्तरत्र व्यावर्त्तमानत्वमात्रमिति मात्रच्प्रत्ययसद्भावात्, ततः किं पक्षे बाधाभावस्य ? त्यत्राह "अत्रे"ति, देशयोः कालयोश्च भेदे सत्यविरोधं दर्शयितुं तयोरैक्यविरोधबाधौ दर्शयति "यस्मि"न्निति, भावाभावविरोधादन्यतरस्य बाध्यत्वे सति बलवतो बाधकत्वमितरस्य बाधितत्वान्निवृत्तिश्चेत्यर्थः । च एवार्थे बाधितस्यैव त्वदभिमतव्यावृत्तिविशेष इत्यर्थः सामानाधिकरण्यानर्हत्वं विरोधः, अदुष्टकारणजन्या निषेधधीर्बाधः । अदुष्टकारणकत्वे सति

निषेधरूपत्वं बाधकत्वम् । पुरोवर्त्तिन्यभावो ऽनवभासो वा सत्यत्वावभासाभावो वा निवृत्तिः पक्षे घटादौ देशकालभेदेन विरोधबाधाभावावुपपादयति

सू० देशान्तरकालान्तरसंबन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः? अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते? ।

टी० "देशान्तरे"ति, विरोधबाधाभावात्तत्फलभूतनिवृत्तिरपि नेत्याह "अन्यत्रे"ति, अन्यत्र निवृत्तस्य–विरोधबाधस्थले निवृत्तस्य, अन्यत्र–विरोधबाधरहितस्थले । यद्वा अन्यत्र–स्वदेशकालव्यतिरिक्तदेशकालयोः अन्यत्र स्वदेशकालयोः,एतद्वैधर्म्यं दृष्टान्तेन विवृणोति "रज्जुसर्पादिष्वि"ति, तु–शब्दो घटादिवैषम्यपरः। इत्थं दूषणोपयोगिनी व्याप्तिः शिक्षिता। अथानुमानदूषणासिद्धिं दर्शयति "इति देशकालान्तरे"ति, इतिर्हेतौ मिथ्यात्वं व्यापकं, व्यावर्तमानत्वं व्याप्यं, व्यावर्तमानत्वमात्रमिति मात्र–शब्देन विरोधबाधहेतुकव्यावृत्तिर्व्यावर्त्यते । यद्वा व्यावर्त्तमानत्वहेतोरसिद्धिं प्रतिजानीते "यत्पुनरित्या"दिना, तदर्थं बाधमूलं विरोध इत्याह "द्वयो"रिति, पक्षे तदभावं दर्शयति "अत्रे"ति, विरोधाभावमुपपादयति "यस्मिन्नि"ति, तत्फलनिवृत्तिमाह "अन्यत्रे"ति, दृष्टान्ते तद्वैधर्म्यं दर्शयति "रज्ज्वि"ति,

सू० रज्जुसर्प्पादिषु तु तद्देशकालसंबन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरे दृष्टस्य देशकालान्तरव्यावर्त्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्त्तमानत्वमात्रमपारमार्थ्यहेतुः ।

टी० ॥ एवमसिद्धिं वक्तुं विभागो दर्शितः । अथासिद्धिमाह "इति देशकालान्तरे"ति, सोपाधिकत्वमार्थम् । अयमर्थः किं पटोऽस्तीत्यत्र घटाभावः सिषाधयिषितः? उत घटोऽस्तीत्यत्रापि तदभावः? प्रथमे सिद्धसाध्यता, द्वितीये व्यावर्त्तमानत्व–शब्देन किं व्यावृत्तिबुद्धिबोध्यत्वं

मिथ्यात्वहेतुतया विवक्षितम्? उत प्रतिपन्नोपाधौ बाधितस्य व्यावृत्तिः? प्रथमे सोपाधिकत्वं, द्वितीये हेत्वसिद्धा घटादेः सत्यत्वमिति ।

ननु बाधार्हताया उपाधित्वे साध्याविशिष्टता स्यादिति बाधितत्वमेवोपाधिः स्यात् तस्य च न साध्यसमव्याप्तिः । असहायेन गच्छता पथि दृष्टस्य रज्जुसर्पस्य केनाप्यबाधितत्वादिति चेत् नैवम् ईश्वरादिज्ञानेनापि बाधितत्वनियमात्, अनभ्युपगतेश्वरादीनां पक्षेऽप्ययमुपाधिरेव, किं त्वया तस्य पथि दृष्टस्य रज्जुसर्पस्य मिथ्यात्वं प्रमाणतोऽवगतं न वा? न चेत् सम्यक्सर्प एवेति तत्रावृत्तिर्न साध्यसमव्याप्त्यभावाय स्यात्, अवगतं चेत् तत एव ज्ञानात्तस्य बाधितत्वं सिद्धमिति साध्यसमव्याप्तिः सिद्धा ।

ननु किं प्रतिपन्नोपाधौ बाधो मिथ्यात्वे प्रयोजकः? उत केवलबाधः? प्रथमे देशकालयोरुपाधित्वाद्देशकालभ्रमस्य देशकालोपाधिकत्वाभावेन सर्वसपक्षाननुयायित्वेन साध्यसमव्याप्त्यभावात् प्रतिपन्नोपाधौ बाधो नोपाधिः स्यात्, द्वितीये कृत्स्नमिथ्यात्वमिति । अत्रोच्यते न हि देशकालावेवोपाधिरिति नियमः, किन्तु वस्त्वन्तरमप्युपाधिः, उपाधिरवच्छेदकः, अत एव हि देशकालादिप्रतिपन्नोपाधावबाधितत्वादीत्यत्रादि-शब्देन वस्त्वन्तरस्याप्युपाधित्वं भाष्यकारैर्वक्ष्यते तस्माद्देशकालभ्रमे वस्त्वन्तरमुपाधिः, देशकालभ्रमस्य वस्त्वन्तरोपाधिकत्वेऽपि वस्तुभ्रमस्य देशकालोपाधिकत्वे नान्योन्याश्रयः, भ्रमव्यक्तिभेदात्, तस्माद्यदवच्छेदकावच्छिन्नं, यत्प्रतिपन्नं तदवच्छेदकावच्छिन्नस्य बाधो मिथ्यात्वे प्रयोजकः । यद्वाऽऽरोपितेन सायंत्वादिना तन्निवर्त्तकेन दिवात्वादिना च विना क्रियान्तरावच्छिन्नस्य कालस्य भ्रान्त्युपाधित्वम् । एवं देशेऽपीति न कश्चिद्दोषः । एवं विशिष्टोपाधौ विशेषणविशेष्यांशयोः परिहृताऽनुपपत्तिकत्वेन विशिष्टोपाधिः सिद्धः । अतो न व्यावर्त्तमानत्वमात्रमपार्मार्थ्यहेतुः । केचिदेवमुक्तं घटोऽस्तीत्यत्र किं घटोऽस्ति-शब्दौ पर्यायौ? उत न? पर्यायत्वे सह प्रयोगो न स्यात्, नो चेत् सद्विलक्षणो घट इति, नैवम् । अस्ति ब्रह्मेति चेद्वेदेत्यादौ चास्तिब्रह्मशब्दयोः पर्यायत्वे पौनरुक्त्यं, नो चेत् ब्रह्मणोऽपि सद्विलक्षणत्वमिति उभयत्रायं परिहारः स्वशब्दप्राप्तस्य

स्वभावस्यैव निषेधार्थानुवादशङ्कापरिहारायास्ति–शब्देन नियमः क्रियत इति । अथ पारमार्थ्यसाधकत्वेनोक्तमनुवर्त्तमानत्वं दूषयति–

सू० यत्त्वनुवर्त्तमानत्वात् सत्परमार्थ इति तत्सिद्धमेवेति न साधनमर्हति, अतो न सन्मात्रमेव वस्तु अनुभूतितद्विषयेयोश्च[1] विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्च अनुभूतिरेव सतीत्येतदपि निरस्तम् । यत्त्वनुभूतेः स्वयंप्रकाशत्वमुक्तं, तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति ॥

टी० "यत्त्वित्यादिना, प्रमाणसंबन्धार्हतत्तद्घटादिस्वरूपस्य सच्छब्दवाच्यस्य किं पारमार्थ्यं साध्यते? उताधिष्ठानतयाऽनुवृत्तस्यार्थान्तरस्ये?ति विकल्पे द्वितीयशिरस्याश्रयासिद्धिमभिप्रेत्य प्रथमे शिरसि सिद्धसाधनत्वं दूषणमुक्तम् ।

ननु सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः, तत्कथं सिद्धसाधनत्वमिति चेत् उच्यते एतदनुमानं किं सतः पारमार्थ्यस्य साधकम्? उत व्यतिरिक्तापारमार्थ्यस्य? उतोभयस्य? प्रथमे सिद्धसाध्यता, द्वितीये व्यधिकरणाऽसिद्धता, तृतीयेंऽशे सिद्धसाध्यता अंशे व्यधिकरणासिद्धिश्चेति निगमयति "अत" इति, परेण प्रमाणप्रमेयानुपपत्तिकृतं भेददूषणमुपजीव्यानुभूतेः सतोभेदोऽपास्तः । अत्र च भेददूषणहेत्वाभासनिरासमुपजीव्यानुभूतिसतोर्भेदश्च निरस्यते अनुभूतीत्यादिना, अनुभूतिसद्विशेषयोरित्यत्र विशेष–शब्देनानुवर्त्तमानत्वहेतोराश्रयासिद्धिः सूच्यते सच्छब्दवाच्यस्य वस्तुनो व्यावृत्त्वादनुवृत्तार्थान्तराभावाच्च, सच्छब्दः प्रमाणसंबन्धयोग्ये हि वर्त्तते घटः सन् पटः सन्नित्यनुवृत्तव्यवहारो व्यावृत्तशब्दवदुपपन्न इति प्रमाणसंबन्धार्हाः पदार्थाः परस्परव्यावृत्ताः सच्छब्दवाच्याः । अथ परोक्ते स्वयंप्रकाशत्वेऽभिमतेऽपि तत्र शिक्षणीयांशोऽस्तीत्यभिप्रायेणाह "यत्त्वनुभूते"रिति, तुः पक्षवैषम्ये वक्तव्यांशमाह "तद्विषयप्रकाशनवेलाया"मिति उत्तरत्र वर्त्तमा-

[1] अनुभूतिसद्विषययोश्चेति पाठान्तरम् "अनुभूतिसद्विशेषयोश्चेति तु वास्तवः पाठः।"

नदशायामिति हि वक्ष्यते तत्र[1] ज्ञानस्य नित्यद्रव्यत्वेन सदा वर्त्तमानत्वात् वर्त्तमानदशायामिति पदन्निरर्थकमिति शङ्काऽपनुत्तये विषयप्रकाशनवेलायामित्युक्तं वर्त्तमानदशा-शब्देन विषयसंबन्धप्रसरस्य वर्त्तमानता विवक्षितेत्यवगम्यते न तु सर्वेषामित्येतदुपपादयति–

सू० परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्याप्यतीतस्याज्ञासिषमिति ज्ञानविषयत्वदर्शनाच्च, अतोऽनुभूतिश्चेत्स्वतःसिद्धेति वक्तुं न शक्यते अनुभूतेरनुभाव्यत्वेऽनुभूति[2]त्वमपि दुरुक्तं, स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाऽननुभूतित्वप्रसङ्गात् परानुभवानुमानानभ्युपगमे च शब्दार्थसंबन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः, आचार्य्यस्य ज्ञानवत्त्वमनु[3]भूय तदुपसत्तिश्च क्रियते सा च नोपपद्यते ।

टी० "परानुभवस्ये"ति, सर्वदेत्येतदुपपादयति "स्वानुभवस्यापी"ति, अनुभूतिश्चेदित्यनेन स्वाश्रयं प्रति विषयप्रकाशनवेलायामित्युक्तविशेष्यविरहोगर्भित,: एवमनुभूतेरनुभाव्यत्वसंभवमुपपाद्य तदसंभवे परोक्तमनुमानं दूषयति "अनुभूतेरि"ति, कुत? इत्यत्राह "स्वगते"ति, परानुभवानुमेयत्वानभ्युपगमे लौकिकव्यवहारविरोधमनिष्टमाह "परे"ति, अथ वैदिकव्यवहारविरोधमाह "आचार्य्यस्ये"ति, परानुभवानुमानानभ्युपगम इत्यादिना चार्वाकनिरासश्च फलितः, अनुमानानभ्युपगमे शब्दार्थसंबन्धग्रहणायोगात्, एवं बाध उक्तः । अथ व्याप्तिं दूषयति–

सू० न चान्यविषयत्वेऽननुभूतित्वम्, अनुभूतित्वं नाम वर्त्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वं, स्वसत्तयैव स्वविषयसाधनत्वं वा ।

१ तस्य ज्ञानस्येति द्राविडं पुस्तकम् ।
२ अनुभूतेरनुभाव्यत्वेऽनुभूतित्वमित्यपि इति द्राविडपाठः ।
३ ज्ञानवत्त्वमनुमायेति पाठान्तरम् ।

टी० ॥ "न चान्ये"ति, न ह्यसाधारणाकारो धर्मिग्राहकमानसिद्धः साधारणाकारे सत्यपगच्छतीत्यभिप्रायेणानुभूतिस्वरूपं शिक्षयति "अनुभूतित्व"मिति, अत्रानुभूति-शब्दो ज्ञानमात्रपरः, न तु स्मृतिविलक्षणपरः प्रकाशमानत्वमित्युक्ते घटादेरप्यनुभूतित्वं स्यादिति तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तम् । अणुत्वनित्यत्वाद्यात्मधर्माणां ज्ञानान्तरप्रकाश्यत्वात्तद्व्यावृत्त्यर्थं स्वसत्तयैवेत्युक्तम् अतीतानुभवव्यावृत्त्यर्थं वर्तमानदशायामित्युक्तं, यद्यप्यतीतानुभवस्य ज्ञानान्तरमन्तरेण प्रकाशानुपपत्तेरर्थाद् व्यवच्छेदस्तथाऽप्यतीतस्य ज्ञानान्तरेण सिद्धिं परानभिमतां व्युत्पादयितुमिदमितीदं विशेषणं, विषयसंबन्धस्य वर्तमानदशायामित्यर्थः । वर्त्तमानदशायां स्वसत्तयैव प्रकाशमानत्वमित्युक्ते परानुभवे तदसंभवात्तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तमेतल्लक्षणं स्वयंप्रकाशत्ववादिनामेवेष्टमिति सर्वसंप्रतिपन्नं लक्षणमाह "स्वसत्तयैवे"ति, स्वाश्रयं प्रति वर्तमानदशायामिति पदद्वयानुकर्षस्योपलक्षणं स्वसत्तयैवेति पदं,साधनमित्युक्ते दण्डचक्रादेरपि तथात्वात्तद्व्यावृत्त्यर्थं स्वविषयसाध[1]नमित्युक्तं, चाक्षुषज्ञानं श्रावणं विषयं न साधयतीति सर्वविषयसाधनत्वासंभवव्यावृत्त्यर्थं स्व-शब्दः, इन्द्रियव्यावृत्त्यर्थं स्वसत्तयैवेति पदम् । इन्द्रियादिकं हि न केवलं स्वसत्तया प्रकाशकम् अपि तु ज्ञानोत्पादनद्वारा वर्त्तमानदशायामित्यतीतानुभवव्यावृत्तिः, स्वाश्रयं प्रतीति परानुभवव्यावृत्तिः । ततः किमि? त्यत्राह

मू० ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत- इति नानुभूतित्वमपगच्छति, घटादेस्त्वननुभूतित्वमेव तत्स्वभावविरहात् नानुभाव्यत्वात् तथाऽनुभूतेरननुभाव्यत्वेऽप्यननुभूतित्वप्रसङ्गाद्दुर्वारः, गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्, गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तं नाननुभाव्यत्वप्रयुक्तमिति चेत् एवं तर्हि घटादेरप्यज्ञानावि-

१ स्वाश्रयं प्रतीत्युक्तमिति द्राविडपाठः ।

रोधित्वमेवाननुभूतित्वनिबन्धनम्, नानुभाव्यत्वमित्यास्थीयताम्।

टी० ॥ "ने चे"ति, एवमननुभाव्यत्वलक्षणसाध्यधर्मप्रति[1]पक्षेणानुभाव्यत्वेनानुभूतित्वस्य सामानाधिकरण्यदर्शनादननुभाव्यत्वेन व्याप्तिर्निराकृता। तर्हि कथमनुभाव्यत्वेऽननुभूतित्वदर्शनं? मिति शङ्कायां सोपाधिकत्वमाह "घटादेस्त्वि"ति, अननुभूतित्वम्–अनुभूति–शब्देन व्यवहृतत्वाभाव इति न साध्याविशिष्टता। यद्वा उक्तयोर्लक्षणयोरन्यतरदननुभूतित्वं न तु समुच्चितमुभयमन्योन्यनिरपेक्षत्वात्, वा–शब्दप्रयोगाच्च। न हि च–शब्दः प्रयुक्तः, तत्रान्यतरलक्षणराहित्यरूपमननुभूतित्वमन्यतराकारविरहप्रयुक्तमिति सोपाधिकत्वमित्यर्थः। अथ प्रतितर्कपराहतिमाह "तथाऽनुभूते" रिति, यद्वा आभाससमानयोगक्षेमत्वमाह "एवं तर्हि" ति, प्रकाशनियमाभावाविरोधित्वम्. गगनकुसुमादेरननुभूतित्वस्योपाध्यन्तरसमत्वं शङ्कते "गगने"ति, घटादेरननुभूतित्वस्योपाध्यन्तरमज्ञानाविरोधित्वमाह "एवं तर्हि"ति, प्रकाशनियमाभावाविरोधित्वम्–अज्ञानाविरोधित्वम्।

न च सुखादावभावात्साध्यसमव्याप्त्यभावः शङ्कनीयः सुखादेर्ज्ञानविशेषत्वेनाननुभूतित्वाभावात् अज्ञानाविरोधित्वस्योपाधित्वनिरासाय पक्षे तत्प्रसञ्जयति–

सू० अनुभूतेरनुभाव्यत्वेऽज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत इति चेदननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम्॥

टी० "अनुभूते"रिति, तद्वत्पक्षेऽपि तुल्यमित्याह "अनुभाव्यत्वेऽपीति, अनुभूतेरनुभाव्यत्वेऽननुभूतित्वस्योपाधित्वेनोक्तम् अज्ञानाविरोधित्वमननुभाव्यत्वेऽपि प्रसज्यत इत्यर्थः। अनुभावत्वेऽननुभूतित्वमज्ञानाविरोधित्वं च यदुक्तं तदननुभाव्यत्वेऽपि गगनकुसुमादेरिव प्रसज्यत

१ प्रतिक्षेपेणेति द्राविडपाठः।

इत्युक्तं, गगनकुसुमादावननुभूतित्वमज्ञानाविरोधित्वं चासत्त्वप्रयुक्तनाननुभाव्यत्त्वप्रयुक्तमिति चेत् अननु[1]भूतित्वे तद्वदसत्त्वमपि प्रसज्यते गगनकुसुमादेरसत्त्वनाननुभाव्यत्वमात्रप्रयुक्तमपि तु स्वयंप्रकाशत्वे सत्यननुभाव्यत्वविरहप्रयुक्तमित्यनुभूतेरननुभाव्यत्वमात्रान्नासत्त्वप्रसक्तिरिति चेत् अननुभाव्यत्वे तद्वदस्वयंप्रकाशत्वमपि तु प्रस[2]जति अतोऽस्वयंप्रकाशत्वे सत्यननुभाव्यत्वप्रयुक्तमसत्त्वमनुभूतेर्दुर्वारम्, असत्त्वं तु धर्मिग्राहकप्रमाणविरुद्धमिति चेत् अनुभाव्यत्वेऽननुभूतित्वमपि तथेत्येवमनुसंधेयमिति भाष्याभिप्रायः। खपुष्पोदाहरणे तु नाश्रयवैकल्यदोषः शङ्कनीयः ख्यातेर्नासदिति व्यतिरेकदृष्टान्तत्वस्य परैः स्वीकृतत्वात् शब्दज्ञानानुपाती वस्तुशून्योऽवभासो विकल्पः स स्वभावोवस्त्वाभासः प्रतीतिरिति हि तैरुच्यते तत्राभासप्रतीतस्यापि निषेधाधिकरणत्वं युक्तमिति भाट्टाङ्गीकृतत्त्वाच्च, अतः परमतप्रक्रियया खपुष्पमुदाहृतम् उपहास्यं समीपस्थैरपि हास्यमित्यर्थः। अथ परोक्तनित्यत्वं व्युदस्यति।

**मू॰ यत्तु संविदः स्वतःसिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते, तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते प्रागभावस्य ग्रा[3]हकाभावादभावो न शक्यते वक्तुम् अनुभूत्यैव ग्रा[4]हणात्कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत् ?।**

टी० यत्त्वित्यादिना, ननु कथं ज्ञाननित्यत्वमभ्युपयद्भिस्तन्निरसितुं युक्तम्? उच्यते ज्ञानाश्रयभूत आत्मा तदाश्रितं च संकोचविकासार्हं नित्यं ज्ञानद्रव्यं परस्यानभिमतं, यत्तु प्रस्तुतमिन्द्रियसंप्रयोगाद्यन्वयव्यतिरेकानुविधायि प्रत्यक्षत्वपरोक्षत्वप्रमाणत्वाद्यवस्थं लोकसिद्धं ज्ञानं तस्य यदि नित्यत्व-

१ अननुभाव्यत्वे इति द्राविडपाठः।
२ प्रसज्यते इति द्राविडपाठः।
३ ज्ञानवत्त्वमनुमायेति पाठान्तरम्।
४ ग्रहणादिति द्राविडपुस्तकपाठस्तु न युक्तः।

मुपपाद्यते तद्युदस्यते विषयसंबन्धिज्ञानस्य हि स्वयंप्रकाशत्वं परेण समर्थितं स्वयंप्रकाशत्वसमानाधिकरणं च नित्यत्वं परस्येष्टं, स्वतस्सिद्धतया नित्यत्वसमर्थनात् अतस्तन्निरासो युक्तः, तत्र च मृद्द्रव्यस्य स्थिर[1]त्वे ऽपि घटत्वाद्यवस्थमृद्द्रव्यानित्यत्ववत् ज्ञानाख्यद्रव्यस्य नित्यत्वे ऽपि स्मृतित्वानुभूतित्वाद्यवस्थज्ञानानित्यत्वं युक्तमिति न स्वपक्षविरोधः स्वयंप्रकाशत्वे किंचिदुपादेयत्वमप्यस्ति तद्व्यावृत्त्यर्थस्तु–शब्दः "अन्धस्य जात्यन्धेन यष्टिः प्रदीयत" इति असिद्धमत्यन्तासिद्धेन हेतुना साध्यत इत्यर्थः, तत्र हि ग्राहकाभावाद्ग्राह्याभावाच्च प्रागभावाभाव उक्तः, तमाशङ्क्य ग्राहकोऽस्तीत्याह "प्रागभावस्ये"ति, तत्र विकल्पे पूर्वपक्षिणोक्ते सत्येवावगमयतीति पक्षं स्थापयितुं तत्रोक्तं विरोधं शङ्कते "कथ"मिति, तदानीमित्यभावविशेषणं न क्रियाविशेषणं, परिहरति "नही"ति, स्वसमकालवर्त्तित्वनियमः किं ग्राह्यसामान्यप्रयुक्तः? उतैतद्ग्राह्यविशेषप्रयुक्त? इति विकल्पाभिप्रायेण प्रथमं ग्राह्यसामान्यप्रयुक्तत्वपक्षं प्रतिवदति–

सू० न ह्यनुभूतिः स्वसमानकालवर्त्तिनमेव विषयीकरोतीत्यस्ति नियमः, अतीतानागतयोरविषयत्वप्रसङ्गात् । अथ मन्यसे अनुभूतिप्रागभावादेः सिद्धावस्तत्समकालभावनियमोऽस्तीति, किं त्वया क्वचिदेवं दृष्टं? येन नियमं ब्रवीषि, हन्त तर्हि तत एव दर्शनात्प्रागभावादिस्सिद्ध इति न तदभाव[2]निह्नवः, तत्प्रागभावं च तत्समकालवर्त्तिनमनुन्मत्तः को ब्रवीति ।

टी० "न ह्यनुभूति"रिति, यद्वा किं वर्तमानग्रहणनियमः किं ग्राहकानुभूतिस्वभावात्? किं ग्राह्यानुभूत्यभावस्वभावा?दिति विकल्पमभिप्रेत्य प्रथमं दूषयति "न ही"ति, हि–शब्दो हेतौ, नेति प्रतिज्ञाऽध्याह-

१ सिद्धत्वेऽपि इति पाठान्तरम् ।

२ तदपन्हव इति द्राविडपुस्तकपाठः ।

र्त्तव्या। ग्राह्यविशेषपक्षं दूषयितुं शङ्कते "अथ मन्यस" इति, ग्राह्यविशेषस्य समकालवर्त्तित्वनियमोक्तिर्दर्शनपूर्विकैव स्यादित्यभिप्रायेणाह "किं त्वये" ति, क्वचित्–अनुभूतौ, व्याप्तिग्रहणभूमित्वेनाभावस्य दृष्टत्वात्प्रागभावो दुरपह्नव इत्याह "हन्त तर्ही" ति, प्रागभावस्य समकालासिद्ध्या व्याप्तिरनुभूतिप्रागभावरूपे धर्मिणि गृहीते हि सिध्यतीत्यर्थः । आदि–शब्दः प्रध्वंसपरः समकालवर्त्तित्वनियममभ्युपगम्य दूषणमुक्तं, समकालवर्त्तित्वं चानुपपन्नमित्याह "तत्प्रागभावं चे" ति, स्वसमकालवर्त्तिग्रहणनियमो ऽनुभूतेर्नास्ति तर्ह्यविद्यमाने ऽपि घटे चाक्षुषतज्ज्ञानमुत्पद्येतेत्यत्राह

मू॰ इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमो यत्स्वसमानकालवर्त्तिनः पदार्थस्य ग्राहकत्वं, न सर्वेषां ज्ञानानां प्रमाणानां च, स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्त्तिनोऽपि ग्रहणदर्शनात्, अत एव प्रमाणस्य प्रमेयाऽविनाभावः । न हि प्रमाणस्य स्वसमकालवर्त्तिनाऽविनाभावोऽर्थसंबन्धः ॥

टी॰ "इन्द्रियजन्मन" इति, प्रत्यक्ष–शब्देन प्रत्यक्षज्ञानमुच्यते अयमभिप्रायः स्वसमकालवर्त्तिग्राहकत्वनियमो न ज्ञानमात्रस्य,

न च तदवान्तरभेदप्रमाणज्ञानस्य,

न च तदवान्तरभेदप्रत्यक्षज्ञानस्य, अपि तु प्रत्यक्षविशेषरूपस्यैन्द्रियकज्ञानस्येति, न सर्वेषां ज्ञानानां प्रमाणानां चेति, च–शब्देन प्रत्यक्षस्य चेत्युक्तं भवति उपपादकग्रन्थानुगुण्यात्। कुत इत्यत्राह "स्मरणानुमाने" ति–स्मरण–शब्देन सर्वज्ञानानां समकालवर्त्तिविषयत्वनियमव्युदासः, अनुमानागम–शब्देन प्रमाणमात्रस्य तन्नियमव्युदासः, योगिप्रत्यक्षादि–शब्देन प्रत्यक्षमात्रस्य तन्नियमव्युदासः । आदि–शब्देनेश्वरप्रत्यक्षं गृह्यते प्रमेयसद्भावो न चेत्प्रमाणाप्रमाणज्ञानयोः कथं वैषम्य ? मित्यत्राह "अत एवे" ति, अत एव ज्ञानमात्रस्य समकालवर्त्तिग्राहकत्वनियमाभावेन प्रमे-

याविनाऽभावश्च सिद्ध इत्यर्थः । अन्यथा वर्त्तमानविषयालाभादसमकालवर्त्तिग्राहिणां तत्तत्प्रमाणानां प्रमेयाविनाभावो न सिध्येदिति भावः, तत्सिद्धिः कथ? मित्यपेक्षायां तमेवाविनाभावं विवृणोति "न ही"ति, प्रमाणस्यार्थसंबन्ध इत्यन्वयः, तर्हि प्रमेयाविनाभावः क? इत्यत्राह ।

सू० अपि तु यद्देशकालादिसंबन्धितया योऽर्थोऽवभासते तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता, अत इदमपि निरस्तं स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनादिति । अथोच्येत न तावत्संवित्प्रागभावः प्रत्यक्षावसेयः, अवर्त्तमानत्वात् ।

न च प्रमाणान्तरावसेयः, लिङ्गाद्यभावात्, न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते नानुपपत्तिर्[1]रपि कस्यचिद् दृश्यते न चागमस्तद्विषयो दृष्टचरः ।

टी० ॥ "अपि त्वि"ति, यद्देशकालादीत्यादि–शब्देन संस्थानमुच्यते मिथ्यात्वप्रत्यनीकता–मिथ्यात्वस्य प्रमाणं प्रत्यनीकं भवति तस्य भाव इत्यर्थः । यद्वा मिथ्यात्वप्रत्यनीकोऽर्थो भवति तस्य भावो मिथ्यात्वप्रत्यनीकता, सा प्रमाणस्यार्थसंबन्ध इत्यन्वयः, अत एवेत्यादिभाष्यस्यैवं वाऽर्थः, अत एव प्रमाणत्वेन संप्रतिपन्नानां कालान्तरवर्त्तिग्राहकत्वदर्शनात्त्रापि प्रमेयाविनाभावः कल्प्यत इत्यर्थः । कथं तत्राविनाभावप्रकारः? इत्यत्राह "न ही"त्यादि, अनेनैव प्रमाणप्रमेयाविनाभावरूपविषयविषयिभावरूपलक्षणेन बौद्धैकदेशिभिरुक्तं स्मृतेर्निर्विषयत्वन्निरस्यत इत्यवश्याभ्युपेतव्यमिदमित्यभिप्रायेणाह "अत इदमपी"ति, एवमनुभूतिरेव प्रागभावग्रहणक्षमेत्युपपादितम् । अथ तद्ग्राहिणाऽनुभवेन प्रत्यक्षाद्यन्यतमेन भवितव्यमिति तदसंभवेन प्रमाणाभावात्प्रागभावाभाव इति शङ्कते "अथोच्येत

१ नानुपपत्तिरपि कस्यचिद्दृश्यते इत्ययं द्राविडपुस्तके नोपलभ्यते पाठः ।

लिङ्गाद्यभावादि''ति, आदि-शब्देनानुपपद्यमानोपमानशब्दो विवक्षितो। तद्दूषणोति ''न हीत्यादिना, निगमयति

सू० अतस्तत्प्रागभावः प्रमाणाभावादेव न सेत्स्यतीति, यद्येवं स्वतःसिद्धत्वविभ्रमं परित्यज्य प्रमाणाभावेऽवरूढश्चेत् योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान्।

टी० ''अत''इति, उपमानस्य प्रतिपन्नवस्तुसादृश्यसंज्ञासंज्ञिसंबन्धयोरन्यतरमात्रगोचरत्वेनाप्रतिपन्नपदार्थप्रतिपादनासामर्थ्यादनुपन्यासः परिहरति ''यदी''ति, यदि-शब्दः किमर्थः, चेच्छब्दोऽयमर्थः स्वपरिपाटीं विहाय शास्त्रमर्यादायां किमवतीर्णोऽसि तथा चेदित्यर्थः। प्रमाणमाह ''योग्यानुपलब्ध्यैवे''ति, परैरभावप्रमाणस्याङ्गीकृतत्वात् योग्यानुपलब्ध्येत्युक्तं स्वपक्षपर्यालोचनायामपि ज्ञानस्य योग्यानुपलब्धिर्नाम भावरूपाव्रऽस्थान्तरोपलब्धिः पिण्डत्वाद्युपलब्धिरेव हि घटस्य योग्यानुपलब्धिः, अतोऽतीतकालावच्छिन्नज्ञानाभावो नाम ज्ञानस्य संकोचोऽर्थान्तरज्ञानं वा पूर्वकालीनगजज्ञाने बुभुत्सिते तत्कालीनस्वापादिप्रतिसंधानं घटादिज्ञानप्रतिसंधानं वा गजज्ञानस्य योग्यानुपलब्धिः, सा च लिङ्गतया पूर्वकालीनज्ञानाभावनिश्चायिका, यदुक्तं-संविद इयमिति विषयीकारानर्हत्वेनाभावो दुर्ग्रह इति, तदयुक्तं, तथा सति प्रागभावनिरासानुपपत्तिः, न ह्यन्यस्य घटादेः प्रागभावो निरस्यते अपि त्वनुभूतेः, तस्मादनुभूतिम् इयमिति विषयीकृत्य तस्याः प्रागभावो निराकरणीयः। इयमिति विषयीकाराभावेऽपि तत्प्रागभावोऽपि निराकर्तुं शक्यते चेत्तदभावेऽपि प्रागभावस्साधयितुमपि शक्यते यदि त्वया विषयीकृता तद्वदस्माभिरपि विषयीकृतेति तदभावः सुसाध इत्यनुसंधेयम्। उत्तरत्र नित्यत्वं चेदिति ग्रन्थोऽयमर्थो ऽभिप्रेतः। एवं प्रागभावस्य योग्यानुपलब्धिसिद्धत्वमभिधायार्थापत्तिमप्याह

सू० किंच प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत् तस्य न सर्वदा सत्तामवगमयद् दृष्टम् इति

घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः, घटादिविषयमेव संवेदनं स्वयंकालानवच्छिन्नं प्रतीतं चेत्तत्संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयत इति नित्यः स्यात् ।

टी० किंचेत्यादिना, ज्ञानस्य स्वावभासास्थिरत्वलक्षणयोग्यानुपलब्ध्या अनित्यत्वमुक्तम् । अथ विषयप्रकाशनिरूपणमुखेनापि तदुपपाद्यते अविशेषेण ज्ञानाभावस्य ग्रहणमुपपन्नमित्युक्तम् । अथ किं भवता नित्यत्वं सविषयज्ञानस्य सिषाधयिषित? मुत निर्विषयस्ये? ति विकल्पमभिप्रेत्य सविषयपक्षं दूषयति प्रत्यक्षेत्यादिना, सर्वदा घटसत्ताकाले सर्वस्मिन्न प्रतीयत इत्यर्थः, घटादेः पूर्वोत्तरकाले सत्ता न प्रतीयतां ततः किमित्यत्राह "तदप्रतीतिश्चे"ति, अप्रतीतिर्ज्ञानस्य घटव्यवहारानुगुण्याभावः, अतो न साध्याविशिष्टता, नियमेन स्वसमकालवर्त्तिग्राहिणः प्रत्यक्षज्ञानस्य पूर्वोत्तरकालयोर्विद्यमानेऽपि घटे तदप्रकाशकत्वं तदानीं स्वाभावादेवेत्यर्थः, एवं विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्त्या ज्ञानानित्यत्वमुक्तम् । अर्थापत्त्यन्तरमाह "घटादिविषयमेवे"ति विषयसमकालवर्त्तिनः प्रत्यक्षसंवेदनस्य नित्यत्वे घटादिरपि नित्यः स्यादतो घटाद्यनित्यत्वाऽन्यथाऽनुपपत्त्या ज्ञानानित्यत्वमित्यर्थः । अथार्थापत्त्यन्तरमाह

सू० नित्यं चेत्संवेदनं स्वतःसिद्धं नित्यमित्येव प्रतीयेत न च तथा प्रतीयते, एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति, ते च सर्वे कालानवच्छिन्ना नित्याः स्युः संविदनुरूपस्वरूपत्वाद्विषयाणाम् ।

टी० "नित्यं चे"दिति, संविदो नित्यत्वसाधनं संविदमियमिति विषयीकृत्यैव कर्त्तव्यं स्वतःसिद्धत्वेनेयमिति विषयीकारानर्हत्वात्स्वयमेव नित्यमिति प्रतीयेत ।

न च तथा प्रतीयते, तस्मादनित्यत्वमेवेत्यर्थः। एवं नित्यतयाऽनवभासान्यथाऽनुपपत्त्या ज्ञानानित्यत्वमुक्तम् अनित्यतयाऽनवभासान्नित्यत्वमिति चेत् न पूर्वापरावधिद्वयसापेक्षस्यानित्यत्वस्य सद्भावेऽप्यवधिद्वयास्वयंप्रकाशत्वादेवानित्यत्वाप्रकाशो[1]पपत्तेः । यद्वा घटादिनित्यत्वप्रसङ्गो नित्यत्वेनावभासप्रसङ्गश्च विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्तेरनुग्राहकतर्कतयोक्तौ भवतः। अथाऽनुमानादिविषयाणामपि नित्यत्वमनिष्टं प्रसञ्जयति "एवमि"ति, एवं–प्रत्यक्षज्ञाननित्यत्वे विषयनित्यत्वप्रसक्तौ एवं सत्यामित्यर्थः। कुतो नित्यता? तत्राह "संविदनुरूपे"ति, यथा संवित्स्वविषयं दर्शयति तथाभा[2]वादित्यर्थः ।

ननु प्रत्यक्षस्य समकालवर्त्तिविषयत्वनियमात्तन्नित्यत्वे विषयनित्यत्वप्रसङ्ग उपपन्नः, अनुमानादिसंविदामपि अतीतानागतविषयत्वसंभवात्कथं तन्नित्यत्वे विषयनित्यत्वप्रसङ्गः,? उच्यते अतीतताऽनागतत्वे ह्यापेक्षिके वर्तेते ततः संविदपेक्षया हि विषयस्यातीतत्वानागतत्वे संविदोनित्यत्वे तदपेक्षया विषयस्यातीतत्वानागतत्वे संविन्न दर्शयतीति कालानवच्छिन्नतया प्रतीतौ विषया नित्याः स्युरिति कालानवच्छिन्नत्वमेवानुगतनित्यत्वलक्षणमित्यभिप्रायेण कालानवच्छिन्ना नित्या इत्युक्तम्

ननु न संविदपेक्षया विषयस्यातीतत्वागामित्वे किं तु लिङ्गाद्यर्थान्तरापेक्षया ततो विषयस्य लिङ्गाद्यपेक्षयाऽतीतत्वमागामित्वं च संभवतीति न नित्यत्वप्रसङ्गः, उच्यते लिङ्गादेः प्रत्यक्षज्ञानविषयत्वात्तन्नित्यत्वेन तद्विषयभूतलिङ्गादेरपि नित्यत्वापातात् तदपेक्षयाऽनुमानविषयस्यातीतत्वमागामित्वं च संविन्न दर्शयतीति कालानवच्छिन्नोनित्य एव विषयः स्यादिति, एवं पूर्वोक्तदूषणमुपजीव्यानुमाने विषयनित्यत्वप्रसक्तिरित्यभिप्रायेणैवमित्युक्तम्, एवं पूर्वोक्तविकल्पे सविषयानुभवस्य नित्यत्वं निराकृतम् । अथ निर्विषयानुभवनित्यत्वपक्षं निराकरोति

१ अनित्यत्वाप्रकाशत्वोपपत्तेरिति पाठान्तरं युक्तम् ।

२ तथाऽभावादिति तदर्थं इति पाठान्तरम् ।

सू० न च निर्विषया संवित्काचिदस्ति, अनुपलब्धेः, विषयप्रकाशनस्वभावतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता, संविदो विषयप्रकाशनसत्ता[1]स्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेः ।

टी० "न चे"ति, कुत इत्यत्राह "अनुपलब्धेरि"ति, न केवलं निर्विषया संविदनुपलब्धेरेव सविषयसंविद एव परेण स्वयंप्रकाशत्वसमर्थनात्तदभ्युपगमप्रकारेणापि निर्विषया संविन्नास्तीत्याह "विषये"ति, ततः किमित्यत्राह "संविदो विषये"ति, सविषयज्ञानोत्तीर्णायाः संविदः कदाचिदपि विषयसंबन्धाभावेन स्वयंप्रकाशत्वासिद्धेर्ज्ञानान्तरावेद्यत्वाच्च तुच्छतेत्यर्थः

ननु यदि विषयप्रकाशकतया स्वयंप्रकाशत्वमुपपाद्यते तदाऽयं दोषः स्याद्विषयसंबन्धाभावेऽप्यनुभूतित्वादित्यनेन साध्यस्वप्रकाशत्वसिद्धिरिति चेत्, किमिदमनुभूतित्वं ? किं स्वतः सिद्धत्वं ? तदा साध्याविशिष्टता स्यात्, यदि विषयप्रकाशकत्वमनुभूतित्वं तदानीमुक्तदोषः स्यादेव, विद्यमानदशायां सर्वदा भासमानत्वमपि न त्वया हेतुत्वेन वाच्यं, सुखदुःखेच्छादौ जडत्वेन त्वदभिमते व्यभिचारात्, अतो विषयप्रकाशकत्वमनुपजीव्य स्वयंप्रकाशकत्वं दुःसाधनमित्युक्तदोषानतिवृत्तिः । कथं स्वप्रकाशत्वरूपसाध्यधर्मनिवृत्तौ धर्मिभूतसंविदसिद्धि ? रित्यत्राह—

सू० अनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात् न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित्परिस्फुरतीति वाच्यम् योग्यानुपलब्धिपराहतत्वात् तास्वपि दशास्वनुभूतिरनुभूता चेत्तस्याः प्रबोधसमयेऽनुसंधानं स्यान्न च तदस्ति । नन्वनुभूतस्य पदार्थस्य स्मरणानियमो न

१ स्वयं प्रकाशनतास्वभावविरहे सति इति द्राविडपाठः ।

दृष्टचरः, अतः स्मरणाभावः कथमनुभवाभावमेव साधयेत्? उच्यते निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबल-हेतुविरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति ।

टी० ॥ "अनुभूतेरनुभवान्तराऽननुभाव्यत्वाच्चे"ति, नन्वेकस्या एव संविदोऽन्तःकरणवृत्तिद्वारा विषयसंबन्धः कादाचित्कः, तद्विगमेऽपि स्वापादिदशासु स्वप्रकाशा संविच्चकास्तीति न तुच्छताप्रसक्तिरित्यत्राह "न चे"ति, केवल-शब्देन निराश्रयत्वमुच्यते । कुत इत्यत्राह "योग्ये"ति, तदेवोपपादयति, "तास्वपी"ति, विपर्यये पर्यसानन्ददर्शयति–

"न च तदस्ती"ति, व्यापकाभावो हि व्याप्याभावसाधकः, स्मरणं च नानुभवव्यापकम् अतस्तदभावो नानुभवाभावसाधक इत्याह "नन्वि"ति, पथि गच्छता स्पृष्टतृणादीनां प्राग्जन्मानुभूतार्थानां चास्मरणादिति भावः । परिहरति "उच्यत"इत्यादिना विषयान्तरव्यासङ्गादिरस्मरणमात्रहेतुः, विषयवैचित्र्यविरहः, निष्प्रयोजनतया तात्पर्याभावः, तादात्विकतीव्रसंवेदनान्तरमनुभवानभ्यासश्च, अस्मरणमात्रहेतुतया हि प्रसिद्धाः । अतो नियमशब्दः, अस्मरणनियम इत्युक्तिः, जन्मान्तरानुभूतस्याप्यनुभवाभावप्रसङ्गात्तद्व्यावृत्त्यर्थं "निखिलसंस्कारेत्यु"क्तं, देहविगमादीत्यादि-शब्देन नारकदुःखप्रसूतिव्यसनकालविप्रकर्षा विवक्षिताः । यथा-संवित्सिद्धौ "प्रापणान्नरकक्लेशात्प्रसूतिव्यसनादपि चिरान्निवृत्ताः प्राग्जन्मभेदा न स्मृतिगोचराः" इति देहविगमादीनां निखिलसंस्कारतिरस्कृतिकरत्वं स्वभावः पुण्यविशेषादपवादात्कस्यचिदेव जातिस्मृतिः प्रबलशब्दोव्यासङ्गाद्यपेक्षया प्राबल्यपरः । उक्ततिरस्कारकाभावे कदाचिदपि स्मरणमनुभवव्यापकम् अतस्तदभावोऽनुभवाभावसाधक एवेत्यर्थः, न केवलमनुभवसाधकाभावः, बाधकप्रमाणान्तरमप्यस्तीत्याह

सू० न केवलमस्मरणनियमादनुभवाभावः सुप्तोत्थितस्यैयन्तं कालं न किंचिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः ।

न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविर-

ह्यादहङ्कारविगमादेति शक्यते वक्तुम् अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात् ।

"न केवल"मिति, सिद्धेरित्यनुभवाभावस्येत्यनुषङ्गः । अथास्मरणनियमस्यान्यथासिद्धिमाशङ्कते "न चे"ति, अहङ्कारविगमो ऽहंप्रत्ययविगमः । परिहरति "अर्थान्तरे"ति, घटाननुभवः पटविनाशश्चानुभूतकुड्यादस्मरणकारणं न दृष्टमित्यर्थः । ननु कुड्यादेः स्मरणं प्रति घटादेरकारणत्वात्तदभावो नास्याः स्मरणहेतुरिह तु स्मरणकारणस्याभावो ऽस्मरणहेतुरेव नैवं कुड्यादिस्मरणं प्रति घटादेरिव ज्ञातृज्ञेययोरपि स्मरणं प्रति अकारणत्वमकामेनापि स्वीकार्यमित्यभिप्रायेण ह्यर्थान्तरशब्दः प्रयुक्तः । अयमर्थः ज्ञातृज्ञेययोः स्मरणं प्रति कारणत्वं दृष्टत्वादङ्गीक्रियते चेत् दृष्टत्वादेनुभवेऽपि ज्ञातृज्ञेययोः कारणत्वमङ्गीकार्यं, यदि ज्ञातृज्ञेययोर्दृष्टत्वे ऽप्यनुभवकारणत्वं नाङ्गीक्रियते स्मृतावपि कारणत्वन्न स्यात् अतस्तदभावाच्च स्मरणाभाव इत्येतद्दूषणमहमर्थाभावमभ्युपगम्योक्तम् । अहमर्थाभावो नास्तीत्युपपादयिष्यत इत्याह

मू० तास्वपि दशास्वहमर्थो ऽनुवर्तत इति च वक्ष्यते ।

ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तं, सत्यमुक्तं, स त्वात्मानुभवः, स च सविशेष एवेति स्थापयिष्यते, इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते, केवलैव संविदात्मानुभव इति चेन्न सा च साश्रयेति ह्युपपादयिष्यते ।

टी० "तास्वपी"ति, अनुवर्त्तते-प्रकाशते ततो हेतुरसिद्धश्चेत्यर्थः पूर्वं स विशेषोऽनुभवः स्वापादिदशास्वस्तीत्युक्तमिति तदालम्ब्य व्याघाताभिप्रायेण चोदयति "नन्वि"ति, अत्राह "सत्यमुक्त"मिति, "स त्वात्मानुभवः", न त्वनुभूत्यनुभव इत्यर्थः । अनुभूतिविरहे स आत्मा निर्विशेषः स्यादित्यत्राह "स चे"ति, प्रत्यक्त्वानुकूलत्वविशिष्ट इत्यर्थः । इह किं

निषिध्यत? इत्यत्राह "इह त्वि"ति, शब्दान्तरेणास्मन्मतमङ्गीकृतमिति शङ्कते "केवलैव संविदात्मानुभव इति चे"दिति आत्माऽनुभवे–केवलात्मानुभवदशायां स्वापादिदशायां या संवित्त्वया नित्यतयाऽभ्युपेता सा प्रसरणाभावेन विषयावच्छेदविरहात्तदानीं केवला निर्विशेषा सा त्व[1]दुक्तैव स्यादिति भावः। परिहरति "सा चे"ति, सा च धर्मभूता संविद्विषयर[2]हिताऽपि साश्रयेत्यर्थः, केवलैवेत्यादेरेवं वार्थः आत्मानुभवरूपा आत्मस्फुरणरूपा या संवित्सा केवलैवेति चेत् अस्मदुक्तसकलविषयादिविशेषशून्यैवेति चेदित्यर्थः। परिहरति "सा चे"ति, सा–धर्मिस्फुरणरूपा या संवित् सा साश्रयेति वक्ष्यते स्फुरणं हि स्फुरतो धर्मः, यथा प्रभाश्रयस्य दीपस्यौज्ज्वल्यं दीपाख्यधर्मिगतो धर्मस्तद्वदित्यर्थः, धर्मिस्वरूपभूतज्ञानस्य स्फुरणं नित्यं, तच्च भासमानता व्यवहारानुगुण्यं धर्मभूतज्ञानस्य स्फुरणं विषयसंबन्धजन्यं तदानीमेव न त्वन्यदा, अत एव हि विषयप्रकाशनवेलायामिति पूर्वमुक्तं, पुंस्त्वा[3]दिवत्त्वस्येत्यत्र च वक्ष्यते, स्वापादौ तु तस्य सर्वविषयसंबन्धार्हता प्रतिबद्धा वह्नेर्दाहकत्वशक्तिवत् अतो न तदा स्फुरणम्। अथ प्रासङ्गिकमात्मानुभवं परिसमाप्य प्रस्तुतप्रागभावसिद्धिं निगमयति

सू० अतोऽनुभूतिः सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम् अनुभूतेरनुभाव्यत्वसंभवोपपादनेनान्यतोऽप्यसिद्धिर्निरस्ता तस्मान्न प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरुपपत्तिमती, यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनं तदप्यनुपपन्नं प्रागभावे व्यभिचारात्, तस्य हि जन्माभावेऽपि विनाशो दृश्यते।

---

१ अस्मदुक्तैव स्यादिति द्राविडं पुस्तकम्।
२ विषयविरहिता वा इति पाठान्तरम्।
३ पुंस्त्वादिवच्चेत्यत्रेति पाठो युक्तः।

टी० "अत" इति, अतः निर्विषयज्ञानस्याप्रामाणिकात्तवच्छिन्न-ज्ञाननित्यत्वस्योक्तानुपपत्तिपराहतत्वात्प्रागभावग्राहकसमर्थनाच्चेत्यर्थः क-थमनुभूतिः सती स्वप्रागभावं साधयेत्? इत्थं, स्मर्तव्यास्मरणलिङ्गेन इयन्तं कालन्न किंचिदहमज्ञासिषमिति सुषुप्त्यवस्यापरामर्शेन ज्ञानसामान्याभावगो-चरेण तदन्तर्गतस्वाभावोऽपि स्वेन विषयीकृत इति स्वतःपक्षे प्रागभाव-सिद्धिरुक्ता। परतः पक्षेऽपि सिद्ध्यतीत्याह "अनुभूते"रिति,। अथ प्रागभावा-भावहेतुकानुत्पत्तिदूषणमुपसंहरति "तस्मादि"ति। अथानुवृत्त्या विकारान्त-रनिरसनं दूषयति "यदपीत्यादिना, अनुत्पत्तिहेतुरूपहेत्वसिद्ध्या विकारान्त-रनिरासोऽयमु[1]पपन्नः, तदभ्युपगमेऽपि हेतोर्व्यभिचारमाह "प्रागि"ति,तद्वि-वृणोति "तस्य ही"ति, भाव-शब्दोपादाने तद्विरहेऽपि व्यभिचारसाम्या-भिप्रायेण भावशब्दोपादानम् उपालभते

सू० भावेष्विति विशेषणे तर्ककुशलताऽविष्कृता भवति, तथा च भवदभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञा-नोदयादन्तवती चेति तस्यामनैकान्त्यं, तद्विकाराः सर्वे मि-थ्याभूता इति चेत्किं भवतः परमार्थभूतोऽप्यस्ति विकारः,? येनैतद्विशेषणमर्थवद्भवति, न ह्यसावभ्युपगम्यते, यदप्यनुभू-तिरजत्वात्स्वस्मिन्विभागं न सहत इति तदपि नोपपद्यते।

टी० "भावेष्वि"तीति, नात्र प्रतिज्ञान्तरं दूषणमुच्यते तद्धि उक्ति-दूषणं न स्वर्गदूषणं, भावरूपत्वे व्यभिचारं दर्शयति "तथा चे"ति, तथा-शब्देन भावरूपत्वं विवक्षितं तैर्भावरूपाज्ञानस्य समर्थितत्वात् तत्र परिहारं शङ्कते "तद्विकारा"इति, अस्य विशेषणस्य व्यावर्त्याभावाऽन्नैरर्थ-क्यमाह "किं भवत" इति, व्यावर्त्यमस्ति चेदद्वैतहानिः, न चेद्विशेषणा-वैयर्थ्यमित्यर्थः। किं विकारमात्राभावः साध्यते? उत परमार्थविकारा-भावः? प्रथमेऽनैकान्त्यं, द्वितीयेऽप्यनुभूतिः परमार्थविकाररहिता अजत्वा-

[1] विकारान्तरनिरासोऽनुपपन्न इति युक्तः पुनर्द्राविडपाठः।

दित्युक्तं स्यात्, यत्परमार्थविकारवत्तदुत्पन्नं यथा घट इति व्यतिरेकोदाहरणं वाच्यं यथा घटस्य परमार्थविकारवत्त्वानभ्युपगमाद् दृष्टान्तस्साध्याव्याप्तः इति हेतोर्व्याप्यत्वासिद्धिर्भवेदिति भावः। अथाजत्वान्नानात्वनिषेधं प्रतिवदति "यदपी"ति, अत्र किं भेदमात्रं दुदूषयिषितम्? उत विजातीयभेदः? उत सजातीयभेदः? उत स्वगतभेद? इति पक्षेषु हेत्वसिद्ध्या निरस्तेष्वपि हेतुत्वाभ्युपगमेन प्रथमं द्वितीयं शिरश्च दूषयंश्चार्वाकव्यतिरिक्तसर्ववादिसम्मतस्थले व्यभिचारं दर्शयति

**भू०** अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वादनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्, स विभागो मिथ्यारूप इति चेत् जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया? अविद्याया आत्मनः परमार्थतो विभागाभावे हि वस्तुतो ह्यविद्यैव स्यादात्मा अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव

टी० "अजस्यैवे"ति, मृषावाद्यभिमत एव स्थले हेतोरनैकान्त्यमाह "अविद्याया" इति, "तमःप्रकाशयोरिव विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सत्त्या"मिति हि तद्ग्रन्थः, तद्विभागस्य मिथ्यात्वमाशङ्क्य तदभ्युपगमेन परिहरति "स विभाग, इत्यादिना जन्मप्रतिबद्धः—उत्पत्तिव्याप्तः, घटादिषु परमार्थविभागस्यैवोत्पत्तिव्याप्यत्वाभ्युपगमे घटादिविभागस्य पारमार्थ्यप्रसङ्गात्तस्यापारमार्थ्ये विशेषणवैयर्थ्यादुक्तदोषः स्यादेवेत्यर्थः, हेतुदूषणस्य बुभुत्सायां दृष्टान्तस्य साध्यव्यावृत्तत्वमुखेन व्याप्यत्वासिद्धिरभिप्रेताऽनुसंधेया, यत्परमार्थविभागवत्तदुत्पन्नं यथा घट इति हि व्यतिरेकदृष्टान्तः, घटस्य परमार्थविभागवत्त्वानभ्युपगमात् साध्याव्यावृत्तत्वं हि स्पष्टम्। विभागस्य मिथ्यात्वे दूषणान्तरमाह "अविद्याया" इति।

अथ सजातीयभेदाभावं व्युदस्यति "अबाधिते"ति, पूर्वं प्रमाणप्रमेयानुपपत्तिमिथ्यात्वानुमाननिरासमुखेन दृश्यभेदः समर्थितः, तत्तुल्यन्यायतया दर्शनभेदोऽपि सिद्ध इत्यर्थः, अवच्छेदकगतो भेदः, न त्ववच्छेद्यगत इति घटकरकाकाशदृष्टान्तमाशङ्क्याह

मू० छेद्यभेदाच्छेदनभेदवत्, यदपि नास्या दृशेर्दृशिस्वरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति, दृश्यत्वादेव तेषां न दृशिधर्मत्वमिति च, तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकं, न च ते संवेदनमात्रम्

टी० "छेद्यभेदादि"ति, यथा संविर्त्सिद्धौ "प्रतिप्रमातृविषयं परस्परविलक्षणाः । अपरोक्षं प्रकाशन्ते सुखदुःखादिवद्धियः । संबन्धिव्यङ्ग्यभेदस्य संयोगेच्छादिकस्य तु । न हि भेदः स्वतो नास्ति नाप्रत्यक्ष[1]स्य संमतः" इति प्रतिप्रमातृ प्रतिविषयं ज्ञानभेदोऽपरोक्षः परज्ञानं परोक्षतया भासते स्वज्ञानमपरोक्षतया, घटादिविषयज्ञानानां परस्परविषयवैलक्षण्यं चापरोक्षं तस्मात्तद्भेदापलापः स्वानुभवप्रत्यक्षबाधित इति प्रथमग्रन्थार्थः, सर्वमेकं ज्ञानं ज्ञातृज्ञेयरू[2]पसंबन्धिव्यक्तिभेदाद्भेदेन प्रतीयत इत्यत्राह "संबन्धी"ति, संबन्धिव्यङ्ग्यभेदस्येति शङ्काबीजानुवादः ।

न च ज्ञातृज्ञेयरूपसंबन्धिव्यङ्ग्यभेदत्वमात्रेण ज्ञानस्य भेदः संबन्धिभेदकृत इत्यौपाधिकः स्यात् संयोगादेरपि संबन्धिव्यङ्ग्यत्वमात्रेण घटकरकावच्छिन्नाकाशवदेकत्वप्रसक्तेः, संबन्धी हि द्विधा सत्ताहेतुर्व्यक्तिहेतुश्चेति यस्य संयोगादेः संबन्धिव्यतिरेकेण स्वरूपे प्रमाणं नास्ति तस्य संबन्धि सत्ताहेतुः, यस्य तु शब्दाकाशादेरस्ति तस्य तदुपाधिको भेदाव-

१ नाप्रत्यक्षस्य संमत इति पुस्तकान्तरम् ।

२ ज्ञातृज्ञेयावच्छेदकसंबन्धभेदादिति द्राविडपाठः ।

भासो न स्वतः, तस्मात् ज्ञातृज्ञेयव्यतिरेकेणालब्धसद्भावस्य ज्ञानस्य स्वाभाविक एव भेदः, तस्मान्न सजातीयभेदापलाप इत्यर्थः, एतदभिप्रेत्यैव छेद्यभेदादित्युक्तम् । अथ स्वगतनित्यत्वैकत्वादिभेदनिरासार्थं पूर्वपक्षिणा अनुभूतिं पक्षीकृत्योक्तम् अनुभूतित्वादिति व्यतिरेकी दृश्यं पक्षीकृत्योक्तं दृश्यत्वादित्यन्वयि च दूषयति "यद्पीत्यादिना, अनैकान्तिकमित्यनियतं व्याप्तिशून्यमित्यर्थः । दृश्यत्वादित्यन्वयिनः पक्षत्रयवृत्तित्वलक्षणमनियतत्वं दृशित्वादिति व्यतिरेकिणः साध्यव्यावृत्तावपि साधनाव्यावृत्तिलक्षणमनियतत्वमात्रम् । अनुभूतिर्न दृश्यधर्मवती दृशित्वात् यद् दृश्यधर्मवत्तन्न दृशिर्यथा घट इति ह्यनुमानशरीरम्, अत्र दृश्यधर्मवत्त्वस्य अदृशित्वव्याप्तिरनुभूतौ भग्ना, तस्या दृशित्वनित्यत्वादिधर्मवत्त्वादिति भावः नित्यत्वादिमिथ्यात्वे नित्यत्वादिविपरीताका[1]रासत्यत्वं प्रसजेदिति तत्परिहाराय तेषां स्वरूपमात्रत्वमाशङ्क्य परिहरति "न चेत्यादिना, तेषां स्वरूपमात्रत्वं किमन्वयरूपाणा ? मुत व्यतिरेकरूपाणा ? मिति विकल्पमभिप्रेत्यान्वयमुखेन स्वरूपमात्रत्वं संभावितं शिरइति दूषितम्

न तु पराभ्युपगमात्, हेतुमाह ।

**सू० स्वरूपभेदात्, स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनं, स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता**

टी० "स्वरूपभेदादि"ति, स्वरूपाद्भेदस्तेषां परस्परभेदश्च विवक्षितः, अनेन पूर्वं विधाभेदे विवाददर्शनादित्युक्तं विवृतं, संवेदनत्वस्वयंप्रकाशत्वयोः स्वरूपभेदमाह स्वसत्तयेत्यादिवाक्यद्वयेन, प्रकाश्यतेऽनेनेति प्रकाशनं व्यवहारानुगुण्यापादकमित्यर्थः । उभयत्रानुगतप्रकाश–शब्दार्थमाह

**सू० प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यं,**

१ विपरीताकारानित्यत्वमिति पुस्तकान्तरम् ।

**सर्वकालवर्त्तमानत्वं हि नित्यत्वम् एकत्वमेकसंख्याऽवच्छेद इति**

टी० "प्रकाशश्चे"ति, चिदचिदशेषपदार्थास्तदा हि व्यवहारानुगुणा यदा तद्व्यवहारहेतुषु ज्ञानं सन्निधत्ते, तत्राचिदंशस्य स्वव्यवहारसामग्र्यन्तर्भूतज्ञानवत्त्वं व्यवहारानुगुण्यं वेद्यत्वे चिदंशस्याप्येवं, स्वप्रका[1]शकत्वे तु स्वव्यवहारसामग्र्यां ज्ञानान्तरानपेक्षाया स्वस्यान्तर्भावः, यद्वैवं चाहुः व्यवहारानुगुण्यं व्यवहारप्रतिसंबन्धित्वं प्रकाश इत्यर्थः, तच्च ज्ञप्तिज्ञात्रोः स्वतः, ज्ञेयस्य तु ज्ञानापाद्यम्, अतः पुरोवर्त्तिनो घटादेरपि तदेव प्रकाशः, न प्राकट्यं, तदतिरिक्ताभ्युपगमेऽपि न ज्ञानस्य स्वप्रकाशत्वविरोधः, तस्य तन्निरपेक्षसि[2]द्धतया साधारण्यं प्राकट्यस्य ज्ञानानुमापकत्वानभ्युपगमात् । यद्वा ज्ञानगतप्रकाशासाधारणं लक्षणमाह "चिदचिदि"ति, चिदचिदशेषपदार्थापेक्षया साधारणं ज्ञानगतं चिद्व्यवहारानुगुण्यं च प्रकाशः स्वपरव्यवहारानुगुण्यं प्रकाश इत्यर्थः । नन्वचितो विषयत्वमविगीतं, तच्च भासमानत्वमचितो व्यवहारानुगुण्यं हि ज्ञानगतं चेद् घटः प्रकाशत इति व्यवहारामुख्यत्वं स्यात् ज्ञानगतप्रकाशस्य तत्संबन्धिन्युपचरितत्वात् ।

न च ज्ञानसंबन्ध एव घटादेर्व्यवहानुगुण्यं, व्यवहारानुगुण्यापादनस्वभाव इति ज्ञानलक्षणकथनायोगात्, संबन्धस्य द्विनिष्ठतयापुरोवर्तिनोघटादेरपि तद्धेतुत्वेन संबन्धरूपव्यवहारानुगुण्यापादकत्वं हि ज्ञानज्ञेयसाधारणं स्यात्, उच्यते व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणं तद्धि व्यवहारप्रतिसंबन्धित्वं तदेव भासमानत्वं, घटः प्रकाशत इति व्यवहारश्च तन्निबन्धनतया मुख्यः, व्यवहारप्रतिसंबन्धित्वं प्रतिहेतुत्वरूपं व्यवहारानुगुण्यं ज्ञानस्यैव, तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यवहारप्रतिसंबन्धितां प्रतिहेतुत्त्वरूपं व्यवहारानुगुण्यं ज्ञातृस्वरूपभूतज्ञानस्यैव स्वस्वरूपस्वगतैकत्वपरात्त्वानुकूलत्वाद्याकारस्वाश्रयतत्संबन्ध-

---

१ स्वप्रकाशत्वे तु इति पाठान्तरं तु युक्तम् ।
२ तन्निरपेक्षसिद्धितया इति पाठान्तरम् ।

स्वविषयतत्संबन्धानां व्यवहारप्रतिसंबन्धित्वे हेतुत्वस्वरूपं व्यवहारानुगुण्यं तु धर्मभूतज्ञानस्यैव, अतः स्वपरव्यवहारानुगुण्यं ज्ञानासाधारणं ज्ञानासाधारणप्रकाशलक्षणमिति युक्तम् । अथ नित्यत्वमाह "सर्वे"ति, यद्यपि कालानवच्छिन्नत्वमनुगतं नित्यत्वलक्षणं प्रागुक्तं सदकारणकत्वं च नित्यत्वं प्रसिद्धं, तथाऽपि संविदः कालव्यतिरिक्तत्वात्कालव्यतिरिक्तार्थनित्यत्वं कृत्स्नकालसंबन्धव्याप्तमिति तेनापि सविशेषत्वापादनाय कालव्यतिरिक्तार्थनित्यत्वलक्षणमेवोक्तम् । धर्माणामभावरूपत्वेऽप्यनैकान्त्यमाह

सू० तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि तैश्चैतन्यधर्मभूतैरप्यनैकान्त्यमपरिहार्य्यं, संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत् तन्निषेधोक्त्या किमपि नोक्तं भवेत् ।

टी० "तेषामि"ति, अभावरूपाणामपि स्वरूपानतिरिक्तत्वे दूषणमाह "संविदी"ति, तु-शब्देन प्रागुक्तशौक्ल्यादिदृष्टान्तवैषम्यमिहाभिप्रेतं, तस्य कस्यचिद्धर्मत्वेन स्वपरनिर्वाहकत्वात्स्वरूपे प्रतिपन्ने भ्रमविरोधित्वाच्च स्वरूपमेव व्यावृत्तिः, ब्रह्मणस्तु कस्यचिद्धर्मत्वेनानभ्युपगमात् स्वरूपे प्रतिपन्नेऽपि भ्रमसहत्वाच्च पुरोऽवस्थितशुक्लभास्वरशकलस्येव न स्वरूपमेव व्यावृत्तिरिति संविदस्तीति शब्दो नित्यस्वयंप्रकाशादिशब्दाश्च किमधिकार्थाः ? उतानधिकार्थाः ? अधिकार्थत्वे सविशेषत्वम्, अन्यथा पदान्तरवैयर्थ्यं, स्वरूपमात्रस्याविगीतत्वात् नित्यत्वादिसाधकैः किं संविन्मात्रं साध्यते ? उत तदतिरिक्तं किंचित् ? प्रथमे सिद्धसाध्यता द्वितीये सविशेषत्वमित्येवं समानाधिकरणपदप्रयोगानुपपत्तिर्नित्यत्वादिसाधकहेतूनां सिद्धसाधनत्वं चाभिप्रेतं, यथा संवित्सिद्धौ "न वेद्यं वित्तिधर्मःस्यादिति यत्प्रागुदीरितं तेनापि साधितं किंचित्संविदोऽस्ति न वा त्वया । अस्ति चेत्पक्षपातः स्यान्न चेत्ते विफलः श्रमः" इति नित्यत्वादिधर्माणां परस्परभेदानभ्यु-

पगमे एकेनैव धर्मेण साधितेनालं, न तु धर्मान्तरं साध्यं तस्य पूर्वप्रसाधित-धर्मानतिरिक्तत्वात्, न हि नित्यत्वे प्रसाधिते कालापरिच्छेदः पुनरपि साध्योऽवतिष्ठते एवं नित्यत्वादीनां स्वरूपाद्भेदः परस्परभेदश्च सिद्धः परेण संविदो निर्भेदत्वापादानमुखेन तस्या आत्मत्वं साधितम् अत्र निर्भेद-त्वनिराकरणमुखेन संविदात्मत्वं निराकर्तुमारभते

सू॰ अपि च संवित्सिद्ध्यति न वा, सिद्ध्यति चेत्सधर्मता स्यान्नो चेत्तुच्छता, गगनकुसुमादिवत्, सिद्धिरेव संविदिति चे-त्कस्य कं प्रतीति, वक्तव्यं, यदि न कस्यचित्किंचित्प्रति सा, तर्हि न सिद्धिः, सिद्धिर्हि पुत्रत्वमिव कस्यचित्किंचि-त्प्रति भवति, आत्मन इति चेत्कोऽयमात्मा? ।

टी॰ "अपि चेत्यादिना, तत्र सविशेषत्वमापादयितुं विकल्पयति "संवित्सिध्यति वा न वे"ति किं, प्रतीता? उताप्रतीतेत्यर्थः । प्रथमं शिरो दूष-यति "सिध्यति चेदि"ति, सर्वप्रमाणानां स विशेषविषयत्वस्य पूर्वमुपपादि-तत्वादिति भावः । यद्वा सिध्यद्वस्तु सिद्धेराश्रयतया सविशेषं स्यात्, सिद्धिः प्रकाशः, व्यवहारानुगुण्यरूपधर्मयोगी स्यादित्यर्थः । शिरोद्वयापादितदोषप-रिहाराय परोक्तं शङ्कते "सिद्धिरेवे"ति, सिद्धेः सिध्यन्तरानपेक्षत्वात् प्रमि-तिविषयत्वप्रयुक्तं सिद्धिसंबन्धरूपं सविशेषत्वं न स्यात्, अथाऽपि तुच्छत्वं च न भवेत्, न हि शशशृङ्गं सिद्धिरूपमिति भावः, तत्रापि सविशेषत्वमाह "कस्ये"ति, प्रतीतिश्चेत्कस्यचिदाश्रयस्य किंचिद्विषयं प्रति भवति तदुभयं वक्तव्यमित्यर्थः । विपक्षे बाधकमाह "यदी"ति, तद्विवृणोति "सिद्धिर्ही"ति, पितुः स्थाने विषयः पुत्रस्थाने आश्रयः, पुत्रत्वस्थाने सिद्धिः, पुत्रत्वस्य हि पुत्र आश्रयः कस्यचिदित्युक्तं तत्रापेक्षाप्रतिक्षेपं शङ्कते "आत्मन इति चेदि"ति, आत्मानं प्रतीत्यर्थः, आत्मशब्दः स्ववाची अनेन प्रत्यक्त्वं फलितं, सिद्धि-प्रतिसंबन्धी स्वात्मा हि प्रत्यक् स्वस्मै भासमानत्वं प्रत्यक्त्वमिति हि वक्ष्यते तच्च संविदोऽनुपपन्नमित्यभिप्रायेणाह "कोऽयमात्मे"ति, अयं-शब्दः

सिद्धिप्रतिसंबन्धित्वपरः सिद्धिप्रतिसंबन्ध्यात्मकः, किंशब्दः क्षेपे संविन्न सिद्धिप्रतिसंबन्ध्यात्मा संविदः प्रत्यक्त्वमनुपपन्नमित्यर्थः, संविदात्मभावस्योपपादितत्वान्नानुपपन्नमिति चोदयति

सू० ननु संविदेवेत्युक्तं, सत्यमुक्तं, दुरुक्तं तु तत्, तथा हि कस्यचित्पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपतया तत्संबन्धिनी सा संवित्स्वयं कथमिवात्मभावमनुभवेत्, एतदुक्तं भवति, अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावः, ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः, घटमहं जानामीममर्थमवगच्छामि पटमहं संवेद्मि इति सर्वेषामात्मसाक्षिकः प्रसिद्धः ।

टी० "नन्वि"ति, परिहरति "सत्य"मिति, संविदात्मत्वस्य दुरुक्तत्वं संविदात्मत्वनिराकरणमुखेनोपपादयितुमारभते "तथा ही"ति, कर्मनिर्देशो दृष्टान्तत्वेन । "अर्थजात"मिति, धर्मधर्मिरूपपुञ्ज एव प्रमितिविषय इति भावः सिद्धिरूपा—प्रकाशरूपा, अत एव तदुभयसंबन्धिनी "कथ"मिति, आत्मधर्मभूता संवित् स्वयं कथमात्मेत्यर्थः सिद्धि—शब्द उत्पत्तिज्ञप्तिसाधारणः । अत्रहमर्थः प्रकाशश्चेदिह विवक्षितः स कः तस्य कर्मकर्तृसंबन्धित्वे किं प्रमाणं? वृत्तिज्ञानं हि सकर्मकर्तृकं, संवित्तु केवला । इह कर्मनिर्देशे किं फल?मिति शङ्कायामाह "एतदुक्तं भवती"ति, अनुभूतिरित्यनेन ज्ञप्तिपरत्वमुक्तं, स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभाव इत्यनेन तत्स्वरूपमुक्तम् । एवं सिद्धि—शब्दार्थ उक्तः, ज्ञानावगतिसंविदाद्यपरनामेत्यनेन ज्ञानसंविच्छब्दयोः पर्यायतया वृत्तिज्ञानसंविदोर्विभागस्य निष्प्रमाणकत्वं फलितं, घटमहं जानामीत्यादिना आत्मसाक्षिकः प्रसिद्ध इत्यन्तेन कर्मकर्तृसंबन्धस्य स्वानुभवसिद्धत्वमुक्तं ज्ञानसंविदोः पर्यायत्वमुपपादितं च कर्मकर्तृसंबन्धे पराभ्युपगतिमाह

सू० एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताऽभ्युपपादिता अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मभाववत् कर्तृत्वमपि दुर्घटमिति, तथा ह्यस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिव उत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते कर्तृस्थैर्यं तावत् स एवायमर्थः पूर्वं मयाऽनुभूत इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम् अहं जानाम्यहमज्ञासिषं, ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम्

टी० "एतत्स्वभावतये"ति, आत्मनः स्वयंप्रकाशत्वं साधयता कर्मकर्तृसंबन्धिज्ञानस्य स्वयंप्रकाशत्वं साधितमिति सकर्मकं ज्ञानं जडरूपमात्मभूतज्ञानादन्यद् वृत्तिरूपमित्यभ्युपगमो ऽनुपपन्न इति भावः, तस्येत्यादिना कर्मनिर्देशस्य फलं दर्शितम् ।

ननु न वयं संविदःकर्तृत्वमिच्छाम इति कथमयं प्रसङ्गः? उच्यते संविद आत्मत्वं वदता प्रत्यक्त्वमभ्युपेतव्यं प्रत्यक्त्वं च ज्ञानाश्रयस्यैव इति संविदोज्ञातृत्वमवर्जनीमवर्जनीयं, तच्च दुर्घटमित्यर्थः । कर्तृत्वमाश्रयत्वं धात्वर्थाश्रयो हि कर्ता,एवं धर्मधर्मिभावेन प्रतीत्या संविदात्मत्वन्निराकृतम् । अथ स्थिरत्वास्थिरत्ववैधर्म्येण तद्दूदस्यते "तथे"ति, हिर्हेतौ, तथा–शब्देन चार्थेन हेत्वन्तरत्वं सूच्यते । कर्तृस्थैर्यमुपपादयति "कर्तृस्थैर्यं तावदि"ति, प्रत्यभिज्ञायमानत्वाद्धि घटादिस्थैर्यसिद्धिः, तद्वत् तत्र घटप्रत्यभिज्ञाकाले पूर्वं मयाऽभूत इति कर्तुरपि प्रत्यभिज्ञाविषयत्वात् स्थैर्यसिद्धिरित्यर्थः । अथ ज्ञानस्योत्पत्तिस्थितिनिरोधान् दर्शयति अहमित्यादिना, जानामीत्यनेनोत्पत्तिस्थिती सिद्धे, अज्ञासिषमित्यतीतत्वप्रतीतिः, एतद्धि शब्दायानन्तरपूर्वकालसंजातज्ञानविशिष्टत्वपरामर्शद्योतनार्थं ज्ञातुरेव ममेत्युक्तिः, उत्पत्त्या-

दय इत्यादि-शब्देन स्थितिनिरोधग्रहणं, संविद उत्पत्तिर्नाम त्रिचतुरक्षणस्थायिन्यास्तस्याः प्रथमक्षणयोगः क्षणान्तरसंबन्धः स्थितिः, संविदः स्वप्रकाशत्वात्ते प्रत्यक्षे घटसंविदो निरोधो नाम पटसंवित्सा च प्रत्यक्षा इति हेतौ स्थिरत्वास्थिरत्ववैधर्म्येण न तदैक्यमित्यर्थः, एवं प्रत्यभिज्ञाविषयत्वेनात्मनः स्थैर्यमुक्तम् । अथ प्रत्यभिज्ञाश्रयत्वेन स्थैर्यमुच्यते

भू० एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टं परेद्यु[1]रिदमहमदर्शमिति प्रत्यभिज्ञा च न घटते अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसंभवः, किंचानुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वे ऽपि

टी० "एवमि"ति, पूर्वत्र प्रत्यभिज्ञाप्रत्यक्षसिद्धमित्युक्तम् अत्र प्रत्यभिज्ञा न घटत इत्युक्तम्, अयमभिप्रायः प्रत्यभिज्ञाविषये ज्वालादौ यत्र क्वचिदन्यथासिद्धिः संभवेत् तत्र न स्थैर्यसिद्धिः । अत्र प्रत्यभिज्ञाविषयत्वान्यथासिद्धावपि प्रत्यभिज्ञाश्रयत्वस्य चानन्यथासिद्धत्वात् भ्रान्तिरूपप्रत्यभिज्ञायामपि तदाश्रयस्य स्थैर्यमनन्यथासिद्धमिति प्रत्यभिज्ञाश्रयत्वप्रयुक्तं स्थैर्यं दुष्प्रकल्पमिति प्रत्यभिज्ञाश्रयतया स्थैर्यं विवृणोति "अन्येने"ति, एवं स्थिरस्य ज्ञातुर्धर्मत्वेनास्थिरत्वेन च प्रतीतत्वादस्थिरत्वनिबन्धनात्प्रतिसंधानासंभवाच्च संविदात्मत्वन्निरस्तम् । अथ स्थिरत्वाभ्युपगमेऽपि प्रतिसंधानासंभवादात्मत्वं व्युदस्यति "किं चे"ति, "अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वे ऽपी"ति आत्मत्वाभ्युपगमौपयिकतया संविदो नित्यत्वाभ्युपगमेऽपीत्यर्थः । न केवलमनित्यत्वपक्ष एव संविद आत्मत्वानुपपत्तिः नित्यत्वेऽपीत्यपि-शब्दार्थः आत्मा हि प्रतिसंधत्ते प्रतिसंधानमत्र न संभवतीत्यर्थः । तदसंभवमुपपादयति

[1] अपरेद्युरिति द्राविडपाठः ।

मू० प्रतिसंधाना[१]संभवस्तदवस्थः, प्रतिसंधानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति नानुभूतिमात्रम्, अहमेवेदं पूर्वमप्यन्वभूवमिति, भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम्, अनुभूतिरनुभूतिमात्रमेव, संविन्नामा काचिन्निराश्रया निर्विषया वाऽत्यन्तानुपलब्धेर्न संभवतीत्युक्तम् ।

टी० "प्रतिसंधान"मिति, तदुदाहरति "अहमि"ति, ततः किमिति शङ्कायां तस्य परानिष्टत्वमाह "भवत" इति, न केवलं भवदनभ्युपगमः, अनुभूतेरनुभवितृत्वं गमनक्रियाया गन्तृत्ववदनुपपन्नं चेत्यभिप्रायेणाह "अनुभूति"रिति, मात्रचाऽनुभवितृत्वव्यावृत्तिः ।

ननु धर्मत्वास्थिरत्वाप्रतिसंधातृत्वैः संविदो नात्मत्वं यदुक्तं तन्न वक्तव्यम्, अनुभवितृत्वस्यात्माऽऽकारत्वेनानभ्युपगमात् विषयाश्रयशून्यायाः संविदो गुणभावाभावात्तदुभयसंबन्धप्रयुक्तानित्यत्वप्रसङ्गाभावाच्चेत्यत्राह "संविन्नामे"ति,

ननु कथं विषयाश्रयशून्यज्ञानाभावः? स्वरूपभूतं ज्ञानं विषयाश्रयशून्यं त्वन्मते, उच्यते स्थविष्ठमिदं चोद्यं, किं त्वया ज्ञातुरेव ज्ञानशब्दवाच्यस्याजडत्वनित्यत्वादिकं विषयाश्रयशून्यत्वमात्मत्वं च साध्यते? तत्सिद्धसाधनं, यदि ज्ञातृव्यतिरिक्तस्य ज्ञानस्य,? तर्हि ज्ञातृव्यतिरिक्तं विषयाश्रयविरहितं ज्ञानं शून्यमिति ब्रूमः, ज्ञातृज्ञेयतदवच्छिन्नज्ञानस्वरूपत्रिकातिरिक्तं ज्ञानमनुपलम्भनिरस्तमित्यर्थः । बौद्धैकदेशिभि"र्द्धर्मिकल्पनातो वरं धर्मकल्पने"ति लाघवन्यायात् ज्ञात्रात्मवादिना ज्ञानात्मवादिना च संप्रतिपन्ना संविदेवात्मेत्युक्तं, तदाशङ्क्य परिहरति—

मू० उभयाभ्युपगता संविदेवात्मेत्युपलब्धिपराहतम् अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः ।

ननु चाहं जानामीत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थःस आत्मा ।

१ प्रतिसंधानाभावस्तदवस्थ इति द्राविडपाठः ।

टी० "उभये"ति, कल्पनायामेव लाघवन्यायः, न तूपलब्धौ, अन्यथा अत्यन्तलाघवार्थं माध्यमिकमतानुसारेण ज्ञानं च त्यज्येत, कल्पने तु लाघवन्यायः, संवित्तूपलभ्यत इति चेत् ज्ञाताऽपि तथोपलभ्यते अत उपलब्धिपराहतत्वात्संविदात्मत्वमनुपपन्नमित्यर्थः । साश्रयैव संविदुपलभ्यते तथाऽपि युक्तिभिर्निर्विशेषत्वं साधितमित्यत्राह "अनुभूतिमात्र" मिति । यद्वा संविदः परमार्थत्वेनोभयवादिसंमतत्वात्सै[1]वात्मेति युक्तमित्याशङ्क्य दूषयति "उभये"ति, उपलब्धिपराहतं—प्रत्यक्त्वलक्षणस्यात्मत्वस्याहं जानामीति ज्ञातृत्वसामानाधिकरण्येनोपलब्ध्या पराहतमित्यर्थः, ज्ञातुरेव प्रत्यगात्मत्वमुपलब्धिसिद्धमित्युक्तं, तस्या उपलब्धेर्निर्विशेषसंविदात्मात्वसाधकयुक्तिभिर्बाधितत्वमाशङ्क्याह "अनुभूतिमात्र"मिति, प्रत्यगर्थो ह्यात्मा प्रत्यक्त्वं चाहमर्थात्मत्वे तु न सिध्यति संविदात्मत्वपक्ष एव सेत्स्यतीति चोदयति—

"ननु चे"ति, अहं जानामीत्यस्मत्प्रत्ययेऽस्मत्प्रत्ययत्वेन पराभ्युपगते यश्चित्पदार्थः स आत्मा । कुत इत्यत्राह "अनिदमंश" इति, इदमंशव्यतिरिक्तः परागर्थव्यतिरिक्तः प्रत्यगर्थ इत्यर्थः, हेतुगर्भमिदं प्रत्यगर्थत्वादित्यर्थः प्रत्यक्त्वं च कुत इत्यत्राह "प्रकाशैकरस" इति, स्वयंप्रकाशत्वादित्यर्थः। हेत्वभिप्रायश्चिच्छब्दः, ज्ञानत्वात्स्वयंप्रकाशत्वमित्यर्थः प्रत्यक्त्वं स्वस्मै प्रकाशमानत्वं, स्वयं प्रकाशत्वमनन्याधीनप्रकाशत्वम् । अहमर्थस्तु युष्मदर्थलक्षणः, युष्मदर्थलक्षणत्वात्परागर्थविशेषोऽहमर्थ इत्यर्थः। युष्मदर्थलक्षणत्वं कुत इत्यत्राह—

**भू० तस्मिंस्तद्बलनिर्भासिततया युष्मदर्थलक्षणोऽहं जानामीति सिद्ध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव, नैतदेवम् ।**

टी० "तद्बले"ति, तद्बलनिर्भासितत्वात्—ज्ञानाधीनप्रकाशत्वात्तच्च चिन्मात्रातिरेकित्वादित्यर्थः, अस्मिंश्चोद्यग्रन्थे संविदात्मत्वे व्यतिरेकित्रयम्, अहमर्थानात्मत्वे ऽन्वयित्रयं चाभिप्रेतं, तत्र व्यतिरेकिणां व्यतिरे-

---

१ सैवात्मेत्युक्तमिति द्राविडपाठः ।

कि दृष्टान्तोऽन्वयिनां सपक्षश्च युष्मदर्थ-शब्देन सूचितः, अनुभूतिरात्मा प्रत्यक्त्वात् यदनात्मा तन्न प्रत्यक्, यथा घटः । अनुभूतिः प्रत्यग्भूता स्वयंप्रकाशत्वात् यन्न प्रत्यक् तन्न स्वयंप्रकाशं, यथाघटः, अनुभूतिः स्वयंप्रकाशा अनुभूतित्वात् यन्न स्वतःसिद्धिर्न तदनुभूतिर्यथा घट इति व्यतिरेकित्रयम्, अहमर्थो ज्ञानाधीनप्रकाशः चिद्व्यतिरिक्तत्वात् घटवत्, अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात् घटवत्, अहमर्थो नात्मा पराक्त्वाद्घटवदित्यन्वयित्रयं, स्वयंप्रकाशत्वमेव संविदात्मत्वे साक्षाद्धेतुतया पूर्वमुक्तं पूर्वपक्षोपन्यासे, अत्र तु तेन प्रत्यक्त्वं साधयित्वा तेनात्मत्व साधितम् । एतत्परिहरति "नैतदेवमि"ति, संवित्स्वयंप्रकाशत्वमिष्टं शिक्षणीयांशश्चोक्तः, अतः स्वतः सिद्धत्वसाधकहेतोः सिद्धसाध्यता ज्ञातुरस्वतःसिद्धत्वसाधकहेतोश्चिदन्यत्वस्यासिद्धिर्वक्ष्यते इतरानुमानचतुष्टयमिह निरस्यते । संविदात्मत्वादि किं प्रतीत्याऽभ्युपगतम् ? उत प्रत्यक्त्वसिद्ध्यनुपपत्त्या ? उत अत्यर्थापत्त्या ? उत श्रुतिस्मृतिसूत्रस्वारस्या ? दिति विकल्पमभिप्रेत्य प्रथमपक्षे प्रत्यक्षप्रतीतिविरोधमाह–

सू० अहं जानामीति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव किंच

अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।
अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते ॥

टी० "अहं जानामी"ति, एतेन परोक्तानां ज्ञानप्रत्यक्त्वात्मत्वज्ञातृत्वपराक्त्वाऽनात्मत्वसाधकानामन्वयिव्यतिरेक्यनुमानानां कालात्ययापदेश उक्तः, अहं जानामीत्यत्राहमर्थः स्वावभासेऽपि घटावभावभास इव प्रतिसंबन्धितया ऽहमिति प्रतीयते धर्मितया ऽवभासादेव न ज्ञानशेषतावभासः, अतः स प्रत्यक् आत्मा च, ज्ञानं च धर्मतया प्रतीयमानं सुखादिवत्यस्मै भासत इति न प्रत्यक्, नाप्यात्मा, अपि तु परागनात्मा च, अतश्चतुर्णां हेतूनां प्रत्यक्षबाध उक्तो भवति । अथ प्रत्यक्त्वं विपरीतसाधकं चेत्याह "किं चे"ति, स्वस्मै प्रकाशमानत्वरूपं प्रत्यक्त्वं, परस्मै प्रकाशमानत्वं परा-

कृत्वं चाहमिदंबुद्धिभ्यां हि विभज्यते तस्मादहंबुद्धिविगमे प्रत्यक्त्वमेव न सेत्स्यतीति प्रत्यक्त्वमेवाहमर्थस्यैवात्मत्वसाधकमित्यर्थः, संविदि प्रत्यक्त्वा-भावादात्मत्वसाधकहेतोरसिद्धिश्च फलिता, अहमर्थस्य पराक्त्वाभावाद-नात्मत्वसाधकहेतोरसिद्धिश्च सिद्धा, अहंबुद्ध्येत्यनेन "युष्मदस्मत्प्रत्ययगो-चरयो"रिति स्वोक्तिविरोधश्च, "कोऽहमित्येव निपुणः शब्दोऽहमिति दोषा-यनात्मन्येव" इत्याद्यागमविरोधश्च गर्भितः, हि-शब्दस्य प्रसिद्धिपरत्वाद्धेतौ वा, अनुभूतिः पराची अहमर्थव्यतिरिक्तत्वात् घटवदिति प्रत्यक्त्वहेतोरसिद्धि-दार्ढ्यं, तत्प्रत्यक्त्वसाधकस्य स्वप्रकाशत्वहेतोश्च सत्प्रतिपक्षत्वं च, अनुभूतिर-नात्मा अहमर्थव्यतिरिक्तत्वात् घटवदिति संविदात्मत्वसाधकस्य प्रत्यक्त्व-हेतोश्च सत्प्रतिपक्षत्वं चाभिप्रेतमित्यवगम्यते अहंबुद्ध्या परागर्थात्प्रत्यगर्थस्य भेदसमर्थनात्, हि-शब्दाच्च संवित्प्रत्यक्त्वहेतोरसिद्धिश्च साधिता। श्रुत्यर्थापत्तिं वक्तुं मुमुक्षोरभिसंधिमाह-

मू० निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्। भवेय-मिति मोक्षार्थी श्रवणादौ प्रवर्त्तते॥ अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति। अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः॥ मयि नष्टेऽपि मत्तोऽन्या काचिद् ज्ञप्तिरवस्थिता। इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥ स्वसंबन्धितया ह्यस्याः सत्ताविज्ञप्तितादि च।

टी० "निरस्ते"ति, ततः किमित्यत्राह "अहमर्थविनाश" इति, य-त्संबन्धित्वेन दुःखज्ञानं यत्संबन्धिनी दुःखनिर्वृत्तिर्यत् संबन्धिनी सुखप्राप्ति-श्चेष्यते तद्विनाशो मोक्षश्चेदधिकारिविरहादप्रामाण्यं भवेत्, प्रमितिजन-कत्वं हि शास्त्रस्य प्रामाण्यं, बुभुत्सितयाह्यस्य शास्त्रस्य पुरुषार्थपर्यवसायि-त्वाभावे श्रवणमननाद्यधिकारी न सिध्येत्, न हि शास्त्रं श्रवणादिनिरपेक्षं कस्यचित्प्रमितिं जनयति, अतोऽधिकारिविरहात्प्रामाण्यं न भवेदिति शा-स्त्रप्रामाण्यान्यथानुपपत्तिरूपश्रुत्यर्थापत्तिरुक्ता। अहमर्थे नष्टेऽपि ज्ञप्ति-र्नित्या तिष्ठतीत्यत्राह "मयि नष्टेऽपी"ति, न हि मयि नष्टेऽपि स्तम्भस्ति




ष्ठतीति स्वशिरश्छेदः पुरुषार्थः स्यादिति भावः, न हि केवलसंविदः श्रवणादौ प्रवृत्तिः, अपि त्वहमर्थस्यैव, अतः प्रवर्तमानोऽयं स्वनाशाय न प्रवर्त्तते अहमर्थविगमे ज्ञप्त्यवस्थानमभ्युपगम्य दूषणमुक्तम् । अथ तदवस्थानमेव नास्तीत्याह 'स्वसंबन्धितये''ति, सामान्याकारः सत्ता, विज्ञप्तिता विषयप्रकाशत्वरूपविशेषाकारः आदि-शब्देन स्वयंप्रकाशत्वं विवक्षितं. सत्ताया आश्रयसंबन्धाधीनत्वात्स्वरूपलाभे सति ज्ञप्तित्वादिसंभवाच्च सर्वं तदधीनमित्यर्थः, अतो यत्संबन्धायत्ता सत्ता तत्संबन्धवियोगे ज्ञप्तिसत्तैव नेत्याह–

सू० स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति॥ छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ॥ अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् । "विज्ञातारमरे केन[1] विजानीयादिति श्रुतिः" "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः" ॥ नात्मा श्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति। ज्ञोऽत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम्" ।

टी० "स्वसंबन्धे"ति, घटकाकाशदृष्टान्तव्यावृत्त्यर्थं विषयाश्रयसंबन्धस्य सत्ता हेतुत्वे दृष्टान्तमाह 'छेत्तुरि''ति, छेदनादेरित्यादि-शब्देन सत्ता तत्फलं द्वैधीभाव इत्यादि विवक्षितम् । एवं प्रत्यक्षविरोधादसिद्धत्वाद्विपरीतसाधकत्वात्सत्प्रतिपक्षत्वाच्च संविदात्मत्वानुपपत्तेः श्रुत्यर्थापत्त्या चाहमर्थात्मत्वमाह "अत''इति, पूर्वोक्तहेतूनामियं प्रतिज्ञा, श्रुतिस्मृतिसूत्राणि दर्शयति "विज्ञातारमि''ति, ज्ञातव्यस्यात्मनो ज्ञातृत्वमुक्तं विज्ञातारमरे केन विजानीयादिति, ज्ञातृत्वस्य स्वाभाविकतया मुक्तावपि ज्ञातृत्वमस्तीति दर्शयति "जानात्येवे''ति, "ज्ञोऽत एवे''त्यत्र ज्ञशब्दनिर्दिष्ट आत्मेति ज्ञापनार्थं "नात्मा श्रुतेरि''ति सूत्रमुपात्तं, त्वया अनित्यतया अभ्युपेतस्याहमर्थस्य नित्यत्वकथनमपि तस्यैवात्मत्वसाधकमिति च ज्ञापनार्थम्. अतो नात्मेति संविदात्मत्वप्रतिक्षेपनिगमनात् पूर्वोक्ताहमर्थात्मत्वप्रतिज्ञायां

१ विज्ञातारमरे केन जानात्येवेति च श्रुतिः इति द्राविडपाठः ।

संविदात्मत्वप्रतिक्षेपे च यथायथमुक्तहेतवो ऽनुसंधेयाः। दूषणान्तरं व्याहतिरप्यस्तीत्याह–

**मू० अहंप्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः, तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थं च, न चासौ ज्ञाताऽहमर्थो ऽन्याधीनप्रकाशः, स्वयंप्रकाशत्वात्, चैतन्यस्वभावता हि स्वयंप्रकाशता,**

टी० "अहंप्रत्यये"त्यादिना, अहंप्रत्ययसिद्ध इति, सिद्ध-शब्देन स्वतःसिद्धिः सूचिता, अत एव ह्यन्यत्र युष्मत्प्रत्ययविषय इत्युक्तम्। अहंप्रत्ययसिद्धो हीति हि-शब्देनास्मदर्थयुष्मदर्थशब्दतश्च युष्मदस्मत्प्रत्ययगोचरयोरिति तद्भन्यप्रसिद्धिं दर्शयति, ज्ञानमेव स्वयंप्रकाशं तद्व्यतिरिक्तत्वादहमर्थो ऽन्याधीनप्रकाशः, अतो नात्मेति शङ्कायां हेतोरसिद्धिमभिप्रयन्नहमर्थस्य प्रकाशान्तरनैरपेक्ष्यं प्रतिजानीते"न चासा"विति, कुत इत्यत्राह"स्वयंप्रकाशत्वा"दिति, प्रकाशो–व्यवहारानुगुण्यं,स्वत एव व्यवहारानुगुण्यशक्तियुक्तत्वादहमर्थः प्रकाशान्तरनिरपेक्ष इत्यर्थः, तच्च कथमित्यत्राह 'चैतन्यस्वभावता हि स्वयंप्रकाशते' ति, चेतना ज्ञानं तद्भावश्चैतन्यं ज्ञानत्वं तत्स्वभावत्वं ज्ञानत्वगुणकतेत्यर्थः, ज्ञानत्वमेव हि ज्ञानस्य स्वयंप्रकाशत्वं, तद्वदत्रापि ज्ञानत्वं प्रामाणिकं चेत्तदेव स्वयंप्रकाशत्वं भवतीत्युक्तं भवति,। अहमर्थस्य चैतन्यस्वभावत्व श्रुतिं प्रमाणं वक्ष्यंस्तदनुग्राहकतर्कमुपन्यस्यति "यः प्रकाशस्वभाव" इत्यादिना आत्मदीपधर्मभूतज्ञानप्रभयोः साक्षाद्वा प्रणाल्या वा यादृशस्वव्यवहारानुगुण्यं तादृशं व्यवहारानुगुण्यमिह प्रकाश- शब्देन विवक्षितं, दीपस्य तमोविरोधरूपमौज्ज्वल्यं प्रकाशः, ज्ञानस्य तु स्फुरणं यस्तत्स्वभावस्तद्धर्मकः स्वव्यवहारानुगुण्यापादानशक्तियुक्तस्सोऽनन्याधीनप्रकाशः स्वधर्मनिरपेक्षप्रकाश इत्यर्थः।

**मू० यः प्रकाशस्वभावस्सोऽनन्याधीनप्रकाशः दीपवत्, न हि**

दीपादेः स्वप्र[1]काशबलनिर्भासित्वेनाप्रकाशितत्वमन्याधीनप्रकाशत्वं च, किं तर्हि दीपः प्रकाशस्वभावः स्वयमेव प्रकाशते अन्यानपि प्रकाशयति प्रभया ॥

टी० प्रकाशस्वभावत्वासिद्धिर्न शङ्कनीया यथा प्रभाश्रयस्य दीपस्यौज्ज्वल्यं प्रत्यक्षसिद्धं तथा ज्ञातुरपि स्वत एव स्वव्यवहारानुगुण्यस्य वक्ष्यमाणश्रुतिस्वारस्यावगतत्वात् प्रकाशस्वभावस्य स्वधर्मभूतप्रकाशानपेक्षप्रकाशत्वमुपपन्नमित्येतावदेव ह्युच्यते ऽनेन ग्रन्थेन । अथ चक्षुर्ग्राह्यत्वे सति प्रभाव्यतिरिक्तत्वाद्दीपो घटादिवत्प्रभाबलनिर्भास्य इति दृष्टान्तस्य साध्यवैकल्यमाशङ्क्याह "न ही"ति,

न च चक्षुर्ग्राह्यत्वे सति प्रभान्यत्वाद् घटादिरिव दीपः प्रभाऽवभास्यः, अन्धकारे व्यभिचारात्, अतो न दीपस्य प्रभापेक्षेत्यभिप्रायः, अप्रकाशत्वमन्याधीनप्रकाशत्वं चेति स्वयमौज्ज्वल्यधर्मकत्वाभावस्तत्कृतप्रकाशान्तरसापेक्षत्वं च नास्तीत्यर्थः । अर्थासि[2]द्धिं वक्तुमाकाङ्क्षां दर्शयति "किं तर्ही"ति, उत्तरमाह "दीप" इति, दीपो न केवलं स्वात्मानमेव प्रकाशयति, अपि तु स्वपरिकरेणान्यानपि प्रकाशयतीत्यतिशयमाह "अन्यानपी"ति, एवं वार्थः, दीपः प्रभानिरपेक्षप्रकाशश्चेत्प्रभावद्विषयानपि प्रकाशयेदित्यत्राह "अन्यानपी"ति, विषयप्रकाशनक्षमोऽपि स्वरूपस्य क्वाचित्कतया विषयसंबन्धाभावात् स्वरूपेण न प्रकाशयति किं तु विषयसंबन्धिन्या स्वपरिकरभूतया प्रभयेत्यर्थः, "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रवि रि"त्यादिनिर्देशोऽभिप्रेतः । यद्वानुमानविवक्षयाह "चैतन्यस्वभावता ही"ति, चैतन्यस्वभावता—ज्ञानधर्मकत्वम् एतदेव हि स्वयंप्रकाशत्वं ज्ञानधर्मकत्वात् स्वयंप्रकाशत्वम् इत्युक्तं भवति यथा धूमवत्त्वं ह्यग्निमत्त्वमित्युक्ते धूमवत्त्वादग्निमत्त्वमित्युक्तं स्यात् तद्वत् अयं चान्वयी हेतुः । व्याप्तिं दर्शयति "य" इति, प्रकाशस्वभावः प्रकाशधर्मकः, यो धर्म्यन्तरापरोक्षावभासे साक्षाद्वा परम्परया वा योऽभासमानतयैव हेतुस्स इहानन्याधीनप्रकाशशब्दविवक्षितः, रूपितत्समवेतार्थचाक्षुषत्व-

[1] स्वप्रभाबलनिर्भासितत्वेनेति द्राविडपाठः ।
[2] अर्थसिद्धम् इति द्राविडपाठः ।

निमित्तस्य रूपस्य स्वाश्रयेतरद्रव्यानुमापकधूमादेश्च प्रकाशत्वव्युदासाय धर्म्यन्तरापरोक्षशब्दौ इन्द्रियव्यवच्छेदार्थो भासमानशब्दः पक्षसपक्षयोरनुगतत्वाय साक्षाद्वा परम्परया वेत्युक्तं ज्ञाता स्वधर्मभूतप्रकाशनिरपेक्षसिद्धिः प्रकाशधर्मकत्वाद्दीपवदित्यनुमानशरीरं, भासमानतया साक्षाद्वा परम्परया वा धर्म्यन्तरापरोक्षावभासहेतुधर्मकत्वादिति हेतुवाचिशब्दार्थः। दीपस्य स्वधर्मभूतप्रभानपेक्षप्रकाशत्ववत् ज्ञातुरपि स्वधर्मभूतज्ञाननिरपेक्षप्रकाशत्वं सिद्धमिति पक्षधर्मताबलात्स्वयंप्रकाशत्वसिद्धिः। दृष्टान्ते साध्यान्वयं दर्शयति "नही"ति, साधनान्वयं दर्शयति "अन्यानपी"ति, अनुमानपरत्वादपि ग्रन्थस्य श्रुत्यनुग्राहकतर्कपरत्वं युक्तम्, उत्तरत्र तथा हि श्रुतय इति वक्ष्यमाणत्वात् पूर्वमनुमानं विवक्षितं चेत् तथा चेति हि वक्तव्यम् उपक्रमे चैतन्यस्वभावता हि स्वयंप्रकाशतेति सामानाधिकरण्यनिर्देशस्वारस्याच्च। पञ्चम्यर्थत्वे हि स्वारस्यं भज्यते निगमने च चिद्रूपता हि स्वप्रकाशतेत्युक्तं तत्र चिद्रूपशब्दोऽज्ञानस्वरूपत्वपरः, न तु ज्ञानधर्मकत्वपरः, अनन्तरपूर्वग्रन्थे चिद्रूप एव चैतन्यगुण इति ज्ञानधर्मकत्वस्य पृथगुक्तत्वात्, एवं निगमने स्वयंप्रकाशतापदसमानाधिकरणस्य चिद्रूपताशब्दस्य ज्ञानस्वरूपतापरत्वदर्शनात् पूर्वमपि स्वयंप्रकाशतापदसामानाधिकरण्यस्य चैतन्यस्वभावता चेति पदस्य ज्ञानस्वरूपतापरत्वस्य समुचितत्वाच्च चैतन्यस्वभावतेत्यादिभाष्यं श्रुत्यनुग्राहकतर्कपरम्, एवमनुग्राहकतर्कस्य श्रौतत्वे सत्यनुमानमप्यर्थसिद्धं ज्ञानधर्मकत्वज्ञानस्वरूपतोक्तेः, एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावे प्रभाप्रभावद्दृष्टान्तोक्तेश्च ज्ञानस्य द्रव्यत्वे द्वयोर्ज्ञानयोर्नियमेन धर्मधर्मिभावो नोपपद्यते अन्यत्रादर्शनात् गुणत्वे तु न ज्ञानाश्रयत्वसंभवः, गुणानामगुणत्वात्, न च द्रव्यत्वेऽपि नियताश्रयाश्रयिभावः प्रभाप्रभावतोर्दृश्यत इति वाच्यं प्रभाया विशीर्णदीपावयवत्वादित्याशङ्क्याह–

भू० एतदुक्तं भवति, यथैकमेव तेजो द्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता तथाऽपि तेजोद्रव्यमेव न शौक्ल्यादिवद्गुणः, स्वाश्रयादन्यत्रापि वर्तमान-

त्वाद्रूपवत्त्वाच्च, शैत्क्यादिधर्मवैधर्म्यात्प्रकाशवत्त्वाच्च तेजो-द्रव्यमेव नार्थान्तरं, प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषां च प्रकाशकत्वात् अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रय-त्वतच्छेषत्वनिबन्धनः ।

टी० "एतदुक्त"मिति, यथैकमेव तेजो द्रव्यं प्रभाप्रभावद्रूपेणाव-तिष्ठते एवमात्मा चिद्रूप एव चैतन्यगुण इति, यथा—शब्दस्योत्तरत्रान्वयः प्रथमं प्रभाया विशीर्णावयवान्यत्वं प्रतिजानीते "एकमेवे"ति, एकं सजा-तीयं, नियतधर्मस्य कथं द्रव्यत्वमित्यत्राह "यद्यपी"ति, गुणभूता—परतन्त्र-भूता अयुतसिद्धविशेषणभूतेत्यर्थः, तेजो द्रव्यमेवेति प्रतिज्ञातद्रव्यविशेषत्व-सिद्ध्यर्थं प्रथमं द्रव्यत्वमुपपादयति "स्वाश्रयादि"ति, द्रव्यत्वमस्तु तत्रापि तेजस्त्वे किं प्रमाणमि?त्यत्राह "प्रकाशवत्त्वादि"ति, प्रकाशस्तमोविरोध्या-कारविशेषः औज्ज्वल्यं, प्रकाशवत्त्वमुपपादयति "प्रकाशवत्त्वं चे"ति, स्ववि-षयपरविषयज्ञानविरोधितमोनिरसनरूपकार्यदर्शनादित्यर्थः, तर्हि कथमस्या गुणत्वव्यवहार? इत्यत्राह "अस्या" इति, तु—शब्दः शैत्क्यादिवैषम्यपरः । अथ विशीर्णाश्रयावयवानां प्रभावत्त्वं प्रतिक्षिपति—

सू० न चाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते मणि-द्युमणिप्रभृतीनां विनाशप्रसङ्गात् ॥

टी० "न चे"ति, कुत इत्यत्राह "मणी"ति, प्रतिक्षणविनाशप्रसङ्गा-दित्यर्थः, तदभ्युपगमे मण्याद्यनुपलम्भप्रसङ्गपरिहाराय प्रतिक्षणोत्पत्तिरभ्यु-पेत्या प्रतिक्षणोत्पत्तिविनाशाभ्युपगमश्चानुपपन्नः, दीपस्येवोत्पत्तिविनाश-सामग्र्यनुवृत्त्यभावात्तदभावेऽपि तेजस्त्वसामान्याद्दीप इव प्रत्यभिज्ञाबा-धेन प्रतिक्षणविनाशादिकल्पने सत्त्वद्रव्यत्वादिभिर्घटादावपि क्षणिकत्व-प्रसङ्ग इति भावः । रत्नेषु क्षणिकत्वं रत्नशास्त्रविरुद्धं कालविशेषे तदुत्प-त्त्याद्यवगतेः, आदित्यादिषु च क्षणिकत्वं श्रुतिविरुद्धं "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" "नाग्नीषोमौ न सूर्य" इति कालविशेषे तदुत्पत्तिवि-नाशावगतेः ।

न च सूर्यादिसृष्टिप्रलयपरवाक्यानां संतत्युपक्रमोच्छेदपरत्वं वाच्यं
स्वसूर्यादिमात्रक्षणिकत्वे प्रमाणाभावात् तैजसत्वं तु तेजःपरमाणूनिच्छ-
द्भिर्न हेतुतया वाच्यं तेजःपरमाणुषु व्यभिचारात्सत्त्वादिभिः क्षणिकत्वे
जगत्क्षणिकत्वं स्यादित्युक्तम् ।

ननु कर्पूरादीनां दूरोपलब्धगन्धानां गन्धाश्रयभूतावयवविशरण-
स्यावर्ज्जनीयत्वादुत्तरकालोपलम्भाच्च प्रतिक्षणोत्पत्तिविनाशावभ्युपगन्त-
व्यौ तद्वन्मण्यादिष्वपीति, नैवं समुद्गकसंपुटादिनिवातदेशनिहितदृढपि-
हितघनसारादेर्दूरे गन्धोपलम्भाभावादाश्रयावयवविशरणाभावेन यथापूर्वं
स्थित्युपलम्भोपपत्तेर्न प्रतिक्षणोत्पत्तिविनाशौ कल्प्यौ सवातदेशस्थघनसा-
रादीनां दूरोपलभ्यमानगन्धानामल्पावयवविशरणमस्त्येव, अवयविनि
च सूक्ष्मपरिक्षयो विद्यत एव, तुलया परीक्षणेऽप्यल्पाल्पपरिमाणापक-
र्षदर्शनात्, अतः प्रतिक्षणमवयवान्तरोपनिपातविश्लेषहेतुकोत्पत्तिविनाशौ
न कल्प्यौ, कल्पनेऽपि परितः केषांचिदवयवानामुपलभ्यमानगन्धाश्रय-
त्वेनोभयवादिसंप्रतिपन्नानामेव स्थितिमात्रं कल्प्यन्तावता गन्धोपलब्ध्यु-
पपत्तेः, अनेकधर्मितदुत्पत्तिनाशपरिदृष्टतदुभयसामग्रीकल्पने गौरवाच्च ।
यद्वा घ्राणस्यापि चक्षुष इव रश्मिद्वारा संबन्धाद्दूरस्थपदार्थगतगन्धग्राहित्वं
कल्प्यं गौरवाभावात्, न केवलं कल्प्यं रश्मिमत्त्वम् ॥ उक्तं च भारते "न
ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः । प्रवर्त्तमानैरनयैर्दुर्धर्षैरकृता-
त्मभिः ॥ तेषां तु मनसा रश्मीन् यदा सम्यङ् नियच्छति । तदा प्रकाशते
ह्यात्मा दीपो दीप्यन्निवाकृति" रिति, इन्द्रियाणां पञ्चीकृतभूतेऽऽप्यायनैर्वा-
युतेजःप्रभृतिभिः संबन्धाद्रश्मिमत्त्वं चोपपद्यते नन्वग्न्यातपत[1]प्तसलिलशि-
लादेरौष्ण्यतारतम्योपलम्भोऽग्न्यातपाद्यवयवसंक्रान्तिं विना नोपपद्यते स-
लिलादेः स्वत औष्ण्याभावाच्चिराश्रयधर्मसंक्रमणायोगाच्च, औष्ण्याश्रयभूता-
ग्न्यातपावयवस्य संक्रान्तिरभ्युपेत्या । एवम् अवयवसंक्रान्तिश्च विशरणेन
विना नोपपद्यते गत्वराणां रश्मीनां चरणतलानामिव कथं विशरणेन विना
क्वचित्संक्रमः, अवयवतारतम्याच्चौष्ण्यतारतम्यमिति, उच्यते अग्नितप्तेष्व-

१ नान्वाग्न्यातपसंबन्धात्सलिलशिलादेरिति तु पाठान्तरम् ।

ग्न्यवयवसंक्रान्त्यैवौष्ण्योपलम्भः सलिलादौ संक्रान्तिमन्तोऽग्न्यवयवा एव प्र-
भेति न वाच्यं, प्रदीपप्रभया ऽहोरात्रसंवृतेऽपि सलिलभूतलादावौष्ण्यानुप-
लम्भात् आतपतप्तेष्वपि न किरणविशरणादवयवसंक्रमः, तुहिनकणाना-
मिव रविकिरणोपात्तमुक्तानामग्न्यवयवानां संक्रमणादुष्णोपलम्भोपपत्तेः ।

न चात्र कल्पकमन्वेष्टव्यं, नापि कल्पनागौरवं प्रसज्जति, आगमसि-
द्धत्वादस्यार्थस्य, तथाहि मात्स्ये पुराणे कथ्यते "वसन्ते ग्रीष्मके रश्मिशतैः
संतपति त्रिभिः । शरद्यपि च वर्षासु चतुर्भिस्संप्रवर्षति ॥ हेमन्ते शिशिरे
चैव हिममुत्सृजति त्रिभि"रिति, यथा वर्षासु हेमन्ते च रविकिरणमुक्तास्स-
लिलकणास्तुहिनकणाश्च न विशीर्णकिरणावयवाः किंतु किरणोपात्तविमु-
क्ता आप्यावयवा एव, एवं ग्रीष्मेषु रविकिरणजन्यं संतापनं न तद्विशीर्णावयव-
कार्यं, किंतु तदुपात्तमुक्तावयवकार्यमिति प्रतीयते तथा "अग्निं वा वाऽऽदि-
त्यः सायं प्रविशति उद्यन्तं वा वाऽऽदित्यमग्निरनुसमारोहती"ति श्रूयते अत्र
चादित्यतिरोधानदर्शनावच्छिन्नकालविशेषपरौ सायंप्रातःशब्दौ, अस्य सायं-
भावप्रातर्भावौ रविविप्रकृष्टसन्निकृष्टतत्तद्देशविशेषवर्त्तिपुरुषापेक्षया सर्वदो-
पपद्येते इत्ययमर्थो भुवनकोशे स्पष्टतरः, ततश्च प्रविशतीत्यनेनाग्नावादि-
त्यस्य व्याप्तिरुच्यमाना दूरस्थितस्य स्वरूपेण नोपपद्येति किरणद्वारा भवति
अग्निरनुसमारोहतीत्यनेन अग्न्यवयवानामादित्येनोपादीयमानत्वमुच्यते न
चाग्न्याधिष्ठातृदेवतारोहणपरमिदं वाक्यं "तस्माद्धूम एवाग्नेर्दिवा ददृश"
इत्यनन्तरवाक्येनाग्नेरादित्योपसर्पणनिमित्ततेजोमान्द्यकथनात्, अन्यथा सा-
यंप्रातस्समययोस्सर्वदा संभवेन अग्नेरादित्ये सर्वदा रोहणमग्नावादित्यस्य
रोहणमग्नावादित्यस्य सर्वदावरोहणं च प्रसज्येत ततश्चाग्न्यादित्ययोः
स्थानविनिमयेन सर्वदा स्थितिरुक्ता स्यात्, सा च प्रमाणान्तरविरुद्धा अत-
श्चादित्यस्याग्नौ किरणद्वारा व्याप्तिः किरणैरग्न्यवयवोपादानं च वाक्यद्व-
योक्तम् । अतश्चोपात्ताग्न्यवयववर्षेण तापनं मात्स्योक्तम् उत्सर्जनप्रकरणस्वा-
रस्यात्, अतस्तुहिनकणानामिव रविकिरणमुक्तानामाग्नेयावयवानां विशी-
र्णकिरणावयवत्वाभावाद्रविकिरणेषु तन्मण्डले च प्रतिक्षणं विनाशोत्पत्ति-
कॢप्तिरनुपपन्ना अतो न विशीर्णावयवा प्रभा, दूषणान्तरमाह—

भू० दीपेऽप्यवयवविप्रतिपत्तिः कदाचिदपि न स्यात्, न हि विशरणस्वभावावयवा दीपाश्चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्द्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्यगूर्द्ध्वमधश्च एकरूपा विशीर्णाः प्रचरन्तीति शक्यते वक्तुम् ।

टी० "दीपे"ति, अवयवविप्रतिपत्त्यनुपपत्तिमुपपादयति "न ही"ति, दीपः किं विशरणस्वभावः ? उत स्थिरस्वभावः ? विशरणस्वभावत्वे पिण्डीभावो मूर्तद्रव्यप्रतिबन्धनिबन्धनः स्यात् । स्थिरस्वभावत्वे विशरणं मूर्तद्रव्यप्रतिहतिहेतुकं स्यात् अत्रोभयमनुपलम्भहतं विशरणस्वभावे पिण्डीभावो वायुनोपपद्यत इति चेत्तर्हि निवाते पिण्डीभावो न स्यात् स्तिमितसूक्ष्मवायुना पिण्डीभावश्चेद्विशरणं न स्यात्, तच्च सूक्ष्मवायुना चेदेकस्य विरुद्धस्वभावद्वयायोगात् पिण्डीभावविशरणहेतुभूतवायुद्वयमभ्युपेत्यं, तयोर्मिथःप्रतिघातकत्वादन्यतरविगमे पिण्डीभाव एव वा विशरणमेव वा स्यात्, तत्परिहाराय परस्परान्तरितविरुद्धस्वभाववायुद्वयपरम्परया सावधिविगमकल्पने गौरवं स्यात् तत्परिकल्पनेऽपि तिर्यग्गत्वराणां वाय्ववयवानां नोदनमात्रहेतूनां परितः प्रतिबन्धकत्वायोगात् पिण्डीभावो न स्यात् ।

ननु स्नेहपणद्रवीभूतपार्थिवावयवसंदंशात्पिण्डीभावः, ततस्तदवयवगतस्निग्धत्वापगमेन संदंशकत्वाभावादग्न्यवयवविशरणमित्याह "न हि विशरणे"ति, यद्यग्न्यवयवा ऊर्द्ध्वगमनस्वभावास्तर्हि विशरणे तिर्यग्गमनं न स्यात्, यदि ते तिर्यग्गमनस्वभावास्तर्हि प्रथममूर्द्ध्वगतिर्न स्यात् एकजातीयद्रव्यस्योपाधिना विना विरुद्धस्वभावत्वायोगात्, उपाधिश्च न दृश्यते प्रदीपप्रभयोर्द्भिन्नावयवित्वे तु विरुद्धस्वभावत्वमुपपद्यते । किंच चतुरङ्गुलादिपरिमाणतारतम्यनियामकोऽपि नास्ति, विशरणे च पार्श्वेऽपि विशरणं संभवति समन्ततो युगपद्विशरणे नियामकाभावादित्यभिप्रायः । किंच विशीर्णानां चावयवानां पांशूनामिव ऋजुप्रसरणनियमे च न हेतुः प्रसरणस्यार्जवनियमश्च तिरोधायकं पदार्थं प्रति ऋजुदेश एव छायायोगादवग-

म्यते छायावैपुल्यं तु निवार्यमाणरश्मीनां पृथ्वयत्वकृतं, नाऽनार्ज्जवकृतं छायाकौटिल्यं तु तिरोधायककौटिल्यकृतं न तु प्रसरानार्ज्जवकृतं, तच्च ऋजुप्रसारित्वसाधकं, विशीर्णावयवत्वे रेणूनामिव पवनानुत्सार्यमाणत्वं च न घटते, प्राचीनजालकनिष्क्रान्ता हि प्रभा दक्षिणानिलेन नोत्सार्यते, अन्यथा रजसामपि तत्र नोदनं प्रसजेत् जालकनिष्क्रान्तप्रभायाः पवनानुत्सारितत्वं ततः परस्मिन् भित्त्यादौ प्रभासंसर्गादेव गम्यते अतो धनुष्याततायामौर्व्या इव प्रभाया न विशीर्णावयवत्वमिति, ततः किमित्यत्राह—

**सू० अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्चाऽवगम्यते ।**

टी० "अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना" इति, तेजस्त्वेन मण्यादिविनाशाभ्युपगमेऽतिप्रसङ्गात्, विशरणस्वीकारे पिण्डीभावयुगपद्विष्वग्विशरणर्ज्जुप्रसरणाद्यनेकनियमव्यवस्थापकाभावाद्यथादृष्टाभ्युपगमे विरोधाभावाच्च सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इत्यर्थः । तर्हि कथं प्रतिक्षणोत्पत्तिविनाशोपपत्तिरित्यपेक्षायां यथा मण्यादीनां प्रतिक्षणविनाशो न प्रसजति तथा दीपक्षणिकत्वे हेतुद्वयमाह "पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्चे"ति, पृथक्स्थितदण्डचक्रादिव्यावृत्त्यर्थं पुष्कल—शब्दः वर्त्यवयवाग्निसंयोगस्य दीपसामग्रीत्वं प्रथमवर्त्यवयवाग्निसंयोगदृष्टम् ।

न च प्रथमावयवाग्निसंयोगस्यैव कारणत्वं शङ्कनीयं चरममध्यावयवयोरप्यग्निसंयोगे सति दीपोत्पत्तिदर्शनादतः प्रत्यवयवमग्निसंयोगात्पुष्कलकारणपरम्परा दृष्टेति प्रत्यवयवमग्निसंयोगाद्दीप उत्पद्यत एव, तत्र प्रतिक्षणमुत्पत्तौ सत्यां युगपदनेकदीपानुपलम्भाद्विनाशोऽपि सिद्धः, प्रतिक्षणविनाशस्य पृथगनुमापकमुच्यते "तद्विनाशे विनाशाच्चे"ति, वर्त्यवयवविनाशस्य दीपविनाशसामग्रीत्वं चरमवर्त्यवयवविनाशे दृष्टम् एवं विनाशकारणानुवृत्तिदर्शनात् प्रत्यवयवविनाशं दीपो विनश्यत्येव, एवमुत्पत्तिविनाश-

सामग्र्यनुवृत्तिभ्यां प्रतिक्षणं तावदनुमीयते इत्यर्थः। प्रभा विशीर्णावयवा न चेद्दीपसमीपे तस्या औष्ण्याधिक्यादिकं कथं, विशरणपक्षे त्ववयवबाहुल्यवैरल्याभ्यामौष्ण्याधिक्यमान्द्यादिकमुपपद्यत इत्यत्राह—

सू॰ प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्याद्युपलब्धिव्यवस्थाप्यम् अग्न्यादीनामौष्ण्यादिवत्, एवमात्मा चिद्रूप एव चैतन्यगुणक इति, चिद्रूपता हि स्वयंप्रकाशता।

टी॰ "प्रभाया" इति, प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादीत्यादिशब्देनाश्रयविप्रकृष्टदेशे प्रकाशमान्द्यमौष्ण्यमान्द्यं च विवक्षितम्। उपलब्धिव्यव[1]स्थापकत्वे दृष्टान्तमाह "अग्न्यादीना" मिति, उक्तं दार्ष्टान्तिकेऽतिदिशति "एव"मिति, चिद्रूप एवेति रूप-शब्दो धर्मिस्वरूपपरः, ततः किं स्वप्रकाशत्वस्येत्यपेक्षायां चिद्रूपत्वं विवृणोति। "चिद्रूपता ही"ति, अनेन वक्ष्यमाणश्रुतिवाक्ये ज्ञानादि-शब्दो व्याख्यातो भवति। एवमनुग्राहकतर्कमुपपन्यस्य प्रमाणमाह—

सू॰ तथा हि श्रुतयः "स यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एव, एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव विज्ञानघन एव "अत्रायं पुरुषः स्वयंज्योतिर्भवति न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" "अथ यो वेदेदं जिघ्राणीति स आत्मा" "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" "एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः, "विज्ञातारमरे केन विजानीयात्।

[1] उपलब्धिव्यवस्थाप्यत्वे इति पाठान्तरम्।

टी० "तथा हि श्रुतय" इति, "स यथा सैन्धवघन" इति, अन्त-रङ्गव्यतिरिक्तः, अबाह्यः, बहिरङ्गव्यतिरिक्तः, एवं व्यतिरेकनिर्देशेन निःशेष-ग्रहणं कृतं, तदेवाह "कृत्स्न" इति, दार्ष्टान्तिकविषयो ऽबाह्य-शब्दो-धर्मिपरः, अनन्तर-शब्दो धर्मपरः कृत्स्नशब्दस्तयोरेकदेशजडत्वशङ्काव्युदा-सार्थः । अत्र सर्वत्रैकरूप्यमेव दृष्टान्तोपजीव्यं न त्वन्यत् । दृष्टान्तदार्ष्टा-न्तिकविषयवाक्यद्वयेऽप्यनन्तरो ऽबाह्य इत्युक्तम् । शरीरित्वावस्थायामपि ज्ञानात्मकत्वपरं वाक्यमुपादत्ते "विज्ञानघन एवे"ति, घन-शब्दोक्तनैरन्तर्य-स्य जडांशमिश्रत्वं व्यावर्तयत्येवकारः, ज्ञानत्वं नाम स्वयंप्रकाशत्वमिति ज्ञापनार्थमत्रायमिति वाक्योपादानं धर्मधर्मिभावं ज्ञापयति "न विज्ञातु"-रिति, ज्ञातृसंबन्धिज्ञानस्य नित्यत्वे कथिते ज्ञानमात्रस्य नित्यत्वशङ्काव्यु-दासार्थं ज्ञातुरेवात्मत्वं दर्शयति "अथ" य इति, ज्ञानगुणकत्वस्वयंप्रका-शत्वयोः सहप्रतिपादकं वाक्यमाह "कतमः" इति, ज्ञानगुणकत्वज्ञानस्व-रूपत्वप्रतिपादकवाक्यमाह "एष ही"ति, ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वमाह "विज्ञातारमि"ति, अनेन ज्ञातृत्वं, स्वाभाविकमिति फलितं, न केवलं संसृतिदशायां मुक्तावपि ज्ञातृत्वं ज्ञापयति—

सू० "जानात्येवाऽयं पुरुषः" न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्" "स उत्तमः पुरुषो नोपजनं स्मरन्निदं श-रीरम् एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्ति, तस्माद्वा एतस्मान्मनोमयाद-न्योऽन्तर आत्मा विज्ञानमय इत्याद्याः, वक्ष्यति च "ज्ञो-ऽत एवे"ति, अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव न प्रका-शमात्रम् ।

टी० "जानात्येवाय"मिति, अवधारणासंकोचान्मुक्तावपि ज्ञातृत्वं सिद्धं, मुक्तौ ज्ञाननिषेधश्रुतीनां विषयविभागं दर्शयति "न पश्य" इति, "स उत्तम" इति च, पुरुषं प्राप्तस्य मुक्तस्य ज्ञातृत्वेऽनुवर्त्तमान एव देहेन्द्रि-

यविगमं दर्शयति "एव"मिति, अन्तःकरणोत्तीर्णस्य ज्ञातृत्वमाह "तस्माद्वा" इति, अस्यार्थस्य सूत्रकाराभिप्रेतत्वमाह "वक्ष्यति चे"ति, पूर्वं सूत्रोपादानमहमर्थात्मत्वं सूत्रकाराभिमतमिति ज्ञापनार्थम्, अत्रोपादानं ज्ञानगुणकत्वज्ञानस्वरूपत्ववादिनीनां श्रुतीनामविरोधः सूत्रकाराभिमत इति ज्ञापनार्थं, ज्ञानत्वाज् ज्ञानं न ज्ञानान्तराश्रय इति चेद्यदि व्याप्त्यनुरोधेनैवमुच्यते तर्हि धर्मत्वेन स्वीकार्यं, यदि श्रुतिबलात् स्वातन्त्र्येण स्वीक्रियते तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियताम् ।

न च व्याप्तिविरोधः, धर्मभूतज्ञानत्वप्रयुक्तत्वात् ज्ञाने ज्ञानाश्रयत्वस्य । श्रुत्या ज्ञातृत्वस्वयंप्रकाशत्वसिद्धिं निगमयति "अत"इति,

ननु घटमहं जानामीत्यत्र ज्ञानस्य ज्ञातृसंबन्धः प्रतीयत इत्यभ्युपेत्यम्, अन्यथा स्वज्ञानपरज्ञानविभागस्य दुर्ग्रहत्वप्रसङ्गात्स्वसंबन्धितया प्रतीतं ज्ञानं संबन्धाप्रतीतौ कथं स्वज्ञानमिति व्यवह्रियते, अतः स्वसंबन्धः प्रतीयत एव, तत्प्रतीतिर्न तावदहमर्थाद्भवति अहमर्थः प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भाति, न ह्यर्थान्तरमहमर्थो विषयीकर्तुमलमिति भवतां प्रक्रिया, अतो धर्मभूतज्ञानेनैव संबन्धप्रतीतिः, संबन्धश्च संबन्धिभ्यां विना न प्रतीयत इति ज्ञातृत्वज्ञानयोरपि संबन्धप्रकाशकज्ञानान्तरवेद्यत्वं स्यात्, ततः स्वतोऽवभासो ज्ञानान्तरेणावभासश्चेत्यवभासद्वयाभावात् ज्ञानान्तरेणैव प्रकाश्यतया स्वप्रकाशत्वासिद्धेर्ज्ञातुश्च ज्ञानस्य च जडत्वं स्यात् । किंच ज्ञानान्तरेण संबन्धप्रतीतिरवश्यं भाविनी चेत्संबन्धविषयज्ञानेन सह ज्ञातृसंबन्धस्यापि ज्ञानान्तरेण प्रतीत्यवश्यं भावात् संबन्धज्ञानपरम्पराप्रसङ्गः, अवश्यंभावाभावे सर्वज्ञानेष्वहं जानामीति ज्ञानज्ञातृसंबन्धप्रतीतिर्न स्यात्, नैवं स्वयंप्रकाशप्रत्यक्षेणैव संबन्धप्रतीतेर्नियतविशेषणविशेष्यभावो हि संबन्धः, अहमर्थो विशेष्यतैकस्वभावं स्वात्मानं प्रकाशयति, धर्मभूतज्ञानं च विशेषणतैकस्वभावं स्वात्मानं प्रकाशयति, विशेषणविशेष्यभावस्य परस्परप्रतियोगिकत्वं च ज्ञातृज्ञानयोः सहावभासादेव प्रतीयते ।

ननु संबन्धप्रतीतौ संबन्धिनोः सहावभासश्चैकज्ञानगम्यतया विना नोपपद्यत इति ज्ञातृत्वज्ञानयोर्ज्ञानान्तरवेद्यत्वं स्यात्, सुरभि पुष्पमित्यादौ

भिन्नसामग्रीवेद्ययोरपि गन्धपुष्पयोस्संबन्धप्रतीतिवेलायामेकज्ञानगम्यत्वं हि दृश्यत इति चेन्न, तत्र संबन्धिनोः संबन्धेन सहैकज्ञानगम्यत्वस्य सहावभासप्रयुक्तत्वाभावात्, संबन्धिनोर्ज्जडत्वप्रयुक्तं हि तत्रैकज्ञानगम्यत्वम्, अत्र स्वयंप्रकाशत्वात्स्वयमेव सहावभासमानयोर्ज्ञातृज्ञानयोर्विशेषणविशेष्यतैकस्वभावत्वरूपसंबन्धग्रहो ज्ञानान्तरानपेक्ष उपपद्यते, अतः संबन्धाग्रहस्वपरज्ञानविभागाभावसंबन्धज्ञानपरम्पराप्रसङ्गा दूरोत्सारिताः । एवं ज्ञातृत्वस्वयंप्रकाशत्वोपपादनेन चिन्मात्रव्यतिरिक्तत्वादिति जडत्वसाधकहेतुर्निरस्तो भवति । ज्ञानव्यतिरिक्तत्वाज्जडत्वं वदता किं स्वयंप्रकाशवस्तुव्यतिरिक्तत्वं हेतुरुक्तः? उत विषयप्रकाशकान्यत्वं? प्रथमे साध्याविशिष्टत्वं, द्वितीये ब्रह्मणि व्यभिचारः श्रुत्यादिबाधश्च । अथ साश्रयत्वे तर्कमाह–

सू० प्रकाशत्वादेव कस्यचिदेव भवेत्प्रकाशः प्रदीपादिप्रकाशवत्, तस्मान्नात्मा भवितुमर्हति संवित् । संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः, न हि लोकवेदयोर्जानातीत्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः ।

टी० "प्रकाशत्वादेवे"ति, प्रकाशत्वाद्–विषयेण सा[1]क्षात्संबन्ध्य साक्षाद्वा परम्परया वा ज्ञायमानत्वेनापरोक्षव्यवहारानुगुण्यहेतुत्वादित्यर्थः । अनेन स्वरूपभूतज्ञानेन्द्रियलिङ्गादिव्यावृत्तिः । हेत्वन्तरमप्याह "संविदनुभूती"ति, संबन्धिशब्दत्वं शब्दस्वभावायत्तमित्याशङ्क्याह "न हि लोकवेदयो"रिति, यत्रार्थस्वरूपस्यान्यथात्वं दृश्यते तत्र शब्दस्वभावायत्तत्वमाश्रयणीयं, यथा दारा इत्यादिषु बहुत्वादेः, यत्र नान्यथात्वं तत्रार्थस्वभावायत्तत्वमेव, यथा भार्येत्यादावेकत्वादेः, तथा लोकवेदयोः सकर्मकर्तृत्वदर्शनात् अर्थस्वभावायत्तमेव संबन्धिशब्दत्वमित्यभिप्रायः । यद्वा कर्मकर्तृसंबन्धित्वं व्युत्पत्तिनिमित्तमस्तु न प्रवृत्तिनिमित्तं तत्तु ज्ञप्तिमात्रमित्यत्राह "न हि

१ साक्षात्परम्परया इत्येव वाकारद्वयरहितं पाठान्तरम् ।

लोके''ति, प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनं, प्रयोगश्च संबन्धिन्येवार्थे इति नार्थान्तरकल्पना स्यात्, स्वरूपभूतज्ञानवाचिशब्दानां संबन्धिशब्दत्वं त्वन्मतेऽप्यनुपपन्नमिति चेत् न, स्वरूपगोचराणां स्वयंप्रकाशत्वे रूढानां ज्ञानादिशब्दानामनुभूत्यादिशब्देभ्यः शब्दान्तरत्वात्, अतः संबन्धिशब्दत्वोपदेशस्तु धर्मभूतज्ञाने सावकाशोऽस्मन्मते विषयाश्रयसंबन्धिज्ञानस्यैव विषयाश्रयसंबन्धबाधेन निराश्रयत्वनिर्विषयत्वाभ्युपगमात्त्वन्मते संबन्धिशब्दतोपदेशो निरर्थक इति भावः। अथाजडत्वात्संविदात्मत्वसमर्थनं दूषयितुमनुवदति–

सू० यच्चोक्तम् अजडत्वात्संविदेवात्मेति, तच्चेदं प्रष्टव्यम् अजडत्वमिति किमभिप्रेतं? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत् तथा सति दीपादिष्वनैकान्त्यं संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धि[1]रिति विरोधश्च।

टी० "यच्चोक्त"मिति, अजडत्वं नाम किं स्वसत्ताप्रयुक्तप्रकाशत्वम्? उताव्यभिचरितप्रकाशसत्ताकत्वम्? उत स्वस्मै प्रकाशमानत्वम्? उत स्वस्मै स्वयंप्रकाशत्वम्? उत स्वयंप्रकाशत्व?मिति पञ्चधा विकल्पमभिप्रेत्याह "अजडत्व"मिति, किमभिप्रेतमिति अहं जानामीति प्रत्यक्षबाधः सर्वसाधारणं दूषणं, प्रथमं स्वसत्ताप्रयुक्तप्रकाशत्वपक्षं दूषयितुमाह 'स्वसत्ते''ति, स्वसत्ताप्रयुक्तः प्रकाशो यस्येति बहुव्रीहिः, वक्ष्यमाणासिद्धिदूषणोपयोगिभेदज्ञापनार्थं स्वसत्ताप्रयुक्तशब्दः। अनैकान्त्यमाह "तथा सती''ति, स्वपक्षे ज्ञातुरात्मत्वात्सपक्षभूते तस्मिन् विपक्षे ज्ञातुरनात्मनि दीपे च वृत्त्याऽनैकान्त्यं पक्षत्रयवृत्तित्वलक्षणमुक्तं, परपक्षे त्वनियतत्वमिवानैकान्त्यं सपक्षाभावात्। दूषणान्तरद्वयमाह "संविदतिरिक्ते''ति, संवित्प्रयोजिका प्रकाशः प्रयोज्य इति तदतिरेकेणानभ्युपगमादसिद्धिः, अभ्युपगमे निर्विशेषत्वविरोधः, इमावसिद्धिविरोधौ विकल्पितसर्वशिरःसाधारणावनुसंधेयौ। यद्वा विरोधः पक्षविपक्षयोरेव वर्त्तमानत्वं पक्षभूतसंविदि

[1] असिद्धिर्विरोधश्चेति पाठान्तरम्।

विपक्षे दीपादौ च वृत्तेः । परमतमात्रपर्यालोचनायां विरोध उक्तः, अत्र स्वसत्ताप्रयुक्तप्रकाशत्वमित्यत्र प्रकाश–शब्देन किं साक्षाद्वा परम्परया व्यवहारानुगुण्यं विवक्षितम्? उत परम्परयैव? उत साक्षादेवे? ति विकल्पोऽभिप्रेतः प्रथमं शिरःस्वपरदर्शनपर्यालोचनया ऽभिहितयोरनैकान्त्यविरोधयोरन्यतरेण निरस्तं भवति, द्वितीये त्वसिद्धिः परम्परयैव व्यवहारानुगुण्यस्य ज्ञप्तावुभयवाद्यनभिमतत्वात्, तृतीये सत्तारिक्तप्रकाशानभ्युपगमनिबन्धनासिद्धिर्निर्विशेषत्वविरोधौ स्यातामित्यभिप्रायः । द्वितीयपक्षं प्रतिक्षिपति–

सू० अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तं, यद्युच्येत सुखादिरव्यभिचरितप्रकाशोऽपि अन्यस्मै प्रकाशमानतया घटादिरिव जडत्वेनानात्मेति ज्ञानं वा किं स्वस्मै प्रकाशते? तदपि ह्यन्यस्यैवाऽहमर्थस्य ज्ञातुरवभासते अहं सुखीति वत् जानाम्यहमिति, अतः स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविद्यसिद्धं तस्मात्स्वात्मानं प्रति स्वसत्तयैव सिद्ध्यन्नजडोऽहमर्थ एवात्मा ।

टी० "अव्यभिचरिते"ति, न व्यभिचरति प्रकाशो[1] यस्य स तादृशोऽव्यभिचरितप्रकाशसत्ताकः प्रयोज्यप्रयोजकत्वाभावे ऽपि विद्यमानदशायां सर्वदा प्रकाशमानत्वमित्यर्थः, तस्यानात्मत्वेन संप्रतिपन्नेषु सुखदुःखादिषु व्यभिचार उक्तः । अथ तत्परिहारमुखेन स्वस्मै प्रकाशमानत्वपक्षमुपक्षिपति "यद्युच्येते"ति, परिहरति "ज्ञानं चे"ति, कस्येत्यत्राह "तदपी"ति, परस्मै भासमानत्वमुपपादयति "अह"मिति, तस्मादेवंरूपाजडत्वमसिद्धमित्याह "अत"इति, अथ चतुर्थं शिरोदूषयन्नसिद्धिमाह "तस्मा"दिति, स्वयंप्रकाशत्वपक्षे ऽपि स्वयंप्रकाशत्वन्नाम किं ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्व? मुत ज्ञानान्तरनिरपेक्षप्रकाशत्व? मित्य ऽभिप्रेते

१ न व्यभिचरति प्रकाशो यस्य सत्तायां सोऽव्यभिचरितप्रकाशसत्ताकः इति पाठान्तरम् ।

विकल्पे प्रथमशिरस्तस्मादिति ग्रन्थेन दूषितम्, इह स्वात्मव्यावृत्त्यर्थं स्वात्मानमित्युक्तं स्वसत्तयैव सिध्यन्नित्यनेन स्वयंप्रकाशत्वमुक्तं स्वस्मै स्वयंभासमानत्वमहमर्थस्याधिकं स्वस्मै स्वयंभासमानस्य स्वयंभासमानत्वमप्यस्तीत्यभिप्रायेण स्वात्मानं प्रति स्वसत्तयैवेत्युक्तं, तेन ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं ज्ञातर्यप्यस्तीति तद्व्यभिचरितं स्वपक्षेऽनात्मनि ज्ञातर्यपि विपक्षभूते वृत्तेरिति दर्शितं ज्ञानान्तरनिरपेक्षप्रकाशत्वं संविद्यसिद्धं तस्याः स्वरूपभूतज्ञानाधीनत्वात् अहमर्थस्यैव तदित्यभिप्रायः स्व[1]सत्तयैवेत्यनेन सूचितः, तमेव विवृणोति—

मू० ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता, तत्कृतमेव हि ज्ञानस्य सुखा[2]देरपि स्वाश्रयचेतनं प्रति प्रकटत्वमितरं प्रति अप्रकटत्वं च, अतो न ज्ञप्तिमात्रमात्मा, अपि तु ज्ञातैवाहमर्थः। अथ यदुक्तमनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते रजततयेव शुक्तिर्निरधिष्ठानभ्रमानुपपत्तेरिति।

टी० "ज्ञानस्यापी"ति, तत्संबन्धायत्तत्वमुपपादयति "तत्कृतमेव ही"ति, ज्ञानस्फुरणस्याश्रयसंबन्धोऽपि सामग्र्यन्तर्भूत इति भावः। अजडत्वात्संविदात्मत्वासिद्धिं निगमयति "अत"इति, अथाहमर्थस्य भ्रान्तिसिद्धत्वं दूषयितुमनुवदति अथ यदुक्तमित्यादिना, संविदपि मिथ्या किन्न स्यादित्यत्राह "निरधिष्ठाने"ति, अनुभूतिव्यतिरिक्तापारमार्थ्यसिद्धवत्कारेणायं हेतुरुक्तः, दूषयति तदयुक्तमित्यादिना, अधिष्ठानसामानाधिकरण्येनाध्यस्तप्रतीतिं दृष्टान्तेनोपपादयति "पुरोऽवस्थितेति", पक्षे तद्विपर्ययं दर्शयति "अत्र त्वि"ति, पृथगवभासमाना व्यधिकरणतया ऽवभासमाना, तथा प्रतीतिं दर्शयति "तथा ही"ति, ततः किमित्यत्राह—

मू० तदयुक्तं तथा सत्यनुभवसामानाधिकरण्येनानुभविताऽ-

१ सत्तयैवेति पुस्तकान्तरपाठः।
२ सुखादेरिवेति पुस्तकान्तरपाठः।

हमर्थः प्रतीयेत अनुभूतिरहमिति पुरोऽवस्थितभास्वरद्र-व्याद्याकारतया रजतादिरिव, अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि दण्ड इव देवदत्तं, तथा ह्यनुभवाम्यहमिति प्रतीतिस्तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त इति प्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत । यदप्युक्तं स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति तदयुक्तम् आत्मतयाऽभिमताया अनुभूतेरपि मिथ्यात्वं स्यात् तद्वत एव प्रतीतेः सकलेतरोपमर्दितत्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत् हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या । यदप्युक्तम् अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः, अपि त्वन्तःकरणरूपाहङ्कारस्य,कर्तृत्वादिर्हि रूपादिवत् दृश्यधर्मः कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येवानात्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति, नैतदुपपद्यते देहस्येवाचेतनत्वप्रकृतिपरिणामित्वदृश्यत्वपराक्त्वपरार्थत्वादियोगादन्तःकरणरूपस्याहङ्कारस्य, चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य,

टी० "तदेव"मिति, तदेवमुक्तप्रकारेण धर्मिधर्मभावप्रतीतौ विशेषणतया प्रतिपन्ने तद्विशेषणविशिष्टाध्यासोऽनुपपन्न इत्यर्थः । तत्र न संबन्धमात्राध्यासः, तथा सति संबन्धिनो ज्ञातुः पारमार्थ्यप्रसङ्गात्

न च तथाभ्युपेतम्। ननु विशेषणे विशिष्टाध्यासो दृश्यते यथा प्रभायां मण्यध्यास इति, इदं चोद्यं चोक्तं पृथगवभासमानेत्यनेन परिहृतं न हि तथा वैयधिकरण्येन विशेषणभूता प्रभा भाति, किंतु अयम्मणिरिति मण्यध्यासाधिष्ठानभूता प्रभा मणिसामानाधिकरण्येनैव हि भाति। ननु अनुभवसामानाधिकरण्येन प्रतीतिप्रसञ्जनमयुक्तं दिक्षु मालिन्यं नभसि राग इति वैयधिकरण्येनाप्यध्यासदर्शनात्, नैवं पदद्वयप्रवृत्तिनिमित्तयोरेकाश्रयवृत्तित्वं हि सामानाधिकरण्यम् इह च दिक्त्वमालिन्ययोर्नभस्त्वारुण्ययोश्चैकाश्रयवृत्तित्वादर्थतः सामानाधिकरण्यमस्ति, वैयधिकरण्यं तु शब्दगतं दिशो मलिना दिक्षु मालिन्यमित्यत्र कोऽर्थभेदः, अध्यासेषु धर्म्यैक्यप्रतीतिरवर्ज्जनीया अतः सैवात्रापाद्यते "अनुभूतिरहमिति प्रतीये"ति। नन्वनुभूतिरहमितिप्रतीतिप्रसङ्गो दुर्वचः, अनुभूतित्वं, ह्यधिष्ठानासाधारणाकारः, तदस्फुरणं भ्रमानुगुणमेव, न हि शुक्तीरजतमिति प्रतीयते इति एवं तर्ह्यनुभूतेर्निर्विशेषाया रूपान्तरेण स्फुरणाभावादनुभूतितया स्फुरणे विरोधाच्च तदधिकरणाध्यासानुदयः, अविरोधेन स्फुरत्त्वाध्यासे यन्योक्तसामानाधिकरण्यप्रतीतिप्रसङ्गो दुर्वारः एतदभिप्रायेण हि पुरोऽवस्थितभास्वरद्रव्याकारतया रजतादिरिवेत्युक्तम्। ननु संविद्यध्यासानुदयो दुर्वचः, विषयोपश्लिष्टानुभूतिरहं जानामीत्यत्र ज्ञात्रध्यासे प्रतीयते सा तु नाधिष्ठानं निर्विषया निराश्रयानुभूतिरेवाधिष्ठानं तदप्रकाशादध्यासोदय इति, उच्यते तत्र प्रतिपन्नस्याधिष्ठानत्वायोगात् विषयाश्रयशून्यसंविदो योग्यानुपलब्धिनिरस्तत्वाद्विषयप्रकाशकसंविद एवात्मत्वाभ्युपगमेन त्वया स्वयंप्रकाशत्वसमर्थनाच्च सैवाधिष्ठानमिति तदवभासे तस्याश्च शुक्तित्ववद्भ्रमविरोधित्वेऽध्यासानुदय इति देहात्माभिमानवतो ज्ञातृत्वप्रतिभासात्तन्मिथ्येति यदुक्तं तदनूद्य दूषयति यदप्युक्तमित्यादिना, "तदबाधादेवे"ति, ज्ञातृत्वस्याबाधितत्वं मुक्तावपि ज्ञातृत्वपरश्रुतिवाक्यात्, ज्ञातृत्वस्य विक्रियात्मकत्वं निराकर्तुं तदनुवदति "यदप्युक्तमविक्रियस्ये"ति, ज्ञानस्य धात्वर्थतया क्रियात्वं तत्कर्तृत्वं च विकाररूपम् अत एव जडमविक्रियस्याजडस्यात्मनो न संभवति विक्रियात्मकत्वाज्जडत्वाच्च तादृशाहङ्कारधर्म्यस्य-

मित्यर्थः । सर्वाध्यासमूलत्वात् ग्रन्थित्वम् । अथ हेत्वन्तरेण च ज्ञातृत्वस्यान्तःकरणधर्मत्वमुपपादयति "कर्तृत्वादि"रिति, दृश्यत्वादित्यर्थः । आत्मनो ज्ञातृत्वेऽनिष्टं प्रसञ्जयति "कर्तृत्व"इति, अत्र व्यतिरेक्यनुमानान्यभिप्रेतानीति पूर्वमेवोक्तं परिहरति "नैतदि"ति, देहस्येवेत्यादिना अन्तःकरणस्य ज्ञातृत्वाभावोपपादनम् आदिशब्दादन्तवत्त्वग्रहणं चेतनासाधारणेत्यादिना आत्मनो ज्ञातृतोपपादनं ज्ञातृत्वाभावः साध्योऽभिप्रेतः, अन्तःकरणं धर्मि अचेतनत्वादयो हेतवः, देहस्येवेति सपक्षो दर्शितः, ज्ञातृत्वस्य चेतनासाधारणत्वकथनाद् व्यतिरेकव्याप्तिश्च दर्शिता एवं परोक्तव्यतिरेकिणां प्रत्यनुमानान्युक्तानि भवन्ति अन्तःकरणं न ज्ञातृ अचेतनत्वात् प्रकृतिपरिणामत्वात् दृश्यत्वात् पराक्त्वात् परार्थत्वात् देहवदिति । ननु अचेतनत्वादज्ञातृत्वे साध्ये साध्याविशिष्टता, नैवम् अचेतनशब्देनानात्मत्वस्य विवक्षितत्वात् पुरुषार्थप्रतिसंबन्धित्वं वा देहं प्रति नियन्तृतया अन्तःप्रविष्टत्वं वा आत्मत्वं तदभावोऽनात्मत्वं प्रकृतिपरिणामत्वं प्रकृतिकार्यत्वं दृश्यत्वं नियमेन ज्ञानान्तराधीनसिद्धित्वं पराक्त्वं परस्मै भासमानत्वं परार्थत्वं परप्रयोजनैकफलत्वं जीवोपकरणत्वमित्यर्थः । आत्मनो ज्ञातृत्वे साध्येऽमी हेतवः, यथासंभवं तर्का योजनीयाः । आत्मनो ज्ञातृत्वाभावे देहस्येवानात्मत्वप्रसङ्गः परार्थत्वप्रसङ्ग इति । ननु यथा घटदेहयोरचेतनत्वादिके तुल्येऽपि इन्द्रियाश्रयत्वादिकं देहासाधारणं भवति तथा देहान्तःकरणयोरप्यचेतनत्वादिके तुल्येऽपि ज्ञातृत्वमन्तःकरणासाधारणधर्मः स्यात् अत इन्द्रियाश्रयत्वाभावस्येव ज्ञातृत्वाभावस्याप्यचेतनत्वादिकमप्रयोजकम् अविद्विशेषत्वमेव प्रयोजकं तथाऽऽत्मनो ज्ञातृत्वाभावेऽपि प्रत्यक्त्वादिरुपपद्यतामित्युभयत्रापि विपक्षे बाधकाभावमाशङ्क्य परिहरति—

सू० एतदुक्तं भवति यथा देहादिर्दृश्यत्वपराक्त्वादिभिर्हेतुभिस्तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यते एवमन्तःकरणरूपाहङ्कारोऽपि तद्द्रव्यत्वादेव तैरेव हेतुभिस्तस्मादिविच्यत इति ।

टी० "एतदुक्त"मिति, येन दृश्यत्वादिविरुद्धधर्मेण देहस्य द्रष्टृत्वाद्यनुपपत्तिस्तेनान्तःकरणस्यापि तद्द्रव्यत्वाद् द्रष्टृत्वानुपपत्तिरित्यर्थः, ज्ञातृत्वाभावं प्रत्यचेतनत्वादिकमप्रयोजकं चेत् देहस्य ज्ञातृत्वप्रसङ्गः, ततश्चार्वाकं प्रति देहात्मभेदस्त्वयाऽपि दुरुपपादः । न च देहस्य देहत्वादज्ञातृत्वं घटादौ देहत्वाभावेऽपि ज्ञातृत्वाभावात् अतस्तत्राचित्वादिकस्य ज्ञातृत्वाभावप्रयोजकत्वमभ्युपगन्तव्यमिति क्वचित् ज्ञातृत्वाभावप्रयोजकस्य तस्याचित्त्वादेः क्वचिदप्रयोजकत्वमयुक्तम्, अतोऽचित्त्वादिभिर्देहस्येवान्तःकरणस्य द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः, प्रत्यक्त्वादेरित्यादि–शब्दाद-जडत्वग्रहणं, विविच्यते–प्रत्यक्त्वादिधर्म्मैः संबन्धरहितोऽवगम्यते इत्यर्थः "तैरेव हेतुभिस्तस्माद्विविच्यत"इति पराक्त्वादिभिर्देहस्य ज्ञातृत्वाभाव उक्ते पराक्त्वं व्याप्यं ज्ञातृत्वाभावो व्यापक इति सिध्यति, ततश्च स्वाभावव्याप्तेषु पराक्षु निरवकाशं ज्ञातृत्वं यदि प्रत्यग्वस्तुन्यपि न स्यात्तदा निराश्रयं प्रसजेदिति पूर्वोक्तव्याप्तिस्थापनाय विपक्षे बाधकस्तर्कोऽत्राप्यभिप्रेतः, तस्माद्विविच्यत इत्येतदुक्तमित्यन्वयः । अतोऽचेतनत्वजडत्वादिस्वभावविरोधान्नाहङ्कारस्य ज्ञातृत्वमित्याह–

**सू० अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य दृशित्ववत्, यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम् ।**

टी० "अत"इति, न हि वयं द्रष्टृत्वाद्यनुपपत्त्या देहात्मविवेकं ब्रूमः स तु परमतानुसारात्कृतः, वयं तु दृशित्वानुपपत्त्येति शङ्कायां द्रष्टृत्वाभावस्याचेतनत्वादिप्रयोज्यत्वे मृषावाद्यसाधारणप्रतिवन्दीमाह "दृशित्वव"दिति, तदेव विवृणोति "यथे"ति, दृश्यत्वाद्यविशेषेऽपि देहस्य घटादिविलक्षणस्येन्द्रियाश्रयत्ववदन्तःकरणस्य दृशित्वमुपपद्यताम् अन्तःकरणस्यापि दृश्यत्वादिना देहस्येव दृशित्वं नोपपद्यत इति चेत्तथा दृश्यस्यान्तःकरणस्य दृश्यत्वादिनैव देहस्येव द्रष्टृत्वमपि नोपपद्यते अतो दृशित्वाभाव इव द्रष्टृत्वाभावेऽपि अचेतनत्वादिकं प्रयोजकम् अन्वयव्यति-

रेकयोस्तुल्यत्वादुपाध्यन्तरादर्शनाच्चेति भावः । अहंप्रत्ययगोचरत्वमनात्मत्वसाधकं देहस्येवेति यदुक्तं तदयुक्तं बाधिताहंप्रत्ययगोचरत्वस्य पक्षे वृत्त्यभावादबाधिताहंप्रत्ययगोचरत्वस्य सपक्षे देहादावभावाच्च । यद्यहंप्रत्ययगोचरत्वमात्रेणात्मन्यनात्मत्वादिप्रसङ्गः, तर्हि रजतप्रत्ययगोचरत्वमात्रेण भ्रान्तवत् सम्यग्रजतेऽप्यरजतत्वाङ्गुलीयकनिर्माणानर्हत्वप्रसङ्गः स्यादित्यप्रसङ्गतं, श्रुतिभिः प्रत्यक्षेण च कालात्ययापदेशश्च । अनात्मत्वादिप्रसञ्जकं कर्तृत्वं किं प्रयत्नाधारत्वम्? उत स्पन्दनरूपक्रियाश्रयत्वम्? उत धात्वर्थमात्राश्रयत्वं? प्रथमे व्याप्त्यभावः प्रयत्नाधारत्वानात्मत्वयोः क्वचित्सहदर्शनाभावात् परमात्मन्यनात्मत्वादिप्रसङ्गश्चेत्कर्तारमीशं पुरुषमित्यादिभिः कालात्ययादेशश्च जीवे चे"त्साधुकारी साधुर्भवति" "कर्ता शास्त्रार्थवत्त्वात्" "यतः स्वकृतभुक् पुमान्" इत्यादिभिः प्रत्यक्षेण च कालात्ययापदेशश्च, द्वितीये परमात्मन्यसिद्धिः जीवे तूत्क्रान्त्यादिश्रुतिभिः कालात्ययापदेशः, तृतीये भ्रमाश्रतया स्वाभिमतात्मन्यनात्मत्वप्रसङ्गः, भेददर्शनं तदाश्रयत्वं चापारमार्थिकमिति चेत्किं परमार्थभूतधात्वर्थाश्रयत्वमनात्मत्वसाधकम्? उतापरमार्थभूतधात्वर्थाश्रयत्वं? प्रथमे घटादावपि परमार्थभूतधात्वर्थान्वयानभ्युपगमाद्व्याप्त्यभावः, द्वितीये तु त्वदभिमतस्य भ्रमाश्रयस्यात्मनोऽप्यनात्मत्वप्रसङ्गः । अथ विक्रियात्मत्वश्चेत्याह—

मू॰ न च ज्ञातृत्वं विक्रियात्मकं, ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वं ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यं, नित्यत्वं चात्मनो "नात्मा श्रुते"रित्यादिषु वक्ष्यति "ज्ञोऽत एवे"त्यत्र ज्ञ इति व्यपदेशेन ज्ञानाश्रयत्वं च स्वाभाविकमिति वक्ष्यति अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम् ।

टी॰ "न चे"ति, तदुपपादयति "ज्ञातृत्वं ही"ति, गुणक्रियाश्रयत्वेऽपि तत्कादाचित्कं चेत् क्रियाश्रयत्ववत् विक्रियात्मकं स्यात् इत्यत्राह "ज्ञानं चास्ये"ति, धर्मस्य स्वाभाविकत्वे ऽपि धर्मी अनित्यश्चेद्धर्मी-

ऽप्यनित्यः स्यात् धर्मिनित्यत्वेऽपि धर्म औपाधिकश्चेत् उपाधिविगमे धर्मो नश्यतीत्यनित्यः स्यात् तदुभयव्यावृत्त्यर्थं नित्यस्वाभाविकशब्दौ। अवस्थाविशेषेण कादाचित्कत्वं तु प्रामाणिकत्वादिष्टम् अनेन पदद्वयेन "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादात्मन इति श्रुत्यर्थ उक्तो भवति, अस्याः श्रुतेरयमर्थः ज्ञातृसंबन्धिज्ञानं नित्यं, कुतः अविनाशित्वात् आत्मनः, विशिष्टस्य नित्यत्वेन विशेषणभूतज्ञानस्यापि नित्यत्वात्। यद्वा धर्मिनित्यत्वेन तत्स्वाभाविकधर्मस्यापि नित्यत्वादिति आत्मनोनित्यत्वे ज्ञानस्य तत्स्वाभाविकधर्मत्वे च प्रमाणं स्मारयन् पूर्वमेव श्रुतिवाक्यस्योपादानात् सूत्रमुदाहरति "नित्यत्वं चे"ति, सूत्रोदाहरणेन तद्विषयभूता श्रुतिरपि अर्थतो दर्शिता स्यात् सूत्रं च पूर्वं ज्ञानगुणकत्वप्रदर्शनायोपात्तम् इदानीं नित्यत्वज्ञापनायोपात्तम्। "ज्ञोऽत" एवेत्यत्र ज्ञ इति व्यपदेशस्य विवरणं "यावदात्मभावित्वाच्च न दोषः" इति सूत्रम् अत्र स्वाभाविकत्वसिद्धिरिति भावः। ज्ञानस्वरूपस्य ज्ञानाश्रयत्वं कथमित्यत्राह "अस्ये"ति, ज्ञानं स्वाभाविकनित्यधर्मश्चेत्सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह—

**सू० स्वयमपरिच्छिन्नमेव ज्ञानं संकोचविकासार्हमित्युपपादयिष्यामः, अतः क्षेत्रज्ञाऽवस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते तच्चेन्द्रियद्वारेण व्यवस्थितं तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते ज्ञानप्रसरे तु कर्तृत्वमस्त्येव।**

टी० "स्वय"मिति, स्वयं—स्वतः "संपद्याविर्भाव" इत्यादिसूत्रे उपपादयिष्याम इत्यर्थः। अनन्तरमेवेति वार्थः। तर्हीदानीमपि कदाचित्सर्वज्ञत्वं मुक्तौ च कदाचिज्ज्ञानसंकोचः किं न स्यात्, यदि क्षेत्रज्ञावस्थायां संकोचः तर्हि सर्वेऽप्यज्ञाः स्युरित्यत्राह "अतः क्षेत्रज्ञे"ति, अतः संकोचविकासार्हत्वात् कर्मणेति संकोचकोपाधिः क्षेत्रज्ञावस्थायामिति तदानीमेव संकोच इत्यर्थः सर्वेषामज्ञत्वप्रसक्तिश्च कर्मतारतम्यात्परिहृता तारतम्य-

शब्देन "तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्त्तते" इति वचनं स्मारितं भवति कर्मणेति पदेन तयेति पदं श्लोकस्थं व्याख्यातं भवति तया—कर्मरूपाविद्ययेत्यर्थः "अविद्या-कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रशक्तिः सा वेष्टिता नृप सर्वगा ॥ संसारतापानखिलानवाप्नोत्यतिसंतता" निति हि प्रकृतं, ज्ञानस्य नित्यत्वेनानुत्पत्तिकत्वादिन्द्रियनैरपेक्ष्यं स्यादित्यत्राह "तच्चेति", यद्वा स्वापरादिष्वपि ज्ञानविकासः स्यादित्राह "तच्चे"ति, इन्द्रियद्वारकत्वं संकोचविकासार्थमित्यर्थः तर्ह्युत्पत्तिविनाशव्यपदेशो न स्यादित्यत्राह "तमिम"-मिति, प्रसरान्वयव्यतिरेकावपेक्ष्य उदयास्तमयव्यपदेश इत्यर्थः । यद्वा प्रसृतांशः प्रसरः, तस्य प्रसरणसंकोचावुदयास्तमयावित्यर्थः संकोचविकासाभ्युपगमे विक्रियात्मकत्वं स्यादित्यत्राह "ज्ञानप्रसरे" त्विति तादृशविक्रियात्मकत्वं प्रामाणिकत्वादिष्टमित्यर्थः । अचेतनवत्परिमाणामो ह्यनभ्युपगत इत्येवकाराभिप्रायः । अनेनाविकारश्रुतीनां विषयो दर्शितः मुखान्तरेणाप्यविकारश्रुतिनिर्वाहं दर्शयति—

सू० तच्च न स्वाभाविकम्, अपि तु कर्मकृतमित्यविक्रियस्वरूप एवात्मा, एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसंभवः, जडस्वभा[1]वस्याहङ्कारस्य चित्सन्निधानेन तच्छायापत्त्या तत्संभव इतिचेत् कथं चिच्छायापत्तिः ? किमहङ्कारच्छायापत्तिः संविदः ? उत संविच्छायापत्तिरहङ्कारस्य ? ।

टी० "तच्चे"ति, स्वाभाविकविकारनिषेधपरा अविकारश्रुतय इत्यर्थः स्वाभाविकं रूपं कथमित्यत्राह "अविक्रिये"ति, स्वरूपं स्वाभाविकं रूपम् अविकारित्ववाक्यान्युपाधिविमुक्तस्वाभाविकरूपपराणीत्यर्थः प्रसरणकर्तृत्वमपि विकाररूपत्वादन्तःकरणस्यैवेत्यत्राह "एवंरूपविक्रियात्मक" मिति,

१ जडस्वरूपस्येति पाठान्तरम् ।

स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारित्वमेवंरूपशब्देनाभिप्रेतं ज्ञानस्वरूपस्य ज्ञानमेव स्वाभाविको धर्मो यस्य सः ज्ञानस्वरूपः स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारस्तद्धर्मकस्यात्मन एव संभवति न तु जडस्वरूपत्वात् अतद्धर्मकस्याहङ्कारस्येत्यर्थः। यद्वा स्वरूपशब्दो धर्मिपरः, ज्ञानस्वरूपस्यैव ज्ञानधर्मकत्वं संभवति न तु जडस्वरूपस्य यथा घटादेरिति ज्ञानस्वरूपत्वात् ज्ञानधर्मकस्यैव स्वधर्मभूतज्ञानप्रसरकर्तृत्वरूपविकारसंभवः, न तु जडस्वरूपत्वात् अतद्धर्मकस्याहङ्कारस्येत्यर्थः। एवं विक्रियात्मकत्वात् ज्ञातृत्वस्य आत्मधर्मत्वानुपपत्तिर्निरस्ता। अथ परोक्तान् ज्ञातृत्वनिर्वाहप्रकारान्निरस्यति विज्ञातृत्वं चिच्छायापत्तिकृतं चित्संपर्ककृतं चिदभिव्यञ्जकत्वकृतमिति त्रयः पक्षाः, तत्र प्रथमं चिच्छायापत्तिपक्षमाशङ्कते "जडे"ति, दूषयति "केयमि"ति, केयं दुर्निरूपेत्यर्थः, विकल्पयति "किमि"ति, चिच्छायाशब्दयोः समासान्तर्गता विभक्तिः षष्ठी वा सप्तमी वेति भावः। अहङ्कारच्छायापत्तिः संविदः अहङ्कारे संविद्गतज्ञातृत्वच्छायापत्तिरित्यर्थः संविच्छायापत्तिरहङ्कारस्येति संविद्यहङ्कारगतज्ञातृत्वच्छायापत्तिरित्यर्थः प्रथमं दूषयति—

**सू० न तावत्संविदः, संविदि ज्ञातृत्वानभ्युपगमात्, नाप्यहङ्कारस्य, तस्य जडस्य उक्तरीत्या ज्ञातृत्वायोगात् द्वयोरप्यचाक्षुषत्वाच्च, न ह्यचाक्षुषाणां छाया दृष्टा। अथाग्निसंपर्कादयःपिण्डौष्ण्यवच्चित्संपर्काद् ज्ञातृत्वोपलब्धिरिति, नैतत्संविदि वास्तवज्ञातृत्वानभ्युपगमादेव न तत्संपर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा, अहङ्कारस्य त्वचेतनस्य ज्ञातृत्वासंभवादेव सुतराम्—**

टी० "न ताव"दिति, शिरोऽन्तरं दूषयति "नापी"ति, पूर्वमचेतनत्वप्रकृतिपरिणामित्वादिभिरहङ्कारस्य ज्ञातृत्वव्युदासमभिप्रेत्याह "उक्तरीत्ये"ति, दूषणान्तरमाह "द्वयोरपी"ति, तद्विवृणोति "न ही"ति,

चित्संपर्कपक्षं शङ्कते "अथे"ति, पूर्ववद्विकल्प्य दूषयति "नैतद्धि"ति, इयं साधारणी प्रतिज्ञा अहङ्कारे संवित्संपर्कात् ज्ञातृत्वं व्युदस्यति "संविदी"ति, अहङ्कारसंपर्कात्संविदि ज्ञातृत्वं दूषयति "अहङ्कारस्य त्वि"ति, सुतरामिति ज्ञानस्या जडत्वात् ज्ञानाश्रयत्वं स्वमते न संभवति अहङ्कारस्य जडत्वेन वस्तुतो ज्ञानाश्रयत्वस्य स्वपरपक्षयोरुभयोरप्यसम्भवात् न तत्संपर्कात्संविदि ज्ञातृत्वमिति भावः ।

सू० न तत्संपर्कात्संविदि ज्ञातृत्वं तदुपलब्धिर्वा । यदप्युक्तम्

टी० इमा[1]गतकाष्ठादीनां लवणसंबन्धाल्लवणत्वोत्पत्तिर्दृश्यते अयःपिण्डेऽग्निसंपर्कादुष्णत्वमुपलभ्यते अतो ज्ञातृत्वं तदुपलब्धिर्वेति पृथगुक्तम्

ननु पूर्वोक्ते पक्षद्वयेऽपि ज्ञातृत्वस्य छायापत्तिसंपर्कौ निरस्तौ ज्ञानच्छायापत्तिसंपर्कौ कस्माद्निरस्तौ वक्ष्यमाणाभिव्यक्तिपक्षान्तर्भावादिति ब्रूमः । ज्ञानस्याहङ्कारे च्छायापत्तिर्नाम दर्पणे मुखस्येव तदाधेयतया अभिव्यक्तता संपर्कपक्षेऽप्यधिष्ठानतया संपर्को ज्ञातृत्वप्रतीत्यनुपयुक्तः अत आधेयतया संपर्को वक्तव्यः स च तत्स्थतयाऽभिव्यक्तावन्तर्गतः, अतस्तत्रानुपन्यासः । किंच छायापत्तिस्संविदोऽचाक्षुषत्वेनैव निरस्ता संपर्कश्चोपलम्भानुगुण्येन वक्तव्यत्वादपृथक्सिद्धधर्मधर्मिभावेन वक्तव्यस्स च नोपपन्नः, अचेतनस्य चैतन्यस्य च तथाविधधर्मधर्मिभावायोगात् दण्डदेवदत्तयोरिव ज्ञानज्ञात्रोः पृथगवस्थानादर्शनादपृथगवस्थितयोस्संपर्कश्चानुपपन्न इत्यनुसंधेयम् । अथाभिव्यक्तिपक्षमनुभाषितुं छायापत्तिसंपर्कपक्षयोरभिव्यक्तिपक्षस्य चान्योन्यवैषम्यं दर्शयति–

सू० उभयत्र वस्तुतो न ज्ञातृत्वमस्ति अहङ्कारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति आदर्शादिवदिति तदयुक्तम् आत्मनः स्वयंज्योतिषो जडस्वरूपादहङ्काराभिव्यङ्ग्यत्वायोगात् तदुक्तं "भ्रान्ताङ्गार इवादित्यमच-

[1] इमा स्याल्लवणाकरः ।

ङ्कारो जडात्मकः । स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमदि''ति, स्वयंप्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थास्तच्च तदायत्तप्रकाशोऽचिदहङ्कारोऽनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति ।

टी० ''उभयत्रे''ति, वस्तुत इति छायापत्त्यादिना आपाद्यमानादध्यासात्पूर्वमेव सिद्धत्वं विवक्षितं न तु पारमार्थिकत्वम् अलातचक्रादेरपि प्रतिबिम्बदर्शनादुष्णजलसंपर्कादनुष्णेऽप्यौष्ण्योपलम्भाच्च एकत्र पूर्वसिद्धज्ञातृत्वाध्यासादन्यत्र ज्ञातृत्वनिर्वाहः पूर्वस्मिन् पक्षद्वये, अभिव्यक्तिपक्षे तु ज्ञातृत्वस्य पूर्वसिद्धिमनपेक्ष्य ज्ञानाध्यासात् ज्ञातृत्वनिर्वाह इति वैषम्यम् अभिव्यक्तिपक्षमाह ''अहङ्कारस्त्वि''ति, दूषयति ''तदयुक्त''मिति, कुत इत्यपेक्षायामात्मनोऽभिव्यञ्जकापेक्षा च नास्ति अहङ्कारस्याभिव्यञ्जकत्वशक्तिरपि नास्तीत्याह ''आत्मन इत्यादिना, स्वोक्तार्थस्य सांप्रदायिकत्वदर्शनार्थं दृष्टान्तेन तद्विशदीकरणार्थं चात्मसिद्धियन्थमाह ''तदुक्त''मिति, शान्ताङ्गार इत्यादिकं श्लोकं विवृणोति ''स्वय''मिति, स्वयंप्रकाश—शब्देनाभिव्यञ्जकापेक्षाया अभाव उक्तः, अनुभवाधीनसिद्धय इत्यनेन अहङ्कारस्याभिव्यञ्जकत्वाभाव उक्तः, अचिदहङ्कार इत्यनेन चिन्मात्रातिरेकित्वात्तदायत्तप्रकाश इति परोक्तहेतुस्सूचितः। अनुदितानस्तमितस्वरूपप्रकाशं कदाचिदप्रकाशं चेत्तदाऽभिव्यञ्जकापेक्षा स्यात्तदभावात्कदाचिदप्यभिव्यञ्जकापेक्षा नास्तीत्यर्थः । अशेषार्थसिद्धिहेतुभूतं त्वयाऽपि विषयप्रकाशकत्वेन हि स्वयंप्रकाशत्वं समर्थितमिति भावः । परिहसन्तीति ईदृशमनुभवमीदृशोऽहङ्कारोऽभिव्यनक्तीति त्वदीया एव हसन्तीति भावः । अहङ्कारानुभवयोरभिव्यञ्जकत्वाभिव्यङ्ग्यत्वानभ्युपगमेन दूषणमुक्तं तयोरभिव्यञ्जकत्वमभिव्यङ्ग्यत्वं चास्तु तत्परस्परं नोपपद्यत इत्याह—

सू० किं चाहङ्कारानुभवयोः स्वभावविरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्ग्यव्यञ्जकभावः, यथोक्तं "व्यङ्ग्यव्यञ्जकत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः। व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्यात् यथा घटे" ॥ इति,

न च रविकरनिकराणां स्वाभिव्यञ्जककरतलाभिव्यङ्ग्यत्ववत्संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदः साधीयः, तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात् करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्ते इति तद्बाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम् ।

टी० "किं चे"ति, स्वभावविरोधात् अनुभवस्याशेषार्थसिद्धिहेतुत्वं तद्व्यतिरिक्तत्वेनाहङ्कारस्यास्य तदधीनसिद्धित्वं च विरोधः, अतो यथा पितापुत्रयोरन्यं प्रति पुत्रत्वे पितृत्वे च सत्यपि परस्परं पितृत्वपुत्रत्वव्यत्ययो नोपपद्यते, एवमन्यापेक्षया तयोर्व्यङ्ग्यव्यञ्जकभावसंभवेऽपि परस्परं नोपपद्यत इत्यर्थः । दूषणान्तरं चाह "अनुभूतेरननुभूतित्वप्रसङ्गाच्चे"ति, अस्मिन्नर्थे ऽप्यात्मसिद्धियन्थं दर्शयति "यथोक्त"मिति, प्रातिकूल्यतः पूर्वोक्तस्वभावविरोधशब्देन प्रातिकूल्यशब्दो व्याख्यातः, तद्व्यङ्ग्यस्यैव तद्व्यञ्जकत्वे परोक्तदृष्टान्तं दूषयिष्यन्नाह "न चे"ति, दृष्टान्तस्य साध्यविकलत्वमाह "तत्रापी"ति, तत्र तथात्वस्यान्यथासिद्धिं दर्शयति "करतले"ति, न हि ब्रह्म प्रसरणस्वभावं द्रव्यम् अतस्तद्बाहुल्यहेतुत्वमहङ्कारस्यानुपपन्नमित्यर्थः । तथा अहङ्कारेणास्याभिव्यक्तिं त्रिधा विकल्प्य दूषयति—

सू० किंचास्य संविद्रूपस्यात्मनोऽहङ्कारनिर्वर्त्याभिव्यक्तिः किंरूपा? न तावदुत्पत्तिः स्वतःसिद्धतया अनन्योत्पाद्यत्वा-

भ्युपगमात्, नापि तत्प्रकाशनं तस्या अनुभवान्तरानुभाव्यत्वात् तत एव च न तदनुभवसाधनानुग्रहः ।

टी० "किंचेत्यादिना, किंरूपा–किं–शब्दः क्षेपार्थः, दुर्निरूपेत्यर्थः कुत ? इत्यत्रापेक्षायामभिव्यक्तिर्नाम किमुत्पत्तिः ? उत प्रकाशनम् ? उतानुभवसाधनानुग्रह ? इति त्रिधा विकल्पमभिप्रेत्योत्पत्तिपक्षं दूषयति "न तावद्धि"ति, अनुत्पन्नस्य घटादेरभिव्यक्त्यसंभवादुत्पादकस्यापि दण्डचक्रादेरुत्पादनद्वारा अभिव्यक्तिहेतुत्वादुत्पत्तिरपि विकल्पशिरसि निवेशिता । किंच व्यङ्ग्यप्रकाशोत्पादनं व्यञ्जनं संविदः स्वयमेव प्रकाशरूपत्वात्तदुत्पत्तिरेव तत्प्रकाशोत्पत्तिरूपाऽभिव्यक्तिरिति विकल्पशिरस्युत्पत्तिनिवेशः । "स्वतस्सिद्धतये"ति, स्वतस्सिद्धतया हि प्रागभावाभाव उक्तः, अनादित्वादिति वाऽर्थः, अथ द्वितीयं व्युदस्यति "नापी"ति, प्रकाशनम् अनुभवविषयप्रकाशोत्पत्तिः । अथ तृतीयं प्रतिवक्ति "तत"इति, तत एव प्रकाशनानुपपत्तेरेव न चानन्तरग्रन्थोत्थानमनुपपन्नम् अनुग्राहकद्वैविध्यस्य तन्निरासानुपयोगात् उत्तरत्रात्मसिद्धिग्रन्थोदाहरणं च न सङ्गतम् इन्द्रियासम्बन्धवाचित्वेनानुग्रहद्वैविध्यानुपयोगात् अत्रोच्यते पूर्वमनुग्राह्यजन्यप्रकाशविषयानुभूतिपर्यालोचनया तदनुभवसाधनानुग्रहो दूषितः, इदानीमनुग्रहप्रकारविशेषपर्यालोचनया दूषणमाह–

भू० स हि द्विधा ज्ञेयस्येन्द्रियसंबन्धहेतुत्वेन वा यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसंबन्धहेतुत्वेन बोद्धृगतकल्मषापनयनेन वा यथा परतत्त्वावबोधनसाधनस्य शास्त्रस्य शमदमादिना यथोक्तं "करणानामभूमित्वान्न तत्संबन्धहेतुते"ति,

टी० "स ही"ति, द्विविधस्याप्यनुपपत्तिं दर्शयितुं प्रथमं द्वैविध्यमाह "ज्ञेयस्ये"ति, शमदमादेः शास्त्रानुग्राहकत्वोक्तिः परमतेन तद्धि उपासनानुग्राहकम् । ननु स हि द्विधेति वक्तुमयुक्तम् अनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावात् अनुमानादेर्व्याप्तिग्रहादिरनुग्रहोऽप्यस्ति इति, उच्यते

करणानुग्रहः कर्त्रनुग्रहश्चेति कोटिद्वयमेव व्याप्तिग्रहणमपि करणानुग्रहान्तर्भूतम्। यद्वा दृष्टमुखेनानुग्रहो ऽदृष्टमुखेन चेति द्विधा व्याप्तिग्रहणमपि दृष्टमुखेनानुग्रहः, तस्मादिन्द्रियसंबन्धहेतुत्वेनेत्येतत्करणानुग्रहस्य दृष्टमुखेनानुग्रहस्य चोपलक्षणं, तत्राहङ्काराभिव्यङ्ग्यायास्संविदोऽनुमानविषयत्वासंभवादिन्द्रियसंबन्धहेतुत्वेनेत्युक्तं "बोद्धृगतकल्मषापनयने"ति च कर्त्रनुग्रहस्यादृष्टमुखेनानुग्रहस्य चोपलक्षणमुक्तम्। आत्मसिद्धिग्रन्थेऽप्ययमेव भावः। एवं द्वैविध्यदर्शनेन द्विधाभूतोऽप्यनुग्रहोऽहङ्कारस्य न सुवच इत्यनुषङ्गेण योजना। कथमत्र द्विविधस्याप्यनुग्रहस्यानुपपत्तिरिति शङ्कायामात्मसिद्धिग्रन्थमाह "यथोक्त"मिति करणानामभूमित्वान्न तत्संबन्धहेतुते"ति, हेतुत्वलक्षणानुग्रहोऽनुपपन्न इति दर्शितः, बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्न ग्रन्थस्था। अत्र केचिदाचार्या एवं व्याचक्षते शमादेरनुग्राहकत्वं शास्त्रसिद्धं न तथाऽहङ्कारस्यानुग्राहकत्वं शास्त्रसिद्धमिति स्फुटत्वान्न ग्रन्थे कण्ठोक्त्या निरास इति। पूर्वार्द्धोदाहरणेन श्लोकस्योत्तरार्धे बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्द्रष्टव्येति चाचार्याः। तदिदमुत्तरार्द्धम् "अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यत" इति, एकस्यैव स्वप्रतियोगितया शोध्यत्वं शोधकत्वं चानुपपन्नमित्यर्थः। अयन्तु भाष्याभिप्रायः—अहमर्थस्य बोद्धृगतकल्मषापनयने कर्तृत्वं किं स्वरूपेण : उतादृष्टकिंचित्कारमुखेन? प्रथमे कर्मकर्तृविरोधः, एकस्यैव स्वापेक्षया शोध्यशोधकत्वानुपपत्तेः, द्वितीये निष्प्रमाणकत्वं, न ह्यन्तःकरणस्यादृष्टवशादन्तःकरणशुद्धिरित्यत्र प्रमाणमस्तीति पूर्वमिन्द्रियगोचरत्वानभ्युपगमेन दूषणमुक्तम्। अथानुभाव्यत्वाभ्युपगमेन दूषणमाह "किं चे"ति, अनुग्रहस्वरूपं शिक्षयति—

भू० किंचानुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः, स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्धकनिरसनेन भवेत्, यथा रूपादिग्रहणोत्पत्तिविरो[1]धिसन्त-

[1] निरोधिसंतमसनिरसनेनेति पाठान्तरम्।

मसनिरसनेन चक्षुषो दीपादिना, न चेह तथाविधं निरसनीयं संभाव्यते

टी० "स ही"ति, व्यक्तिदर्पणादावनुग्रहप्रकारान्तरे दृष्टेऽपि कथं प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः? उच्यते जातिव्यक्त्योर्नियतधर्मिधर्मभावेन व्यक्तिर्जातेरभिव्यञ्जिका न तथा अहङ्कारानुभवयोर्नियतधर्मधर्मिभावोऽस्ति स तु परेणैव निरस्तः। मूर्तद्रव्यभूतश्चाक्षुषरश्मिप्रतिहतिहेतुर्दर्पणो मूर्तद्रव्यभूतचाक्षुषरश्मीन्मुखेन संबन्धयति न तथाऽहङ्कारोमूर्तद्रव्यं कस्य चित्प्रतिहतिहेतुरिति वक्ष्यमाणामिहानुग्रहप्रकारान्तरानुपपत्तिमभिप्रेत्य प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः। ईदृशानुग्रहे दृष्टान्तमाह "यथा रूपादी"ति, ततः किमित्यत्राह "न चेहे"ति, तदुपपादयति "न तावदि"ति, किं प्रागभावरूपमज्ञानं? किं वा भावरूपम? उतान्यन्निरसनीयमुच्यत इति शिरस्त्रयमभिप्रेत्य तावच्छब्दः प्रयुक्तः "न तावदि"ति ग्रन्थेनान्यन्निरसनीयं निरस्तम्। यद्वाऽहङ्कारस्याज्ञाननिरासकत्वमज्ञानस्य संवित्संबन्धित्वं चोभयमनुपपन्नमित्यभिप्रेत्य प्रथममहङ्कारापनेयत्वमज्ञानस्य प्रतिक्षिपति—

मू० न तावत्संविदाऽऽत्मगतं तज्ज्ञानोत्पत्तिविरो[1]धि किंचिदप्यहङ्कारापनेयमस्ति, अस्ति ह्यज्ञानमिति चेन्न अज्ञानस्याहङ्कारापनोद्यत्वा[2]नभ्युपगमात् ज्ञानस्यैव ह्यज्ञानस्य निवर्त्तकम्

न च संविदाश्रयत्वमज्ञानस्य संभवति ज्ञानसमानाश्रयत्वात्तत्समानविषयत्वाच्च ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति

टी० "न ताव"दिति,। अहङ्कारापनेयमज्ञानमस्तीति शङ्कते "अस्ति

[1] निरोधीति पाठान्तरम्।
[2] अहङ्कारापोद्यत्वानभ्युपगमादिति पाठान्तरं तु न साधु प्रतीमः।

ही''ति, दूषयति, ''ने''ति, अज्ञान–शब्दोभावरूपस्याभावरूपस्य च साधा-रण:, दूषणमपि साधारणं, द्विविधस्याप्यज्ञानस्य अहङ्कारापनोद्यत्वाभावा-द्वात् किं निवर्तकमित्यत्राह ''ज्ञानमेव ही''ति, प्रागभावस्यापि ज्ञानोत्पत्ति-र्निवर्तिका भावरूपस्यापि ज्ञाननिवर्त्यत्वं पराऽभ्युपेतं '''द्विविध[1]स्यापि ज्ञा-नोत्पत्तिर्निवर्त्तिका भावरूपस्यापि ज्ञाननिवर्त्तित्वं पराभ्युपेतम्''' एवमज्ञान-स्यापि संविदाश्रयत्वे सत्यप्यहङ्कारापनोद्यत्वायोगात्तन्निरसनरूपानुग्रहो न संभवतीत्युक्तम् । अथाज्ञानस्य संविदाश्रयत्वं चानुपपन्नमित्याह ''न चे''ति, संविदाश्रयत्वं संवित्संबन्धित्वमित्यर्थः । आश्रयणं संबन्धः, संबन्धश्च कर्म-त्वेनाश्रयत्वेन चेत्युभयविधसंबन्धिपर आश्रय–शब्दः, आश्रयश्चेतसो ब्रह्मे-त्यादिप्रयोगाच्चाश्रय–शब्देन विषयस्याप्युपस्थापनं युक्तं, संविदोऽज्ञानसं-बन्धः किमाश्रयतया ? उत विषयतया ? उभयथाऽपि संबन्धोऽनुपपन्न इत्यर्थः । कुत इत्यत्राह ''ज्ञाने''ति, ततः किमित्यत्राह ''ज्ञातृभावे''ति, साक्षिणि द्रष्टुरेव साक्षित्वं ज्ञप्तौ साक्षित्वमपि व्याहतं भवतीत्यभिप्रायः । भवितुमर्ह-तीति निर्देशेनाश्रयतया विषयतया वा संबन्धमात्रं विवक्षितम्, अनेन व्यतिरेकव्याप्तिर्दर्शिता भवति संविदाश्रयत्वाभावे अन्वयव्याप्तिं दर्शयति-

सू० यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वं तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात् संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽप्यात्मतयाऽभ्युपेतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः, ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति यथा रज्ज्वादौ, अतो न केनापि कदाचित्संविदाश्रयमज्ञानमुच्छि[2]द्येत अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते ज्ञानप्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्प-

१ रेखात्रयमध्यस्थः पाठोऽसङ्गत इति प्रतीमः, न चायं च पुस्तकान्तरे उपलभ्यते ।
२ उच्छिद्यते इति पाठान्तरम् ।

त्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः

टी० "यथे"ति, अज्ञानाश्रयत्वं हि ज्ञानप्रागभावाश्रयत्वमनिर्वचनीयाज्ञानाश्रयत्वं वा तद् घटादिषु नास्तीत्यर्थः, "ज्ञानाश्रयत्वप्रसक्ती"ति, ज्ञातुरप्यज्ञानाश्रयत्वं ज्ञानाश्रयत्वं च कालभेदादविरुद्धमिति भावः। ज्ञानात्यन्ताभावाश्रयत्वं हि घटादेः, ज्ञानं नाज्ञानाश्रयः, न चाज्ञानविषयः अज्ञानाश्रयत्वे तद्विषयत्वे चोपगम्यमाने ज्ञातृत्वज्ञेयत्वप्रसङ्ग इति प्रतिकूलतर्क उक्तो भवति। एवमज्ञानाश्रयत्वाऽनभ्युपगमेन दूषणमुक्तं तदभ्युपगमेन दूषणमाह "संविद"इति, अवच्छिन्नज्ञानस्यानुभाव्यत्वेऽङ्गीकृतेऽप्यनवच्छिन्नस्यात्मभूतस्य ज्ञानस्यानुभाव्यत्वानभ्युपगमादित्यभिप्रायेणाह "आत्मताऽभ्युपेताया" इति, ज्ञानविषयस्यैवाज्ञाननिवृत्तिं सदृष्टान्तमाह 'ज्ञानं ही"ति, यद्यविषयेऽप्यज्ञाननिवृत्तिस्तर्हि शुक्तिज्ञानेन सर्पभ्रमनिवृत्तिः स्यादित्यभिप्रायः, एवं ज्ञाननिवर्त्याज्ञानाश्रयत्वे ज्ञानविषयत्वप्रसङ्ग इत्युक्तं भवति। आश्रयत्वाभ्युपमेनोक्तं दूषणं निगमयति "अत"इति, त्वयाऽहङ्कारापनोद्यत्वेनोक्तं ज्ञानं किं सदसदनिर्वचनीयम्? उत ज्ञानप्रागभावरूपमिति विकल्प्याऽऽह "अस्य चे"ति, द्वितीयं प्रतिवक्ति "ज्ञानप्रागभावे"ति, विरोधि-शब्देन प्रतिबन्धकत्वं विवक्षितम् न सहानवस्थानमात्रम्। अभिव्यक्तेर्दुर्निरूपत्वं निगमयति–

सू० अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः। न च स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः प्रदीपादिष्वदर्शनात् यथाऽवस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च, तच्च स्वतः प्रामाण्यन्यायसिद्धम्।

टी० "अत"इति, केनापि प्रकारेण–उत्पादकत्वेन वा प्रकाशकत्वेन वा तदनुभवसाधनानुग्राहकत्वेन वेत्यर्थः। अथ स्वात्मस्थतयाऽभि-

१ सर्वभ्रमनिवृत्तिरिति पाठोऽपि पुस्तकान्तरस्थो योजयितुं शक्यः।

व्यक्तिं दूषयति "न चे"ति, व्यभिचारमाह "प्रदीपादिष्वि"ति, हेत्वन्तरं चाह "यथाऽवस्थिते"ति, प्रतीतिर्व्यवहारानुगुण्यं तदनुगुणाज्ज्ञानादीनां स्वभावादित्यर्थः । तदेवोपपादयति "तच्चे"ति, प्रामाण्याप्रामाण्यविषयाश्चत्वारः पक्षाः प्रामाण्याप्रामाण्ये द्वे च परतः, द्वे च स्वतः, प्रामाण्यं परतो ऽन्यत्स्वतः प्रामाण्यं स्वतोऽन्यत्परत इति प्रथममनुपपन्नं द्विस्वभा[1]वत्वादिप्रसङ्गात् प्रामाण्याप्रामाण्ये द्वे च अन्यत्र विद्येते चेत् तत्संबन्धात् ज्ञाने तथात्वं तत्संबन्धाभावेऽनुभयत्वं च युक्तम् अनुष्णाशीतवत्, अन्यत्र तयोरविद्यमानत्वात्परतस्त्वमनुपपन्नं प्रामाण्यबुभुत्सापरम्परयाऽनवस्थाप्रसङ्गाच्च द्वयोरपि स्वतस्त्वमनुपपन्नं विरुद्धधर्मत्वेन व्याघातात्

न च व्यक्तिभेदाद्विरोधः, इयं प्रामाण्याश्रयव्यक्तिरियञ्चेति नियामकाभावात् अप्रामाण्यस्यैव स्वतस्त्वमनुपपन्नं प्रामाण्यस्यैव भूयस्त्वादन्यस्याभूयस्त्वाच्च भूयसां स्वतस्त्वमल्पीयस औपाधिकत्वं च युक्तं घटपटादिज्ञानेषु शुक्तिरजतादिज्ञानानामिदमंशेष्वपि प्रामाण्यदर्शनात्तस्य भूयस्त्वम् अतः स्वतःप्रामाण्यं परतोऽप्रामाण्यमिति क्वचिदात्मस्थतयाऽभिव्यञ्जनमभ्युपेत्य व्यभिचार उक्तः । अथ क्वचिदपि तन्नास्तीत्याह—

**सू० न च दर्पणादिर्मुखादेरभिव्यञ्जकः, अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः, तद्दोषकृतश्च तत्रान्यथाऽवभासः, अभिव्यञ्जकस्त्वालोकादिरेव, न चेह तथाऽहङ्कारेण संविदि स्वप्रकाशायां ताहशदोषापादनं संभवति, व्यक्तस्तु जातिराकार इति तदाश्रयतया प्रतीतिः, न तु व्यक्तिव्यङ्ग्यत्वात्, अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किंचिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वा, तस्मात्स्वत एव ज्ञा[?]तया सिद्ध्यन्नहमर्थ एव प्रत्यगात्मा न ज्ञप्तिमात्रम् ॥**

---

१ निःस्वभावत्वादिति ।

टी० "न चे"ति, तर्हि मुखदर्शनाय दर्पणादिकं नोपादीयेतेत्यत्राह "अपि त्वि"ति, प्रतिफलनस्य दोषत्वमन्यथाज्ञानहेतुत्वादित्याह "तद्दोषे"ति, कस्तत्राभिव्यञ्जक? इत्यत्राह "अभिव्यञ्जकास्त्वि"ति, अहङ्कारस्य मूर्तस्वच्छस्थूलद्रव्यत्वाभावात्संविदो ज्ञेयत्वाभावादचाक्षुषत्वाच्चाहङ्कारेण संविद्यविषयभूतायां तद्ग्राहकवस्तुप्रतिफलनदोषो न संभवतीत्याह "न चेहे"ति, व्यक्तौ जातिप्रतीतिर्नियतधर्मधर्मिभावान्न तु व्यङ्ग्यत्वादित्याह "व्यक्ते"रिति, एवं द[1]र्पणव्यक्तिनिर्वाहद्वयं हृदि निधाय पूर्वं प्रतिबन्धनिरसनरूपानुग्रहो दूषितः, धर्मधर्मिभावेन वस्तुतस्तात्स्थ्येनोपलब्धिर्व्यक्तौ, दर्पणे तु प्रतिफलनरूपदोषादेवं प्रपत्ते न संभवतीत्याह "अत"इति, वस्तुतः कारणं धर्मधर्मिभावः, दोषस्तु तात्स्थ्येनोपलब्धिकारणं मूर्तस्वच्छस्थूलद्रव्यत्वम् उभयमप्यहङ्कारे नास्तीत्यर्थः, वस्तुतः कारणाभावान्न ज्ञातृत्वं विद्यते दोषरूपकारणाभावान्नोपलभ्यते चेत्यभिप्रायेणाह "नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वे"ति, ज्ञातुरात्मत्वं निगमयति "तस्मा"दिति, ज्ञप्तेरात्मत्वमयुक्तम् अहंत्वाभावे प्रत्यक्त्वायोगादित्याह—

भू० अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तं, तमोगुणाभिभवात्परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽप्याप्रबोधादहमित्येकाकारेणात्मनः स्फुरणात्सुषुप्तावपि नाहंभावविगमः

टी० "अहंभावविगम"इति, अहमिति व्यवहारानुगुणभासनविरहे स्वस्मै भासमानत्वं न स्यात् अतः प्रत्यक्त्वमप्यहमर्थस्यैवात्मत्वसाधकमित्यर्थः। अथ सुषुप्तावहमर्थस्फुरणमस्तीति साधयितुं वेदान्तावलम्बिभिः सर्वैः स्वयंज्योतिष्ट्व श्रुत्यनुसारात् सुषुप्तावात्मस्फुरणमभ्युपेत्यं, तत्र नाहं खल्वयमेवं संप्रत्यात्मानं जानाति "अयमहमस्मीति श्रुत्या मामप्यहन्न ज्ञातवानिति परामर्शाच्च नाहमर्थानुभवः, अतोऽनुभूतिस्फुरणमेव तदानीमिति

१ एतद्दर्पणव्यक्तिनिर्वाहद्वयमिति द्राविडपाठः।

शङ्कायामहमर्थस्याविशदस्फुरणमस्तीति सोपपत्तिकं प्रतिजानीते तम इत्यादिना चस्त्वर्थः शङ्कानिवृत्तौ, तमोगुणाभिभवहेतुकात् परागर्थानुभवाभावात् स्फुटावभासाभावः, विविक्तप्रतिभासः व्यावृत्तप्रतिभासः, अनेकविशेषणविशिष्टावभासः स्फुटावभासः, व्यावर्त्तकब्राह्मणत्वादिबाह्यधर्मविशिष्टत्वेन बुद्धिसुखाद्यान्तरधर्मविशिष्टत्वेन च प्रतिभासाभावात् सकलेतरव्यावृत्ततया स्फुटतया च प्रतिभासाभावः । केनाकारेण स्फुरतीत्यत्राह "अहमित्येकाकारेण स्फुरणा" दिति, अहमिति न शब्दानुकारः, अपि त्वेतद्वाच्यार्थानुकारः प्रत्यक्त्वाकारेण स्फुरणादित्यर्थः, एकशब्देनाहंभावाविगमो विवक्षितः । यद्वा एकाकारेण सर्वात्मसाधारणाकारेणेत्यर्थः, प्रत्यक्त्वादिको हि सर्वात्मसाधारणः सुखदुःखादयो देवत्वादयश्च न हि सर्वात्मसाधारणाः सुषुप्तौ भासमान आत्मन्यहंभावस्साध्यः, तथा स्फुरणं हेतुः । विशदावभासाभावादहमर्थस्फुरणन्नास्तीत्यत्राह—

सू० भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम् न हि सुप्तोत्थितः कश्चिदहंभाववियुक्तार्थान्तरप्रत्यनीकाकारा ऽनुभूतिरहमज्ञानसाक्षितयाऽवतिष्ठे इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति [1] एवं तर्हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति

टी० "भवदभिमताया अनुभूतेरपी"ति, न केवलमहमर्थस्फुरण एवावैशद्यदोषः, अनुभूतिस्फुरणेऽपि स तुल्यस्त्वया वाच्य, अतो विशदावभासाभावान्नास्तित्वं चेत् त्वद्यात्मनोऽपि तदानीं स्फुरणन्न स्यात् ज्ञातृज्ञेयोपश्लेषविरहात् स्फुटानवभास इति हि तदभ्युपगमः इत्यभिप्रायः । मृषावादिभिर्बाह्यान्तरैरपि जागरितावस्थायामेवाविशदावभासो निर्विकल्पकेऽङ्गीकृतः, ते यदि विशदावभासाभावादहमर्थास्फुरणं ब्रूयुः, तत्रापि निर्विकल्पके पृथक्पृथग्वस्तुमात्रावभासाभ्युपमो नोपपद्यते अविशदवस्तुमा-

१ एवं हि सुप्तोत्थितस्येति पुस्तकान्तरपाठः ।

ज्ञावभासः परैरप्रामाणिको निर्विकल्पके स्वीकृतः अत्र तु "अत्रायं पुरुषः स्वयंज्योतिर्भवतीत्यादिश्रुत्यनुसारादविशदावभासः प्रामाणिकः स्वीकृत इति भेदः, अतः सुषुप्तावात्मस्फुरणाभ्युपगमे अविशदावभासाभ्युपगमे च तुल्येऽपि मृषावादिमतादपि स्वपक्षे प्रमाणानुगुण्यं विवक्षुः परपक्षे प्रमाणाननुगुणत्वं दर्शयति "न ही"ति, अहंभाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञातृज्ञेयादिसमस्तविशेषरहितेत्यर्थः प्रत्यक्त्वसिद्ध्यर्थं ज्ञप्तिरहमित्यत्राहं शब्दोपादानम् । स्वपक्षे परामर्शानुगुण्यमाह "एवं ही"ति, अयं परामर्शः सुषुप्तिकाले सुखरूपतयाऽनुभूतात्मगोचरः अतीतकालसंबन्धस्वापौ तु पूर्वकालानुभूतार्थप्रत्यभिज्ञानयोग्यानुपलब्धिभ्यामनुमेयौ स्वतोऽनुकूलतयाऽवभासमानस्याहमर्थस्यानुमानिककालस्वापवैशिष्ट्यगोचरप्रत्यभिज्ञाविशेषोऽयं परामर्शः—

सू० अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते

न च वाच्यं, यथेदानीं सुखं भवति तथा तदानीमप्यस्वाप्समित्येषा प्रतिपत्तिरिति

टी० "सुखमहमस्वाप्समिति, एवं स्वपरमतयोः परामर्शानुगुण्यतदभावरूपवैषम्यमुक्तं श्रुतिस्वारस्यं च अस्मन्मते "अत्रायं पुरुषः स्वयंज्योतिर्भवतीति पुरुषशब्दश्रवणात् पुरुषशब्दो न संविन्मात्रपरः, एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुष"इति ज्ञातुरेव पुरुषत्वश्रवणाल्लोके ज्ञातरि पुरुषशब्दप्रसिद्धेश्च प्रत्यक्त्वसिद्धिश्चास्मन्मत एवेति वक्ष्यते । उक्तपरामर्शफलितमर्थमाह "अनेने"ति, सुखमहमस्वाप्समिति परामर्शे सुखमित्यनेन तदानीमनुकूलतया भासमानत्वमनुसंहितं भवति, अहमित्यनेन स्वस्मै भासमानत्वरूपप्रत्यक्त्वं चानुसंहितं भवति यथा मन्दमगच्छं मधुरमगायमिति परामर्शेन पूर्वं गमनगानाभ्यां सह तदानीन्तनं मान्द्यं माधुर्यं चानुसंहितं भवति तद्वदित्यर्थः । स्वस्मै स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण सुखित्वमित्युक्तं स्वस्म भासत इति ज्ञा-

नप्रतिसंबन्धित्वरूपप्रत्यक्त्वाभिप्रायेण ज्ञातृत्वमित्युक्तं न तु धर्मभूतज्ञान-स्फुरणात्, तत्तु विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव न सर्वेषां सर्वदा तथैवेति भाष्यस्वारस्यविरुद्धं "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगा" दिति सूत्रस्वारस्यविरुद्धं च अस्मरणनियमानुपपत्तिविरुद्धं च संसारदशायां मनो-व्यापारविरहेऽपि ज्ञानस्यात्मविषयत्वं, तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्यस्वारस्यविरुद्धं च अन्यथा एषां सूत्रभाष्यवचसां संकोचः स्यात् स च संकोचकाभावादनुपपन्नः, तस्मात्तदानीमात्मा प्रत्यक्त्वेनानुकूलत्वेनानुसंहित इति परामर्शफलितार्थः सुखमहमस्वाप्समिति सुखस्य स्वापक्रियाविशेष-णत्वे प्रतीयमाने कथमात्मविशेषणत्वमुच्यत? इति चेत् नैवं क्रियायाः सुखाश्रयत्वायोगेन पुरुषद्वारा क्रियाविशेषणत्वस्य युक्तत्वादिति आत्मनस्त-दानीं न किंचिदवेदिषमित्यज्ञानसाक्षित्वेन स्थितिं वदता अज्ञानाश्रयभूता-हमर्थानुभवोऽभ्युपगन्तव्यः, यथा प्रातश्चत्वरे गजो नास्तीति परामर्शे पूर्वं गजाभावाश्रयभूतं चत्वरमेनुसंहितं भवति तद्वत् अस्वाप्समिति परामर्शेन मन्दमगच्छमित्यत्र गमनवत्स्वापोऽपि तदाऽनुसंहितः स्यादिति चेन्न यथा प्रातश्चत्वरे गजो नास्तीत्यत्र पूर्वं गजाभावाननुसंधानेऽपि एवं परामर्शोप-पत्तिः तद्वत्सकलज्ञाननिवृत्तिरूपस्वापस्य तदानीमननुसंहितत्वेऽप्येवं परा-मर्शोपपत्तेः, तत्र हि प्रातश्चत्वरमेवानुभूतं न गजाभावः प्रतियोगिभूत-गजास्मरणात् पश्चाद् गजः किं स्थित इति पृष्टेन योग्यार्थाननुस्मरणलि-ङ्गेनाभावोऽनुमीयते तद्वत्सकलज्ञाननिवृत्तिरूपस्वापोऽपि योग्याननुस्मरण-लिङ्गेनानुमीयते

ननु सुखमहमस्वाप्समिति परामर्शस्वरूपे सति स्वापादेस्तदानीम-ननुभवः सुखित्वादेरनुभवश्च कथमुच्यते सर्वमप्यनुभूतं स्यात् न वा स्यात् नैतत् सुखमहमस्वाप्समित्यत्र यस्मिन्नंशे प्रतीतिस्वारस्यापवादकमस्ति तद्विषयप्रतिपत्तिस्वारस्यभङ्गेऽप्यनपोदितांशविषयप्रतिपत्तिस्वारस्याभङ्गात्, तत्र स्वापदशायां योऽर्थोनानुभवितुं शक्यः तद्विषयप्रतिपत्तिस्वारस्यं भज्यते यस्तु तदानीमनुभवयोग्यः तद्विषयप्रतिपत्तिस्वारस्यं तिष्ठत्येव बाह्यान्तः-करणजन्यसमस्तज्ञानाभावरूपत्वात् नस्वापस्तदाऽनुसंधातुं शक्यते अनुसं-

धानमस्ति चेत् स्वाप एव न स्यात् ऐन्द्रियकसमस्तज्ञाननिवृत्त्यभावात्, नैवं सुखादेः प्रतिपत्त्यनुपपत्तिरिति यथोक्त एवार्थः । अथाऽस्य परामर्शस्य परोक्तान्यथासिद्धिमनूद्य परिहरति "न चेत्यादिना,

मू० अतद्रूपत्वात्प्रतिपत्तेर्न चाहमर्थस्यात्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसंधानानुपपत्तिः, यतः सुषुप्तिदशायां प्रागनुभूतं वस्तु सुप्तोत्थितो मयेदं कृतं मयेदमनुभूतम[1]हमेवेदमवोचमिति परामृशति एतावन्तं कालं न किञ्चिदहमज्ञासिषमिति च परामृशति इति चेत् ततः किं न किंचिदिति कृत्स्नप्रतिषेध इति चेन्न अहमवेदिषमिति वेदितुरहमर्थस्यानुवृत्तेर्वेद्यविषयो हि स प्रतिषेधः, न किञ्चिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात् ॥

टी० "अतद्रूपत्वादि"ति, एवमर्थः किं प्रतिपत्तिस्वारस्यादुतानुपपत्त्याऽभ्युपगम्यत इति विकल्प्य अतद्रूपत्वात्प्रतिपत्तेरिति प्रतिपत्तिस्वारस्यं परिहृतं, यथा मन्दमगच्छम्मधुरमगायमिति परामर्शवचनस्य, न हि तत्र यथेदानीं मान्द्यं माधुर्यं च भवति तथा अगच्छमगायमित्यर्थः, अपि तु गतिगानसमकालत्वमेव मान्द्यमाधुर्ययोरुपपन्नं तद्वत् प्रत्यक्त्वसुखित्वे अपि स्वापसमकालीने इत्यर्थः । अथानुपपत्तिं परिहरति "न चेत्यादिना, अनुपपत्तिश्चात्मनोऽस्थिरत्वमनुभवाभावो वा । तत्र परामर्शेन स्थिरत्वमाह "यत"इति, मयेदं कृतमित्यादयो मानसवाचिककायिकत्रिविधव्यापारविषयपरामर्शपराः। अथाहमर्थानुभवसाधकनिषेधसामान्यविषयं परामर्शं शङ्कते "एतावन्त"मिति, अहमर्थस्य निषेधविषयत्वाभावाभिप्रायेणाह "ततः किमि"ति, परविवक्षितं शङ्कते "न किंचिदि"ति, परिहरति "ने"ति, वेद्य-

१ अहमेतदवोचमिति पुस्तकान्तरम् ।

विषयः—वेद्यप्रतिभासविषयः। कृत्स्नविषयत्वेऽनिष्टमाह "न किंचिदि"ति, नानुभूतिनिषेधस्तस्या अनुवृत्तेरित्याशङ्क्याह—

सू० सुषुप्तिसमयेऽप्यनुसंधीयमानमहमर्थमात्मानं ज्ञातारमह-मिति परामृश्य न किंचिदहं वेदिषमिति वेदने तस्य प्रतिषि-ध्यमाने तस्मिन्काले निषिध्यमानाया वित्तेः सिद्धिमनुव-र्त्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव न किंचिदह-मवेदिषमिति परामर्शेन साधयंस्तमिममर्शं देवानामेव सा-धयतु मामप्यहं न ज्ञातवानित्यहमर्थस्यापि तदानी-मननुसंधानं प्रतीयत इति चेत्स्वानुभवस्ववचनयोर्विरोध-मपि जानन्ति भवन्तः, अहं मां न ज्ञातवानिति ह्यनुभ-ववचने मामिति किं निषिध्यत इति चेत् ॥

टी० "सुषुप्तिसमये त्वि"ति, भवत्पक्षस्य विपरीतोऽयं परामर्श इ-त्यर्थः,यथा प्रातश्चत्वरे गजानुभवं पृष्टेन पश्चाद्योग्यानुस्मरणलिङ्गेन चत्वरे गजाभावं वदता पुरुषेण पूर्वकालीनचत्वरानुभवेन विना गजाभावो वक्तुं न शक्यते तथा अज्ञानाश्रयमहमर्थं वदता स्वापदशायामहमर्थानुभवो-ऽभ्युपगन्तव्यः। अथाप्यहमर्थनिवृत्तिज्ञानानुवृत्तिकथनं चत्वरनिवृत्तिगजाव-स्थानवचनतुल्यमिति भावः। देवानामेव साधयतु—अर्चारूपा हि देवताः प्रतिवचनमकुर्वतामित्यर्थः। क्षमावतामिति वा प्रतिवाद्यसन्निधाविति वा उल्लाकमुक्तमिति वाऽर्थः। अथ निषेधविशेषविषयं परामर्शमाह "मामपी"ति, परिहरति "स्वानुभवे"ति, स्वानुभववचनयोर्नान्योन्यं विरोधः किंतूभयोरप्य-हमर्थानुवृत्तिनिषेधशब्देन विरोध इत्यर्थः। अनुभवैकदेशयोर्वचनैकदेशयोश्च मिथो विरोध इति वाऽर्थः। मिथो विरोधं दर्शयति "अहमि"ति, अहं न ज्ञातवानित्यत्र अज्ञानसाक्षित्वेनाहमर्थानुवृत्तेः स्वानुभवसिद्धौ वचनमपि तदनुगुणमित्यनुभववचनाभ्यामहमर्थानुवृत्तिनिषेधवाक्यविरोध इत्यर्थः। नि-

षेधशब्दतदर्थानुभवयोर्विरोध इति वाऽर्थः, तत्र मामिति पदस्यार्थं वक्तुं परप्रश्नमनुभाषते "मामिती"ति, पूर्वं विरुद्धार्थकथनमसाधु अर्थतत्त्वप्रश्नस्साधुरित्यभिप्रायेणाह–

सू॰ साधु पृष्टं त्वया, तदुच्यते अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते अपि तु प्रबोधसमये ऽनुसंधीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता, अहं मां न ज्ञातवानित्युक्तोर्विषयो विवेचनीयः, जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः स्वापाव(¹)स्थाप्रसिद्धो ऽविशदस्वानुभवैकतानस्त्वाहमर्थोऽहमित्यंशस्य विषयः, अत्र सुप्तोऽहमीदृशो ऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः किंच सुषुप्तावात्मा ऽज्ञानसाक्षित्वेनास्ते इति हि भवदीया प्रक्रिया ॥

टी॰ "साध्वि"ति, निषेधानुवृत्त्योर्विषयभागं दर्शयति "तदुच्यत" इत्यादिना, अहम्मामित्युभयोरपि पदयोर्विशिष्टविषयतैवोचिता नीतिभेदप्रसङ्गादित्यत्राह "अहम्मामिति, विधिनिषेधयोरेकविषयत्वे व्याघातः स्यादिति तन्निवृत्त्यर्थं विषयविषयिविभागः कार्य इत्यर्थः । विषयविभागविपर्यासशङ्कायां विषयविभागमुचितं दर्शयति "जागरिते"ति, यत्सामग्र्यभावात्तदानीन्न प्रकाशते तदेव निषेधविषयः, यदन्या²नपेक्षं स्वयं प्रकाशते तदेवानुवर्त्तत इति अप्रकाशमानस्यानुवृत्तिः प्रकाशमानस्य निषेधश्चानुपपन्नावित्यर्थः । एवं विषयविभागानुगुणमनुभवं दर्शयति "अत्रे"ति, शब्दप्रयोगो विवक्षावशाद्वीस्यं सर्वं वदति वा? तदेकदेशं वदति वा? न किंचिदपि वदति वा? अतः शब्दप्रयोगे वैवक्षिके;प्यनुभव एकरूपः स पुन-

१ स्वाप्ययावस्थाप्रसिद्धइति द्राविडपाठः ।

२ यदन यापेक्षमिति द्राविडपाठः ।

रेवंविषयविभागानुगुण एवेत्यर्थः । अनेनाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति श्रुतिवाक्यस्थोऽयंशब्दो व्याख्यातः । परमतेनेममर्थमुपपादयति किंचेत्यादिना साक्षित्वेनात्माऽभ्युपगम्येत ततः किमित्यत्राह

सू० साक्षित्वं च साक्षाज्ज्ञातृत्वमेव, न ह्यजानतः साक्षित्वं, ज्ञातैव लोकवेदयोः साक्षीति व्यपदिश्यते न ज्ञानमात्रं स्मरति च भगवान् पाणिनिः "साक्षाद् द्रष्टरि संज्ञाया" मिति साक्षाज् ज्ञातर्येव साक्षिशब्दं, स चायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत आत्मने स्वयमवभासमानोऽहमित्येवावभासते इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोऽहमित्येवावभासत इति सिद्धम् । यत्तु मोक्षदशायामहमर्थो नानुवर्त्तत इति तदपेशलम् ॥

टी० "साक्षित्वं चे"ति, साक्षाज् ज्ञातृत्वं साक्षात्काररूपज्ञानाश्रयत्वम् असाक्षात्कर्त्तरि साक्षिशब्दः प्रयुक्तश्चेदौपचारिकः । उपपादयति "न ही"ति, अजानतः—अज्ञातुरित्यर्थः । कुत इत्यत्राह "ज्ञातैव ही"ति, शब्दप्रयोगनियामकं लक्षणमाह "स्मरती"ति, साक्षिशब्दं स्मरतीत्यन्वयः । ततः किमहमर्थस्यात्मत्व? इत्यत्राह "स चे"ति, अस्मिन्नर्थे अनुमानमुत्तरत्र विस्तरेण विवक्षितम् । अत्र सङ्ग्रहेणाह "आत्मने स्वयमि"ति, आत्मने स्वयमेव भासमानोऽहमित्येवावभासत इति व्याप्तिवचनं, जाग्रदात्मा सपक्षः स्वस्मै प्रकाशमानत्वादिति हेतुः । निगमयति "स्वापादी"ति, अविशदावभासस्य सर्वाभ्युपगतत्वाच्छ्रुतिस्वारस्यात्परामर्शस्वारस्यात्साक्षित्वोपपत्तेः प्रत्यक्त्वसिद्धेश्च सुषुप्तावात्मा अहमिति स्फुरतीत्युक्तं भवति । अथ मुक्तावहमर्थानुवृत्तिमनूद्य दूषयति यत्त्वित्यादिना, तुरर्थगौरवविशेषे अपेशलम् । असाध्वित्यर्थः । कुत इत्यत्राह—

मू॰ तथा सत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात्, न चाहमर्थो धर्ममात्रं येन तद्विगमे ऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत प्रत्युत स्वरूपमेवाहमर्थ आत्मनः, ज्ञानं तु तस्य धर्मः, अहं जानामि ज्ञानं मे जातमिति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव, अपि च यः परमार्थतो भ्रान्त्या वा ऽऽध्यात्मिकादिदुःखैर्दुःखितयाऽऽत्मानमनुसंधत्ते अहं दुःखीति,

टी॰ 'तथा सती''ति, सौगतान् ज्ञानसंतत्युच्छेदम्मोक्षं वदतः स्वरूपनाशस्यापुरुषार्थत्वेन दूषयता त्वया शब्दान्तरेण स्वरूपनाश एवोक्तः स्यादित्यर्थः, नैयायिकाद्युक्ते मोक्षेऽप्यपुरुषार्थत्वं तुल्यं दुःखनिवृत्तिः सुखप्राप्तिश्चोभयं पुरुषार्थः, अत्रापुरुषार्थभूतदुःखाभावात्पुरुषार्थान्वयः सुखाभावादपुरुषार्थान्वयश्चेति मुक्तेः पुरुषार्थापुरुषार्थमिश्रत्वं हि स्यात् अहमर्थो ह्यारोपितः, अतस्तद्विगमे स्वरूपनाशो न प्रसजेदित्यत्राह "न चे''ति, कुत इत्यत्राह "अहमि''ति, अहमर्थधर्मतया ज्ञानप्रतीतेरेव पूर्वोक्तहेतोरेवेत्यर्थः। अहमर्थात्मत्वसमर्थनोपजीवनेन स्वरूपनाशप्रसङ्ग उक्तः। एवं धर्मधर्मिभावेन प्रतीत्या अनुवृत्तिरुपपादिता। अथ श्रुत्यर्थापत्तिमाह 'अपि चेत्यादिना, पूर्वमहमर्थस्यात्मत्वसमर्थनाय श्रुत्यर्थापत्तिरुक्ता इदानीमहमर्थस्य मुक्तावनुवृत्त्युपपादनाय तामेव श्रुत्यर्थापत्तिं विस्तरेणाह यः स्वात्मानं दुःखिनमनुसंधत्ते स एव तन्निवृत्तिसाधने प्रवर्तते स चाहमर्थ एव दुःखित्वं भ्रान्तिसिद्धमिति चेत् यः स्वात्मानं भ्रमवन्तमनुसंधत्ते स एव भ्रमनिवृत्तिसाधने प्रवर्तते स चाहमर्थः, द्विचन्द्रज्ञानादिभ्रान्तिमतो ऽपि स्वभ्रमनिवृत्तिरेवापेक्षिता न तु स्वविनाशः, अतो ऽहमर्थविनाशोऽपुरुषार्थ इत्यभिप्रायेण परमार्थतो भ्रान्त्या वेत्युक्तम्। अनुसंधत्त इत्यनेन निरस्ताखिलदुःखो ऽहमित्यत्रापेक्षितं वक्तव्यमुक्तं निरस्तेत्यादिश्लोकं विवृणोति—

सू० सर्वमेतत् दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयमित्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्त्तते, स साधनानुष्ठानेन यद्यहमेव न भविष्यामीत्यवगच्छेदपसर्पेदेवासौ मोक्षकथाप्रस्तावात् ततस्त्वाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात्, अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत् किमनेन मयि विनष्टेऽपि किमपि प्रकाशमात्रमवतिष्ठत इति मत्वा न हि कश्चिद्बुद्धिपूर्वकारी प्रयतते अतोऽहमर्थस्यैव ज्ञातृतया सिद्धतः प्रत्यगात्मत्वम् ॥

टी० सर्वमेतदित्यादिना, अनाकुलः स्वस्थो भवेयमिति अपुनर्भवमपोह्येति तत्फलितमुक्तम् अनाकुल इति आगामिदुःखशङ्कया मनःक्षोभ आकुलत्वं तदभावोऽनाकुलत्वं स्वस्थः—स्वस्मिन् स्थितः—यथावस्थितस्वात्मानुभवपरः अनन्तानन्दभागिति फलितं, स—एव पूर्वं दुःखित एव उत्पन्नानिष्टवृत्तीष्टप्राप्त्यभिलाषस्स एवेत्यर्थः श्रवणाद्याविति पूर्वमुक्तत्वादिह तत्साधनइत्येतादुक्तम् अपसर्पेदसावित्यादिग्रन्थेन फलितमर्थमाह "ततस्त्वाधिकारी"ति' श्रवणाद्यायाससाध्यस्य शास्त्रस्यापुरुषार्थपर्यवसायित्वे श्रवणाद्यधिकारिविरहात् श्रवणादिसापेक्षस्य शास्त्रस्य प्रमितिजनकत्वलक्षणं प्रामाण्यं न स्यादित्यर्थः मयि नष्टेपीत्येतद्विवृणोति अहमुपलक्षितमित्यादिना बुद्धिपूर्वकारीत्यनेन कस्यापीति पदं विवृतं श्रुत्यर्थापत्तिं निगमयति "अत" इति, अहमर्थविगमे ज्ञप्तिसिद्धिरप्यनुसंधेया अनुमानमाह—

सू० स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते स्वस्मै प्रकाशमानत्वात् यो यः स्वस्मै प्रकाशते स सर्वोऽहमित्येव प्रकाशते यथा तथाऽवभासमानत्वेन उभयवादि-

सिद्धः संसार्यात्मा, यः पुनरहमिति न चकास्ति नासौ स्वस्मै प्रकाशते यथा घटादिः, स्वस्मै प्रकाशते तथा चायं मुक्तात्मा स तस्मादहमित्येव प्रकाशते न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः, मोक्षविरोधादज्ञत्वाद्यहेतुत्वाच्चाहंप्रत्ययस्य ॥

टी० "स चे"ति, किंचानुमानमप्यस्तीति चार्थः । अन्वयव्याप्तिमाह "यो य" इति, तथाऽवभासमानत्वेन स्वस्मै प्रकाशमानत्वेन व्यतिरेकव्याप्तिं दर्शयति "यः पुनरि"ति, उपनयमाह "स्वस्मा" इति, निगमनमाह "तस्मादि"ति, स्वस्मै प्रकाशमानत्वं हेतुः, अहमिति व्यवहारार्हत्वं साध्यमिति न साध्याविशिष्टता, अहमित्येव प्रकाशते अहमिति व्यवहारार्हं प्रकाशत इत्यर्थः । साध्यविपरीतविशेषसाधकतया विशेषविरुद्धत्वं शङ्कते "न चे"ति, आदिशब्दाद्रागद्वेषदुःखादि विवक्षितम् ।

ननु व्यापकं हि प्रसञ्जनीयम्

न च कार्यं कारणस्य व्यापकं, सत्यं कारणसजातीयस्य तु कदाचित्कार्यप्रसक्तिर्व्यापिका अतोऽहं प्रत्ययेनात्मनोऽज्ञत्वादिप्रसञ्जनमज्ञत्वादिप्रसक्तिः श्रुतिविरुद्धेत्याह "मोक्षे"ति, "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखता"मिति हि श्रुतिः, अतो यथा सहदर्शनमात्रेण पर्वते भाण्डादिप्रसक्तिः प्रत्यक्षबाधाद्बाध्यते तद्वत्कालात्ययापदेश इत्यर्थः । सोपाधिकत्वमाह "अज्ञत्वादी"ति, संसारित्वाहमर्थत्वयोः सहदर्शनमात्रेण मुक्तावपि संसारित्वादिप्रसङ्गश्चेदनुभवस्यापि तत्सहभावदर्शनात्त्वत्पक्षेऽपि मुक्तौ संसारित्वप्रसङ्गः । तन्मोक्षयाहिप्रमाणविरोधात्कालात्ययापदिष्टः संसारित्वादेरनुभवप्रयुक्तत्वाभावात् सोपाधिकत्वं चेति चेत्तदस्मत्पक्षेऽपि समानमित्यभिप्रायः । अनेनाहमिति भासमानत्वं स्वस्मै भासमानत्वप्रयुक्तमपित्वप्रयुक्तमिति हेतोस्सोपाधिकत्वञ्च श्रुतिबलेन व्याप्तेर्भग्नतया सहदर्शनमात्रमेवेति परिहृतं भवति । एवं कालात्ययापदेशसोपाधिकत्वे उक्ते तत्र सोपाधिकत्वमुपपादयितुमज्ञानत्वेन संभावितशिरांसि विकल्पयति—

सू० अज्ञानं नाम स्वरूपाज्ञानमन्यथा ज्ञानं विपरीतज्ञानं वा अहमित्येवात्मनः स्वरूपमिति स्वरूपज्ञानरूपोऽहंप्रत्ययो-नाज्ञत्वमापादयति कुतः संसारित्वम्, अपि तु तद्विरो-धित्वान्नाशयत्येव, ब्रह्मात्मभावापरोक्षनिर्धूतनिरवशेषा-विद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च, श्रूयते हि "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे"ति "अहमेव च संवर्तामि भविष्यामी-त्यादि सकलेतराज्ञानविरोधिनः-

टी० "अज्ञानन्नामे"ति, धर्म्यैक्ये सति प्रकारान्तरारोपणेन ज्ञान-मन्यथाज्ञानं यथा पीतः शङ्ख इति, इदं रजःकार्यं, धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानं यथा शुक्ताविदं रजतमिति इदं तमःकार्यम् "अयथाव-त्प्रजानाति बुद्धिस्सा पार्थ राजसी अधर्मं धर्ममिति या मन्यते तमसा वृता सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसीति स्मृतेः, अहंप्रत्ययस्य स्वरू-पज्ञानरूपत्वात् त्वात्तत्प्रागभावान्यथाज्ञानविपरीतज्ञानानि विरोधादेवापग-तानीत्याह "अहमित्येवे"ति, अहमित्येवात्मनः स्वरूपम्—अहमिति व्यव-हारबुद्ध्यर्हत्वमेवात्मनः स्वरूपमित्यर्थः । अहंप्रत्ययस्याज्ञत्वादिप्रयोजकत्व-दूषणेनाज्ञत्वादेरविद्यान्वय एवोपाधिरित्यर्थादुक्तं भवति । अथवा कार्य-कारणभावेन व्याप्तिमङ्गीकृत्य परेणाज्ञत्वादिप्रसङ्ग उक्त इति व्याप्तिप्रतिक्षे-पाय कार्यकारणभावं प्रतिक्षिपति अज्ञत्वाद्यहेतुत्वाच्चेत्यादिना । अज्ञत्वफ-लमपि नास्तीत्याह "कुतः संसारित्व"मिति, निवृत्ताविद्यानामप्यहमित्या-त्मप्रतिपत्तिदर्शनेनाहंप्रत्ययस्य मुक्तावनुपपत्तिमाह "ब्रह्मात्मभावे"ति, तद्धै-तत्पश्यन्निति ब्रह्मात्मकत्वसाक्षात्कारकथनेन निर्धूतनिरवशेषाविद्यत्वं ग-म्यते ब्रह्मणोऽपि तथा प्रतिपत्तिमाह "सकलेतरे"ति, सकलेतराज्ञानविरो-

१ पश्यन्नित्येव पाठः सांप्रदायिकः ।

धिन इति न हि सकलेतरविषहरणनिपुणस्य वैनतेयस्य विषवश्यत्वसंभव इति भावः ॥

सू० सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव "हन्ताऽहमिमास्तिस्रो देवताः" "बहु स्यां प्रजायेय" "स ऐक्षत लोकान्नु सृजा" इति, तथा "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" "अहमात्मा गुडाकेश" "न त्वेवाहं जातु नासम्" "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" ॥

टी० सच्छब्दप्रत्ययमात्रभाजः—सच्छब्दस्य सदिति प्रत्ययस्य च विषयभूतस्य मात्रचा पाश्चात्यनामरूपभाक्त्वव्यावृत्तिः, अनेनाहङ्कारसृष्टेः पूर्वमप्यहंप्रत्ययं ज्ञापयति, अहंप्रत्ययस्फुटीकरणाय अहमिमा इति वाक्यं पूर्वमुपादत्ते, बहु स्यामिति वाक्ये अस्मद्युत्तम इत्युत्तमपुरुषबलादहमिति प्रत्ययसिद्धिः, अहमिमास्तिस्र इत्यत्राहंशब्दः कण्ठोक्तः, न ह्यहङ्कारस्य नामरूपव्याकर्तृत्वमिति भावः। बहुषूपनिषत्स्वहमिति निर्देशज्ञापनायोपादत्ते "स ऐक्षतेति," प्रजायेय[1] इत्युत्तमपुरुषेणाहंशब्दाकर्षसिद्धिरिति भावः। स्मृतिं दर्शयति "तथा यस्मादि"ति, यस्मादिति वचनं क्षराक्षरातीतस्वाभाविकरूपेऽहंप्रत्ययज्ञापनार्थमुपात्तं, न ह्यहङ्कारः क्षराक्षरातीतः अतोऽस्मीत्युत्तमपुरुषेणाप्यहमर्थसिद्धिः। आत्मनोऽहंप्रत्यय ज्ञापयति "अहमात्मे"ति, न ह्यहङ्कारश्चिदचिदन्तरात्मा। स्वाभाविकनित्यरूपेऽहंप्रत्ययं दर्शयति "न त्वेवाहमि"ति, न ह्यहङ्कारो नित्यः। मृत्युविरोधिमुक्तिप्रदोऽप्यहंप्रत्ययविषय इत्याह—

१ ईक्षत इति द्राविडपाठः।

२ सृजा इत्युत्तमपुरुषेण इति पुस्तकान्तरपाठः।

मू० "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" "अहं बीजप्रदः पिता" "वेदाहं समतीतानीत्यादिषु यद्यहमित्येवात्मनः स्वरूपं कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव चे"ति उच्यते स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात्तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम् ॥

टी० "तेषामि"ति, न ह्यहङ्कारो मुक्तिप्रदः, एवमनेकश्रुतिस्मृतिवचनोपादानं परविवक्षितद्विज्ञतादृशवचनापनोदनार्थम् । एभिरहंशब्दैश्चिन्मात्रमुपलक्ष्यते वेदनेकवाक्यस्याहं-शब्दलक्षणैकदोषः, महाभूतान्यहङ्कार इति क्षेत्रान्तर्भाववचनमेकम् "अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहं विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते" इति त्याज्यत्वपरं वचनं द्वितीयम् अहङ्कारविमूढात्मेत्यपरमेतत्त्रयमनुदाहृतमभिप्रेतम् उक्तत्रयपरिहारात् पूर्वमेतद्वचनाभिप्रायेण सुषुप्तिमुक्त्योर्नान्वेतीत्युक्तम् । इममर्थमवलम्ब्य चोदयति "कथं तर्ही"ति, परिहरति "उच्यत" इति, अहमर्थाहङ्कारयोरभेदबुद्ध्या परेण चोदिते प्रकृतिप्रत्यययोरर्थविभागव्युत्पादनाय प्रकृत्यर्थभूत आत्मन्यहंबुद्धेः प्रामाणिकत्वेन स्थैर्यं दर्शयति "स्वरूपोपदेशेष्वि"ति, अथान्यथा सिद्धिं दर्शयंस्तत्राहङ्कारशब्दविवक्षितमाह-

मू० अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते[1] स त्वनात्मनि देहेऽहंभावकरणहेतुत्वेनाहङ्कार इत्युच्यते, अस्य त्वहङ्कारशब्दस्याभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या ॥

१ भगवतैवोपदिश्यत इति पुस्तकान्तरम् ।

टी० "अव्यक्ते"ति, अव्यक्तपरिणामभेदस्येति न त्वहमर्थस्येत्यर्थः अथातोऽहङ्कारादेश इत्यादिषु शुद्धस्वरूपस्याहङ्कारशब्देनाभिधानाभ्युपगमेऽपि न विरोधः। स त्वहङ्कारशब्दोऽहमर्थविषयबुद्धिपरः। यद्यहङ्कारशब्दवाच्यत्वमात्रात् प्रत्यगात्माऽपि[1] जडः स्यात्तर्हि हरिशब्दवाच्यत्वसाम्यात्सिंहो मण्डूकः स्यात् अतोऽनेकार्थाभिधायिशब्दैकत्वमर्थभेदाविरोधीति भावः। यथाऽऽगमप्रामाण्ये "तथा च हरिशब्दस्य दृष्टा मण्डूकवाचिता। इति तच्छब्दवाच्यत्वात्सिंहो मण्डूक एव किम्॥ तथा गोशब्दवाच्यत्वाच्छब्दश्चापि विषाणवा"निति। अथाहङ्कारशब्दस्याव्यक्तपरिणामविशेषवाचकत्वप्रकारं दर्शयति "स त्वि"ति, अहंभावः—अहमिति बुद्धिः, भाव-शब्दस्य बुद्धिवाचकत्वमभिप्रायपरतया प्रयोगादवगम्यते सर्वत्राहंशब्दार्थमेकरूपमङ्गीकृत्याहङ्कारशब्दस्याव्यक्तपरिणामवाचित्वं शब्दानुशासनप्रक्रिययोपपादयति "अस्य त्वि"ति, च्विप्रत्ययस्य सर्वलोपः, कृञः करणे घञ् तेनात्रान्तर्भावोपदेशस्य निर्वाहः कृतः। अहङ्कारं बलं दर्पमिति त्याज्यतयोपदेशस्य निर्वाहः क्रियते—

भू० अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते तस्माद्बाधकाऽपेताहंबुद्धिः साक्षादात्मगोचरैव, शरीरगोचरा त्वहंबुद्धिरविद्यैव

टी० "अयमेव त्वि"ति, अयं-शब्देन प्रस्तुताहंभावो विवक्षितः न त्वहंभावकरणहेतुगर्वापरनामेति वचनात्, न हि महदहङ्कारयोरन्यतरोऽहङ्कारो गर्वापरपर्यायः अतोऽत्राहंभाव एवायं-शब्दविवक्षितः प्रशस्तदेहेऽहंबुद्धिरुत्कृष्टजनावमानहेतुरहङ्कारः—अहंबुद्धिः मानसव्यापारवाचिनः करोतेर्बुद्धिपरत्व युज्यते यथा "तदेकावयवं देवं चेतसा हि पुनर्बुधः कुर्यादि"ति मनसा करणं हि वेदनम् अतोऽहंबुद्धिरहङ्कारः, च्विप्रत्ययार्थगर्भत्वादनहम्यहंबुद्धिगर्भाविमाहंभावाहङ्कारशब्दो अत्र भावे व्युत्पत्तिः पूर्वत्र करणे व्युत्पत्तिः, गर्वोऽभिमानोऽहङ्कार इति नैघण्टुकाः

१ चेत्रभेदः स्यादिति पुस्तकान्तरपाठः।

ननु कथं भावे व्युत्पन्नस्याहङ्कारशब्दस्योपादेयगोचरतया प्रयोगः अथातोऽहङ्कारादेश इति, उच्यते स त्वहङ्कारशब्दः साक्षादहमर्थबुद्धिवाची न त्वनात्मन्यात्मबुद्धिपरच्चिप्रत्ययार्थगर्भः, हेयोपादेयरूपेण शब्दप्रतिपत्त्योरहंबुद्धोर्विषयविभागन्नियमयति "तस्मादि"ति, अस्मिन्नर्थे प्रमाणमाह—

सू० यथोक्तं भगवता पराशरेण "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ? अनात्मन्यात्मबुद्धिर्ये"ति, यदि ज्ञप्तिमात्रमेवात्मा तदा ऽनात्मन्यात्माऽभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यान्न ज्ञातृत्वप्रतिभासस्तस्माद् ज्ञाताऽहमर्थ एवात्मा, तदुक्तम् "अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् । अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासत" इति, तथा च, "देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी"ति,

टी० 'यथोक्त'मिति, तत्रैव पुराणे अनात्मविषयाहंबुद्धिवचनयोर्भ्रान्तत्वमात्मविषयत्वभ्रान्तत्वं च स्पष्टं, यथा "आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते । अनात्मन्यात्ममयं भावं कः करोति कलेवरे ॥ पञ्चभूतात्मके देहे देही मोहतमो वृतः । अहं ममेति चेत्युच्चैः कुरुते कुमतिर्मति"मिति, आदिभरतचरिते "आत्मन्येव न दोषाय शब्दोऽहमिति यो द्विज । अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥ इति एतद्वचनार्थमप्यहमर्थात्मत्वहेतुत्वेनाह "यदी"ति, अनात्मनीति अनात्मन्यहं प्रतीतिः कथमात्माभिमान इत्यर्थः । अहमर्थात्मत्वं निगमयति "तस्मादि"ति, अस्मिन्नर्थे आत्मसिद्धियन्यमुदाहरति "तदुक्तमि"ति, धर्मधर्मिभावेन प्रतीतिः प्रत्यक्षसिद्धिः स्थिरत्वास्थिरत्वादिवैषम्यं श्रुत्यर्थापत्तिश्च न्यायः, आगम उदाहृतोपनिषद्वाक्यानि अविद्यायोगोऽनन्तरोक्तभ्रान्तियोगः । अहमर्थस्यानात्मत्वे स्थूलोऽहमिति भ्रान्तेरयोग इति वार्थः । ज्ञातुरात्मत्वे संवादिपन्थो दर्शित

ज्ञप्तेरनात्मत्वे चात्मसिद्धिरन्यमाह "तथा चे"ति, धीभ्योऽन्य इत्येतद-त्रापयुक्तं, साधनशब्दस्योत्पादकज्ञापकसाधारणत्वात्तद्व्याचष्टे-

**मू० अनन्यसाधनः-स्वप्रकाशः, व्यापी-अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः । यदुक्तं**

टी० "अनन्ये"ति, जीवस्वरूपविभुत्वशङ्काव्युदासार्थं व्याप्तिशब्दं व्याचष्टे "अती"ति, पुराणादिषु व्याप्तिशब्दप्रयोगात्स एवात्र श्लोके प्रयुक्तः यत्र यत्र जीवस्य व्याप्तिवाचिनः शब्दास्तत्र तत्रायमेवार्थो द्रष्टव्य इति भावः। जीवस्य धर्मभूतज्ञानेन व्याप्तिरात्मसिद्धावेवोच्यते व्याप्तिरपि चैतन्यमात्रेण न स्वरूपेणेति अतो यथोक्त एवार्थः। अथ शास्त्रप्रत्यक्ष-विरोधे [1]शास्त्रप्राबल्यमनूद्य निरस्यति यदुक्तमित्यादि चापरेण पूर्वमूलि-मूलभावपरोक्षापरोक्षरूपत्वादिर्न बाध्यबाधकभावे कारणं ज्वालाभेदानु-मानेन व्यभिचारात् आदित्यो यूप इत्यादावपि यूपादित्यैक्याप्रतिपादनं न दौर्बल्यात् अपि तु यूपाञ्जनविधिशेषत्वेनैक्यतात्पर्याभावादित्युक्तं,तत्र ज्वा-लाभेदानुमानात् शास्त्रे त्रिधा वैषम्यमस्ति प्रमाणान्तरेण दोषमूलत्वानिश्च-यादन्योन्याश्रयः, बाध्यबाधकयोस्तुल्यदोषत्वं मूलोच्छेदित्वं चेति एतत्त्रयं ज्वालाभेदानुमाने नास्ति तथा हि एकवर्तिकावर्त्तित्वनिबन्धनसादृश्याख्य-दोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वम् अचिरनिर्वापितारोपितप्रदीपे दृष्ट-मिति चक्षुषा ज्वालैक्यप्रतिपत्तेः क्वचिद्दोषमूलत्वनिश्चयादन्यत्रैक्यप्रतिपत्ता-वपि दोषमूलत्वसंभवज्ज्वालैक्यप्रत्यक्षं शङ्कितं न निश्चयाजननक्षमं परीक्ष-कस्य भवेत् ज्वालायां सादृश्यरूपदोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वं प्रमा-णान्तरेण न दृष्टं चेत् अन्योन्याश्रयः स्यात् अनुमानप्राबल्यात् प्रत्यक्षस्यान्य-थासिद्धिः, तदन्यथासिद्ध्याऽनुमानप्राबल्यमित्यैक्यप्रतीतेरन्यथासिद्धिसंभवः प्रमाणान्तरदृष्ट इति नान्योन्याश्रयः। अत्र न तथा प्रमाणान्तरेण भेदवा-सनाया दोषत्वं दृष्टं किंच दीपे बाध्यस्य ज्वालैक्यज्ञानस्य सादृश्याख्य-

---

[1] शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रं बलीय इति शाङ्कराः। निर्णीतप्रामाण्यकं प्रत्यक्षं शास्त्रापेक्षया बलवदिति भागवताः, एतदधिकृत्य पूर्वमेव निरूपितमस्माभिरिति तत्रैव द्रष्टव्यम्।

दोषमूलत्वेऽपि बाधकस्य ज्वालाभेदानुमानस्य न सादृश्यदोषमूलत्वं दृष्टमत्र तु बाध्यस्य प्रत्यक्षस्य बाधकस्य शास्त्रस्य चोभयोः परोऽभ्युपेतं दोषमूलत्वम् अविशिष्टं विद्यत इति तुल्यदोषत्वं, किंच तत्र ज्वालाख्यधर्मिग्राहिणः प्रत्यक्षस्य प्रथमवर्त्यवयवाग्निसंयोगे चरमवर्त्यवयवविनाशे चोत्पत्तिविनाशयोर्व्याप्तिग्राहिणः प्रत्यक्षस्य प्रत्यवयवमग्निसंयोगवर्त्यवयवविनाशाख्यलिङ्गग्राहिणः प्रत्यक्षस्य च न भेदानुमानबाध्यविषयत्वमैक्यप्रतिपत्तेरेव तत् अत्र तु शब्दाख्यधर्मिग्राहिणस्तस्य निर्दोषत्वसाधकलिङ्गग्राहिणः षड्विधतात्पर्यलिङ्गग्राहिणश्च प्रत्यक्षस्य तेषां तात्पर्यलिङ्गानां च शास्त्रेणैव बाधोपगमान्मूलोच्छेदित्वमिति त्रिधा वैषम्यम् । एतद्वैषम्यत्रयमुपपादयिष्यन् पूर्वपक्षमनुवदति—

**मू॰ दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति कोऽयं दोष इति वक्तव्यं यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः ॥**

टी॰ "दोषमूलत्वेने"ति, सकलभेदावलम्बिप्रत्यक्षस्येति, अत्रायं भावः तत्त्वशुद्धिकारादिभिः कैश्चित्काचतिमिरादिरेव प्रत्यक्षस्य दोष उक्तः स नोपपद्यते काचतिमिरादेः क्काचित्कत्वात् । एतेन प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयते चेच्छब्दत्वाच्छास्त्रस्यापि दोषमूलत्वमनुमीयतां शास्त्रे दोषस्य योग्यानुपलम्भनिरासश्चेत्प्रत्यक्षेऽपि तथैव स्यात् । किंच आयुर्वेदे दोषाणां स्वरूपतन्निवृत्त्युपायादिकं च निरूपितं सर्वप्रत्यक्षस्य दोषमूलत्वानुमानं तद्विरुद्धं च । किंच सर्वप्रत्यक्षस्य दोषमूलत्वे सन्मात्रग्राहिणः प्रत्यक्षस्य च दोषमूलत्वात् सन्मात्रमपि मिथ्या स्यादिति दूषयति कोऽयमित्यादिना "कोऽयं दोष इति वक्तव्यमि"ति, कोऽयं दोष इत्यनया वचनव्यक्त्या दोषरूपमूलं यदुक्तं तत्किमिति पृष्टे दोष इति दोष इति वक्तव्यमित्यर्थः । यद्वा यच्छब्दसामर्थ्यात्तत्रेत्याक्षेपसिद्धं दोषमूलत्वेनेत्यादिना यदर्थजातमुक्तं तत्र कोऽयं दोष इति पृष्टे वक्तव्यमित्यर्थः । कुतो वक्तव्यमित्यत्राह "यन्मूलतये"ति, न हि दोषमनुक्त्वाऽन्यथासिद्धिः सुवचेत्यर्थः । दोषमाह—

भू० अनादिभेदवासनैव हि दोष इति चेत् भेदवासनायास्तिमिरादिवत् यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् ?। अनेनैव शास्त्रविरोधेन ज्ञायत इति चेन्न अन्योन्याश्रयणात् शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयो भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति। किंच यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वं शास्त्रमपि तन्मूलत्वेन तथैव स्यात्। अथोच्यते दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात् तत्प्रत्यक्षस्य बाधकमिति।

टी० "अनादी"ति, स्वरूपसंप्रतिपत्तिपर एवकारः, हि—शब्देन दोषान्तरासंभवसिद्धवत्कारः, स्वमते दोषत्वे संप्रतिपत्त्यभिमानाद्वा हि—शब्दः; दोषत्वं हि विपरीतज्ञानहेतुत्वमतो विपरीतज्ञानहेतुत्वेन व्याप्तेरदृष्टतया भेदवासनास्वरूपसंप्रतिपत्तावपि दोषत्वासंप्रतिपत्तिः। पृच्छति "भेदवासनाया" इति, तिमिरादिवदित्यादिशब्देन सादृश्यादि विवक्षितं, तद्धि ज्वालायामैक्यभ्रमहेतुः, अन्यत्र ज्ञातसपूर्वत्वस्य दुर्वचत्वात् शङ्कते "अनेनैवे"ति, दूषयति "ने"ति, एवं प्रमाणान्तरेण दोषत्वानिश्चयेनान्योन्याश्रयणापत्तिरूपवैषम्यमुक्तम्। अथ तुल्यदोषत्वं बाध्यबाधकयोराह "किंचे"ति, अथ दोषमूलत्वे तुल्येऽपि परत्वाद्बाधकत्वं शङ्कते "अथे"ति, अपच्छेदादिष्विदं रजते नेदं रजतमित्यादिषु परं च बाधकं दृष्टम् अतो निषेध्योपस्थापकमानापेक्षया निषेधकस्य परत्वात् बलीयस्त्वमित्यर्थः। एवं ब्रह्मप्रतिपादकशास्त्रस्यापि व्युत्पत्त्यादेः प्रत्यक्षादिमूलतया तत्पूर्वकस्य तस्य प्रत्यक्षाद्यपेक्षया परत्वात्तत्प्रतिपाद्ये निर्विशेषवस्तुसत्यत्वमपि तुल्यन्यायतया सिद्धं तद्दूषयति—

मू० तन्न, दोषमूलत्वे ज्ञाते सति परत्वमकिंचित्करं रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोऽयमिति परिज्ञानेन केनचिन्नायं सर्पो मा भैषीरित्युक्तेऽपि भयानिवृत्तिदर्शनात् शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातं श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः, अपि चेदं[1] शास्त्रमसंभाव्यमानदोषं, प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया ॥

टी० "तन्ने"ति, परत्वस्याकिंचित्करत्वमुपपादयति "रज्जुसर्पे"ति, उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयाद्भयानिवृत्तिः

ननु भ्रान्तत्वे ज्ञाते परत्वमकिंचित्करमस्तु, अत्र तु भ्रान्तत्वज्ञानं नास्तीत्यत्राह "शास्त्रस्य चे"ति, ज्ञातत्वमुपपादयति "श्रवणावगते"ति, शास्त्रस्य भेदवासनामूलत्वं हि तावत्संप्रतिपन्नं तस्याश्च दोषत्वं भेदमिथ्यात्वज्ञानादवगम्यते तन्मिथ्यावगतिर्ज्ञाननिवर्त्यत्वावगमात् ज्ञाननिवर्त्यत्वावगमश्च ब्रह्मात्मैकत्वज्ञानस्य निखिलभेदोपमर्दित्वावगतेः, अत ईदृशनिवर्त्तकज्ञानाभ्यासरूपमननं कुर्वता शास्त्रस्य दोषमूलत्वमगतमित्यर्थः । एवं बाध्यबाधकयोस्तुल्यदोषत्वरूपवैषम्यमुक्तम्

अथ मूलोच्छेदित्वमाह "अपि चे"ति, इदं शास्त्रमिति शब्दराशिव्यावृत्तिः । असंभाव्यमानदोषमिति बुद्धागमादिव्यावृत्तिः त्वया प्रमाणप्रमेयादिकं तात्त्विकत्वेनानभ्युपगच्छता

मू० न तावत्स्वतःसिद्धानिर्द्धूतनिखिलभेदविशेषानुभूतिरिममर्थमवगमयति तस्याः सर्वविषयविरक्तत्वाच्छास्त्रपक्षपातविरहाच्च, नाप्यैन्द्रियकं प्रत्यक्षं दोषमूलत्वेन विपरीतार्थत्वात्तन्मूलत्वादेव नान्यान्यपि प्रमाणानि, अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः ॥

---

[1] अपि चेदं शास्त्रम् एतच्चासंभाव्यमानदोषमिति द्राविडपाठः ।

टी० "न तावदि"ति, स्वतःसिद्धत्वेन निर्धूतनिखिलविशेषत्वमेतद्विशेषणं निर्विषयत्वप्रदर्शनार्थं, कुतो नावगम्यत इत्यत्राह "तस्या"इति, सर्वविषयविरक्तत्वात् निर्विषयत्वादित्यर्थः। न हि ज्ञानमसंबध्य[1] विषयं प्रकाशयति वस्तुतो निर्विषयापि भ्रान्त्यविद्यमानमपि शास्त्रप्राबल्यमवगमयतीत्यत्राह "शास्त्रपक्षपातविरहाच्चे"ति, असंबद्धाविद्यमानत्वाविशेषात्सौगतादिशास्त्रान्तरप्रामाण्यमप्यवगमयेदित्यर्थः। प्रत्यक्षादिकञ्चावगमयतीत्याह। "नापी"ति, योगिप्रत्यक्षादेरप्यैन्द्रियकप्रत्यक्षमूलशास्त्रजन्यज्ञानहेतुकादृष्टकार्यत्वादैन्द्रियकप्रत्यक्षं प्रथममुपात्तं तन्मूलत्वाद्वेदवासनामूलप्रत्यत्वादेवं प्रकृतगोचरतयोक्तं प्रमाणाभावं पराभिमतसर्वगोचरपरत्वेनोपसंहरति "अत"इति, न स्वाभिमतार्थसिद्धिः स्वाभिमतं प्रत्यक्षदौर्बल्यशास्त्रप्राबल्यादिकम्। एतत्ख[2]ण्डनकाराद्युक्तकुतर्कनिरसनोपलक्षणार्थत्वमुक्तं तत्र प्रमाणव्याप्त्यादिभङ्गः क्रियते तत्रेदं प्रष्टव्यं स्वाभिमतव्यतिरिक्तार्थपरं शास्त्रान्तरमपरमार्थार्थकमित्यभिमतक्षणे किं तव प्रमितिस्तत्साधनं वास्ति? उत नास्ति? अस्ति चेत्र प्रमाणादिभङ्गः चेत्तरावत्प्रमाणादिभङ्गः प्रमितितत्साधनादिकमस्त्येव तद्व्यावहारिकमिति चेत् किमिदं व्यावहारिकत्वं? किं परमार्थत्वमुतापरमार्थत्वम्? अपरमार्थभूतम् प्रमाणं किं साधकमुतासाधकं? साधकं चेदपरमार्थसंज्ञितमन्येषां च प्रमाणं तत्पक्षसाधकमेव स्यात् अथासाधकं ततो नितरां वाद्यन्तराभ्युपगतप्रमाणादिकं साधकं भवेत् त्वदुक्तं प्रमाणादिकं परमार्थभूतं चेत् द्वैती विजयी स्यादिति स्वपक्षपरपक्षभेदः किं परमार्थः? उतापरमार्थः परमार्थश्चेन्न भेदमिथ्यात्वम् अपरमार्थश्चेत्परपक्ष एव त्वयाऽङ्गीकृतः स्यादिति भेदपारमार्थ्यं त्वयैवोक्तं स्यादिति एवमादिव्याघाताः सर्वत्रानुसंधेया इत्यभिप्रायः। अथ स्वपक्षसाधनप्रमाणाभावं प्रतिविवक्षुश्चोदयति—

**मू० ननु व्यावहारिकप्रमाणप्रमेयव्यवहारो ऽस्माकमस्त्येव। को-**

---

१ असंबन्ध्येति तु युक्तः पाठः प्रत्ययस्य क्त्वेन नलोपाववश्यंभावात्।
२ श्रीभाष्याचार्याः श्रीहर्षात्खण्डनकृतोऽनन्तरमवतेरुरित्यनया पङ्क्त्या स्फुटतीति मन्ये।

ऽयं व्यावहारिको नाम। आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत् किं तेन प्रयोजनं? प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात्। अथोच्येत शास्त्रप्रत्यक्षयोर्द्वयोरप्यविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते

टी० "नन्वि"ति, कोऽयमित्याक्षिपति। व्यावहारिकस्वरूपं दर्शयति, "आपाते"ति, दूषयति "किं तेने"ति, साध्यनिश्चयरूपप्रयोजनमित्यर्थः। कुत इत्यत्राह, "प्रमाणतये"ति, युक्त्या बाधो यौक्तिकबाधः धूमबुद्ध्या गृहीतबाष्पादेः साध्यनिश्चयाहेतुत्वादर्शनादित्यर्थः। एवं मूलोच्छेदित्वं वैषम्यमुपपादितं पूर्वपरोक्तं परत्वाद्वैषम्यं दूषितम्। अथास्मात्परस्य कस्यचिद्बाधकस्याभावं वक्तुं ब्रह्मप्रतिपादकशास्त्रस्य प्रत्यक्षाद्वैषम्यं शङ्कते, "अथोच्ये"तेत्यादिना, बाधदर्शनाभावरूपवैषम्यं शास्त्रस्य वक्तव्यं प्रत्यक्षस्य विषयस्य बाधदर्शनमाह "शास्त्रे"ति, प्रत्यक्षविषयाच्छास्त्रविषयस्य वैषम्यमाह—

मू० शास्त्रविषयस्य सदद्वितीयस्य ब्रह्मणः पश्चात्तनबाधादर्शनेनैव निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थ इति तदयुक्तं अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात् एतदुक्तं भवति यथा सकलेतरकाचादिदोषरहितपुरुषागोचरगिरिगुहासु वसतस्तैमिरिकजनस्याज्ञातस्वतिमिरस्य सर्वस्यापि तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते तत्र न बाधकप्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं चन्द्रद्वित्वमपि मिथ्यैव दोषो ह्ययथार्थज्ञानहेतुः॥

टी० "शास्त्रविषयस्ये"ति, पाश्चात्यबाधादर्शनाभ्युपगमेन दूषयति "तदयुक्त"मिति, कुत इत्यत्राह, "अबाधितस्येति,"यस्य च दुष्टं कारणं यस्य च मिथ्येति प्रत्ययः स एवासमीचीनप्रत्यय इति हि नीतिविदः

अतो दोषमूलत्वबाधकप्रत्ययो प्रत्येकं मिथ्यात्वसाधकौ व्याहतमिदं यदबाधितस्याप्यपारमार्थ्यनिश्चय इत्यपरमार्थत्वेन निश्चितत्वं हि बाधितत्वमित्यत्राह, "एतदुक्त"मिति, अज्ञातस्वतिमिरस्येति पदं क्वचिद्दृश्यते दोषज्ञाननिबन्धनस्य परोक्षबाधकज्ञानोदयव्युदासः प्रयोजनं ज्ञातस्वतिमिरस्येति पाठो लेखकस्खलनकृतः स हि पुरुषान्तरगोचरस्योक्तिविरुद्धः बाधकाभावे कथं मिथ्यात्वमित्यत्राह "दोषो ही"ति, भ्रान्तिसमानाश्रयबाधकज्ञानाभावेऽपि पुरुषान्तरज्ञानेन मिथ्यात्वनिश्चयो न व्याहत इत्यर्थः। तिरश्चां यावज्जीवं बाधोदयाभावेऽपि देहात्मधीर्मिथ्यार्थविषया तस्याः संसर्गरूपदोषमूलत्वात् बाह्यभ्रमेषु स्पष्टोदाहरणस्य विवक्षितत्वादेतदनुक्तिः

ननु तिरश्चां देहात्मभ्रमो नास्माकं प्रत्यक्षः कार्यानवगमात् भ्रमकारणदोषोऽपि दुरवगमः, तत्कथं दोषमूलत्वसंभावनाज्ञानमात्रेण मिथ्यात्वनिश्चयः, उच्यते अस्मदादेः शास्त्रश्रवणात्पूर्वं देहात्मभ्रमदर्शनात्तेषां च शास्त्राधिकाराभावात् देहात्मभ्रमस्तन्मूलं देहसंसर्गरूपदोषवत्त्वं च अनुमीयते दोषमूलत्वनिश्चयान्मिथ्यात्वनिश्चयः, एवं तैमिरिकजनस्य तिमिरान्वये आप्तवाक्यादिकमन्वेष्टव्यं ततो मिथ्यात्मनिश्चयः, एवं सपक्षे शिक्षितमर्थं दार्ष्टान्तिके निगमयति—

मू॰ तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैवेति। भवन्ति चात्र प्रयोगाः विवादाध्यासितं ब्रह्म मिथ्या अविद्यावदुत्पन्नज्ञानविषयत्वात् प्रपञ्चवत्। ब्रह्म मिथ्या ज्ञानविषयत्वात् प्रपञ्चवत्। ब्रह्म मिथ्या असत्यहेतुजन्मज्ञानविषयत्वात् प्रपञ्चवदेव

न च वाच्यं स्वाप्नस्य हस्त्यादिज्ञानस्य असत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रपत्तिहेतुभावो न विरुद्ध इति, स्वाप्नज्ञानस्यासत्यत्वाभावात् ॥

टी० "तथे"ति, ज्ञानमिथ्यात्वं परमताभ्युपगमादुक्तं पाश्चात्यबाधादर्शनमुत्तरत्र निरसिष्यते शास्त्रस्याविद्यामूलत्वाभ्युपगमेऽनिष्टं प्रसञ्जयति"भवन्तीत्यादिना, व्याप्तिप्रदर्शनवचनत्वात्प्रयोगा इत्युक्तं प्रतिज्ञादृष्टान्तहेतुरूपेण कथनमनिष्टप्रसङ्गः एवमपि न्याय्य इति ज्ञापनार्थं ज्ञानविषयत्वमात्रमेको हेतुः, एको दुष्टपुरुषज्ञानविषयत्वम् एको मिथ्याभूतसामग्रीजन्यज्ञानविषयत्वमिति भिदा । पूर्वं सपक्षीभूत एवार्थोऽत्र सपक्ष इत्येवकारार्थः । नन्वसत्यहेतुजन्यधीविषयत्वमन्यतरासिद्धं प्रपञ्चवदिति दृष्टान्तश्च साध्यविकलः कथमेवं प्रसङ्गश्च उच्यते ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यत इति वत्प्रसञ्जकप्रसञ्जनीयधर्मव्याप्तिं परमतेनाभ्युपगम्य दूषणमुक्तमिति न विरोधः, नासत्यहेतुजन्यज्ञानविषयत्वादसत्यत्वं ब्रह्मणः असत्यादपि सत्यप्रतिपत्तिर्दृश्यत इति शङ्कामनूद्य, परिहरति "न चेत्यादिना" किमसत्यस्य सत्योत्पत्तिहेतुत्वानुपपत्तिरुत तज्ज्ञप्तिहेतुत्वानुपपत्तिरिति विकल्पमभिप्रेत्य उत्पत्तिहेतुत्वे ज्ञप्तिहेतुत्वे चोदाहरणानि दर्शितानि तत्र स्वाप्नविषयाणां सत्यत्वेऽभिमतेऽपि विषयासत्यत्वमभ्युपगम्य परिहरति, "स्वाप्ने"ति," ज्ञानस्य सत्यत्वमुपपादयति—

मू० तत्र हि विषयाणामेव मिथ्यात्वं, तेषामेव हि बाधो दृश्यते न ज्ञानस्य, न हि मया स्वप्नवेलायामनुभूतं ज्ञानमिह न विद्यते इति कस्यचिदपि प्रत्ययो जायते, दर्शनं तु विद्यते अर्था न सन्तीति बाधकसंप्रत्ययः, मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः, तत्रापि ज्ञानस्याबाधितत्वाद्विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः सत्यैवादृष्टेऽपि स्वात्मनि सर्पसंनिधानात् दष्टबुद्धिः सत्यैव शङ्काविषबुद्धिः स्मरणहेतुभूता वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः ॥

टी० "तत्र ही" ति, अवधारणं कथमित्यत्राह, "तेषामेवे" ति, ज्ञाना-बाधं दर्शयति, "न ही" ति, कथं जायते, इत्यत्राह, "दर्शनं त्वि" ति, अन्यविषयो बाधो नान्यत्र संचारयितुं युक्त इत्यर्थः । अत्रानेकोदाहरणप्रदर्शनं तत्तज्ज्ञानसामग्रीविशेषाणां सत्यत्वज्ञापनार्थं तच्च ज्ञानसत्यत्वनिर्वहणार्थं स्वप्नकारणं पूर्वानुभवसंस्कारः सत्यः प्रसिद्धत्वात्तदनुक्तिः मायाविन इति अत्र मन्त्रौषधादिप्रभवमित्यनेन कारणस्य सत्यत्वमुक्तं मायामयं मिथ्याविषयमित्यर्थः, विचित्रविषयं वा विषयेत्यादि विषयदोषः सादृश्यादिः, इन्द्रियदोषः काचादिः, आदिशब्देन देशगतदूरत्वादिदोष उच्यते दोषश्च सत्यः सत्यैवेति सर्पसंनिधानं कारणं सत्यं दष्टबुद्धिश्च सत्या शङ्काविषबुद्धावपि सामग्री सत्या निर्विषोरगदंशनं वा अन्धकारेऽश्मलोष्टादिनिपीडनं वा सत्यं हि भवति "वस्त्वि" ति, जलादि सत्यं तत्कृतचाक्षुषतेजःप्रतिहतिश्च सत्या संवेदनानां सत्यत्वे निश्चिते ह्युक्तोदाहरणेषु सत्यात्सत्यप्रतिपत्तिरित्यत्राह—

भा० एतेषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते हस्त्यादीनामभावेऽपि कथं तद्बुद्धयः सत्या भवन्तीति चेत् नैतद्बुद्धीनां सावलम्बनत्वमात्रनियमात् अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितं प्रतिभासमानता चास्त्येव दोषवशात्

टी० "एतेषामि" ति, उत्पत्तिमत्त्वमर्थक्रियाकारित्वं च द्वयमपि प्रत्येकं सत्यत्वे साधकं न हि शुक्तौ रजतमुत्पत्तिमत्

न च कार्यकरम् । अथ ज्ञानसत्यत्वं विषयसत्यताव्याप्तं तन्निवृत्त्या ज्ञानसत्यत्वनिवृत्तिरिति शङ्कते, "हस्त्यादीनामि" ति, अभावे प्रतिपन्नोपाधौ तथात्वाभावे ज्ञानसत्यत्वं सालम्बनत्वमात्रव्याप्तम् अबाधितत्वादिति परिहरति "नैतदि" ति, सालम्बनत्वमात्रशब्देन सत्यालम्बनत्वव्यावृत्तिः मिथ्याभूतस्यालम्बनत्वं कथमित्यत्राह "अर्थस्ये" ति, आलम्बनं विषयः प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितमिति प्रतिभासमानत्वमेव विषयत्वमित्यर्थः । अविद्यमानस्याप्यतीतानागतादेः प्रतिभासमानस्यालम्बनत्व-

दर्शनाद्विद्यमानस्याप्यप्रतिभासमानस्य तदभावाच्चेति भावः । पक्षे प्रतिभासमानत्वमप्यस्तीत्याह, "प्रतिभासे"ति, प्रतिभासमानता संविदपेक्षया प्रतिसंबन्धित्वम् अविद्यमानस्य विद्यमानतया भासनात्तेन रूपेणासत्यता तथा साक्षादवभासमानो विषयो ऽपि ज्ञानहेतुः स्यात् संप्रतिपन्नविद्यमानविषयवत् विद्यमानतया भासमानत्वाविशेषात् तथा सत्यसत्यात्सत्योत्पत्तिरित्यत्राह, "दोषवशादि"ति, अविद्यमानस्य विद्यमानतया भासनहेतुर्दोष एव न त्वविद्यमानो विषयः अविद्यमानो विषयो न ज्ञानस्य हेतुतयाऽपेक्षितः केवलविषयतया विद्यमानस्तु तथात्वेन भासमानो विषयतया हेतुतया चापेक्षितः अतो वस्तुनो विद्यमानत्वमेव विषयस्य ज्ञानहेतुत्व उपाधिः नियतपूर्वकालवर्त्तिनो हि हेतुत्वं दृष्टं तस्मादविद्यमानस्य हेतुत्वायोगात् दोष एव हेतुरिति नासत्यात्सत्योत्पत्तिरित्यर्थः प्रतिभासमानत्वे द्वयोरविशिष्टे कथमन्यतरस्यासत्यत्वनिश्चय इत्यत्राह

सू० स तु बाधितो ऽसत्य इत्यवसीयते अबाधिता हि बुद्धिः सत्यैवेत्युक्तं रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धी रेखायाः सत्यत्वात् ॥

टी० "स त्वि"ति, बुद्धिरप्यसत्या किन्न स्यादित्यत्राह, "अबाधिते"ति, विषयासद्भावेन ज्ञानस्यासत्यताकथनं कालात्ययापदिष्टमित्यर्थः ।

ननु स्वाप्नादिविषयज्ञाने किं ज्ञानमात्रं शुभाशुभप्रतिपत्तिहेतुरुत ज्ञानविशेषः? ज्ञानमात्रपक्षेऽतिप्रसङ्गः, ज्ञानविशेषश्चेत् कस्तस्यावच्छेदकः विषयश्चेत्किं विषय उपलक्षणतयावच्छेदक? उत विशेषणतया? यदि विशेषणतया तदा विशेष्येण सह कार्यान्वयी हि विशेषणमतो हस्त्यादेरपि शुभाशुभप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः, यद्युपलक्षणतया उपलक्ष्यबहिर्भूत उपलक्ष्यप्रतिपत्त्युपायो ह्युपलक्षणम् अतो विषयस्य ज्ञानप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः ज्ञानानां तत्तद्व्यवहारानुगुण्यलक्षणस्वभावविशेषैर्व्यावृत्तत्वाचातिप्रसङ्गः इति वाच्यं व्यवहारानुगुण्यमात्रस्य व्यावर्त्तकत्वेऽतिप्रसङ्गाद्व्यवहारविशेषानुगुण्यस्य व्यावर्त्तकत्वे तद्विशेषश्च तत्संग्राहकविषया-

धीन इति व्यवहारावच्छेदकतया अनृतस्य सत्यहेतुत्वमिति अत्रोच्यते व्यावृत्तमेव ज्ञानं शुभाशुभाद्यनुमापकं, व्यावृत्तिश्च स्वालम्बनेन अविद्यमानस्याप्यालम्बनत्वं दोषवशादित्युक्तम् अन्यथाख्यातिपक्षेऽप्यालम्बनसत्यता सर्वज्ञानानामिष्यत एव विशेषणविशेष्यतत्संसर्गाणां क्वचित्सत्यत्वात् विशेषणविशेष्ययोस्तथात्वनिर्वाहकसंसर्गः स्वस्य तदीयत्वे संसर्गान्तरनिरपेक्षः स तु संसर्गः पुरोवर्त्तिनि भ्रमाधिष्ठाने प्रतीयमानः पुरोवर्त्यपेक्षया स्वयं स्वस्य संसर्गरूपत्वनिर्वहणसामर्थ्यात् पुरोवर्तिनि नास्तीति पुरोवर्त्यपेक्षया संसर्गो ऽपरमार्थः, न तु स्वरूपेण, आलम्बनत्वे च सन्निहितत्वरूपमनपेक्षितम् असन्निहितस्याप्यालम्बनत्वदर्शनात् अतः सत्येन रूपेणालम्बनत्वमिति हस्त्यारोहणादिज्ञानान्यपि सत्यभूतहस्त्याद्यालम्बनावच्छिन्नानि परमार्थभूतया स्वप्नावस्थयावच्छिन्नत्वाज्जाग्रदवस्थाज्ञानविलक्षणानि शुभाशुभप्रतिपत्तिनिमित्तानि अतो नातिप्रसङ्गः । नासत्यात्सत्यप्रतिपत्तिश्च

न च प्रतिबिम्बाद्बिम्बानुमितावसत्यात्सत्यप्रतिपत्तिः प्रतिबिम्बप्रतिभासस्य सत्यस्यैवानुमापकत्वात् परमार्थतस्तु तत्र नानुमापकानुमेयविभागः, दर्पणादिप्रतिहतैश्चाक्षुषतेजोभिर्बिम्बस्यैव दर्पणस्थतया गृह्यमाणत्वादतः क्वचिदर्थात्प्रतिपत्तिः क्वचित्प्रतिभासात्तदर्थप्रतिपत्तिरिति नासत्यस्य लिङ्गत्वं किंचासत्यात्सत्यप्रतिपत्तिः भवत्पक्षेणोच्यते उतास्मत्पक्षेण न तावद्भवत्पक्षेण सा सिध्यति शुभाशुभयोरपि मिथ्यात्वेनासत्यादसत्यप्रतिपत्तिरेव हि स्यात् न चास्मत्पक्षेण यथार्थख्यात्यभ्युपगमात् सत्यादेव सत्यप्रतिपत्तेः एषां स्वाप्नहस्त्यादिज्ञानादीनां शुभाशुभप्रतिपत्त्यादिहेतुभूतानां षण्णामुदाहरणज्ञानानां संस्कारादिसत्यसामग्रीकत्वं स्पष्टं ज्ञानानां सत्यत्वमुपपादितम् अत उत्पत्तौ ज्ञप्तौ च हेतुसत्यत्वं सिद्धम् । अथ ज्ञानव्यतिरिक्तासत्यहेतुना सत्यप्रतिपत्तौ हेतुसत्यत्वमुपपाद्यते रेखयेत्यादिना हेतोरसत्यत्वं दर्शयंश्चोदयति

सू० ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुर्वर्णात्मना त्वसत्या। नैवं, वर्णात्मतायास्त्वसत्याया उपायत्वायोगात् असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च। अथ तस्या वर्णबुद्धेरुपायत्वम्, एवं तर्ह्यसत्यात्सत्यबुद्धिर्न स्यात् बुद्धेः सत्यत्वादेवोपायोपेययोरैक्यप्रसङ्गश्च उभयोर्वर्णबुद्धित्वाविशेषात् रेखाया अविद्यमानवर्णात्मनोपायत्वे चैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात्सर्ववर्णप्रतिपत्तिः स्यात्

टी० "ननु चे"[1]ति, परिहरति "नैवमि"ति, वर्णात्मकता किं सत्तया वर्णप्रतिपत्तेरुपायः? उत प्रमिततया? उत प्रतीततये"ति विकल्पमभिप्रेत्याह "असत" इति, असत्यत्वा[2]त्मतयोपायत्वमनुपपन्नमित्यसत इति पदस्याभिप्रायः। असतः—सद्व्यतिरिक्तस्येत्यर्थः। असत्त्वादेव प्रमिततयोपायत्वं चानुपपन्नमिति निरुपाख्य—शब्दाभिप्रायः। उपाख्या प्रमितिस्तदविषयत्वान्निरुपाख्यत्वं प्रतीतिविषयतयोपायत्वानुपपत्तिस्तु वक्ष्यते सत्ताप्रमित्योरभावेऽपि वर्णात्मतया उपायत्वमस्तीति कल्प्यते चेत् तदनुपपन्नं व्याप्तिविरोधात् व्याप्त्यनुगुणं हि कल्पनं प्रवर्त्तत इत्यभिप्रायेणाह "अनुपपन्नं चे"ति,। अथ भ्रान्ततः प्रतीतायाः वर्णात्मताया वर्णप्रतिपत्तिहेतुत्वपक्षेऽपि बुद्ध्यंशस्य हेतुत्वे परस्यानुपपत्तिं दर्शयितुमाह, "अथे"ति, दूषयति "एवं तर्ही"ति, कुत इत्यत्राह, "बुद्धेरि"ति, दूषणान्तरमाह "उपाये"ति, तदुपपादयति "उभयोरि"ति, बुद्ध्यंशस्य हेतुत्वे दूषणमुक्तं वर्णात्मतांशस्य हेतुत्वे सिंहावलोकितकेन दूषणमाह, "रेखाया" इति, अविद्यमानवर्णात्मना—अविद्यमानवर्णात्मकत्वेनेत्यर्थः। अतिप्रसङ्गपरिहारार्थं शङ्कते—

---

१ नन्विति तु धारयं युज्यते मूले तथैवोपलम्भात्।

२ असत्यत्वात्सत्तयोपायत्वमनुपपन्नमिति द्राविडपाठः।

मू० अथ पिण्डविशेषे देवदत्तादिशब्दसङ्केतवच्चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः सङ्केतस्य च सत्यत्वात्, रेखागवयादपि सत्या गवयबुद्धिः सादृश्यनिबन्धना, सादृश्यं च सत्यमेव न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः, नाना नादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैस्संबन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात् शब्दस्यैकरूपत्वमपि न साधीयः

टी० "अथे"ति, तत्रापि स्वमतसिद्धिमाह, "हन्ते"ति, तदुपादयति "रेखाया" इति, उदाहरणान्तरं परिहरति, "रेखागवयादि"ति, स्फोटवादावलम्बनेनोच्यमानमुदाहरणान्तरं परिहरति न चैकरूपस्येत्यादिना, नादैः स्फोट्यत इति व्युत्पत्त्या स्फोट एकरूपः शब्दः, तदभिव्यञ्जकनादविशेषाः बहवः कत्वखत्वगत्वादिभेदा व्यञ्जकगताः शब्द आरोपितोऽर्थविशेषप्रतिपत्तिहेतुः तत्रासत्यात्सत्य[1]प्रतिपत्तिरित्यपि न युक्तमित्यर्थः। कुत इत्यत्राह, "नानानादे"ति, खत्वगत्वादिविशेषान्वितत्वादकृतोऽभिव्यक्तिविशेषस्सत्यः तद्विशिष्टः सत्यशब्दोऽर्थप्रतिपत्तिहेतुरित्यर्थः। यद्यपि खत्वगत्वादिवैशिष्ट्यं शब्दस्यारोपितं तथापि तज्ज्ञानं सत्यमेवार्थप्रतिपत्तिहेतुः, ज्ञानस्य च सत्येनैवालम्बनेन स्वाप्नज्ञानवद्व्यावृत्तिरनुसंधेया कत्वाद्यालम्बनाभिव्यक्तिविशिष्टरूपेण स्फोटस्यार्थप्रतिपत्तिहेतुत्वसंभवात् कत्वादिवैशिष्ट्य-

१ असत्यात्सत्योत्पत्तिरिति पाठान्तरम्।

स्यासत्यस्य नार्थप्रतिपत्तावुपयोगः, एवं शब्दस्यैकरूपत्वमभ्युपगम्य परिहृतम् अथ तदनभ्युपगमेन परिहरति "शब्दस्यैकरूपत्वमपी"ति, कुत इत्यत्राह—

सू० गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् ॥

टी० "गकारादेरि"ति, एवकारेणैकरूपशब्दो व्या[1]वर्त्तते न तु दुन्दुभिशब्दादिः । स त्वनभिव्यक्तविशेषाकारो गकारादिरेव । अथ गौरित्यत्र कः शब्दः गकारौकारविसर्ज्जनीया इति हि भगवानुपवर्ष इति गकारादेरेव बोधकत्वं व्याचख्युः

ननु "तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृते"ति शास्त्रवशादेकरूपं शब्दमात्रमभ्युपगन्तव्यं तत्कथं तत्प्रतिक्षेपः, नैवं तन्मात्रावस्थायां सूक्ष्मभूतकारणगुणानामिन्द्रियग्राह्यत्वायोगात् पञ्चीकृतभूतगुणानामेव ह्यैन्द्रियकत्वं, किं च दध्यवस्थायां दुग्धावस्थेव तन्मात्रावस्थाऽऽकाशगुणभूतं शब्दतन्मात्रं स्थूलाकाशसृष्टेः पश्चान्न विद्यते यथा च महाभूततृतीये तेजसि शुक्लकृष्णादिवर्णव्यतिरेकेण रूपतन्मात्रं किंचिदस्ति शुक्लकृष्णादयश्चाभिव्यञ्जकगता एकरूपे आरोपिता इति वक्तुमयुक्तम् एवमिदानीमेकरूपशब्दस्य विद्यमानत्वं तत्राभिव्यञ्जकगतकत्वखत्वादीनामारोपितत्वं च सर्गप्रतिपादकशास्त्रानुसारिभिरभ्युपेतुमयुक्तम् । अत्रायमभिसंन्धिः, वर्णातिरिक्त एकरूपः शब्दः किं स्फुटप्रतिपन्नत्वादभ्युपगम्यते ? उत कल्पनावशात्न प्रथमः, गकारादिव्यतिरिक्तस्य कस्यचिदनुपलम्भात्, न द्वितीयः कल्पकाभावादिति

ननु वर्णानां वाचकत्वानुपपत्तेरेकं पदमित्यादि प्रत्ययस्य वर्णेष्वनुपपत्तेः, भिन्नेषु वर्णेषु शब्दः शब्द इत्यनुवृत्तिबुद्धिवशाच्च वर्णातिरिक्तपदस्फोटसिद्धिः, तत एव न्यायात्पदसंघातातिरिक्तवाक्यस्फोटसिद्धिश्चेत्यत्राह 'गकारादेरि'ति, गकारादिवर्णानामेव समुदितानां वाचकत्वम् एकं पदमेकं वाक्यमिति प्रत्ययश्च वर्णसमुदायविषयः शब्दः शब्द इत्यनुवृ-

[1] व्यावर्त्यते इति तु युक्तः पाठ इति प्रतिपद्यामहे ।

त्तिबुद्धिश्च श्रोत्रग्राह्यत्वोपाधिनिबन्धना अतः कल्पकानामन्यथासिद्धत्वा-न्नैकरूपशब्दसिद्धिरित्यर्थः

ननु न कल्पकान्यथासिद्धिः, तथाहि न तावदेकैकस्य वर्णस्य वाचकत्वं वर्णान्तरवैयर्थ्यात् गकारमात्रेण गोगवयगजाद्यप्रतिपत्तेश्च, नापि वर्णसमुदायो वाचकः क्रमोच्चारितश्रुतानां वर्णानां यौगपद्याभावेन वृक्षादीनामिव समुदायभावानुभूतवर्णविषयस्मरणानुपपत्तेः

न च पूर्वपूर्वश्रवणजनितसंस्कारसचिवोऽन्त्यवर्णो वाचक इति युक्तं वर्णानुभवजनितसंस्काराणामनुभूतवर्णविषयस्मरणहेतुतयाऽननुभूतार्था-न्तरप्रतीतिहेतुत्वाभावेनाकिंचित्करत्वात् तत्साचिव्यविरहितान्त्यवर्णस्य चार्थप्रत्यायकत्वायोगात्, तथा वर्णानां भिन्नत्वादेकं पदमिति प्रत्ययश्च तदतिरिक्तार्थविषयो भवितुमर्हति

न च वनसेनादिप्रत्ययवत्समुदायविषयत्वमेकत्वप्रत्ययस्य युक्तम् एकप्रदेशसंबन्धित्वादिवदेकीकारनिमित्तोपाध्यभावात् एकस्मृत्यु[1]पारोहत्व-मुपाधिरिति चेन्न द्वे पदे त्रीणि पदानि बहूनि वाक्यानीत्यनेकेषामप्येकप्रत्य-यारोह[2]त्वदर्शनात् न चैकार्थावच्छिन्नवर्णसमुदाय एकं पदं, वर्णानां वाचक-त्वानुपपत्तेरेवैकार्थप्रतिपादनाभावात् । किंच बहुषु वर्णेष्वयं शब्दोऽयं शब्द इत्यनुवृत्तः शब्दः शब्दो वर्णातिरिक्तविषयो युक्तः, घटकरकापवरका-दिभेदेऽप्येकार्थविषयस्याकाशशब्दस्य हि घटकरकाद्यतिरिक्तार्थविषयत्वं दृष्टम्

न च श्रोत्रग्राह्यतोपाधिना शब्दशब्दानुवृत्तिरिति युक्तं श्रोत्रस्य श्रोत्र-ग्राह्यत्वायोगेन श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहीतुमशक्यत्वान्मानान्तरेण श्रोत्रग्राह्यताप्रतीतावविलम्बितशब्दसाक्षात्कारानुपपत्तिः अतः कल्पकान्य-थासिद्ध्यभावाद्वर्णातिरिक्तः शब्दस्फोट इति । अत्रोच्यते न तावद्वर्णानां वाचकत्वानुपपत्त्या स्फोटसिद्धिः, तेषां स्फोटाभिव्यञ्जकत्वेऽपि वोद्यपरि-

१ एकस्मृत्युपारूढत्वमुपाधिरिति द्राविडपाठः ।
२ प्रत्ययारूढत्वदर्शनादिति तु युक्तमुत्पश्यामः पाठम् ।

हारयोस्तुल्यत्वाल्लाघवन्यायेन वर्णानामेव वाचकत्वाश्रयणस्य न्याय्यत्वात् तथा हि न तावदेकैकवर्णः स्फोटव्यञ्जकः, द्वितीयवर्णवैयर्थ्यात् गकारमात्रेण गवयादिपदस्फोटाभिव्यक्तिप्रसङ्गाच्च नापि वर्णसमुदायो व्यञ्जकः क्रमोच्चारितश्रुतानां वर्णानां यौगपद्याभावेन समुदायभावानुपपत्तेः

न च पूर्वपूर्ववर्णजनितसंस्कारसचिवोऽन्त्यवर्णो व्यञ्जकः, वर्णानुभवजनितसंस्काराणामनुभूतवर्णस्मृतिमात्रे हेतुतयाऽननुभूतस्फोटप्रतीतिहेतुत्वायोगेन तत्संस्कारानुपकृतस्यान्त्यवर्णस्य च तदभिव्यञ्जकत्वायोगात्। यद्युच्येत पदं तावत्प्रतीयते अतस्तत्प्रतीत्यनुरूपं कारणं कल्प्यं क्रमभाविनामपि संस्काराणां युगपत्कार्यकरत्वं युक्तं क्रमदृष्टयोरपि घटयोस्तौ घटाविति स्मरणदर्शनादतो युगपद्वाऽखिपूर्ववर्णस्मरणसचिवोऽन्त्यवर्णो वा युगपत्स्मर्यमाणसर्ववर्णसमुदायो वा स्फोटाभिव्यञ्जक इति, एवं तर्हि स्फोटाभिव्यञ्जकतया अभ्युपेताया: सामग्र्या अर्थाभिव्यञ्जकत्वमास्थीयतां चोद्यपरिहारयोस्तुल्यत्वात् अन्यथासिद्धस्यार्थान्तरकल्पकत्वायोगात्, वर्णानामेव वाचकत्वसंभवे तदतिरिक्तकल्पनानुपपत्तेर्लाघवन्यायस्य बलीयस्त्वाच्च वर्णानां भिन्नत्वेऽपि युगपद्बुद्धिस्थैकविभक्त्यन्तानेकवर्णसमुदायविषयतया पदैकत्वबुद्धिरपि नार्थान्तरकल्पिका न चार्थैकत्वात्पदैकत्वं पदैकत्वादर्थैकत्वमित्यन्योन्याश्रयः, एकविभक्त्यन्तवर्णसमुदायस्यैकपदत्वनिश्चयात् सुप्तिङन्तं पदमिति हि पदनिष्कर्षः, तस्य चोक्ताभिप्रायत्वे सत्यव्याप्तिर्न स्यात् एकव्युत्पत्तिसिद्धैकार्थप्रतिपत्त्युपयुक्तवर्णसमुदायस्य वा पदत्वं बहुषु वर्णेष्वयं शब्दोऽयं शब्द इति प्रत्ययोऽपि श्रोत्रग्राह्यत्वोपाधिनिबन्धनत्वादन्यथासिद्ध इति नार्थान्तरसिद्धिः

न च श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहणापेक्षा यथा चाक्षुषाणां धवलिमपीतिमनीलिम्नां चाक्षुषत्वज्ञाने न चक्षुरपेक्षा इदं चाक्षुषमिदं चाक्षुषमिति व्यवहारश्चाक्षुषत्वज्ञाननिबन्धन एव प्रमाणान्तरावगतचक्षुःश्रोत्राद्यन्वयव्यतिरेकानुविधायिज्ञानगोचरत्वेन चाक्षुषश्रावणत्वादिज्ञानं चक्षुरादिकं नापेक्षते

न च सहसैव शब्दोऽयमिति जानन्ति प्रथमं गकारादिरूपेणैव शब्दे ऽवसिते व्युत्पन्नशब्दस्मरणपूर्वकमेव शब्द इत्यवगम्यते अतः शब्देन स्मरणकृतविलम्बवत् श्रोत्रग्राह्यताऽनुमानविलम्बोऽपि अभ्यासपाटवकृतात् शैघ्र्यात् न विविच्यते अतोवर्णा एवपदं पदसमुदाय एव वाक्यमिति स्थितम् । असत्यात्सत्यप्रतिपत्तिनिराकरणमुपसंहरति–

सू० अतोऽसत्याच्छास्त्रात्सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ।

ननु शास्त्रस्य न गगनकुसुमवदसत्यत्वं प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वादुत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य, न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः, यदोपायस्तदाऽस्त्येव शास्त्रमस्तीति बुद्धः । नैवम् असति शास्त्रेऽस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् ततः किमिदं ततो मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्याऽपि ब्रह्मणो मिथ्यात्वम् ॥

टी० "अत" इति, सत्यप्रतिपत्तिहेतुषु– सत्यतया अभिमतेषु यादृशसत्यत्वं तादृशं सत्यत्वं शास्त्रस्याप्यस्तीत्यभिप्रायेण चोदयति "नन्वि" ति, गगनकुसुमवदिति युक्तिबाधो ह्युक्तः, न त्विदानीमेव लौकिकपुरुषैर्नास्तीति प्रतिपन्नत्वम् अतस्तादृशमसत्यत्वन्नेत्यर्थः । हेतुमाह "सद्बुद्धिबोध्यत्वा" दिति, सदिति बोध्यत्वमेव कार्यकरत्वानुगुणं न सत्यत्वमित्यर्थः । तर्हि सदद्वैतभङ्गः स्यादित्यत्राह "उत्पन्न" इति, तर्हि न बोधकमित्यत्राह "न तदे" ति, परिहरति "नैव" मिति, नैवम्–उपायकालेऽपि सत्यत्वं नास्तीत्यर्थः । ज्ञानस्य मिथ्यात्वं मिथ्यार्थविषयत्वात् ज्ञानस्य दोषमूलत्वात् । विषयमिथ्यात्वे निदर्शनमाह–

सू० यथा धूमबुद्ध्या[1] गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन

[1] यद्यपि धूमबुद्ध्या गृहीतबाष्पजन्यमपि वह्निमति वह्निज्ञानं प्रमेति प्रमाणजन्यत्वं न प्रमात्वे तन्त्रमिति श्रीभाष्याचार्याणां "यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्व"मित्यभिधानं कथं सङ्गच्छतामित्याशा-

तद्विषयस्याग्नेरपि मिथ्यात्वं पश्चात्तनबाधादर्शनं चासिद्धं शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात्तत्तु भ्रान्तिमूलमिति चेत् एतदपि भ्रान्तिमूलमिति त्वयैवोक्तं पाश्चात्यबाधादर्शनन्तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ॥

टी० "यथे"ति, पूर्वं पश्चात्तनबाधादर्शनमभ्युपेत्य दूषणमुक्तमिदानीं तदेव नास्तीत्याह, "पश्चादिति", तदुपपादयति, "शून्यमिति", तद्वाक्यं तत्प्रामाण्यमपि भ्रान्तिसिद्धमिति शङ्कते, "तत्त्विति" तुल्यत्वमाह, "एतदपीति", पाश्चात्यबाधादर्शनस्य प्रामाण्यहेतुत्ववचनं च सर्वशून्यवादिन एव साधकं ततः परं निषेध्याभावेन निषेधानुदयादित्याह "पाश्चात्येति", प्रामाण्यादीनां दोषमूलत्वं द्वयोरपि तुल्यं पाश्चात्यबाधादर्शनं तु शून्यवादिनोऽधिकमित्यर्थः । सर्वशून्यवादिनोऽपि परो निषेधोऽस्ति सर्वमस्तीति वचनं हि तन्निषेध इति चेत् तर्हि प्रपञ्चमिथ्यात्ववचनस्यापि प्रपञ्चसत्यतावचनं निषेधः स्यात् नास्तीति वचनमेव च निषेध इति चेत् तत्तु शून्यवादिन एवेति भावः । इदं च वेदाप्रामाण्यं मृषावादिनां सौगतानां च समानं यदाहुः "वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् । बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसंसदः" ।

ततः शङ्का प्रसरति तथाऽपि परमतेऽप्यबाधितविषयकत्वं कथं प्रमात्वप्रयोजकमिति विवेचनीयं तत्राबाधितविषयकत्वं स्वरूपसत् ज्ञायमानं वा प्रमात्वप्रयोजकं, तत्रापि च स्वरूपसतो ज्ञायमानस्य वा प्रमात्वस्य प्रयोज्यत्वमिति विकल्पस्तत्र यदि अबाधितविषयकत्वं स्वरूपसत् स्वरूपसतः प्रमात्वस्य प्रयोजकमिति परो ब्रूयात्तदाऽबाधितविषयकत्वस्यैव प्रमात्वेन प्रमात्वस्य प्रमात्वप्रयोजकत्वे पर्यवसानमित्यात्माश्रयः, यदि त्वबाधितविषयकत्वज्ञानं प्रमात्वज्ञानप्रयोजकमित्युच्येत तदाऽपि पूर्ववदेवात्माश्रयप्रसङ्गः तस्मादबाधितविषयकत्वज्ञानं स्वरूपसतः प्रमात्वस्य प्रयोजकमथवा अबाधितविषयकत्वं स्वरूपसत् प्रमात्वज्ञानप्रयोजकमित्यवशिष्येते कल्पौ तत्र यदि प्रथमः पक्षः कक्षीक्रियेत तदा प्रमात्वप्रयोजकीभूतमबाधितविषयकत्वज्ञानं प्रमाणजन्यत्वेनैवागत्या वक्तव्यमिति प्रमाणजन्यत्वस्यैव प्रमात्वप्रयोजकत्वं भवताऽपि प्रकारान्तरेणाऽङ्गीकृतमित्यस्मत्पक्षसौस्थ्यं, यदि तु स्वरूपसदबाधितविषयकत्वं प्रमात्वज्ञानप्रयोजकमुच्येत तदेतदपि न सांप्रतम् अबाधितविषयकत्वेऽपि दोषसमवधाने प्रमात्वज्ञानानुदयात् । तदेतदाशयानैराचार्यपादैस्तथोक्तमित्यनुसंधेयम् ।

ननु विषयसत्यत्वरूपं शास्त्रप्रामाण्यं विद्यत इति महदिह वैषम्यमस्माकमिति चेत् न किं कतिपयविषयसत्यत्वं विवक्षितम्? उत कृत्स्नविषयसत्यत्वं? कतिपयविषयसत्यत्वं बुद्धागमस्याप्यस्ति संवित्स्वयम्प्रकाशत्वादेस्सम्प्रतिपन्नत्वात् कृत्स्नविषयसत्यत्वं तु श्रुतेरपि त्वयाऽपि न स्वीकृतमिति । किं च विषयसत्यत्वं दुर्वचं सत्यतयाऽभ्युपेतस्य ब्रह्मणः प्रमाणविषयत्वानभ्युपगमात् यत्त्वादित्यो यूप इत्यत्र यूपादित्यैक्याप्रतिपादनं तात्पर्यलिङ्गाभावान्न तु प्रत्यक्षप्राबल्यादित्युच्यते तत्र तात्पर्यलिङ्गाभावोऽभ्युपगत एव तेन प्रत्यक्षविरुद्धार्थप्रतिपादनाक्षमत्वमर्जनीयमापतति न हि वेदान्तिभिरर्थवादादेरन्यपरत्वात्स्वार्थे प्रामाण्यं त्यज्यते मन्त्रार्थवादानां स्वार्थे प्रामाण्यस्य भवद्भिरेवोपपादितत्वात् अतः स्तुतिपरत्वात् यूपादित्यैक्याप्रतिपादनमित्यपसिद्धान्तः । अर्थवादानां स्वार्थे तात्पर्य[1]मस्ति चेत् कथं तद्यूपादित्यैक्याप्रतिपादनमिति चेत् उच्यते प्रमाणान्तराविरोधश्च तात्पर्यलिङ्गम् उपक्रमोपसंहाराद्विवदपूर्वत्वमपि तात्पर्यलिङ्गतया ह्युक्तम् "अभ्यासो ऽपूर्वता फल"मिति अपूर्वत्वं च साधकबाधकप्रमाणागोचरत्वं यथाऽऽहुः "असन्निकृष्टवाचा च द्वयमत्र जिहासितम् । तद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वेति" अतः प्रमाणान्तरागोचरत्वलक्षणं तात्पर्यलिङ्गमत्र नास्तीति यूपादित्यैक्याप्रतिपादनञ्च त्वर्थवादत्वेन स्वार्थे प्रामाण्यस्याभावादिति अतस्तात्पर्यलिङ्गाभावो नाम प्रत्यक्षविरोधे पर्यवसित इति शास्त्रं न तद्विरुद्धार्थप्रतिपादनक्षमम् । शास्त्रप्राबल्यनिरसनं परिसमापयति "अल"मिति, । यद्वा यत्तु प्रत्यक्षमित्यादिना न्यायमुखेन कृतं परपक्षप्रतिक्षेपमुपसंहरति, "अलमिति", प्रमाणविरुद्धस्तर्कः कुतर्कः तत एवाप्रतिष्ठितत्वं स्वविरुद्धबौद्धमतोपयुक्तयुक्तिकथनात्परिहसनीयत्वं परेण प्रत्यक्षादपि शास्त्रप्राबल्यं वदता प्रबलतयाऽभिमतं शास्त्रं पुरस्कृत्य पश्चात्तर्कः प्रतिपादितः सिद्धान्ते तु प्रबलतया अभिमतलौकिकप्रमाणगतिं प्रथमं निरूप्य परोक्तदुस्तर्कचिरस्य लौकिकप्रमाणविरोधे शास्त्रप्राबल्यं च प्रतिक्षिप्तं शास्त्रस्य लौकिकप्रमाणविरुद्धार्थप्रतिपादनासाम-

---

१ प्रामाण्यमस्तीति द्राविडपाठः ।

र्थ्योपपदनेन शास्त्रस्य सविशेषपरत्वं सामान्यतः सामर्थ्यात्सिद्धं विशेषेण शब्दस्य पदवाक्यरूपेण प्रवृत्त्या सविशेषपरतोपपादनाच्च शास्त्रस्य सविशेषपरत्वं सामान्येनसिद्धमथापि ये वाक्यविशेषाः परेण निर्विशेषपरत्वेनोदाहृताः तेषां सविशेषपरत्वं वाक्यतात्पर्यपर्यालोचनया प्रतिपादयितुमारभते—

सू० यदुक्तं वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि "सदेव सौम्येदमग्र आसीदित्येवमादीनीति तदयुक्तम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्याद्यनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य एवंभूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात्प्रकरणस्य

टी० "यदुक्तमि"त्यादिना तत्र निर्विशेषपरत्वं संग्रहेणानुवदति "यदुक्त"मिति, ज्ञानैकरसत्वेन शोधकवाक्येषु प्रतिपन्नत्वान्निर्विशेषत्वं, तच्च कारणवाक्येषु प्रतिपन्नं, वस्तुमात्र—शब्देनान्यत्र सगुणे ब्रह्मणि तात्पर्याभावस्सूच्यत इत्यादीनीत्युक्ते तस्यामेवोपनिषदि पर्यवस्यतीति तद्व्यावृत्त्यर्थमित्येवमादीनीत्युक्तं तद् दूषयति "तदयुक्त"मिति, कुत इत्यत्राह "एकविज्ञानेने"ति, येनाश्रुतमित्यादिवाक्येनैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते, अस्यायमर्थः, येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवतीति । न तु ब्रह्मणस्सत्तया सर्वं ज्ञातं भवतीति दार्ष्टान्तिकसामर्थ्यात् मृद्दृष्टान्तसामर्थ्याच्च, न हि ब्रह्मसत्तया मृत्पिण्डसत्तया वा तत्कार्यता[1] ज्ञायते "कस्मिन्नु भगवतो विज्ञाते सर्वमिदं विज्ञातं भवती"ति मुण्ड-

१ तत्कार्यं ज्ञायते इति तु क्रम् ।

कोपनिषदि "आत्मनि खल्वरे दृष्टे श्रुते विज्ञाते इदं सर्वं विदितमि"ति बृहदारण्यके च श्रवणात्, अतो यथोक्त एव प्रतिज्ञावाक्यार्थः, न हि घटज्ञानेन पटज्ञानसंभव इत्येकविज्ञानेन सर्वविज्ञानञ्च संभवतीति शङ्कायां कार्यकारणयोस्तद् दृष्टमित्याह यथा 'सोम्ये'ति, तत्राप्यसत्कार्यवादमुखेनैकविज्ञानेन सर्वविज्ञानानुपपत्तिशङ्कां परिहरति, "वाचारम्भणमिति", वाचा—वाक्शब्दोऽजहल्लक्षणया वाक्पूर्वव्यवहारपरः, वाचेति तृतीयया प्रयोजनतया हेतुत्वं विवक्षितम् आरम्भणमिति कर्मणि ल्युट् आरभ्यते आलभ्यते इत्यारम्भणम् "आलम्भः स्पर्शहिंसयोः" मृत्पिण्डेनेत्यर्थसिद्धं विकारो घटत्वद्रव्यत्वाद्यवस्था वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते मृत्पिण्डो नामरूपभाग् भवतीत्यर्थः । कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह, "मृत्तिकेत्येव सत्यमिति" मृदयं घट इति प्रत्यभिज्ञया मृ[1]न्मयं घटादिकमपि मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थः । बुद्धिशब्दादिभेदाः घटपटादिषु द्रव्यभेदेऽपि दृष्टाः, आस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्येऽपि दृष्टाः अतस्ते साधारणाः, तत्राऽऽस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्यनियामिका प्रत्यभिज्ञा सैवात्रापि द्रव्यैक्यनियामिकेति भावः । अत्र मृत्तिकामात्रस्य पारमार्थ्यं विकारासत्यत्वं च विवक्षितं चेद्दिति—शब्दवैयर्थ्यं स्यादिति तदा मृत्तिकैव सत्येति हि वाच्यं विकारासत्यत्वे दृष्टान्तस्साध्यविकलः सत्यत्वप्रतिपत्तेर्घटादिसत्यत्वं व्यावहारिकमिति चेत् मृत्पिण्डस्यापि सत्यत्वं व्यावहारिकमिति न कारणसत्यत्वसिद्धिः कारणस्य व्यावहारिकमेव सत्यत्वमभिमतं चेत् तद् घटादेरपि तुल्यं स्यात् कार्यकारणद्रव्यैक्यात्, कारणविज्ञानेन कार्यविज्ञानमुपपन्नमस्तु तथाऽपि लोके विविधकार्यवर्गस्य विविधोपादानकत्वदर्शनादेकविज्ञानेन सर्वविज्ञानमनुपपन्नमिति शङ्कायां जगतो ब्रह्मैककारणतामाह "सदेव सोम्येदमग्र आसीदिति", श्रुतिगतसच्छब्दार्थमभिप्रेत्यात्र सच्छब्दवाच्यस्येत्युक्तं सगुणब्रह्मपरमिदमित्यन्यथासिद्धिर्दुर्वचेत्यभिप्रायेण परस्य ब्रह्मण इत्युक्तम्

---

१ मृण्मयमिति द्राविडपाठः ।

अग्रे—सृष्टेः पूर्वमित्यर्थः अनन्तरं सृष्टेर्वक्ष्यमाणत्वात् विजातीयसजातीयस्वगतनानात्वव्यावृत्तिः अत्र विवक्षिता चेदय इति वक्तुमयुक्तं, न हि ब्रह्मणः कालविशेषे निर्विशेषत्वं वैषम्यनैर्घृण्यादिपरिहाराय जीवबहुत्वतत्कर्मप्रवाहतदनादित्वानामभ्युपगम्यत्वाच्च तद्बहुत्वमपारमार्थिकमिति चेत् न पारमार्थिकबहुत्वस्येदानीमप्यभावादग्रशब्दवैयर्थ्यात् न चाग्रशब्दस्याविवक्षितार्थता अनन्तरं सृष्ट्युक्तेः अतः कालरूपविजातीयभेद श्चेतनरूपसजातीयभेदः सार्वज्ञ्यादिसृष्ट्यनुगुणगुणरूपस्वगतभेदश्च तदानीमस्तीति विजातीयादित्रिविधभेदनिरसनपरत्व विरुद्धं कारणवाक्यत्वात् । न चेदिदं कारणवाक्यमीदृशानां वाक्यानां सर्वशाखाप्रत्ययन्यायाद्विजातीयादिभेदनिरसनपरत्वेन कारणपरत्वाभावात् ब्रह्मकारणत्वमप्रमाणं स्यात् अवधारणवाचिन एवकारस्य स्वयंव्यावर्त्यविशेषोपस्थापनासमर्थस्य समभिव्याहृतपदान्तरार्थविरोधिव्यावर्तकत्वनियमदर्शनात् सदेवेत्यवधारणमसत्कार्यवादव्युदासपरं, न ह्ययं विद्वानेवेत्यवधारणं ब्राह्मणत्वं व्यावर्तयति अपि त्वविद्वत्त्वमेव, अतः शब्दस्य स्वारस्यात्सदेवेति व्युदसनीयमसत्त्वमेव न तु विजातीयभेदः । यद्यपि सद्विजातीयमसत् तथाऽपि तस्य व्यावर्त्यत्वं न विजातीयत्वाकारेण अपि तु सद्विरोधित्वरूपेण सदेव न तु कदाचिदपि असदित्यर्थः सच्छब्दो हि मानसंबन्धयोग्यत्वलक्षणसत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते अयं तु सच्छब्दो विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्वसामर्थ्यात्कारणत्वौपयिकगुणविशिष्टप्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति एकमेवेत्यविभक्तनामरूपं कारणावस्थं ब्रह्मोच्यते कारणावस्थायामेकत्वावधारणस्य बहु स्यामिति वक्ष्यमाणकार्यबहुत्वप्रतियोग्येकत्वपरत्वादेकेन मृत्पिण्डेन सर्वं मृण्मयमित्युक्तदृष्टान्तसामर्थ्यात् "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते"ति श्रुत्यन्तरैक्यार्थ्याच्चायमेवार्थः वैशेषिकादिभिर्नित्यतयोक्तानामाकाशादीनामपि संहाराभिप्राय एवकारः । एवमविभक्तनामरूपत्वाद्ब्रह्मण उपादानत्वं सिद्धं भाव्यवस्थाविशेषवतःप्रागवस्थायोगो ह्युपादानत्वम् अद्वितीयमिति निमित्तान्तरनिषेधः उपादानस्य प्रस्तुतत्वेन निमित्तस्य धीस्थत्वात्परतन्त्रक-

पविशेषाणानां विहितत्वान्निषेधस्य विहितव्यतिरिक्तविषयत्वादुपरितनवा-
क्यसङ्गतेरपेक्षितत्वाच्च एकमेवेति शब्दस्याविभक्तनामरूपतापरत्वं बहु
स्यामित्यनेनावगम्यते "तदैक्षत तत्तेजो ऽसृजतेत्यनेनाद्वितीयपदस्य निमि-
त्तान्तराभावपरत्वमवगम्यते परस्य ब्रह्मणः सर्वदा सत्त्वेन सदेवेत्यवधा-
रणमसत्कार्यवादव्युदसनपरमित्युपरितनेन कथमसतः सज्जायेतेत्यादिवा-
क्येनावगम्यते परस्य ब्रह्मणः सर्वदा सत्त्वेन सदेवं कथमसत इत्यादिवाक्यं
वैशेषिकमतनिरासपरं न तु क्षणिकवादिनिरासपरं न शून्यवादिनिरास-
परं च क्षणिकशून्यवादिनिरासे कृते ऽप्येकविज्ञानेन सर्वविज्ञानस्य वैशेषिक-
मतनिराससापेक्षत्वात् "तद्धैक आहुः" "असदेवेदमग्र आसीदित्यारब्धत्वा-
च्च, न हि क्षणिकत्वं शून्यत्वं च कालविशेषे भवति अतोऽसत्कार्यवाद-
निरासपरं तद्धैक आहुरित्यादि वाक्यं "कुतस्तु खलु सौम्यैवं स्यादि"ति
मृद उत्पन्नस्य मृदात्मकत्ववदसत उत्पन्नस्यासदात्मकत्वप्रसङ्ग इति भावः।
उत्पत्तिर्नाम द्रव्यस्यावस्थान्तरापत्तिरित्ययमर्थो वाचारम्भणमित्यनेन शि-
क्षितः, तदुपजीव्योच्यते कथमसतः सज्जायेतेति कथं निराश्रयावस्थासंभव
इत्यर्थः। तदैक्षतेति सर्वज्ञत्वम्, असृजतेति निमित्तत्वं, बहु स्यामित्युपाद-
नत्वम्, तदुभयागुणं सर्वशक्तित्वं, सत्यसङ्कल्पत्वं च, अनेन जीवेनात्मनाऽनु-
प्रविश्येति सर्वान्तरत्वं चोक्तं भवति जीवेनात्मना जीवशरीरकेण मयेत्यर्थः
सिंहेन भूत्वा बहवो मया अत्ता व्याघ्रेण भूत्वा बहवो मया हता इति
वत् सर्वज्ञत्वादिगुणकस्य तद्विपरीताकारजीवैक्यासंभवाद्यस्यात्मा शरीर-
मिति वचनात्तदनुप्रविश्येत्यचेतन इव जीवेऽप्यनुप्रवेशश्रवणाच्च शरीरवाचि-
पदस्य शरीरिपर्यन्तत्वस्य मुख्यतयोपपन्नत्वाच्चायमेवार्थः । "सदायतना"
इत्यनेन सर्वाधारता तत एव सर्वनियमनं च सिद्धम् । "एतस्य वाऽक्षरस्य
प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत" इति प्रशासनेन धारकत्वश्र-
वणात् एवं सर्वधारत्वसर्वनियमनसर्वान्तरत्वैः शरीरिलक्षणैर्जगच्छरीरक-
त्वं ब्रह्मण उक्तम् । आदि—शब्देन सृष्ट्युपयोगिनः श्रुत्यन्तरसिद्धा गुणा गृह्यन्ते
ऐतदात्म्यमित्यनेन कृत्स्नस्य जगतस्तदात्मकता चावगम्यते तत्सत्यमिति त-

दात्मकत्वेनैव जगतः प्रामाणिकत्वं जगतः स्वनिष्ठत्वेन[१] प्रतीतिर्भ्रान्तिरित्यर्थः। अतः कृत्स्नस्य जगतस्स आत्मा "ऐतदात्म्यमिदं सर्वं" स "आत्मे"ति निर्देशो "रामानुजं लक्ष्मणपूर्वजं चे"तिवदन्योन्यसंबन्धित्वतात्पर्यातिशयकृतः। यद्वा 'स त आत्मा अन्तर्याम्यमृत" इतिवत्कृत्स्नजगदन्तर्यामित्वात्तवात्मा स इत्यर्थः, तस्मात् त्वंशब्दतदर्थतद्बुद्धयस्तत्पर्यन्ता इति तत्त्वमसीत्यस्यार्थ इत्याह "एवंभूते"ति, एवंभूतशब्देन तत्पदस्य प्रकृतपरामर्शित्वं सूचितम्। अस्याः सद्विद्यायास्सविशेषवस्तुन्येव षड्विधतात्पर्यलिङ्गं विद्यते, उपक्रमे तावत् "उत तमादेशमप्राक्ष्य" इत्यत्रादेशशब्देन प्रशासिताऽभिधीयते अत्र श्लोकावाचार्यपादैरुक्तौ "छान्दोग्ये केचिदाहुर्द्विशतिरुत तमादेशमप्राक्ष्य इत्यत्राङ् पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्तः। नो कर्त्तर्यस्ति कर्मण्यगणि घञिह सत्कर्तृशास्तौ न कर्म स्यात्स्यात्कर्मोपदेशे तदिदमुत तमादेशवाचोपदेश्यम्। अत्र ब्रूमः प्रशास्तिं वदति दिशिरसावाङ्मुखो नोपदेशं शास्तौ सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्गः। युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्वं शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षे"ति आदेशशब्देनोपदेश्यमुच्यते प्रकृत्यर्थ उपदेशः प्रत्ययार्थः कर्मत्वम् 'अकर्तरि च कारके संज्ञाया"मिति कर्तृव्यतिरिक्तकारके घञोविहितत्वादुपदेशे ब्रह्मणः कर्मत्वोपपत्तेश्च, प्रशासने तु ब्रह्म न कर्म अपि तु कर्तृ कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः। नात्र कर्त्तरि कप्रत्यय उपप-

---

१ नैतेन शाङ्करमतप्रवेशः शङ्कनीयः, निजमते भगवतः सर्वाधारत्वेन सर्वनियामकत्वेन चिदचिदन्तर्यामित्वेन च विश्वव्यवहारनिर्वाहकतया भगवत्संकल्पायत्तसत्ताकतया आब्रह्मस्तम्बरूपे जगज्जातेऽङ्गीकृतत्वात्। भगवत्संकल्पानायत्तसत्ताकत्वरूपाणा जगतः स्वनिष्ठत्वेन प्रतीतेश्च भ्रमत्वाभ्युपगमात्। ब्रह्मवृत्तिकात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्य च टीकाकारैरलाभादिति तत्त्वम्। इदं पुनरिहावधेयं विशिष्टाद्वैतमते चिदचिदीश्वराणां पृथक्तत्त्वरूपत्वेऽप्येकः स्वसङ्कल्पायत्तानन्तसर्वसमृद्धिः, चिदचित्तत्त्वयोस्तु न तथाभावः किन्तु भगवदिच्छाधीनसर्वावस्थावस्थितत्वमित्यत्यन्तपारतन्त्र्यं, तदेव च तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति इत्यादिश्रुतिशतेन बोध्यते न तु ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वं तयोरप्यकल्पितत्वेन तथा वक्तुमशक्यत्वादिति प्रामाणिकाः।

द्यते "क्ङिति च" इति गुणप्रतिषेधादादेशशब्दे रूपासिद्धेः, नापि पचाद्यच्प्रत्यय उपपद्यते दिशिधातोरिगुपधत्वेन "इगुपधात्क" इत्यपवादसूत्रेण कप्रत्ययप्राप्तेर्गुणाभावादतो घञ्प्रत्ययान्त एवायमादेशशब्दः, स च प्रत्ययः कर्तर्यविहित इति कर्मार्थत्वस्यैव युक्तत्वादुपदेश्यमेवादेशशब्दवाच्यमिति अत्रोच्यते प्रकृत्यर्थः शासनं प्रसिद्धिप्राचुर्यात् अन्यथा स्वारस्यभङ्गात् आङ्पूर्वादिशतिर्नियोक्तृप्रयोजनवचनः, उपपूर्वस्तु नियोज्यप्रयोजनवचन इति हि न्यासकारः, नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचक इत्यर्थः, एवमन्यत्रापि। किंच उपदेश्यत्वं लौकिकालौकिककर्मब्रह्मभागार्थसाधारणं, शासितृत्वं तु ब्रह्मणोऽसाधारणम् "अन्तःप्रविष्टः शास्ता जनानाम्" "एतस्य वाऽक्षरस्य प्रशासने गार्गी"त्यादिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात् निरुपाधिकोपदेश्यत्वं ब्रह्मणोऽसाधारणमिति चेन्न इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेषु साधारण्यात् । यद्यप्यपरिमितसुखप्राप्तिदुःखनिवृत्त्यादि साक्षादुपदेश्यं स्यात्तथापि संसारनिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणं प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम् अत उपदेश्यत्वकथनवैयर्थ्यं च

ननु येनाश्रुतं श्रुतमित्यनेनैकवाक्यात्स्वज्ञानेनान्यज्ञानहेतुनाविशेषितमुपदेश्यत्वम् असाधारणमिति चेत्तथाप्येतादृशमुपदेश्यत्वं प्रतिज्ञावाक्येन प्रष्टव्यत्वोक्त्या चार्थसिद्धमित्यतपेक्षितोपदेश्यत्वकथनादप्यपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तं येनाश्रुतमित्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत्, निमित्तान्तरे सति एकविज्ञानात्सर्वविज्ञानं नोपपद्यते अतः प्रतिपिपादयिषितवस्तुनोऽपेक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितं घञ्प्रत्ययस्य तु करणेऽपि व्युत्पन्नत्वाद्विवक्षातः कारकाणां प्रवृत्तिरिति शाब्दोक्तन्यायेन कर्त्तर्यैव करणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते अकर्त्तरीति सूत्रस्य प्रयोजनं करणत्वविवक्षया विना कर्त्तर्यसाधुत्वेन प्रयोगनिवृत्तिः । उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यं च, प्रशासनपक्षे तु प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्, अतः प्रशासितैवादेशशब्दाभिधेय इति स्वीकर्तुं युक्तम् । एवमुपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः, तथा जगदुपादानत्वं नि-

मित्तत्वम्, तदनुगुणसार्वज्ञ्यं, सर्वशक्तित्वादिकं चावगतमुपसंहारे च तत्त्वमसीति सामानाधिकरण्येन जीवान्तर्यामित्वं नाम गुणविशेष उक्तः, अस्यैवार्थस्य बहुश आवर्तितत्वादभ्यासोऽप्यस्ति, एवं ब्रह्मणो जगत्कारणत्वजगदन्तरात्मत्वादिगुणानां प्रमाणान्तराप्रतिपन्नत्वादपूर्वता सिद्धा। एवमुपासकस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्यत इति शरीरपातानन्तरं मोक्षश्रवणात्फलमपि विद्यते पितुः पुत्रं प्रति प्रतिवचनरूपत्वादर्थवादश्च लब्धः, मृत्पिण्डादिदृष्टान्तोपपादनादुपपत्तिश्चेति अस्मिन् दृष्टान्तत्रयेऽपि विवर्तपक्षानुगुण एकोपि दृष्टान्तो न दृश्यते अपि तु परिणामपक्षानुगुण एव दृश्यते, दार्ष्टान्तिकविषयवाक्येऽपि "तत्तेजोऽसृजतेत्युक्तं न तु तदभ्रमदिति अतोऽस्यां श्रुतौ विवर्तपक्षप्रसङ्गोऽपि नास्ति, श्रुत्यन्तरेषु च तदात्मानं स्वयमकुरुतेत्यादिकं श्रूयते न तु व्यवर्ततेति, सूत्रं च "परिणामादि"ति, न तु विवर्तादिति स्मृतिषु च "कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकं क्षितिजलपरिणामतोऽनिलान्ते" इत्यादिषु परिणामपक्षानुगुण्यं दृश्यते अतः श्रुतिस्मृतिसूत्रस्वारस्यात् परिणामपक्ष एव दृश्यन्ते अतः श्रुतिस्मृतिसूत्रस्वारस्यात् परिणाम एवाभ्युपगन्तव्यः स च परिणामस्सद्वारक एव भवितुमर्हति निर्विकारत्वनिर्दोषत्वानुप्रवेशशरीरशरीरिभावादिविषयानेकश्रुतिस्वारस्यादन्यथा तद्विरोधप्रसङ्गाच्चेति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किं कथं तदुपपादनमित्याशङ्कायामेतद्विस्तरो वेदार्थसङ्ग्रह इत्याह,—

मू० प्रपञ्चितश्चायमर्थो वेदार्थसङ्ग्रहे अचाप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते "अथ परा यया तदक्षरमधिगम्यत" इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिद्ध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसर्वज्ञत्वादिकल्याणगणयोगः परस्य ब्रह्मणः प्रतिपादितः

१ मकुटपदं द्राविडाः प्रयुञ्जते।

टी० "प्रपञ्चित" इति, अत्रापेक्षितार्थः कथं ज्ञास्यत इत्यत्राह, "अत्रापी"ति, निपुणतरं—तस्याधिकरणस्यैतदर्थैकविषयत्वादिति भावः । अनन्तरोदाहृतायाः परविद्यायाः सविशेषपरत्वमाह "अथ परेत्यादि"ना- अपाणिपादमित्यन्तानां पदानां विषयमाह "प्राकृतानिति" प्राकृताः—प्रकृतिसंबन्धिनः, अनेन पदेन क्वचित्सिद्धस्य हि क्वचिन्निषेधः इति निषेध्यानां क्वापि सिद्धिर्दर्शिता भवति । प्रकृतिगताः—प्रकृतिसंसर्गप्रयुक्ता जीवगता दोषाश्च प्राकृताः । अद्रेश्यमग्राह्यं प्रत्यक्षा[1]गोचरमनुमानाद्यगोचरम् । यद्वा चक्षुरगोचरमितीन्द्रियान्तरागोचरम् अगोत्रमवर्णं प्राकृतनामरूपरहितम् अचक्षुःश्रोत्रम् इन्द्रियाधीनज्ञानञ्च भवति अपाणिपादम् इन्द्रियाधीनचेष्टं न भवति "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः", इति श्रुतेः अनेन पदद्वयेन जीवगतहेयनिषेधः, इन्द्रियाधीनज्ञानत्वं तदधीनप्रवृत्तित्वमपि हि जीवधर्मः सर्वगतं सुसूक्ष्ममिति पाठक्रमः, तथाऽप्यर्थक्रमेण व्याख्यातं "सूक्ष्मत्वसर्वगतत्वे"ति, सूक्ष्मतया हि व्याप्तिः, नित्यत्वेन कालापरिच्छेदः विभुं प्रभुं प्रभुत्वनियन्तृत्वं जगच्छरीरकत्वं फलितमनेन वस्त्वपरिच्छेदसिद्धिः, सर्वगतत्वेन देशापरिच्छेदः, अव्ययत्वं व्ययशब्दोपलक्षितदोषविरोधित्वं नाम गुण इत्यभिप्रायेण कल्याणगुणैः सह तन्निर्देशः । यद्वा अव्ययत्वमेकरूपत्वं पूर्णत्वं वा, भूतयोनित्वं—जगत्कारणत्वम् एतत्प्रकरणस्थेन "यस्सर्वज्ञस्सर्वविदि"त्यनेन वाक्येन सार्वज्ञ्यमुक्तं सर्वज्ञस्सर्ववित् सर्वं स्वरूपतो वेत्ति सर्वप्रकारतश्च वेत्तीत्यर्थः, परस्य ब्रह्मण इत्यस्य पूर्ववदर्थः अथ शोधकवाक्येषु सत्यज्ञानादिवाक्यस्याखण्डार्थत्वं निरस्यति—

**श्रु० सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः ॥**

---

[1] प्रत्यक्षागोचर इत्यत्रास्त्विष्कृतयाऽवश्यं वक्तव्ये तथा लेखो भ्रमनिबन्धन इति भाति ।

टी० "सत्यं ज्ञानमित्यादिना, स खल्वेवमुपन्यस्तः प्रतिपत्तिसौक-
र्याया चार्यपादैः, तथा हि सत्यादिवाक्यं सत्य[1]त्वादिगुणविशिष्टमेव ब्रह्म
प्रतिपादयति नीलमुत्पलमित्यादिषु समानाधिकरणवाक्येषु विशिष्टैका-
र्थपरत्वव्युत्पत्तेः सत्यादिवाक्यस्य च समानाधिकरणत्वाच्च, तथा च
सामानाधिकरण्यलक्षणं भिन्नप्रवृत्तिनिमित्तानामित्यादिनोक्तं शाब्दैः, तत्र
यदुक्तं सामानाधिकरण्यस्यैकार्थ्यपरत्वव्युत्पत्तेरेकार्थं च पदानां विशे-
षणमात्रपरत्वे विशिष्टपरत्वे चासिद्धेः स्वरूपमात्रैक्यपरत्वं सत्यादि-
समानाधिकरणपदानामास्थेयमिति तदयुक्तं विकल्पासहत्वात् किं सत्या-
दिपदानि तत्तत्पदार्थविरोधिव्यावृत्तिमात्रपराणि ? उत स्वरूपमात्रपराणि ?
उत विरोधिव्यावृत्त्यवच्छिन्नस्वरूपपराणी ? ति विवेचनीयं, न तावद्विरोधि-
व्यावृत्तिमात्रपराणि व्यावर्त्तमाना[2]नामनेकत्वेनैकार्थत्वासिद्धेः, व्यावर्त्यानेक-
त्वाद्व्यावृत्तयो ह्यनेकाः स्युः, नापि स्वरूपपराणि तथा सति पदानां पर्याय-
त्वप्रसङ्गात् प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिप्रसङ्गादे-
कतरपदवैयर्थ्यप्रसङ्गाच्च । नापि तदवच्छिन्नस्वरूपपराणि विकल्पासहत्वात्
किं विरोधिव्यावृत्तीनां स्वरूपावच्छेदकत्वमुपलक्षणतया ? विशेषणतया ?
वा न तावदाद्यः कल्पः, एकेनोपलक्षणेन स्वरूपं प्रतिपन्नमिति उपलक्षणान्त-
रवैयर्थ्यात् उपलक्ष्याद्बहिर्भूत उपलक्ष्यप्रतीत्युपायो धर्म उपलक्षणमिति
ह्युपलक्षणविदः । तथा च शाखाग्रादिषु दृश्यते अत एकतरपदवैयर्थ्यं, प्रवृत्ति-
निमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च । कथं तर्हि भवत्पक्षे
जन्मादिबहूपलक्षणत्वमेकस्यैव ब्रह्मणोऽभ्युपगम्यत इति चेत् उच्यते तत्र
ह्युपलक्ष्यस्य धर्मिणो ब्रह्मण एकत्वेऽपि प्रत्युपलक्षणमुपलक्ष्[3]णधर्मभेदो-
जन्मस्थित्याद्यनुगुणज्ञानशक्त्यादिरूपोऽस्माभिरभ्युपगम्यते अन्यथा तत्राप्य-
नेकोपलक्षणवैयर्थ्यं प्रसज्यत एव, त्वत्पक्षे त्वनेकोपलक्षणोपलक्ष्यधर्मभेदान-

१ सत्यादिगुणविशिष्टमेवेति द्राविडा अधीयते ।

२ व्यावृत्तीनामनेकत्वेनेति पुस्तकान्तरपाठः ।

३ उपलक्ष्यधर्मभेद इति पाठान्तरम् ।

भ्युपगमादुक्तदोषो दुर्वारः, तदभ्युपगमे हि ब्रह्मणः सविशेषत्वप्रसङ्गः। नापि द्वितीयः, विशेषणभूतानां व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः, विशेष्यान्तर्भूता विशेष्यप्रतीत्युपायोधर्मो हि विशेषणं, विशेष्यान्तर्भावो नाम ज्ञाप्यान्तर्भावः, विशेषणभूतार्थभेदेऽपि विशेष्यभूतप्रधानार्थैक्यादैकार्थ्यसिद्धिरिति चेत् तत्सखण्डवाक्यार्थवादिनोऽपि समानं, कस्तर्हि विशेष आवयोरिति चेत् अयमेव विशेषः, यदेकस्य मते पदानां लाक्षणिकत्वमितरस्य पक्षे तेषां मुख्यत्वमिति। यच्चोक्तं विशेषणान्तरविशिष्टे वस्तुनि विशेषणान्तरान्वयाद्विशेषणानामन्योन्यसमवायप्रसङ्ग इति तदसत् विकल्पासहत्वात् "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्। न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधक" मित्युक्तप्रक्रियया हि वाक्यमर्थमवबोधयति, तत्र किं पदानां पदार्थस्मा[1]रणदशायामन्योन्यसमवायप्रसङ्गः? उत परामर्शदशायाम्? अहोस्विद्वाक्यार्थाभिधानदशायां?, न तावत्प्रथमः कल्पः स्मारणदशायां पृथक्पृथक्पदार्थस्मरणेन मिथोऽन्वयप्रसङ्गाभावात्। नापि द्वितीयः, एकस्मिन्वस्तुन्यविरुद्धानेकविशेषणसमवायस्य प्रत्यक्षाद्यवगतस्य यथाऽवस्थितवस्तुपरामर्शदशायां परामृश्यमानत्वात्। नापि तृतीयः वाक्यार्थाभिधानदशायां सर्वैः[2] पदैर्युगपदनेकविशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकत्वेन क्रमाभिधानप्रयुक्तान्योन्यसमवायप्रसङ्गाभावात् यथैव हि द्वे चक्षुषी जातिगुणाद्यनेकविशेषणविशिष्टैकवस्तुविषयामेकां धियं युगपज्जनयतः तथैवानेकपदानि युगपदेव तत्तद्विशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकानि भवन्ति क्रमेणाभिधानेऽपि नान्योन्यसमवायप्रसङ्गः पदान्तरोपप[3]त्तविशिष्टे विशेष्यांशस्यैव पदान्तरोपात्तविशेषणैर्विशेष्यमाणत्वात्तच्च यथादृष्टविषयत्वात् पदानां व्युत्पत्तेः, अन्यथा भवत्पक्षे व्यावृत्तिरूपविशेषणानामन्योन्यविशेषणविशेष्यभावः क्रमाभिधानप्रयुक्तो दुर्वारः, अतो यथोक्त एव परिहारस्तवापि

१ पदार्थस्मरणदशायामिति पुस्तकान्तरपाठः।

२ सर्वेषां पदानामिति तु युक्तो भाति पाठस्तत्र षष्ठ्या एव साधुत्वादिति तज्ज्ञाः।

३ पदान्तरोपात्ते इति पुस्तकान्तरम्।

शरणं, क्रमेणाभिधानानभ्युपगमे कथमुद्देश्योपादेयविभागसिद्धिरिति चेत् उच्यते ज्ञाताज्ञातविभागो ह्युद्देश्योपादेयविभागः, स च युगपत्प्रतिपादनेऽपि नापैति एकेन वाक्येनैकस्य वस्तुनोऽनेकविशेषणान्वये युगपत्प्रतिपाद्ये तत्रैकविशेषणान्वयः प्रागेव ज्ञातः, विशेषणान्तरान्वयस्त्वज्ञात इति ज्ञाताज्ञातविभागपरामर्शः परामर्शदशायां संभवत्येव । यदप्युक्तं विशिष्टैक्यप्रतिपादने विशेष्यैक्यवद्विशेषणैक्यं प्रसज्यत इति तदपि न साधीयः, विशेष्यमात्रैक्यपरत्वात्समानविभक्तेः, तच्च व्युत्पत्तिसिद्धं व्युत्पत्तिश्च प्रत्यक्षमूला प्रत्यक्षं च विशेष्यैक्यमेवावगमयति न तु विशेषणानामैक्यं, यथा गौरित्याद्येकपदप्रयोगेऽपि प्रातिपदिकावगतविशेषणविशेष्यैक्यं तद्गतमेकवचनचावगमयति किं तु विशेष्यैक्यमेवावगमयति प्रत्यक्षमूला व्युत्पत्तिरेव हि तत्र कारणं, तथा समानाधिकरणपदसङ्घातस्य समानविभक्तिरपि विशेष्यमात्रैक्यपरत्वेनैवनियामिका अन्यथा भवत्पक्षे असत्यादिप्रतियोगिव्यावृत्तिरूपविशेषणैक्यप्रसङ्गात्, प्रातिपदिकानां तत्तत्प्रतियोगिव्यावृत्तिविशिष्टस्वरूपपरत्वेऽपि समानविभक्तेः प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रैक्यपरत्वव्युत्पत्त्या न विशेषणैक्यं प्रसज्यत इति चेत्तदस्मत्पक्षेऽपि समानम्, आवयोर्विशेषस्तु प्रागेवोक्तः । यच्चोक्तं विशेषणभेदे विशेष्यभेदप्रसङ्ग इति, तदयुक्तं विशेषणभेदमात्रस्य विशेष्यभेदकत्वाभावात्तत[१]श्च देवदत्तः श्यामो युवेत्यादिषु विशेषणभेदेऽपि विशेष्यैक्यदर्शनात् विशेषणभेदस्य स्वतःप्राप्तविशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इति चेत् तन्न धर्मवाचिपदैक्यात्समानविभक्तिनिर्देशाच्चैक्यप्रतीतेः खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र धर्मवाचिपदैक्ये समानविभक्तिनिर्देशे सत्यपि विशेषणभेदाद्विशेष्यभेदः प्रतीयत इति चेन्नैवं यतः स्वतःप्राप्तं तयोर्विशेष्यैक्यप्रत्यायकत्वं प्रत्यक्षेण तत्रापोदितं, परोक्षविषयेऽपि खण्डः पूर्णशृङ्गो गौरित्यादिवाक्ये प्रयुक्ते खण्डत्वादिविशेषणभेदे विशेष्यभेदप्रतीतिर्दृश्यत इति चेत् परोक्षविषयेऽपि देवदत्तः श्यामो युवेत्यादिवाक्ये

१ तच्चेति तु पुस्तकान्तरम् ।

प्रयुक्ते श्यामत्वादिविशेषणभेदेऽपि विशेष्यैक्यप्रतीतिर्दृश्यत इति समानश्चर्चः, को निर्णायक इति चेत् यज्जातीयविशेषणानान्नियमेन भिन्नाश्रयत्वं दृष्टं प्रत्यक्षेण तज्जातीयविशेषणानां परोक्षत्वेऽपि विशेष्यभेदापादकत्वं यथा खण्डत्वादीनां, यज्जातीयविशेषणानां भिन्नाश्रयत्वनियमो न दृष्टः तज्जातीयविशेषणानां धर्मिवाचिपदैक्ये समानविभक्तिनिर्देशे चैकविशेष्यनिष्कर्षकत्वं युक्तं, यथा नीलत्वादीनामिति । यच्चोक्तं समानविभक्त्यवगतैक्यविरोधाद्विशेषणपरित्याग इति तदप्ययुक्तं प्रातिपदिकाभिहितविशेषणान्वयविरोधादैक्यपरित्यागापत्तेः, तथा हि यदि समानविभक्त्यन्वयावगतत्वादैक्यं न हातुं शक्यते तर्हि प्रातिपदिकावसितविशेषणान्वयः कथमिव हातुं शक्यते यथा नीलमुत्पलमित्यादौ, तत्र प्रत्यक्षसिद्धत्वादङ्गीक्रियत इति चेत् तत्रैक्यप्रतीतिरपि तथैव किमिति न स्यात् समानविभक्तिनिर्देशे परोक्षेऽप्यैक्यप्रतीतिः शाब्दी दृश्यत इति चेत् तथैव प्रयोगे परोक्षेऽपि प्रातिपदिकावगतविशेषणान्वयप्रतीतिर्दृश्यत एव तस्मादैक्यप्रतीतिः शाब्दी चेद्विशिष्टप्रतीतिरपि शाब्दीति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात् । किंच प्रातिपदिकागतविशेषणान्वयपरित्यागहेतुभूतसमानविभक्त्यवगतमैक्यं किं स्वरूप? मुत तदतिरिक्तम्? अतिरिक्तपक्षे सविशेषत्वप्रसङ्गः, अनतिरिक्तपक्षे हेत्वसिद्धिः, प्रातिपदिकावगतस्वरूपातिरेकेण समानविभक्त्या कस्य चिदैक्यस्याप्रतिपादनात्, न हि स्वरूपतः[1] तत्र विरोधाद्विशेषणत्यागः, व्यधिकरणवाक्येष्वपि तत्त्यागप्रसङ्गात् प्रातिपदिकावगतं स्वरूपं निर्विशेषमिति प्रतिज्ञाय समानविभक्तेरैक्यवगमादित्युक्ते स्वरूपावगमादित्युक्तम् । ततश्चैक्यावगमविरोधरूपहेत्वसिद्धिः, स्वरूपं तु विशेषणान्वयाविरुद्धं व्यधिकरणवाक्येषु विशेषणान्वयावगमादित्युक्तम् । किंच समानविभक्त्यवगतमैक्यं च प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रस्येत्युक्तत्वात्तस्य विशेषणभेदाविरोधित्वाच्च तद्विरोधनिबन्धनविशेषणत्यागो युक्तः, अतो न निर्देशविशेषत्वं वस्तुनः, कार्ष्ण्यव्यावृत्तपीतिमव्यावृत्तं शौक्ल्यमित्यादिषु प्रति-

---

१ न हि स्वरूपमात्रे विरोधाद्विशेषणपरित्यागः इति पुस्तकान्तरे ।

योगिभेदस्य तत्तद्व्यावृत्तस्वरूपस्य च शब्दोपात्तत्वान्न लक्षणाप्रसङ्गः, सत्यादिवाक्ये तु न तथेति विशेषः, एवं शौक्ल्यादिदृष्टान्तवाक्यात् सत्यादिदार्ष्टान्तिकवाक्यस्य शब्दद्वारकवैषम्यमुक्तम् । अर्थद्वारकं च वैषम्यं पूर्वोक्तं द्रष्टव्यं, कथमिति चेदित्थं शौक्ल्यादेः कस्यचिद् द्रव्यस्य द्रव्यान्तराद्व्यावर्त्तकधर्मतया धर्मान्तरानपेक्षत्वं युक्तं, ब्रह्मणस्तु न तथात्वमिति स्वरूपातिरिक्तव्यावर्त्तकधर्मापेक्षाऽस्त्येव न हि परनिर्वाहकत्वानभ्युपगमे स्वनिर्वाहकत्वसंभवः । किंच शौक्ल्यादिस्वरूपस्फुरणे सति न काष्ण्यांद्यध्यासप्रसङ्गः, अतस्तत्र स्वरूपमेव व्यावृत्तिरिति युक्तमभ्युपगन्तुं ब्रह्मस्वरूपस्फुरणेऽपि तदितराध्यासाभ्युपगमाद्रजतादिव्यावर्त्तकाधिष्ठानस्वरूपातिरिक्तशुक्तित्वादिवत् सर्वाध्यासाधिष्ठानब्रह्मस्वरूपातिरिक्तसकलेतरव्यावृत्तिरूपधर्मोऽवश्याभ्युपगमनीयः । यच्चोक्तं वाच्ये प्रधानांशस्य प्रतिपादनान्न लक्षणेति तदप्यसत् विशेषणद्वारेण विशेष्यपर्यवसायिनः शब्दस्य द्वारानभिधाने द्वार्यभिधानासिद्धेः, अलाक्षणिकत्वेऽपि विशिष्टाभिधानस्वरसस्य शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यहानिरवर्जनीया सा च न विरोधाभावे युक्ता । यच्च विषं भुङ्क्ष्वेत्यादिषु सर्वपदलक्षणा दृष्टेति तच्च विधिप्रत्ययांशस्य मुख्यार्थत्वादयुक्तं, तत्र विधिप्रत्ययव्यतिरिक्तशब्दलक्षणा च मुख्यार्थत्वे प्रमाणान्तरविरोधादङ्गीक्रियते प्रस्तुतेऽपि तु विरोधाभावान्न सा युक्ता विमतं वाक्यमखण्डार्थं समानाधिकरणवाक्यत्वात् संप्रतिपन्नवदिति ईदृश्यनुमानोक्तिरनुपपन्ना वाक्यमखण्डार्थमिति पदयोरर्थभेदोऽस्ति न वा? अस्ति चेत्प्रतिज्ञावाक्य एव हेतोरनैकान्त्यं, न चेदखण्डार्थत्वं प्रतिज्ञातमेव न स्यात् दृष्टान्तस्य च साध्यवैकल्यमर्जनीयं प्रकृतिप्रत्ययात्मकपदपुञ्जरूपत्वात्सर्ववाक्यानां, यदि भावरूपाखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञा तर्हि साध्यधर्मवचनान्तर्गतयोः समानाधिकरणयोर्भावरूपखण्ड शब्दयोरनैकान्त्यं तस्मात्सत्यादिवाक्यं सत्यत्वादिविशिष्टमेव ब्रह्म प्रतिपादयतीति सिद्धं तदिदमुच्यते "सत्यं ज्ञानमनन्तमित्यादिना । तत्र निर्विशेषपरत्वाभावं सोपपत्तिकं प्रतिजानीते "सत्यं ज्ञानमि"ति, सामानाधिकरण्यलक्षणप्रत्यभिज्ञापकशब्दैर्हेत्वंशं विवृणोति—

सू० प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यं तच्च सत्यज्ञानादिपदमुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः । इयांस्तु विशेषः एकस्मिन् पक्षे पदानां मुख्यार्थता अपरस्मिंश्च तेषां लक्षणा, न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव ।

टी० "प्रवृत्तीति", ततः किमित्यपेक्षायामन्वयमुखेन व्यावृत्तिमुखेन वा प्रवृत्तिनिमित्तभेदस्यावश्याश्रयणीयत्वमाह "तच्चे"ति, तर्हि को विशेष इत्यत्राह "इयानि"ति, अवश्याश्रयणीय इत्यत्राभिप्रेतं व्यावृत्तीनां स्वरूपमात्रत्वे दूषणमाह "न चे"ति, सामानाधिकरण्यासिद्धिमुपपादयति–

सू० एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्तथा सति सामानाधिकरण्यासिद्धिश्च एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात्, न चैकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात्सामानाधिकरण्यस्य, भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति हि शाब्दिकाः ।

टी० "एकस्मिन्नि"ति, पर्यायत्वं दूषणं स्पष्टमिति तन्न कण्ठोक्तं, विशेषणभेदेनानेकार्थत्वात् । सामानाधिकरण्यलक्षणहानिन्निरस्यति "न चैकस्ये"ति, विशिष्टताभेदात्–तत्तद्विशेषणान्वयभेदात् तथाविधानेकार्थत्वञ्च विरोधि प्रत्युतानुकूलमेवेत्यर्थः । कुत इत्यत्राह "भिन्नप्रवृत्ती"ति, विशेष-

णतो भिन्नार्थत्वे विशेष्यतश्चैकार्थत्वे सति हि सामानाधिकरण्यलक्षणासाद्गु-ण्यसिद्धिरित्यर्थः । सामानाधिकरण्यवाक्यं किं विशेषणविशेष्यसंबन्धपरमुत? विशेष्यैक्यपरम्? उतोभयपरम्? प्रथमे विशेष्यैक्ये प्रमाणं न स्यात् । द्वितीये विषणान्वयो निष्प्रमाणकः स्यात् । तृतीये संबन्धद्वयस्यैकवाक्येन बोधयितुमशक्यत्वात् वाक्यभेदप्रसङ्ग इति केचिच्चोदयन्ति तच्च प्रातिपदिकेनैव विशेषणान्वयस्य बोध्यतया समानविभक्तिनिर्देशेन विशेष्यैक्यप्रतिपादने वाक्यभेदप्रसङ्गाभावात् । एवं सामानाधिकरण्यस्यान्यथैवोपपत्त्या सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वं निरस्तम् । अथ कारणवाक्यैकार्थ्यान्निर्विशेषपरत्वन्निराकर्तुं तदनुवदति–

सू० यदुक्तमेकमेवाद्वितीयमित्यत्राप्यद्वितीयपदं गुणतोऽपि सद्वितीयतां[1] न सहते, अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयं कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते "सत्यं ज्ञानमनन्तं ब्रह्मे"ति अतो विलक्षयिषितं ब्रह्म निर्गुणमेव अन्यथा निर्गुणं निरञ्जनमित्यादिभिर्विरोधश्चेति, तदनुपपन्नम्–

"यदुक्तमित्यादिना, सदेवैकमेवेति विजातीयसजातीयभेदव्यावर्त्तकावधारणद्वयसमभिव्याहृतमद्वितीयपदं पारिशेष्यात् स्वगतभेदाभावपरमिति गुणतोऽपि सद्वितीयताञ्च सहत इत्यर्थः । "यस्सर्वज्ञः स सर्ववित्" "यस्य ज्ञानमयं तपः" "तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते" इत्यादिसगुणविषयकारणवाक्यैकार्थ्यमस्तीत्यत्राह "अत"इति, सर्वशाखाप्रत्ययन्यायान्निर्गुणकारणवाक्येषु सगुणत्वं, सगुण[1]वाक्येषु निर्गुणत्वं चोक्तं स्यात्

1 सजातीयतां न सहते इति पुस्तकान्तरपाठः ।

तत्रापच्छेदन्यायेनापि निर्गुणवाक्यप्राबल्यात्सर्वे कारणवाक्यानि निर्गुणपराणीत्यर्थः । कारणवाक्यैकार्थ्यं कुतोऽपेक्षितमित्यत्राह "कारणतयोपलक्षितस्ये"ति, जगत्कारणत्वं तटस्थलक्षणं तु स्वरूपलक्षणमित्यभिप्रायेणोपलक्षितस्येत्युक्तं, कारणत्वशङ्कितदोषव्यावर्त्तकत्वादिकार्थ्यमवर्जनीयमित्यर्थः । अथ शोधकवाक्यान्तरैकार्थ्यात् निर्विशेषपरत्वोपपादनं निराचिकीर्षुरनुवदति "अन्यथे"ति, अनूदितमर्थं दूषयति "तदनुपपन्नमित्यादिना, तत्र प्रथमं कारणवाक्यैकार्थ्यं सविशेषविषयत्वे सतीत्याह—

**श्रू०** जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य, तथैव विचित्रशक्तियोगमेवावगमयति "तदैक्षत बहु स्यां प्रजायये"ति, "तत्तेजोऽसृजते"त्यादि, अविशेषेणाऽद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत्—

टी० "जगदि"ति, "तथैवे"ति, अद्वितीयपदं यथाऽधिष्ठात्रन्तरनिवारणपरमेव भवति तथैवेत्यर्थः । शङ्कते "विचित्रशक्तियोगमेवे"ति, उत्तरवाक्यमुपादानभूतस्यैव ब्रह्मणोऽधिष्ठातृत्वशक्तियोगमेवावगमयति न तु निर्गुणत्वमित्यर्थः । शङ्कते "अविशेषेणे"ति,सर्वनिषेधस्य निमित्तान्तरनिषेधस्य च साधारणमद्वितीयपदं निरुपपदत्वात् । किंच उपक्रमे सदेवैकमेवेति सजातीयविजातीयभेदयोर्विषिद्धत्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सजातीयविजातीयभेदमात्रमिथ्यात्वेऽनुपपन्नत्वाच्चाद्वितीयपदमुपक्रमानुगुणयेन स्वगतभेदनिषेधपरं स्यात् न तूत्तरवाक्यानुगुणं स्यात् उपक्रमप्राबल्यादिति साक्षात्पूर्वपक्षिचोद्यं, निमित्तत्वोपादानत्वे उभे अप्युत्तरत्र श्रूयेते तत्रोपादानान्तरमद्वितीयपदेन निषिध्येत न तु निमित्तान्तरमिति पार्श्वस्थचोद्यं तत्राह—

१ सगुणकारणवाक्येषु इति पाठान्तरम् ।

मू० सिसृक्षोर्ब्रह्मण उपादानकारणत्वं "सदेव सोम्येदमग्र
आसी""देकमेवे"ति प्रतिपादितं, कार्योत्पत्तिस्वाभाव्येन
बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिध्यत
इत्यवगम्यते, सर्वनिषेधे हि स्वाभ्युपगतास्सिषाधयि-
षिता नित्यत्वादयश्च निषिद्धाः स्युः ॥

"सिसृक्षो"रिति, अनेन शङ्काद्वयं परिहृतं भवति तदैक्षतेत्यनन्तरो-
क्तत्वादस्य वाक्यस्य कारणपरत्वस्यापलपनीयमित्यभिप्रायेण सिसृक्षोरि-
त्युक्तं, कारणपरत्वे च सत्यशब्देन विजातीयकालसद्भावसिद्धेर्जीवानादित्व-
श्रुतेरकृताभ्यागमकृतविप्रणाशादिश्रुत्यर्थापत्त्या वैषम्यनैर्घृण्यपरिहाराय जी-
वानां कर्मसूक्ष्मभेदस्य प्रलयदशायामभ्युपगमादेकत्वावधारणस्य जीवसूक्ष्म-
भेदसहत्वस्य परैरभ्युपगन्तव्यत्वात् सार्वज्ञ्यसर्वशक्तित्वादीनां सर्वौपयिक-
त्वाच्च विजातीयसजातीयस्वगतभेदाभावस्य दुर्वचत्वादेकविज्ञानेन सर्व-
विज्ञानप्रतिज्ञायाश्चोक्तार्थाविरोधेन निर्वाह्यत्वात्परतन्त्रभेदस्य विहित-
त्वात्, निषेधस्य च विहितव्यतिरिक्तविषयत्वात्स्वतन्त्ररूपभेदविशेषस्य
"न तत्समश्चाभ्यधिकश्चे"त्यादिभिर्निषेधितत्वात्सामान्यनिषेधस्य च तत्प-
र्यवसानस्य न्याय्यत्वाच्चाद्वितीयपदस्य स्वतन्त्रभेदनिषेधपरत्वे प्राप्ते सत्य-
विभक्तनामरूपताप्रतिपादकेनैकमिति पदेनोपादानत्वस्य सिद्धत्वात्
निमित्तान्तरस्य बुद्धिस्थत्वाच्च निमित्तान्तररूपस्वतन्त्रवस्तुनिषेधपरमद्वि-
तीयपदमित्यर्थः । सर्वनिषेधेऽनिष्टमाह—

मू० सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः सर्वशा-
खासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसं-
हारहेतुत्वात् अतः कारणवाक्यस्वभावादपि "सत्यं ज्ञान-
मनन्तं ब्रह्मे"त्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञा-
यते ।

न च निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषयत्वात् तेषां, निर्गुणं निरञ्जनं निष्कलं निष्क्रियं शान्तमित्यादीनां ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति ।

"सर्वे"ति, सर्वशाखाप्रत्ययन्यायस्य निर्विशेषत्ववादविपरीतत्वमाह "सर्वशाखे"ति, अत्र–निर्गुणवादे अत्र भवत इत्युपालम्भो वा सर्वशाखाप्रत्ययन्यायोऽनुक्तगुणस्वीकारफलः, न तूक्तगुणत्यागफल इति त्वत्पक्षे विपरीत इत्यर्थः । सविशेषपरत्वे कारणवाक्यैकार्थ्यं निगमयति "अत" इति, न केवलं सामानाधिकरण्यान्यथानुपपत्त्या कारणवाक्यैकार्थ्याच्च सविशेषपरमित्यपि–शब्दस्य भावः । अथ शोधकवाक्यान्तरैकार्थ्यान्निर्विशेषपरत्वहेतुन्निरस्यति "न चे"ति, परेणापच्छेदन्यायेन हि निर्गुणसगुणवाक्यविरोधः परिहृतः, अत्र भिन्नविषयत्वाद्विरोध एव नास्तीत्याह "प्राकृते"ति,- निर्गुणमिति गुणसामान्यनिषेधः, निष्कलमिति शरीरसामान्यनिषेधः, निष्क्रियमिति क्रियासामान्यविनिषेधः, न तु गुणनिषेधः संकोचयितव्यः आर्थगुणनिषेधबलेन सर्वगुणविरहावगमात् ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनात् ब्रह्मणो ज्ञानमात्रत्वप्रतिपादनेन निर्गुणत्वं हि फलितमिति शङ्कायामार्थगुणनिषेधं परिहर्तुं श्रुतिप्रतिपन्नमर्थमनुभाषते "ज्ञानमात्रे"ति, ततः किमित्यत्राह–

मू० न तावता निर्विशेषज्ञानमात्रमेव तत्त्वं ज्ञातुरेव ज्ञानस्वरूपत्वात् ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिप्रदीपादिवद् युक्तमेवेत्युक्तं ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति ॥

टी० "न तावते"ति, कुत इत्यपेक्षायां किं ज्ञानत्वात् ज्ञानानाश्रयत्वमुच्यते ? किमेकजातीयतद्धर्मधर्मिभावानुपपत्तेरिति विकल्पे प्रथमं प्रतिवक्ति "ज्ञातुरेव ज्ञानस्वरूपत्वा"दिति, अयमर्थः, ज्ञानस्य ज्ञानादिगुणाश्रयत्वाभावः किं व्याप्त्या कथ्यते ? उत श्रुतिबलात् व्याप्त्या चेत् ज्ञानाना-

अयभूतं विषयप्रकाशकं ज्ञानं कस्यचिद्धर्मभूतमेव दृष्टमिति धर्मत्वेनाङ्गीक्रियतां, यदि श्रुतिबलात् स्वतन्त्रत्वेनाङ्गीक्रियते तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियतामिति ज्ञानानाश्रयत्वं धर्मभूतज्ञानत्वप्रयुक्तं न तु ज्ञानत्वमात्रप्रयुक्तमिति सोपाधिकत्वम्, अतो व्याप्तिविरोधश्च नास्ति । यद्वा जडस्य घटादेरिव ज्ञातृत्वायोगात् ज्ञातृत्वेनैव ज्ञानस्वरूपत्वमर्थसिद्धं, द्वितीयं प्रतिवक्ति "ज्ञानस्वरूपस्ये"ति, एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यत इत्यर्थः । श्रुत्या ज्ञानाश्रयत्वे सिद्धे हि तथाभ्युपगम इत्यत्राह "ज्ञातृत्वमेव ही"ति, यद्वा ज्ञातुरेव ज्ञानस्वरूपत्वादिति ज्ञातुर्ज्ञानस्वरूपत्वाविरोधादित्यर्थः । एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्त्या विरोधं परिहरति "ज्ञानस्वरूपस्यैवे"ति, ज्ञानत्वात् ज्ञानानाश्रयत्वं परिहरति "ज्ञातृत्वमेव ही" ति, पूर्ववदभिप्रायः, ज्ञातृत्वं यथाफलितं भवति तादृशगुणपराश्च ज्ञातृत्वकण्ठोक्तिमत्यश्च श्रुतयः सर्वशब्दविवक्षिताः । बहुवचनेन बहूपनिषद्वाक्यानि वा विवक्षितानि एवकारेण ज्ञातृत्वस्यानन्यथासिद्धिरभिप्रेता, हि-शब्दो हेतौ ज्ञातृत्वस्य श्रुतिसिद्धत्वान्न काचिदनुपपत्तिरित्यर्थः । काः पुनः श्रुतय इत्यपेक्षायामपि आर्थगुणनिषेधपरिहारार्थनिर्गुणश्रुतिसंकोचसिद्ध्यर्थं सगुणश्रुतीनामाविद्यकगुणविषयत्वशङ्कापनोदार्थं च श्रुतीर्दर्शयंस्ताभिरेतत्प्रयोजनत्रयसिद्धिं च दर्शयति—

सू० "यः सर्वज्ञः सर्ववित्" "तदैक्षत" "सेयं देवतैक्षत" "स ऐक्षत लोकानुसृजा" इति, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "ज्ञाज्ञौ द्वावजावीशनीशौ" "तमीश्वराणां परमं महेश्वरं" "तं देवतानां परमं च दैवतं पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम्" ॥

टी० "यः सर्वज्ञ इत्यादिना, यः सर्वज्ञः सर्ववित् सर्वं स्वरूपतः प्रकारतश्च जानातीत्यर्थः । ज्ञानस्य सर्वविषयत्वं तस्य समष्टिव्यक्तिसृष्टु-

पयोगित्वमात्मसंबन्धित्वं च दर्शयति तदैक्षतेत्यादि त्रयेण. नित्यो नित्यानामित्यत्र चेतनबहुत्वमुक्तं कामप्रदत्वं च ज्ञाज्ञौ द्वावजावित्यत्र ज्ञातृत्वमीश्वरत्वं च तमीश्वराणामित्यत्र ईश्वरत्वदैवतात्वपतित्वानि ईश्वरत्वं नियन्तृत्वं निया[1]म्यविषयज्ञानवत एव नियन्तृत्वात् नियमनस्य ज्ञानविशेषरूपत्वाच्च नियन्तृत्वेन ज्ञातृत्वसिद्धिः, दैवतात्वं कामैराध्यत्वं पतित्वं शेषित्वम्—

सू० "न तस्य कार्यं करणं च विद्यते" "न तत्समश्चाभ्यधिकश्च दृश्यते" "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासः" "सत्यकामः सत्यसङ्कल्प" इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति समस्तहेयगुणविरहिततां च ।

टी० "न तस्ये"ति, कार्यं—शरीरं करणमिन्द्रियादि "कार्यकारणकर्तृत्वे" इति प्रयोगात् समाभ्यधिकनिषेधश्चात्र श्रूयते तेनाद्वितीयमितिसामान्यनिषेधस्य "छागो वा मन्त्रवर्णा"दिति न्यायादीश्वररूपद्वितीयविशेषपर्यवसायित्वं सूचितं पराऽस्येति ज्ञानशक्त्यादीनां स्वाभाविकत्वमुक्तं, क्रिया—नियमनम्, एष आत्मेति विशेषविधानं विशेषनिषेधश्च आर्थगुणनिषेधस्य परिहर्तव्यतामभिप्रेत्य ज्ञानस्वरूपस्यैवेत्युक्तम् । आविद्यकत्वनिराकरणाय स्वाभाविकानित्युक्तं, समस्तहेयरहिततां चेत्यनेनाप्याविद्यकत्वशङ्काऽर्थात्परिहृता । किंच ज्ञातृत्वप्रमुखान् कल्याणगुणान् समस्तहेयरहिततां चेत्यनेन निर्गुणवाक्यस्य संकुचितवृत्तित्वं चोपपादितं भवति, तथा हि कल्याणगुणानित्यस्यायमभिप्रायः, गुणविशेषविधानं गुणसा-

---

१ "नियम्यविषयज्ञानवत एव" इति साधु "णेरदुपधादि"त्यनेन यत एव साधुत्वात् ण्यतस्तु साकर्म्येण सर्वथैव बाध्यत्वात् ।

मान्यनिषेधो न बाधितुं प्रभवति अपि तु तद्व्यतिरिक्तविषय एव भवति अन्यथा "न हिंस्यात्सर्वाभूतानी"ति सामान्यनिषेधेना"ग्नीषोमीयं पशुमालभेते"ति हिंसाविशेषविधानबाधप्रसङ्गादिति समस्तहेयरहिततां चेत्यस्यायमर्थः, यथा "पशुना यजेत" "छागस्य वपायाः" इत्यादिषु "छागो वा मन्त्रवर्णा"दिति सूत्रोक्तन्यायात्सामान्यशब्दो विशेषदर्शने सति तत्र पर्यवस्यति, तथा गुणसामान्यनिषेधो विशेषगुणनिषेधे पर्यवस्यतीति । किंच सामान्यशब्दानां विशेषे पर्यवसायित्वं व्युत्पत्तिसिद्धं, यथा गामानय गां बधानेत्यादिषु सामान्यशब्दो विशेषकटाक्षेण प्रयोजकवृद्धेन प्रयुज्यते तत एव हि तत्र प्रयोज्यवृद्धश्च न सर्वा गोव्यक्तीरानयति किं तु विवक्षितव्यक्तिविशेषमेवानयति तथैव हि तत्र व्युत्पत्तिः, एवं ज्ञातृत्वप्रमुखान् कल्याणगुणानित्यनेन समस्तहेयरहिततां चेत्यनेन च उत्सर्गापवादन्यायः, सामान्यविशेषन्यायश्चाभिप्रेतः, उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय संकोच उत्सर्गापवादन्यायः । अविरोधेऽपि वैयर्थ्यपरिहाराय संकोचश्चेद्ब्राह्मणबलीवर्दन्यायः, उपात्तविशेषविषये तस्य संकोचस्सामान्यविशेषन्याय इति भिदा । किंचाध्यात्मशास्त्रेषु गुणशब्दस्सत्त्वरजस्तमस्सु प्रसिद्धः "न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः" ॥ "सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः" । "निर्गुणस्याप्रमेयस्य" "गुणा गुणेषु वर्तन्ते" "कारणं गुणसङ्गोऽस्य" "निर्गुणं गुणभोक्तृ च" "नान्यं गुणेभ्यः कर्तारं" "दैवी ह्येषा गुणमयी मम माया दुरत्यया" "विना हेयैर्गुणादिभिः" "गुणादिदोषांश्च मुने व्यतीतः" "गुणकलुषस्य सदातनस्य नेतेत्यादिषु एवं केवलगुणशब्दस्य सत्त्वादिपरत्वेन प्रसिद्धिप्राचुर्यान्निर्गुणशब्दास्सत्त्वादिनिषेधपराः । अयं विषयविभागो न केवलम् भिन्नोपनिषद्वाक्येषु गुणविशेषविधानगुणविशेषनिषेधदर्शनान्निश्चीयते एकस्मिन्नेव वाक्ये विषयविभागो दृष्ट इत्याह—

मू॰ निर्गुणवाक्यानां सगुणवाक्यानां च विषयमपहतपाप्मेत्याद्यपिपास इत्यन्तेन हेयगुणान्प्रतिषिध्य सत्यकामः

**सत्यसंकल्प इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताऽऽश्रयणमपि नाशङ्कनीयम् ।**

टी० "निर्गुणे"ति, गुणसामान्यनिषेधवद्गुणसामान्यमात्रविधानाऽभ्युपगमेन निर्गुणवाक्यानां सगुणवाक्यानां चेत्युक्तं, न हि श्रुतिषु गुणसामान्यविधानं क्वचिद्दृश्यते गुणविशेषा एव हि श्रूयन्ते दोषसमभिव्याहृतगुणशब्दस्तूपादेयगुणपरः "वर्षायुतैर्यस्य गुणा न शक्याः" "स ते गुणानामयुतैकदेशं" नान्तं गुणानाङ्गच्छन्तीत्यादि स्मृतिवचनाभिप्रायेण सगुणवाक्यानामित्युक्तं, तत्र च गुणशब्दो दोषप्रतिपक्षवचनो लोके तथा प्रसिद्धेः, प्रकरणवशाच्छागपशुन्यायेन कल्याणगुणरूपविशेषपर्यवसानस्य न्याय्यत्वाच्च । उक्तन्यायद्वयेन विरोधाभावादपच्छेदन्यायस्याविषयत्वमाह "इति सगुणनिर्गुणवाक्यद्वयो"रिति, इति-शब्देन पूर्वोक्तसर्वहेतवो विवक्षिताः उत्सर्गापवादन्यायात्सामान्यविशेषन्यायादध्यात्मशास्त्रेषु गुणशब्दस्य सत्त्वादिषु प्रसिद्धिप्राचुर्याच्चेत्यर्थः "सगुणनिर्गुणवाक्ययो"रिति, अत्र तु विषयविभागाच्च विरोध इति नापच्छेदनयः प्रवर्त्तत इति भावः । अन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयमिति सगुणवाक्यस्येति नोक्तं, किं त्वन्यतरस्येत्युक्तं सगुणेन निर्गुणवाक्यस्य वा निर्गुणेन सगुणवाक्यस्य वा बाधाश्रयणमनुपपन्नमित्यर्थः । अत्रायमभिप्रायः पूर्वं विरोधो नास्तीति परिहृतम् इदानीं विरोधाभ्युपगमेऽपि नायमपच्छेदन्यायविषयः, अपि तु विरोधाधिकरणन्यायविषय एवेति, तथा हि अपच्छेदन्यायो ह्यनियतविरोधपौर्वापर्यविषयः, उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति तत्रापि क्रमेणापच्छेदोऽप्यनियतः, तन्नियमे सति हि सर्वस्वदक्षिणाकत्वादक्षिणाकत्वविरोधनियमः, उभयोरप्यपच्छेदे तस्य क्रमभावित्वेऽपि उद्गात्रपच्छेदः पूर्वभावी इतरस्तु चरमभावीति वा विपर्ययेणेति वा नियमोऽपि नास्ति, अतोऽपच्छेदन्यायविषयः प्रयोगावधिकविरोधः सगुणनिर्गुणवाक्यविरोधस्तु स्वरूपप्रयुक्तः, विधिनिषेधरूपतया नियतपौर्वापर्यश्च अतो विरोधाभ्युपगमे-

ऽप्यनियतविरोधपौर्वापर्यविषयोऽपच्छेदन्यायो नात्र प्रवर्तते अपि तु विरोधाधिकरणन्याय एव प्रवर्तते, तद्विषये हि पौर्वापर्यनियमो विरोधनियमश्च विद्यते तथा हि "औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिः "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः, तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति निरपेक्षप्रमाणत्वात्, स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः अतस्तत्र पौर्वापर्यं नियतमौदुम्बरीस्पर्शनवेष्टनयोर्विरोधश्च नियतः, तत्र पूर्वमेव प्रमित्यां जातायां तद्विरुद्धार्थः कालात्ययापदिष्टः स्यात् अतो "विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयानि"ति न्यायात् पूर्वस्याः श्रुतेर्बलीयस्त्वमित्युत्तरत्र [1]शास्त्रानुदय एव, नन्वत्राधीतमेव ह्युत्तरशास्त्रमिति चेत् ततः किं प्रमित्यनुदयो ह्यनुदयः, न तु शब्दानुदयः, आदित्यो यूप इति वत् ।

ननु तत्र स्मृतित्वश्रुतित्वे बाध्यबाधकभावप्रयोजके नैवं स्मृतित्वश्रुतित्वयोः पौर्वापर्यहेतुत्वात् तेन सिद्धं पौर्वापर्यमेव बाध्यबाधकभावे हेतुरिति न्यायसाम्यात्सगुणवाक्यबलीयस्त्वमिति । यद्वा माभूद्विरोधाधिकरणन्यायः अत्र उपक्रमाधिकरणन्याय एव प्रवर्त्तते विरोधपौर्वापर्यनियमात् अतः सगुणवाक्यप्रतिबद्धत्वाच्च निर्गुणशास्त्रानुदय एवेति

ननु प्रथमप्रवृत्तं विलम्बितस्योत्पत्तिप्रतिबन्धकं चेन्नेदं रजतमिति ज्ञानोदयमिदं रजतमिति धीः प्रतिबध्नातीति चेन्न सत्तया ज्ञायमानतया च ज्ञापकयोरत्यन्तवैषम्यात् सत्तया ज्ञापकं हि प्रमाणं पूर्वापरपरामर्शनिरपेक्षं ज्ञानं जनयति तत्रोत्पन्नं ज्ञानं "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यती"ति न्यायात् पूर्वं बाधित्वैवोदेति ज्ञायमानतया ज्ञापकं तु योग्यतापरामर्शादिसापेक्षं प्रमितिं जनयति, तत्र परामर्शदशायां पूर्वप्रमाणेन विरुद्धोऽर्थः प्रमितश्चेत्सा प्रमितिरुत्तरोत्पत्तिं प्रतिबध्नातीति वैषम्यमिति, एवं तर्हि नेदं रजतमिति ज्ञानस्य इदं रजतमिति परामर्शसापेक्षत्वात् पूर्वज्ञानेन प्रतिबद्धस्य नेदं रजतमिति ज्ञानस्यानुदयप्रसङ्ग इति चेन्न इन्द्रि-

[1] उत्तरशास्त्रानुदय इति तु पुस्तकान्तरम् ।

यस्य प्रत्यभिज्ञेतरज्ञानजनने पूर्वपरामर्शनिरपेक्षत्वादिहापि शुक्तिरियमिति शुक्तित्वविषया ह्युत्तर[1]प्रतीतिः शुक्तित्वप्रतिपत्तेश्च न रजतप्रतिपत्तिसापेक्षत्वं शुक्तित्वे गृहीते सति तद्ग्रहणफलभूतो नेदं रजतमिति व्यवहारो नञुल्लिखितत्वात्प्रतियोगिसापेक्षः प्रवर्त्तते, तत्सापेक्षत्वं च शब्दस्वभावाधीनम् अतः शुक्तिज्ञानं रजतज्ञाननिरपेक्षमुदयमानं पूर्वं बाधित्वैवोदेति, अतो नियतविरोधपौर्वापर्यविषय उप[2]क्रमाधिकरणन्याय एवावात्र प्रवर्त्तते न त्वपच्छेदनयः, स चेदृशस्थले यदि प्रवर्त्तेत पश्चात्तनमकर्त्तव्यं स्यात् चरमभाविनो न हिंस्यादिति निषेधस्य प्रबलत्वात्ततश्चानुष्ठानविरोधः सगुणनिर्गुणवाक्ययोर्विरोधपौर्वापर्यनियमः परेणैवोक्तः, अतो विरोधाधिकरणन्यायविषयत्वेनात्रापच्छेदनयानवकाशात्सगुणवाक्यानां बलीयस्त्वं सिद्धमिति । एतदभिप्रायेणान्यतरस्येत्युक्तम् उपाध्यानुक्तिपूर्वकश्रुत्युक्तानां गुणानां निरुपाधिकत्वस्य स्वतःप्राप्तत्वात्स्वाभाविकत्वश्रुतेर्नान्यो हेतुर्विद्यते ईशनायेति ईशनस्य हेत्वश्रवणेन तदौपाधिकगुणानामपि निरुपाधिकत्वसिद्धेः ज्ञानशक्त्यादितारतम्योपाधिभूतकर्मसंबन्धनिषेधपूर्वकसत्यकामाद्युक्तेः, "त इमे सत्याः कामा" इति स्वरूपवत्सत्यत्वश्रुतेः "पराऽस्य शक्तिः" ते ये शतमित्यादिभिर्गुणानामनवच्छिन्नत्वप्रतिपादनेन कर्मसंबन्धव्यापकपरिच्छेदनिवृत्त्या व्याप्यकर्मसंबन्धनिवृत्तेरर्थसिद्धत्वात्स्वाभाविकत्वं कण्ठोक्तिरहितगुणवाक्येष्वपि सर्वशाखाप्रत्ययन्यायेन गुणानां स्वाभाविकत्वसिद्धेरानन्दं ब्रह्मण इत्यादितात्पर्यलिङ्गसा[3]हचर्यादुत्सर्गापवादन्यायसामान्यविशेषन्यायाभ्यां विषयविभागादेकस्यां श्रुतावेव विषयविभागस्य दृष्टतया च विरोधाभावादपच्छेदन्यायाविषयत्वाद्विरोधे सत्यपि विरोधाधिकरणादिन्यायेन सगुणवाक्यप्राबल्यात् यस्सर्वज्ञ इत्यादिषूपासनविधिरहितवाक्येषु स्वरूपवत्प्रतिपन्नत्वात् मानान्तरागोचरतया[4]न्यविषयत्वासंभवेन

---

१ उत्तरप्रमितिरि तु युक्तः पाठः ।

२ विरोधाधिकरणन्याय एवेति पुस्तकान्तरपाठः ।

३ तात्पर्यलिङ्गप्राचुर्यादिति पाठान्तरम् ।

४ मानान्तरागोचरतयाऽनुवादविषयत्वासंभवेनेति पुस्तकान्तरम् ।

निषेद्धुमशक्यत्वात् "आत्मा वा अरे द्रष्टव्यः" "सत्यं ज्ञानमनन्तं ब्रह्म" "यो वेद आत्मानम्" "अनुविद्य व्रजन्त्येतांश्च सत्यान् कामानि"ति क्वचिदुपास्यत्वश्रवणस्य स्वरूपेऽपि तुल्यत्वादध्यात्मशास्त्रेषु सत्त्वादिषु गुणशब्दस्य प्रसिद्धिप्राचुर्याच्च निर्गुणवाक्यविषयत्वाभावाद्ब्राह्मतर्काणां कालात्ययापादिष्टत्वादवधारणद्वयसहिताद्वितीयत्वश्रुतिज्ञानानन्दस्वरूपत्ववाङ्मनसनिवृत्तिज्ञेयत्वनिषेधरूपार्थगुणनिषेधानां परिहृतत्वाच्च निरुपाधिका ब्रह्मगुणा इत्युक्तवक्ष्यमाणार्थसङ्ग्रहः प्रतिपत्तिसौकर्याय दर्शितः । सत्यं ज्ञानमिति ज्ञानपदेन सिध्यन्नार्थगुणनिषेधः पूर्वं परिहृतः । अथैतदनुवाकोपसंहारे "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे"ति वाङ्मनसनिवृत्त्यभिधानान्निर्गुणत्वं फलितम्, अतस्तदैकार्थ्याच्च सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वमिति शङ्कायामार्थगुणनिषेधपरतया परोक्तस्यास्य वाक्यस्योक्तार्थानुगुण्यमुपपादयति—

सू० भीषाऽस्माद्वातः पवत इत्यादिना ब्रह्मगुणानारभ्य "ते ये शत"मित्यनुक्रमेण चेचज्ञानन्दातिशयमुक्त्वा "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह

"भीषाऽस्मादित्यादिना, भीषाऽस्मादित्यनेन आज्ञापयितृत्वमुच्यते तेनज्ञानन्दातिशयमुक्त्वेति अत्र निर्विशेषत्वं प्रतिपिपादयिषितं चेत् गुणानां क्रमेण न्यूनतां प्रतिपाद्य सर्वाभावे पर्यवसितुं युक्तं, यत्र तु क्रमेण गुणानामाधिक्यमुक्त्वा वाङ्मनसनिवृत्त्यभिधानमानन्त्यादेवेत्यभिप्रायः, यथा "संख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः आनन्त्यात्प्रथमो राशिरभावादेव पश्चिम" इति प्रथममनुष्यानन्दमारभ्य क्रमेणातिशयो दर्शितः, साधु युवाऽध्यायकः साधु यथाविधि सम्यक्संप्रदायसिद्धतया स्वरवर्णादिभ्रंशरहितं वा युवशब्देन प्रत्ययत्वं विवक्षितम् अविस्मरणान्नित्यनवं यथा भवति तथाऽध्ययनवानित्यर्थः । यद्वा स्वसमवयस्कानां सर्वेषामध्यापकः तदधिकज्ञान इत्यर्थः । आशिष्ठः आशुतरक्रियः । यद्वा अशनतमः अरोग इत्यर्थः । यद्वा आशीर्वादविषयभूतः सर्वानुरञ्जक इत्यर्थः सर्वान् देवान्

नमस्यन्तीतिवत् । बलिष्ठः—मनोबलवान् द्रढिष्ठ इति शरीरबलस्योक्तत्वात् । यद्वा द्रढिष्ठः—दृढतरः, न त्वव्यवस्थस्वभाव इत्यर्थः । बलिष्ठः शारीरमानससर्वविधबलवान् वित्तस्य पूर्णाः वित्तेन पूर्णाः "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति षष्ठ्यनुज्ञानात् स एको मानुष आनन्दः एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा स एको मानुष आनन्द इति श्रुत्या स्वरसतस्तस्यैवानन्दत्वमुक्तम् । अनुकूलत्वं ह्यानन्दत्वं निवर्त्यानिष्टत्वेष्टसाधनत्वानपेक्षमिष्टत्वमनुकूलत्वम् उक्तलक्षणयोगात् गुणविभूत्योरानन्दत्वमुपपद्यते तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वकृतमित्यन्वयव्यतिरेकसिद्धम् एवं च सति श्रुतिस्वारस्यं च सिध्यति गुणविभूतिप्रकर्षमुक्त्वा आनन्द इति ह्युक्तं न तु तद्विषयज्ञानमिति युवत्वाद्यनेकगुणान्विभूतिमप्युक्त्वा तत्समुदायमानन्दशब्देन निर्दिश्य तस्यानन्दस्य निरतिशयत्वप्रतिपादनात् सर्वगुणानां विभूतेश्चानवधिकातिशयत्वं प्रतिपादितं भवति अनुकूलत्वज्ञानत्वमेवानन्दत्वमर्थादुक्तं भवति गुणविभूतिविषयज्ञानस्यानन्दत्वेऽपि तस्यानन्दस्य निरवधिकातिशयत्वोक्त्या गुणविभूत्योरप्यनवधिकातिशयत्वमर्थादुक्तं भवति तदानन्त्यस्य गुणविभूत्यानन्त्यनिबन्धनत्वादिति आरभ्येति उपक्रमानुगुणमुपरित[1]नवाक्यं नेयमिति भावः । श्रोत्रियस्य चाकामहतस्येति वाक्यैर्मुक्तानन्दस्य भगवदानन्दसाम्यमुक्तं भवति बद्धदशायां निरवधिकविषयानन्दासंभवात् श्रोत्रियो ब्रह्मनिष्ठोऽकामहतो निवृत्ताविद्यत्वात्समस्तसांसारिकभोगानुपहतः स एकः प्रजापतेरानन्द इ[2]त्यनेन क्षेत्रज्ञानन्दातिशय उक्तः, स एको ब्रह्मण आनन्द इत्यत्र भगवदानन्द उच्यते चतुर्मुखानन्दपरत्वे ब्रह्मशब्दस्वारस्यहानिः "परं जैमिनिर्मुख्यत्वात्" "स्याच्चैकस्य ब्रह्मशब्दव"दिति ब्रह्मशब्दस्य तत्रैव मुख्यवृत्तत्वस्य सूत्रितत्वात् भाष्ये प्रथमसूत्रस्थब्रह्मशब्दव्याख्यानावसरे प्रपञ्चितत्वात् च "ब्रह्मविदाप्नोति" "ब्रह्मणा विपश्चिता" "सत्यं ज्ञानम् अनन्तं ब्रह्म" "असद्ब्रह्मेति वेद चेत्" "अस्ति

१ उपक्रमानुगुणमुपसंहृतवाक्यमिति पुस्तकान्तरपाठः ।
२ इत्यन्तेन इति पुस्तकान्तरे पाठः ।

ब्रह्मेति चेद्वेदे"ति प्रकरणस्थब्रह्मशब्दानां परब्रह्मपरत्वात् प्रकरणविरोधश्च आनन्दं ब्रह्मणो विद्वानिति पूर्वत्रोत्तरत्र चानन्दप्रतियोगिषष्ठ्यन्तब्रह्मशब्दस्वारस्यविरोधश्च सैषाऽऽनन्दस्येति प्रक्रान्तब्रह्मानन्दस्य चतुर्मुखानन्देनोपसंहारानुपपत्तिश्च "तदप्येष श्लोको भवती"ति ब्रह्मानन्दं प्रकृत्य वक्ष्यमाणस्य श्लोकस्य उक्तविषयत्वविरोधश्च "स एकः प्रजापतेरि"ति निरुपपदैकवचनान्तप्रजापतिशब्दस्वारस्यभङ्गश्च

न च तज्जात्येकवचनं बहुत्वैकत्वविवक्षायां बहुवचनैकवचनप्रकरणत्वात् देवानां गन्धर्वाणाम्मनुष्यगन्धर्वाणामिन्द्रस्य बृहस्पतेः प्रजापतेरिति हि निर्दिश्यते अतः प्रजापतिशब्दश्चतुर्मुखपरः स एको ब्रह्मण इत्यत्र ब्रह्मशब्दो भगवत्परः ते ये शतं स एक इति भगवदानन्दस्य कथं परिच्छिन्नत्वमिति चेत् न परिच्छिन्नत्वमेकत्तणाद्धि बहूनि योजनानि गच्छतो रवेः क्षिप्तेषुरिव सर्पतीत्यादौ साम्यकथनं यथा गतिमान्द्यनिवृत्तिपरं न तु परिच्छेदपरं तद्वत्ते ये शतम् स एक इति निर्देशोऽपि चतुर्मुखानन्दाधिक्याभिप्रायः, न तु परिच्छेदपर इति । यद्वा ते ये शतं स एक इति निर्देशोऽपि तस्य निर्देशस्य संख्याविशेषपरत्वेऽप्यानन्दस्यापरिच्छिन्नत्वं फलितम् "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ईदृशानां तथा तत्र कोटिकोटिशतानि च रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते" इत्यादिवचनैरण्डानामनन्तत्वेन तत्र तत्र चतुर्मुखानामप्यानन्त्यात् कालत्रयवर्तिसमस्तब्रह्माण्डगतचतुर्मुखानन्दापेक्षया शतगुणत्वा"त्क्षोरिवाणुर्यस्यैतद् ब्रह्माण्डमखिलम्मुन" इत्युक्तत्रिपाद्विभूतिमत्तया च भगवदानन्दस्यात्यन्तमानन्त्यसिद्धेरिति, कल्याणगुणानन्त्यमिति न हि क्रमेण गुणापकर्ष उक्तः, किं तु गुणानां प्रकर्ष एवोक्तः, अतो गुणप्रकर्षस्य निरतिशयत्वाद्वाङ्मनसनिवृत्तिरिति भावः ।

मू० "आनन्दं ब्रह्मणो विद्वा"निति ब्रह्मणः कल्याणगुणाऽऽनन्त्यमत्यादरेण वदतीयं श्रुतिः "सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"ति

टी० "अत्यादरेणे"ति, ब्रह्मस्वरूपादपि तद्गुणेष्वादरातिशय उक्तः आनन्दं ब्रह्मणो विद्वानिति हि श्रुतिः न त्वानन्दान्वितं ब्रह्म विद्वानिति भावः—इयं श्रुतिरिति। निर्गुणपरत्वेन त्वयोक्तैतत्प्रकरणस्था श्रुतिरप्यस्मदुक्तार्थानुगुणेति भावः। एवमार्थगुणनिषेधनिरासद्वारा प्रकरणगतवाक्यान्तरेण गुणानन्त्यपरेणैकार्थ्यात्सत्यज्ञानादिवाक्यस्य सविशेषविषयत्वमुक्तम् । अथ स्ववाक्यैकदेशेनापि सविशेषपरत्वमुपपादयति "सोऽश्नुत" इत्यादिना, फलमवगमयद्वाक्यमिति ब्रह्म विदाप्नोति परमिति ब्राह्मणे ब्रह्म, तद्वेदनं, प्राप्तिः, प्राप्यं चेति चतुष्टयमुक्तम्, एतद्विवरणं सत्यं ज्ञानमित्यादिमन्त्रेण क्रियत इति श्रुतिरेवाह "तदेषा ऽभ्युक्ते"ति तदेत ब्रह्माभिमुखीकृत्य ऋगेषाऽध्येतृभिरुक्तेत्यर्थः, मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनादुपक्रमाधिकरणविषयवाक्ययोरिवापातविरोधप्रतीत्यभावान्मन्त्रब्राह्मणयोर्नित्यनिर्दोषत्वाविशेषाच्च मन्त्रापेक्षया ब्राह्मणप्राबल्यवादोऽनुपपन्नः स्फुटप्रतिपत्तिहेतुत्वतदभावावेव प्राबल्यदौर्बल्यशब्दविवक्षितौ चेन्न विरोधः "सत्यं ज्ञानमनन्तं ब्रह्मे"ति ब्रह्मशब्दो विवृतः, "यो वेद निहितं गुहाया"मिति विच्छब्दः "परमे व्योमन् सोऽश्नुत" इति प्राप्तिः, "सर्वान्कामानित्यादिना प्राप्यं, तत्र परशब्दार्थविवरणमेतदिति दर्शयितुं परस्य विपश्चितो ब्रह्मण इत्युक्तं, विपश्चित्त्वमपि भोग्यगुणत्वेनोक्तं, वाक्यस्यार्थं वक्तुं पदानामन्वयं दर्शयति—

मू० ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणोगुणाऽऽनन्त्यं ब्रवीति "विपश्चिता ब्रह्मणा सह सर्वान् कामानश्नुते" काम्यन्ते इति कामाः कल्याणगुणाः ब्रह्मणा सह तद्गुणान्सर्वानश्नुत इत्यर्थः ।

टी० "विपश्चिते"ति, किमत्र गुणवाचिपदमिति शङ्कायां 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिता'' इति त्याज्यतयोक्तकामव्यावृत्त्यर्थमवयवशक्त्या व्याचष्टे "काम्यन्त" इति, ब्रह्मवेदनफलतया मुक्तानुभा-

व्यत्वादिह त्याज्यकामपरत्वानुपपत्तेः काम्यत्वस्य ब्रह्मस्वरूपेऽपि संभवे सत्यपि व्यतिरेकनिर्देशाद्बहुवचनान्तत्वादवयवशक्तेः तदुक्तभोग्यत्वस्य च गुणेषु संभवात् "स वा एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते" "ये एते ब्रह्मलोके" य "इहात्मानमनुविद्य" "व्रजन्त्येतांश्च सत्यान् कामान्" "त इमे सत्याः कामा" इत्यादिश्रुत्यन्तरैकार्थ्याच्च कामशब्दवाच्याः कल्याणगुणगणा इत्यर्थः । कस्येमे गुणास्सहभावश्च ब्रह्मणः पुत्रेण सहौदनं भुङ्क्ते इत्यत्र पुत्रस्येव किं भोक्तृतया? उत क्षीरेण सहौदनं भुङ्क्ते इत्यत्र क्षीरस्येव भोग्यतयेति? शङ्कां च परिहरन्वाक्यार्थमाह "ब्रह्मणे"ति, अस्य वाक्यस्य प्राप्यवाचिपरशब्दब्रह्मविवरणरूपत्वात्सर्वान् कामान् सह ब्रह्मणेति भोग्यवाचिपदेनाव्यवहितप्रयोगस्वारस्याच्च सह-शब्दो भोग्यसाहित्यपरः सन्निहितं ब्रह्मैव च गुणानामाश्रयः, अतोऽनन्त-गुणविशिष्टं ब्रह्मानुभवतीत्यर्थः "सह युक्तेऽप्रधान" इति शब्दानु-शासनवशात्सहशब्देनाप्राधान्यं ब्रह्मण आशङ्क्य तत्परिहाराय सहशब्द प्रयोजनमाह—

सू० दहरविद्यायां "तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इतिवद्गुणप्राधान्यं वक्तुं सह-शब्दः, फलोपासनयोः प्रकारैक्यं "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति श्रुत्यैव सिद्धं "यस्या मतं तस्य मतम्" "अविज्ञातं विजानता"मिति ब्रह्मणो ज्ञानाविषयत्वम् उक्तमिति चेत् "ब्रह्मविदाप्नोति परं" "ब्रह्म वेद ब्रह्मैव भवती"ति ज्ञानान्मोक्षोपदेशो न स्यात् ।

टी० "दहरे"ति, यो वेदेति विहिते वेदने गुणानां प्राधान्यसूचकः सहशब्दः, दहरविद्यायामुपासने हि गुणप्राधान्यमुक्तं तथाऽत्राप्युपासने गुणप्राधान्यं वक्तुं सहशब्द इत्यर्थः, फलदशायां गुणप्राधान्यश्रवणादुपासने गुणप्राधान्यं कथं सिध्यतीत्यत्राह "फलोपासनयो"रिति, फलोपासनयोरुभयोरपि

सगुणत्वं गुणप्राधान्यं च तुल्यप्रकारमित्यर्थः। गुणप्राधान्यं वक्तुमित्यनेनापि सहशब्दस्य भोग्यसाहित्यपरत्वं सिद्धम्, अन्यथा भोक्तृप्राधान्यं हि सिध्येत्, न तु भोग्यगुणप्राधान्यमिति श्रुत्यैवेत्येवकारेण उक्तन्यायस्य पुरुषबुद्ध्युत्प्रेक्षानिरपेक्षं श्रुत्या कण्ठोक्तत्वमभिप्रेतम्। अथ सगुणानामेव ज्ञेयत्वं दृष्टमिति ज्ञेयत्वनिषेधेन निर्गुणत्वं फलितमिति ज्ञेयत्वनिषेधपरत्वेन परोक्तं वाक्यमुपादत्ते "यस्ये"ति, किं ज्ञानमात्राविषयत्व मुतोपासनात्मकज्ञानाविषयत्व मुत सगुणोपासनात्मकज्ञानाविषयत्वं? विवक्षितमिति विकल्पत्रयमभिप्रेत्य प्रथमं ज्ञानमात्राविषयत्वं दूषयति "ब्रह्मविदि"ति, ब्रह्मणो ज्ञेयत्वश्रुतेरादरात्—

सू० "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु"रिति ब्रह्मविषयज्ञानासद्भावासद्भावाभ्यामात्मनाशमात्मसत्तां च वदति अतो ब्रह्मविषयवेदनमेवापवर्गाय सर्वाः श्रुतयो विदधति, ज्ञानं चोपासनात्मकम् ॥

टी० शयं दर्शयति "असन्नेवे"ति, न ब्रह्मवेदनमपवर्गोपायः, अपि तु प्रपञ्चमिथ्यात्वज्ञानमेव तदुपाय इति परैरुच्यते "विद्ययाऽमृतमश्नुते" तथा "विद्वान्नामरूपाद्विमुक्तः" "ततो ज्ञानं प्रवर्त्तते" "ज्ञानाग्निः सर्वकर्माणी"त्यादिष्वनिर्दिष्टविषयविशेषेषु वाक्येष्वपवर्गोपायतया श्रूयमाणस्य ज्ञानस्य ब्रह्मविषयत्वप्रपञ्चमिथ्यात्वविषयतासाधारण्यात्तदाशङ्क्याह "अत"-इति, अतः केषुचिद्वाक्येष्वपवर्गोपायज्ञानस्य ब्रह्मविषयत्वदर्शनात्सर्वाः श्रुतयः अनिर्दिष्टविषयविशेषा विद्ययाऽमृतमश्नुत इत्यादिकाः श्रुतयोऽपि सर्वशाखाप्रत्ययन्यायेन ब्रह्मविषयमेव वेदनमपवर्गोपायतया विदधतीत्यर्थः। यद्वा केषुचिद्ब्रह्मविषयत्वे श्रुते ज्ञानमात्रोपायपराः श्रुतयश्च सामान्यविशेषन्यायात् तत्रैव पर्यवस्यन्तीत्यभिप्रायः। अथोपासनात्मकज्ञानाविषयत्वपक्षं दूषयति "ज्ञानं चे"ति, "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति

श्रुतिरुपासनात्मकज्ञानाविषयशङ्काबीजं वाक्यार्थज्ञानस्योपायत्वानुपपत्त्युपपादनात्परिहृतमित्यर्थः, नेदं यदिदमुपासत इत्यस्यायमर्थः—यदिदं प्रतीकमुपासते तच्च तदेव परं ब्रह्म त्वमुपास्स्वेति । अथ सगुणोपासनाविषयत्वपक्षं प्रतिक्षिपति—

सू० उपास्यं च ब्रह्म सगुणमित्युक्तं "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति ब्रह्मणोऽनन्तस्यापरिमित[1]गुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम् ॥

टी० "उपास्यं चे"ति, निर्गुणपरत्वेन परोक्तायाः सद्विद्याया एव सगुणविषयत्वोपपादनादिति भावः । यद्वा ज्ञानं चोपासनात्मकमिति ज्ञानविशेषविषयत्वकण्ठोक्त्या ज्ञेयत्वमात्रनिषेधो दूरं निरस्त इति भावः । उपास्यं चेति ज्ञेयत्वनिवृत्त्या सिषाधयिषिता गुणनिवृत्तिर्गुणविधानबाधिता ततश्चाज्ञेयत्वं बाधितं[2]ज्ञेयत्वमाक्षिपतीति भावः । तर्ह्यविज्ञातत्वामतत्वश्रुत्योः कोऽर्थः ? इत्यत्राह "यतो वाच" इति, अनन्त—शब्देन सत्यं ज्ञानमिति वाक्यं स्मारितम् । अनन्तस्येति स्वरूपानन्त्यमुक्तम्, अपरिच्छिन्नगुणस्येति गुणानन्त्यम्, अस्मिन्नर्थे "न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः" "नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते" "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः" "वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः स ते गुणानामयुतैकदेशं वदेन्न वा देववर प्रसीद" "यथा रत्नानि जलधेरसंख्येयानि पुत्रक तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः । इत्युत्तयाविवर्त्तते नान्त-

१ अपरिच्छिन्नगुणस्येति पाठान्तरमनतिप्रायकम् ।
२ बाधित्वेति पुस्तकान्तरपाठोऽपि युक्तः ।

रिवक्षितित्वयात् मतित्वयाद्विवर्त्तन्ते न गोविन्दगुणत्वयात्" इत्यादि द्रष्टव्यं परिच्छिन्नत्वज्ञाने कथं धर्मिणो ब्रह्मणो ऽज्ञातत्व? मित्यत्राह—

सू० अपरिच्छिन्नत्वाद्ब्रह्मणः, अन्यथा यस्यामतं तस्य मतं विज्ञातमविजानतामिति ब्रह्मणोमतत्वविज्ञातत्ववचनं तत्रैव विरुध्यते, यत्तु न दृष्टेर्द्रष्टारं न मतेर्मन्तारमिति श्रुतिः दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधतीति तदागन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा "न तथाऽऽत्मानं पश्येः न मन्वीथाः अपि तु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येरित्यभिदधातीति परिहृतम्।

टी० "अपरिच्छिन्नत्वात् ब्रह्मण" इति—ब्रह्मशब्दवाच्यस्य स्वरूपतोगुणतश्चापरिच्छिन्नत्वादित्यर्थः, न केवलं श्रुत्यन्तराविरोधार्थमेवमर्थ उक्तः इतरथा स्ववाक्यव्याहतिप्रसङ्गा[1]च्चेत्याह "अन्यथे"ति, तत्रैव—स्ववाक्य एव। ज्ञेयत्वनिषेधे परिहृते ज्ञातृत्वनिषेधं परिहरति "यत्वि-त्यादिना, दृष्टेर्मतेरिति पञ्चम्यन्तत्वाभिप्रायेण व्यतिरिक्तमिति पदाध्याहारेण किं योजना? उत षष्ठ्यन्ततया व्यतिरिक्तपदानध्याहारेण योजना त्वया क्रियत? इति विकल्पमभिप्रेत्य प्रथममध्याहारपक्षमनुवदति "न दृष्टे"रिति, परिहरति "तदि"ति, । प्रसक्तस्य हि प्रतिषेध इति इति शङ्कायां प्रसङ्गं दर्शयति "कुतर्कसिद्धा"मिति कुतर्कः कथमुपन्यस्त? इत्यपेक्षायां स्वरूपजडत्वे परोक्तं हेतुद्वयं संग्रहेणोपपादयति "आगन्तुकचैतन्यगुणयोगितये"ति, आगन्तुकत्वाद्गुणत्वाच्चेतिहेतुद्वयम्, आगन्तुकत्वात्—अनित्यत्वात् ज्ञानं नित्यस्यात्मनो न स्वरूपं भवितुमर्हति गुणत्वाच्च न स्वरूपमिति। यद्वा चैतन्यं नाम विषयप्रकाशः तच्चेत्यं स्वरूपं चेत्सर्वदा विषयप्रकाशप्रसङ्ग इति भावः। दृष्टश्रुतिमतिनि-

१ व्याहतिप्रसङ्गश्चेति युक्तः पाठः।

दिध्यासनानां ज्ञानविशेषाणां कर्त्तुरात्मनः स्वरूपस्य दृष्ट्रादिरूपत्वे विधीयमाने आत्मनः स्वरूपस्य न ज्ञानावान्तरभेदः शङ्कनीयः, तेषां ज्ञानविशेषाणां स्वयंप्रकाशत्वलक्षणं ज्ञानत्वमविशिष्टमिति तावन्मात्रमेव स्वरूपस्य विवक्षितं भवति । अयं परिहारः परपक्षे ऽपि समानः । साक्षाद् योजनामाह—

सू॰ अथवा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः अन्यथा "विज्ञातारमरे केन विजानीया"दित्यादिज्ञातृत्वश्रुतिविरोधश्च ।

टी॰ "अथवे"ति, दृष्टिश्रुतिमतिनिदिध्यासनानां कर्त्तारं जीवात्मानं प्रतिषिध्य परमात्मानमेवोपास्स्वेत्ययमर्थ उक्त इत्यर्थः, । यद्वा अभिदधातीत्यनुषङ्गः, जीवात्मानं प्रतिषिध्य परमात्मानमुपास्स्वेत्यभिदधाति श्रुतिरिति वाक्यार्थ इति वाक्यान्तरम् । यद्वा प्रतिषिध्य परित्यज्येत्यर्थः अतः समानकर्तृकत्वोपपत्तिः, "यः प्राणेन प्राणिति योऽपानेनापानिति एष त आत्मा सर्वान्तर" इति प्रस्तुतत्वात्प्राणेन प्राणितृत्वादि जीवात्मनः संभवतीति तदुपास्यत्वशङ्काव्यावृत्त्यर्थं न दृष्टेर्द्रष्टारमित्याद्युच्यत इति अयमेवार्थः, अन्यथा श्रुत्यन्तरविरोधमाह "अन्यथे"ति, गुणत्वमसिद्धं ज्ञानस्वरूपत्वेन श्रुतिप्रतिपन्नत्वात् ज्ञानं चेदागन्तुकमिति न वाच्यम् ईश्वरज्ञाने व्यभिचारात् अस्मदादिज्ञानस्याप्यागन्तुकत्वं कालात्ययापदिष्टं न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति हेतुद्वयपरिहारः विषयप्रवणत्वश्रुतेः, धर्मभूतज्ञानस्यैव सर्वसाधारणं ज्ञानत्वं स्वप्रकाशत्वम् अतो न सर्वदा विषयप्रकाशप्रसङ्गश्च ज्ञेयत्वनिषेधपरिहारानन्तरं बुद्धिस्थत्वात् ज्ञातृत्वनिषेधः परिहृतः । अथार्थगुणनिषेधान्तरं परिह्रियते—

सू॰ आनन्दो ब्रह्मेत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तं तत् ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वद-

तीति परिहृतम् । ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते विज्ञानमानन्दं ब्रह्मेत्यानन्दरूपमेव विज्ञानं ब्रह्मेत्यर्थः, अत एव भवतामेकरसता अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तं तद्वदेव "स एको ब्रह्मण आनन्दः" "आनन्दं ब्रह्मणोविद्वानित्यादिव्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म अपि त्वानन्दि ।

टी० "आनन्द इत्यादिना, पूर्वोक्तपरिहारमत्रातिदिशति "तज्ज्ञानाश्रयस्ये"ति, कथं तेनेदं परिहृतमित्याह "ज्ञानमेव ही"ति; तर्हि श्रुतिषु विज्ञानानन्दशब्दयोः समभिव्याहारो नोपपद्यत इत्याह "विज्ञान"मिति, स्वप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदादुपपद्यत इति भावः । तथैव भवद्भिरभ्युपगतमित्याह "अत एवे"ति, अत एव—ज्ञानानन्दशब्दयोरेकविषयत्वादेवेत्यर्थः । आनन्दस्यानन्दाश्रयत्वाभावः किं श्रुत्या? उत व्याप्त्या? व्याप्त्या चेत्कस्यचिद्धर्मः स्यात् श्रुतिबलात्स्वतन्त्र इति चेत्तत एवानन्दाश्रयत्वमप्यभ्युपगम्यतां धर्मभूतानन्दस्य ह्यानन्दाश्रयत्वाभावो दृष्टः अतो व्याप्तिविरोधश्च नास्ति अतः स्वतन्त्रत्ववत् गुणाश्रयत्वमपि श्रुतिसिद्धत्वात् स्वीकार्यमिति भावः । उभयत्र प्रमाणे सति हि न्यायसंचार इति हि शङ्कायां दृष्टान्तभूमौ प्रमाणस्य दर्शितत्वमाह "अस्ये"ति, दार्ष्टान्तिकेऽपि कण्ठोक्तिं दर्शयति "तद्वदि"ति, ज्ञातृत्ववदानन्दित्वमपि कण्ठोक्तमित्यर्थः । ज्ञातृत्वश्रुतिरप्यानन्दित्वे प्रमाणमित्यभिप्रेत्याह—

मू० ज्ञातृत्वमेव ह्यानन्दित्वं यदिदमुक्तं "यत्र हि द्वैतमिव भवति "नेह नानाऽस्ति किंचन "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये"दिति भेदनिषेधो बहुधा दृश्यत इति ।

टी० "ज्ञातृत्वमेव ह्यानन्दित्व" मिति, ज्ञातृत्वातिरिक्तानन्दित्वव्युदासपर एवकारः, हि-शब्दस्तदुपपत्तिसूचकः, अनुकूलज्ञानाश्रयत्वमेव ह्यानन्दित्वमित्यर्थः । ज्ञातृत्वश्रुतिर्ज्ञानाश्रयत्वनिषेधस्यानन्दाश्रयत्वनिषेधस्य च विरोधिनीति भावः । अथ भेदनिषेधपरत्वेन परोक्तां श्रुतिं योजयितुमनुवदति "यदिद" मिति, यत्र हीत्यादिवाक्ये भेदनिषेधः कृतः भेदप्रतिपत्तावनर्थं दर्शयति "मृत्यो" रिति, "तमसो वा एष तमः प्रतिशती" तिवत् नित्यानुवृत्तस्य भेदस्य कथं भ्रान्तिसिद्धत्वमित्यत्राह "यत्र त्विति, उक्तवाक्येषु वचनभङ्गीवैविध्याभिप्रायेण बहुधेत्युक्तं, बहुश इति पाठे निषेधक्रियाऽऽवृत्तिरित्यर्थः । परिहरति "तदि" ति, तच्छब्दस्य परिहृतमित्यत्रान्वयः समस्तहेयप्रत्यनीकत्वेन समस्तकल्याणगुणात्मकत्वेन च श्रुत्यन्तरप्रसिद्धस्य ब्रह्मणो विकारास्पदक्लेशकर्मादिहेयपरवशजगदैक्यं व्याहतत्वाच्छ्रुतिर्न प्रतिपादयति, न व्याहतिर्हेयानामपारमार्थिकत्वादिति चेदपरमार्थिकत्वेऽप्येतन्निरसनीयन्न वा न चेत्तन्निवृत्त्यर्थं शास्त्रमनर्थकं स्यात् निरसनीयं चेन्निरसनीयसंबन्ध इति तत्प्रत्यनीकस्य तत्संबन्धित्वं व्याहतं[1] किंच बहु स्यामिति स्वसङ्कल्पपूर्वकं बहु भवनं श्रूयते सर्वज्ञस्य च स्वेच्छया स्वस्मिन् हेयोपादानमनन्वितमिति तत्सर्वज्ञस्य तत्प्रतिपादनमशक्यं असर्वज्ञत्वे पश्यत्यचक्षुः स शृणोत्यकर्णः "स्वाभाविकी ज्ञानबलक्रिया च" यःसर्वविदित्यादि श्रुतिविरोधः हेयस्यापारमार्थ्येऽपि स्वसंकल्पेन स्वस्यानन्तापुरुषार्थभ्रमापादनं सर्वज्ञस्य नोपपद्यते सार्वज्ञ्यस्याविद्याकल्पितत्वाभ्युपगमादविद्यापूर्वकमेव बहुभवनभ्रमरूपं सार्वज्ञ्यमिति न वाच्यं स्वाभाविकीति श्रुतेः "त इमे सत्याः कामा" इति सत्यत्वश्रुतेश्च स्वसार्वज्ञ्यमाविद्यकत्वेन मिथ्येति न जानाति चेत् सार्वज्ञ्यं न स्यात् जानाति चेत्तेनैव ज्ञानेन बाधितत्वात्सार्वज्ञ्यं न स्यात् ततश्च पूर्वजगदाकारपर्यालोचने स्वसङ्कल्पपूर्वकं जीवकर्मानुगुणसृष्टिर्नोपपद्यते अतः सार्वज्ञ्यस्याविद्यकत्वमनुपपन्नमिति सर्वज्ञस्य तस्य स्वगतहे-

१ विरोधिताऽवच्छेदकसंबन्धातिरिक्तसंबन्धेन संबन्धित्वं व्याहतमित्यर्थः ।

यापादनं न घटते। किंच हेयं स्वगतत्वेन जानतस्तत: सर्वशक्तेस्तस्य सत्यसङ्कल्पस्य सहसैव स्वगतहेयनिरासकत्वमपि नोपपद्यते अशक्तत्वे "परा ऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी"त्यादिश्रुतिविरोध: ईदृशविरोधो नास्ति श्रुतिबलादविरुद्धत्वस्याभ्युपगन्तव्यत्वादिति चेत् तर्हि "विज्ञानघन एवैतेभ्यो भूतेभ्य: समुत्थाय तान्येवानुविनश्यति" "न जायते म्रियते वा विपश्चित्" "वायुश्चान्तरिक्षं चैतदुभयममृतम्" "आत्मन: आकाशस्संभूत:" "न नभो न भूमिर्नेमे द्यावापृथिवी" "अन्तवदेवास्य तद्भवति नास्येष्टापूर्तं क्षीयते इत्यादिश्रुत्युक्तस्यात्मादीनां नित्यत्वानित्यत्वादेरपि श्रुतिप्रतिपन्नतया विरोधाभावादुभयमभ्युपगन्तव्यं, ततश्च सर्वत्र यथाप्रतिपन्नस्वीकारे मीमांसारम्भवैयर्थ्यं स्यात् प्रस्तुतभेदाभेदश्रुत्योरपि पारमार्थिका ऽपारमार्थिकविषयत्वेन सोपाधिकनिरुपाधिकविषयत्वेन वा विभागकल्पनमनुपपन्नं तस्य विरोधपरिहारार्थत्वाद्विरोधस्य चाभावात्ततश्च भेदपरमार्थत्वसिद्धि:, अतोविरोधो ऽभ्युपगन्तव्य इह च विरोधो ऽवगम्यते "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यती"ति भेदप्रतिपत्ते: संसारहेतुत्वं श्रूयते "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमे"ति "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इति भेदज्ञानस्य मोक्षोपायत्वं श्रूयते द्वैतिनो ऽतथ्यदर्शिन इत्यादिस्मृतिविरुद्धं, "द्वाविमौ पुरुषौ" "बिभर्त्यव्यय ईश्वर:" "यस्मात्क्षरमतीतो ऽहमक्षरादपि चोत्तम:" इत्यारभ्य "योमामेवमसंमूढो जानाति पुरुषोत्तम"मिति भेदज्ञानवतो ऽसंमूढत्वं स्मर्यते एवमादिवचनप्रतिपन्नस्य भेदस्य लोकसिद्धत्वाभावान्निषेधार्थं भेदो ऽनूद्यत इति वादो ऽनुपपन्न: । किंच यदि भेदमात्रस्य लोकसिद्धत्वादप्राप्ते हि शास्त्रार्थवत्त्वादिति न्यायादभेद एव शास्त्रप्रतिपाद्य इत्युच्यते तर्हि सो ऽयं देवदत्त इत्यादावभेदमात्रस्य लोकसिद्धत्वादप्राप्ते शास्त्रस्यार्थवत्त्वाच्च शास्त्रेणाभेदप्रतिपादनमयुक्तं देवदत्ताद्यैक्यं हि लोकसिद्धं न जीवपरयो:, अतस्तयोरभेद: शास्त्रप्रतिपाद्य इति चेत्तर्हि घटपटादिभेद एव लोकसिद्ध:, न तु जीवपरयोर्नियाम्यत्वनियन्तृत्वधार्यत्वधारकत्वशेषत्वशेषित्वव्याप्यत्वव्यापकत्वादिलक्षणभेदो न लोकसिद्ध इति स भेद: शास्त्रप्रतिपाद्य एव, यथोक्तमाचार्य-

पादैः "न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत् । किंच द्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम् । अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थप्रयासो यतः प्रख्यातादपरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवादि"ति अयं चार्थोऽनन्तरमेव भाष्ये वक्ष्यते, अतोऽनुवाद इति निर्वाहो नोपपद्यते भेदश्रुतिरुपासनार्था न तु तत्त्वपरा "पृथगात्मानं प्रेरितारं च मत्वा" जुष्टं यदा पश्यतीत्युपासनवाचिपदश्रवणादिति चेत्, तथाऽपि तात्त्विक एव भेदः, तज्ज्ञानस्य मोक्षोपायत्वोक्तेः, तत्त्वज्ञानेन हि मोक्षो न च फलविशेषायोपासनार्थत्वात् भेदश्रुतीनाम् भेदस्यातात्त्विकत्वं वाच्यम् ऐक्यस्य चोपासनार्थत्वादसत्यत्वप्रसङ्गात् श्रूयते ह्यभेदस्योपासनार्थत्वम् "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद" "आत्मेत्येवोपासी"तेति ऐक्यस्य चोपासनार्थत्वं भेदस्य च तात्त्विकत्वं युक्तं वैनतेयध्यानेन ह्यैक्यमारोपितं दृष्टं, भेद एव हि नरेन्द्रवैनतेययोस्तात्त्विकः, विधिशेषभूयव्यतिरिक्तेष्वपि वाक्येष्वभेदः प्रतीयत इति तस्य तात्त्विकत्वमिति चेत् तर्हि "क्षरं प्रधानममृताक्षरं हरः प्रधानक्षेत्रज्ञपतिर्गुणेशः" "ज्ञाज्ञौ द्वौ" "ऋतं पिबन्तौ द्वा सुपर्णा" नित्योनित्यानामित्याद्यविधिशेषभूतवाक्यावगतत्वाद्भेदस्य तात्त्विकत्वमवर्जनीयम् उपास्तिफलभूतमुक्तिदशायामभेदादभेदपारमार्थ्यं चेन्मुक्तिदशायां भेदश्रवणाद्भेदतात्त्विकत्वसिद्धिः । अत उपासनार्थत्वादपरमार्थविषयत्वेन भेदश्रुतिनिर्वाहो नोपपद्यते भेदाभेदयोर्नियतपौर्वापर्यविरोधवत्त्वादपच्छेदन्यायविषयत्वं सगुणत्वनिर्गुणत्वयोरिव न संभवति विरोधनयादुपक्रमनयाद्वा परभूतभेदनिषेधोत्पत्तिप्रतिबन्ध एव स्यात् इदं च पूर्वमेव प्रपञ्चितम् । एवं न्यायानुगृहीतश्रुत्यन्तरविरोधस्यावर्ज्जनीयत्वमेषां निर्वाहाणामनुपपन्नत्वं च प्रदेशान्तरोक्तमिहाभिप्रेत्य समीचीननिर्वाहं दर्शयति—

सू० तत्कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं प्रतिषिध्यते न पुनर्बहु स्यां प्रजायेयेति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति परिहृतं, नानात्वनि-

षेधादियमपरमार्थविषयेति चेन्न प्रत्यक्षादिसकलप्रमाणानवगतनानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम् ॥

टी० "तदि"ति, जगत इति पदं ब्रह्मपर्यन्तं तस्य ब्रह्मकार्यतयेति पदेनैक्यादिति पदेन चान्वयः, तदन्तर्यामिकतयेत्यत्र सामर्थ्याज्जगत इत्यध्याहारः, तेन सङ्कृत्प्रयुक्तजगच्छब्दस्य निष्कर्षकत्वानिष्कर्षत्वविरोधपरिहारः। सर्वं खल्विदं ब्रह्म तज्जलानिति वाक्योक्तं जगतस्तज्जत्वं तल्लयत्वं चोपजीव्याह "ब्रह्मकार्यतये"ति, ब्रह्म–शब्दः कारणावस्थचिदचिद्विशिष्टपरः। तदनत्वमुपजीव्याह "तदन्तर्यामिकतया चे"ति, तच्छब्दो विशेष्यपरामर्शी विशिष्टे प्रक्रान्ते विशेष्यांशस्यापि प्रकृतत्वात् यथा सन्मूलाः सदायतना इत्यत्र सच्छब्दस्य विशिष्टपरत्वं विशेष्यपरत्वं च तद्वत् तत् ब्रह्मान्तर्यामि यस्य तत्तदन्तर्यामिकं तद्भावेनेत्यर्थः कथं तदनत्वेन तदन्तर्यामिकत्वसिद्धिः। उच्यते अननं स्थितिः, ब्रह्मणो जगत्स्थितिहेतुत्वं चान्तः प्रविश्य प्रशासनेन धारकत्वं "सन्मूलास्सोम्येमास्सर्वाः प्रजा. सदायतनास्सत् प्रतिष्ठा" इत्यत्र सन्मूलाः सत्प्रतिष्ठा इति पदद्वयं सच्छब्दवाच्यब्रह्माधीनोत्पत्तिलयपरं प्रतिष्ठा निष्ठा–पर्यवसानं–लयः, न तु सदाधारत्वं सदायतना इति पुनरुक्तिप्रसङ्गात्, एवं ब्रह्मण उत्पत्तिलयहेतुत्ववाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना सदायतना इति पदेन धारकत्वसिद्धेः "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत" इत्यत्र तिष्ठतिधातूक्तस्थितेः प्रशासनेन धारणाधीनत्वावगमादन्तः प्रविष्टः शास्ता जनानामिति धारणहेतुभूतप्रशासनस्यान्तः प्रविश्य क्रियमाणत्वश्रवणात्तद्यथा "अरेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"ति श्रुतिस्मृतिभ्यामरनाभिमणिगणसूत्रदृष्टान्ताभ्यामन्तः स्थितस्य धारकत्वावगमा"त्तत्सृष्ट्वा तदेवानुप्राविश"दित्युक्तानुप्रवेशस्य सृष्ट्यनन्तरभावित्वाद् उदाहृतश्रुत्यैकार्थ्याच्च स्थित्यर्थ-

त्वात्सप्त प्राणाः प्रभवन्तीत्यादिवाक्योक्तप्रक्रिया सृष्टस्य जगतस्तेनेदं पूर्णं पुरुषेण सर्वमिति वाक्येन स्थितिवेलायां व्यापकेन परमपुरुषेण पूर्णत्वावगमात् सर्वशाखाप्रत्ययन्यायेन व्यापननियमनधारणेष्वन्यतमोक्तावन्यतमस्य सिद्धत्वाच्चानुप्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति ह्यवगम्यते एवं तज्जलानिति वाक्यमुपजीव्योक्तं जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया चेति तदन्तर्यामिकत्वमुभयलिङ्गस्य ब्रह्मणः परमार्थजगदुपादानत्वान्यथानुपपत्तिसिद्धं घटकश्रुतिसिद्धं च, च-शब्दस्योत्तरत्रान्वयः तदन्तर्यामिकतया तदात्मकत्वेन चेति स आत्मा यस्य तत्तदात्मकं तदन्तर्यामिकत्वरूपेण तदात्मकत्वेनेत्यर्थः अन्तः प्रविश्य नियन्ता ह्यात्मा ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वेन चेत्युक्ते हेतुत्रयशङ्का स्यादिति तद्व्युदासार्थश्चशब्दस्य प्राक्प्रयोगः । एवमुभयविधैक्यस्य विहितत्वादित्यर्थः ।

ननु ऐक्यस्य कार्यकारणभावनिबन्धनत्वे कार्यावस्थजगद्विशिष्टस्य कारणावस्थचिदचिद्विशिष्टब्रह्मणा स्वरूपैक्यं युक्तं तदन्तर्यामिकत्वनिबन्धनत्वे तु न ब्रह्मणा जगत ऐक्यं, किंतु प्रकारिणो ब्रह्मण एकत्वसंख्यान्वय एवेत्यैक्यशब्दस्यार्थभेदः स्यात् ततश्च जगतस्तदात्मकत्वेनैक्यादिति वक्तुमयुक्तं प्रकारप्रकारिणोर्जगद्ब्रह्मणोर्भिन्नत्वात् । नैवं जगद्ब्रह्मणोर्भिन्नत्वे ऽप्यत्र जगच्छब्दो जगद्विशिष्टब्रह्मपर इत्युक्तत्वादैक्यशब्दस्य च नार्थभेदः, उभयथाऽपि विशिष्टैक्यपरत्वात् तथा हि कार्यकारणभावनिबन्धनमैक्यमवस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वैक्यं यथा रूपस्पर्शादिविशिष्टघटस्य तादृशमृद्द्रव्येणैक्यं तथा चिदचिदात्मकजगद्विशिष्टस्य स्वरूपेण गुणैश्च निरतिशयबृहत्त्वविशिष्टस्य चैक्यं प्रकारैक्यं यथा नैल्यविशिष्टस्य उत्पलत्वविशिष्टस्य चैक्यं

न च विशेषणांशैक्याभावाद्वस्त्वैक्यहानिः, मृद्घटादावपि स्वरूपस्य रूपस्पर्शादीनां कार्यत्वकारणत्वावस्थायोश्चैकत्वाभावात्, इयान्विशेषः कार्यकारणभावे भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्मैक्यं यथा स एवायं तरुणोऽभूदिति अन्यत्र समकालसंबन्धद्वारकानेकविशेषणाश्रयधर्मैक्यं यथाऽयं वेदविद् ब्राह्मण इति बाल्ययौवने भिन्नकालीनसद्वारकावस्थे

वेदनं ब्राह्मणशरीरं च समकालवर्त्यद्वारकविशेषणम् । एवमुभयविधविशेषणविशिष्टधर्म्यैकत्वमैक्यशब्दार्थः अतो जगच्छब्दवाक्यधर्म्यैक्याज्जगत ऐक्यादिति निर्देश उपपन्नः । यद्वा कृत्स्नस्य जगत इति निष्कर्षकः शब्दः ब्रह्मशब्दोऽपि विशेष्यमात्रपरः कार्यावस्थां प्रत्याधारत्वादाधारत्वं च साक्षाद्वा परम्परया वा मुख्यमेव अतो ब्रह्मकार्यं जगत् तदन्तर्यामिकशब्दोव्याख्यातः । एवं ब्रह्मकार्यतया तदन्तर्यामिकतया च जगत्तदात्मकं तदात्मकत्वन्नाम जगतस्तत्प्रकारैकस्वभावतया पृथगवस्थानाभावात्तदन्तर्गतत्वं तेन प्रकारेणैक्यं न तु स्वरूपैक्यं विशिष्टान्तर्भाव एवैक्यमित्यर्थः तत्प्रत्यनीकनानात्वमिति विहितोभयविधैक्यप्रत्यनीकनानात्वं निषिध्यत इत्यर्थः कार्यकारणभेदः कुतर्कमूलभ्रान्तिविषयः स्वनिष्ठभेदो लौकिकप्रतीतिमूलभ्रान्तिविषयः, अतो भ्रान्तिसिद्धत्वाविशेषाद्विहितैक्यप्रत्यनीकत्वाविशेषाच्च तेनाकारेणोभयविधं भेदंनानाशब्देन परामृश्य तन्निषिध्यत इति न वाक्यभेदः, तत्प्रत्यनीकमिति ऐक्यविधिशेषभूतोभेदनिषेधः अन्वयमुखेनोक्तार्थस्थिरीकरणार्थत्वाद्व्यतिरेकोक्तिः ऐक्यविधिश्च 'नेह नानास्तीति प्रकरणे श्रूयते एकधैवानुद्रष्टव्यमित्यैक्यदर्शनविधिः एकधा एकतया परमात्मशरीरतया एप्रकारेणेत्यर्थः तथा च अहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यःकश्चिन्मत्तो व्यतिरिक्तः" "आत्मा वा इदमेव एवाग्र आसीत् नान्यत्किंचन मिषत्" तथा "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातं तदच्युतो नास्ति परं ततोऽन्यत् इत्यादिषु चैक्यविधिशेषतया भेदनिषेधो दृश्यते, शेषत्वं च विहितैकत्वस्थिरीकरणलक्षणाकाङ्क्षितत्वाकारेण भवति यादृशमैक्यं विहितं तन्निषेधस्य तादृशैक्यविरोधिभेदविषयत्वे सति तत्स्थिरीकरणार्थत्वं सिद्धौचत्वविरोध्यर्थान्तरनिषेधस्तदुपयुक्तः न हि मृदेव घट इत्युक्ते घटद्वित्वनिषेधो मृद्घटैकत्वोपकारकः घटद्वित्वस्य मृद् घटैत्वाविरोधित्वात् विनाऽप्येको घट इत्युक्ते घटगतरूपपरिमाणादिनिषेधोघटाख्यधर्म्यैविधेरुपकारकः रूपपरिमाणादिभेदस्य घटव्यक्त्यैक्याविरोधित्वात् विधेयविरोध्यर्थनिषेध एव हि विध्युपकारकः । किंच न

केवलमुपकाराभावः, ऐक्यविधिविरुद्धं च कृत्स्नभेदनिषेधपरत्वं समानाधिकरणवाक्यैनैक्यविधानात् भिन्नविशेषणाभिधायिशब्दानामेकविशेष्यवृत्तित्वं हि सामानाधिकरण्यम्

न च प्रकारभेदे तिष्ठति कृत्स्नभेदनिषेध उपपद्यते अतो भेदनिषेधस्यैक्यविधिशेषत्वात् कार्यकारणभेदः स्वनिष्ठभेदश्च निषिध्यत इत्यभिप्रायः । किंच "न चास्य कश्चिज्जनिता न चाधिपः न तत्समश्चाभ्यधिकश्च दृश्यते तेनार्हति ब्रह्मणा स्पर्द्धितुं कः न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव:" इत्यादिभिः स्वतन्त्ररूपवस्तुविशेषविषयनिषेधदर्शनात्सामान्येनावगतो भेदनिषेधः तत्र छागपशुन्यायेन पर्यवस्यतीत्यर्थसिद्धं तत्प्रत्यनीकनानात्वमित्युक्तत्वात् केषुचिद्वाक्येषु तस्य कण्ठोक्तत्वाच्च । अथ उत्सर्गापवादन्यायमभिप्रयन्नाह "न पुनरि"ति, ब्रह्मणः कार्यरूपेण नानात्वविषयश्रुतिवाक्योदाहरणं प्रकारनानात्वविषयवाक्यानामपि प्रदर्शनार्थम् "एकः सन् बहुधा विचार एको देवो बहुधा निविष्टः त्वमेकोऽसि बहूननुप्रविष्टः" "योऽव्यक्तमन्तरे संचरन् यस्याव्यक्तं शरीरं योऽक्षरमन्तरे संचरन् यस्याक्षरं शरीरं योमृत्युमन्तरे संचरन् यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इति प्रकारनानात्वं प्रकार्यैकत्वं च हि स्पष्टं श्रूयते । यद्वा छान्दोग्ये तैत्तिरीयके च बहु स्यामिति प्रकरणे "अनेन जीवेनात्मनाऽनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं चेति चिदचिदनुप्रवेशपूर्वकनामरूपभाक्त्वश्रवणादुभयलिङ्गस्याप्यव्यवधानेन जगदुपादानत्वानुपपत्तेश्च बहु स्यामित्यत्रापि ब्रह्मणो बहुनामरूपभाक्त्वस्य सद्वारकत्वसिद्धेः शरीरतया प्रकारभूतचिदचिन्नानात्वमर्थसिद्धमित्यभिप्रायेण बहु स्यामिति वाक्यमुदाहृतम्, एवं कार्यनानात्वस्य प्रकारनानात्वस्य च विहितत्वात्सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वाच्च कुतर्कसिद्धकारणकार्यभेदविषया लौकिकप्रतीतिसिद्धस्वनिष्ठभेदविषयाश्च भेदनिषेधश्रुतय इत्यर्थः । नानात्वनिषेधादपरमार्थविषयत्वं शङ्कते "नानात्वे"ति, इयं श्रुतिः भेदस्तु निषेधा-

र्थमनूद्यत इति भावः । परिहरति "ने"ति, अप्राप्तस्यानुवादायोगात् अतो विषयविभागादविरोध एव न्याय्यः, तदुक्तमाचार्यपादैः "यद् ब्रह्मणो गुणशरीरविकारभेदकर्मादिगोचरविधिप्रतिषेधवाचः अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः" इति समस्तहेयरहितस्य हेयाकारवस्त्वैक्यासम्भवात् हेयस्यापारमार्थ्येऽपि तस्य निरसनीयतया हेयत्वस्यावर्ज्जनीयत्वात् तत्प्रतिभटतयोक्तस्य तत्संबन्धार्हवस्त्वैक्यबाधात् सर्वज्ञस्य ब्रह्मणः स्वसङ्कल्पेन स्वगतहेयतद्विषयभ्रमापादनायोगादसर्वज्ञत्वे सार्वज्ञ्यश्रुतिविरोधात् सर्वशक्तेः स्वगतहेयानिवारकत्वायोगादशक्तत्वे सर्वशक्तिश्रुतिविरोधात् श्रुतिबलादीदृशविरोधाभावे तान्येवानुविनश्यति न जायते म्रियत इत्यादिवाक्यप्रतिपन्ननित्यत्वानित्यत्वनिर्गुणत्वसगुणत्वादेः श्रुतिबलाद्विरोधाभावेन क्वचिदपि न्यायसंचारानपेततया मीमांसानैरर्थ्यात् भिन्नत्वाभिन्नत्वयोश्च विरोधाभावेन पारमार्थिकापारमार्थिकत्वेन विभागस्यानभ्युपन्तव्यत्वात् "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "जुष्टं यदा पश्यत्यन्यमीशमिति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रवणात् "यस्मात् क्षरमतीतोऽहमित्यादिना भेदज्ञानवतो ऽसंमूढत्वस्मरणात् जीवपरयोर्नियन्तृत्वनियाम्यत्वादिलक्षणभेदस्य घटपटभेदवत् प्रमाणान्तरागोचरत्वेनानुवादासम्भवाद्विहितस्य निषेधायोगादुपासनार्थत्वाश्रयणस्य "अथ यो ऽन्यां देवतामित्यादिवाक्यप्रतिपन्नैक्येऽपि प्रसङ्गादैक्यस्याविधिशेषवाक्यप्रतिपन्नत्वे भेदस्य च तुल्यत्वान्नियतपौर्वापर्याविरोधतया अपच्छेदन्यायाविषयत्वाद्विरोधाधिकरणन्यायेन भेदश्रुतेः परभूतनिषेधोत्पत्तिप्रतिबन्धकत्वादैक्यविधिशेषस्य भेदनिषेधस्य विहितैक्यविरोधिभेदनिषेधकत्वोपपत्तेरन्यथा समानाधिकरणवाक्यप्रतिपन्नस्वशेषिभूतैक्यविरोधित्वप्रसङ्गादुत्सर्गापवादन्यायेन निषेधस्य विहितभेदव्यतिरिक्तविषयत्वाच्छागपशुन्यायेन सामान्येन भेदनिषेधस्य स्वतन्त्रभेदविशेषनिषेधपर्यवसायित्वाच्च भेदनिषेधश्रुतयो ऽब्रह्मात्मकनानात्वनिषेधपरा, न तु भेदमात्रनिषेधपरा इति सङ्ग्रहः; यत्र हीत्यादिवाक्यानामयमर्थः, यत्र–यदा, द्वैतमिव भवति–स्वनिष्ठभेद इव भवति इव-

शब्दः स्वनिष्ठभेदस्यातात्त्विकत्वद्योतकः कथमिवेतिवद् वाक्यभङ्गिः इत्यविवक्षितार्थो वा तत् तदा इतर इतरमितरेण पश्यति केनेति वक्ष्यमाणत्वादितरेणेत्यध्याहारः इतरः स्वनिष्ठोद्रष्टा इतरं स्वनिष्ठं द्रष्टव्यं स्वनिष्ठदर्शनसाधनेन पश्यति यत्र तु यदा अस्योपासकस्य सर्वमात्मैवाभूत परमात्मसामानाधिकरण्येन सर्वं साक्षात्कृतं न हि पूर्वमनात्मभूतमिदानीं सर्वमात्मा भवति अतः साक्षात्काराभिप्रायोऽभूदिति निर्देशः, अस्येत्युक्तेः क इत्यध्याहारः इतर इत्युक्तत्वात्, तत्–तदा स्वनिष्ठः को द्रष्टा स्वनिष्ठेन केन दर्शनसाधनेन स्वनिष्ठं कं द्रष्टव्यमर्थं पश्येत् ज्ञातृज्ञेयज्ञानसाधनेषु स्वनिष्ठं किंचिदपि नास्तीत्यर्थः प्रमितस्य निषेधायोगादापातप्रतीतिसिद्धस्यैव निषेध्यत्वात् लौकिकप्रतीतेश्च स्वनिष्ठताविषयत्वात् तेन रूपेणैव निषेधविषयत्वोपपत्तेः, यदि द्रष्टृदृश्यादिमात्रं निषिध्येत तदानीं "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहम्मनुरभवं सूर्यश्चेति परमार्थसाक्षात्कारदशायामहमिति द्रष्टुरात्मनो मनुसूर्यादिदृश्यपदार्थानां च साक्षात्कारश्रवणं विरुध्यते तस्मात् लौकिकप्रतीतौ द्रष्टृदृश्यादिकं प्रकारीभूतपरमात्मप्रतिपत्तेस्तत्सामानाधिकरण्यमन्तरेण स्वनिष्ठतया भाति योगदशायां तु प्रकारिणः परमात्मनः प्रतीयमानत्वादहंशब्दवाच्यपरमात्मसामानाधिकरण्येन प्रकाशत इति वैषम्यं न तु द्रष्टृदृश्यादिनिवृत्तिरित्यभ्युपगन्तव्यम्, अन्यथा वामदेवादिदर्शनस्य भ्रान्तित्वप्रसङ्गात्, नेह नानेति इह–प्रपञ्चे लोकदृष्टप्रकारेण नानाभूतं स्वनिष्ठतया भिन्नं किंचिदपि नास्तीत्यर्थः स्वनिष्ठदर्शनेन प्रत्यवायमाह "मृत्योरि"ति, तमसो वा एष तमः प्रविशतीतिवन्निर्देशः नानेव–स्वनिष्ठमिव अज्ञानादज्ञानमाप्नोतीत्यर्थः तद्व्यतिरिक्त[1]तया ज्ञानं प्रागेव सिद्धं ततो ऽप्यतिशयितमज्ञानं स्वनिष्ठतया तद्वस्तुदर्शनमित्यभिप्रायः ।

सू० "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती"ति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तं

१ देहातिरिक्तविषयाज्ञानमिति पुस्तकान्तरपाठः ।

तदसत् "सर्वं खल्विदं ब्रह्म" "तज्जलानिति शान्त उपासीते"ति तन्नानात्वानुसन्धानस्य शान्तिहेतुत्वोपदेशात्

टी० यदा ह्येवैष इत्यादिश्रुतिमुपादाय तत्र ब्रह्मणीत्यादिना पूर्वपक्षिणोक्तमर्थमनूद्य दूषयति "तदसदि"ति, भयप्राप्तिहेतुत्वञ्चेत्यर्थः कुत इत्यत्राह "सर्वमि"ति, ब्रह्मणः कार्यजगद्रूपेण, नानात्वानुसन्धानं मुक्तिहेतुरिति सिद्धान्तार्थः । इदानीं परोक्तं शान्तिहेतुत्वमभ्युपगम्योक्तं कथं तत्र नानात्वानुसन्धानप्रतीतिः? कथं वा तस्य भयप्राप्तिहेतुताविरोधित्व? मिति शङ्कायामेतद्विवृणोति—

भा० तथा हि सर्वस्य जगतः तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसन्धानेनाच शान्तिर्विधीयते अतो यथाऽवस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगत् ब्रह्मात्मकमित्यनुसन्धानस्य शान्तिहेतुतयाऽभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः एवं तर्हि अथ तस्य भयं भवतीति किमुच्यते? इदमुच्यते यदा ह्येवैष एतस्मिन्नदृश्ये ऽनात्म्येऽनिरुक्ते निलयेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयङ्गतो भवतीत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाऽभिहिता तस्या विच्छेदे भयं भवतीति

टी० "तथा ही"ति । अत्र नानात्वानुसन्धानप्रतीतिं दर्शयति "सर्वस्ये"ति, न हि केवलं ब्रह्मेत्युक्तमपि त्विदं सर्वं ब्रह्मेत्युक्तं, सर्वशब्दश्च विविधभेदप्रपञ्चपरः, अतो नानात्वविशिष्टब्रह्मानुसन्धानं प्रतीतमित्यर्थः । ततः किमित्यत्राह "अत" इति, नानार्थानुसन्धानस्य शान्तिहेतुत्वद्वारा समस्तभयनिवृत्तिरूपमोक्षोपायत्वात् भेदबुद्धेर्भयप्राप्तिहेतुत्वोक्तिस्तद्विरुद्धेत्यर्थः ।

ननु मणिकृपाणदर्पणादिगतप्रतिबिम्बेष्विव देहेषु रागद्वेषादिनिवृत्त्यर्थं सर्वस्य ब्रह्मण्यध्यस्तताऽनुसन्धानविधिः किन्न स्यात् नैवं प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यमित्युपपादितत्वाद् बाधार्थत्वस्य वक्ष्यमाणदूषणोपहतत्वाच्च । अथ चोद्यपूर्वकमेतच्छ्रुत्यर्थमाह "इदमुच्यत" इति, अदृश्य इत्यचिद्व्यावृत्तिः, अनात्म्य इति बद्धव्यावृत्तिः स हि परमात्मना व्याप्यः । यद्वा आत्म्यं व्याप्यं कर्मकृतं शरीरं तद्रहितोऽनात्म्यः अनिरुक्त इति मुक्तव्यावृत्तिः, स हि बद्धावस्थायां देवादिशब्दैरुक्तः अनिलयन इति नित्यमुक्तव्यावृत्तिस्तेषां हि भगवानाधारः स्वोक्तार्थविषयमुपबृंहणं दर्शयति–

सू॰ यथोक्तं महर्षिभिः "यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिये"त्यादि ब्रह्मणि प्रतिष्ठाया अन्तरमवकाशोविच्छेद एव

टी॰ "यथोक्त"मिति, हानिरिष्टहानिः, छिद्रमनिष्टप्राप्तिरन्ध्रं भ्रान्तिस्तत्कृतचित्तस्खलनं विक्रिया तेनाङ्गानामवशादयथायथव्यापारः "एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः न शौरिचिन्ताविमुखजनसंवाससंवैशसम्" इत्यादिवचनात्यादिशब्दविवक्षितानि भेदवाचिनोऽन्तरशब्दस्य विच्छेदार्थकत्वं कथमित्यत्राह "ब्रह्मणी" ति, अनवच्छिन्नं हि ध्यानं निरन्तरमित्युच्यते अतस्तद्विच्छेद एव, स कस्येत्यपेक्षायां प्रतिष्ठायाः प्रकृतत्वात् तस्या विच्छेदः प्रकृतब्रह्मविषये "तदप्येष" इत्युदाहृते भीषाऽस्मादित्यनन्तरश्लोके वायुसूर्यादिसर्वचेतनप्रशासितृत्वकथनादन्तरशब्दस्योपासनविच्छेदपरत्वमेव युक्तं, न तु भेदपरत्वमतो ऽयमर्थः पूर्वापरवाक्यश्रुत्यन्तरानुगुणः उपबृंहणानुगुणश्च परोक्तस्तु तदुभयविरुद्ध इति भावः

ननु यदा ह्येवैष इत्यत्र प्रतिष्ठाविच्छेदोऽर्थश्चेदेतस्यामिति स्त्रीलिङ्गता स्यात् अदितिः पाशानिति न्यायात् विभक्त्यवगतनपुंसकत्वाविवक्षेति

चेत्तथाऽप्यस्वारस्यमर्जनीयं तच्च स्वरसार्थं संभवति नोपपद्यते सप्तमी चास्वरसा तस्याविच्छेद इति ह्युक्तिः स्वरसा न तु तस्यां विच्छेद इति प्रातिपदिकास्वारस्यं च प्रतिष्ठापरत्वे स्यात् पूर्ववाक्ये यदा ह्येवैष एतस्मिन्नदृश्ये नात्म्य इति ब्रह्मपरतया प्रयुक्तस्यैतस्मिन्निति पदस्यानन्तरवाक्येऽपि बुद्धौ विपरिवृत्तेः। उच्यते न तावल्लिङ्गसप्तम्योः प्रातिपदिकस्य चास्वारस्यं ब्रह्मपरामर्शित्वादेतच्छब्दस्य, अन्तरशब्दश्चावकाशपरः निरन्तरं सान्तरतरमिति प्रयोगात् अन्तरं च देशतः कालतश्च भवति कालकृतं चान्तरं विच्छेद एव। नन्वेवं सति कस्य विच्छेद इत्यपेक्षायां प्रतिष्ठाया अन्तरमित्यध्याहारः स्यात् तच्चायुक्तम् अनध्याहारेण निर्वाहसम्भवादिति चेत् न सन्निधिलब्धस्यार्थस्याध्याहारनिरपेक्षत्वात् तथाऽप्यस्वारस्यमिति चेत् तद्दूरं पक्षान्तरे बहुस्वारस्यसम्भवात् तथा हि भयहेतोरभयहेतुप्रतियोगित्वादभयहेतुपरप्रतिष्ठापदस्यैक्यवाचित्वाभावाद्वाक्यवृत्तेरसामञ्जस्यं तत्सामञ्जस्याय प्रतिष्ठाशब्दस्यैक्यपरत्वे मुख्यार्थहानिः, दृढसम्बन्धो हि प्रतिष्ठा यथा राज्ये प्रतिष्ठित इति प्रथमप्रतिपन्नप्रतिष्ठापदस्यार्थभङ्गश्चानुपपन्नः पूर्वसिद्धैक्यावगतिपरत्वाद्विन्दतिधात्वर्थास्वारस्यं च सप्तमी चास्वरसा भेदप्रतियोगित्वावधित्वसम्बन्धविवक्षायां तृतीयापञ्चमीषष्ठीनामेव स्वारस्यात्, करोतेश्च प्रतिपत्त्यर्थत्वादस्वारस्यं च मनसि कुरुत इति योजनायामध्याहारः एष ह्येवानन्दयातीति पूर्ववाक्यप्रतिपन्नभेदविरोधश्च, अनन्तरं च भीष्माऽस्मादिति प्रशासितृत्वेन भेद उच्यते अतो मध्ये भेदनिषेधश्चानुपपन्नः 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन कदाचनेति पूर्वापरवाक्येषु गुणविशिष्टवेदनस्याभयहेतुत्वोक्तेर्ब्रह्मणि भेदनिषेधस्याभयहेतुत्वकथनं च विरुद्धं ब्रह्मविदाप्नोतीति विद्युपक्रमत्वाच्च ब्रह्मणि प्रतिष्ठाया वेदनरूपत्वमेव युक्तं न त्वैक्यरूपत्वं, न ह्यैक्यतद्बुद्ध्योरुभयो[1]रपि प्रतिष्ठाशब्दवाच्यत्वं दृढसंबन्धवाचिनः प्रतिष्ठाशब्दस्य तूपास्यं ब्रह्म प्रत्युपासकतया संबन्धे पर्यवसानं युक्तं ब्रह्मणो निर्विशेषत्वे व्यतिरिक्तमिथ्यात्वे च परोक्तं सूत्रद्वयं परिहरति—

---

१ उभयस्य चेति पुस्तकान्तरपाठः।

मू० यदुक्तं "न स्थानतोऽपी"ति सर्वविशेषरहितं ब्रह्मेति वक्ष्यतीति तन्न सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति "मायामात्रं त्वि"ति च स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थाऽनुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति, ऽस्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थोऽन्यदपारमार्थिकमिति प्रतीयत इति यदभिहितं तदसत् यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।

टी० ॥ "यदुक्तमि"ति । अथ स्मृतिपुराणयोः सविशेषपरत्वमुपपादयति "स्मृतिपुराणयो"रिति, "स्मृतीत्यादिना, सामान्येन प्रमाणस्य तदवान्तररूपस्य शब्दस्य च सविशेषवस्तुपरत्वोपपादनाच्छास्त्रस्य प्रत्यक्ष विरुद्धार्थप्रतिपादनासामर्थ्योपपादनाद्विशेषेण वेदान्तवाक्यानां सविशेषपरत्वोपपादनेन स्मृतिपुराणयोः श्रुतिविरुद्धार्थे प्रामाण्यासंभवाच्च तयोः सविशेषपरत्वं सिद्धम् । इदानीं स्मृतिपुराणयोरपि परोदाहृतवचनानां पूर्वापरपर्यालोचनया सविशेषपरत्वमुपपाद्यते, यथा लौकिकप्रमाणश्रुतिविरुद्धानर्थान्वेदं शास्त्रं प्रतिपादयति,एवमेव पूर्वापरवाक्यविरुद्धमप्यर्थं न स्मृतिपुराणानि प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः । परेण सर्वस्याविद्यकत्वाविशेषेण स्वाभाविकवक्तृवैल[2]क्षण्येनाभ्युपगमादद्वैतस्य स्पष्टताभ्रमाच्च पूर्वं पुराणवचनान्युपन्यस्य पश्चाद्भगवद्गीतावचनान्युदाहृतानि, अत्र तु स्वाभाविकवक्तृवैलक्षण्याभ्युपगमादनन्तगुणविभूतिमत्त्वस्य स्पष्टतया च भगवद्गीतावचनानि पूर्वमुपन्यस्य पश्चात्पुराणवचनानि प्रदर्श्यन्ते, अतः स्मृतिपुराणयोरित्युक्तं, परेण स्वोदाहृतवचनप्रतिपाद्यतया योऽर्थोऽभिहितः तद्विपरीतार्थपरत्वेन स्पष्टतमानि वचनानि प्रथमं प्रदर्श्यन्ते पश्चात्तदविरोधेन परोक्तवचनानामर्थप्रतिपादनार्थं "यो मामि"ति, अत्रायमिति पदेन अचि-

२ वैषम्यानभ्युपगमादिति पा० ।

त्संसृष्टचेतनव्यावृत्तिः अनादिमिति मुक्तव्यावृत्तिः तस्याजत्वं हि आदिमत् लोकमहेश्वरमिति नित्यमुक्तव्यावृत्तिः, लोक्यत इति लोकः प्रमाणसिद्धत्रिविधचेतनाचेतनवर्गः अत्रोत्तरार्द्धो ऽप्यनुसंधेयतया ऽभिप्रेतः "असंमूढः स मर्त्ये"ष्विति चेतनाचेतनविलक्षणत्वेन जानन्नसंमूढ इति कथनात् सर्ववैलक्षण्यं तात्त्विकमित्युक्तं भवतीत्यभिप्रायः। धारकत्वादिभिर्वैलक्षण्यं वैशद्यार्थमुपादत्ते—

**मू० मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः**

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरं भूतभृन्न च भूतस्थो ममात्मा भूतभावनः**

टी० "मत्स्थानी"ति, अत्र शरीरलक्षणं सूचितं भवति सर्वभूतानि मदायत्तस्थितीनि नाहं तदायत्तस्थितिरित्यर्थः, लोकदृष्टप्रकारेण नाहमाधारः अपि तु संकल्पमात्रादित्याह "न चे"ति, निषेधस्य विहितव्यतिरिक्तविषयत्वादयमेवार्थः योगमैश्वरम् ईश्वरासाधारणं सर्वशक्तियोगमित्यर्थः।

न च मत्स्थानीति धारकत्वपारमार्थ्यनिषेधश्चेद्योगमैश्वरं पश्येति विरुद्धं, मम भ्रान्तिं पश्येति हि तदा वक्तव्यं योगमैश्वरमित्येतद्विवृण्वन्निममेवार्थमाह "भूतभृदि"ति, ममात्मा मम संकल्प इत्यर्थः। आत्म-शब्दो हि मतिवाची "यत्नेऽर्के ऽग्नौ मतावात्मे"ति अतोऽत्रात्मशब्दः संकल्परूपज्ञानवाची ममात्मा भूतभावन इत्यनेन न च मत्स्थानीत्यर्थः स्फुटीकृतः, भूतभावनः भूतानां सत्ताऽनुवर्त्तकः अर्वाचीनस्येश्वरस्य हि सगुणत्वमिति शङ्कायां कारणातिरिक्तवस्तुनिषेधप्रदर्शनार्थं लक्षणप्रदर्शनार्थं च जगत्कारणत्वमाह—

**मू० अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय ? मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः**

टी० "अह"मिति, प्रभवः प्रलयश्चोक्तः स्थितिस्तु धारकत्वकथनेन सिध्यतीति धारकत्वं विशिनष्टि "मयी"ति, विष्टभ्याहमित्यनेन नियन्तृत्वमुक्तं, विष्टभ्य—अधिष्ठाय एकांशेन—संकल्पैकदेशेन तच्छरीरत्वलक्षणं यो मामजमित्यादिना ऽभिप्रेतचिदचिद्विलक्षणत्वकण्ठोक्तिं दर्शयति "उत्तम"इति, पूर्वस्मिन् वचने क्षराक्षरशब्दोक्तौ बद्धमुक्तौ कूटस्थो निर्विकारः, ज्ञानसंकोचरूपविकाराभावान्मुक्तस्य कूटस्थशब्दस्साधारणवाची वा सर्वेषु लोकेषु कामचारो भवतीति मुक्तात्मन उभयविभूतिसाधारण्यात् कूटस्थत्वं परमात्मेत्युदाहृत इत्यनेन परमात्मा व्यवस्थित इत्येतद्वाक्यान्वितो नारायणानुवाकः स्मारितः, अक्षरादपि चोत्तम इत्यनेन च तत्रैव हि सोऽक्षरः परमः स्वराडित्युक्तं, ज्ञानसंकोचरूपक्षरणाभावादक्षरो मुक्तः स्वराट्—स्वतन्त्रः, अकर्मवश्यः परमः—जीवगतावस्थास्वतः परमुत्कृष्टावस्थान्तराभावात्पारम्यं, सर्वाणीति पदं ब्रह्मशिवाद्यभिप्रायं तस्मिन्ननुवाके हि "स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमः स्वरा"डिति बद्धमुक्तजीववाचिपदैः समानाधिकृतैर्भगवानुक्तः, तत्र विश्वमेवेदं पुरुष इति च सामानाधिकरण्यवाक्यं श्रूयते सामानाधिकरण्यहेतुश्च तस्मिन्ननुवाके स्पष्टः तद्विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरं व्याप्य नारायणः स्थित इति च वाक्यजाते धार्यत्वधारकत्वनियन्तृत्वनियाम्यत्वशेषित्वशेषत्वव्याप्यत्वव्यापकत्वादिकमेव सामानाधिकरण्यनिबन्धनं न तु तदैक्यमिति स्पष्टं तदत्राप्युच्यते—

सू० यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः"

टी० "आविश्ये"ति, व्याप्य नारायणः स्थित इत्यस्यार्थ उक्तः पतिं विश्वस्येत्यस्यार्थ ईश्वर—शब्देनोक्तः, ईश्वरशब्दो हि शेषिवाचकः अत एव हि पतिं विश्वस्यात्मेश्वरम् इत्यत्र पत्यन्तरराहित्यविवक्षायामात्मेश्वर इत्युक्तं, तद्विश्वमुपजीवतीत्यस्यार्थो बिभर्तीत्युक्तः, तथा "व्यापनाद्भरणात्स्वा-

स्यादन्यः पञ्चदशोदित इति यो मामेवमसंमूढ इति कृत्स्नवैलक्षण्यज्ञानवतोऽसम्मूढत्वमुक्तम् । इति गुह्यतमं शास्त्रमिति तस्यार्थस्य गुह्यतमत्वमुक्तम्, अतोऽस्मिन्नर्थे तात्पर्यमिति स्पष्टं, पुरुषोत्तमशब्दस्य समास[1]साधुत्वञ्च संशयितव्यं नागोत्तमादिवत् सिद्धं भवतीति महाभाष्यवचनात्पाणिनिवत्पुरुषोत्तमशब्दनिर्वाहकृतामृषीणामाप्ततमत्वाच्च पुरुषोत्तम इति पञ्चमीसमासो वा अक्षरादपि चोत्तम इति ह्युक्तं, पूर्वनिपातस्तु सामानाधिकरण्यविवक्षायामेव न तु तदविवक्षायामपीति नानुशासनविरोधशङ्काप्रसङ्गः एवमेभिर्वचनैश्चिदचिद्विलक्षणस्य प्रतिपादितत्वात् क्षेत्रज्ञं चापि मां विद्धीत्यादेस्तदविरोधेनार्थोवर्णनीयः यो लोकत्रयमाविश्य बिभर्तीत्यादिना कृत्स्नस्य भगवच्छेषत्वधार्यत्वनियाम्यत्वव्याप्यत्वशरीरत्वादेर्विहितत्वात्तस्य च निषेद्धुमयुक्तत्वात् "न तदस्ति विना यस्मादित्यादिना अतदात्मकस्य नास्तित्वमुच्यते अविनाभावशब्दस्य मिथ्यात्वपरत्वेन प्रसिद्ध्यभावाच्च तथाऽभ्युपेत्यमित्यभिप्रायः, विना—शब्दो हि संबन्धविरहपरः अविनाभावशब्दस्य संबन्धनियमवाचित्वात् । अथ पुराणवचनान्युपन्यस्यन्ते तत्र प्रत्यस्तमितभेदमित्यस्य वचनस्यार्थं व्याचिख्यासुस्तदुपयोगित्वेन तदुपक्रमोपसंहारयोस्सविशेषपरत्वं दर्शयिष्यन्नुपक्रमवचनान्युपादत्ते—

मू० "स सर्वभूतप्रकृतिं विकारान् गुणादि[2]दोषांश्च मुने ? व्यतीतः अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले समस्तकल्याणगुणात्मको ऽसौ

टी० ॥ "स सर्वे"ति, तत्र प्रथमग्रन्थो हेयप्रत्यनीकत्वपरः सर्वभूतप्रकृतिं प्रधानं विकारान् महदादीन् रागा[2]दिदोषान् सत्त्वरजस्तमोहेतुकान् दोषान् ते दोषाः क्लेशादयः । व्यतीतः—विशेषेणातीतः नियमेन अतत्परवशतया संबन्धानर्ह इत्यर्थः । अतीतसर्वावरणः—आवरणं प्रकृति-

१ समासासाधुत्वमशङ्कनीयं नागोत्तमादि च सिद्धं भवतीति पुस्तकान्तरपाठः ।
२ गुणादिदोषानिति पाठान्तरम् ।

संबन्धकर्मवासनादिकं तत् सर्वमतीतं येन स इत्यर्थः । यद्वा सर्वविषयज्ञानावरणं सर्वावरणं सर्वविषयज्ञानसंकोचातीत इत्यर्थः, ज्ञानशक्त्यादिसर्वगुणसंकोचकातीत इति वाऽर्थः । अखिलात्मत्वं विवृणोति "तेने"ति, न तु मृदात्मको घट इतिवदित्यर्थः भुवनान्तराले–उभयविभूत्यन्तराले । अथ दिव्यात्मस्वरूपस्य मङ्गलैकतानत्वमाह "समस्ते"ति, "समस्तकल्याणगुणात्मक इति, कल्याणगुणवत्त्वमुच्यते चेत् आत्मशब्दः स्वभाववाची स्यात् एवं संक्षिप्तार्थस्य तेजोबलैश्वर्येत्यादिना विस्तरः क्रियत इति विभागः अस्मादपि निर्वाहाद्[1] दिव्यात्मस्वरूपपरत्वं युक्तम् । अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायात् तदा कल्याणशब्दो भावप्रधानः समस्तकल्याणत्वं गुणः स्वभावोयस्य स समस्तकल्याणगुणः यथा "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रस्थं द्व्येकयोरिति पदं द्वित्वैकत्वपरं व्याख्यातम् । अन्यथा द्व्येकेष्विति वाच्यं न तु द्व्येकयोरिति तच्च भावप्रधाननिर्देशस्य साधुत्वज्ञापनाय कृतं तत एव हि गुणाः सत्यज्ञानप्रभृतय इत्यभियुक्तैरुक्तं समस्तकल्याणगुण आत्मा धर्मिस्वरूपं यस्य स समस्तकल्याणगुणात्मकः बहुव्रीहिरौपचारिकः शिलापुत्रकस्य शरीरमिति निर्देशवत् । दिव्यात्मस्वरूपमेव स्तौति–

मू० स्वशक्तिलेशोद्धृतभूतसर्गः इच्छागृहीताभिमतोरुदेहः

टी० ॥ "स्वशक्ती"ति, स्वांशलेशात् धृतभूतसर्गः । यद्वा शक्तिः सामर्थ्यं स्वगुणलवधृतभूतजात इत्यर्थः, भूतसर्गो भूतसमूहः । यद्वा सृज्यत इति सर्गः कार्यवस्तुजातम् इत्यर्थः । अथाभिप्रायविशेषणषाड्गुण्यं पश्चाद्वदन् प्रथमं दिव्यविग्रहत्वमाह "इच्छे"ति, अभिमतत्वमभिमत्यर्हत्वम् स्वानुरूपत्वमिति यावत् अर्हाऽर्थे निष्ठा यथा अदृष्टो द्रष्टा अश्रुतः श्रोतेति तत्र ह्यर्हार्थीयः क्तः अद्रेश्यमग्राह्यमित्याद्येकार्थ्यात् अभिमतस्याननुरूपत्वमननुरूपस्यानभिमतत्वं च लोके दृश्यते तद्व्यावृत्त्यर्थमिच्छागृहीताभिमतशब्दो निरुपपदेच्छाशब्दो नित्येच्छाया अवतारसमयजन्येच्छायाश्च साधारणः असंकोचात् । अथावतारद्वारेण साध्यं विग्रहप्रयोजनमाह–

[1] इति निर्वाहः इति पा० ।

मू० संसाधिताशेषजगनद्धितोऽसौ तेजोबलैश्वर्यमहावबोधसु-
वीर्यशक्त्यादिगुणैकराशिः

टी० ॥ "संसाधिते"ति, अथ षाड्गुण्यवत्तामाह "तेज" इति, नात्र क्रमविवक्षा महाशब्दसुशब्दौ सर्वगुणसाधारणौ महत्त्वमपरिच्छिन्नत्वं यथा महोत्साहोमहाबलः महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः इति यथा च प्रकृष्टं विज्ञानबलमतुलमित्यादि सुशब्देन तेषां मङ्गलत्वमुच्यते एवं स्वरूपतोविग्रहतो गुणतश्च पर इत्याह—

मू० परः पराणां सकला न यत्र क्लेशादयः सन्ति परा[१]वरेशे
स ईश्वरोव्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम्
संदृश्यते वाऽप्यधिगम्यते वा, तज्ज्ञानमज्ञानमतोऽन्य-
दुक्तम्

टी० "पर" इति, गुणादिदोषानित्यत्र दोषशब्दार्थं विवृणोति "न यत्रे"ति, क्लेशादयः—क्लेशकर्मविपाकाशयाः, अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः, कर्म पुण्यापुण्यात्मकं जात्यायुर्भोगा विपाकाः आशयो वासना संस्कारः "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति योगसूत्रं स्मारयति "स ईश्वर" इति, योगशास्त्रादपि वेदान्तस्य वैषम्यमाह "व्यष्टी"ति, पूर्वं भेदश्रुत्यर्थ उक्तः । अथैक्यश्रुतिनिर्वाहार्थं घटकश्रुत्यर्थ उच्यते "व्यष्टी"ति, व्यष्टिसमष्टिशब्दाभ्यां कार्यकारणावस्थश्चेतनवर्ग उच्यते रूपं शरीरं स्वरूपं स्वासाधारणं शरीरं, शरीरिलक्षणं सूचयति "सर्वेश्वर" इति, ईश्वरो नियन्ता अनेन नियाम्यत्वं शरीरत्वं सिद्धं, नियाम्यविशेषो हि शरीरं सर्वदृक्—सर्ववेत्ता च स्वरूपतः प्रकारतश्च सर्वं

१ परापरेशे इति पाठान्तरम् ।

ज्ञानातीत्यर्थः । यद्वा विश्वतश्चक्षुरित्यादिश्रुतिप्रक्रियया सर्वतो दृग्भवन् सर्वं वेत्तीत्यर्थः । यद्वा सर्वेषां दृक्सर्ववेत्ता च स चक्षुर्देवानामुत मर्त्याना''-मिति श्रुतेः चक्षुर्ज्ञानप्रदः सर्वं विन्दतीति वा सर्ववेत्ता अवाप्तसमस्तकाम इत्यर्थः समस्तशक्तिः शक्तिः कार्योपयोग्यपृथग्भूतविशेषणम् । उक्तप्रकारेण सर्वशरीरकत्वादस्य सर्वमपृथक्सिद्धविशेषणमित्यर्थः परमेश्वराख्य इति परमशब्देनानन्ये[1]श्वरत्वं सिद्धं परोमाऽस्येति हि परमः, एवंविधेश्वरविषयज्ञानस्यैवापवर्गोपायवेदनत्वमाह ''स ज्ञायत''इति, संज्ञायत इति पाठे अस्तदोषमित्यादि ब्रह्मविशेषणं येन शास्त्रजन्यज्ञानेन ज्ञायते येनोपासनात्मकेन संदृश्यते येन परमभक्तिरूपेणानुभवरूपेण च प्राप्यते अनुभूयत इत्यर्थः ''भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं परन्तपे''ति वचनात् संज्ञायत इति पाठे अस्तदोषमित्यादि ब्रह्मज्ञानविशेषणम् ''अर्थेनैव विशेषो हि निराकारतया धिया''मिति न्यायात् ज्ञानस्यास्तदोषत्वादिकं विषयद्वारा अस्तदोषमिति दोषास्पदाचिद्विषयज्ञानाद् व्यावृत्तिः । शुद्धमिति अशुद्धास्ते समस्तास्त्वित्याद्युक्तकर्मवश्याशुद्धबद्धजीवविषयज्ञानाद्व्यावृत्तिः, परं—निर्मलम् अत्यन्तनिर्मलम् अनेन कदाचित्कर्मसंबन्धार्हतारूपमलान्वितमुक्तविषयज्ञानाद्व्यावृत्तिः । एकरूपमिति नित्यमुक्तविषयानेकरूपज्ञानाद् व्यावृत्तिः अनया दिशा ब्रह्मविशेषणत्वेऽपि व्यावृत्तिर्द्रष्टव्या ब्रह्मविशेषणत्वे एकरूपमित्याश्रयणीयतोपयोगिविशेषणं च भवति स्थिरस्वभावम्—आश्रितसंरक्षणादिप्रतिज्ञायां दृढतरमित्यर्थः । अज्ञानं मोक्षोपायज्ञानादन्यत्तद्विरोधि वा ''सा विद्यया विमुक्तये'' इति वचनात् । यद्वा अज्ञानं ज्ञानाभावः ब्रह्मपर्यन्तत्वाभावेनायथावस्थितवस्तुविषयत्वात् ब्रह्मविशेषणत्वे एकवाक्यं ज्ञानविशेषणत्वे वाक्यद्वयं प्रत्यस्तमितभेदमित्यादिश्लोके प्रत्यस्तमितभेदमिति पदं हृदि निधाय सशेषत्वे वचनानि दर्शितानि । अथागोचरं वचसामित्येतद्व्याचिख्यासया शब्दगोचरत्वे वचनानि दर्शयति—

[1] अन्येश्वरत्वं निषिद्धमिति त्वनतिशायकः पाठः ।

मू० शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्दिते मैत्रेय? भगवच्छब्दः सर्वकारणकारणे

टी० "शुद्ध" इत्यादिना, तत्राशब्दगोचरस्येत्यादिके पूर्वश्लोके मुक्तात्मनि भगवच्छब्दप्रयोग औपचारिक इत्युक्तं तत्कथमित्यपेक्षायां मुक्तात्मव्यावर्तकं भगवच्छब्दप्रवृत्तिनिमित्तमाह "शुद्ध" इति, यत्र प्रवृत्तिनिमित्तपौष्कल्यं तत्रैव हि मुख्यत्वं नान्यत्रेति भावः। शुद्धे सिद्धे शब्दाऽर्थसंबन्ध इत्यत्र सिद्धशब्दवच्छुद्धशब्दोऽवधारणगर्भः शुद्ध एव नित्यशुद्ध इत्यर्थः अब्भक्षोवायुभक्षश्च इतिवत् सिद्धशब्दस्यावधारण गर्भत्वात् सिद्धशब्दो नित्यपरत्वेन हि व्याख्यातः तद्वत्, अनेन नित्यशुद्धत्वेन सकलचेतनव्यावृत्तिः, नित्यसिद्धानामपि नित्यशुद्धत्वस्य भगवन्नित्येच्छायत्तत्वात् महाविभूत्याख्ये विभूतिभूतस्य महाविभूतिमत्त्वायोगात् उभयविभूतिशेषित्वं समस्तचेतनव्यावर्तकं, परे ब्रह्मणीत्यनेन च चेतनव्यावृत्तिः सिद्धा, अपरात्मा हि केवलब्रह्मशब्देनोक्तः, अत्राशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विजेति उत्तरत्र तु परमब्रह्मभूतस्येति हि परमात्मा वक्ष्यते प्रदेशान्तरे ऽपि परब्रह्मशब्दः परमात्मपर एव दृश्यते अतोऽपरमात्मव्यावृत्त्यर्थे महाविभूत्याख्ये परे ब्रह्मणीत्युक्तं, सर्वकारणकारणत्वं च भगवत एव जगद्व्यापारविरहितो हि मुक्तात्मा एव मुक्तप्रवृत्तिनिमित्तपौष्कल्यात् सर्वेश्वरे एव भगवच्छब्दो मुख्यवृत्तः नान्यत्रेत्यर्थः। इममर्थं विवृण्वन्नवयवशः समुदायशश्च भगवच्छब्दार्थमाह—

मू० संभर्त्तेति तथा भर्त्ता भकारोऽर्थद्वयान्वितः नेता गमयिता स्रष्टा गकारार्थस्तथा मुने?

टी० "संभर्तेत्यादिना, शुद्धत्वं विना हेयैरिति विवृतं, भोग्यसंयद्राचक्रैश्वर्यस्येति श्लोकस्यश्रीशब्देन भोगविभूतेः संभरणाद्युक्त्या लीलाविभूतेश्च दर्शितत्वात् महाविभूतित्वं विवृतम्। अतएव ज्ञानशक्त्यादिभिश्च सर्वकारणकारणत्वं चोपरि स्पष्टम् अत एव ज्ञानशक्त्यादिभिश्च निरति-

शयबृहत्वात्परब्रह्मत्वं स्फुटम् अत उत्तरग्रन्थानां शुद्ध इत्यादिश्लोक-विवरणरूपत्वं युक्तं भश्च गश्च वश्चेति विभज्यार्थ उच्यते एतेषां पदानां तत्तद्धातुष्वन्येष्वपि दृश्यत इति डप्रत्यये टिलोपे च कृते एवं रूपं भवतीति भार्थमाह समित्यर्द्धेन संभर्ता संभरणमुपकरणसंविधानं प्रकृतिपुरुषकालान् कार्योत्पत्तियोग्यान् करोतीत्यर्थः महदादिसृष्टिरण्डरूपकार्योत्पत्त्युपयुक्ता संभरणमिति वा विवक्षा भर्त्ता स्वामी धारणस्य वकारवाच्यत्वात्पोषक-त्वस्य गकारवाच्यनेतृत्वान्तर्भावादपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च स्वामित्वमिह विवक्षितं यद्यपि प्रत्ययविशेषयुक्तस्य भरतेः स्वामिनि रूढत्वं तथाऽपि पूर्वोक्तयुक्तिसचिवार्षवचनबलाद्धातुमात्रस्य स्वामिवा-चित्वन्निश्चीयते इतिकरणेन संभर्तृत्वभर्तृत्वे प्रवृत्तिनिमित्ते निष्कृष्योच्येते अत एवार्थद्वयान्वित इत्युक्तम् । उत्तरत्र तु प्रवृत्तिनिमित्तत्रये सत्यपि इतिकरणेन तेषामनिष्कृष्टत्वात्प्रवृत्तिनिमित्तत्रयविशिष्टो धर्म्येक एवार्थ उक्तः । गकारार्थमाह "नेते"ति, उपसर्गस्फुटीकृतानामर्थानां धातुलीन-त्वादुद्गमयिता गमयिता सङ्गमयितेत्येवंरूपपदानामर्थमाह "नेते"ति, स्रष्टेत्यनेन उद्गमयितृशब्दार्थ उक्तः नेतेति गमयितृशब्दार्थउक्तः स्थिति-कर्त्तेत्यर्थः गमयितेति सङ्गमयितृशब्दार्थ उक्तः स च संहारः यथा यस्मि-न्निदं सञ्चविचैति सर्वमित्यत्र वेति समेतेतीति सर्गसंहारावुच्येते तद्वत् । यद्वा कारणभूतं स्वात्मानं गमयिता स्वस्मिन् कार्यवर्गस्य लयकर्तेत्यर्थः उपसर्गाप्रयोगेऽपि अर्थानां धातुलीनत्वादेवं व्याख्यातं भगवता पराशरेण । अथ वकारव्याख्यानात्पूर्वमेव भकारगकारसमुदायस्यार्थमाह—

मू० ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ज्ञानवैराग्ययो-श्चैव षण्णां भग इतीरणा वसन्ति तत्र भूतानि भूतात्मन्य-खिलात्मनि स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।

टी० "ऐश्वर्यस्ये"ति, समग्र—शब्दः सर्वत्रान्वेति परिच्छिन्नचतुर्मुखा-

द्वैश्वर्यव्यावृत्त्यर्थः समग्रशब्दः यशो—गुणवत्ताप्रथा श्रीर्भाग्य[1]संपत् वैराग्यं विरक्तिः परिपूर्णत्वादनादरतेत्यर्थः यथा अवाक्यनादर इति मतुप् प्रत्ययस्य प्रसिद्धार्थत्वाद् न तद् व्याख्यातम्। अथ वकारार्थमाह "वसन्ती"ति, "अन्येष्वपि दृश्यत" इति डप्रत्ययस्यानेकार्थत्वादधिकरणे कर्तरि च व्युत्पत्तिः, भूतात्मनि—भूतानामात्मनि अखिलात्मनि अखिलशरीरके। यद्वा भूतशब्देन कार्यजातमुच्यते तस्यात्मनि अखिलात्मनि कार्यान्तर्भूतानान्नित्यमुक्तानामात्मनीत्यर्थः। अथ समुदायशक्तिविषयमर्थमाह "ज्ञानशक्ती"ति, पाठक्रमे त्वेवमेष इत्यादिश्लोकद्वयानन्तरं ज्ञानशक्तिबलैश्वर्येत्यादिश्लोकः पठ्यते तथाऽपि प्रवृत्तिनिमित्तवाचित्वसंगतिवशादेवमेष इत्यादिश्लोकद्वयात्पूर्वं ज्ञानशक्तीत्यादिश्लोक इहोपात्तः, उत्पत्तिं प्रलयं चैवेत्यादिश्लोकस्य प्रस्तुतानुपयुक्तत्वात् च एवमुपादानं कृतं भगवच्छब्दवाच्यानि—प्रवृत्तिनिमित्तत्वेन वाच्यानीत्यर्थः, अशेषतः—न प्रत्येकं प्रवृत्तिनिमित्तान्यपि तु समुच्चित्येत्यर्थः अशेषशब्देन षाड्गुण्यावान्तरभिदारूपं शीलादिगुणजातं च क्रोडीकृतं, यद्यप्यैश्वर्यवीर्यज्ञानानि पूर्वं कण्ठोक्तानि तथाऽपि कतिपयसमुदाय्यावायोद्वापप्रयुक्तसमुदायभेदादपुनरुक्तिः। न चात्र समुदायशक्तिः कल्प्यते येनानुक्तगुणमात्रगोचरता स्यात् वचनबलादेव शक्तिस्वीकारः, पूर्वमक्षरार्थकथनेन भकारगकारवकारा व्याख्याताः। अथ अचित्यस्यार्थमाह—

मू० भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः एवमेष महाशब्दो मैत्रेय? भगवानिति परमब्रह्मभूतस्य वासुदेवस्य नान्यगः। तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः

टी० "विने"ति, कश्यपः पश्यको भवतीति न्यायात् अचित्यनेन नेत्युक्तं भवति निषेध्यं च हेयमित्यर्थः। एवं प्रवृत्तिनिमित्तपौष्कल्याद्भगवत्येव मुख्यवृत्तत्वमाह "एवमि"ति, महार्थगर्भत्वान्महाशब्दत्वं मुक्तात्मव्या-

[1] भोग्यसंपदिति पाठः।

वृत्त्यर्थं परमब्रह्मेत्युक्तं, कथं तत्रैव मुख्यवृत्तत्वमन्यत्रापि तत्प्रयोगो दृश्यत इत्यत्राह "तत्रे"ति, तत्र पूज्यपदार्थोक्तिः—पूज्यानामवयवार्थानामुक्तिः परिभाषा—रूढिः ताभ्यां विशिष्टः, अत एव नोपचारेण मुख्य इत्यर्थः । अन्यत्रामुख्यत्वमित्याह "अन्यत्र ही"ति, मुक्तात्मन्यौपचारिकत्वोक्त्या अर्थान्तरप्रयोगेषु औपचारिकत्वमर्थाद्दर्शितमिति हि—शब्दाभिप्रायः, भगवच्छब्दप्रयोगविषयेषु सर्वेषु प्रयोगेऽन्यथासिद्धेऽपि न हि शक्तिभेदकल्पनं युक्तं यत्र ज्ञानादयोनिरङ्कुशाः स एव मुख्यार्थः, गुणलेशयोगादपि प्रयोगसंभवादन्यत्र वृत्तिरौपचारिकीत्यर्थः । अथ तस्मिन्नेव योगप्रकरणे उपसंहारेऽपि सविशेषपरवाक्यानि दर्शयन् दिव्यविग्रहत्वं चाह—

मू० समस्ताः शक्तयश्चैता नृप ? यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ? ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥

टी० "समस्ता" इति, बद्धा मुक्ताः कर्मरूपाविद्या च शक्तयस्तत्तदभिमानिदेवताद्वारेण तत्र तासां प्रतिष्ठितत्वं यत्रेत्यनुवादस्य पुरोवादसापेक्षत्वात् अस्त्रभूषणाध्याये यथोक्तप्रकारेण पुरोवादाच्च तद्विश्वरूपवैरूप्यमिति सन्निवेशवैलक्षण्यमुक्तम्, अन्यदिति द्रव्यान्तरत्वमुक्तं, महदित्यपरिच्छेद्यत्वं, विलक्षणसन्निवेशस्य सकलेतरविजातीयस्य कथं चिन्तयितुं शक्यत्वमित्यत्राह 'समस्ते''ति, केन हेतुनेत्यत्राह "स्वलीलये''ति, लीलायाः प्रयोजनत्वात्तदभिसंधिर्हेतुः, न तु कर्मणेत्यर्थः। किं प्रयोजनमित्यत्राह "जगता''मिति, न तु स्वकर्मफलभोगायेत्यर्थः। एतद्विवृणोति "न से''ति, व्यापिनी—देशनियमरहिता, यथा वैदिकपुत्रानयनादिषु । व्यापनशक्तत्वेऽपि प्रतिसंबन्धः संभवतीत्यत्राह "अव्याहतात्मिका'' न तस्याः प्रतिहतिरस्ती-

त्यर्थः । यद्वा व्यापिनी–सर्वावतारानुगुणा अव्याहता–देशकालवस्तुप्रकृतप्रतिबन्धरहिता, एवं प्रत्यस्तमितेति श्लोकस्य परमात्मपरत्वाभ्युपगमेऽपि निर्विशेषपरत्वनिराचिकीर्षयोपक्रमोपसंहारयोस्तस्मिन्नेव प्रकरणे सविशेषपरत्वं दर्शितम् । अथास्य श्लोकस्य परिशुद्धजीवात्मस्वरूपविषयत्वं प्रत्यस्तमितभेदादिपदानां कतिपयविषयत्वं च विवक्षुस्तदर्थं परमात्मविषयभेदनिषेधादीनां कतिपयविषयत्वाभिधायीनि वाक्यानि दर्शयिष्यन् तत्र परमात्मविषयकतिपयभेदनिषेधपरवचनोदाहरणेन मुक्तात्मविषये किमायातमिति शङ्कायां मुक्तस्य परमात्मसाम्यप्रतिपत्तये मुक्तगुणान् परमात्मन्यतिदिशन्तं श्लोकं दर्शयति–

भा० एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्णवाख्यं परमं पदम् ॥

टी० "एवंप्रकार"मिति, एतच्छ्लोकोदाहरणेन प्रत्यस्तमितेत्यादिश्लोकानन्तरं पूर्वपक्षे पठितस्य ज्ञानस्वरूपमित्यादेः प्रथमांशोपक्रमश्लोकस्य चतुःश्लोक्याश्च सविशेषपरत्वप्रतिपादनाय प्रथमांशोपसंहारेऽपि सविशेषपरत्वं दर्शितं भवति, उपसंहारवचनोपादानमुपसंहारस्य बुद्धिस्थत्वात् क्रियते, एवंप्रकारं मुक्तात्मानं प्रति निर्व्यापारमनाख्येयमित्यादिना यः प्रकार उक्तस्तदुपेतमित्यर्थः । एवं भगवति मुक्तात्मगुणातिदेशः कृतः, भेदराहित्यस्य–सत्तामात्रत्वस्य वचसामगोचरत्वस्य च मुक्तगुणस्य निर्व्यापारमित्यादिनोक्तस्य भगवत्यतिदिष्टत्वाद्भगवति च तेषाञ्चिषेधानां कतिपयविषयत्वस्य प्रामाणिकत्वाच्च ते निषेधा मुक्तात्मन्यपि तथाविधा इति कतिपयविषयत्वं सिद्धमिति भावः । अथ परमात्मनोऽधिकान् गुणानाह "अमलं"–मलप्रतिभटं सोपाधिकहेयविरोधिनमित्यर्थः । नित्यम्–उक्तप्रकारेण नित्यम्, मलप्रतिभटत्वं नित्यमित्यर्थः । व्यापकं–स्वरूपेण व्यापकम् । अक्षयं स्वत एव धर्मतोऽपि विकाररहितं, मुक्तस्य हि पूर्वावस्थायां ज्ञानसंकोचविकासविकारो विद्यते नित्यसिद्धानामपि तथात्वं परायत्तमिति तद्व्यवच्छेदः समस्तहेयरहितं पूर्वं हेयप्रत्यनीकत्वमुक्तमत्र हेयराहित्यमुक्तं स्वतोहेयाभा-

वोऽपि मुक्तस्य नास्ति परमात्मप्रसादाधीनत्वात्तस्य, पद्यत इति पदं दिव्यात्मस्वरूपं परमपदशब्दस्य दिव्यलोके मुक्तात्मनि च प्रयोगात्तद्व्यावृत्त्यर्थं विष्णवाख्यमित्युक्तम् । अथ प्रथमांशोपक्रमेऽपि सविशेषपरत्वं दर्शयति—

मू॰ परः पराणां परमः परमात्मात्मसंस्थितः

टी॰ "परः पराणा"मिति, अनेन शास्त्रोपक्रमस्यापि सविशेषपरत्वमुक्तं भवति, अनेन प्रत्यस्तमितभेदमित्यादि पदानां कतिपयभेदनिषेधपरत्वं च सिद्धमिति त्रिविधं प्रयोजनम्, अनेन परः पराणामित्यादिग्रन्थजातस्य अविकारायेत्यादिसंग्रहश्लोकविवरणरूपत्वात् ज्ञानस्वरूपमित्यादिश्लोकं प्रत्युपक्रमत्वमर्थक्रमेण सिद्धमिति तस्यापि सविशेषपरत्वसिद्धिः। यद्वा प्रथमांशोपक्रमोपसंहारयोस्सविशेषपरत्वादुपक्रमोपक्रमभूतस्यापि ज्ञानस्वरूपमिति श्लोकस्य महावाक्यस्वारस्यविरोधो न न्याय्य इति तस्यापि सविशेषपरत्वं सिध्यति । यद्वा नमस्कारश्लोकस्य शास्त्रोपक्रमशेषभूतत्वात्तच्छेषभूतस्तदनुगुणार्थो वर्णनीय इति सिध्यति, उपक्रमोपक्रमभूतनमस्कारश्लोकार्थानुगुणं परः पराणामित्यादेरर्थो वर्णनीय इति चेत् न तस्याप्युपक्रमभूतप्रश्नोत्तरवरलाभकथनश्लोकानुगुणं तदर्थस्य वाच्यत्वादित्यभिप्रायः । अत्र ब्रह्मणः कृत्स्नजगत्कारणत्वसिद्ध्यर्थं वेदान्तेषु सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिभिरानन्त्यमुक्तं तच्च त्रिविधपरिच्छेदराहित्यं, न हि देशकालादिभिः परिच्छिन्नानां घटादीनां कृत्स्नस्य सर्वविधकारणत्वं दृष्टं कालत्रयवर्तिकार्यजातकारणत्वे सर्वदेशगतकार्यकारणत्वे च देशतः कालतोऽप्यपरिच्छेदावपेक्षितौ, उपादानत्वसिद्धौ वस्त्वपरिच्छेदोऽपेक्षितः, न हि वस्तुतः परिच्छिन्नः कुलाल उपादानं भवति मृत्पिण्डकुलालयोः सामानाधिकरण्यासंभवात्, अतः कृत्स्नकारणत्वसिद्ध्यर्थं त्रिविधपरिच्छेदराहित्यं विस्तरेण विवक्षुः परः पराणामित्यर्धेन तत् संग्रहेण प्रतिजानीते "परः पराणां परम" इति, अनेन कालानवच्छेदः सिद्धः, अधिककालवर्तित्वस्य परशब्दवाच्यत्वात्, परमात्मेति देशापरिच्छेद उक्तः, आप्नोतीति ह्यात्मशब्दव्युत्पत्तिः आत्मसंस्थितः—सर्वेषामात्मत्वेन सर्ववस्तुभिर्विशिष्टः । यद्वा आत्मत्वेन सं

स्थिततया सर्वशरीरकत्वात्स्वस्मिन्पर्यवस्थितः, स्वनिष्ठः अन्यत्सर्वं तन्निष्ठं शरीरतया विशेषणत्वात्, अतः सर्वपर्यवसानभूमिः, स्वनिष्ठ इति वस्त्वपरिच्छेद उक्तः, सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः इदमिदं न भवतीति हि वस्तुपरिच्छेदः । यद्वा नित्यत्वविभुत्वव्यतिरिक्तगुणैस्समानाभ्यधिकराहित्यं वस्त्वपरिच्छेदः, स्वनिष्ठं परमात्मानमपेक्ष्य तन्निष्ठानामन्येषां समत्वाभ्यधिकत्वासंभवादात्मसंस्थित इत्यनेन वस्त्वपरिच्छेदसिद्धिः । एवं संक्षिप्तमर्थमुपपादयति रूपेत्यादिना, तत्र कालापरिच्छेदं प्रथमं विवक्षुः कालपरिच्छिन्नेषु विद्यमानं पञ्चकल्पनाऽन्वितत्वं ब्रह्मणि नास्तीत्याह—

मू० रूपवर्णादिनिर्देशविशेषणविवर्जितः । अपक्षयविनाशाभ्यां
परिणामर्द्धिजन्मभिः वर्जितः शक्यते वक्तुं यः सदाऽस्तीति
केवलम् ।

टी० "रूपे"ति, रूप–शब्देन जातिरुच्यते "जातिगुणौ च रूपिणां रूपे" इति हि नीतिविदः, वर्णशब्दो रूपाख्यगुणविशेषपरः, आदि–शब्देन गन्धरसादिः, आसनशयनादिक्रिया विषाणाद्यवयववत्त्वं च विवक्षितं, रूपवर्णादीति पाठे रूप–शब्दो नीलपीतत्वादिगुणपरः, वर्णशब्दो देवमनुष्यादिवर्गपरः, जातिपर इत्यर्थः तन्निबन्धनस्तद्विषयो निर्देशः शब्दः शब्दवाच्यास्त एव विशेषणं तैर्विवर्जितः । यद्वा रूपवर्णादितद्वाचिशब्दरूपैर्विशेषणैर्विवर्जितः एवमनित्यत्वव्यापकं कर्मकृतं रूपादिमत्त्वं ब्रह्मणि नास्तीति कर्मकृतरूपादिनिवृत्त्या तद्व्याप्यकालपरिच्छेदनिवृत्तिरित्यर्थः । यद्वा अनित्यत्वव्यापककर्मकृतरूपाद्यभावाच्चानित्यत्वं ब्रह्मण्यनुमातुं शक्यमित्यर्थः, अनेन प्रत्यस्तमितभेदमित्यस्य पदस्य विषयो दर्शितः । अथानित्यत्वव्यापकत्वाद्विकाराणामनित्यत्वनिवृत्तये तद्व्यापकविकारराहित्यमाह "अपक्षये"ति, जायते अस्तीत्यवस्थाद्वयं जन्म–शब्देन विवक्षितम् उत्पत्तिस्थितिनाशानामेकैकत्र विधाद्वयेन विकारषट्कसिद्धिः तद्विवर्जितत्वात्सदाऽस्तीति च शक्यते सदाशब्देन कादाचित्कत्वव्यावृत्तिः न तूत्पद्यत इत्यादिशब्दैरिति केवलशब्दाभिप्रायः, अनेन सत्तामात्रमित्यस्य विषयो दर्शितः, अगोचरं

वचसामित्यस्य च विषयोदर्शितो भवति रूपवर्णादिप्रवृत्तिनिमित्ताभावा-दुत्पत्त्यादिप्रवृत्तिनिमित्ताभावाच्च कल्पनाविकारवाचिशब्दैर्न वक्तुं शक्य इति तस्य पदस्यार्थ इत्यभिप्रायः, अगोचरं वचसामिति सर्वशब्दागोचर-त्वमुच्यते चेत् वचसामगोचरं सत्तामात्रमित्यपि वक्तुं न शक्यते । अथ देशापरिच्छेदन्नामनिर्वचनमुखेनाह—

सू० सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासु-देवेति विद्वद्भिः परिपठ्यते ॥ तद् ब्रह्म परमं नित्यमजक्ष-रमव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥

टी० "सर्वत्र" इति, ब्रह्मण ईश्वरातिरिक्तत्वनिषेधार्थं देवतान्तर-व्युदासार्थं च नामनिर्वचनमुखेन तदुक्तिः, औणादिकप्रत्ययस्यानेकार्थत्वा-दधिकरणे कर्तरि च व्युत्पत्तिर्वासुदेवशब्दस्योच्यते "सर्वत्रे"ति, वेदान्तेषु परब्रह्मणो हि निर्विकारत्वादिकमुक्तं तत्कथं वासुदेवस्योच्यते इत्यत्राह "तद्-ब्रह्मे"ति, शैत्यं हि यत्सा प्रकृतिर्जलस्येतिवत् तदिति निर्देशः, निर्दिश्य-मानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लि-ङ्गमुपाददत इति हि शाब्दाः, नित्यमिति कार्यमात्रव्यावृत्तिः । अजमक्षरम-व्ययम् । एकस्वरूपमिति सविकारनित्यप्रधानव्यावृत्तिः एकस्वरूपशब्देन वृद्धिपरिणामराहित्यं विवक्षितं, हेयाभावाच्च निर्मलमिति बद्धव्यावृत्तिः सदैवेति मुक्तव्यावृत्तिः, परममिति नित्यसिद्धव्यावृत्तिः । यद्वा एकरूपमिति बद्धव्यावृत्तिः सदेत्यादिना मुक्तव्यावृत्तिरिति, एवं स्वव्यतिरिक्तसमस्तवस्तु-विलक्षणत्वेनोपनिषत्सूक्तं ब्रह्म वासुदेव एवेत्यर्थः त्रिविधापरिच्छेदवाचिनी श्रुतिरपि देवताविशेषविषयेति, अनन्तमिति अनन्तशब्दो योगरूढः अतो नारायणादिशब्दपर्यायस्त्रिविधाऽनन्त्ययोगिनि भगवति मुख्ये वर्तते सत्यज्ञानादिवाक्ये ऽनन्तमिति पदं पुंल्लिङ्गं द्वितीयान्तं योवेदेति वेद-नशब्देनान्वयात् प्रथमान्तत्वे तद्योवेदेति तत्पदाध्याहारः स्यात् वाक्यभे-दश्च स्यात् अतस्तत्र यथोक्त एवार्थः, तस्मात्तदनुसारेणात्रापि अपरिच्छेद-कथनसमये देवताविशेषो निर्णीतः । वस्त्वपरिच्छेदमाह—

मू० तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् तथा पुरुषरूपेण काल-रूपेण च स्थितम् प्रकृतिर्या मया ख्याता व्यक्ताव्यक्त-स्वरूपिणी पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि परमात्मा च सर्वेषामाधारः परमेश्वरः विष्णुनामा स वेदेषु वेदान्तेषु च गीयते द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्त्तमेव च

टी० "तदेवे"ति, सर्वमेवैतदिति व्यक्ताव्यक्तपुरुषकालसमुदाय उच्यते व्यक्ताव्यक्तादिस्वरूपमेतत् सर्वं तद् ब्रह्मेत्यर्थः, अनेन वस्त्वपरिच्छेद उक्तः, सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः सर्ववस्तुसामानाधिकरण्यार्हत्वेनैव चिदचिच्छब्दवाच्यैकत्वहेतुभूतव्यापनभरणादिगुणतः समाभ्यधिकराहित्यसिद्धेश्च वस्त्वपरिच्छेदसिद्धिः, न हि ब्रह्मव्यतिरिक्तस्य कस्यचित् समस्तचिदचिच्छरीरकत्वसंभव, एवं शास्त्रोपक्रमे वासुदेवाख्यमुभयलिङ्गकं वस्तु प्रतिपाद्यमुक्तं, शास्त्रोपसंहारे च तथोक्तमिदं दर्शयति "प्रकृतिर्ये"ति, परमात्म–शब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनात्तद्व्यावृत्त्यर्थं साक्षात्परमात्मलक्षणं जगत्कारणत्वमुक्तं "लीयेते परमात्मनी"ति, स चेश्वरानतिरिक्त इति ज्ञापनार्थः परमेश्वर–शब्दः, ईश्वरश्च न देवताऽन्तरमिति ज्ञापनाय विष्णुनामेत्युक्तम्, अत्र परमात्मा आधारः परमेश्वर इति पदैः शरीरिलक्षणं स्पष्टम्, एवं शास्त्रोपक्रमोपसंहारयोरवान्तरप्रकरणोपक्रमोपसंहारयोश्च हेयप्रत्यनीकत्वकल्याणगुणाश्रयनारायण एव परं ब्रह्मेति प्रतिपाद्यते इति दर्शितम् । अथाविद्यासंबन्धादयश्च ब्रह्मण एव हि प्रतिपाद्यन्ते तत्कथं यथोक्तस्वरूपस्य ब्रह्मण उपपद्यत इति शङ्कायां काठिन्यवान् यो बिभर्तीतिवद्द्वारद्वारिभावेनोपपद्यत इति वक्तुं परमात्मनो जीवानां चात्मशरीरिभावेन संबन्धं तेषामविद्यासंबन्धादिकं च वदन् प्रथमं जीवब्रह्मणोः शरीरशरीरिभावरूपसंबन्धं दर्शयति "द्वे रूपे" इत्यादिना, मूर्तं चामूर्त्तमेव चेति बद्धश्च मुक्तश्चेत्यर्थः, एतद्विवृणोति–

मू० क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ।
अक्षरं तत्परं ब्रह्म क्षरः सर्वमिदं जगत् ॥
एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ।
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥

टी० "क्षराक्षरस्वरूपे" इति, ज्ञानसंकोचात्मकक्षरणवदसंकुचितज्ञानं चेत्यर्थः, सर्वभूतेषु च स्थिते–अर्हार्थे क्तः सर्वभूतस्थित्यर्हे सूक्ष्मतरतया व्यापनक्षमे इत्यर्थः । यद्वा बद्धस्य स्वरूपेण सर्वभूतस्थितिः, मुक्तस्य तु धर्मभूतेन विभुज्ञानद्वारेणेति अक्षरं तत्परं ब्रह्मेति तन्मुक्तस्वरूपम् अक्षरं क्षरं सर्वमिदं जगत् इदं बद्धस्य स्वरूपं क्षरमित्यर्थः, रूपत्वं विशिनष्टि "एकदेशे"ति, शक्तिरपृथग्भूतं कार्योपयोगिविशेषणम्, एकदेशस्थितस्य विस्तारिणीति विशेषणद्वयेनासंकीर्णस्वभावत्वमुक्तम्, अस्मिन् श्लोके अखिलं जगदिति चिदचिदात्मकं जगदुच्यते तुल्यन्यायत्वादक्षरस्यापि शक्तित्वसिद्धिः । यद्वा अखिलजगच्छब्देनाक्षरस्यापि क्रोडीकारः, त्रिपाद्विभूतेरपि लोकशब्दवाच्यत्वात्तत्समानार्थत्वाज्जगच्छब्दस्य अखिलशब्दस्य सङ्कोचकाभावाच्च सर्वः क्षरमित्यत्र क्षरसामानाधिकरण्यमपवादः इह तदभावादक्षरस्याप्यभिधानमुपपद्यते इदं–शब्दस्याखिलशब्दस्य च प्रकृतवाचित्वात् क्षराक्षरपरत्वं युज्यते

ननु अत्र क्षराक्ष[1]रशब्दौ कार्यकारणरूपेणावस्थितपरब्रह्मपरौ परब्रह्मशब्दमुख्यार्थत्वासिद्धेः, अन्यथा ब्रह्मशब्दानामेकप्रकरणस्थानामर्थवैरूप्यं च स्यात् जगतोज्योत्स्नास्थानीयत्वं चोपपद्यते प्रभाया विशीर्णावयवत्वेनाग्निकार्यत्वापत्तेः, नैवं, ब्रह्मणो रूपे इति व्यतिरेकनिर्देशस्वारस्यभङ्गप्रसङ्गात्, स च कार्यकारणयोर्ब्रह्मव्यतिरिक्तत्वाभावात्, यदि षष्ठीस्वारस्याय मूर्तत्वामूर्तत्वे विवक्षिते तदा मूर्तामूर्तशब्दस्वारस्यभङ्गः भावप्रधानत्वाविवक्षायां रूपशब्दसामानाधिकरण्यायोगः, यद्युच्येत ब्रह्मणो द्वे रूपे, ब्रह्म हि मूर्तममूर्त्तं चेति तदा प्रथमान्तब्रह्मशब्दाध्याहारदोषः स्यात् षष्ठ्यन्तस्य

१ अक्षरक्षरशब्दौ इति पाठान्तरम् ।

ब्रह्मशब्दस्य मूर्तामूर्तपदसामानाधिकरण्यायोगात् । किंच सर्वभूतेषु च स्थिते इति चानुपपन्नं सर्वभूतशब्दस्य कार्यवाचितया तत्र कार्यस्थितावुच्यमानायां स्वस्मिन् स्ववृत्तिप्रसङ्गात् कारणस्यापि कार्यादन्यतया स्ववृत्तिप्रसङ्गाच्च अवस्थाद्वयस्य सर्वभूतस्थितिरिति च न वाच्यं धर्मिपर्यन्तक्षराक्षरशब्दसामानाधिकरण्यायोगात् तयोरप्यवस्थापरत्वे स्वारस्यभङ्गात्, अवस्थावद्वाचिजगच्छब्दब्रह्मशब्दसामानाधिकरण्यायोगाच्च, तस्मिन् सोढेऽपि कारणत्वावस्थायाः कार्ये विद्यमानत्वायोगाच्च शक्तिशब्दस्य कार्यवाचित्वायोगाच्च श्लोकस्य नायमर्थः, उपचारेणाऽपि कार्योपयोगिविशेषणं हि शक्तिशब्देन व्यपदेशमर्हति कार्योपयोगिविशेषणत्वस्य साम्यात् शक्तिर्हि शक्तं प्रत्यपृथग्भूतं कार्योपयोगिविशेषणं, कार्यं तु न कारणस्यापृथग्भूतं विशेषणं कार्योपयोगि च भवति कार्यकारणयोरनन्यत्वात्स्वस्य स्वयमेव विशेषणत्वायोगात्, कार्यत्वं विशेषणमिति चेत् सत्यं, तथाऽपि धर्मिवाचिनो जगच्छब्दस्य कार्यतावाचित्वाभावात् शक्तिशब्दसामानाधिकरण्यमुपचारतोऽपि नोपपद्यते कार्योपयोग्यपृथग्भूतविशेषणं शक्तिरिति मुख्यत्वमस्मन्मते संभवेत् क्षरशब्दस्य कार्यपरत्वे दृष्टान्तवैघट्यं च स्यात्, तच्च ज्योत्स्नायां विशीर्णावयवत्वाभावेनाग्निकार्यत्वाभावात्

न च "क्षरं प्रधानममृताक्षरं हर" इति प्रयोगानुसारेण चेतनाचेतनपरत्वं युक्तम् । अचिदंशस्य स्वस्मिन् स्वप्रवृत्तिप्रसङ्गेन सर्वभूतस्थित्यनुपपत्तेः, चिदचित्संघातरूपेषु भूतेषु द्वयोरवस्थानमुपपन्नमिति चेत् न समुदायिनोः समुदायनिष्ठत्वानुपपत्तेः समुदायो हि समुदायिनिष्ठः उपरितनग्रन्थवैरूप्यं च स्यात्, उत्तरत्र हि "भूप? मूर्तममूर्तं चे"ति मूर्तामूर्तशब्दाभ्यां रूपद्वयं प्रस्तुत्य हिरण्यगर्भादीन् निर्दिश्य "मूर्तमेतद्धरेरूपं भावनात्रितयान्वित"मिति मूर्तशब्दवाच्यरूपस्य भावनात्रयान्वयकथनात्, न ह्यचेतनस्य कर्मब्रह्मभावनान्वयः "सोऽक्षरः परमः स्वरा"डित्यत्र ह्येन्द्रादिबद्धविलक्षणवाचित्वात्, स स्वराड् भवतीतिवन्मुक्तवाचिस्वराट्छब्दसामानाधिकरण्याच्च अक्षरशब्दो मुक्तात्मपरः अतस्तदनुरोधेनाक्षरशब्दोऽत्रापि मुक्तात्मपरः ब्रह्मशब्दार्थवैरूप्यं तु तपसा चीयते ब्रह्म तस्मादेतत् ब्रह्म नामरूपमन्नं

च जायते इति श्रुताविवानेकोपपत्तिबलादुच्यते अतो यथोक्त एवार्थः ब्रह्मणोऽविद्यासंबन्धद्वारभूते जीवात्मन्यविद्यान्वयं दर्शयति—

मू० विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।

अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते यया

क्षेत्रज्ञशक्तिः सा वेष्टिता नृप? सर्वगा संसारतापानखिलानवाप्नोत्यतिसंततान् तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता

सर्वभूतेषु भूपाल? तारतम्येन वर्त्तते। प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया

टी० विष्णुशक्तिरित्यादिना, सर्वगा—चतुर्म्मुखादिपिपीलिकान्तसर्वशरीरस्था जातावेकवचनम् । यद्वा धर्मभूतेन ज्ञानेन स्वतः सर्वं व्याप्तुं क्षमा कर्मणा वेष्टिता—कर्मणा संकुचितज्ञानेत्यर्थः, तर्हि सर्वे अज्ञाः स्युरित्यत्राह "तये"ति, कर्मतारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः सर्वेषां ज्ञाननित्यत्वस्य मुक्तौ सर्वविषयत्वस्य च प्रामाणिकत्वाद्बद्धावस्थायां संकोचविकासौ सिद्धौ तत्तारतम्यं च पुंसः शक्त्युपलक्षितः तच्छक्त्या पशवोऽधिका इति स्पष्टीकृतं, जातीनामप्यपृथक्सिद्धधर्मत्वेन रूपशब्दवाच्यत्वाच्च तद्वृत्त्यर्थं प्रस्तुतं रूपत्वन्नियाम्यत्वलक्षणमित्याह "प्रधानं चे"ति, चिदचितोः परमात्मनियाम्यत्वधार्यत्वव्याप्यत्वनित्यत्वादेः प्रमाणान्तरागोचरतया विहितत्वान्निषेध्यत्वमयुक्तमिति नियाम्यत्वादिधर्माणां पारमार्थ्येन तदाश्रयभूतयोश्चिदचितोश्च पारमार्थ्यान्नित्यत्वोक्त्या च तयोर्भ्रमविषयत्वासंभवश्च दर्शितो भवति, न हि धर्मिसत्यत्वेन विना धर्मसत्यत्वं युक्तं, नापि बाध्यस्य नित्यत्वं युक्तं, सर्वभूतात्मभूतया—सर्वभूतव्यापिकयेत्यर्थः ।

मू० विष्णुशक्त्या महाबुद्धे? वृतौ संश्रयधर्मिणौ ।

तयोः सैव पृथग्भावकारणं संश्रयस्य च ॥

यथा सक्तो [1]जले वातो बिभर्ति कणिकाशतम् ।
शक्तिः साऽपि तथा विष्णोः प्रधानपुरुषात्मनः ॥

टी० विष्णुशक्त्या विष्णोर्नियमनशक्त्या अन्यथा "शक्तिः साऽपि विष्णोरित्यनन्तरोक्तिविरोधात् तया वृत्तौ—व्याप्तौ नियमेनेन च धारणं श्रुतिसिद्धम् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत" इति हि श्रूयते बिभर्तीत्युक्तश्लोकसामञ्जस्यं संश्रयधर्मिणौ भगवदपृथक्स्थितिधर्मकौ पृथग्भाव उपकारोपकरणित्वलक्षणसंबन्धविशेषराहित्यं संहारः तत्र हि करणकलेवरं नास्ति, संश्रयः करकरणित्वेन संबन्धः सृष्टिरित्यर्थः । यद्वा संश्रयस्तयोः संबन्धः संसारः—पृथग्भावो मोक्षः तत्सर्वं भगवन्नियमनाधीनमित्यर्थः । अत्र दृष्टान्तमाह "यथे"ति, कारणात्कार्यस्य विभागे दृष्टान्तः जलस्य कणिकाः तस्माद्भेदेन बिभर्त्ति वायुः संयोजकत्ववियोजकत्वयोर्वा दृष्टान्तः परस्परं संकलिता असंकलिताश्च बिभर्त्ति हि वायुः । यद्वा प्रकृतिपुरुषगतदोषलेशराहित्ये दृष्टान्तः वायुर्हि कणिकाशतं तत्स्वभावास्पृष्टो बिभर्त्ति प्रधानपुरुषात्मनः प्रधानपुरुषयोरात्मनः समस्तचिदचिद्वस्तुजातमिति कर्माध्याहर्त्तव्यम् । यद्वा प्रधानशब्दानन्तरपुरुषशब्दो बद्धपरः, आत्मशब्दः प्रकृतिसंसर्गरहितमुक्तात्मपरः, एतान् बिभर्तीति एवंविधस्य जगतः परमार्थत्वमाह—

मू० तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थाऽवस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरी-

[1] यथा सक्तं जले वात इति पुस्तकान्तरपाठः ।

रतया रूपत्वं शरीररूपतन्वंशशक्तिविभूत्यादिशब्दैस्त-
च्छब्दसामानाधिकरण्येन चाभिधाय तद्विभूतिभूतस्य
चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेण
स्थितिं चोक्त्वा क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्मरूपा-
विद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसंधानमचिद्रू-
पार्थाकारतयाऽनुसन्धानं च प्रतिपादितमिति परं ब्रह्म
सविशेषं, तद्विभूतिभूतं च जगदपि पारमार्थिकमेवेति ज्ञायते

टी० "तदेतदि"ति, मिथ्या हि बाध्यत्वेनानित्यं पारमार्थ्ये सति हि नित्यत्वसंभवः । उदाहृतवचनार्थान् संक्षेपेणाह "इत्यादिने"ति, निरस्तनिखिलदोषत्वं कल्याणगुणात्मकत्वं च स सर्वभूतप्रकृतिं समस्तकल्याणेत्यादिश्लोकार्थः जगदुत्पत्त्यादिलीलत्वं भगवच्छब्दनिर्वचनसिद्धम्, अन्तःप्रवेशनियमनादीत्यादिशब्देनाध्याहृत्वानुमन्तृत्वे उच्येते । इत्यादिनेत्यादि-शब्देन क्रीडतो बालकस्येवेत्यादिवचनं विवक्षितं तदर्थो लीला-शब्देन विवक्षितः सर्वावस्थावस्थितस्य-कार्यकारणावस्थितस्य बद्धमुक्तावस्थितस्य चेत्यर्थः । प्रमाणान्तरगोचरस्यार्थस्य हि निषेधार्थं भ्रान्तिसिद्धत्वेनानुवादसंभवः परमात्मनियाम्यत्वादिकं तु प्रमाणान्तरागोचरत्वाद्विधित्सितमेवेति विहितस्य निषेधोऽनुपपन्नः इत्यभिप्रायेण पारमार्थिकस्यैवेत्युक्तं, नियन्तृत्वनियाम्यत्वादिप्रतिपादानसिद्धार्थः शरीरतया रूपत्वं "तदेव सर्वमेवैतदित्यत्र तच्छब्दसामानाधिकरण्य द्वे रूपे ब्रह्मणस्तस्येत्यादिनोक्तमर्थमाह "शरीररूप तन्वंशे"ति, चे"ति, प्रतिपादितमितीति एवं शास्त्रोपक्रमोपसंहारेष्ववान्तरप्रकरणोपक्रमोपसंहारेषु प्रतिपादितत्वादित्यर्थः, ज्ञायत इत्यन्तेनोक्तवचनार्थसंग्रहः कृतः उदाहृतवचनैर्वस्तुनः सविशेषत्वं जगतः सत्यं च स्थितम् । अथ परोदाहृतवचनानि पूर्वोदाहृतवचनार्थानुगुण्येन व्याचिख्यासुः प्रथमं प्रत्यस्तमितेत्यादि श्लोकं व्याचष्टे-

मू० प्रत्यस्तमितभेदमित्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरम् ॥

टी० "प्रत्यस्तमिते"ति, "दुःखाज्ञानमलाधर्माः प्रकृतेस्ते न चात्मन इति पुमान्, देवो न नरो न पशुर्न च पादपः शरीराकृतिभेदास्तु भूपैते कर्मयोनयः इत्यादिषु प्रकृतिर्देवादिशरीरं चोपाधित्वेन प्रतीयत इत्युभयविधवचनार्थं संघट्टयितुं "देवमनुष्यादिप्रकृतिपरिणामविशेषे"त्युक्तं, प्रकृतेरित्यत्र प्रकृतिशब्दनिर्देशः शरीरस्य प्रकृतिपरिणामरूपत्वादित्यभिप्रायः देवमनुष्यादीति शब्देन प्रतिषेध्यभेदस्य शरीरे विद्यमानता दर्शिता

टी० ननु मुक्तानामुपास्यत्वाभावादुपासकस्वरूपस्याचित्संसृष्टतया प्रत्यस्तमितभेदत्वायोगाच्च तादृक्त्वोपदेशायोगादस्य श्लोकस्यपरिशुद्धात्मविषयत्वानुपपत्तेः परमात्मविषयत्वं स्यादिति शङ्कापरिहाराय चोक्तं "देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्यापी"ति इदानीं संसृतो ऽपि स्वाभाविकाकारस्य तिरोहितस्य विद्यमानत्वादाविर्भविष्यतस्तस्य तथानुसंधानायोपदेश इति भावः। तस्यात्मपरदेहेषु सतोऽपीत्येतत् स्मारयितुं संसृष्टस्यापीत्युक्तम्, अपि विरोधे पातकिसंसर्गात्पातकित्वं भवति रुमासर्गात्पदार्थानां लवणत्वं भवति अतो विरोधस्तद्गतभेदरहितत्वेन भेदो रूपवर्णादिः, अनेन प्रत्यस्तमितभेदशब्दो व्याख्यातः प्रत्यस्तमितभेदशब्देन भेदस्यापुनरुदयविनाशोऽभिप्रेतः ततश्च प्रलयकालव्यावृत्तिः तद्भेदवाचिदेवादिशब्दागोचरम् इत्यनेनागोचरं वचसामिति पदं व्याख्यातम्।

मू० ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचर इत्युच्यत इत्यनेन न प्रपञ्चापलापः

टी० "ज्ञानसत्तैकलक्षण"मिति, ज्ञानपदं सत्तामात्रमिति च पदं व्याख्यातं सत्तैकलक्षणमित्यत्रैकशब्देन सत्तामात्रमिति पदगतमात्रजर्थं विवृण्वता जायतेऽस्तीत्यादिविकारा व्यावृत्ताः, सत्तामात्रमित्युक्ते केना-

कारेण सत्तेत्यपेक्षायां ज्ञानसत्तैकलक्षणमित्युक्तं ज्ञानत्वाकारेण सत्तेत्यर्थ-वचसामगोचरत्वे सत्ताव्याघातपरिहारार्थं न्यायवैशेषिकोक्तजडस्वरूपताव्यु-दासार्थं चात्मसंवेद्यमिति पदस्यार्थमाह "स्वसंवेद्यमि"ति, यद्वा अगोचरं वचसामित्यन्तैः पदैः कल्पनाविकाररहित्ये तद्वाविशब्दागोचरत्वे चोक्ते भे-दकधर्माभावात्कथं च स्वव्यावृत्तिग्रहणमिति शङ्कायामाह "आत्मसंवेद्य"-मिति, प्रत्यक्त्वेन भासमानत्वं स्वव्यावर्त्तकम् अन्ये हीदन्तया भासन्त इत्यर्थः ज्ञानपदं धर्मधर्मिणोरविशेषेणाजडत्वमाह धर्मभूतज्ञानस्य बृहत्तया परि-शुद्धात्मस्वरूपस्य ब्रह्मशब्दवाच्यत्वं, ब्रह्मणो हि प्रतिष्ठाहमित्यादिष्वेवो-पपद्यते योगयुक्—प्रक्रान्तयोगः एवं प्रकारममलमिति वचनेन परमात्मनि मुक्तस्वभावस्यातिदिष्टत्वेन मुक्तस्य परमात्मसाम्यप्रतिपत्तेः परमात्मनश्च अपक्षयविनाशाभ्यां रूपवर्णादिनिर्देशेत्यादिवचनैः कतिपयभेदराहित्यस्य षड्भावविकारराहित्यस्य च स्पष्टत्वात्तदाऽऽनुगुण्येनानतिविस्तरं श्लोको व्याख्यातः । अस्य श्लोकस्य मुक्तात्मविषयत्वं तस्य च प्रक्रान्तयोगस्या-गोचरत्वं च कथं ज्ञायत इत्यभिप्रायेणाह—

**सू० कथमिदमवगम्यत ? इति तदुच्यते अस्मिन् प्रकरणे संसा-रैकभेषजतया योगमभिधाय योगावयवान् प्रत्याहारपर्य-न्तांश्चाभिधाय धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य**

टी० "कथमिद"मिति, प्रकरणादेवावगम्यत इति परिहरति तदुच्यत इत्यादिना, अस्मिन् प्रकरणे नह्ययं मुक्तकश्लोकः अपि तु प्रबन्धस्थः, अतः पूर्वापरापरामृष्टः शब्दोऽन्यां कुरुते मतिमिति तत्परिहाराय पूर्वापरपरामर्शेनैवार्थो वक्तव्य इति भावः । संसारैकभेषजतया योगमभिधायेति एकश-ब्देन क्लेशानां च क्षयकरं योगादन्यन्न विद्यत इत्यस्यार्थोऽभिप्रेतः, वाक्यार्थ-ज्ञानमात्रस्यापवर्गोपायत्वनिरासश्च स्मा*रितः "योगावयवान् प्रत्याहारप-र्यन्तानि"ति प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये वशीकृते ततः कुर्या-त्स्थितं चेतः शुभाश्रयम्, इत्यादिवचनार्थः संक्षिप्तः

* स्फोरितः इति पाठान्तरम् ।

मू० ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्त्तामूर्त्तविभागेन प्रतिपाद्य तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितमचिद्विशिष्टं क्षेत्रज्ञं मूर्त्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा द्वितीयस्य कर्माख्याविद्याविरहिणो ऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्त्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसो ऽनालम्बनतया

टी० "परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेय"मिति विष्णुशक्तिः पर प्रोक्तेत्यत्र विष्णुरेव शक्तिर्ब्रह्मणा इति केचिद्वदन्ति तद्व्यावृत्तये विष्णोरिति व्यासः कृतः। परस्य ब्रह्मणः शक्तिः परब्रह्मभूतस्य वासुदेवस्य ततः स वासुदेवेति तद्ब्रह्म परमं नित्यं परमात्मा च सर्वेषां विष्णुनामा स वेदेषु वेदान्तेषु च परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितं शक्तिः साऽपि तथा विष्णोरित्यादिभिर्विष्णोरेव परब्रह्मत्वं जगतस्तच्छक्तित्वं तच्छक्तिनियाम्यत्वं चोक्तमिति तत्प्रतिपादकतत्तद्वचनविरोधात्तदयुक्तमित्यभिप्रायः। शक्तिशब्दाभिधेयम्—अपृथक्सिद्धविशेषणं हि शक्तिः, ब्रह्म च न कस्यचिद्विशेषणम् अतो विष्णोरेव शक्तिः स हि ब्रह्मशब्दवाच्य इत्यभिप्रायः, अत्र नारायणः परं ब्रह्म विष्णुस्तदाऽऽसीद्धरिरेव निष्कलः पतिं विश्वस्यात्मेश्वरं न तस्येशे कश्चन" "तत्तत्समश्चाभ्यधिकश्च दृश्यते" "यस्मात्परं नापरमस्ति किंचित्" "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य" इत्यादयः स्मृतयो ऽनुसंधेयाः शक्तित्रयाश्रयो दिव्यविग्रह उपास्यत्वेनोच्यते विष्णुरेव शक्तिश्चेत् कथं विष्णोर्विग्रहैकदेशो विष्णोरेवाश्रयः तदाश्रयभूतो विग्रहो न हि भूतो ब्रह्मणोऽस्तीतीदं च दूषणे फलितं "शक्तिशब्दाभिधेयं रूपद्वय"मिति, परापरसंज्ञस्यास्य रूपद्वयस्योत्तरत्र परापरशब्दसमानाधिकरणशक्तिशब्देन परामर्शात्परसंज्ञरूपगोचरः शक्तिशब्दोन परमात्मविषय इत्यभिप्रायः, तच्च विष्णोः परं रूपं विष्णुशक्तिः परा प्रोक्तेति ह्युच्यते भूप मूर्तं चेत्यादिवचनार्थमभिप्रेत्याह "मूर्त्तामूर्त्तविभागेने"ति, अविद्याकर्मसं-

ज्ञान्या तृतीयाशक्तिरिष्यत इत्यस्यार्थमाह "तृतीये"ति, तृतीयेति मूर्त्ता-मूर्त्तविभागेनेत्युक्तत्वात् मूर्त्ताख्यविभागमिति विभज्य निर्देशः कृतः, निष्पन्न-योगिध्येयतयेति न विध्यर्थे कृत्यप्रत्ययः, अपितु शक्यत्वाभिप्रायः, योगिध्येयं परं पदमित्यत्रापि स एवार्थः, निष्पन्नयोगिध्येयतया प्रक्रान्तयोगस्य ध्यातुमशक्यत्वं फलितम् ॥

मू० स्वतः शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य परशक्तिरूपमिदममूर्त्तमपरशक्तिरूपं क्षेत्रज्ञाख्यममूर्त्तं च परशक्तिरूपस्यात्मनः क्षेत्रज्ञताऽऽपत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम्-

"स्वतः शुद्धिविरहा"दिति, अत्र न शुद्धेरस्वाभाविकत्वमुच्यते अपि त्वौपाधिकदोषनिरासे स्वयमशक्तत्वेन भगवत्प्रसादसापेक्षत्वं विवक्षितं, शुभाश्रयत्वं प्रतिषिध्येति स्वतः शुद्धिविरहादित्येन शुभत्वं प्रतिषिद्धम्, अनालम्बनतयेत्यनेनाश्रयत्वं प्रतिषिद्धमिति शुभाश्रयत्वप्रतिषेधः, शुभत्वं हेयविरोधित्वं न तु हेयराहित्यमात्रं "चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशन"मित्युक्तत्वात् । शक्तित्रयाश्रयत्वकथनाय शक्तत्रयमनुवदति "परे"-ति, "अत्र समस्ताः शक्तयश्चैता" इति वचनार्थो विवक्षितः, एताः शक्तय इति बहुवचने सत्यपि समस्तपदं बहुव्यक्तिक्रोडीकारार्थं परशक्तिरेव परमात्मनोरूपमिति परशक्तिरूपं परशक्त्यात्मकं वा, एवमुत्तरत्रापि भगवदसाधारणमिति चतुर्मुखादिशरीरव्यावृत्तिः, भगवदधिष्ठितत्त्वेऽपि तत्तज्जीवविशेषाभिमानविषयत्वात्तेषां शरीराणाम् । श्रुतिमूलतां दर्शयति—

मू० "आदित्यवर्ण"मित्यादि वेदान्तसिद्धं मूर्त्तस्वरूपं शुभाश्रय इत्युक्तम्, अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयताऽनर्हतां वक्तुं प्रत्यस्तमितभेदं यदित्याद्युच्यते तथा हि "न तद्योगयुजा शक्यं नृप? चिन्तयितुं यतः । द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम् ॥ समस्ताः शक्तयश्चैता नृप?

यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यरूपमन्यद्धरेर्महदि''-ति च वदति

"आदित्ये''ति, मूर्तरूपमित्यनेन "मूर्ते भगवतो रूपे" इति वचनार्थ उक्तः, उक्तेष्वर्थेष्वयं श्लोकः किंविषय इत्यत्राह "अत्रे''ति, शुभाश्रयताऽनर्हत्वकथनार्थमुच्यते चेदन्यस्यास्यानर्हत्वकथनं वस्त्वन्तरस्य तदर्हत्वकथनं च द्रष्टव्यमित्यत्राह "तथा ही''ति, अस्मिन्नर्थद्वये वचनद्वयमुपादत्ते "न तद्वि''-ति, योगयुजा–प्रक्रान्तयोगेन, अनालम्बनत्वमनेन ग्रन्थेनोक्तं, स्वतः शुद्धिविरहश्च प्रकरणसिद्ध इहा[१]भिप्रेतः "अन्ये तु पुरुषव्याघ्र? चेतसो ये व्यपाश्रयाः। अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः'' इत्यादिना भगवद्व्यतिरिक्तानां हि शुद्धिविरह उक्तः, अन्यस्य रूपस्यार्हताकथनं चास्य रूपस्यानर्हत्वविवक्षासूचकमिति च–शब्दार्थः । अन्ये त्विति ग्रन्थेन कर्मसंबन्धलक्षणाशुद्धिकथनात्कर्मसंबन्धविनिर्मुक्तानामपि स्वतःशुद्धिविरहः सूचितः, तेषामपि शुभाश्रयपदस्यशुभशब्देन व्यवच्छेद्यत्वं स्पष्टयितुमाह–

सू० तथा चतुर्मुख[२]सनकादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयत्वाऽनर्हतामुक्त्वा बद्धानामेव पश्चाद्योगेनोद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतःशुद्धिविरहात् भगवता शौनकेन शुभाश्रयता निषिद्धा

सू० आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्त्तिनः ॥
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः ।
अविद्याऽन्तर्गताः सर्वे ते हि संसारगोचराः ॥

१ इत्यभिप्रेत इति पाठान्तरम् ।

२ चतुर्मुखसनन्दनादीनामिति पुस्तकान्तरपाठः ।

पश्चादुद्भूतबोधाश्च ध्यानेनैवोपकारकाः ।
नैसर्गिकोन वै बोधस्तेषामप्यन्यतो यतः ॥

तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवदि"त्यादिना, परस्य ब्रह्मणो विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम्, अतोऽच न भेदापलापः प्रतीयते, ज्ञानस्वरूपमित्यत्रापि ज्ञानव्यतिरिक्तार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते

"तथे"ति, पश्चादुद्भूतबोधाश्चेत्येतद्व्याख्यातं स्वस्वरूपापन्नानामिति पदेन, आब्रह्मस्तम्बपर्यन्ता इत्यत्राङभिविधौ स्तम्बसमभिव्याहारात्, स्तम्बो हि कर्मवश्यः "पुमान्न देव" इत्यारभ्य "भूपैते कर्मयोनय" इत्युक्तेः, तेषामप्यन्यतो यत इत्येवमन्तस्य ग्रन्थस्यार्थः पूर्वमुक्तः । अथ तस्मात्तदमलं ब्रह्मेत्यादेरर्थमाह "परस्ये"ति, स्वासाधारणमित्यस्य पूर्ववदर्थः प्रत्यस्तमितेत्यादिश्लोकस्य भेदनिषेधपरत्वाभावं निगमयति "अत" इति,। अथ ज्ञानस्वरूपमित्यादिश्लोकस्य भेदनिषेध[1]परत्वाभावान्निगमयति "अत" इति, अथ ज्ञानस्वरूपमित्यादिश्लोकस्य भेदमिथ्यात्वपरत्वाभावमाह "ज्ञानस्वरूपमि"तीति, अपिः समुच्चये । कृत्स्नमिथ्यात्वप्रतिपादनाभावमुपपादयति—

सू० ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणाऽवभासो भ्रान्तिरित्येतावन्मात्रवचनात्, न हि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति, जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेः ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सत्यर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादिति चेत्तदसत्

१ भेदमिथ्यात्वपरत्वाभावमाहेति पुस्तकान्तरपाठः ।

टी० "ज्ञाने"ति, ज्ञानस्वरूपस्यार्थाकारतयाऽवभासे भ्रमे सति अर्थाकारस्य तथात्वेनावभासो न भ्रमो भवतीत्यर्थः। तमेव दृष्टान्तेनोपपादयति "न ही"ति, दृष्टान्ताद्वैषम्यमुखेन चोद्यं शङ्कते "जगद्ब्रह्मणो"रिति,तत्र हि सर्वं रजतजातं न शुक्तिकाशकलेन समानाधिकरणं दृष्टम् अपि तु व्यधिकरणत्वेन प्रमाणप्रतिपन्नम् अतो न कृत्स्नस्य रजतजातस्य शुक्तित्वेन विरोधः, अपि तु समानाधिकरणरजतस्यैव विरोधः, तत्र विरोधात् समानाधिकृतरजतस्य मिथ्यात्वम् अविरुद्धस्यासमानाधिकृतरजतस्यामिथ्यात्वं च, अत्र तु ब्रह्मव्यतिरिक्तं कृत्स्नं ब्रह्मसमानाधिकरणं प्रतीयते अतो ज्ञानाकारस्यार्थाकारस्य च विरोधे कृत्स्नस्यार्थजातस्य मिथ्यात्वं फलितमिति। एतत्परिहरति "तदसदि"ति, तत्र प्रथमं परोक्तार्थस्य प्रबन्धवाक्यार्थस्य विरोधमाह—

**भू० अस्मिन् शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासंभवात्।**

"अस्मिन्नि"ति, ब्रह्मणो ऽविद्यान्वयोजगतो मिथ्यात्वं च विरुद्धं "समस्तहेयरहितं विष्णवाख्यं परमं पदम्" "ततः स वासुदेवे"ति "तद् ब्रह्म परमं नित्यं" "हेयाभावाच्च निर्मलम्" "तानि सर्वाणि तद्वपुः" "विभूतयो हरेरेता" इत्यादिवचनादित्यर्थः, भ्रान्तिदर्शनतः स्थितं विष्णुं ग्रसिष्णुमिति विष्णोस्सगुणस्य भ्रमाश्रयत्वमुच्यते अतस्तद्युक्तं परमं ब्रह्म हि निर्दोषमिति शङ्काव्यावृत्त्यर्थं परस्य ब्रह्मणो विष्णोरित्युक्तं,निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्येत्याभ्यां पदाभ्यामविद्यान्वयानुपपत्तिरुक्ता अविद्यासंबन्धे सति निरस्तसमस्तहेयत्वं समस्तकल्याणगुणात्मकत्वमपि ह्यनुपपन्नं स्यात्। महाविभूतेरिति जगन्मिथ्यात्वानुपपत्तिरुक्ता, जगतो भगवद्विभूतित्वं हि न प्रमाणान्तरसिद्धं येन निषेधार्थमनुवादः स्यात्, अतो विधीयत एव, विधिस्तु न भ्रमं जनयति तथा सति निषेधवचनस्यापि सतो भेदस्यासत्त्वविषयबुद्धिरूपभ्रमपरत्वस्यानिवार्यत्वात्, प्रामाण्यं हि वाक्यद्वयस्य समानं तस्माद्विहितोऽर्थः परमार्थ एवेति न जगन्मिथ्यात्वमित्यर्थः

सामानाधिकरण्येनैक्यप्रतीतौ सत्यां ज्ञानाकारार्थाकारयोर्विरोधादन्यतर-मिथ्यात्वं स्यात् यथा शुक्तिरेव रजतमित्यत्रेति शङ्कायामाह—

सू० सामानाधिकरण्येनैक्यप्रतिपादनं च बाधासहमविरुद्धं चेत्यनन्तरमेवोपपादयिष्यते अतोऽयमपि श्लोको नार्थस्व-रूपस्य बाधकः, तथा हि—

टी० "सामानाधिकरण्येने"ति, बाधासहं—न केवलमाकारद्वयेऽन्य-तरबाधनिरपेक्षमपि सामानाधिकरण्यं संभवति किं तु बाधन सहते आकार-द्वयासिद्धौ सामानाधिकरण्यलक्षणासिद्धेरित्यर्थः । तर्ह्येकस्मिन्वस्तुन्याकार-द्वयविरोधः कथं परिह्रियेतेत्यत्राह "अविरुद्धं चे"तीति, आकारद्वयाङ्गीका-रेऽप्यैक्यप्रतिपादनमविरुद्धं सद्वारकत्वादिति भावः । अनन्तरमेव—न त्वधि-करणान्तर इत्यर्थः । प्रथमश्च—शब्दः शङ्कानिवृत्तिपरः, द्वितीयः समुच्चय-परः । मिथ्यात्वपरत्वाभावं निगमयति "अतोऽयमि"ति, एवं ज्ञानस्वरूपमिति श्लोकस्य प्रपञ्चमिथ्यात्वपरत्वमनुपपत्त्युद्घाटनेन निरस्तम् । अथ श्लोकं स्वपक्षे व्याख्यातुमुपक्रमते "तथा ही"ति, अत्र किमर्थं प्रश्नश्लोकव्याख्यानम् ? उच्यते ज्ञानस्वरूपमिति श्लोके द्वितीयान्तपदानां विशेष्यो विष्णुरिति न प्रतीयते तेषां प्रणम्येति पदेनान्वयश्च न ज्ञायते श्लोकस्य विशिष्टार्थपरत्वं च प्रकरणस्य विशिष्टपरत्वेन विना नावगम्यते अतो नमस्कारश्लोका व्या-ख्यातव्यास्तेषु व्याख्यातव्येषु द्वितीयाध्यायारम्भे नमस्कारकरणं किन्निबन्धनं प्रथमत एव हि कर्त्तव्यमिति शङ्का जायते शास्त्रस्य प्रश्नप्रतिवचनरूपेणाव-तीर्णत्वात् प्रथमं प्रश्नानां सङ्क्षेपेण प्रतिवचनं कृत्वा विस्तरविवक्षायां द्विती-याध्यायारम्भे नमस्कारः कृतः, अन्यथा प्रश्नाऽनन्तरमेव च नमस्यायां क्रिय-माणायामस्मत्प्रश्नस्य किमुच्यते इति शिष्यबुद्धेर्व्याकुलता स्यादिति पूर्वोक्त-शङ्कानिरासमुखेन नमस्कारश्लोकसङ्गतिप्रदर्शनार्थं प्रश्नश्लोका व्याख्याताः, ज्ञानस्वरूपम् इत्यस्मिन्नुपक्रमयन्ये निर्विशेषवस्तुव्यतिरिक्तस्य भ्रान्तिसि-द्धत्वदर्शनात्तदनुगुण एवार्थ उत्तरत्र वर्णनीय इति शङ्कापरिहारायोपक्रमो-पक्रमभूतैः प्रश्नोत्तरवरलाभश्लोकैः शास्त्रप्रतिपाद्यः सविभूतिकदेवता-

विशेषः, न तु ज्ञप्तिमात्रमिति शास्त्रतात्पर्यज्ञापनार्थं च प्रश्नश्लोकव्याख्यानं, व्याचिख्यासितश्लोकोक्तप्रान्त्यन्वयस्य सद्द्वारकत्वसिद्धये सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति यन्मयमिति मयट्प्रत्ययेन ज्ञापनानार्थं च प्रश्नश्लोका व्याख्यायन्ते तत्र किमयं श्रुतवेदान्तप्रश्नः ? उताश्रुतवेदान्तप्रश्न ? इति विकल्पे अश्रुतवेदान्तस्य विशेषप्रश्नानुपपत्तिः, श्रुतवेदान्तस्य श्रोतव्याभावात् प्रश्नानुपपत्तिरिति शङ्कायां श्रुतवेदान्तस्य प्रश्न इत्याह–

**मू० "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म" ति जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सति**

टी० यतो वा इमानीत्यादिना, अवसिते सतीत्यनेन ब्रह्ममीमांसाश्रवणं कृतमित्युक्तं, श्रुतवेदान्तस्य कथं प्रश्नोपपत्तिरिति शङ्कायां श्रुतवेदान्तस्येतिहासपुराणश्रवणविधिं दर्शयति–

**मू० "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यती" ति शास्त्रेणास्यार्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति ज्ञायते, उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम्**

टी० "इतिहासे" ति, इतिहासेत्यादिश्लोके वेदशब्दो वेदान्तपरः, वेदोपबृंहणभूतेषु धर्मशास्त्रेतिहासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहणानि, इतिहासपुराणान्युपरितनभागोपबृंहणपराणीति हि विभागः, स च स्मृत्यधिकरणे व्यक्तीभविष्यति । तत्र धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणां तदाराधनरूपत्वज्ञापनार्थम् । इतिहासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपासनाङ्गत्वज्ञापनार्थम् इतिहासस्य पुराणेभ्योऽभ्यर्हितत्वं विशेषः, 'अल्पाच्तर' मिति पुराणशब्दस्य पूर्वनिपाते प्राप्ते अभ्यर्हितं पूर्वं प्रयोक्तव्य-

मिति पूर्वनिपातितस्येतिहासस्याभ्यर्हितत्वप्रतीतेः । अस्य श्लोकस्य प्रथमार्द्धं व्याचष्टे "उपबृंहणाच्चामे"ति, षष्ठ्यन्तविशेषणद्वयेनागमोत्थं विवेकजं च ज्ञानमस्तीत्युक्तं, तत्त्वार्थानामिति बहुवचनं कपिलमतादपीतिहासादीनां प्राबल्यद्योतनार्थं, व्यक्तीकरणमज्ञातविशेषैः सह स्वावगतार्थनिष्कर्षः, यथा वेदेन कर्तव्यतया विहितस्य संध्योपासनादेः शरीरशुद्धिप्रकारदन्तधावनस्नानादिविशेषैः सह निष्कर्षः, एवमुपनिषद्भागेऽप्यर्थनिष्कर्षः संपाद्यः उपनिषदर्थनिष्कर्षो ब्रह्मविचारसिद्ध इति नोपबृंहणापेक्षेति शङ्कायामुत्तरार्द्धं व्याचष्टे–

**सू० सकलशाखाऽनुगतस्य वाक्यार्थस्याल्पभागश्रवणाद् दुरवगमत्वेन तेन विना निश्चयायोगात् उपबृंहणं हि कार्यमेव**

टी० "सकले"ति, पूर्वार्द्धविहितोपबृंहणकार्यतोपपादकमुत्तरार्द्धम् उपबृंहणाच्चामानधीतशाखान्तरार्थैः सहाधीतशाखार्थनिष्कर्षः अतो नोपबृंहणविचारनैरपेक्ष्यमित्यर्थः ।

ननु यथा आपातप्रतीत्या फलवदर्थावगमात्कर्मविचारे तदनन्तरं ब्रह्मविचारे च रागतः प्रवृत्तिः तथा अधीयमानशाखान्तर्गतेन "अनन्ता वै वेदा" इति वाक्येन वेदानामानन्त्यावगमाधीतशाखानवगतानां तदविरुद्धानां विरुद्धानां चार्थानां सम्भवात् "स्मृतेश्च" "अपि स्मर्यते" इत्यादिसूत्रेषु वेदान्तार्थनिर्णयस्योपबृंहणसापेक्षत्वदर्शनाच्चोपबृंहणसापेक्षत्वश्रवणतो रागतः प्रवृत्तिरुपपद्यते तत्र पूर्वभागोपबृंहणेषु धर्मशास्त्रेषु श्रुतेषूपनिषद्भागोपबृंहणरूपेतिहासपुराणेष्वपि रागात्प्रवृत्तिरिति विधिवैयर्थ्यम्, अप्राप्ते हि शास्त्रार्थवत्त्वम् ।

न च गुरोरेव श्रोतव्यमिति नियमविधिः, अस्मिन्वचने तद्वाचिशब्दाभावात् इतिहासपुराणयोः श्रवणप्रवृत्तस्यैव एतद्वचनार्थज्ञानं तस्मादितिहासपुराणश्रवणे प्रवृत्तिरित्यन्योन्याश्रयश्च अत उपबृंहयेदिति विधिरनुपपन्न इति, सत्यं, भारतादिप्रबन्धविशेषश्रवणाय तन्मध्यगतेनानेन वचनेन न्यायसिद्धं सामान्यत उपबृंहणस्यापेक्षितत्वम् अनूद्यते उपबृंहणं

कार्यमिति ज्ञायत इत्यस्यायमर्थः न्यायसिद्धमुपबृंहणस्य करणीयत्वमनेनापि वचनेन ज्ञायत इति, उपबृंहणञ्चामेत्यादिभाष्येण न्यायप्राप्तिरेव प्रदर्श्यते। यद्वा समन्वयविरोधपरिहारलक्षणाभ्यामेव तत्त्वस्थितेर्निश्चितत्वाद्वस्तुनि विरुद्धाकारासम्भवादधीयमानश्रुतिनिर्णीतविरुद्धार्थप्रतिपादकप्रदेशान्तरसम्भवे वेदस्य भ्रान्तिजल्पितायमानत्वप्रसङ्गाच्च निर्णीततत्त्वविरुद्धार्थप्रतिपादकप्रदेशासम्भवात् ब्रह्मण्यनवगतगुणविभूतिविशेषसद्भावेऽप्युपबृंहणसहस्रैरपि तदियत्ताप्रतिपादनायोगादवगतकतिपयगुणविषयोपासनेष्वन्यतमेनैव पुरुषार्थसिद्ध्युपपत्तेश्चोपबृंहणश्रवणानिरपेक्षं प्रत्युपबृंहयेदिति विधानं युज्यते।

ननु एवं तर्हि न्यायानुगृहीतवाक्यावगतेष्वर्थेषूपबृंहणानिष्कृष्टव्याभावान्निष्कृष्टव्यांशस्य सूत्राद्याहृतवचनैरेव निष्कृष्टत्वाच्चोपबृंहणविधिरदृष्टार्थः स्यात्।

न च दृष्टे सम्भवत्यदृष्टकल्पनं न्याय्यं, दृष्टार्थत्वे च वचनं दर्शयति "मामयं प्रतरिष्यती"ति, वेदस्य प्रतारणञ्चाम तदभिप्रेतविपरीतार्थवर्णनमेव, अतस्तन्निवृत्तिरूपं दृष्टफलं वाचनिकं, तस्मिन् सत्यदृष्टकल्पनमयुक्तं, तर्हि तदेव दृष्टं फलमस्त्विति चेत्तदप्ययुक्तं तत्त्वविपर्यासप्रतिपादनासम्भवस्य त्वयैवोक्तत्वात्, साकल्येन ब्रह्मविभूत्यनवगमस्य समस्ततदवान्तरविशेषानवगमस्य च वेदप्रतारणरूपत्वाभावेन तन्निवृत्तेः फलत्वायोगाद् उच्यते, यद्यपि परतत्त्वतदुपासनप्रतिपादनेषु विपर्यासासम्भवस्तथाऽपि किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् आनो भर प्रमगन्दस्य वेदो नैचा शाखं मघवन्रन्धया न इत्यादिवाक्यप्रतिपन्नप्रमगन्दादिवृत्तान्तस्येव परमात्मसृज्यसुरनरतिर्यगादिविशेषतदुत्पत्तितद्वृत्तविशेषाणां श्रुतिसामान्यप्रतीतत्वेन वाक्याविवक्षितत्वं मन्यमानो अहल्या जारादिवाक्यानां पण्डितमानिभिरितरैरुक्तमर्थं वेदपूर्वभागोपनिषद्भागगतानां मन्त्रार्थवादानामन्यथाऽर्थं मन्यते चेत् अश्रुतोपबृंहणतया वेदं प्रतारयत्येवायमिति तत्परिहारायोपबृंहणविधिरुपपद्यत इति, न चान्योन्याश्रयः स्या-

ध्यायविधिवाक्यस्य स्वाध्यायान्तर्भावेऽप्यध्ययनाद्विध्यवगमः, विध्यवगमाद्ध्ययनमिति यथा नान्योन्याश्रयः तद्वत् । तत्र हि विध्यभिज्ञपुरुषप्रेरणात्तदनुष्ठानदर्शनाद्वा माणवकप्रवृत्तिः, एवमुपबृंहणविध्यभिज्ञविशिष्टजनवादप्रसिद्ध्या तदभिज्ञस्वगुरुवचनेन वा तेनोपबृंहणाधिगमप्रवृत्तपुरुषान्तरदर्शनाद्वा उपबृंहणज्ञानस्य सम्पाद्यताज्ञानाच्छिष्यस्य प्रश्नः उपपद्यते, अत उपबृंहणविधिरुपपन्नः, तत्र स्वगुरोः पराशरस्य सार्वज्ञ्यप्रसिद्धेस्तेनैव सर्वविद्यास्थ[1]लेषु स्वस्य कृतशिक्षत्वाच्च मैत्रेयस्य तत्प्रणीतपुराणश्रवणप्रवृत्त्युपपत्तिः पुराणान्तरेभ्योऽस्य पुराणस्य वैषम्यं वदन् प्रश्नानवतारयति—

सू० तत्र पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतो भगवतः पराशरात्स्वावगतवेदार्थोपबृंहणमिच्छन् मैत्रेयः परिपप्रच्छ "सोऽहमिच्छामि धर्मज्ञ? श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग? भविष्यति

"यन्मयं च जगद्ब्रह्मन्? यतश्चैतच्चराचरम् ।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च" इत्यादिना, ॥

टी० "तत्रे"ति, अस्य तावत्पुराणरत्नस्य प्राच्योदीच्यादिसर्वविद्वज्जनविदितस्य पुराणान्तरेभ्योऽपि प्रसिद्धिप्राचुर्यात् धर्मशास्त्रेषु मानवस्येव, व्याकरणेषु पाणिनीयस्येव च, सजातीयप्रबन्धेभ्यः प्रकर्षातिशयो नापह्नोतुं शक्यते, तत एव प्रसिद्धिप्राचुर्यात् कौर्म्मादेरिव नष्टकोशत्वशङ्का दूरोत्सारिता, अनतिविस्तरत्वाच्च प्रक्षेपशङ्का नावतरति । अन्यपरोक्तिप्रसिद्धपरिग्रहातिशयं चेदं "पठय पराशरेदम्" इति "अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम् । राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिं यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते' इति सम्यग्ज्ञाननिष्पादकसत्त्वमूलत्वादन्यथाज्ञान-

१ स्थानेष्विति तु युक्तम् ।

विपरीतज्ञानहेतुभूतरजस्तमोमूलत्वाभावाद्दुष्टकारणपुराणान्तरसाम्यं न संभावनीयं, सत्त्वस्य यथार्थज्ञानहेतुत्वं रजस्तमसोश्च "सत्त्वात् सञ्जायते ज्ञानम् । 'अयथावत्प्रजानाति बुद्धिः सा पार्थ? राजसी" ॥ "सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ? तामसी"ति च प्रसिद्धं "सत्त्वं लघु प्रकाशक-मिष्टमुपष्टम्भकञ्चलं च रजः गुरु वरणकमेव तम" इति "सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता" इति च प्रसिद्धम्

ननु चतुर्मुखशिवादिप्रतिपादकपुराणानां रजस्तमोमूलत्वप्रवच-नस्य रजस्तमोमूलत्वेन प्रामाण्याभावात्सात्त्विकपुराणप्राबल्यासिद्धिः, अस्य वचनस्य सत्त्वमूलत्वेन प्रामाण्यं नास्ति अत एवैतद्वचनमात्रस्याप्रामाण्यं वक्तुं युक्तं न बहूनां पुराणानां, भूयसां बलीयस्त्वात्, उच्यते न तावदस्य वचनस्य प्रामाण्ये विमतिर्न्याय्या बाधकादर्शनात्, स्वतस्सिद्धप्रामाण्यस्यानपोदित-त्वात् 'योह खलु वाऽस्य राजसोंशः सोऽसौ ब्रह्मचारिणो योऽयं ब्रह्मा, योह खलु वा अस्य सात्त्विकोंशः सोऽसौ ब्रह्मचारिणोयोऽयं विष्णुः, योह खलु वा अस्य तामसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं रुद्र" इति "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तक" इति च श्रुत्यानुगुण्येन तत्तद्गुणमयत्वेनावगतस्य तत्तत्त्वस्य तत्तत्कालेषु तत्तद्गुणमयेन ब्रह्मणा तेषु तेषु पुराणेषु प्रतिपादितत्वपरस्य वच-नस्योपपन्नार्थत्वाच्च । सकलशास्त्रार्थव्यवस्थापके भारते च मोक्षधर्मे "जाय-मानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थनि-श्चयः" इत्यादिना भगवत्कटाक्षेण सत्त्वगुणमूलसम्यग्ज्ञाननिश्चयमुक्त्वा "पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं सम-भिप्लुतमि"ति चतुर्मुखशिवयोः कटाक्षेण रजस्तमोमूलकालुष्यप्रतिपादनाच्च चतुर्मुखशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमुपपद्यते, अस्य वचनस्य रजस्तमोमूलपुराणस्थत्वेऽपि नाप्रामाण्यं शङ्कनीयं ब्रह्मशिवादिप्रतिपादना-भिनिविष्टस्य प्रबन्धस्य भगवत्प्रकर्षाक्षावाग्रहासंभवेनास्य वचनस्य तत्त्वपर-त्वोपपत्तेः, स्वप्रतिपाद्यदेवतायामेव हि वक्तुराग्रहसंभवो न त्वन्यत्र, तस्मा-न्नास्य वचनस्य कारणदोषसंभवः, यदुक्तमनेकपुराणप्रामाण्यादेतद्वचनमा-त्राप्रामाण्यं युक्तं, भूयसां बलीयस्त्वादिति, तदयुक्तं साक्षादर्थविरोधाभावात्

न हि विधिशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमिति तेषु पुराणेष्ववगम्यते तत्तत्प्रबन्धेष्वेव प्रमाणतया प्रतिपन्नानां तेषां प्रामाण्यं रजस्तमोमूलत्वं च विरुद्धमिति परम्परया विरोधः फलितः, तत्र भूयसां बलीयस्त्वमिति चेत् यदि केवलमेतद्वचनमात्रविरोधेन तेषामप्रामाण्यं तदा स्यादयं दोषः पुराणानां परस्परविरोधेन सर्वेषामविशेषेण प्रामाण्येऽनुपपन्ने सर्वाप्रामाण्यादपि कतिपयप्रामाण्यसिद्ध्यनुगुणनिर्वाहे न्याय्ये सति कस्याप्रामाण्यं कस्य च प्रामाण्यमित्यपेक्षायां विषयव्यवस्थामात्रपरत्वादस्य वचनस्य, अतोऽनेन सत्त्वादिमूलत्वे ज्ञापिते सत्यदुष्टमूलैः प्रबन्धैर्दुष्टमूलप्रबन्धबाधः, अतो न भूयसां बलीयस्त्वनयेन तद्वचनबाधः, भगवत्प्रतिपादकपुराणेभ्यो विधिशिवप्रतिपादकपुराणबाहुल्यात्तत्प्राब[1]ल्यमिति चेत् इदं तावद्वचनमबाधितम् इह भूयसां बलीयस्त्वनयानवतारात् एवं बाधकरहितेनानेन वचनेन सत्त्वादिमूलत्वे पुराणानामवगते सति दुष्टमूलपुराणबाहुल्यमदुष्टमूलमेकमपि पुराणं बाधितुं प्रभवति, न हि भ्रान्तपुरुषसहस्रवचनैरेकस्याभ्रान्तस्य वचनं बाध्यते, अतो भगवत्प्रतिपादकत्वेन सत्त्वमूलात्र कारणदोषः, तथा पुराणान्तराणामिवास्य बाधकप्रत्ययो न दृश्यते नारायणस्यैव परमकारणत्वप्रतिपादनात्, प्रत्यक्षश्रुतिषु हि नारायणस्यैव सामान्यशब्दविशेषशब्दाभ्यां परमकारणत्वमुक्त्वा "न चास्य कश्चिज्जनिता न चाधिपः" "न तत्समश्चाभ्यधिकश्च दृश्यते" "न ह्येतस्मादिति नेत्यन्यत्परमस्ति" 'यस्मात्परं नापरमस्ति किंचि'दिति कारणभूतात्तस्मादन्यस्य परत्वं च निषिध्यते "न ब्रह्मा नेशानः" "तत्र ब्रह्मा चतुर्मुखोऽजायत" "त्र्यक्षः शूलपाणिः पुरुषो जायत "ततो लक्ष उयस्त्वेष नृम्णः" "विरूपाक्षाय ब्रह्मणः पुत्राय" अजस्य नाभावध्येकमर्पितं" "स प्रजापतिरेकः पुष्करपर्णे समभवत्" "यन्नाभिपद्मादभवन्महात्मा प्रजापति"रिति, ब्रह्मशिवयोश्च नारायणादुत्पत्तिः श्रूयते, लैङ्गे तु ब्रह्मविष्णू प्रति "युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ"विति रुद्रोक्त्या रुद्राद्धरिचतुर्मुखयोरुत्पत्त्यवगमात्पुराणान्तराणां श्रुतिविरोधः स्फुटतरः, यद्यपि कैश्चित् त्रयाणां देवानां साम्यमैक्यं चाभ्युपगतं

१ प्रामाण्यमिति चेदिति पाठः।

तथाऽप्ययं विरोधो दुष्परिहरः तुल्यानामेकीभूतानामपि तेषामुत्पत्तिप्रति-
पादने भगवतश्चतुर्मुखशिवयोरुत्पत्तिश्रवणाद्रुद्रादितरयोरुत्पत्तेः क्वचिदपि
वाक्ये श्रवणाभावाच्च कारणवाचिशिवादिशब्दानामाकाशादिशब्दानामिव
कार्यतयाऽवगतप्रसिद्धरुद्रादिपरत्वाभावाच्च "सर्वे विष्णुमया वेदाः सर्वे
विष्णुमया गुणाः। न हि विष्णुसमा काचिद्गतिरन्या विधीयते। इत्येवं सततं
वेदा गायन्ते नात्र संशय इति" लैङ्गादावपि वेदानां भगवत्परत्वप्रतिपादक-
त्वाभ्युपगमाच्च, अतो नारायणस्यैव परमकारणत्वपराभिः प्रत्यक्षश्रुतिभिर्बा-
धकप्रत्ययवद्भ्यः पुराणान्तरेभ्यो वैलक्षण्यं स्फुटं, तथा नारायणमेव परमकारणं
प्रतिपादयद्भिर्मन्वा[1]दिधर्मशास्त्रैरप्यैकार्थ्यं स्पष्टम् "आपो नारा इति
प्रोक्ताः" "तद्विसृष्टः स पुरुषः" "विद्यात्तु पुरुषं परं" "नारायणः परो ऽव्यक्ता"-
दित्यादिभिर्नारायणस्यैव हि कारणत्वं तेषूच्यते, पुराणान्तराणि तु धर्म-
शास्त्रविरुद्धानि, तथा वक्तृवैलक्षण्यं च प्रत्यक्षश्रुतिसिद्धं "सहोवाच व्यासः
पाराशर्यः" इति, अत्र पराशरात्मजत्वेन हि व्यासोत्कर्ष उच्यते, तथा लैङ्गेऽपि
पराशरवैलक्षण्यं प्रतीयते यथा तत्र द्वितीयेऽध्याये "पराशरस्यावतारो व्यास-
स्य च शुकस्य च। विनाशं राक्षसानां तु कृतं वै शक्तिसूनुने"ति अत्र पराशरस्या-
वतार इत्युक्तिर्हि प्रकर्षातिशयार्था, अन्यथा पराशरस्य चोत्पत्तिर्व्यासस्य च
शुकस्य चेत्यपि हि वक्तुं शक्यते पुलस्त्यवसिष्ठवरदानलब्धपरदेवतापारमा-
र्थ्यज्ञानवत्त्वं च महद्वैलक्षण्य, वरदाने सत्येतत्पुराणप्रामाण्यं तत्प्रामाण्ये
तत्प्रतिपन्नवरलाभसत्यत्वमित्यन्योन्याश्रय इति न वाच्यं, वरलाभवचनस्य
पराशरो न लब्धवर इति बाधकप्रत्ययाभावेन स्वतस्सिद्धप्रामाण्यस्यानपेक्षि-
तत्वाल्लैङ्गे च देवतापारमार्थ्यज्ञानलाभः पराशरस्यावगम्यते यथा तत्र
द्वितीये ऽध्याये "देवतापारमार्थ्यं च विज्ञानं च प्रसादतः। पुराणकरणं चैव
पुलस्त्यस्याज्ञया गुरो"रिति तत्रैव त्रिषष्टितमेऽध्याये।

"अथ तस्य पुलस्त्यस्य वशिष्टस्य च धीमतः॥
प्रसादाद् वैष्णवं चक्रे पुराणं वै पराशरः"।

इति, तदनन्तरं च "षट्प्रकारं समास्तार्थसाधकज्ञानसंश्रयम्। दशसा-

१ मानवादिधर्मशास्त्रैरिति तु युक्तः पाठः।

हस्रममितं सर्ववेदार्थसंयुत''मित्यनेनास्य पुराणरत्नस्य सर्ववेदार्थसंयुतत्वमत एव समस्तपुरुषार्थसाधकज्ञानप्रसाधकत्वं चोच्यते, अतो वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं च पुराणान्तरमिति तद्दुरपह्नवम् इति, इदं चापरं सुमहद्वैलक्षण्यं यत्सामान्यप्रश्नपूर्वकविशेषनिष्ठप्रतिवचनरूपत्वं "सोऽहमिच्छामि धर्मज्ञ? श्रोतुं त्वत्तोयथा जगत् । बभूव भूयश्च यथा महाभाग भविष्यति ।

यन्मयं च जगत् ब्रह्मन्? यतश्चैतश्चराचर''मित्यादिना सामान्येन पृष्टे "विष्णोः सकाशादुद्भूत''मिति विशेषनिष्ठ प्रतिवचनं ह्यवगम्यते, विशेषे पृष्टे सति प्रतिवचनस्य पृष्टविशेषपक्षपातेन तदुत्कर्षकथनं प्रशंसामात्रपरं न तत्त्वपरमिति शङ्कनीयं स्यात्, सामान्येन पृष्टे सति प्रतिवचनमर्थवशाद्विशेषे पर्यवसितमिति तत्त्वपरत्वमेव स्यात्, अतश्च "तस्माद्भवन्तं पृच्छामः सूत? पौराणिकाऽद्य तु पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसंयुता''मिति विशेषनिष्ठप्रश्नोपक्रमतत्प्रतिवचनरूपपुराणान्तरेभ्यः प्रकर्षातिशयः स्पष्टतमः, एतत्पुराणार्थश्च लैङ्गादिषु क्वचित् क्वचिदङ्गीक्रियते यथा लैङ्गे द्वितीये पुराणार्थानुक्रमणे "सर्वावर्तेषु विष्णोश्च जननं लीलयैव तु । विष्णोः प्रसादाज्जिष्णोश्च विष्णोश्चैव तु संभवः ॥ तत्र, "लीलया चैव कृष्णेन स्वकुलस्य च संहृतिः । जरकास्त्रच्छलेनैव गमनं स्वेच्छयैव तु" इति भगवदवतारस्य भूलोकपरित्यागस्य च लीलामात्रनिबन्धत्वं हि तत्रोच्यते, अत एव एतत्पुराणार्थस्यान्यत्राभ्युपगन्तव्यत्वादप्रकम्प्यत्वमवगम्यते । तर्ह्येतदैकार्थ्योक्तान्यपि पुराणानि प्रमाणानि स्युरिति चेन्न कार्त्स्न्येनाविरुद्धत्वाभावात्, भगवदुत्कर्षप्रतिपादकांशस्तु आग्रहासंभवादादरणीय इति पूर्वमेवोक्तम्, अस्य च पुराणस्य कार्त्स्न्येनानाग्रहमूलत्वं चोपक्रमगतप्रश्नस्वभावादवगतमिति चोक्तम्, अतोऽन्यत्र बह्वाग्रहैरप्यादरणीयस्वोक्तार्थत्वमप्रकम्प्यताहेतुः । किञ्च पुराणान्तरेष्विवास्य पुराणस्य न स्वव्याहतार्थप्रतिपादकत्वं दृश्यते कार्त्स्न्येन भगवत्प्रकर्षस्यैवावगमात्, पुराणान्तरेषु व्याघातः प्रतीयते, यथा लैङ्गे "युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः । वामपार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः" इति, तत्र "ततः प्रहृष्टस्वमनाः प्रणिपत्य महेश्वरम् ।

प्राह नारायणो देवः सलिङ्गं लिङ्गवर्ज्जितम् ।
यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ॥
भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी" ।

इति हरिविरिञ्चयोः शिवादुत्पत्तिस्तदाऽऽराधनवरवरणादिकमुक्तं तत्र, क्वचिच्च

त्वत्कोपसंभवो रुद्रस्तमसा च समावृतः ।
त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥

इति चतुर्मुखशिवयोर्भगवत्प्रसादकोपसंभवत्वमुक्तमिति स्वव्याघातः, न च वसुदेवादेरुत्पत्तिवत्कैलासयात्रादिवच्च रुद्रादुत्पत्तितदाराधनरूपलीलोक्तिरित्यविरोधः पुराणरत्नभारतादौ "मनसैव जगत्सृष्टिं संहारं च करोति यः ।

तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ।
तथाऽपि यो मनुष्याणां धर्मस्तदनुवर्तनम् ॥
कुर्वन् बलवता संधिं हीनैर्युद्धं करोत्यसौ ।
साम चापि प्रदानं च तथा भेदप्रदर्शनम् ॥
करोति दण्डपातं च क्वचिदेव पलायनम् ।
मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्तते ॥
लीला जगत्पतेस्तस्य छन्दतः संप्रवर्त्तते ।
ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः ॥
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ।
तेन वञ्चयते लोकान् मायायोगेन केशवः ॥
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः" ।

इत्यादिभिरिव तत्र तत्र प्रसक्तापकर्षपरिहारपरग्रन्थादर्शनात्, भारतादिषु दशरथवसुदेवादीनां रामकृष्णाद्यपेक्षया परत्वस्य जगत्कारणत्वादिमुखेन प्रतिपादिताभावादिह भगवदपेक्षया रुद्रपरत्वस्य प्रतिपादनाच्च, अतः स्वव्याघातो दुष्परिहरः ।

न च तथा ऽत्र स्वव्याहतिः प्रतीयत इति, इदं च महद्वैलक्षण्यम् उक्तलक्षणप्रकर्षवतो वैष्णवपुराणस्य कारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तरस्य च विरोधे सति पुराणरत्नस्य प्राबल्यमन्येषां च दौर्बल्यं च सुस्पष्टम् । एवं प्रसिद्ध्यतिशयलब्धसजातीयप्रबन्धप्रकर्षवत्त्वात्तत एव नष्टकोशत्वाभावादतिविस्तृततया प्रक्षेपशङ्कारहितत्वादन्यपरोक्तिसिद्धपरिग्रहातिशयवत्त्वात्सामान्यप्रश्नपूर्वप्रतिवचनरूपत्वेनानाप्तमूलत्वादत एवेदृशवैलक्षण्यरहितकारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तराणामेतद्विरोधे सति दौर्बल्यस्यावर्जनीयत्वाच्च श्रीमद्वैष्णवमिदं पुराणं प्रमाणतमम् । एतत्सर्वहेतुजातमभिप्रेत्य प्रधानभूतयुक्तिं कण्ठोक्त्या प्रदर्शयन् तन्मुखेन प्रबन्धवैलक्षण्यं वदन् प्रश्नमवतारयति—

मू० अत्र ब्रह्म स्वरूपविशेषतद्विभूतिभेद प्रकारतदाराधान स्वरूपफलविशेषाश्च पृष्टाः, ब्रह्मस्वरूपविशेषप्रश्नेषु यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वात् यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत्किमात्मकमिति पृष्टं, तस्य चोत्तरं "जगच्च स इति, इदं च तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतं, न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतं यन्मयमिति प्रश्नस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य, यन्मयमिति मयट् न विकारार्थः पृथक् प्रश्नवैयर्थ्यात् नापि प्राणमयादिवत् स्वार्थिकः, जगच्च स इत्युत्तरानुपपत्तेः ॥ १ ॥

टी० "तत्रे"ति, पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवत इत्यत्र देवतापारमार्थ्य-शब्देन तमः कार्यं धर्म्यन्तरत्वेन धर्म्यन्तरस्य प्रतीतिरूपं विपरीतज्ञानं व्यावर्त्तितम्, अनेन देवतापारमार्थ्यं चेति वचनं स्मारितं, प्रशंसार्थेन मतुप्प्रत्ययेन रजःकार्यं प्रकारान्तरोपेतस्य तद्विरुद्ध-

१ स्फोरितमिति पा० ।

प्रकारान्तरविशिष्टताप्रतीतिरूपमन्यथाज्ञानं व्यावर्त्तितम्, अनेन यथावदि-त्यस्यार्थः सूचितो भवति, देवता-शब्देन कर्मणा उपासनेन वा आराध्यत्वं फलप्रदत्वं च विवक्षितम्, अनेन सविशेषत्वसिद्धिः, यथावदिति प्रकारकथ-नेनापि सविशेषत्वसिद्धिरिति वरलाभकथनं सविशेषत्वोपपादकमित्य-भिप्रायः, भगवच्छब्देन ज्ञानवत्त्वमुक्तं, वरलाभात्तदतिशयसिद्धिः, सोऽहमि-त्यादि सोऽहं-त्वयैव सर्वविद्यासु शिक्षितपूर्वोऽहमिति भावः। धर्मज्ञ-विशेषो ऽस्ति न सतां शिष्यपुत्रयोरित्येवं रूपधर्मज्ञ। यद्वा "आनृशंस्यं परो धर्म" इति धर्मज्ञ आनृशंस्यमाश्रितसंरक्षणपरत्वम् आश्रितेत्यानृशंस्यतेति वचनात् महाभाग? परिपूर्णं कृत्यं हि परसंरक्षणं किंचित्कारमप्यनपेक्ष्य रक्षकत्वमेवेति भावः, यथायतो बभूव ब्रह्मरुद्रादिषु कः कारणमिति ज्ञातुं यत इति प्रश्नः, किं विवर्ताधिष्ठानत्वं कारणत्वम्? उत परिणामित्वं? तत्रापि किं सद्वारकपरिणामित्वमुताद्वारकपरिणामित्वमित्येवमिति प्रकारभेदेन जिज्ञा-सया यथेति प्रश्नः, कल्पभेदेन सृष्टिवैषम्यशङ्कया भविष्यतीति प्रश्नः वृश्चिकस्य गोमयवृश्चिकोपापानकत्वदर्शनात्, कल्पभेदेन उपादानादिभे-दशङ्का ह्युपपद्यते, तत्रापि यतोयथेतिपदयोः पूर्ववदर्थः, यतो यथा बभू-वेति एकप्रश्नत्वशङ्का यन्मयमिति प्रश्नान्तरव्यवधानेन निरस्यते, यथा कारणं ज्ञातव्यं तथा सृष्टिप्रकारोऽपि पृथग् ज्ञातव्य इति ज्ञापनार्थं ज्ञातव्यत्वे-ऽपि प्राधान्यद्योतनाय प्रकारप्रश्नः पूर्वमेव कृतः, यत इति हेतौ पञ्चमी अतो निमित्तोपादानयोस्तन्त्रेण प्रश्नः, अन्तः स्थित्याद्युपयुक्त आत्मशरीर-भावप्रश्नः "यन्मय"मिति, मयट्प्रत्ययः प्राचुर्यार्थः, अनेन व्याप्तिर्दर्शिता व्याप्याद्व्यापकप्राचुर्यं हि घटाकाशौ दृष्टम् आत्मतया हि व्याप्तिः, आत्म-त्वं च धारकत्वम् अतोऽन्तर्यामिकृतसत्ताऽनुवृत्तिलक्षणस्थितिप्रश्नः फलितः यन्मयं-येनान्तर्यामिणा धारकेण प्रचुरं जगत्स्थितमित्यर्थः उक्तो भवति, अन्तःप्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति हि प्रागेव विशदीकृतं चकारात् बहिर्भूतपोषकारिकृता पोषणादिलक्षणा स्थितिर्मातापित्रादिभिः कार्या इष्टप्रापणानिष्टनिवारणलक्षणा स्थितिश्च पृष्टा भवति, यत इत्यु-पादनस्यापि पृष्टत्वात् मयट् प्राचुर्यार्थ एव।

न च गोबलीवर्दन्यायेन यत इति पञ्चम्यर्थः सङ्कोचयितव्यः, बलीवर्दशब्दवत् मयटोऽनन्यथासिद्धत्वाभावात्सङ्कोचकत्वानुपपत्तेः पदान्तरवैयर्थ्यपरिजिहीर्षया पदान्तरार्थसङ्कोचो गोबलीवर्दनय इति हि न्यायविदः अत्र तु मयटोऽर्थान्तरसम्भवान्नायं सङ्कोचकः, यत इति पदं निमित्तमुपादानं च बोधयितुं शक्तं स्थितिप्रश्नोऽपेक्षितश्च अतोऽपेक्षितविधेरनपेक्षितं विधानं दुर्बलं "यतो वा इमानीत्यादि श्रुतावपि यत इति पदेनैव निमित्तोपादानयोरुक्तत्वाच्छ्रुतिच्छायानुविधानाच्च यत इति तन्त्रेण प्रश्न इति यन्मयमिति स्थितिप्रश्न एव क्रियते, अर्थान्तरस्वीकारे अपेक्षितावचनमनपेक्षितवचनं च स्यात् । नापि स्वार्थिकः मयट्, प्रत्ययस्यार्थवत्त्वे संभवति तत्परित्यागस्यान्याय्यत्वात्, अतो यथोक्त एवार्थः, लयस्थानप्रश्नो लयकारप्रश्नश्च अनधीतशाखान्तरेषु स्थानभेदप्रकारभेदशङ्कया कृतः, देवतान्तरस्य लयस्थानत्वं तत्रापि सद्वारकाद्वारकत्वकार्यधर्मनिवृत्तिरूपताद्यप्रकारभेदश्च हि शङ्काऽऽस्पदं भवति, भूतभविष्यत्प्रश्नश्च कल्पभेदेन लयस्थानप्रकारभेदशङ्कया कृतः, चकारात् लयकर्तृप्रश्नश्च सूचितः, स च कर्तृभेदशङ्कानिबन्धनः स्वरूपप्रश्नश्लोकद्वयं व्याचिख्यासितश्लोकापेक्षितत्वेनोदाहृत्य आदि—शब्देन प्रश्नान्तरपरश्लोकाः क्रोडीकृता विष्णोस्सकाशादिति श्लोकस्यार्थान्तरप्रश्नोत्तररूपत्वशङ्काव्युदासार्थं तेषां श्लोकानां अर्थं संग्रहेणाह "अत्रे"ति. ब्रह्मस्वरूपेति स्वरूप-शब्दो विभूत्यादिव्यावर्तकः, स्वरूपविशेषशब्दो ब्रह्मादिव्यावर्त्तकः, विभूतिभेदानां प्रकारो विभूतिभेदप्रकारः, स च ज्योतिश्चक्रभुवनकोशादिप्रश्ने ऽन्तर्गतः, तत्र वर्णाश्रमधर्मादिप्रश्नेन तदाराधनस्वरूपं पृष्टं प्रतिवचने फलविशेषोक्तिदर्शनात्, प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायत इति नीत्या फलविशेषश्चार्थतः पृष्टो भवतीति पूर्वोक्तेषु प्रश्नेष्वन्तर्भावित इत्यभिप्रायेण फलविशेषाश्च पृष्टा इत्युक्तं, सप्रयोजनमाराधनं पृष्टमिति तत्र तदन्तर्भावः । अयमेवार्थः सकलश्रुतीतिहासपुराणानां प्रतिपाद्य इति भावः । ततः किं प्रस्तुतश्लोकार्थस्येत्यपेक्षायां यन्मयमिति पदस्यार्थं सोपपत्तिकमाह "ब्रह्मस्वरूपे"ति, सृष्टिस्थितिलयकर्मभूतमिति पदं सृष्टिप्रलययोरुक्तत्वेन स्थितिकथनस्यापेक्षितत्वज्ञाप-

ना, स्थित्यतिलय–शब्दाभ्यां रक्षासंहारौ विवक्षितौ स्थितिलययोः प्रयोज्य-व्यापारत्वेन तदाश्रयत्वेन तत्कर्मत्वाभावात् जगतः सृष्टिस्थितिलयकर्मभूतं जगत्स्थित्यर्थं किमात्मकं भवतीति प्रश्नार्थः । ततः किमित्यत्राह "तस्य चे" ति, जगच्च स इति सामाधिकरण्यप्रतिपन्नं तादात्म्यं स्वरूपैक्यलक्षणमाशङ्क्य परिहरति "इदं चे" ति, इदं–सामानाधिकरण्यप्रतिपन्नमित्यर्थः, गगनादौ व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति तद्व्यावृत्त्यर्थम् आत्मत्वं विवृणोति "अन्तर्यामिरूपेणे" ति, अन्तःप्रविश्य नियन्तृत्वं ह्यात्मत्वं व्याप्यव्यापक-योरिति जगद्ब्रह्मणोर्व्याप्यत्वेन व्यापकत्वेन च श्रुतिसिद्धत्वादिति भावः ।

न तु वस्त्वैक्यक्रतमिति प्रतिज्ञामुपपादयति "यन्मय" मिति, विका-रार्थत्वमाशङ्क्य परिहरति "यन्मयमिति मयडि" ति, कुत इत्यत्राह "पृथगि" ति, विकारार्थत्वे उपादानं पृष्टं स्यात् ।

न च तत्प्रष्टव्यं यत इति पञ्चम्यन्तपदेन उपादानस्यापि पृष्टत्वात् अतः पृथक् प्रश्नवैयर्थ्यम् ।

न च गोबलीवर्दन्यायः, अर्थान्तरसंभवादिति अपेक्षितविधेरनपेक्षि-तविधानं दुर्बलमिति न्यायश्चाभिप्रेतः । ब्रह्माज्ञानवादिनोऽभिमतं स्वार्थि-कत्वपक्षं दूषयति "नापी" ति, न तु भेदाभेदपक्षाभ्युपगतं तत्तु दूषयिष्यते, न ह्यर्थे संभवति निरर्थकत्वाश्रयणमुपपन्नमिति भावः । श्रुतार्थस्वीकारेणाश्रु-तकल्पनं ह्युचितं न तु श्रुतपरित्यागः, ब्रह्माज्ञानवादिनाऽभ्युपगतस्य स्वार्थि-कत्वस्यासाधारणं दूषणमाह "जगदि" ति, स्वार्थिकत्वपक्षे यदिदं जगत्तत्कि-मित्युक्तं स्यात् यदिदं जगत्तत्किमित्युक्ते ज्ञातस्य जगद्रूपमात्रस्य प्रष्टव्यत्वा-योगात् प्रश्नावैयर्थ्याय जगत्किं सत्यमुत मिथ्ये? ति पृष्टं भवतीत्यभ्युपेतव्यं तत्र मिथ्येत्युत्तरं वक्तव्यं तत्रान्यतराकारोपस्थापके आकारान्तरनिषेधके च शब्दे वक्तव्ये आकारद्वयोपस्थापकं सामानाधिकरण्यमनुपपन्नमित्यर्थः । बा-धार्थं सामानाधिकरण्यमिति चेत्तत्रास्ति माता मे वन्ध्येति वत्सामानाधिक-रण्यं बाधार्थमिति व्याहतत्वादिति भावः । तर्हि कथमुत्तरं स्यादित्यत्राह–

भू० तदा हि विष्णुरेवेत्युत्तरमभविष्यत् अतः प्राचुर्यार्थ एव

"तत्प्रकृतवचने मयडि"ति मयट्, कृत्स्नं च जगत्तच्छरीरतया तत्प्रचुरमेव

टी० "तदा ही"ति, विष्णुरित्यन्यतराकारोपस्थापकः शब्दः आकारान्तरनिषेधकशब्द एवकारः । साक्षादर्थमाह "अत" इति, अतः—स्वार्थिकत्वविकारार्थत्वयोरनुपपन्नत्वादित्यर्थः । शब्दानुशासनानुमतिं दर्शयति "तदि"ति, प्रकृतं प्रकर्षेण कृतं प्रभूतं प्रचुरमित्यर्थः, अन्नमयो यज्ञः शकटमयी यात्रेति हि तस्योदाहरणम् । किमत्र प्राचुर्यमस्तीत्यत्राह "कृत्स्नञ्चे"ति, अन्तर्बहिश्च व्याप्येत्यादिश्रुतेस्तदुपपन्नमिति भावः । सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं प्रतिपिपादयिषितमुपसंहरति—

सू० तस्माद्यन्मयमित्यस्य प्रतिवचनं जगच्च स इति, सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्चीयते ।

टी० "तस्मादि"ति, यन्मयमित्यस्य प्राचुर्यार्थत्वेन तस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं, तेन स्वार्थिकत्वनिवृत्त्या यन्मयमिति मयट्प्रत्ययस्य प्राचुर्यार्थत्वमित्यन्योन्याश्रय इति चेत् नैवं मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तेः प्राचुर्यार्थत्वनिर्णयस्य च सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वानपेक्षत्वात् स्वार्थिकत्वं तावदर्थवत्त्वे सम्भवति निरर्थकत्वस्वीकारायोगादपास्तं, जगच्च स इति सामानाधिकरण्येन च अपास्तं स्वार्थिकत्वे सति आकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वायोगात्, न तु तस्य शरीरात्मभावनिबन्धनत्वायोगात् ।

न च सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभूताकारद्वयोपस्थापकत्वं मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिसापेक्षं सामानाधिकरण्यलक्षणस्वभावादेव तस्याकारद्वयोपस्थापकत्वसिद्धेः, अतो मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिः सामानाधिकरण्यस्याकारद्वयोपस्थापकत्वादित्यत्र नान्योन्याश्रयः, एवं स्वार्थिकत्वे व्युदस्ते पृथक् प्रश्नवैयर्थ्येन विकारार्थत्वेऽनुपपन्ने परिशेषाच्च

स्थितेः प्रष्टव्यत्वे सति स्थितिस्वाभाव्यादनुशासनानुरोधाच्च मयट्प्रत्ययस्य प्राचुर्यरूपार्थविशेषपरत्वसिद्धिः, ततो जगच्च स इति सामानाधिकरण्यस्य शरीरात्मभावरूपप्रवृत्तिनिमित्तविशेषसिद्धिरिति नान्योन्याश्रयः। एवं सामानाधिकरण्यस्य मृषावाद्यभिमतैक्यपरत्वे मयडानर्थक्यं सामानाधिकरण्यानुपपत्तिश्चेति दूषणद्वयं, स्वरूपैक्यपरत्वेऽर्थविरोधो यन्मयमित्युक्तप्रश्नस्योत्तरत्वानुपपत्तिश्चेति दूषणद्वयं च दर्शितं भवति, स्वोक्तार्थपरत्वानभ्युपगमे दूषणमाह—

**सू० अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रे ऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न सङ्गच्छन्ते तद्विवरणरूपं कृत्स्नं च शास्त्रं न सङ्गच्छते तथा हि सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात् जगच्च स इति जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिगुणैकताननता निखिलहेयप्रत्यनीकता च बाध्येत सर्वाशुभास्पदं च ब्रह्म भवेत्, आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते ।**

टी० "अन्यथे"ति, अन्यथा कथं प्रश्नप्रतिवचने स्याताम् इत्यत्राह "तथा हि सती"ति, सामानाधिकरण्यस्य भेदाभेदवाद्यभ्युपगतैकद्रव्यतापरत्वं दूषयति "जगदि"ति, अस्मिन्नपि पक्षे जगद्यन्मयं जगद्यद् द्रव्यमिति पृष्टं स्यात् तदानीं मयड्वैयर्थ्यमस्तीति द्रष्टव्यं, यत इत्युपादानस्य पृष्टत्वात्। अधिकदूषणमाह सत्येत्यादिना, सत्यसङ्कल्पेत्यादिना जीवगतदोषः सर्वाशुभेत्यादिना प्रकृतिगतदोषश्च ब्रह्मणि प्रसज्यत इत्युक्तम्। यद्वा उभयलिङ्गत्वहानिर्विपरीताकारप्राप्तिश्चेत्यर्थः शरीरवाचिपदस्य शरीरिपरत्वे मुख्यत्वं न स्यादित्यत्राह "आत्म शरीरे"ति, स्थाप्यते स्थापयिष्यत इत्यर्थः अनन्तरभावित्वात् स्थाप्यत इत्युक्तम्। एवं प्रकृतश्लोकव्याख्यानोपयिकार्थः

प्रपञ्चितः । अथ शास्त्रार्थसंग्रहानन्तरं विस्तरोपक्रमे सप्तश्लोकीं मनस्कारविषयामवतार्य व्याख्येयश्लोकस्य नमस्कारश्लोकान्तरैः सङ्गतिं दर्शयितुं अविकारायेत्यादीनां षण्णां वाक्यानामर्थानाह—

सू० अतो "विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितं स्थितिसंयमकर्त्ताऽसौ जगतोऽस्य जगच्च स" इति सङ्ग्रहेणोक्तमर्थं परः पराणामित्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव

टी० "अत" इति, अतः—प्रश्नप्रतिवचनादिभिः शास्त्रस्य सविभूतिकसगुणवस्तुपरत्वावगमात् सामानाधिकरण्यस्य विशिष्टवस्तुनि मुख्यवृत्तत्वाच्चेति भावः। अत इत्यस्य व्यष्टिरूपेणावस्थितं च नमस्करोतीत्यनेनान्वयः । यद्वा शास्त्रवाक्यार्थस्यैवंरूपत्वाद्विष्णोः सकाशादित्यस्य सङ्ग्रहरूपत्वं, परः पराणामित्यादीनां विस्तररूपत्वं च सिद्धमित्यर्थः । विष्णोः सकाशादित्यत्र सकाशादिति पदं षष्ठ्याः पञ्चम्यर्थत्वसम्पादनार्थं यथा अस्य कृत इत्युक्ते कृते इति शब्दस्य चतुर्थ्यर्थसम्पादनपरत्वं तद्वत् । यद्वा सकाशात् ससङ्कल्पत्वात् काशनं प्रकाशनं सङ्कल्परूपं ज्ञानं तद्वत् इत्यर्थः, अनेन निमित्तत्वसिद्धिः । यद्वा सकाशशब्दः पार्श्ववचनः तेन शरीरमुपलक्षितं "सोऽभिध्याय शरीरात्स्वा" दिति वच्छरीरादित्यर्थः तत्रैव च स्थितमिति लयस्थानप्रश्नस्योत्तरं तत्र स्थितमिति स्थितं—निष्ठाङ्गतम् अनेन जगतो नित्यत्वमवस्थानामागमापायित्वं च सूचितं लयस्थानप्रश्नस्योत्तरमुक्तम् । अथ लयकर्तृप्रश्नस्य बाह्यस्थितिप्रश्नस्य च उत्तरमाह "स्थिती" ति, जगच्च स इति यन्मयमिति फलितकृत्स्नस्यान्तर्यामिरूपकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नस्योत्तरम् । यद्वा यन्मयमिति फलितस्थितिप्रश्नस्यापि स्थितिसंयमकर्त्तृत्वेवोत्तरं जगच्च स इति तु यन्मयमिति कण्ठोक्तस्यार्थस्योत्तरम्, इदं सामानाधिकरण्यमात्मतया व्याप्तिनिबन्धनमिति पूर्वमेवोपपादितम् ।

ननु निष्कर्षकशब्दानां शौक्ल्यादीनां धर्मिपर्यन्तत्वं न दृष्टं यन्मयं जगदित्यनेन जगच्छब्दस्य निष्कर्षकशब्दत्वं दृष्टमिति धर्मिपर्यन्ताभि

धायित्वाभावाज्जगच्च स इति सामानाधिकरण्यमनुपपन्नमिति चेत् उच्यते निष्कर्षकशब्दा हि द्विविधाः नियतनिष्कर्षका वैवक्षिकनिष्कर्षकाश्च तत्र शौक्ल्यादिशब्दा नियतनिष्कर्षकाः, मनुष्यशुक्लादिशब्दा वैवक्षिकनिष्कर्षकाः प्रयोगस्य नियामकत्वात्, अन्यथा निष्कर्षकानिष्कर्षकविभागोऽपि नोपपद्यते, तथा जगच्छब्दोऽपि वैवक्षिकनिष्कर्षक इति तत एव यन्मयमिति वैयधिकरण्येन प्रश्नस्य जगच्च स इति सामानाधिकरण्येनोत्तरमर्थभेदाभावादुपपन्नं, शुक्लगुणस्य आश्रयः कः इति प्रश्नस्य शुक्लः पटः इत्युत्तरवत् एवं संक्षेपेणोक्तस्य वक्ष्यमाणमहाविस्तरस्यार्थस्यैषद्विस्तररूपेण श्लोकैर्नमस्कारः क्रियत इति नमस्कारश्लोकसङ्गतिः स्वेनैव रूपेणावस्थितम्—

सू० रूपेणावस्थितमविकारायेति श्लोकेन प्रथमं प्रणम्य तस्यैव हिरण्यगर्भस्यावतारशङ्कररूपचिन्मूर्त्तिप्रधानकालव्यक्तत्वसमष्टिव्यष्टिरूपेणावस्थितं च नमस्करोति

टी० ननु प्रकृत्यादिविशिष्टमित्यर्थः, परब्रह्मणो हि हेयसंबन्धाभावो न तु विष्णोरिति शङ्कायां "विष्णुनामा स वेदेषु" "समस्तहेयरहितं विष्ण्वाख्यं परमं पद"मिति वचनात् ब्रह्मण एव विष्णुशब्दवाच्यत्वाद्विष्णोरेव भगवच्छब्दवाच्यत्वाच्च विष्णोर्हेयसंबन्धोऽनुपपन्न इत्यभिप्रायेण परब्रह्मभूतमित्यादिविशेषणमुक्तम् । अविकाराय विकार–शब्दो धर्मिपरो धर्मपरश्च "षोडशकश्च विकार" इत्यादिप्रयोगात् स्वयं कस्यचिद्विकारभूतः कर्मभू[1]तो न भवतीत्यविकारः, अनेन कार्योचिद्व्यावृत्तिः । यद्वा विकारोऽस्या महत्त्वाहङ्कारत्वादिः नित्यं तत्संबन्धिविरहादविकारः, अतो विकारवती प्रकृतिरविकारपदेन व्यावर्त्यते एवं तत्पुरुषबहुव्रीहिभ्याम् अविकारायेति पदेन कार्यकारणरूपोभयावस्थाचिद्व्यावृत्तिः, शुद्धायेति बद्धव्यावृत्तिः, नित्याय शुद्धत्वेन नित्याय अन्यथा अविकारायेत्यनेन पुनरुक्तिः स्यात्, नित्यपदं शुद्धिं विशिंषदेव शुद्धिमतोऽस्तु विशेषणं यथा महोदार इत्यत्र महच्छब्द औदार्यं विशिंषन्नेव दातुर्विशेषणं तद्वत्, अतो मुक्तव्यावृत्तिः, परमात्मन इति नित्यमुक्तव्यावृत्तिः

१ कार्यभूतो न भवतीति पा० ।

ते हि परवन्तः न तु परमाः प्रधानपुरुषव्यक्तकालानां परममिति वक्ष्यमाणत्वादविकारायेत्यादिपदचतुष्टयेन प्रधानपुरुषव्यक्तकालव्यावृत्तिरिति केचित् । निमेषाद्यवस्थकालस्य व्यक्तस्याप्यविकारपदव्यावर्तितत्वात्पुरुषत्रैविध्यस्यैव प्रामाणिकत्वाद्विशेषणानां तद्व्यावर्त्तनसमर्थत्वाच्च यथोक्तानामेवार्थानां व्यावर्तितत्वमुचितं विलक्षणविग्रहवत्तयाऽपि समस्तवैलक्षण्यमाह "सदैकरूपरूपाये"ति, प्रथमरूप–शब्दः स्वभाववाची एकस्वभावमित्यर्थः, परव्यूहविभवादिसर्वावस्थासु सकलहेयप्रत्यनीकत्वमकुलास्पदत्वादिध्येयत्वादिस्वभावोऽप्रच्युत इत्यर्थः । यद्वा एकरूपं–दिव्यात्मस्वरूपेण समानस्वभावं, तेनापि हेयप्रत्यनीकत्वादिसिद्धिरेभिः पदैरीक्षत्यानन्दमयाधिकरणान्तरादित्यधिकरणार्था विवक्षिताः, पूर्वोक्तमात्मत्वं न मृदात्मको घट इतिवद्भवतीति तद्विशदमवयवशक्त्या क्रियते विष्णु–शब्देन सर्वजिष्णवे इति पदेन च, पदद्वयेन नृपनभोव्यावृत्तिः, अन्तःप्रविश्य नियन्तृत्वं हि शरीरित्वम्, अत एवमात्मत्वं विवृतं भवति विष्णुशब्दस्य रूढत्वाद्देवताविशेषनिर्णयश्च सिद्धः । यद्वा विष्णुशब्देनैव नियमनपर्यन्तव्याप्तिरुक्ता, व्याप्तिकृततद्गतदोषस्पर्शशङ्कां व्युदस्यति "सर्वजिष्णव" इति, कथं विष्णोः कारणत्वं हिरण्यगर्भादीनां हि सृष्ट्यादिकारणत्वमवगम्यत इत्यत्राह "नम" इति, तत्तच्छरीरको विष्णुरेव सृष्ट्यादिकं करोतीत्यर्थः, रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवानित्युक्तविष्ण्वाख्यावतारविग्रहद्वारा भगवत्पर्यन्तो हरिशब्दः हिरण्यगर्भशङ्करशब्दौ जीवद्वारा भगवत्पर्यन्ताविति "ब्रह्माद्याः सकलादेवा मनुष्याः पशवस्तथा विष्णुमायामहावर्तमोहान्धतमसावृताः" इति हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा इति हिरण्यगर्भो भगवानित्यारभ्य मूर्त्तमेतद्धरेरूपं भावनात्रितयात्मकम् "अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इत्याद्येतत्प्रबन्धस्थश्लोकतात्पर्यानुरोधात् "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ तदादर्शितपन्थानौ सृष्टिसंहारकारकौ । तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केन चित्क्वचिदि"ति भारतादिवचनैकार्थ्याच्च निश्चीयते, हिरण्यगर्भादिसामानाधिकरण्यं व्याप्तिकृतमिति सूचयति "वासुदेवाये"ति, ब्रह्मशिवमध्यस्थोऽप्यप्र-

च्युतस्वभाव इत्याह "ताराये"ति, यद्वा तेषु त्रिष्वप्ययमेव मोक्षप्रद इत्यर्थः । अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्म जरामरणसंसारमहाभयात्तारयति तस्मादुच्यते तारमिति श्रुतेः, "ब्रह्मविष्णुशिवा ब्रह्मन्? प्रधाना ब्रह्मशक्तय इत्यादिभिः विष्णोः परं तत्त्वं विष्णोश्चतुर्मुखादिसाम्यं च न शङ्कनीयं, शक्तिरपृथक्सिद्धविशेषणं तत्र धर्मिण्यसमानविभक्तिनिर्दिष्टे धर्मिपर्यन्तस्यापि शब्दस्य धर्ममात्रपरत्वं दृष्टं पटस्य शुक्ल इत्यादिषु, तथा विष्णुशब्दो विशेषणभूतविग्रहमात्रपरः, असमानविभक्तिना ब्रह्मशब्देन धर्मिणः पृथङ्निर्दिष्टत्वात्, ब्रह्मणः शक्तयो ब्रह्मशक्तयः अतो ऽसमानविभक्तिनिर्दिष्टत्वमिति । यद्वा भगवतो देवमनुष्यादिशब्दव्यपदेशवत् शक्तिविभूत्यादिशब्दव्यपदेशो ऽपि विभूतिसाजात्यादिति, यथाऽऽहुः श्रीवत्साङ्कमिश्राः "सजातीयस्तेषामिति तु विभवाख्यामपि भज"न्निति, अतो यथोक्त एवार्थः । अथ केवलप्रकृतिकारणव्यावृत्त्यर्थं प्रकृतिविशिष्टपरमात्मानं नमस्करोति "एकानेके"ति, कारणावस्थायामेकः कार्यावस्थायामनेकः । अथ धीस्थां कार्यावस्थामाह 'स्थूले"ति, तथा बुद्धिस्थां कारणावस्थामाह "अव्यक्ते"ति, तत्राप्यप्रच्युतस्वभावत्वमाह "मुक्तिहेतव"इति, अथ कालविशिष्टमाह "सर्गे"ति, कालस्य वक्ष्यमाणविशेषणोपपत्तेः प्रकरणस्य विशिष्टपरत्वाद्विशेषणान्तरविशिष्टतायाः प्रतिपादितत्वेन कालविशिष्टताकथनपारिशेष्यात् तदप्रतिपादने अपेक्षितविध्यभावप्रसङ्गात् केवलं ब्रह्मस्वरूपकारणपरत्वे अण्डान्तर्गतसर्गादेरुक्तत्वादण्डबहिर्भूततत्त्वसर्गादेर्वक्ष्यमाणत्वाच्च पौनरुक्त्यप्रसङ्गाद्विस्तरे च प्रधानपुरुषव्यक्तकालानां "व्यक्तं विष्णुस्तथा ऽव्यक्तं" "पुरुषः काल एव च" तथा पुरुषरूपेण कालरूपेण च स्थितं ब्रह्मा दक्षादयः काल" इत्यादिभिर्व्यक्ताव्यक्तादिभिस्सह वक्ष्यमाणत्वादयं श्लोकः कालपर एव, अचिद्विशिष्टवाचिश्लोकानन्तर्यादस्य श्लोकस्य कालपरत्वमुचितम् । उत्तरश्लोकः समष्टिजीवपरव्यष्टिजीवपरश्लोकसाहचर्यात् कालस्य सर्गस्थितिविनाशमूलभूतत्वं ब्रह्मा दक्षादयः कालः विष्णुर्मन्वादयः कालः रुद्रः काला-न्तकाद्याश्चेत्यादिषु सिद्धं, जगन्मयः—अवच्छेदकतया अवच्छेद्यतया च जगत्प्रचुरः । अथ तेजःसमष्ट्यात्मना ऽवस्थितं नमस्करोति 'आधारभूतमि"ति, अचेतनस्य चेतनःस्व-

रूपेणाधारभूतः "एवमेवैता भूतमात्रा प्रज्ञामात्रास्वर्पिताः" जीवभूतां महाबाहो ययेदं धार्यते जग"दिति वचनात् अणीयस्त्वं प्रकृतेरपि व्यापनयोग्यसूक्ष्मत्वम्। यद्वा विकासाणुस्वरूपैश्चेत्युक्तप्रकारेण सर्गदशायामिव ज्ञानविकासाभावादणीयस्त्वमेवेत्यर्थः। सर्वभूतस्थं—भवतीति भूतं पृथिव्यन्तेषु सर्वभूतेष्ववस्थितम् । अनन्तरं चेत्रव्यष्टिविशिष्टं नमस्करोति "ज्ञाने"ति, हिरण्यगर्भेत्यादिभाष्ये निर्दिष्टेष्वर्थेष्वयं श्लोकः किं विशिष्टपरमात्मपर इति शङ्कायां समासान्तर्गतं प्रस्तुतश्लोकार्थं विविच्य दर्शयति—

मू० तत्र ज्ञानस्वरूपमित्ययं श्लोकः चेत्रव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः स्वभावमाह तस्मात्नाच निर्विशेषवस्तुप्रतीतिः, यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रं तर्हि "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः कथं सर्गादिकर्तृत्वं ब्रह्मणो ऽभ्युपगम्यते" इति चोद्यं "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतो ऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः भवन्ति तपतां श्रेष्ठ ? पावकस्य यथोष्णते"ति परिहारश्च न घटते ॥

टी० "तत्रे"ति, परमात्मनः सद्वारक एव भ्रमाऽन्वय इत्यर्थः। ततः किमित्यत्राह "तस्मादि"ति, निर्विशेषज्ञानपरत्वे प्रश्नोत्तरवरलाभकथनानुपपत्तिमुखेनोपक्रमविरोध उक्तः। अथोपरितनाऽध्यायगतचोद्यपरिहारानानुगुणत्वमुच्यते "यदी"ति, यद्वा शास्त्रारम्भोपयोगिप्रश्नोत्तरानुपपत्तिरुक्ता इदानीमेतत्प्रश्नोत्तरविशेषानुपपत्तिरुच्यते "यदी"ति, पूर्वाध्याये जुषन् रजोगुणमित्यादिना गुणान्वये कथितेऽपि निर्गुणस्येति चोदयतोऽयमभिप्रायः गुणान्वयस्य सद्वारकत्वात् स्वयं निर्गुण इति निर्विशेषपत्ते अप्रमेयस्येत्यादिपदवैयर्थ्यं, निर्गुणस्येति पदेनैव निर्विशेषत्वसिद्धेः परिपूर्णत्वादिगुणानभ्युपगमाच्च अप्रमेयादिपदान्तरसमभिव्याहार एव निर्गुणशब्दोपस्थापितनिषेधस्य संकुचितविषयत्वसाधकः। न घटत इति सर्गाद्या भावशक्तय इति सर्व-

शक्तियोगेन चोद्यस्य परिहारान्निर्विशेषपक्षानु गुणत्वमिति भावः। तर्हि कथं चोद्यपरिहारौ स्यातामित्यत्राह–

मू० तथा हि सति ब्रह्मणो निर्गुणस्य कथं सर्गादिकर्तृत्वं? ब्रह्मणो न पारमार्थिकः सर्गः, अपितु भ्रान्तिकल्पित इति चोद्यपरिहारौ स्याताम् उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्ताऽपरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसंबन्धानर्हस्य कथं सर्गादेः कर्तृत्वमभ्युपगम्यते? इति चोद्यं दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव

टी० "तथा हि सती"ति, निर्गुणस्य ब्रह्मण इत्यनेन पदान्तरवैयर्थ्यमभिप्रेतं, निर्विशेषस्य कर्तृत्वानुपपत्तिचोद्ये कृते कर्तृत्वस्य पारमार्थ्ये सति हि तदनुपपत्तिः, अपरमार्थत्वाद्धि घटत्वमेव भूषणमिति परिहारो वक्तव्य इत्यर्थः किमर्थाविमौ चोद्यपरिहारौ यद्ययमर्थो न प्रतिपाद्य इति शङ्कायां स्वयमेव तच्चोद्यपरिहारशरीरमाह "उत्पत्त्यादी"ति, निर्गुणस्येत्यादिविशेषणानां विपरीताकारैः कर्तृत्वस्य व्याप्तिं कथमित्यनेनाभिप्रेतां दर्शयति सत्त्वादिगुणयुक्तस्येत्यादिना, सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्यत्वानि निर्गुणत्वादीनां यथाक्रमं विपरीताकाराः, अमलात्मन इत्यस्य विपरीताकारोऽपि कर्मवश्येत्यनेनार्थसिद्धः अमलात्मत्वममलस्वभावत्वं कर्मसंबन्धानर्हत्वं तद्विपरीताकारः कर्मसंबन्धार्हत्वं, तच्च कर्मवश्यशब्देनार्थसिद्धं कर्मसंबन्धार्हत्वकार्यं हि कर्मवश्यत्वम्। निर्गुणस्येत्यादिपदानां यथाक्रममर्थमाह सत्त्वादिगुणरहितस्येत्यादिपदैः, कर्मसंबन्धानर्हस्येत्यनेनामलात्मन इति पदं व्याख्यातं भवति। अकर्मवश्यत्वं मुक्तस्यापि विद्यते स पूर्वावस्थायां कर्मसंबन्धित्वात्तदर्हः अतस्तद्व्यावर्त्तकं कर्मसम्बन्धानर्हत्वममलात्मत्वम्।

मू० जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत्सर्वशक्तियोगो न विरुध्यत इति परिहारः, 'परमार्थस्त्वमेवैक

इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति अपि तु कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणाऽवस्थितस्यापारमार्थ्यम् ।

टी० अकर्मवश्यत्वं कर्मकृतसुखदुःखभाक्त्वाभावः, कर्मवश्यविसजातीयत्वं कर्मसम्बन्धानर्हत्वं सर्गादिकर्तृत्वे गुणत्रयवश्यत्वसापेक्षत्वकर्माधीनफलभाक्त्वकर्मसम्बन्धार्हत्वप्रसङ्ग इति विशेषविरोधप्रसञ्जनेन चोद्यम् अग्नेर्द्रव्यत्वेऽनुष्णत्वप्रसङ्ग इतिवदयं तर्को धर्मिग्राहकप्रमाणबाधितः, अतो विजातीयस्य धर्मिणो विजातीयधर्मवत्त्वं युक्तम् अग्नित्वे सत्यपि वैद्युताग्नेर्जलनिर्वाप्यत्वाभाववत् अतः सर्वविजातीयस्य ब्रह्मणः सर्वशक्तियोग उपपद्यत इति परिहार इत्यर्थः । शक्तयः सर्वभूतानामिति ग्रन्थस्यायमक्षरार्थः अचिन्त्यज्ञानगोचरा अतर्क्यप्रमितिसिद्धाः सर्गाद्याः सर्गादिगोचराः, भावशक्तयः—वस्तुशक्तयः ब्रह्मणो वस्तुशक्तय इति निर्देशोब्रह्मतादात्म्यमिति वत् । यद्वा ब्रह्मणो भावशक्तयः ब्रह्मणो वस्तुत्वप्रयुक्ताः सत्ताप्रयुक्तानिरुपाधिकाः शक्तय इत्यर्थः । यद्वा भावशब्दः स्वभावपरः स्वाभाविक्यः शक्तय इत्यर्थः । अथ चतुःश्लोकीं व्याचष्टे "परमार्थे" इति, कृत्स्नस्य ब्रह्मपर्यन्तत्वेन तच्छरीरत्वात्कृत्स्न शरीरं ब्रह्मैव परमार्थः, अतत्पर्यन्तो मिथ्येत्यर्थः । जगतः पते इत्याकाशव्यावृत्तिः, येन व्याप्तमिति नृपव्यावृत्तिः, अनेन जगतः शरीरलक्षणं दर्शितं भवति, नियाम्यत्वधार्यत्वशेषत्वेष्वन्यतमं व्याप्यत्वसहचरं हि शरीरलक्षणद्योतकं जगच्छरीरक? त्वदन्योमिथ्येत्युक्ते अतत्पर्यंतस्य स्वतन्त्रवस्त्वन्तरस्यैव मिथ्यात्वं स्यात् न तु जगस्तत्तच्छरीरभूतस्य, यथा हे भूपते? त्वदन्योनास्तीत्युक्ते न भूर्मिथ्या भवति तत्तुल्यराजान्तरस्यैव तु मिथ्यात्वं तद्वत् । यद्वा एकशब्दः प्राधान्यपरः "एकाद्राकिनि चायसहाय" इत्यत्रासहायपदव्यवच्छेद्यत्वं हि प्राधान्यं ब्रह्मणश्च प्राधान्यं जगत्प्रति शे[1]षित्वरूपं तदानीं नान्योऽस्तीति प्रधानभूतोऽन्यो निषिध्यते, न त्वप्रधानमर्थान्तरम् । उक्तार्थस्योपपादकं व्याप्यत्वप्रतिपादकमुत्तरार्द्धमित्याह "तदेवे"ति, तत्र फलितमर्थमाह "येने"ति, येन—यस्मादित्यर्थः, त्वदन्यः—अत्वदात्मकः त्वया-

१ विशेष्यत्वमिति पा० ।

ऽत्मतया व्याप्तत्वात् सर्वं त्वदात्मकं त्वच्छरीरमिति त्वदन्यः अत्वदात्मको नास्ति, तस्मात्सर्वशरीरस्त्वमेव परमार्थ इत्यर्थः। तवैष महिमेति श्लोकार्द्धैकदेशश्चोक्तार्थप्रतिपादक इत्याह "अत" इति, महिम्नो व्याप्तिरूपत्वाद् या सर्वव्याप्तिरित्युक्तं न तु व्याप्तौ तात्पर्यात्, व्याप्ते र्महिमत्व एव तात्पर्यम्। यद्वा व्याप्ते रुक्तार्थोपपादकत्वं महिमसमभिव्याहारादित्याह—

श्रु० तदेवोपपादयति "तवैष महिमा येन व्याप्तमेतच्चराचमिति, येन त्वयेदं चराचरं व्याप्तम् अतस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्ति अतः सर्वात्मतया त्वमेवैकः परमार्थः अत इदमुच्यते तवैष महिमा या सर्वव्याप्तिरिति अन्यथा तवैषा भ्रान्तिरिति वक्तव्यं जगतः पते? त्व मित्यादीनां पदानां लक्षणा च स्यात्, लीलया महीमुद्धरतोभगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च यतः कृत्स्नं जगत् ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव रूपं तस्मात्त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत्केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह यदेतद्दृश्यत इति।

टी० "अत इदमुच्यत" इति, तस्य परप्रातिकूल्यं दर्शयति "अन्यथे"ति, व्याप्यव्याप्त्यादेर्मिथ्यात्वे सर्वव्याप्तिस्तव महिमेति न वाच्यमपि तु भ्रान्तिरिति वक्तव्यमित्यर्थः कृत्स्नापारमार्थ्यपरत्वे दूषणान्तरद्वयमाह "जगतः पते" इति, लक्षणा—अधिष्ठानलक्षणा, ब्रह्मस्यात्मत्वेन स्वतन्त्रतायाः प्रत्यक्षसिद्धत्वात्तद्विरुद्धं ब्रह्मपर्यन्तत्वं न शास्त्रं प्रतिपादयति "आदित्यो यूप" इति वदिति शङ्कायाम् अन्यथा सिद्धाया अपरोक्षरूपाया अपि स्वातन्त्र्यप्रतिपत्तेः परोक्षरूपाप्यनन्यथा सिद्धा पारतन्त्र्यप्रतिपत्तिर्बलीयसीत्यभिप्रायेण द्वितीयश्लोकमवतारयति "यत" इति, पारतन्त्र्यप्रतिपत्तिः परमात्मप्रतिपत्तिसापेक्षा तदभावात्तत्प्रतिपत्त्यभाव इत्यन्यथा सिद्धा स्वातन्त्र्यप्रतिपत्तिरित्यर्थः

"केवलं देवमनुष्यादिरूप"मिति, परमात्मशरीरत्वरहितजगद्रूपमात्रमित्यर्थः। अयमर्थः, यथा देहात्मभ्रमो ऽपरोक्षोऽपि परोक्षशास्त्रज्ञानेन बाध्यते तथा स्वातन्त्र्यभ्रमोऽपीति देहातिरिक्तं स्वात्मानमप्यजानतः परमात्मपारतन्त्र्याप्रतिपत्तिः किं पुनर्न्यायसिद्धेति च दर्शयितुं तृतीयश्लोकारम्भः, तं व्याचष्टे—

सू० न केवलं वस्तुनस्त्वदात्मकं जगत् देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम इत्याह "ज्ञानस्वरूपमखिल"मिति, ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगच्छरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं पश्यन्तीत्याह "ये तु ज्ञानविद" इति,

टी० "न केवल"मिति, चिदचिदात्मके जगति चेतनरूपं जगद्विवक्षितं ज्ञानस्वरूपमखिलं जगदिति जगच्छब्देन, यथा "त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्यय"मित्यत्र ज्ञानस्वरूपस्य जडरूपार्थस्वरूपत्वबुद्धिर्भ्रम इत्युक्तेऽर्थस्वरूपस्यार्थस्वरूपत्वबुद्धिर्न भ्रमः स्यादिति च सिद्धं देहात्मभ्रमः संसर्गकृतः जलमुष्णमितिवत् आत्मासाधारणधर्मज्ञानस्फुरणेऽपि तस्यासाधारणत्वाज्ञानात् भ्रमोपपत्तिः, चतुर्थं व्याचष्टे "ये पुनरि"ति, "विज्ञानं चाविज्ञानं चे"ति विज्ञानशब्दस्यात्मवाचित्वात् ज्ञानस्वरूपात्मविद इत्युक्तम् । अबुद्धय इति पूर्वश्लोकोक्तार्थप्रतियोगित्वेन ज्ञानविद इत्युक्तमिति स्मारयति "बुद्धिमन्त" इति, अयोगिन इत्यस्य प्रतियोगित्वेन शुद्धचेतस इत्युक्तमिति सूचयति "योगयोग्यपरिशुद्धमनस" इति, योगयोग्यत्वे हेतुः परिशुद्धत्वं "मनसा तु विशुद्धेन हि

भगवतः साक्षात्काररूपोपासननिष्पत्तिः श्रूयते, मनोविशुद्धिश्च कर्मयोगात् योगेन योग्यतापरिशुद्धिरिति वाऽर्थः, पूर्वश्लोके अखिलजगच्छब्देन चेतनरूपं जगद्विवक्षितम् अस्मिन् श्लोके ऽखिलजगच्छब्देन अचिद्रूपं जगद्विवक्षितं कृत्स्नापारमर्थ्यं विवक्षितमिति पक्षे प्रथमश्लोके संक्षिप्तदूषणमनुक्तदूषणेन सह विस्तरेण सर्वश्लोकसाधारणमाह–

**भू० अन्यथा श्लोकानां पौनरुक्त्यं, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च, तस्यात्मपरदेहेषु सतो ऽप्येकमयमित्यत्र सर्वेषात्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते देवमनुष्यादिविविधविचित्रपिण्डेषु वर्त्तमानं सर्वमात्मवस्तुसममित्यर्थः ।**

टी० 'अन्यथे' ति, स्वाऽन्यभ्रमो देहात्मभ्रमश्चेति विभागाभावेन पौनरुक्त्यमित्यर्थः, लक्षणा–परमेश्वर ? जगतः पते ? तव महिमा त्वमित्यादिशब्दानां लक्षणा त्वं–शब्दो हि स्वाभिमुखाहमर्थान्तर[1]माह अतस्तस्य लाक्षणिकत्वम् अर्थविरोधः प्रत्यक्षादिभिरबाध्यत्वेन सिध्यतोऽसत्यत्वे प्रमाणविरोधः, तिरोधानानुपपत्तिस्तर्कविरोधः, उभयलिङ्गत्वविरोधश्च प्रकरणविरोधः, स्तुतिविरोधः, रोमान्तरस्था मुनयः स्तुवन्तीति हि प्रकृतं स्तोतृणामद्वैतज्ञानवत्त्वे स्तुत्यनुपपत्तिस्तदभावे च नितरां शास्त्रतात्पर्यविरोधः, उपक्रमोपसंहारावान्तरप्रकरणोपक्रमोपसंहारादिविरोधः । अथादिभरतचतुःश्लोकीं परस्परव्यवहितां व्याचष्टे "तस्येत्यादिना, ब्रह्माद्वैतं जीवाद्वैतं चेत्यद्वैतं द्विविधं शास्त्रप्रतिपाद्यं तत्र ब्रह्माद्वैतं प्रकाराद्वैतं जीवाद्वैतं

---

[1] स्वाभिमुखाहमर्थवाचीति पा० ।

प्रकाराद्वैतं कोऽत्र नियामक ? इति चेत्, उच्यते ब्रह्मप्रकरणेषु सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात् सामानाधिकरण्यस्य च प्रकारभेदविशिष्टप्रकार्यैकत्वपरत्वात् "एकः सन् बहुधा विचार" इति प्रकारबहुत्वस्य कण्ठोक्तत्वादैक्यविधिशेषस्य "नेह नानास्तीत्यादिभेदनिषेधस्य विहितैक्यविरोधिभेदविषयत्वात्सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वेन न प्रकारबहुत्वनिषेधपरत्वात् "न तत्समश्चाभ्यधिकश्च दृश्यते" इति ब्रह्मतुल्यप्रकार्यन्तरनिषेधकण्ठोक्त्या च प्रकार्यद्वैतमेव ब्रह्माद्वैतं जीवात्मबहुत्वस्य श्रुतिसिद्धत्वात्, अन्यथा बद्धमुक्तव्यवस्थाऽनुपपत्तेरुपदेशानुपपत्तेः, सुखादिव्यवस्थाऽनुपपत्तेः "पुमान्न देवो न नरो न पशुर्न च पादपः । चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ।देवादिभेदे ऽपध्वस्ते" इत्यादिभिर्भेदविशेषनिषेधस्य कण्ठोक्तत्वात्, मुक्तानां साम्यवचनात्, "अहं त्वं च तथाऽन्ये च । तत्र त्वमहमप्यत्र तन्मनस्समतालम्बीत्यादिप्राकरणिकवचनानुरोधादेको व्रीहिरितिवदेकशब्दस्यैकजातीयपरत्वोपपत्तेर्वक्ष्यमाणश्लोकस्य शब्दस्वभावाच्च जीवाद्वैतं प्रकाराद्वैतमेव "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यस्य वाक्यस्य कामविधानपरत्वान्न नित्यत्वबहुत्वयोस्तात्पर्यमस्ति, अस्ति चेत् वाक्यभेदप्रसङ्गादिति चेत् न यदाऽऽग्नेयोऽष्टाकपाल इत्यत्र अष्टाकपालत्वविशिष्टाग्नेयपुरोडाशविधिवद्विशिष्टविधिपरत्वाद्वाक्यस्य, नित्यबहुचेतनविशिष्टकामप्रदानविधिपरं हीदं प्रतीयते, अनित्यानामल्पानां कामप्रदानादपि नित्यानां कामाप्तानां बहूनां कामप्रदाने कथिते हि कामप्रदानस्यातिशयो भवति जीवबहुत्वस्य लोकसिद्धत्वान्न तत्र शास्त्रतात्पर्यम् "अप्राप्ते हि शास्त्रमर्थव" दिति चेन्न संसृष्टस्य हि बहुत्वप्रतीतिर्लौकिकसिद्धा परिशुद्धात्मस्वरूपबहुत्वस्य लोकसिद्धत्वाभावात् तत्र हि शास्त्रतात्पर्यं सम्भवति, औपाधिकाकारस्यानित्यत्वान्निष्कृष्टस्वरूपस्य नित्यत्वात् नित्यत्वसमानाधिकरणबहुत्वे ऽभिहिते परिशुद्धात्मस्वरूपबहुत्वं ह्युक्तं भवति, उपदेशोऽपि न सम्भवति गुरुर्भ्रान्तश्चेन्नोपदेशः अभ्रान्तश्चेत् द्वैतप्रतीत्यभावान्नितरां, द्वैतप्रतीतावपि दर्पणस्थं स्वात्मनः प्रतिबिम्बं प्रति च विवक्षितस्य नोपदेशः सम्भवतीति,

सुखदुःखादिव्यवस्थया चात्मभेदसिद्धिः, । ननु सुखदुःखव्यवस्था नाम किं सुखदुःखव्यक्तिबहुत्वं ? मुत तदाश्रयबहुत्वम् ? एकस्यैवानेकसुखव्यक्तिदर्शनात्सुखादिस्वरूपबहुत्वं नात्मैक्यविरोधीति न व्यवस्था, आश्रयभेदश्चेत्साध्याविशिष्टो हेतुरिति चेन्न त्वदुक्तोभयप्रकारविलक्षणत्वाद्व्यवस्थायाः सम्प्रतिपन्नैकाश्रयेषु सुखदुःखादिषु प्रतिसन्धानं दृष्टं प्रतिबन्धकाभावे सत्येकाश्रयत्वेन सुखादिप्रतिसन्धानाभावो व्यवस्थेति परिहारः तस्येति, एकमयमित्यत्र मयट् स्वार्थिकः । यद्वा एकशब्दो भावप्रधानः ऐक्यं तत्प्रचुरमेकमयं शुद्धावस्थस्यात्मनो ह्यैक्यप्राचुर्यं । न तु संसृष्टस्य तस्य बुद्धिसुखदुःखाद्यान्तरभेदेन देवत्वादिबाह्यभेदेन चैक्यप्राचुर्याभावात् एक–शब्दः समानवाची "एकोव्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते प्रजा" इत्यादिषु तथा प्रयोगदर्शनात्, देवमनुष्यादिप्रकृतिपरिणामविशेषरूपेत्यनेन "दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः । पुमान्न देवो न नरो पशुर्न च पादपः शरीराकृतिभेदस्तु भूपैते कर्मयोनय" इति, वचनयोरैकार्थ्यं दर्शितं "पिण्डः पृथग्यतः पुंस" इति प्राकरणिकवचनं स्मारयति पिण्ड–शब्दः, एकमयमित्यात्मन्येकत्वं विधाय भेदे निषिध्यमाने आत्मस्वरूपभेद एव निषेध्यः स्यादिति चेत्स्यादेवं यदि विधीयमानमेकत्वं व्यक्त्यैक्यं स्यात्तु प्रकारै[1]क्यम् अतो भेदनिषेधो वैजात्यनिषेध एवेति भावः । द्वैतिनोऽतथ्यदर्शिन इति सामान्येनोक्ते कथं देवादिद्वैतनिषेध इत्युच्यत इति चेत् कथं सामान्येन द्वैतनिषेधे प्रतीते आत्मद्वैतनिषेध इत्युच्यते न पिण्डात्मनोर्भेदनिषेधः पिण्डात्मनोर्भेदस्य प्रामाणिकत्वादिति चेत् आत्मभेदस्यापि प्रामाणिकत्वान्न तद्भेदनिषेधः, अपि तु देवादिभेदनिषेध इति भावः । आत्मगतद्वैतमप्रतिषिद्धं चेत् "आत्मा शुद्धोऽक्षरः शान्तः" "विज्ञानं यज्ञं तनुत" इत्येकवचनं नोपपद्यते जातावेकवचनं चेद्देहशब्देऽप्येकवचनं स्यादिति शङ्का च देवमनुष्यादीतिपदेन परिहृता देवादिष्ववान्तरभेदविवक्षया विविध–शब्दः, तत्राप्यनेकविधत्वविवक्षया विचित्र–शब्दः, आत्मसु जात्येकत्वादेकवचनं पिण्डेष्ववान्तरजातिबहुत्वाद्बहुवचनमित्यभिप्रायः । साम्ये प्रमाणमाह–

---

१ तत्तु प्रकारैक्यमिति पा० ।

मू० यथोक्तं भगवता "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इति, "निर्दोषं हि समं ब्रह्मे"त्यादिषु तस्यात्मपरदेहेषु सतोऽपीति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात् "यद्यन्योऽस्ति परः कोऽपी"त्यत्रापि नात्मैक्यं प्रतीयते यदि मत्तः कोऽप्यन्य इत्येकस्मिन्नर्थे पर-शब्दान्य-शब्दयोः प्रयोगायोगात्

टी० "यथोक्त"मिति, बहुत्वस्य विहितत्वात्साम्यप्रतिपादनाच्चात्मव्यक्तिभेदनिषेधोऽनुपपन्न इत्यर्थः, हेत्वन्तरं चाह "तस्ये"ति, अन्यथाऽर्थश्चेदेतच्छ्लोकस्यपदानां व्याघातः स्यादित्यर्थः। उक्तत्वादिति सममित्यर्थः इत्यन्वयः, एकवचनोक्तौ हि जातावेकवचनमिति निर्वाहः, अन्यनिषेधपरस्य वचनस्यान्यथा निर्वाहायोगादात्मैकत्वसिद्धिरिति शङ्कायां यद्यन्योऽस्तीत्यादिश्लोकस्यार्थमाह "यदी"ति, एकस्मिन्नर्थे द्वौ द्वौ शब्दौ प्रयुक्तौ स्यातन्नये तेनान्यतरशब्दस्याकारपरत्वात्नात्मभेदनिषेध इति परिह्रियते तत्र द्वयोः शब्दयोः कोऽर्थ ? इत्यत्राह-

मू० तत्र पर-शब्दः स्वव्यतिरिक्तात्मवचनः, अन्य-शब्दस्तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः, एतदुक्तं भवति यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानैकाकारादन्याकारोऽस्ति तदाऽहमेवमाकार अयञ्चान्याऽकार इति शक्यते व्यपदेष्टुम् ।

टी० "तत्रे"ति, पर-शब्देन धर्मिणमनूद्य तस्य शब्दान्तरोपस्थापिताकारान्तरान्वयो निषिध्यत इत्यर्थः । एषोऽहमयञ्चान्य इति वक्तुमशक्यत्वं कथं प्रत्यक्त्वपराक्त्वे भेदकधर्मौ हि विद्येते? इति चेत् नैवम् प्रत्यक्त्वपराक्त्वयोः स्वपरापेक्षया सर्वात्मनां साधारणतया व्यावर्तकत्वाभावान्पवं देवादिष्वन्यतमोऽयमित्यभिप्रायेण तद्विशेषबुभुत्सया हि सौवीररा-

जेनादिभरतः पृष्टः, अतो देवाद्याकारनिषेधपरा इमे शब्दा इति भावः। एवं पदार्थे सति श्लोकेन किमुक्तं भवतीति शङ्कायां वाक्यार्थं योजयति "एतदुक्त"मिति, एष इति शब्दस्यार्थमाह "एवमाकार" इति, अन्य–शब्दार्थमाह "अन्यादृशाकार" इति, आकारैक्यं नामाकाराणां सौसादृश्यमित्यभिप्रायेणैवमाकारः अन्यादृशाकार इत्युक्तम्, अन्यथा स्वरूपमात्रप्रतिपत्तिरेकेनैव पदेन सिद्धेति पदान्तरवैयर्थ्यप्रसङ्गात्पदान्तरमाकारपरमित्यर्थः। अस्यार्थस्य विपर्यये पर्यवसानमुत्तरश्लोकोक्तं सोऽनुदाहृतः तदर्थमाह–

मू० न चैवमस्ति सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति वेणुरन्ध्रविभेदेनेत्यत्राप्याकारवैषम्यमात्मनां न स्वरूपकृतमपि तु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते नात्मैक्यं, दृष्टान्ते चानेकरन्ध्रवर्त्तिनां वाय्वंशानां न स्वरूपैक्यम्, अपि त्वाकारसाम्यमेव, तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः॥

टी० "न चैव"मिति, अयं हि स श्लोकः "यदा समस्तभूतेषु पुमानेकोव्यवस्थितः। तदा हि को भवान् सोऽहमित्येतद्विफलं वच" इति अत्रैकशब्द आकारैक्यपरः स्वयंप्रकाशत्वानित्यत्वाणुत्वादिस्सर्वात्मसाधारणः, व्यावर्त्तकदेवाद्याकारस्तु नात्मन्यस्मि व्यावर्त्तकाभावात्तद्वाचिशब्दनिर्देशोऽनुपपन्नः प्रत्यक्त्वपराक्त्वपरोक्षत्वापरोक्षत्वादीनि न व्यावर्त्तकानीति को भवानिति प्रश्नस्तदतिरिक्ताकाराभिप्रायः, न हि भवानिति प्रश्नः भवच्छब्दो धर्मिमात्रपरः, किं शब्दो व्यावर्त्तकदेवाद्याकारपरः, तस्मात्तदतिरिक्ताकाराभावेन न तद्वाचिशब्देन निर्देश उपपद्यत इत्यर्थः। ज्ञानैकाकारत्वेन समानत्वादेवेति पूर्वोक्तादेवेति भावः। उक्तनिर्वाहगोचरं दृष्टान्तमुखेनाद्वैतपरत्वेन परोक्तस्य श्लोकस्यार्थमाह "वेणुरन्ध्रे"ति, स्वत एकाकाराणामुपाधिवशादवान्तरभेदसद्भावमात्रे दृष्टान्तोपन्यासः, अन्यथा सर्वथा साधर्म्याभ्युपगमे हि आत्मनोऽचित्त्वाकाशकार्यत्वादिकमपि स्यात्, तद्धि प्रमा-

णान्तरविरोधात् त्यज्यते तथा दृष्टान्तगतमाकारान्तरमपीति भावः । तथाऽसौ परमात्मन इत्युक्ते षड्जादि च सञ्ज्ञाभेदो मा भूदित्यभिप्रायेणाह—

मू० एवमात्मनां देवादिसंज्ञाभेदः, तैजसाप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव न स्वरूपैक्यं, तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः ॥

टी० "एवमात्मनां देवादिसञ्ज्ञाभेद" इति, भेदषड्जादिसंज्ञक इति पाठे सत्यपि भेदः षड्जातिसञ्ज्ञाभेद इति व्याख्यातं, दुरवगमषड्जादिरूपभेदप्रतिपत्तिसौकर्यस्य सञ्ज्ञाभेदाधीनत्वादिति भावः। दार्ष्टान्तिकेऽपि तथैव दृष्टान्ते व्यक्तिबहुत्वं किमस्तीति शङ्कायां वाय्वंशानामनेकत्वं बहुतर्केण साधयति "तैजसे"ति, स्पर्शवद्द्रव्यत्वादिति भावः । यत्र त्वाकाशदृष्टान्त उक्तः तत्राप्येकस्यात्मनो दृष्टान्तत्वेनाकाशमुक्त्वाऽऽत्मान्तरे तथात्वमिति मन्तव्यं "सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्मा हि तथैकस्सन् पृथक् दृश"गिति नभसः सितनीलादिभेदः शरत्प्रावृट्संध्यासमयेषु मेघोपश्लिष्टस्य तस्य यथा क्रमभावी तथैकस्यात्मनोऽपि देवादिभेदः क्रमभावीति । यद्वा तत्रापि प्रदेशभेदाङ्गीकारेण सर्वात्मनां दृष्टान्तः स्यात् आकाशस्य प्रदेशभेदानभ्युपगमे घटादेर्विभुत्वमाकाशस्याल्पत्वं वा प्रसजेत् किं घटादेः कृत्स्नाकाशेन सम्बन्धः? उत प्रदेशभेदेन? पूर्वस्मिन् पक्षे घटादेर्विभुत्वमाकाशस्याणुपरिमाणवत्त्वं द्वितीये प्रदेशभेदाङ्गीकार इति वेदान्तिभिर्नभसो निरवयवत्ववादोऽपसिद्धान्तः, वेदान्तेषु तस्यांशभेदेन पञ्चीकरणोपदेशादेकदेशांशेन वायुत्वेन परिणामवादादुत्पत्तिलयदर्शनाच्चेति अत एव "घटध्वंसे घटाकाशो न भिन्नो नभसा यथा । ब्रह्मणा देहविध्वंसे विष्णवाख्येन तथा पुमा"निति शौनकवचनमपि नभस्यंशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैषम्यविरहे दृष्टान्तसमर्पणपरं वेदितव्यं, यथाऽग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेदिति तत्रैव साम्यदृष्टान्ताभिधानात् । अथादिभरतनिगमनश्लोकमाह—

मू० सोऽहं स च त्वमिति सर्वात्मनां पूर्वोक्तं ज्ञानाकारं तच्छब्देन परामृश्य तत्सामानाधिकरण्येनाहंत्वमित्यादीनामर्थानां ज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह—

टी० "सोऽह"मिति, पूर्वोक्तमध्यायचतुष्टयोक्तं स इति पदस्य ज्ञानाकारविशिष्टवस्तुवाचित्वेऽपि विशेषणांशे तात्पर्यं दर्शयितुं सर्वात्मनां ज्ञानाकारमिति विशेषणांशस्य निष्कृष्य निर्देशः, अन्यथा तत्सामानाधिकरण्येनेत्यनन्तरोक्तिविरोधात्, ज्ञानमेवाकार इत्युपसंहरन्निति सोऽहमित्यादिश्लोकानन्तरपूर्वश्लोके "एकं समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यदित्यर्द्धेन सर्वात्मनां भगवच्छरीरत्वस्योक्तत्वात् सोऽहमित्यादिश्लोकस्य च भगवदात्मकत्वनिगमनपरत्वशङ्का स्यात्तच्चायुक्तं प्रकरणस्य शरीरात्मविवेकपरत्वात्तन्निगमनस्य चापेक्षितत्वात्तन्निगमनपरश्लोकान्तराभावादपेक्षितविधेरनपेक्षितविधानायोगाच्चात्मनां देहव्यावृत्तज्ञानैकाकारत्वनिगमनपरोऽयं श्लोक इत्यभिप्रायः । त्यजे भेदमोहमित्यंशस्यार्थमाह "देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजे"दिति, देवादिशब्दो भेदशब्दविवरणरूपः, देहगतदेवत्वाद्याकारभेद आत्मनि भेदमोहहेतुस्तं भेदमोहं परित्यजेत्यर्थः । कृत्स्नभेदनिषेधपरत्वे ऽनिष्टमाह—

मू० अन्यथा देहाद्यतिरिक्तोपदेश्यस्वरूपेऽहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते अहंत्वमादि-शब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न सङ्गच्छते ॥

टी० "अन्यथे"ति, न चाहं त्वमादिशब्दा देहपराः न हि तच्छब्देनात्मानं परामृश्य तेनात्मना देहानामैक्यमुपदिश्यते, नाप्यन्तःकरणपराः न ह्यन्तःकरणानां परमात्मनैक्यं परस्परैक्यं वोपदिश्यते, नापि देहविशिष्टान्तःकरणपराः, न हि देहविशिष्टानामन्तःकरणानामैक्यमुपदिश्यते अतो-

ऽहं त्वमादिशब्दा देहातिरिक्तात्मपरा इत्यभिप्रायेण देहातिरिक्तेत्युक्तम् । "अहं त्वमादिपदानामुपलक्षणत्वादुपलक्ष्ये वस्तुनि न भेद इत्याशङ्क्य परिहरति "अह"मिति, अहं त्वमादीत्यादि–शब्देन सर्वशब्दो विवक्षितः उपलक्ष्येणेत्यौपचारिकनिर्देशः उपलक्ष्यवाचिपदेनेत्यर्थः सर्वमेतदात्मस्वरूपमित्यनेनेति अहं त्वं सर्वमिति त्रयाणामपि पदानात्मस्वरूपशब्देन सामानाधिकरण्यं फलितं तेष्वन्यतमेनाहं त्वमर्थसजातीयार्थवाचिना सर्वमेतदिति पदेनात्मस्वरूपशब्दस्य सामानाधिकरण्यनिर्देशादिति ज्ञापनार्थं सर्वमेतदात्मस्वरूपमित्युपादानं कृतं भाष्ये श्लोके सर्वमेतदात्मस्वरूपमिति प्रदर्शनार्थमुक्तम्, अतोऽहं त्वमादिशब्दानामुपलक्ष्यवाचिकामिमनात्मस्वरूपशब्देन सामानाधिकरण्यादहंत्वमादिशब्दवाच्यानामर्थानामुपलक्षणत्वमसङ्गतं
न हि चन्द्रः शाखा सारसः केदार इत्युपलक्षणोपलक्ष्यशब्दवाचिशब्दानां सामानाधिकरण्यं मुख्यतया दृष्टमित्यर्थः, लक्षणया त्विति चेल्लक्षणैव दोष इति भावः । यद्वा अनेनेति पदमुपलक्ष्यविशेषणं सर्वमेतदात्मस्वरूपमित्यात्मशब्दनिर्दिष्टेनानेनोपलक्ष्येणाहं त्वमादिशब्दानां सामानाधिकरण्यादुपलक्षणत्वमसङ्गतमित्यर्थः, अस्यां योजनायामहं त्वमादिसजातीयार्थवाचिः स्वपदसामानाधिकरण्यनिर्देशस्य हेतुत्वमर्थसिद्धं यद्यहं त्वमादिशब्दा उपलक्ष्यपर्यन्तवृत्तयः तदानीमेवमर्थतया उपलक्ष्यवाचिनाऽत्मस्वरूपमिति पदेन स इति पृथक्सामानाधिकरण्यदर्शनादुपलक्षणवाचकाहंत्वमादिसामानाधिकरण्यवैयर्थ्यमिति अहंशब्दस्यापेक्षिकप्रत्यक्त्वं प्रवृत्तिनिमित्तं त्वंशब्दस्य च चेतनत्वे सत्यभिमुखत्वमात्मशब्दस्य च व्यापनक्षमत्वं, स इति पदस्य प्रकृतज्ञाकारः ।

ननु "स च सर्वमेतदात्मस्वरूपमित्यत्र कथमात्मस्वरूपविशेषणस्य तच्छब्दस्य पुँल्लिङ्गत्वम्, उच्यते "आत्मा शुद्धोऽक्षरः शान्त" इत्यादिषु परज्ञानमयत्वेन प्रकृत आत्मा हि तच्छब्देन परामृश्यते अतो न विरोध इति अचित्संसृष्टं देवादिरूपेण प्रतीयमानं सर्वमेतदात्मस्वरूपं ज्ञानैकाकारः स आत्मेत्यर्थः । चतुर्थपादं व्याचष्टे–

मू॰ सोऽपि यथोपदेशमकरोदित्याह "तस्मात्र भेदं परमार्थदृष्टि"रिति, कुतस्त्वैष निर्णय इति चेत् देहात्मविवेकविषयत्वादुपदेशस्य, तच्च "पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षण" इति प्रक्रमात् "विभेदजनके ज्ञाने" इति च नात्मस्वरूपैक्यपरं, नापि जीवपरयोरात्मस्वरूपैक्यमुक्तरीत्यनिषिद्धम् ॥

टी॰ "सो पी"ति, न जीवब्रह्माद्वैतपरमिदं प्रकरणं, न चात्मस्वरूपबहुत्वनिषेधपरं, प्रकारैक्यपरमिति कथं ज्ञायत? इत्यभिप्रायेणाह "कुतश्चे"ति, परिहरति "देहात्मे"ति, तदपि कुत? इत्यत्राह "तच्चे"ति, देहात्मविवेकपरत्वोपपादनेन जीवपरैक्यपरत्वम् आत्मबहुत्वनिषेधपरत्वं च दत्तोत्तरमेव। अथ शास्त्रोपसंहारगतस्य विभेदजनक इत्यादिश्लोकस्यार्थं वक्ष्यन् अर्थान्तरपरत्वं व्युदस्यति विभेद इत्यादिना, प्रथमं किमात्मस्वरूपैक्यपरमुत? जीवपरैक्यपरमिति विकल्प्य दूष्यते, अत्र च—शब्दाभावादात्मब्रह्मशब्दयोः समानाधिकरण्यं सम्भावितं, तथा सति ब्रह्मशब्दः शुद्धावस्थापरः स्यात्, एवं शुद्धावस्थाज्जीवस्य भेदो नास्तीति जीवस्वरूपैक्यमुक्तं स्यात्, अतः शङ्काऽऽस्पदं भूतमात्मैक्य परत्वं दूषयति "आत्मे"ति, उक्तरीत्या श्रुतिस्मृत्यर्थापत्तिलौकिकार्थापत्त्यादिभिरित्यर्थः। द्वितीयं पक्षं दूषयति—

मू॰ जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न संभवति तथा च श्रुतिः "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति"

"ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्धे।

छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः" ॥

टी० "जीवे"ति, देहात्मनोरिवेति विरुद्धधर्मत्वादित्यर्थः, प्रत्यक्त्वपराक्त्वजडत्वाजडत्वनित्यत्वपरिणामित्वादिभिर्विरुद्धधर्मैर्यथा देहात्मनोर्भेदस्तथाजीवपरयोरपि हेयार्हत्वोभयलिङ्गत्वनियाम्यत्वनियन्तृत्वादिविरुद्धधर्मैरैक्यं हि नोपपद्यते। विरुद्धधर्मत्वे प्रमाणमाह "तथे"ति, तथा–विरुद्धधर्मत्व इत्यर्थः, चो ह्यर्थः, हेतुवाची वक्ष्यमाणहेतूनां पञ्चमी प्रयुक्ता तत्स्थानीयोऽयञ्च–शब्दः समानं वृक्षं शरीरं पिप्पलं कर्मफलम् अभिचाकशीति स्वयमनशन[1]त्वादाशयितृत्वाच्च भृशं भातीत्यर्थः ।

ननु कथमस्य मन्त्रस्य जीवपरमात्मभेदपरत्वम् ? अन्तःकरणजीवपरो ह्ययं मन्त्रः, पैङ्गीरहस्यब्राह्मणेनास्य मन्त्रस्य तथा व्याख्यातत्वात् यथा तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमनश्नन्नन्योऽभिचाकशीति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति स्वाद्वत्तीत्यन्तेन सत्त्वमुक्तम् अभिचाकशीतीत्यन्तेन वाक्येनानश्नन्नन्योज्ञ इति क्षेत्रज्ञोऽपि पश्यतीत्युक्तमिति व्याख्यातत्वमवगम्यते, न च सत्त्वशब्दो जीवपरः क्षेत्रशब्दः परमात्मपर इति वाच्यं सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात्, तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरत्वेन तत्रैव व्याख्यातत्वाच्च येन पश्यतीति करणत्वप्रतीतेः, सत्त्वं ह्यन्तःकरणं स्वप्नदृष्ट्त्वादितरः क्षेत्रज्ञो हि जीवः, अतो द्वा सुपर्णेति मन्त्रोऽयमन्तःकरणजीवपरः, न तु जीवपरमात्मपर इति उच्यते न तावज्जीवपरमात्मपरत्वमस्य मन्त्रस्यापवदितुं शक्यते अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने समाने वृक्षे पुरुषो निमग्न इत्यनन्तरे मन्त्रे जीवपरमात्मनोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैक्यार्थ्याच्च, समानं वृक्षं परिषस्वजाते समाने वृक्षे पुरुषो निमग्न इति तयोरैकार्थ्यं हि प्रतीयते समाने वृक्ष इति मन्त्रे च पुरुषो-

[1] स्वयमनश्नत्वादिति पा० ।

जीवः अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात्, शोचति मुह्यमानः पश्यति वीतशोक इति पदानामस्वारस्यप्रसङ्गाच्च अन्यश्च परमात्मा ईशशब्दवाच्यत्वात् स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च न केवलमुत्तरमन्त्रैकार्थ्याद् द्वासुपर्णेति मन्त्रस्य जीवपरमात्मपरत्वं, किंतु तस्मिन्नेव स्वाद्वत्ति अनश्नन्नन्य इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते, चक्षुः श्रोत्रादीनां द्रष्टृत्वादिवदन्तः करणस्यापि करणत्वादेव भोक्तृत्वं हि न संभवति, जीवस्य च वृक्षशब्दोक्ते देहपरिष्वङ्गदशायामेव अनश्नत्वमपि नोपपद्यते, तर्हि पैङ्गीरहस्यब्राह्मणस्य कोऽर्थः उच्यते सत्त्वं बद्धजीवः द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुष्विति निघण्टुपाठाज्जन्तुपरत्वावगतेर्जन्तुश्चेतनः, प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिण इति पाठात्, न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणै'रिति प्रयोगात् "वन्यान्विनेष्यन्निव दुष्टसत्त्वानित्याद्यर्वाचीनप्रयोगाच्च क्षेत्रज्ञशब्दश्चात्र परमात्मपरः अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः, "विष्णोर्नामसहस्रमित्युपक्रम्य क्षेत्रज्ञोऽक्षर एव चे"ति प्रयोगात् क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च, मोक्षधर्मे "ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।

> प्रविशन्ति द्विजश्रेष्ठ? क्षेत्रज्ञं निर्गुणात्मकम् ।
> सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥
> विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
> एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥
> क्षेत्राणि शरीराणि बीजानि च शुभाशुभे ।
> तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते" ॥

इति प्रयोगात्, यस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोति च कर्माणि स भूतात्मेति चोच्यत" इति प्रयोगाच्च येन स्वप्नं पश्यति इत्यत्र येनेतीत्थंभावे तृतीया येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते ततश्च काठिन्यवान् यो बिभर्त्ति इति पृथिवीद्वारा काठिन्यवत् स्वप्नद्रष्टृत्वं जीवात्मद्वारा परमात्मविशेषणं भवतीति न विरोधः शारीर-

शब्दश्च तस्यैव आत्मेतिवत् स्वव्यतिरिक्तसमस्तचिदचिद्वस्तुशरीरके परमात्मन्युपपद्यते उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च सर्वज्ञस्य तस्यैवोपपद्यते, अतो द्वा सुपर्णेति मन्त्रो जीवपरमात्मपरः ऋतं पिबन्ताविति पानक्रियायां जीवपरयोः प्रयोज्यप्रयोजकभावेनान्वयः पिबन्ताविति शतृप्रत्ययः कर्तृमात्रपरो न कर्तृविशेषपरः, तेन प्रयोज्यप्रयोजकौ द्वावपि कर्तृविशेषाविति तावविशेषेण क्रोडीकृतौ भवतः, अन्यथा अनश्नन्नित्यादिविरोधः स्यात् । यद्वा छत्रिणो गच्छन्तीतिवदजहल्लक्षणा, सुकृतस्य ऋतं फलम् । यद्वा सुकृतस्य लोक इत्यन्वयः तदा सुकृतं तत्फलमुच्यते लक्षणया, एवं पुण्यस्य कर्मणो दूराद्गन्धो वातीत्यत्र, एवमनृतादात्मानं जुगुप्सेदिति पुण्यप्रतियोगित्वेनानृत–शब्दप्रयोगात् गुहां–हृदयगुहां परमे परार्ध्ये इति लोकविशेषणं जीवपरविशेषणं वा छान्दसत्वाल्लिङ्गव्यत्ययः छायाऽऽतपौ–अज्ञसर्वज्ञौ "ज्ञाज्ञौ द्वावजावीशानीशा"वित्यनेनैकार्थ्यात्, ब्रह्मविदः–अध्यात्मविदः, पञ्चाग्नयः त्रिनाचिकेताश्च कर्मविशेषनिष्ठाः ते वदन्ति यथा "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातन"मिति, पिबन्तावित्येतद्विशद्यायाह–

सू० अन्तःप्रविष्टः शास्ता जनानां सर्वात्मेत्याद्याः, अस्मिन्नपि शास्त्रे च

स सर्वभूतप्रकृतिं विकारान्
गुणादिदोषांश्च मुने ? व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा
तेनास्तृतं यद्भुवनान्तराले ॥

समस्तकल्याणगुणात्मकोऽसौ
परः पराणां सकला न यत्र ।
क्लेशादयः सन्ति परावरेशे

अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ? सर्वगे"ति ॥

"भेदव्यपदेशात्" "उभयेऽपि हि भेदेनैनमधीयते" "भेदव्यपदेशाच्चान्यः" "अधिकं तु भेदनिर्देशात्" इत्यादिषु सूत्रेषु च "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" "प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनाऽन्वारूढ" इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् ।

टी० "अन्तःप्रविष्ट" इति, इत्याद्या श्रुतिरित्यन्वयः, न केवलं श्रुतिस्वारस्यात्, अस्मिन्नपि प्रबन्धे दृश्यते इत्याह "अस्मिन्नपी"ति, स सर्वभूतेत्यादिना हेयप्रत्यनीकत्वकल्याणगुणाकरत्वे कथ्यते, जीवस्य हेयास्पदत्वमविद्येत्यादिना उक्तं, सर्वगेति भेदव्यपदेशादिति पूर्वेण सम्बन्धः । न तु सूत्रोपादानम्, उपर्यस्य सूत्रस्य विषयवाक्यानुपादानात् उदाहृतपुराणवचनानां हेतुत्वकथनसापेक्षत्वाच्च श्रुतिवाक्यस्य हेतुत्वं हि च-शब्देनोक्तम् उभयेऽपीत्याद्युपात्तसूत्रद्वयस्य विषयवाक्यम् "य आत्मनी"त्य"धिकन्त्व"त्यादिसूत्रस्य विषयवाक्यं "प्राज्ञेने"ति सूत्रैस्ताभिरविमर्शनिर्णयादित्यर्थं एवमुपनिषत्पुराणसूत्रैर्जीवपरयोर्विरुद्धधर्मत्वमुपपादितम् । अथ ब्रह्मवेद ब्रह्मैव भवतीत्यादिवाक्यानि हृदि निधायास्याऽन्यथा सिद्धिं शङ्कते—

सू० नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः, अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासंभवात्

टी० "नापी"ति, तद्दूषयति "अविद्याश्रयत्वे"ति, अविद्याऽऽश्रयत्वयोग्यत्वम् अविद्या—शब्दः समस्तहेयप्रदर्शनार्थः, आश्रय—शब्दः सम्बन्धपरः हेयसम्बन्धात्यन्ताभावानधिकरणत्वं तद्योग्यत्वं हेयसम्बन्धात्यन्ताभावाधिकरणत्वं तदनर्हत्वं च अनश्नन्नन्य इत्यादिश्रुत्या परमात्मनस्तदनर्हत्वं सिद्धं देशकालसन्निकर्षे सत्यपि तदस्पर्शो हि स्वभावसन्निकर्षाभावात्, स्व-

भावसन्निकर्षाभाव एव ह्ययोग्यत्वं यथा नभसः क्लेदनदहनाद्यनर्हत्वम्, अतो-हेयार्हतदनर्हयोः स्वरूपोप[1]गमेऽपि न स्वरूपैक्यसम्भवः, निग्राह्यस्य पश्चादनुगृहीतस्य निग्राह्यत्वापगमेऽपि निग्रहानुग्रहकर्त्रा पुरुषेण नैकत्वसम्भव इत्यर्थः, कारागृहनिर्मुक्तस्य नियन्त्रा नरपतिना न स्वरूपैक्यं सम्भवतीत्यर्थः । अस्मिन्नर्थे पुराणवचनमाह—

**मू० यथोक्तं "परमात्मात्मनोर्योगः परमार्थ इतीष्यते मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत" इति ॥**

टी० "यथोक्तमि"ति, योग—शब्द ऐक्यपरः, अन्यथा अन्यद्रव्यतां नैतीति तत्प्रतिक्षेपानुपपत्तेः, ननु मिथ्यैतदित्युत्तरत्रान्वयः परमात्मनोर्योगः परमार्थः अन्यद् द्रव्यन्तद् द्रव्यतान्नेतीत्येत् मिथ्येत्यर्थ इति चेत् मैवम् अन्योन्यद्रव्यताऽनुपपत्तेस्सत्यत्वात् इतरथा जडाजडयोस्तादात्म्यप्रसङ्ग ऋग्यजुस्सामनिष्पाद्यं यत्तत्कर्म मतं तवेतिवदिष्यत इत्यनेन पूर्वार्धोक्तार्थस्य परमतत्वद्योतनात् अन्यथेष्यत इति पदवैयर्थ्यात् । किञ्च "परमार्थस्तु भूपाल ? सङ्क्षेपाच्छ्रूयतामिति वक्ष्यमाणपक्षव्यतिरिक्तपक्षाणां निराकरणपरत्वाच्च प्रकरणस्य एतच्छ्लोकपूर्वार्धोक्तसमर्थनपरत्वमुत्तरार्धस्य नोपपद्यते धर्माय त्यज्यत इत्यादिभिर्यन्यैस्तत्तदर्थानां परमार्थत्वं हि निरस्यते स्वतः प्रकृतार्थे स्वरसस्य एतच्छब्दस्य प्रकृतार्थे सत्यपि वक्ष्यमाणपरत्वाश्रयणमप्ययुक्तम् । किञ्च अन्यद्रव्यं तद् द्रव्यतां नैतीति यत् एतन्मिथ्येति हि तदानीमर्थः तथाच सति यतः—शब्दस्य स्वारस्यभङ्गः, यतः—शब्दस्य हि हेतुपरत्वं स्वरससिद्धं न तु यच्छब्दवत्प्रकृतार्थशरीरमात्रपरामर्शित्वम् अन्यद्रव्यं तद्द्रव्यतां नैनीत्येतन्मिथ्येति यतः ततः एवापरमार्थ इत्यन्वये इति शब्दद्वयाध्याहारप्रसङ्गः स चानध्याहारेण निर्वाहे संभवति नोपपद्यते, यदुच्येत पूर्वं पृथग्भूतयोः, परमात्मात्मनोरैक्यं परमार्थ इष्यत इति चेन्मिथ्यैतत् अन्यद्रव्यं हि तद्द्रव्य । नैनीति यतस्तस्मात्पूर्वमपि परमात्मात्मनो भेदो नास्तीति नैवं पूर्वं भ्रान्त्या पृथग्भूतयोरित्यश्रुतत्वेनाध्याहारप्रसङ्गात्, स चानध्याहारेण निर्वाहे संभ-

१ ह्येयोपगमेऽपीति पा० ।

वति नोपपद्यते । किञ्च तस्मात्पूर्वमपि भेदो नास्तीत्यश्रुतवाक्यान्तराध्याहारेण वाक्यस्य पूरणीयत्वं स्यात् तन्निरपेक्षनिर्वाहे संभवति नोपपद्यते, तस्मात्प्रागपि भेदो नास्तीति वाक्यं नाध्याहर्त्तव्यं पूर्वं भिन्नयोः परमात्मात्मनोः पश्चादपि भेद इति पक्षनिराकरणमात्रपरत्वादुक्तस्य इति चेत् किं तेन प्रयोजनं पूर्वमप्यैक्यसिद्धिरिति चेत् न पूर्वं पृथग्भूतयोः पश्चादैक्यायोगे ऽभिहिते सति पश्चादपि भेदसिद्धेः, अतः स्वरससिद्ध एव वाक्यार्थः स्वीकार्यः । अथ ब्रह्म वेद ब्रह्मैव भवतीत्यादिवाक्यनिर्वाहं बहुश्रुत्यन्तराविरोधेन च वक्ष्यन्मुक्तस्य साम्यापत्तिमाह—

मू॰ मुक्तस्य तु तद्धर्मताऽऽपत्तिरेवेति भगवद्गीतायामुक्तम्

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे"ति ।

टी॰ "मुक्तस्ये"ति, तत्रैक्यश्रुतेः प्रतिकूलार्था सम्यक्श्रुतिर्दर्शयिष्यत इति मत्वा व्याख्येयतया प्रकृतस्योपबृंहणवचनस्य सजातीयं पराभिमतार्थप्रतिकूलार्थस्मृतिवचनं दर्शयति "इदमि"ति, मुक्तपरत्ववैशद्यायोपादानं सर्गेऽपीति, न केवलं शास्त्रान्तरे अत्रापि मुक्तस्य भेदप्रतिपत्तिरस्तीत्याह—

मू॰ इहापि "आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुने ?
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथे"ति आत्मभावमात्मनः स्वभावम्

टी॰ "इहापी"ति, इह—योगप्रकरणे योगसङ्क्षेपकथनारम्भ इत्यर्थः, "सङ्क्षेपविस्तराभ्यां तु किमन्यत्कथतां तवे"ति ह्युक्तम्, आत्मनः शक्त्या विकार्यमवस्थान्तरं नेयं ध्यायिनमेनं तद् ब्रह्म आत्मभावं नयति आत्मनः शक्त्या विकार्यं लोहमाकर्षको यथेत्यन्वयः, आकर्षको वह्निः दोषमाकर्षतीति व्युत्पत्त्या "यथाग्नि[1]समुत्थितशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिष"मिति ह्युत्तरत्र वक्ष्यते श्रीविष्णुधर्मे च "यथाग्नि सङ्गा-

१ यथाऽग्निरुद्धतशिख इति पा॰ ।

त्कनकमपद्दोषं प्रजायत इति सोऽग्निः आत्मभावं आत्मनः स्वभावं निर्दोषत्वं लोहं नयति तथेत्यर्थः, अयं सम्यगर्थः । यद्वा आत्म-शब्दः स्वभाववाची सचन्ययोगव्यतिरेकपरः, यथाऽग्निर्लोहमात्मभावं स्वभावं स्वतःसिद्धरूपं नयति तद्वदित्यर्थः । यद्वा आकर्षकोऽयस्कान्तः लोहमात्मभावं नयति स्वव्यापारं लोहं कारयति स्वमनुकारयति, "स्थितः स्थितामुच्चलितः प्रयाता"मिति वत् अयस्कान्तस्तिष्ठति चेत् लोहस्तिष्ठति गच्छति चेत् तमनुधावति एवं कामान्नीकामरूप्यनुसंचरन् सर्वेषु लोकेषु कामचारो भवतीत्यादिश्रुत्यनुगुणं परमात्मा उपासकं स्वचेष्टामनुकारयति समानचेष्टितं करोतीत्यर्थः । यद्वा आत्म-शब्दः स्ववाची निष्कृष्टस्वरूपपरः उपासकं परमात्मा आत्मभावं नयति प्रकृतिसंबन्धराहित्येन शुद्धतां नयति केवलतां नयति यथा अयस्कान्तो दारुनिमग्नं लोहं तस्माद्दारुण उद्धृत्य केवलतां नयति तद्वदित्यर्थः । यद्वा भूप्राप्तावात्मनेपदीति वचनाद्भावशब्दः प्राप्तिवचनः आत्मप्राप्तिं नयति यथा लोहमयस्कान्तः स्वप्राप्तिं नयतीत्यर्थः प्राप्तिं नयतीति निर्देशः ओदनपाकं पचतीतिवत्, जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तं जीवस्य बन्धमोक्षयोर्ज्ञानसंकोचविकासरूपविकाराहत्वात् अत्र श्लोके तादात्म्यप्रतिपत्त्यभावं दर्शयति—

**मू॰ न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य, वक्ष्यति च "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च" "मुक्तोपसृप्यव्यपदेशाच्चे"ति वृत्ति[1]रपि "जगद्व्यापारवर्जं समानो ज्योतिषे"ति द्रमि[2]डभाष्यकारश्च— "देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिः स्या"दित्याह**

१ बोधायनमहर्षिप्रणीता ।

२ द्रमिडाचार्याः प्राचीना विशिष्टाद्वैतमतानुयायिनो येषां मतं शाङ्करव्याख्यासु बहुशो वृत्तिकृतामिव क्वचित् पराक्रियते ।

टी० "न ही" ति, आकर्षकस्वरूपापत्तिराकृष्यमाणस्येति निर्देश उक्तः सर्वार्थसाधारणः अग्निसुवर्णदृष्टान्तविवक्षायामाकृष्यमाणशब्दो विकार्यपरः समानोज्योतिषेति ज्योतिः परं ब्रह्म "परं ज्योतिरुपसम्पद्य अथ यदतः परो दिव्यो ज्योतिर्दीप्यत" इति श्रुतेः द्रमिडेति अशरीरो मुक्तः कर्मकृतशरीराभावात् । सिद्धिरनुभवः । मुक्तौ जीवपरयोर्भेदश्रुतीर्दर्शयति—

सू० श्रुतयश्च "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवति" "ब्रह्मविदाप्नोति परं" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति, "एतमानन्दमयमात्मानमुपसङ्क्रम्य "इमांल्लोकान् कामान्नीकामरूप्यनुसञ्चरन् सतच्च पर्येति" "रसो वै सः" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति यथा नद्यः स्यन्दमानाः समुद्रे ऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" तथा "विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"त्याद्याः

टी० "श्रुतयश्चे"ति, आप्नोति परमनुभवतीत्यर्थः, एतद्विवरणरूपं वाक्यं दर्शयति "सोऽश्नुत" इति, अनुसंचरन्नित्यनेन भेदो दर्शितः, "रसो वै स" इत्यनेन साम्यमानन्दित्वाकारेणेत्युक्तं भवति, परमसाम्योपयोगिनीं वैधर्म्यनिवृत्तिं दर्शयति "यथा नद्य" इति, नदीनां नदीत्वाकारप्रहाणेन समुद्रसंसर्गाद्वैधर्म्यप्रहाणेन संसर्गो दृष्टान्ते उपजीव्यः प्राकृतनामरूपप्रहाणपूर्विका हि परमात्मप्राप्तिः

न च तावता भेदनिवृत्तिः, पुरुषमुपैतीति कर्मकर्तृभावावगमात् साम्यापत्तिं दर्शयति "तथे"ति,

ननु परमं साम्यमुपैतीत्यैकार्थ्यापत्तिरुच्यते सम-शब्दस्य समानपर्यायत्वात् समानशब्दवदैक्ये प्रयोगाच्च समशब्दस्यैक्ये प्रयोगो दृश्यते समकालवर्तीत्यादिषु, तथा सम-शब्दपर्यायतया अवगतसमान-शब्दोऽप्ये-

र्थे प्रयुज्यते "समानं वृत्तं परिषस्वजाते" इति एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति च ऐकाधिकरण्यं हि सामानाधिकरण्यम् एकस्मिन्नर्थे इत्युक्तेः ।

टी० तत्पर्यायश्च सम-शब्दः, यद्यपि सादृश्यस्यापि समशब्दोवाचकः तथाऽपि मुक्तिवाक्यस्थसाम्यशब्द ऐक्यपरः, ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुत्यन्तरैकार्थ्यात् लयसायुज्यशब्दश्रवणान्नदीसमुद्रघटाकाशमहाकाशादिदृष्टान्तश्रवणाच्च "साधर्म्यमागता" इति स्मृतिस्तु सगुणप्राप्तिविषया, अन्यथा प्रत्यक्षश्रुतिविरोधे स्वरूपैक्यविषयबहुस्मृतिविरोधे च तद्दौर्बल्यात्, अत ऐक्यापत्तिरेव अनेन वाक्येन प्रतिपादिता, ऐक्यस्य च परमं नाम पुनर्भेदभ्रमप्ररोहविरहितत्वमिति । अत्रोच्यते अत्र साम्य-शब्दः सादृश्यमेवाभिधत्ते न त्वैक्यम्, ऐक्यस्य मुख्यार्थत्वेऽभ्युपगतेऽपि स्वारस्याभावात् सादृश्ये एव हि समशब्दस्य प्रसिद्धिप्राचुर्यं तस्य चापवादाभावे सत्यस्वरसार्थस्वीकारोऽनुपपन्नः, अपवादहेतवश्च त्वदुक्ता अनन्तरमेव परिह्रियन्ते

न च समादिशब्दानामैक्यं मुख्यार्थः, एकत्वविवक्षायामेको घट इत्यादौ प्रयोगाभावात्, मुख्यत्वे हि एकशब्दस्येव प्रतियोगिनिरपेक्षप्रयोगः प्राप्नोति, यस्तु सामानाधिकरण्ये समकालवर्तीत्यादिषु समादिशब्दप्रयोगः स तु साधारण्यार्थः न त्वैक्यार्थः, साधारण्येऽपि प्रयोगो मुख्यः प्रयोगेऽन्यथासिद्धे शक्तिकल्पनाऽनुपपत्तेः, तथा हि अनेकप्रतियोगिकैकरूपसम्बन्धवत्त्वं साधारण्यं यथा धनं देवदत्तयज्ञदत्तौ प्रति शेषत्वेन सम्बन्धितया साधारणं, तयोश्च धनं प्रति शेषितयाऽस्ति सादृश्यं, ताभ्यां सम्बन्धिधनं तथा नीलत्वोत्पलत्वे अपेक्ष्याधारतया सम्बन्धि द्रव्यं साधारणं तयोश्च द्रव्यं प्रत्याधेयतयाऽस्ति सादृश्यं ताभ्यां सम्बन्धि द्रव्यं तथा द्वाभ्यां संयोगित्वेनावच्छेद्यावच्छेदकभावेन वा सम्बन्धी कालस्तयोः साधारणः तत्कालसम्बन्धित्वाकारेण तयोरपि सादृश्यमस्ति ताभ्यां सम्बन्धिकालः, अतो मिथः-सदृशार्थसम्बन्धितया द्रव्यकालादिषु समसमानादिशब्दा लक्षणया वर्तन्त इति मुख्याः । अत ऐक्ये प्रयोगाभावत्सम-शब्दस्यैक्यं न मुख्यार्थः, मुख्यार्थे च सम्भवति लाक्षणिकार्थस्वीकारो नोपपद्यते अतः साम्य-शब्दः सादृश्यमेवाभिधत्ते, मुक्तात्मगोचरसामानाधिकरण्योपपत्तिश्चानन्तरमेव

भाष्ये वक्ष्यते, यदुक्तं सायुज्य—शब्देन मुक्तावभेद इति तदयुक्तं सायुज्यशब्दस्य समानगुणयोगवाचित्वात् युज्यत इति युक्शब्दो गुणपरः, धर्मिणि हि गुणः संबध्यते समानगुणकस्सयुक् तस्य भावस्सायुज्यमिति हि व्युत्पत्तिः प्रयोगविरोधाच्च नैक्यं सायुज्यम् "एतासामेव देवतानां सायुज्यम् सार्ष्टितां समानलोकतामाप्नोती"ति बह्वीभिर्देवताभिरेकस्य सायुज्यापत्तिः श्रूयते न ह्येकस्य निरवयवस्यात्मनो बह्वीभिर्देवताभिरैक्यं सम्भवति, क्रमभावित्वाद‌विरोध इति चेत् तर्ह्यग्निनैकीभूतस्य वरुणसायुज्यावस्थायामग्नित्वोपाधेः प्रहाणादग्नेर्देवताया अभावः स्यात्, अग्नित्वोपाधौ स्थिते वरुणैक्यापत्त्यनुपपत्तेः, औपाधिकभेदप्रहाणे ह्यैक्यापत्तिः न तु पूर्वमविद्यमानमैक्यमुत्पद्यते अग्नौ स्थित एव ततः पृथग्भूतस्य वरुणसायुज्यमिति चेत् एकीभूतस्य पृथग्भावो ह्युपाधितः स्यात् उपाधिश्च देहान्तःकरणादिः तत्सम्बन्धस्याहेतुकत्वेऽतिसङ्गात् हेतुर्वाच्यः कर्मैव हेतुरितिचेत् अग्निसायुज्याऽऽपत्तिदशायां तत्कर्म नष्टं न वा,? नष्टं चेत् पुनरुपाध्यनुदयेनाग्नितः पृथग्भावायोगादग्नित्वोपाधेश्चाप्रहाणात्पूर्वोपाधिप्रहाणरूपवरुणसायुज्यापत्तिः क्रमेणापि नोपपद्यते, अनष्टं चेत् तत्कृतोपाधेरनष्टत्वान्नाग्निनैक्यापत्तिसम्भवः, औपाधिकभेदस्य तत्प्रहाणरूपैक्यापत्तिविरोधित्वात्, अनष्टमपि तत्कर्माग्निसायुज्यापत्तिदशायां ततो भेदकमुपाधिं न जनयति कर्मणां कार्यकरत्वस्य कालविशेषनियतत्वादिति चेत्, तथाऽपि व्यवस्थितकर्मविशेषपरिष्वक्तस्य जीवस्य तत्कर्मापरिष्वक्तादग्नितस्तदेव कर्म भेदकमिति नाग्निनैक्यापत्तिरुपपन्ना। किंच पृथिव्येकीभूतपृथग्भूतघटस्येवाग्निनैकीभूतपृथग्भूतजीवस्याजत्वनित्यत्वानुपपत्तिश्च अतो भेदे स्थित एव अग्न्यादिसायुज्यं, समानलोकतासाहचर्याच्च नैक्यं सायुज्यं, न ह्येकस्य स्वेन समानलोकत्वसम्भवः, अतस्तयोः समानलोकत्ववद्भेदे स्थित एव सायुज्यं भवति समानलोकताप्राप्त्यनन्तरं सायुज्यापत्तिः, न तु युगपदेव अतस्तयोरविरोध इति चेन्न सायुज्यं सार्ष्टितां समानलोकतामिति सायुज्यस्य पूर्वश्रुतत्वात्, अर्थक्रमेण पाठक्रमबाध इतिचेन्न अवयवशक्त्युपस्थापितार्थस्य पाठक्रमानुगुणत्वादर्थान्तरकल्पनस्याहेतुकत्वाच्च। यदि पाठक्रमबाधार्थं सायुज्यशब्दस्य

क्यापत्तिलक्षणार्थविषया रूढिशक्तिः कल्प्यते तदाऽन्योन्याश्रयत्वं स्यात् सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चये पाठक्रमबाधः, पाठक्रमबाधे सति सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चय इति, एतेषामेव सलोकतां सायुज्यमश्नुत''इति वाक्यात् पूर्वोदाहृतवाक्यस्यक्रमविरोध इति चेत् न विरुद्धार्थविषयरूढिशक्तेरकॢप्ततया विरोधास्फुरणात् । किंच "अग्नेर्वा एतानि नामधेयानि अग्नेरेव सायुज्यं सलोकतामाप्नोती''त्यादिवाक्यानि "वायोरेव इन्द्रस्यैव बृहस्पतेरेव प्रजापतेरेव ब्रह्मण एव सायुज्यं सलोकतामाप्नोती''ति भूयसां वाक्यानां बलीयस्त्वात्त्वदुक्तक्रम एव बाध्यः । किंच एतेषामेव सलोकतां सायुज्यमश्नुत अग्नेरेव सायुज्यं सलोकतामाप्नोती''त्यादिवाक्यानि कर्मविशेषार्थवादरूपाणि कर्मफलत्वाच्चाग्न्यादीत्यादिदेवतासायुज्यमनित्यम् अतः कर्मफलावसानेऽन्यादिभ्यस्तत्सायुज्यं प्राप्तानां पृथग्भावस्यावर्जनीयत्वादामोक्षाज्जीवभेदस्थितेर्भवतामपीष्टत्वादग्न्यादिसायुज्यदशायामपि भेदस्थितिरवर्जनीया अग्न्यादिसायुज्यं गतानां ततः पृथग्भावः पुनरप्युपाधित इति चेत् दत्तमुत्तरं, न चाग्न्यादिसायुज्योक्तिरर्थवादत्वादनादरणीयेति वाच्यम् वेदान्तिभिरर्थवादानां प्रतीयमानार्थे प्रामाण्याभ्युपगमात्, अतो न सायुज्यमैक्यमपि तु समानगुणयोग एव, लयोऽपि न स्वरूपैक्यं, लय–शब्दस्य तदर्थत्वाभावात् प्रयोगानुगुणं शब्दार्थव्यवस्थापनं कार्यमिति नित्यनैमित्तिकमहाप्रलयेष्वपि लय–शब्दः प्रयुज्यते

न च तत्र स्वरूपैक्यापत्तिः, न तावन्नित्यप्रलये स्वर्गनरकादिगमनागमनशास्त्रात्, नापि नैमित्तिके पूर्वकल्पप्रलीनानां नारदादीनां प्राग्जन्मप्रत्यभिज्ञानवतामेव पुनरुत्पत्त्यवगमात् नारदेन पूर्वकल्पे स्वजन्मवृत्तादिकमिह कल्पेऽभिहितमिति पुराणेष्ववगम्यते, नापि महाप्रलये वैषम्यनैर्घृण्यपरिहाराय जीवनित्यत्वबहुत्वकर्मवासनानां तदानीं विद्यमानताया अभ्युपगन्तव्यत्वात्, तथा "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी''ति वदता भगवता पराशरेणैव हि "हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृताऽनृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते'' "प्रधानकारणीभूता यतो वै सृज्यशक्तयस्तेषां येषां यानि कर्माणि प्राक्

सृष्टाः प्रतिपेदिरे” इत्यादिभिस्तदानीं सवासनकर्मान्वितजीवबहुत्वं च दर्शितम्, अत एव भेदप्रहाणं च न लय-शब्दार्थः,

न च प्राकृतप्रतिसंचरमोक्षविषयप्रलयशब्दयोरर्थवैरूप्यं वक्तुम् उचितं शक्तिभेदकल्पनामुख्यत्वयोरन्यतरप्रसङ्गात्, न चापि महाप्रलयादिषु लय-शब्दस्यामुख्यत्वं वाच्यम्

बहुष्वर्थेष्वमुख्यत्वाश्रयणादपि मुक्तिविषयमात्रप्रलय-शब्दस्यैवामुख्यत्वाश्रयणोपपत्तेः, अतस्सर्वप्रयोगानुगुणोऽर्थः स्वीकार्यः, अतोऽविसदृशावस्थाप्रहाणेन कारणत्वधर्मिणा द्रव्येण विभागस्यापादानभूतेन संश्लेषो लयः, तस्मादैक्यं न लय-शब्दार्थः, घटाकाशादिदृष्टान्तोपन्यासश्चौपाधिकवैषम्याभावनिबन्धनः, आकाशादितत्त्वानामपि सांशत्वात्तेषां पञ्चीकरणवचनेन प्रदेशभेदवत्ता हि वेदान्तिभिरभ्युपेतव्या, अतो मोक्षविषयासु श्रुतिषु स्वरूपैक्यं क्वचिदपि नावगम्यते। निर्गुणप्राप्तिविषया श्रुतिः काचिदपि नास्तीत्ययमर्थश्चानन्तरमेव उपपाद्यते, अतःसाधर्म्यस्मरणस्य सगुणप्राप्तिविषयत्वाच्च परममोक्षविषयत्वम्। अन्यथा निर्गुणप्राप्तिविषयश्रुतिविरोधे स्मृतिदौर्बल्यप्रसङ्गादित्यपि दुरुक्तं, तस्माद्यदा पश्य इत्यादिवाक्ये साम्य-शब्दः सादृश्यपरः, येनाकारेण साम्यन्तस्याकारस्य निरवधिकत्वं परम-शब्दाभिप्रेतम्, अत इदं वाक्यं परब्रह्मप्राप्तिरूपं परममोक्षं तत्साम्यापत्तिलक्षणमेव प्रतिपादयति। अथ गुणोपासकस्य सगुणब्रह्मप्राप्तिं वदन्त्येताः श्रुतयः, न तु परब्रह्मविदः परब्रह्मप्राप्तिमिति शङ्कायामाह—

सू० परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यं, फलं चैकरूपमेव, अतो विद्याविकल्प इति सूत्रकारेणैवानन्दादयः प्रधानस्य विकल्पोऽविशिष्टफलत्वादित्यादिषूक्तम्

टी० “परविद्यास्वि”ति, परविद्यासु—ब्रह्मविद्यास्वित्यर्थः सर्वासु परेण सगुणविषयत्वेन निर्गुणविषयत्वेन चोक्तासु दहरविद्यासद्विद्याऽक्षरविद्यादिष्वित्यर्थः, अदृश्यत्वादिगुणक इति पराविद्यावाक्यविषयसूत्रस्वारस्यात्तस्याः सगुणविषयत्वं प्रतीयते “आनन्दादयः प्रधानस्ये”ति सूत्रमुपास्य-

सगुणत्वायोदाहृतं "विकल्पोऽविशिष्टफलत्वादि"ति सूत्रं प्राप्यस्य सगुण त्वायोपात्तम्, अयमर्थः परेण निर्गुणविषयत्वेनाभिमतानां सत्यं ज्ञानमानन्दो ब्रह्मेत्यादिवाक्यानामानन्दादिगुणविशिष्टविषयत्वं, तेषां च गुणानां सर्वविद्याऽनुयायित्वं चोक्त्वा तास्वेकैकविद्या फलायालमिति विद्याविकल्पोक्तिः, अतः परेण निर्गुणसगुणविषयत्वेनाभिमतासु सद्विद्यादहरविद्यादिषूपास्यं फलं च सगुणमिति सगुणप्राप्त्यतिरेकेण निर्गुणप्राप्तिः प्रमाणशून्या, अतोमुक्तौ भेदपराणां श्रुतीनामन्यथासिद्धिर्नोपपद्यते प्राप्यवैषम्याभावादिति । सूत्रकाराभिप्रायविदामुक्तिं दर्शयति–

सू० वाक्यका[1]रेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पस्योक्तः, "युक्तं तद्गुणकोपासना"दिति, भाष्यकृता व्याख्यातं च "यद्यपि सच्चित्त इत्यादिना, ब्रह्म वेद ब्रह्मैव भवतीत्यचापि "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" "निरञ्जनः परमं साम्यमुपैति" "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया वस्तु[2]प्रकारतोच्यते ॥

टी० "वाक्ये"ति, "युक्तं तद्गुणकोपासनादि"ति, युक्तं–गुणयुक्तमेव प्राप्यं कुतः तद्गुणकोपासनादित्यर्थः, विद्या विकल्पश्च तत्रैव द्रष्टव्यः सच्चित्तः–सद्विद्यानिष्ठः । तर्हि मुक्तावभेदश्रुतेः कोऽर्थ इत्यत्राह "ब्रह्मे"ति, "स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवतीति प्रकृतस्य वेदितुर्ब्रह्मपर्यन्तस्वरूपाविर्भावपरमिदं वाक्यमिति यथा सेत्स्यति तथा वक्ष्यते इह त्वर्थान्तरमुच्यते प्राकृतरूपनामप्रहाणज्ञापनाय नामरूपाद्विमुक्त इति श्रुतिरुदाहृता साम्यप्रतिपत्त्यर्थं निरञ्जन इति वाक्यमुपात्तं तस्यैव साम्यस्य स्वाभाविकत्वज्ञापकं परं ज्योतिरिति वाक्यं, तर्ह्यमुख्यत्वं स्यादित्यत्राह–

१ वाक्यकारश्च द्रमिडाचार्यादपि प्राचीनोविशिष्टाद्वैतवादी टङ्कनामा प्रसिद्धः ।
२ ब्रह्मप्रकारतोच्यत इति पुस्तकान्तरपाठो युक्तः ।

मू० प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव यथा सेयं गौरिति अत्रापि "विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव? प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावन" इति परब्रह्मध्यानादात्मा परब्रह्मवत्प्रक्षीणाशेषभावन:

टी० "प्रकारैक्ये चे"ति, सोऽयं व्रीहिरित्यादेरुपलक्षणमिदमुदाहरणं यथर्तुष्वृतु लिङ्गानि नानारूपाणि पर्यये दृश्यन्ते तानि तान्येव तथा भावा युगादिष्वित्यादिप्रयोगो भारतादिषु द्रष्टव्यः, दृष्टान्ते प्रकारैक्येऽपि तत्ताव्यवहारो मुख्योऽप्यस्वरसः पूर्वदृष्टे गवि व्यक्त्यंशप्रहाणादस्वारस्यं जात्यंशस्य सौसादृश्यलक्षणैक्यान्मुख्यत्वं. दार्ष्टान्तिके तु गङ्गायां घोष इति गङ्गापदवत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात्परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्ताऽऽत्मनि मुख्यकोटिरित्यभिप्रायेण मुख्यगुण एवेत्युक्तं, लाक्षणिकगङ्गापदवत्पात्यन्तामुख्य इत्यर्थः, न हि मुक्तस्यापरिच्छिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणं बृहत्त्वं स्वरूपबृहत्त्वं चास्ति आकारैक्येऽपि तत्ताव्यवहारस्यात्यन्तामुख्यत्वाभावे सोऽयं गौरिति दृष्टान्तः, न केवलं योगसंग्रहारम्भे विस्तरेऽपि अव्यवहितेषु पूर्वश्लोकेषु भेदप्रतिपत्तिरस्तीत्याह "अत्रापी"ति, न केवलं मुक्तिविषयप्रकरणान्तरेषु अस्मिन् प्रकरणेऽपीति वाऽर्थः, अस्मिन् श्लोके तथैवेति ब्रह्मसाधर्म्योक्तेश उपयुज्यत तथैवेत्येतद्व्याख्यानं परब्रह्मवदित्यादि प्रक्षीणाशेषभावनशब्दं व्याचष्टे–

मू० कर्मभावनाब्रह्मभावनोभयभावनेति भावनात्रयरहित: प्रापणीय इत्यभिधाय

"क्षेत्रज्ञ: करणी ज्ञानं करणं तस्य वै द्विज?
निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्त्तये"दिति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनाद्भावत्रिकमनुष्ठेयमित्युक्ता ।

टी० "कर्मभावने"ति, परब्रह्मवत्प्रक्षीणाशेषकर्मभावन इति पाठे कर्म-शब्दो यागादिक्रियोपासनासाधारणोनुष्ठेयमात्रपरः तदा कर्म-शब्देन त्रिविधा भावभावनेत्यत्र भावशब्दो व्याख्यातो भवति । अत्रायमर्थः प्राप्यपरब्रह्मविषयज्ञानस्य प्रापकत्वाच्छुद्धस्वस्वरूपमपि प्राप्यमिति तदनुसंधेयमिति अय च व्यतिरेकस्तद्भावभावित्वादित्यधिकरणार्थस्तत्र बद्धस्वरूपं चिन्त्यमिति पूर्वपक्षीकृत्य मुक्तस्वरूपं चिन्त्यमिति हि सिद्धान्तितम् । अस्य श्लोकस्यैकप्रकरणत्वज्ञापनायानान्तरश्लोकोऽपि व्याख्यायते "क्षेत्रज्ञ" इति, यावत् क्षेत्रज्ञावस्थस्तावत् करणी उपासकः तस्य करणज्ञानं करणभूतं ज्ञानं मुक्तिकार्यं निष्पाद्य निवर्तयेत्र तु मुक्तेः पूर्वं निवर्त्तयेदित्यर्थः, न हि मुक्तस्योपासननिवृत्तिर्विधेया, अतो यावन्मोक्षमनुष्ठेयत्वमुक्तमिति भावः । तद्भावभाव-शब्देन ब्रह्मसाम्यापत्तिज्ञापनार्थं विभेदजनके ज्ञान इत्यत्र ज्ञान इति पदच्छेदशङ्काव्युदासार्थं च तद्भावभावमिति श्लोको व्याख्यायते तद्भावेति श्लोके तद्भाव इत्युपमानबहुव्रीहिस्तद्भाव इति पदान्तर्गतो तच्छब्दभावशब्दो व्याख्यातुमाह—

मू० तद्भावभावमापन्नस्तदाऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥

इति, मुक्तस्य स्वरूपमाह तद्भावो ब्रह्मणो भावः स्वभावः न तु स्वरूपैक्यं तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात्पूर्वोक्तार्थविरोधाच्च, यद्ब्रह्मणः प्रक्षीणाशेषभावनत्वं तदापत्तिः तद्भावभावापत्तिः यदैवमापन्नः तदाऽयं परमात्मनाऽभेदी भवति ।

टी० "तद्भाव" इति, भाष्यस्थस्तद्भावशब्दो न बहुव्रीहिः किंतु तत्पुरुषः समासे व्याचिख्यासिते सति बहुव्रीहिशिष्टरूपेण पदोपादानं तच्छब्दभावशब्दमात्रस्य व्याचिख्यासितत्वात् बहुव्रीहिविशिष्टरूपेण पदस्यानुपादानं तच्छब्देन ब्रह्मोच्यते प्रथमभावशब्देन स्वभाव उच्यत इत्यर्थः, "भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु । पदार्थमात्रे सत्तायामात्मयोनिस्वभाव-

यो''रिति हि नैघण्टुकाः । यद्वा भाष्यस्थतद्भावशब्दोऽपि बहुव्रीहिशिष्टः तद्भावो ब्रह्मणो भावः स्वभाव इति पदे तच्छब्दवाच्यब्रह्मसम्बन्धितया प्रतिपन्नो भावः स्वभाव इत्यर्थः । अथ वा श्लोकेऽपि तद्भावशब्दस्तत्पुरुषः, द्वितीयभाव–शब्दः सत्तावाची । व्यावर्त्यमाह "न त्वि''ति, कुत इत्यत्राह "तद्भावे''ति, हेत्वन्तरमाह "पूर्वोक्तार्थविरोधाच्चे''ति, हेयप्रत्यनीकत्वहेयार्थत्वादिविरोधोऽर्थविरोध एवं शब्दपर्यालोचनयाऽर्थपर्यालोचनया च भाव–शब्दस्य स्वभाववाचित्वमुपपादितम् । स्वभावशब्दवाच्यत्वं च पूर्वश्लोकोक्तं प्रक्षीणाशेषभावतत्त्वमित्याह "यदि''ति, तच्छब्दसामर्थ्याद् यद्वृत्तमाक्षिप्य व्याचष्टे "यदैव''मिति, अभेदीत्यत्र भेद–शब्दव्याख्यानार्थं भेदशब्दनञ्प्रत्ययाभ्यां विभज्य निर्दिशति–

मू० भेदरहितो भवति ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः तदन्वयोऽस्य कर्मरूपाज्ञानमूलः न स्वरूपकृतः, स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्त्तते इत्यभेदी भवति

टी० "भेदरहितो भवती''ति, यद्वा भेदरहितो भवति न तादात्म्यवानिति भावः, अन्यथा भेदश्च तस्याज्ञानकृत इत्यनन्तरनिर्देशो न घटते देवादिभेदाभावः कथमिति शङ्कायां भेदश्च तस्येत्यादि व्याचष्टे "ज्ञानैकाकारतये''ति, परमात्मना भवत्यभेदीति परमात्मनः प्रस्तुतत्वादात्मनो ब्रह्मण इत्यत्रापि पञ्चमीविवक्षया च तस्माद्भेद इत्युक्तं, ब्रह्मणो मुक्तात्मनश्चाकारान्तरेण भेदस्य प्रमाणसिद्धत्वान्निरसनीयभेदविशेषस्य वचनान्तरसिद्धत्वाच्च भेदो देवादिरूप इत्युक्तं, कर्मरूपशब्देन अज्ञानशब्दो व्याख्यातः, ज्ञानविरोधीति व्युत्पत्तिरित्यर्थः अविद्यया मृत्यु, तीर्त्वेति हि श्रुतिः, अत्राप्यविद्या कर्मसंज्ञाऽन्येति हि पठ्यते ततः किं भेदराहित्यस्येति शङ्कायां भेदश्च तस्याज्ञानकृतो भवेदित्यनेनार्थसिद्धमभिप्रेतकारणाभावं

विशदयन् कार्याभावमुपपादयति "स त्वि"ति, भेदस्य देवादिरूपत्वे अज्ञानशब्दस्य च कर्मपरत्वे प्रमाणमाह—

मू० यथोक्तम् ।

एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः ॥

इति, एतदेव विवृणोति "विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यती"-ति, विविधो भेदो विभेदः देवतिर्यङ्मनुष्यस्थावरात्मकः ॥

टी० "यथोक्तमि"ति, आदिभरतचरितेऽयं श्लोकः, तत्र पूर्वं देहेन्द्रियादिबाह्यभेदरहितत्वमात्मन उक्तं, सितनीलेत्यादिना अस्मिन् श्लोके बुद्धिसुखदुःखेच्छाआन्तरभेदोऽपि नास्तीत्युच्यते एकस्वरूपेति कर्मैव वृतिः कर्मवृतिः, बाह्यमान्तरं च कर्म द्विविधम् आन्तरमात्मप्रावण्यहेतुः कर्म, बाह्यं बहिर्विषयप्रावण्यहेतुः कर्म । यद्वा बाह्यमस्वाभाविकं कर्म तदेव वृतिः कर्मतया प्रकर्षेण जात एक स्वरूपभेदः, बाह्यकर्मशरीरद्वारकमेकस्वरूपस्यात्मन आन्तरं भेदं करोतीत्यर्थः । द्वारभूतदेवादिशरीरभेदे नष्टे सति आन्तरभेदो नास्ति । कथं वा देवादिभेदे नष्टे कर्मवृतिहेतुकान्तरभेदनाश इत्यत्राह "अनावरणोहि स"इति, सः—निवृत्तदेवादिभेदः आत्मा, कर्मावरणरहितो हीत्यर्थः । यद्वा कर्मवृतिः कर्मजन्या वृतिः शरीरं तत्सम्बन्धेन आन्तरभेदः देवादिभेदेऽपध्वस्ते स नास्ति कथं कर्मजन्यवृतिहेतुक आन्तरभेदो देवादिभेदेऽपध्वस्ते नास्तीत्याह "अनावरणो हि स" इति कर्मजन्यवृतिर्देवादिशरीरभेदे एवेत्यर्थः, एतदेव भेदश्च तस्याज्ञानकृतो भवेदित्युक्तमेवार्थं विवृणोतीत्यर्थः, विभेदजनक इत्यादिश्लोके ऽनावृत्तिः शब्दादित्यधिकरणार्थ उच्यते परस्माद्ब्रह्मण आत्मनो देवादिभेदस्य प्रनष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यते, विभेदशब्दं व्याचष्टे "विभेदो विविधोभेद इति-भेदस्य देवादिरूपत्वे प्रमाणान्तरमाह—

सू० यथोक्तं शौनकेनापि "चतुर्विधोऽपि विभेदो ऽयं मिथ्याज्ञाननिबन्धन" इति, आत्मनि विज्ञानस्वरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याऽज्ञाने परब्रह्मध्यानेनात्यन्तिकं नाशङ्गते सति हेत्वभावादसन्तं परस्माद्ब्रह्मणः आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः ॥

टी० "यथोक्तमि"ति, मिथ्याज्ञाननिबन्धनः—मिथ्याज्ञानमात्मविषयभ्रान्तिज्ञानं तत्कर्मद्वारा उत्तरोत्तरदेवादिभेदहेतुरित्यर्थः, अस्योत्तरार्द्धं देवतिर्यङ्मनुष्याख्यस्तथैव नृप ? नारक इति व्याख्येयस्य श्लोकस्य वाक्यार्थमाह "आत्मनी"ति, ब्रह्मण इति पदस्य पञ्चम्यन्तत्वसूचनाय परस्मादित्युक्तम्। उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तं, च–शब्दाभावात्, अनन्तरपूर्वश्लोके परमात्मना भवत्यभेदीति परमात्मनः प्रतियोगितया निर्देशाच्च, अत एव समानाधिकरणषष्ठ्यन्तत्वमप्ययुक्तं पूर्वप्रपञ्चितादर्थविरोधाच्च पञ्चम्यन्तत्वं षष्ठ्यन्तत्वं च विपर्ययेण स्यादिति चेन्न तथा परब्रह्मणोऽपि हेयार्थत्वापत्तेः स्वाभाविकत्वप्रसङ्गात्, अतः परस्मात् ब्रह्मण इत्युक्तम् असन्तम्–सच्छब्दः परमार्थपर्यायः अनाशी परमार्थश्चेत्यत्रैव ह्युक्तम् अनित्यमित्यर्थः, तेन स्वाभाविकनित्यभेदव्यावृत्तिः, अनित्यत्वं कादाचित्कत्वम् अनित्यत्वाधेयत्वापेक्षो देवादिभेदः तं कः करिष्यति न कश्चिदपि, हेत्वभावात् न कर्मरूपहेत्वभावादित्यर्थः, न केवलमेकार्थविषयो बाह्यकर्मवृत्तिप्रजः अज्ञानकृतो भवेदिति अज्ञानकर्मशब्दयोः प्रयोगादज्ञानशब्दस्य कर्मार्थत्वम् । अस्मिन् प्रकरणे च कण्ठोक्तमित्याह—

सू० अविद्या कर्मसंज्ञाऽन्येत्यत्रैवोक्तं "क्षेत्रज्ञं चापि मां विद्धी"त्यादिनाऽन्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधानम्, अन्यथा "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते उत्तमः पुरुषस्त्वन्य इत्यादिभिर्विरोधः ॥

टी० "अविद्या कर्मसंज्ञाऽन्ये"ति ह्यत्रैवोक्त"मिति, आत्मन ऐक्या-

धिकभेद उपाध्यपगमेन नश्यतीति श्लोकार्थः, उपाध्यभावादविद्यमानं भेदं क उत्पादयेदिति वाऽर्थः, अयं श्लोको मृषावादिनामत्यन्तास्वरसः, तथा हि विभेदजनक इत्यत्र जनक-शब्द उत्पादके स्वरसो न त्वध्यासहेतौ अज्ञानशब्दस्य अनिर्वचनीयपरत्वं लोकतः शास्त्रतश्च न व्युत्पन्नं कर्मवाचित्व-व्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता नाशशब्दस्य बाधवाचित्वममुख्यम्, असन्तमिति पदं च व्यवच्छेद्याभावादफलम् सतो भेदस्यानभ्युपगमात् तदभ्युपगमे हि तत्साफल्यं, करिष्यतीति पदमप्यस्वरसम् अध्यासवाचित्वाभावात् अद्वैतपरत्वेन परोक्तं भगवद्गीतावचनं व्याचष्टे "क्षेत्रज्ञं चापी"ति, पराभिमतार्थस्य पूर्वापरविरोधं दर्शयति "अन्यथे"ति, न केवलमुत्तमः पुरुषस्त्वन्य इति भेदप्रतिपादनात्तद्विरोधेन स्वरूपैक्यपरत्वाभावः । सामानाधिकरण्योपपादकमन्तर्यामित्वं कण्ठोक्तमपीत्याह-

सू० अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम् ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति सर्वस्य चाहं हृदि सन्निविष्ट इति च अहमात्मा गुडाकेश ? सर्वभूताशयः स्थित इति च तद्वेवोच्यते भूतशब्दो ह्यात्मपर्यन्तदेहवचनः यतः सर्वेषामयमात्मा तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते "न तदस्ति विना यत्स्या"दिति

टी० "अन्तर्यामी"ति, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ? तिष्ठती"-त्यत्र भूत-शब्दस्यात्मपर्यन्तदेहपरत्वं, भ्रामयन् सर्वभूतानीत्यस्योत्तरार्धेनावगम्यते न हिंस्यात्सर्वाभूतानीत्यादिप्रयोगाच्च "सर्वस्य चाहं हृदि सन्निविशिष्ट" इत्यत्रापि सर्वशब्दस्यात्मपर्यन्तत्वं "मत्तः स्मृतिर्ज्ञानमपोहनं चे"-त्यनेनावगम्यते हृद्देशे हृद्देशस्य आत्मनीत्यर्थः सर्वस्य चाहं हृदीत्यपि तथाऽहमात्मा गुडाकेशेत्यत्राप्यन्तर्यामित्वपरतामाह "अहमि"ति, कुत इत्यत्राह 'भूतशब्दो ही'ति, पूर्वं दर्शितसर्वशब्दैकार्थ्याच्चेति भावः । अन्वय-

१ आत्मपरत्वमिति पा० ।

रूपेणोक्तस्य सर्वेषां भगवदात्मकत्वस्य शेषभूतोऽयं न तदस्तीति व्यतिरेकनिर्देशस्तदनुगुण एवेत्यभिप्रायेणाह "यतः सर्वेषामि"ति, अविनाभावशब्दस्य सम्बन्धनियमवाचित्वादिति भावः । हेत्वन्तरमाह–

सू० भगवद्विभूत्युपसंहारश्चायमिति तथैवाऽभ्युपगन्तव्यं, तत इदमुच्यते "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा तत्तदेवावगच्छत्वं मम तेजोंऽशसम्भवं विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति, अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति, नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनं, नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥

टी० "भगवदि"ति, "एतां विभूतिं योगं चे"ति प्रक्रमाद्विभूतिपरत्वमवगम्यते अतः उपक्रमानुगुण एव उपसंहार इत्यर्थः, न हि विभूतित्वं विधाय तदेव निषेद्धुं शक्यमिति भावः । प्रकरणस्य विभूतिपरत्वं दर्शयति "यद्यदि"ति, विभूतिमत्–नियाम्यवत्, श्रीमत्–भोग्यसमृद्धिमत्, ऊर्ज्जितं–बलवत्, कल्याणगुणारम्भेषु ह्युक्तं तेजः–पराभिभवसामर्थ्यं प्रशासनं तेजोंऽशसम्भवं–नियमनशक्तिमत् मदाज्ञालवाधीनमित्यर्थः शास्त्रस्य परोक्तार्थपरत्वाभावमुपसंहरति "अत" इति, अतः श्रुतियोजनाप्रभृतिप्रतिपादितैर्न्यायैरित्यर्थः, भ्रान्तत्वं भ्रान्तिसिद्धत्वं जगद्ब्रह्मणोरैक्यद्रव्यत्वपक्षे ब्रह्मणः सविशेषत्वं जगतः सत्यत्वं चोपपन्नमिति शङ्काया व्युदासार्थमाह "नापी"ति, चेतनेष्वचिद्धर्मबुद्धिः परतन्त्रेषु स्वतन्त्रबुद्धिरपि भ्रमः न तु स्वरूपभेदधीरित्यभिप्रायेण स्वरूपभेदनिषेध इत्युक्तम् । अथवा मृषावादिनमेवोद्दिश्य जीवपरयोः स्वरूपभेदनिषेधाभावमाह "नापी"ति, अचिदुपादानं दृष्टान्ततया । अथाविद्यां दूषयितुं तद्विषये परोक्तमर्थमनुवदति–

सू० यदप्युच्यते निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितमीशेशितृत्वाद्यनन्तविकल्पं सर्वं जगत्, दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीया-

ऽनाद्यविद्या, सा चावश्यमभ्युपगमनीया "अनृतेन हि प्रत्यूढा" इत्यादिभिः श्रुतिभिर्ब्रह्मणः तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्याऽनुपपत्त्या च, सा तु न सती भ्रान्तिबाधयोरयोगात्, नाप्यसती ख्यातिबाधयोश्चायोगात्, अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति, तदयुक्तं सा हि किमाश्रित्य भ्रमं जनयतीति वक्तव्यम् ॥

"यदपी"ति, निर्विशेषस्य कथं भ्रमसम्भव इत्यत्राह "दोषे"ति, ब्रह्मव्यतिरिक्तदोषोऽस्ति चेत् अद्वैतहानिरित्यत्राह "दोषश्चे"ति, अस्मिन्नर्थे परोक्तश्रुतिस्मृत्यर्थापत्तीर्दर्शयति "अनृतेने"ति, सदसद्विलक्षणत्वमुपपादयति "सा त्वि"ति, भ्रान्तिबाधायोगात्—भ्रान्तिबाधविषयत्वायोगात्, प्रमितभ्रान्ति बाधाऽन्यथानुपपत्त्या सदसदनिर्वचनीयत्वमित्यर्थः । सद्भाव एवं भवतो मयोक्त इतिवत्त परमतमिति दर्शयितुं तत्त्वविद इत्युक्तम् । दूषयति "तदयुक्तमि"ति, आश्रयानुपपत्तितिरोधानानुपपत्तिस्वरूपानुपपत्त्यनिर्वचनीयत्वानुपपत्तिप्रमाणानुपपत्तिनिवर्तकानुपपत्तिनिवर्त्यानुपपत्तिभिर्दूषयिष्यन् प्रथममाश्रयानुपपत्तिस्वरूपमाह "सा ही"ति, किमाश्रित्य न किञ्चिदपीत्यर्थः । किं जीवमाश्रित्य ? उत ब्रह्मे ? ति विकल्पाभिप्रायेणाह—

सू० न तावज्जीवमाश्रित्य अविद्यापरिकल्पितत्वाज्जीवभावस्य, नापि ब्रह्माश्रित्य तस्य स्वयंप्रकाशज्ञानरूपत्वेनाविद्याविरोधित्त्वात्, सा हि ज्ञानबाध्याभिमता।

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत् तिरस्कुर्यात्कः प्रभुस्तन्निवर्त्तने ॥
ज्ञानं ब्रह्मेति चेद् ज्ञानमज्ञानस्य निवर्त्तकम् ।
ब्रह्मवत्तत्प्रकाशत्वात्तदपि ह्यनिवर्त्तकम् ॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता ।

टी० "न ताव"दिति, जीवे सिद्धे अविद्यासिद्धिः, अविद्यासिद्धौ जीवसिद्धिरित्यन्योन्याश्रयणमित्यर्थः, जीवाज्ञानवादनिरास उत्तरत्र विस्तरेण वक्ष्यत इत्यत्र संक्षिप्तः । अथ ब्रह्माश्रयत्वपक्षं दूषयति "नापी"ति, विरोधित्वं कथ? मित्यत्राह "सा ही"ति, ब्रह्मविषयाज्ञानस्य तत्प्रकाशबाध्यत्वाद्विरोधः । अत्र नाथमुनिभिरुक्तान् श्लोकानाह "ज्ञानरूप"मिति, स्वप्रकाशत्वं विवक्षितं ज्ञाननिवर्त्यत्वे हेतुमाह "मृषात्मक"मिति, न हि स्वरूपज्ञानमज्ञानविरोधि अपि तु प्रमाणज्ञानमेवेति पक्षमनूद्य दूषयति "ज्ञानमि"ति, ब्रह्मवत्तत्प्रकाशत्वात्–स्वरूपानतिरिक्तप्रकाशत्वादित्यर्थः, न हि शुक्लभास्वरद्रव्ये गृहीते आप्तवाक्यादिभिः शुक्लभास्वरद्रव्यमित्येतावति शतशः प्रतिपन्नेऽपि भ्रमनिवृत्तिः । दूषणान्तरमाह "ज्ञानमि"ति, ततः किमित्यत्राह? –

मू० ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते" ॥

ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकं न स्वरूपभूतं ज्ञानमिति चेत् न उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सति अन्यतरस्याविद्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात् ।

टी० "ब्रह्मण"इति, एषु श्लोकेषु प्रथमश्लोकस्यार्थः पूर्वं ज्ञानबाध्याभिमतेत्यन्तेन भाष्येणोक्तः, द्वितीयश्लोकं व्याचष्टे "ज्ञानस्वरूपमि"ति,ब्रह्मस्वरूपप्रकाशत्वे सति स्वरूपविषयज्ञानत्वे सतीत्यर्थः, विशेषानवगमात्–विषयवैषम्याभावादित्यर्थः । कथं विशेषानवगमः? प्रमाणजन्यत्वं विशेषोस्तीति चेत् किं तेन विषयवैषम्यं हि न विद्यते । किंच स्वरूपभूतज्ञानान्निवर्त्तकज्ञानस्य विषयवैषम्यमस्ति वा? न वा? अस्ति चेत्सविशेषत्वं नो चेत् स्वरूपमेव निवर्त्तकं स्यात् प्रमाणजन्यज्ञानमनिवर्त्तकं वा स्यात्, पुरोऽवस्थितभास्वरवस्तुविषयज्ञानवत् प्रमाणजन्यज्ञानत्वं न निवर्त्तकत्वे प्रयोजकम् इदं शुक्लभास्वरद्रव्यमिति वाक्यजन्यस्य ज्ञानस्य निवर्त्तकत्वाभावात्तस्मात् भ्रमसहकारादतिरिक्ताकारविषयत्वं निवर्त्तकत्वे प्रयोजकम् ।

ननु विषयवैषम्याभावेऽपि कस्यचित् ज्ञानस्य भ्रमाविरोधित्वं कस्यचिद् भ्रविरोधित्वं च दृष्टमभिज्ञाप्रत्यभिज्ञयोः, अयमेको देवदत्त इत्यभिज्ञाया एकविषयत्वेऽपि पूर्वदृष्टादयमन्य इति पुरुषद्वित्वभ्रमो दृष्टः, प्रत्यभिज्ञायास्तु सोऽयमेको देवदत्त इति देवदत्तैक्यविषयत्वेऽपि द्वित्वविरोधित्वं दृष्टमिति विषयवैषम्याभावेऽपि प्रमाणज्ञानस्य भ्रमनिवर्त्तकत्वं युक्तमिति शङ्कायामाह–

सू० एतदुक्तं भवति ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावो ऽवगम्यते स ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशत इति अविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति । किंच अनुभवरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयज्ञानमस्ति अतो-ज्ञानमज्ञानविरोधि चेत्स्वयमेव विरोधि भवतीति नास्या ब्रह्माश्रयत्वसंभवः ॥

टी० "एतदुक्त"मिति, सत्यत्वज्ञानत्वादिस्वभावोऽस्तीति चेत् स च स्वरूपानतिरिक्त इति दर्शयितुं स्वभाव–शब्दः, अनेनाभिज्ञाप्रत्यभिज्ञयोरपि विषयवैषम्यमुक्तं भवति, अभिज्ञायामेकस्य धर्मिण एकदेशकालसम्बन्धित्वं प्रतिपन्नं न तु कालद्वयदेशद्वयसम्बन्धित्वं तत्तु प्रत्यभिज्ञायां प्रतिपन्नम् एकदेशकालसम्बन्धित्वप्रतीतिर्न द्वित्वविरोधिनी एकस्य धर्मिणः कालद्वयसम्बन्धित्वं देशद्वयसम्बन्धित्वं ह्यैक्यं तत्तु द्वित्वविरोधीति तत्प्रतिपत्तिर्द्वित्वभ्रमं निवर्तयति अतस्तत्रापि विषयवैषम्यमस्तीति फलितम् । अथ तृतीयश्लोकार्थस्य विपर्यये पर्यवसानमाह "किञ्चे"ति, प्रमाणज्ञानत्वं निवर्त्तकत्वव्यापकम् अतोऽधिष्ठानभूतब्रह्मस्वरूपस्य प्रमाणज्ञानत्वाभावान्न भ्रमनिवर्त्तकत्वम् अधिष्ठानत्वात् शुक्त्यादिवत् ब्रह्मस्वरूपं न भ्रमविरोधीति प्रमाणान्तरज्ञानमपेक्षत इति शङ्कामाह–

सू० शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनस्तन्निवर्त्तने च ज्ञानान्तरमपेक्षन्ते, ब्रह्म तु स्वा-

नुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव तत एव निवर्त्तकान्तरं च नापेक्षते। अथोच्येत ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधीति न, इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि? उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधी? ति विवेचनीयं, न तावद्ब्रह्मयाथात्म्याज्ञानविरोधि–

टी० "शुक्त्यादयस्त्वि"ति, अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वं व्यापकमतो व्यापकनिवृत्त्याऽधिष्ठानत्वनिवृत्तिः अधिष्ठानत्वादेव ब्रह्मस्वरूपस्फुरणेऽपि प्रमाणान्तरमपेक्ष्येत, नैवं जडत्वादेव शुक्त्यादेः स्वरूपस्फुरणेऽपि प्रमाणान्तरापेक्षा नाधिष्ठानत्वात् अतोऽधिष्ठानत्वं सोपाधिकम्। अत्राजडत्वात्स्वरूपस्फुरणे प्रमाणान्तरापेक्षा नास्तीति चेत् तर्हि जडत्वादेव भ्रमनिवृत्तौ शुक्त्यादेर्ज्ञानान्तरापेक्षा नाधिष्ठानत्वादतस्ततः सोपाधिकं तस्मादजडे तु प्रमाणान्तरापेक्षभ्रमनिवृत्तौ च न स्यादित्यभिप्रायः, शुक्त्यादयस्त्वित्यत्र तु–शब्दो ब्रह्मणः शुक्त्यादिव्यावृत्तिपरः, द्वयी ह्यद्वैतिनाङ्गतिः ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्त्तकं प्रपञ्चमिथ्यात्वविषयज्ञानं भ्रमनिवर्त्तकमिति च, तत्र प्रथमपक्षो दूषितः। अथ द्वितीयपक्षं दूषयितुं शङ्कते "अथोच्येते"ति, दूषयति नेत्यादिना "इदमि"ति,

ननु प्रपञ्चसत्यत्वमज्ञानमित्युच्यते अज्ञानं हि ज्ञानप्रतिबन्धकं न हि प्रपञ्चसत्यत्वं कस्यचित् ज्ञानं प्रतिबध्नाति सत्यम् आच्छादकाज्ञानमेवं भूतं प्रपञ्चसत्त्वं न भ्रतिभासश्च वित्तिरूपाज्ञानमिति पराभ्युपगमादेवमुक्तं प्रथमं शिरो दूषयति–

सू० अतद्विषयत्वात्, ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते, तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव, ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव तत्तु

तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तं, स्वरूपं तु स्वानुभवसिद्धमिति चेत् न ब्रह्मणो ऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम् ।

टी० "असद्"इति, कथमतद्विषयत्वात् ब्रह्मस्वरूपाज्ञानाविरोधित्व? मित्यत्राह "ज्ञानाज्ञानयोरि"ति, विरोधे हि निवृत्तिरित्यर्थः । द्वितीयं शिरो दूषयति "प्रपञ्चे"ति, प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञाननिवृत्तेः फलितत्वमाशङ्कते "ब्रह्मस्वरूपे"ति, सद्वितीयत्वं सद्वितीयत्वज्ञानमित्यर्थः, न हि सत्तया सद्वितीयत्वं ब्रह्मस्वरूपाज्ञानं भवति अपारमार्थ्यात् सद्वितीयत्वविशिष्टब्रह्मगोचराज्ञाने निवृत्ते विशेष्यांशगोचरमप्यज्ञानं निवृत्तमिति स्वरूपसिद्धिः कथ? मित्यत्राह "स्वरूपं त्वि"ति, दूषयति "ने"ति, अद्वितीयत्वं किं स्वरूप? मुत धर्म इति विकल्पाभिप्रायेण प्रथमं पक्षं दूषयति "ने"ति, धर्मपक्षे अपसिद्धान्तमाह—

मू० अद्वितीयत्वं धर्म इतिचेत्स्वानुभवरूपस्य ब्रह्मणो ऽनुभाव्यधर्मविरहस्य भवतैवोपपादितत्वात्, अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वं, किं चाविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात्, प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानस्य विनाशो वा प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव ।

टी० "अद्वितीयत्व"मिति, आश्रयानुपपत्तिं निगमयति "अत"इति, विरोधादेव—पूर्वोक्तादेवेत्यर्थः एवमाश्रयानुपपत्तिरुक्ता । अथ तिरोधानानुपपत्तिमाह "किञ्चे"ति,

ननु भवत्पक्षेऽपि क्षेत्रज्ञानां नित्यं स्वरूपस्फुरणमस्तीति तथाऽपि तेष्वपि स्वरूपतिरोधानेन विना देहात्मभ्रम इति तुल्याऽनुपपत्तिः सत्यं, स्वरूपस्फुरणमस्त्येव न तस्य तिरोधानमभ्युपगम्यते

न च स्वरूपस्फुरणं भ्रमविरोधि किन्तु नित्यत्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि तान्यागमगम्यानि तेषां तिरोधिस्तद्विषयज्ञानप्रसराभावरूपः सङ्कोचः, अतः स्वरूपातिरिक्ताकारान्तरतिरोधानानभ्युपगमान्नात्मनो नाशप्रसङ्गः, ज्ञानस्यात्मासाधारणाकारस्य स्फुरणात् भ्रमानुपपत्तिरिति चेन्न तस्यासाधारणत्वास्फुरणात् असाधारणतया स्फुरतो धर्मस्य हि भ्रमविरोधित्वं दृष्टं यथा शुक्तित्वादेः, शुक्तित्वं हि शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चात् भ्रमं निवर्त्तयति न तावत् ज्ञानं देहातिरिक्तात्मासाधारणधर्मत्वेन क्वचिद्दृष्टचरम् अतो न भ्रमः सम्भवति आत्मासाधारणधर्मत्वादर्शनादध्यासः, अध्यासादसाधारणधर्मत्वाग्रहणमित्यन्योन्याश्रयोऽनादितया परिहृतः, धर्मभूतस्य ज्ञानस्य नित्यत्वं तिरोधानं च भवद्भिरभ्युपगतं तदा ज्ञाननाशप्रसङ्ग इति चेन्न ज्ञानं हि द्रव्यं तस्य स्वरूपातिरेकेण सङ्कोचविकासाख्यमवस्थाद्वयमभ्युपेतम् अतस्तत्तिरोधानं कर्मणा तत्सङ्कोचः, तन्निवृत्तिस्तु प्रसरः, स एव प्रकाशः स चानित्यः, तस्य नित्यत्वेऽपि नित्यस्य ज्ञानद्रव्यस्य स्वप्रकाशत्ववादः स्वप्रकाशनरूपप्रसरणार्हत्वनिबन्धनः, अतोऽवस्थाद्वयस्यागमापायित्वात् द्रव्यं नित्यमेव अस्मदवस्थास्थानीयो हि भवतः स्वप्रकाशः स एव स्वरूपं तस्यास्तिरोधानं तन्निवृत्तिरेवेतीममर्थमभिप्रेत्य प्रकाशैकस्वरूपं ब्रह्मेत्युक्तम्, अतः स्वरूपातिरिक्तप्रकाशतिरोधानाख्यावस्थाद्वयानभ्युपगमात्स्वरूपनाश एव तिरोधानं स्यादित्यर्थः । अथ स्वरूपानुपपत्तिमाह—

मू० अपि च निर्विषया निराश्रया च स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूतः ? उतापरमार्थभूत ? इति विवेचनीयं, न तावत्परमार्थः, अनभ्युपगमात्, नाप्यपरमार्थः तथा हि सति द्रष्टृत्वेन दृश्यत्वे न वा दृग्भित्वेन वाभ्युपगमनीयः, न तावद्, दृशिः, दृग्रिस्वरूपभेदानभ्युपगमात् ।

टी० "अपि चेति," ज्ञातृत्वादीनामपरमार्थतया हि दोषान्तरापेक्षा तद्विहायापीति दृष्टान्ततया वक्ष्यमाणाऽनवस्थोपयोगित्वेन निर्विषयेत्यादिपरिपाटीप्रकटनं कृतम् । यद्वा विषयाश्रयभेदानामसत्त्वप्रतिभासयोरुक्तिर्दोषकल्पनाकारणत्वेन कृता अनभ्युपगमादिति परमार्थत्वे ह्यद्वैतहानिप्रसङ्ग इति भावः । अपरमार्थपक्षं दूषयितुं कोटित्रयमेव संभावितमित्याह "तथे"ति, अपरमार्थत्वान्मूलदोषान्तरापेक्षयाऽनवस्थेति दूषणं कोटित्रयस्यापि साधारणं, दृशित्वपक्षेऽधिकदूषणमस्तीति दर्शयति "न तावदि"ति, किमनवच्छिन्नदृशिः ? उतावच्छिन्ना ? दृशेरनवच्छिन्नत्वं किं स्वरूपव्यतिरिक्तं ? स्वरूपमेव ? ति विकल्पमभिप्रेत्य अनवच्छिन्नपक्षे स्वरूपव्यतिरिक्तपक्षं दूषयति "दृशस्वरूपभेदानभ्युपगमादि"ति, अनवच्छिन्नदृशिद्वयानभ्युपगमादित्यर्थः । अनवच्छिन्नपक्षे स्वरूपदृशित्वपक्षं दूषयति—

सू० भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात् । अथैतत्परिजिहीर्षया परमार्थसत्यनुभूतिरेव ब्रह्मस्वरूपा दोष इति चेत् ब्रह्मैव चेद्दोषः प्रपञ्चदर्शनस्यैव तन्मूलं स्यात् किं प्रपञ्चतुल्याविद्यान्तरकल्पनेन, ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात्, अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावद्भ्रान्तिरुपपादिता भवति अनिर्वचनीयत्वं च किमभिप्रेतं ? सदसद्विलक्षणत्वमिति चेत् तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् ।

टी० ॥ "भ्रमे"ति, अवच्छिन्नदृशिदूषणत्वे वक्ष्यमाणानवस्था अनवच्छिन्नपक्षेऽपि समाना अत्राधिकदूषणद्वयसद्भावात्सा नोक्ता । अवच्छिन्नदृशित्वेन

द्रष्टृत्वेन दृश्यत्वेन चाभ्युपगमं दूषयति "द्रष्टृदृश्ययोरि"ति, काल्पनिकत्वे-नापारमार्थ्यत्वेनेत्यर्थः दोषान्तरापेक्षाहेतुरिदं काल्पनिकत्वम् अवच्छिन्नदृ-शिपक्षेऽपि स्वरूपतद्व्यतिरिक्तविकल्पे स्वरूपपक्षे तुल्यमनभ्युपगमदूषणं ब्रह्म-स्वरूपस्यावच्छिन्नत्वापारमार्थ्यानभ्युपगमात् ततोऽवच्छिन्नपक्षे न विकल्पितं स्वरूपातिरिक्तपक्षेऽनवस्थोक्ता अथैतदिति अपारमार्थिकत्वेऽनवस्था आपार-मार्थ्यत्वे द्वैतहानिरित्येतद्दोषपरिजिहीर्षयेत्यर्थः अनुभूतेरेव दोषत्वाचाद्वैत-हानिः तस्याः पारमार्थ्याच्चानवस्थेति च भावः। एतद्दूषयति "ब्रह्मैवे"ति, अ-पारमार्थ्याद्दोषान्तरसापेक्षत्वसाम्यमभिप्रेत्य प्रपञ्चतुल्य—शब्द उक्तः, अतः—प्रतिशिरोऽभिहितैर्दूषणैरित्यर्थः अनिर्मोक्षप्रसङ्गपरिहाराय ब्रह्मव्यतिरिक्त-त्वम्, अनवस्थापरिहाराय पारमार्थिकत्वं परैरनवस्था त्रेधा परिहृता जीवज्ञा-नवादिनां बीजाङ्कुरन्यायात्प्रवाहानादित्वेन परिहृता अविद्यायां जीवः जी-वादविद्येति हि तन्मतं ब्रह्माज्ञानवादिना स्वरूपानादित्वेन परिहृता उभा-भ्यां च दुर्घटत्वेन परिहृता, दुर्घटत्वमविद्याया भूषणं न तु दूषणमिति पर-मार्थस्य ह्युपपत्त्यपेक्षा प्रासादनिगरणादिष्वल्पास्येन विपुलप्रासादनिगरण-मनुपपन्नमिति युक्तिर्न प्रवर्त्तते अत उपपत्तिनिरपेक्षत्वमपारमार्थ्यसाधकं, दो-षस्य स्वरसनिर्वाहकत्वेन दोषान्तरनैरपेक्ष्याच्च नानवस्थेति। अत्रोच्यते प्रवा-हानादित्वं ब्रह्माज्ञानवादिनैव दत्तोत्तरं, जीवनित्यत्वश्रुतिभिरकृताभ्यागम-कृतविप्रणाशरूपश्रुत्यर्थापत्त्या वामोक्षाज्जीवस्य स्थायित्वमिष्टं हीयेतेति अ-पारमार्थ्येन स्वरूपानादित्वमपि नानवस्थापरिहारः तथा सति माध्यमिकप-क्षविजयप्रसङ्गात् तत्राधिष्ठानस्य भ्रान्तिसिद्धत्वं तस्या भ्रान्तेरधिष्ठानान्तरा-पेक्षा स्यात् तस्यापि भ्रान्तिसिद्धत्वे तथा स्यादित्यनवस्थया ह्यधिष्ठानपार-मार्थ्यं साधितं माध्यमिकेनापारमार्थ्याद्धिष्ठानस्य स्वरूपानादित्वे स्वीकृते ऽनवस्था परिहृतेत्यधिष्ठानापारमार्थ्यमेव स्यात्। किंच स्वरूपानादित्वेऽपि मूलदोषापेक्षाऽस्त्येव जीवस्यानादित्वेन अविद्यापरिकल्पितत्वस्य भवद्भिर-ङ्गीकृतत्वात् दुर्घटत्वं चानुपपन्नं, दुर्घटत्वं नामोपपत्तिनिरपेक्षत्वं तदपार-मार्थ्यसाधकं चेदपरमार्थस्य प्रपञ्चस्य दुर्घटत्वेनोपपत्तिनिरपेक्षत्वान्मूलदो-षापेक्षा च न स्यात्, निवर्त्तकज्ञाने सत्यपि साऽवतिष्ठेत विरोधाच्च तिष्ठ-

तीति चेत् तर्ह्युपपत्त्यनुवर्त्तिन्यविद्या स्यादिति परमार्थत्वप्रयुक्तोपपत्तिर-
परमार्थत्वप्रयुक्तोपपत्तिरिति द्विविधोपपत्तिः, तत्र दुर्घटत्वं नाम परमार्थ-
त्वप्रयुक्तोपपत्तिनिरपेक्षत्वम् अपरमार्थत्वप्रयुक्तोपपत्तिर्हि दोषापेक्षा, अतः प्रप-
ञ्चस्य मूलदोषपरिकल्पनं युक्तमिति चेत्तर्ह्यपरमार्थत्वप्रयुक्तोपपत्तिरूपदोषा-
पेक्षा अपरमार्थभूतदोषस्यापि स्यात् अतोऽनवस्था तदवस्थैव, दुर्घटत्वम-
नवस्थापरिहारश्चेदधिष्ठानापारमार्थ्येऽनवस्था परिहृता स्यात्, तत्रापरमा-
र्थत्वप्रयुक्तोपपत्तिरवर्जनीयेत्यधिष्ठानान्तरापेक्षा स्यादेवेत्यनवस्थितिरिति
वक्तव्यं तदत्र दोषेऽपि तुल्यमित्यनवस्था दुष्परिहारा प्रवाहानादित्वपक्षे-
ऽप्यधिष्ठानापारमार्थ्येऽप्यनवस्था सुपरिहारा पितृपुत्रादिपरम्परावदधिष्ठा-
नपरम्परानादित्वाभ्युपगमात् जीवाज्ञानवादिनं प्रति ब्रह्माज्ञानवादिना
यद्दुर्घटत्वे दूषणमुक्तं तद्ब्रह्माज्ञानेऽपि तुल्यं, यथा अविद्याया दुर्घत्वं चेन्मु-
क्तान् परब्रह्म चाश्रयेदविद्या, शुद्धस्वरूपं ब्रह्म अशुद्धिस्वरूपाविद्या विरो-
धान्न श्रयतीति चेत्तर्ह्युपपत्तिमत्यविद्या, तस्मादुक्तान्योन्याश्रयणादिदूषणा-
न्यापतेयुरिति ह्युक्तं तत्तवापि तुल्यं, मोक्षेऽपि ब्रह्माश्रयेदविद्या न हि बाध-
कज्ञाने सत्यपरमार्थभूता ऽविद्या तिष्ठतीति चेत् बाधकसन्निधौ न बा-
धास्थितिरित्येवंरूपोपपत्तिमत्येवाविद्येत्यस्मदुक्तान्यनवस्थानादिदूषणान्या-
पतेयुरिति वक्तुं शक्यते दोषस्य स्वपरनिर्वाहकत्वे अधिष्ठानमपि तथा
स्यात्, परं प्रत्यधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वमिति चेत्, परं प्रति
दोषत्वे सिद्धे हि स्वनिर्वाहकत्वं तदेव नास्तीति तुल्यं स्यात्, अधिष्ठा-
नारोप्ययोर्भेदो दृष्टस्तत्राधिष्ठानस्य स्वपरनिर्वाहकत्वेऽधिष्ठानाध्यस्तयोरै-
क्यप्रसङ्ग इति चेत् दोषतत्कार्ययोरपि तिमिरचन्द्रद्वित्वयोर्भेदो दृष्टः, दो-
षस्य स्वपरनिर्वाहकत्वे दोषाध्यस्तयोरैक्यप्रसङ्ग इति तुल्यमित्येतदभि-
प्रायेण यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः न तावद्भ्रान्तिरुपपा-
दिता भवतीत्युक्तं, यच्चोक्तमाचार्यपादैः "स्वरूपानादित्वस्वपरघटने दुर्घ-
टतया । प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः । असत्या विद्याया वदि-
तुमनवस्थापरिहृतौ मतास्त्वेतास्तुल्याः स्फुटमहदधिष्ठानसरणा" विति,
अथानिर्वचनीयत्वानुपपत्तिमाह "अनिर्वचनीयत्वं" चे"ति, यतायाविद्युत्स-
न्निधौ दुरुपपादत्वं कथं प्रमाणशून्यत्वमित्यत्राह—

सू० एतदुक्तं भवति सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यं सर्वा च प्रतीतिः सदसदाकारा, सदसदाकारायाः प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यादिति ।

टी० "एतदुक्तमि"ति, "सर्वं सर्वप्रतीतेर्विषयः स्यादिती"ति, सदसद्विलक्षणमिति या प्रतीतिस्तत्रापि सदसदेव विषयः स्यादित्यर्थः, प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते तस्मात्सदसदाकारायाः प्रतीतेः सदाकार एव विषयः न सदसद्विलक्षणं, यथा ख्यातिविवेके "न ह्यन्यदवभास्यमानो विषयः, अवभासनव्यवस्थाप्यत्वं विषयस्येति एकस्य विषयस्य सदसदाकारत्वमनुपपन्नं व्याप्तिविरोधादिति चेत्, सदसद्विलक्षणत्वं च व्याप्तिविरोधादनुपपन्नं सतोऽसद्विलक्षणत्वमसतस्सद्विलक्षणत्वं च हि दृष्टं न त्वेकस्योभयवैलक्षण्यं दृष्टमिति व्याप्तिविरोधः, अयं च विशेषः सदसद्विलक्षणत्वं क्वचिदपि न दृष्टं सदसदात्मकत्वं दृष्टमिति, यथा संवित्सिद्धौ "नासत्प्रतीतेर्बाधाच्च न सदित्यपि यच्च तत् । प्रतीतेरेव सत्किं न बाधाचासत्कुतो जगदि"ति, अर्थास्थितौ सत्त्वमसत्त्वं वा स्यात् न तद्विलक्षणत्वं सतो घटादेः सदसद्विलक्षणत्वं दृष्टमिति चेत् न तथा सति ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्गात् अन्यतरत्वसहसदसद्विलक्षणत्वमिष्टमेवेति चेत् तुल्यम् ईदृशं सदसद्वैलक्षण्यं वदता शब्दान्तरेण सत्त्वमेवाङ्गीकृतं भवति अतस्त्वदभिमतं सदसद्विलक्षणत्वं विरोधादपास्तम् अस्तीति प्रतीतिविषयत्वं सत्त्वं नास्तीति विषयत्वं बाधितत्वमिति नैकस्य सत्त्वासत्त्वविरोधस्सदसद्विलक्षणत्वकल्पकश्चेत् सर्वत्र पूर्वपक्षसिद्धान्तप्रतीत्योः परस्परविरुद्धाकारविषयत्वादुभयाकारविलक्षणोऽर्थ एव सिध्यतीति सिद्धान्तसमर्थनवैयर्थ्यं स्यात्, ततश्च भेदस्तु सुनिरूप इति पूर्वपक्षीकृत्य दुर्निरूप इति त्वया सिद्धान्तिते प्रतीतिद्वयविरोधात्सुनिरूपदुर्निरूपविलक्षणः स्यात् एवं संवित्सत्यत्वमिथ्यात्वजडत्वाजडत्वनित्यत्वादिवादेषु पूर्वपक्षसिद्धान्तिताकाराविलक्षणत्वं संविदः स्यात् तच्चानभिमतम्, अतः परस्पर

विरुद्धाकारप्रतीत्योः प्रतिपन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति न सदसद्वैलक्षण्यसिद्धिः, तर्हि ख्यातिबाधान्यथानुपपत्तेः कः परिहार उक्तः? इति चेत् अन्यथैवोपपत्तिरुक्ता भवति सत्त्वे सत्यन्यथा व्याख्यानादिभिस्तत्तद्वाद्यभिमतैरेव ख्यातिबाधोपपत्तेः सतः कथं बाधः अन्यत्र ख्यातत्वात्, नन्वन्यत्र सत्त्वेन बाधः, न सत्त्वेदसत्ख्यातिप्रसङ्ग इति चेन्न अन्यत्र सत्त्वात्, अन्यत्र सतोऽन्यत्र ख्यातत्वं ह्यन्यथा ख्यातत्वमन्यत्र सतोऽन्यत्र ख्यातिर्दोषवशात् दोषस्यान्यत्र ख्यातिहेतुत्वं न दृष्टमिति चेत् दोषस्यानिर्वचनीयतावभासहेतुत्वं च न क्वचिदिति यदाऽन्यत्र दृष्टमिति तुल्यं मिथो विरुद्धाप्रतिपन्नाकारवैलक्षण्यमेकस्य विरुद्धमित्येतत्तबाधिकम् अख्यातिपक्षे सत्त्वे सति भेदाग्रहेण ख्यातिबाधोपपत्तिः सत एवागृहीतभेदतया ख्यातिः, भेदग्रहश्च बाधः, बाध्यत्वं च प्रवृत्तेः, यथार्थख्यातिपक्षे तु शुक्तिरजतस्थाप्यार्थादौ सत्त्वप्राचुर्याभावास्थिरत्वतदेकानुभाव्यत्वाग्राह्यत्वाच्च ख्यातिबाधोपपत्तिः पुरोवर्तिनि सत एव रजतस्य ख्यातिः शुक्तिप्राचुर्यग्रहो बाधः, तेन प्रवृत्तिर्बाध्या, तद्बाधश्च प्रवृत्त्यनुपपत्तिः अलातचक्रादौ त्वख्यातिपक्षवत्तदुपपत्तिः अतोऽन्यथैवोपपत्तिः सिद्धेत्यनिर्वचनीयत्वकल्पकमयुक्तम्, एवमाश्रयतिरोधानस्वरूपानिर्वचनीयत्वानुपपत्तय उक्ताः। अथ न हि दृष्टेऽनुपपन्नं नामेति न्यायात्प्रमाणसिद्धार्थस्य तर्केण बाधो न युक्त इत्यभिप्रायवता परेण प्रमाणप्रतिज्ञा शङ्क्यते—

सू० अथ स्याद्वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्याज्ञानादिपदवाच्यम्

टी० "अथ स्यादि"ति, पूर्वदूषिताकारान् साधयितुमाह "वस्तुस्वरूपे"ति, अनेन तिरोधानमुक्तम् आन्तरबाह्येति स्वरूपम् अध्यासोपादानत्वेन हि मिथ्यात्वं फलितं सदसदित्यनिर्वचनीयत्वं शास्त्रेष्वेतत्प्रतिपादकशब्दप्रत्यभिज्ञानार्थमविद्याज्ञानादिपदवाच्यत्वमित्युक्तं सिद्धान्तिना दूषयिष्यमाणमाकारान्तरमपि साध्यत्वेनाह—

सू० वस्तुयाथात्म्यज्ञाननिवर्त्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किंचिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते तदुपहितब्रह्मोपादानस्वाविकाशे चिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मनि अहङ्कारज्ञानज्ञेयविभागरूपोऽध्यासः तस्य वावस्था विशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तुतज्ज्ञानरूपोऽध्यासोऽपि जायते, कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव ।

ननु च भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते, मैवं साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम् अपि त्वज्ञानविषयम् अन्यथा मिथ्यार्थावभासानुपपत्तेः, न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्तत इति न विरोधः ॥

ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति स विषयः प्रमाणानधीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते ॥

टी० "ननु चे"ति, परिहरति "मैवमि"ति, याथात्म्य—शब्देन निष्कृष्टमद्वितीयत्वलक्षणं स्वरूपं विवक्षितं, न हि रजतविषयज्ञानेन रजतं निवर्त्त इत्यर्थः । प्रपञ्चमिथ्यात्वसिद्धवत्कारेण हेतुमाह "अन्यथे"ति, अन्यथा—साक्षिस्वरूपप्रकाशमात्रस्यैव वस्तुयाथात्म्यविषयत्व इत्यर्थः । अज्ञानविषयत्वमस्तु ततः किं? मित्यत्राह "न ही"ति, न हि रजतज्ञानेन रजतं निवर्त्यमित्यर्थः, दृश्यविशेषणस्य रूपादेरपि दृश्यत्वं दृष्टं दृश्याज्ञानावच्छेदकस्यास्मदर्थस्य दृश्यत्वमभ्युपगमादस्मदर्थावच्छिन्नमज्ञानं न विषयीक्रियत इत्यभिप्रायेण पुनश्चोदयति—

"ननु चे"ति विषयविशेषः—अवच्छेदकविशेषः स इति च सएव व परामृश्यते, परिहरति—

सू० नैष दोषः सर्वमेव वस्तुजातं ज्ञाततया ऽज्ञाततया वा साक्षिचैतन्यस्य विषयभूतं तत्र जडत्वेन ज्ञाततया सिद्ध्यत एव प्रमाणव्यवधानापेक्षा, अजडस्य तु प्रत्यग्वस्तुनः स्वयंसिद्धतो न प्रमाणव्यवधानापेक्षा, इति सदैवाज्ञानव्यावर्त्तकत्वेनावभासो युज्यते, तस्मान्न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते, तदिदं भावरूपमज्ञानमनुमानेनापि सिद्ध्यति—

टी० "नैष दोष"इति, अस्मदर्थोऽपि सर्वशब्दवाच्यान्तर्भूतः, ज्ञाततया अज्ञातया वा ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा साक्षिचैतन्यस्य विषयभूतं साक्षिचैतन्येन प्रतिभातीत्यर्थः, अस्मदर्थस्य साक्षिचैतन्यविषयत्वमौपचारिकं स्वयंप्रकाशस्य स्वविषयत्वायोगात् जडस्य स्वयंप्रकाशत्वायोगात् प्रमाणाधीनसिद्धि सदृश्यविशेषणं भवति, अस्मदर्थस्तु स्वयंप्रकाशतया स्वयमेव सिध्यन्नज्ञानावच्छेदक इत्यर्थः, दृश्यावच्छेदकत्वाद्दृश्यमिति चोद्यं तज्जडत्वप्रयुक्तमिति सोपाधिकमिति परिहारः स्यात्, तस्मादभावरूपत्वपक्षे तदभावाच्चेत्यर्थः, न्यायोपबृंहितेनेति पक्षद्वयेऽपि विरोधतदभावरूपन्यायानुगृहीतेनेत्यर्थः, एवं प्रत्यक्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वं, न जानामीत्यनेनात्माश्रयत्वं च सिद्धं शास्त्रेष्वज्ञान—शब्दवाच्यतया पराभिमतकर्मव्यावृत्तिः प्रत्यक्षतया सिद्धा, अस्य च शास्त्रेष्वज्ञानादिशब्दवाच्यत्वं ज्ञानविरोधित्वादहमज्ञ इति प्रतिपन्नतया च सिद्धम् । अथ स्वविषयावरणतास्वनिवर्त्यत्वाभ्यां सहोपपादिताकारविशिष्टं चाज्ञानमनुमानेनापि साध्यते—

सू० विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त—

टी० विवादाध्यासितमित्यादिना, ज्ञानमित्युक्ते ब्रह्मस्वरूपस्य वस्त्वन्तरपूर्वकत्वासम्भवात्तद्व्यावृत्त्यर्थं प्रमाणज्ञानमित्युक्तं, तथाऽपि धारा-

वाहिकज्ञाने उत्तरोत्तरज्ञानानां सिषाधयिषितवस्त्वन्तरपूर्वकत्वाभावात्त-द्व्यावृत्त्यर्थं विवादाध्यासितमित्युक्तं, तज्ज्ञानं किमित्यपेक्षायां व्यक्त्यर्थं प्रमाणज्ञानमित्युक्त्वा अयं धर्मी दर्शितः। अथ साध्यधर्ममाह "स्वप्रागभावे"ति, वस्त्वन्तरपूर्वकमित्युक्ते घटादिस्वविषयपूर्वकत्वेन सिद्धसाधनं स्यादिति तद्व्यावृत्त्यर्थमाह "स्वदेशगते"ति, स्वाश्रयगतेत्युक्ते दृष्टान्तस्य साध्यवैकल्यं स्यात् न हि तमो दीपगतम् अतः स्वदेशगतेत्युक्तिः। धर्माधर्मव्यावृत्त्यर्थमाह "स्वनिवर्त्ये" ति,

ननु कथं स्वनिवर्त्य-शब्देन धर्माधर्मव्यावृत्तिः,? ज्ञानोत्पत्तिहेतुभूतमदृष्टं हितज्ञानोत्पत्त्या हि नश्यति नैवं सर्वेषां धर्माधर्माणां ज्ञानफलकत्वाभावात्, ज्ञानोत्पादकव्यतिरिक्तधर्माणां पूर्वक्षणे स्वदेशे विद्यमानत्वाच्च। यद्वा स्वनिवर्त्य-पदेन संस्कारव्यावृत्तिः, न हि संस्कारो ज्ञाननिवर्त्यः, भयादिव्यावृत्त्यर्थमाह "स्वविषयावरणे"ति, प्रागभावस्यैवंविधत्वाभावात्तद्व्यावृत्त्यर्थमाह "स्वप्रागभावव्यतिरिक्ते" ति. इयं प्रतिलोमव्यावृत्तिः. वस्त्वन्तरपूर्वकमित्युक्ते अभावस्यापि पदार्थत्वेन वस्तुशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थमाह "स्वप्रागभावव्यतिरिक्ते"ति, घटादिस्वविषयव्यावृत्त्यर्थमाह-

सू॰ स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति आलोकाभावमात्रं वा।

टी॰ "स्वविषयावरणे" ति, कुड्यादिव्यावृत्त्यर्थमाह "स्वनिवर्त्ये"ति, वेद्यगतवित्त्यादिव्यक्तिप्रागभावव्यावृत्त्यर्थमाह "स्वदेशगते"ति, प्रमाणज्ञाने निरस्ते वेद्यगतचैतन्यमभिव्यक्तं भवतीति हि तत्परिपाटी, अभिव्यक्तिप्रागभावस्य विषयावरणत्वं प्रकाशविरोधित्वं न तु तत्प्रतिबन्धकत्वमित्यनुलोमव्यावृत्तिः। हेतुमाह "प्रकाशिते" ति, साक्षाद्वा परम्परया वा अबाध्यव्यवहारानुगुण्यहेतुत्वं प्रकाशकत्वमिह विवक्षितं साक्षाद्वा परम्परया इत्युक्ते हि दीपप्रभायां ज्ञाने च हेत्वनुगमसिद्धिः इदं रजतमिति ज्ञाने ऽतिव्याप्तिपरिहारायाबाध्यव्यवहारानुगुण्यमित्युक्तं, प्रकाशकत्वादित्युक्ते धारावाहिकज्ञाने

उत्तरोत्तरज्ञानानां प्रकाशकत्वेऽपि सिषाधयिषितधर्माभावाद्धेतोरनैकान्तिकत्वं स्यादिति तद्व्यावृत्त्यर्थमाह "अप्रकाशितार्थप्रकाशकत्वादि"ति, इन्द्रियेष्वनैकान्तिकत्वव्यावृत्त्यर्थं भासमानत्वे सतीति हेतुर्विशेष्य इति मन्तव्यं, दृष्टान्तमाह "अन्धकार"इति, दीपभाववदित्युक्ते उत्तरोत्तरप्रमाणानामप्रकाशितार्थप्रकाशकत्वाभावात्साधनविकलता स्यात् निवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्साध्यविकलता च स्यादिति तद्व्युदासार्थं प्रथमोत्पन्नप्रदीपभाववदित्युक्तं, तथाऽपि दिवादीपस्य तथाविधत्वादर्शनात्तद्व्यावृत्त्यर्थम् अन्धकार इत्युक्तं, दृष्टान्तस्य साध्यविकलता स्यात्तां परिहरति "आलोकेत्यादिना, आलोके सत्यपि उलूकादीनामन्धकारसंभवादनुयायिनमाकारमाह "रूपदर्शनाभावमात्रं वे"ति, यद्वा निमीलितनेत्रस्य तमःप्रतिपत्तिनिर्वाहार्थमाह–

टी० "वस्तुयाथात्म्यज्ञाने"ति, तदुपहितेत्याश्रयश्च आन्तराध्यासः कः? बाह्यः कः? कथं चाविद्योपादानत्वेन ब्रह्मण उपादानत्व?मित्यत्राह "तदुपहिते"ति, निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिं सूचयति "अविकारे स्वप्रकारे चिन्मात्रवपुषि प्रत्यगात्मनी"ति, अविकारत्वात्–स्वप्रकाशत्वात् प्रत्यक्त्वाच्च विकारास्पदजडपराग्रूपपरिणामो नोपपद्यत इत्यर्थः। स्वप्रकाशस्य कथमध्याससंभव? इत्याह "तिरोहितस्वरूपे"ति, तिरोधायकं किमित्यत्राह "तेनैवे"ति, तेनैव–अध्यासहेतुनैवेत्यर्थः। अहङ्कारो ज्ञानं चान्तराध्यासः, ज्ञेयं बाह्याध्यासः, अध्यासरूपे–अध्यस्तरूपे कर्मणि कः, तस्यैव–दोषस्यैव, अवस्थाविशेषेण–कादाचित्कावस्थाविशेषेण रज्जुसर्पाद्यध्यासः एवं निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिरुक्ता। दोषस्योपादानत्वे उपपत्तिमाह "कृत्स्नस्ये"ति, सुवर्णजातीयस्य भूषणस्य स्वर्णमेव ह्युपादानं दृष्टं तद्वदिति भावः हेतुबलात्कार्यकारणयो सजातीयत्वदर्शनलक्षणात्। अथ प्रत्यक्षमाह–

मू० कारणं भवितुमर्हतीति हेतुबलादवगम्यते कारणाज्ञानविषयं प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासः, अदन्तु ज्ञानप्रागभावविषयः, स हि षष्ठप्रमाणगोचरः अयं त्वहं सुखीतिवदपरोक्षः।

टी० "कारणे"ति, अहमज्ञ इत्यस्य विवरणं मामन्यं च न जानामीति अहमज्ञ इत्यज्ञानस्वरूपकीर्त्तनं, तस्य मामन्यं च जानामीत्याच्छादनरूपकार्यकथनं, कारण–शब्देन कार्यरूपाज्ञानव्यावृत्तिः तस्मात्सौषुप्तिकमज्ञानं विवक्षितं जागरितावस्थायां ये घटाद्यवच्छिन्नमज्ञानं प्रतीयते सविकल्पकप्रत्यक्षेण, सुषुप्तौ तु अनवच्छिन्नकारणाज्ञानप्रतीतिरस्तीति तत्त्वशुद्धिकारादिभिरुक्तं. जागरितावस्थायामेवाज्ञानानुभवोऽयमिति संप्रदायः, अन्यं च न जानामीत्युक्तेः, न हि स्वापेऽन्यपरामर्शः न जानामीत्याच्छादकतया प्रतीयमानस्याज्ञानस्य कारणत्वात् कारणाज्ञानविषयमित्युक्तम् अपरोक्षावभास इति परोक्षरूपानुमानादिप्रमाणव्यावृत्त्यर्थमुक्तं ज्ञानप्रागभावविषयत्वमाशङ्क्य परिहरति "अयन्त्वि"ति, भवत्वयमपि षष्ठप्रमाणविषय इत्याशङ्क्याह "अयं त्वि"ति, परोक्षप्रमाणानि प्रत्यक्षव्यतिरिक्तानि तस्मात्परोक्षप्रमाणविषयभूतमज्ञानं न भवितुमर्हतीत्यर्थः। भावग्राहिप्रमाणेनाभावस्य वेद्यत्वेऽपि दूषणमाह–

सू० अभावस्य प्रत्यक्षत्वाभ्युपगमेऽप्ययमनुभवो नात्मनि ज्ञानाभावविषयः, अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात् अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च। एतदुक्तं भवति अहमज्ञ इत्यस्मिन्ननुभवे अहमित्यात्मनो भावधर्मितया ज्ञानस्य च प्रतियोगितयाऽवगतिरस्ति? वा न वा? अस्ति चेद्विरोधादेव न ज्ञानाभावानुभवसम्भवः, नो चेद्धर्मिप्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवः सुतरां न सम्भवति।

टी० "अभावस्ये"ति, हेतुमाह "अनुभवे"ति, अभावस्यानुभववेलायां ज्ञानं विद्यते न वा? विद्यते चेत् ग्राह्याभावाद्भावप्रतीतिः, न चेत् ग्राहकाभावान्न तदभाव प्रतीतिरित्यर्थः, भावाभावयोरेकविषयत्वे हि विरोधः, अत्र विरोधो नास्तीति अभावविषयज्ञानस्य विद्यमानस्य ग्राहकत्वात् इतरविषयज्ञानस्याभावप्रतियोगित्वेनाविद्यमानत्वादिति शङ्कां

परिहरन् अनुभववेलायां ज्ञानस्य विद्यमानत्वम् अविद्यमानत्वे ज्ञानाभावप्रतीति अनुपपत्तिभावरूपत्वेन विरोधाभावं च विवृणोति "एतदुक्तं भवती" ति, ज्ञानप्रागभावस्य ग्राह्यत्वे अनिच्छया ऽपि भावाभावयोरेकविषयत्वमापतितमित्यभिप्रायेणाह 'अह' मिति, ज्ञानस्य चेति ज्ञान–शब्द आत्माविषयादिघटादिविषयज्ञानसाधारणः इह भूतले घटो नास्तीत्यादिषु अभावग्रहणे प्रतियोगिधर्मिणोर्ज्ञानापेक्षा दृष्टा तस्मादत्राप्यभावधर्मितयाऽऽत्मनोज्ञानमस्तीति वक्तव्यम् अभावव्यतिरिक्तो ह्यात्मा अतस्तद्विषयज्ञाने सत्यपि अभावव्यतिरिक्तविषयज्ञानमभावप्रतियोगीति वचनं व्याहतं स्यात् अभावधर्मिप्रतियोगिरूपत्रितयव्यतिरिक्तविषयज्ञानमभावप्रतियोगि चेत्तदानीमभावप्रतियोगितया ज्ञानस्यापि प्रतीरस्तीति वक्तव्यं प्रतीयमानं ज्ञानं स्वविषयावच्छिन्नं प्रतीयत इति विषयाणामपि प्रतीतिरस्ति, एवमभावप्रतियोगिज्ञानावच्छेदकतया विषयेषु ज्ञायमानेषु तद्विषयज्ञानाभावोऽनुपपन्न इति भावः । अभावस्य प्रमाणान्तरविषयत्वेऽप्युक्तं दूषणमतिदिशति–

सू० ज्ञानाभावस्यानुमेयत्वे अभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिः समाना, अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवोभावरूपाज्ञानविषय एवाभ्युपगन्तव्य इति। ननु च भावरूपमज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते । नैवम्, साक्षिचैतन्यं न वस्तुयाथात्म्यविषयमपि त्वज्ञानविषयमन्यथा मिथ्यार्थावभासानुपपत्तेः, न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्तत इति न विरोधः । ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति स विषयः प्रमाणानधीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते । नैष दोषः सर्वमेव वस्तुजातं ज्ञाततया अज्ञाततया वा साक्षि-

चैतन्यस्य विषयभूतं, तच्च जडत्वेन ज्ञातया सिध्यत एव प्रमाणव्यवधानापेक्षा, अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतो न प्रमाणव्यवधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनावभासोयुज्यते तस्मान्न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते, तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । आलोकाभावमात्रं वा ।

टी० "ज्ञानाभावस्ये" ति, प्रमाणान्तराणां विद्यमानविषयत्वनियमाभावेऽपि विद्यमानतया दर्शयितुम् अशक्यमिति भावः । अहमज्ञ इति वर्त्तमानतया ह्यज्ञानं प्रतीयते अस्मिन् पक्षेऽधिकं दूषणान्तरं पूर्वमुक्तमपरोक्षस्य परोक्षरूपप्रमाणविषयत्वानुपपत्तिरूपमर्थसिद्धं भावरूपत्वे उक्तदूषणं नास्तीत्याह "अस्ये" ति, धर्मिप्रतियोगिविषयज्ञानं—धर्मिप्रतियोगिज्ञानं न तेन भावरूपाज्ञानस्य विरोधः, घटाच्छादकमज्ञानं घटज्ञानेन हि विरुध्यते न तु घटज्ञानविषयज्ञानेन धर्मिज्ञानेन चेत्यर्थः । वस्तुयाथात्म्यज्ञाननिवर्त्यमज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यत इति चोदयति—"ननु चे" ति, परिहरति "नैव" मिति, याथात्म्य—शब्देन निष्कृष्टमद्वितीयत्वलक्षणं स्वरूपं विवक्षितं प्रपञ्चमिथ्यात्वसिद्धवत्कारेण हेतुमाह "अन्यथे" ति, अन्यथा—स्वसाक्षिस्वरूपप्रकाशमात्रस्यैव वस्तुयाथात्म्यविषयत्व इत्यर्थः । अज्ञानविषयत्वमस्तु ततः किमित्यत्राह "न ही" ति, न हि रजतविषयज्ञानेन रजतं निवर्त्यमित्यर्थः । दृश्यविशेषणस्य रूपादेरपि दृश्यत्वं दृष्टं दृश्यज्ञानावच्छेदकस्यास्मदर्थस्य दृश्यत्वानभ्युपगमात् अस्मदर्थावच्छिन्नमज्ञानं विषयीक्रियत इत्यभिप्रायेण पुनश्चोदयति "ननु चेद" मिति, विषयविशेषः—अवच्छेदकविशेषः "स" इति स एव परामृश्यते ।

परिहरति "नैष दोष"इति, अस्मदर्थोऽपि सर्वशब्दवाच्यान्तर्भूतः ज्ञाततया
अज्ञाततया वा ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा साक्षिचैतन्यस्य विषयभूतं
साक्षिचैतन्येन प्रतिभातीत्यर्थः । अस्मदर्थस्य साक्षिचैतन्यविषयत्वमौपचा-
रिकं स्वयंप्रकाशस्य विषयत्वायोगात् जडस्य स्वयंप्रकाशत्वायोगात्
प्रमाणाधीनसिद्धि सत् दृश्यविशेषणं भवति । अस्मदर्थस्तु स्वयंप्रकाश-
तया स्वयमेव सिध्यन्नज्ञानावच्छेदक इत्यर्थः । दृश्यावच्छेदकत्वाद्दृश्य-
मिति'चोद्यं तज्जडत्वप्रयुक्तमिति सोपाधिकमिति परिहारः । तस्माद-
भावरूपत्वपक्षे उक्तविरोधाद् भावरूपत्वपक्षे तदभावाच्चेत्यर्थः । न्यायोप-
बृंहितेनेति पक्षद्वयेऽपि विरोधतदभावरूपन्यायानुगृहीतेनेत्यर्थः, एवं प्रत्य
क्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वं न ज्ञानामीत्यनेनात्माश्रयत्वं
च सिद्धं शास्त्रेष्वज्ञानशब्दवाच्यतया पराभिमतकर्मव्यावृत्तिः प्रत्यक्षतया
सिद्धा अस्य शास्त्रेष्वज्ञानादिशब्दवाच्यत्वं ज्ञानविरोधित्वादहमज्ञ इति
प्रतिपन्नतया च सिद्धम्—अथ स्वविषयावरणत्वस्वनिवर्त्यत्वाभ्यां सहोपपा-
दिताकारविशिष्टं चाज्ञानमनुमानेनापि साध्यते 'विवादाध्यासितमित्या-
दिना, ज्ञानमित्युक्ते ब्रह्मस्वरूपस्य वस्त्वन्तरपूर्वकत्वासम्भवात् तद्व्यावृ-
त्त्यर्थं प्रमाणज्ञानमित्युक्तं तथाऽपि धारावाहिकज्ञाने उत्तरोत्तरविज्ञानानां
सिषाधयिषितवस्त्वन्तरपूर्वकत्वाभावात् तद्व्यावृत्त्यर्थं विवादाध्यासितमि-
त्युक्तं तज्ज्ञानं किमित्यपेक्षायां व्यक्त्यर्थं प्रमाणज्ञानमित्युक्तम् अयं धर्मी
दर्शितः । अथ साध्यधर्ममाह "स्वप्रागभावे"ति, वस्त्वन्तरपूर्वकमित्युक्ते
घटादिस्वविषयपूर्वकत्वे न सिद्धसाधनं स्यादिति तद्व्यावृत्त्यर्थमाह "स्व
देशगते"ति, स्वाश्रयगतेत्युक्ते दृष्टान्तस्य साध्यवैकल्यं, न हि तयोर्दियग
तमतः स्वदेशगतेत्युक्तिः धर्माधर्मव्यावृत्त्यर्थमाह "स्वनिवर्त्त्ये"ति, ननु कथं
स्वनिवर्त्त्य-शब्देन धर्माधर्मव्यावृत्तिः? ज्ञानोत्पत्तिहेतुभूतमदृष्टं ज्ञानो-
त्पत्त्या हि नश्यति, मैवम् सर्वेषां धर्माधर्माणां ज्ञानवशगत्वाभावात्
ज्ञानोत्पादकव्यतिरिक्तधर्मादीनां पूर्ववत्तो स्वदेशे विद्यमानत्वाच्च । यद्वा
स्वनिवर्त्यपदेन संस्कारव्यावृत्तिः, न हि संस्कारोज्ञानेन निवर्त्यः, भयादि-
व्यावृत्त्यर्थमाह "स्वविषयावरणे"ति प्रागभावस्यैवंविधत्वात्तद्व्यावृत्त्यर्थं.

माह "स्वप्रागभावव्यतिरिक्ते"ति, इति प्रतिलोमव्यावृत्तिः, वस्त्वन्तरपूर्वकमित्युक्ते अभावस्यापि पदार्थत्वेन वस्तु-शब्दवाच्यत्वात्तद् व्यावृत्त्यर्थमाह "स्वप्रागभावव्यतिरिक्ते"ति, घटादिस्वविषयव्यावृत्त्यर्थमाह "स्वविषयावरणे"ति, कुड्यादिव्यावृत्त्यर्थमाह "स्वनिवर्त्ये"ति, वेद्यगतवित्त्यभिव्यक्तिप्रागभावव्यावृत्त्यर्थमाह "स्वदेशगते"ति, प्रमाणज्ञानेनाज्ञाने निरस्ते वेद्यगतचैतन्यमभिव्यक्तं भवतीति हि तत्परिपाटी अभिव्यक्तिप्रागभावस्य विषयावरणत्वं प्रकाशविरोधित्वं न तु तत्प्रतिबन्धकत्वमित्यनुलोमव्यावृत्तिः। हेतुमाह 'अप्रकाशिते"ति, साक्षाद्वा परम्परया वा अबाध्यव्यवहारानुगुण्यहेतुत्वं प्रकाशकत्वमिह विवक्षितम्। साक्षाद्वा परम्परया वेत्युक्ते हि दीपप्रभायां ज्ञाने च हेत्वनुगमसिद्धिः इदं रजतमिति ज्ञानेऽतिव्याप्तिपरिहाराय अबाध्यव्यवहारानुगुण्यहेतुत्वमित्युक्तं प्रकाशकत्वादित्युक्ते धारावाहिकज्ञाने उत्तरोत्तरज्ञानानां प्रकाशकत्वेऽपि सिषाधयिषितधर्माभावाद्धेतोरनैकान्त्यं स्यादिति तद्व्यावृत्त्यर्थमाह "अप्रकाशितार्थप्रकाशकत्वादि"ति, इन्द्रियेष्वनैकान्तिकत्वव्यावृत्त्यर्थं भासमानत्वे सतीति हेतुर्विशेषित इति मन्तव्यं दृष्टान्तमाह "अन्धकार"इति, दीपप्रभावदित्युक्ते उत्तरोत्तरप्रभाणामप्रकाशितार्थप्रकाशकत्वाभावात्साधनविकलता स्यात् स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्साध्यविकलता च स्यादिति तद्व्युदासार्थं प्रथमोत्पन्नप्रदीपप्रभावदित्युक्तम् तथापि दिवादीपप्रभायास्तथाविधत्वादर्शनात् तद्व्यावृत्त्यर्थमन्धकार इत्युक्त, दृष्टान्तस्य साध्यविकलतामाशङ्क्य परिहरति "आलोकेत्यादिना, आलोके सत्युलूकादीनामन्धकारसम्भवादनुयायिनमाकारमाह "रूपदर्शनाभावमात्रं वे"ति, यद्वा निमीलितास्य तमःप्रतिपत्तिनिर्वाहार्थमाह—

सू० रूपदर्शनाभावमात्रं वा तमो न द्रव्यं तत्कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यते तम इति चेत् उच्यते बहुलत्वविरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलब्धेर्द्रव्यान्तरमेव तम इति, निरवद्यमिति

टी० "रूपदर्शने"ति, अत्र नैयायिकादिभिरुक्तं दूषणमनुसन्धत्ते तत्रोत्पादकज्ञापकानुपपत्त्या द्रव्यान्तरत्वं दूषितं, रूपवत्त्वेऽपि परमाणूनामिव अनुत्पाद्यत्वं, तमसस्तु रूपवत्त्वाद्वृहु[1]त्वाच्चोत्पाद्यत्वं स्यात् तत्र रूपवत्त्वरहितानि वाय्वाकाशादीनि नोत्पादकानि भवन्ति स्पर्शरसगन्धविरहाच्चान्यान्यपि द्रव्याणि, कारणगुणप्रक्रमेण हि कार्ये वैशेषिकगुणारम्भः इयमुत्पत्त्यनुपपत्तिः आलोकाननुगृहीतत्वाच्चक्षुर्न ग्राहकम् आलोकसन्निधाननवस्थाच्चास्य ग्राह्यत्वं, रूपवत्त्वप्रतीतिस्तु भ्रान्तिरेव निमीलने नीलप्रतिभासवदिति ज्ञप्त्यनुपपत्तिः, अत्र परिहारो वार्त्तिककारैरुक्तः "तमः खलु चलं नीलं परापर[1]विभागवत् । प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हती"ति स एवात्रोच्यते तत्र परापरशब्दार्थौ बहुलत्वविरलत्वशब्देन उक्तः, आदिशब्देन चलत्वं-रूपवत्तयेति रूपवत्तयेति नीलशब्दार्थ उक्तः, द्रव्यान्तर—शब्देन दशमद्रव्यत्वमुक्तं नवद्रव्यस्वीकारो हि तेषां पृथिव्यादीनां द्रव्याणामन्योन्यवैधर्म्यात्स्वीक्रियते अन्यथा पृथिव्येव द्रव्यं नान्यत् गन्धवत्त्वाद्यभावादिति वक्तुं शक्यते एव द्वे द्रव्ये इत्यादि तच्चानभिमतं द्रव्याणां परस्परवैधर्म्यात् एवं नवद्रव्यवैधर्म्याद्दशममित्यङ्गीकार्यमिति वार्त्तिककारार्थः, निमीलने नीलप्रतिभानम् बाधितविषयम् इदं त्वबाधितत्वान्न तथा भवितुमर्हति तथाऽपि रूपोपलब्धिवेलायाम् अनुपलब्धेर्निमीलनवदपि संभवतीति शङ्कितं प्रत्यक्षमिति चेन्न उलूकादीनामस्मदादिरूपोपलब्धिवेलायां रूपानुलब्धौ तद्रूपोपलब्धेरपि शङ्कितत्वापातादुलूकादिरूपोपलब्धिवेलायामस्मदादेरूपानुलब्ध्या अस्मदादिरूपोपलब्धेरपि शङ्कितत्वप्रसङ्गाच्च आगमस्वारस्याच्च शङ्काया निरस्तत्वात्तमसो द्रव्यत्वमवसीयते "तमः ससर्ज भगवान्" "नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमोज्योतिरभून्न चान्यत्" "यस्य तेजः शरीरं यस्य तमः शरीर"मिति सृज्यत्वसंहार्यत्वशरीरत्वादीनि हि श्रूयन्ते आलोकनैरपेक्ष्यं यथा ज्ञातृविशेषप्र[2]युक्तं दृश्यते तथा ज्ञेयविशेषप्रयुक्तमप्युपपद्यते

१ वृहत्त्वाच्चे ति पाठान्तरमेव युक्तं प्रतीमस्तथैवार्थसंगतेः ।

१ परा वरविभागवदिति पा० ।

२ नारानारसाधारण्येन न कश्चित्प्रत्यक्षे आलोकतदभावयोः कार्यकारणभावो

यथा लोके कार्य हि प्रतीतं तथा कारणकल्पनायां प्रमाणं न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायामपह्नवमर्हतीति न्यायादबाधितप्रतीतिसिद्धस्य तमस उत्पादकं कल्प्यमिति नोत्पादकानुपपत्तिर्ज्ञापकानुपपत्तिर्वा यथा "तमो नाम द्रव्यं बहुलविरलं मेचकचलं प्रतीतं केनापि क्वचिदपि न बाधश्च ददृशे। अतः कल्प्या हेतुः प्रमितिरपि शाब्दी विजयते निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात्" तमो द्रव्यमित्येव भाष्यकारमतं सिद्धान्ते तस्यादूषितत्वात्, सृज्यत्वसंहार्यत्वशरीरत्वश्रवणाच्च स्वच्छद्रव्यत्वादाकाशकार्यं तमः रूपवत्त्वं पञ्चीकरणादुपपद्यते। यद्वा तेजः कार्यं तमः, रूपवत्त्वात्, स्पर्शानुपलम्भः स्वच्छद्रव्यत्वादिति।

**भू० अत्रोच्यते अहमज्ञो मामन्यं च न जानामीत्यत्रोपपत्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते, यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः स हि भावरूपाज्ञानेऽपि तुल्यः।**

टी० "इति निरवद्य"मिति, प्रमाणसिद्धत्वेन तर्कबाधानुपपत्त्या निरवद्यमित्यर्थः। अथ सिद्धान्तं वक्तुमुपक्रमते "अत्रोच्यत" इति, केवलेन च प्रत्यक्षेणेति दृष्टान्ततयोक्तम्, उपपत्तिदूषणे कृते केवलं प्रत्यक्षं न साधकमित्यर्थः, उपपत्तिर्हि ज्ञानप्रागभावविषयत्वे विरोधः स भावरूपत्वेऽपि तुल्य इत्याह "यस्त्वि"ति, तुल्यत्वमुपपादयति—

**भू० विषयत्वेनाश्रयज्ञानत्वेन चाज्ञानस्य व्यावर्त्तकतया प्रत्यगर्थः प्रतिपन्नो ऽप्रतिपन्नो वा—**

टी० "विषयत्वेने"ति, प्रतिपन्न—शब्देन भासनमुच्यते तत्स्वरूप-

नारचाक्षुषस्यालोकसापेक्षत्वेऽपि उलूकीयप्रत्यक्षे आलोकस्याहेतुत्वात् मार्जारमूषकसिंहादिप्रत्यक्षस्य च आलोकतदभावोभयसाधारण्यात्, ततश्च यथा ज्ञातृविशेषस्यालोकसापेक्षं, तद्विशेषस्य निरपेक्षं, कस्यचित्तु तदुभयोदासीनमेवं विषयविशेषे एव आलोकसापेक्षत्वं न तु तमःप्रत्यक्षेऽप्यालोको हेतुरिति ज्ञेयविशेषप्रयुक्तोऽपि प्रत्यक्षस्य कार्यकारणभाव इति तमस आलोकनिरपेक्षचक्षुर्ग्राह्यत्वेन अभावरूपत्वप्रसाधनमयुक्तं न च नारचाक्षुषे ऽपि सर्वत्रालोकसंयोगोहेतुरालोकप्रत्यक्ष एव व्यभिचारादिति टीकाकृतां भावः।

ज्ञाननिवर्त्यमिति स्वरूपज्ञानं—स्वरूपावभासः स्वतो वा प्रमाणान्तरेण वा स्वरूपावभासनिवर्त्त्यमित्यर्थः, इदं रजतमित्यत्र इदं शुक्लं भास्वरमित्येव रूपप्रमाणज्ञानशते ज्ञातेऽपि भ्रमानिवृत्तिदर्शनात्प्रमाणज्ञानत्वमप्रयोजकमिति सिद्धवत्कारेण तत्स्वरूपज्ञाननिवर्त्यमित्युक्तं व्यावर्त्तकाश्रयविषयज्ञानशून्यम् आश्रयतया विषयतया च व्यावर्तकः प्रत्यगर्थः तदवभासशून्यं विषयत्वेत्यादिना भाष्येण स्वात्मविषयाज्ञानप्रतिपत्तौ विरोधतुल्यत्वं दर्शितं घटादिविषयाज्ञानप्रतीतावपि अज्ञानस्य विषयत्वेन व्यावर्तकतया घटः प्रतिपन्नो न वा?

मू॰ प्रतिपन्नश्चेत् तत्स्वरूपज्ञाननिवर्त्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति, अप्रतिपन्नश्चेत् व्यावर्त्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत। अथ विशदस्वरूपावभासो ऽज्ञानविरोधी अविशदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति ।

टी॰ प्रतिपन्नश्चेत् घटस्वरूपज्ञाननिवर्त्त्यं घटाज्ञानं तस्मिन् घटे प्रतिपन्ने कथमिव तिष्ठति घटोऽप्रतिपन्नश्चेत् व्यावर्त्तकविषयज्ञानशून्यमज्ञानं कथमनुभूयेतेत्यर्थसिद्धो विरोधो द्रष्टव्यः, एवं परेण भावाभावयोर्विरोधे दर्शिते तत्प्रतिवन्दीत्वेन निवर्त्यनिवर्त्तकविरोध उक्तः, एवं विशदाविशदविभागादविरोधमाशङ्कते "अथे"ति, प्रत्यगर्थस्य प्रमाणज्ञानेनाभावावभासो विशदावभासः स स्वपक्षेऽपि तुल्य इत्याह—

मू॰ हन्त तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात् ।

टी॰ "हन्त तर्हीति", विशदस्वरूपमवच्छेदकं यस्य स विशदस्वरूपविषयः, विशदस्वरूपस्य प्रागभावावच्छेदकत्वं स्वविषयज्ञानद्वारा ज्ञानप्रागभावोऽपि विशदस्वरूपज्ञानावच्छिन्न इत्यर्थः, ज्ञानस्य चाभावावच्छे-

१ अथेति तु पा॰ ।

दकत्वं प्रतियोगितया विशदस्वरूपज्ञानं प्रागभावप्रतियोगि इति यावत् । अविरोधसिद्धये विद्यमानज्ञानस्य ततोऽर्थान्तरत्वमाह "आश्रये"ति, आश्रयप्रतियोगिनोर्ज्ञानमाश्रयप्रतियोगिज्ञानम्, अविशदस्वरूपविषयमि"ति आश्रयज्ञानस्याविशदस्वरूपविषयत्वम् अविशदप्रत्यगर्थविषयत्वं प्रतियोगिविषयज्ञानस्याविशदस्वरूपविषयत्वमभावप्रयोगिभूताविशदज्ञानविषयत्वं सविषयं निवर्त्तकज्ञानमभावप्रतियोगित्वेनेदानीं ज्ञानमवलम्बते तत्र निवर्त्तकज्ञानविषयस्य प्रत्यगर्थस्येदानीमविशदत्वान्निवर्त्तकज्ञानस्येदानीमविद्यमानत्वाच्च प्रतियोगिनोज्ञानस्याविशदत्वं, विद्यमानं हि साश्रयं ज्ञानमपरोक्षावभासरूपम् अतस्तस्याविशदत्वमविद्यमानतया भवति, एवमाश्रयतया भासमानं स्वरूपमविशदं प्रतियोगितया च स्मर्यमाणं ज्ञानमिदानीमविशदविषयत्वादविद्यमानत्वाच्च अविशदमिति तदुभयविषयज्ञानमविशदस्वरूपविषयं तच्च विद्यते, विशदज्ञानं त्वविद्यमानमभावप्रतियोगि इति न विरोध इत्यर्थः । अयमर्थः अज्ञाननिवर्त्तकाभिमतप्रमाणज्ञानाभावस्तावत् त्वयाऽभ्युपगन्तव्यः अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानानुभवासंभवात्तश्च त्वदभ्युपगतप्रमाणज्ञानाभाव एव अहमज्ञ इति प्रतिपत्तेर्विषयो भवितुमर्हतीति नाभावग्रहणानुपपत्त्या भावरूपत्वं कल्प्यमिति । पूर्वपक्षोक्तविरोधः कथं परिहृतोभवतीति चेत्, इत्थं, तत्र हि यदर्थावच्छिन्नज्ञानमभावप्रतियोगितयोच्यते अभावप्रतियोगिज्ञानावच्छेदकतदर्थप्रतिपत्तौ सत्यां तज्ज्ञानाभावोऽनुपपन्न इति हि विरोधः, तत्रायं परिहारः—अभावप्रतियोगिज्ञानं स्मृत्यारूढं प्रतिषिध्यते यथा घटसाक्षात्कारो नास्तीति निषेधे घटसाक्षात्कारः स्मर्यते, स्मर्यमाणस्य च स्मृतिसमकालवर्त्तित्वनियमाभावान्निषेधवेलायां स्मर्यमाणस्य नाभावप्रतियोगित्वविरोधः, त्वयाऽपि स्मृत्यारूढस्य निवर्त्तकज्ञानस्य स्मृतिसमकालत्वाभावादज्ञानावच्छेदकतया प्रतिपत्तावपि स्मृत्यारूढं निवर्त्तकज्ञानं नाज्ञानविरोधीति वक्तव्यं, तस्मादात्मविषयं घटादिविषयं च प्रमाणज्ञानं स्वविषयेणात्मना घटादिभिश्च सह स्मृत्यारूढमविशदतया प्रतिपन्नमभावप्रतियोगि भवतीत्युपपन्नतरमिति, अनुभूतस्य हि स्मरणसंभवः प्रमाणज्ञानं केनानुभूतमिति चेत्? भवतो

वा निवर्त्तकज्ञानं केनानुभूतम्, आगमादिति चेत्, अस्माकमप्यात्मसाक्षात्कारस्तद्विधायकवाक्यावगतः, घटादिसाक्षात्कारस्तु प्रत्यक्षादिषु येन केनाप्यनुभूतः, मेरुसाक्षात्कारः कथं निषिध्यते स हि न केनापि मानेन पूर्वमनुभूतः, उच्यते दृष्टादृष्टचरद्विरदेन पुरुषेण कथमिह चत्वरे गजो नास्तीत्युच्यते संसर्गाननुभवेऽपि संसर्गिणोऽनुभवमात्रेणान्यत्रान्यतरनिषेध उपपद्यते इति चेत् एवं तर्हि सुमेरुसाक्षात्कारसंसर्गाननुभवेऽपि सुमेरुसाक्षात्कारयोः केनाप्यवगमात् तत्संसर्गनिषेध उपपद्यते प्रमाणज्ञानानामभावप्रतियोगित्वादभावस्य तदानीं ग्राहकं नास्तीति यदुक्तं तत् सर्वप्रमाणज्ञानाभावानां युगपदनुभवासंभवात्कतिपयमा[1]नसज्ञानाभावस्य प्रमाणान्तरेण ग्रहणोपपत्तेश्च परिहृतम्, एवं भावरूपपक्षे विरोधपरिहारसाम्यं दर्शितम्

ननु विरोधसाम्यं वक्तुमयुक्तम् अज्ञानस्य नञर्थप्रतियोग्यवच्छिन्नतयैवावगन्तव्यत्वे सति नञर्थप्रतियोगिनस्तस्य ज्ञानस्य स्वविषयाश्रयभूतप्रत्यगर्थावच्छिन्नत्वेन भातत्वाद्विषयाश्रयभूतप्रत्यगर्थज्ञाने सति तन्निवर्त्याज्ञानस्थितिविरोधः, न हि भावरूपस्याज्ञानस्य ज्ञानप्रतिपत्त्यपेक्षा स्वरूपेणैव प्रतिपत्तिसंभवात्, न हि भावरूपस्य घटस्याश्रयप्रतियोगिज्ञानसापेक्षत्वं दृष्टमित्यत्राह–

सू० भावरूपस्याज्ञानस्यापि त्वज्ञानमिति सिद्धतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव तथा हि अज्ञानमिति ज्ञानाभावः, तदन्यः, तद्विरोधी वा, त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रयणीया, यद्यपि तमःस्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते तथाऽपि प्रकाशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव, भवदभिमताज्ञानं न कदाचित्स्वरूपेण सिद्ध्यति अपि त्वज्ञानमित्येव तथा सति ज्ञानाभाववत्तदपेक्षत्वं समानम् ॥

१ मानज्ञानाभावस्येति तु पा० ।

टी० "भावरूपस्ये"ति, कथं सापेक्षत्व ? मित्यत्राह "तथा ही"ति, अभावस्य नञर्थत्वसंभवात् तदुक्तिः प्रमाणज्ञानादन्यत् प्रमाणज्ञानविरोधीति वा तत्प्रतिपत्तिः तदा तस्य ज्ञानस्य स्वविषयावच्छिन्नत्वेन प्रतिपन्नत्वात्प्रत्यगर्थस्य घटादेर्वा ज्ञाने सति तद्विवर्न्यमज्ञानं न गृह्येतेत्यर्थः, यथा प्रकाशविरोधित्वेऽपि तमसस्तत्प्रतिपत्तौ न प्रकाशापेक्षा तद्वदिहापीत्यत्राह "यद्यपी"ति, भावरूपमज्ञानमपि स्वरूपेण सिध्यतीत्यत्राह "भवदभिमते"ति मुग्धोऽस्मि मूढोऽस्मीति स्वरूपेण सिद्धिरिति चेन्न कस्यचित्पुरुषस्य कस्मिंश्चिद्विषये हि मोहः स विमलमतिरेति नात्ममोहं दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनरित्यादिषु विषयाश्रयावच्छिन्नत्वेन हि मोह उपलभ्यते मुग्धोऽस्मीत्यनेनाश्रयावच्छिन्नत्वं प्रतीयते विषयोऽप्यर्थवशात् सिद्धः इदं दूषणं संवित्सिध्यति वा न वेत्यत्रोक्तया दिशा फलितं, ततश्च स्वात्मविषयाज्ञानं विषयाश्रयभूतप्रत्यगर्थप्रतिपत्तिसद्भावहतं, घटाद्यज्ञानं तु विषयभूतघटाद्यवगमविरुद्धं, मायाशब्दादिभिरज्ञानप्रतिपत्तौ विषयाश्रयापेक्षा नेति चेत् न मायादिशब्दानामपि व्युत्पत्तिनैरपेक्ष्येण बोधकत्वासंभवादज्ञानादिपदपर्यायत्वेन च व्युत्पन्नत्वात्स्वरूपेण सिद्धिर्दुर्वेत्यभिप्रायेण न कदाचित्स्वरूपेण सिध्यतीत्युक्तम् ।

ननु स्वरूपावच्छिन्नाज्ञानप्रतीतौ नञर्थप्रतियोगिज्ञानावच्छिन्नतया सिद्धावपि न निवर्त्यनिवर्त्तकविरोधः स्वरूपभूतज्ञानादन्यतया तत्सिद्धेः, स्वरूपज्ञानं हि नाविद्यानिवर्त्तकं किंतु प्रमाणज्ञानमेव अतो न विरोध इति, नैवं मामन्यं च न जानामीति विषयाश्रयसंबन्धिज्ञानावच्छिन्नतया प्रतीतेः, न हि स्वरूपभूतज्ञानं साश्रयं सविषयं च तव मतं स्वरूपं किमाश्रयतयैवाज्ञानस्यावच्छेदकम् ? उत विषयतया ? पि आद्ये न त्वदभिमतसिद्धिः, तदानीं प्रत्यगर्थस्य स्वस्मादन्येन केनापि विशिष्टत्वमेव हि सिध्यति विषयतयाऽवच्छेदकत्वे प्रत्यगर्थस्याज्ञानमावरणं स्यात्, आवरणत्वं च तद्विषयज्ञानप्रतिबन्धकत्वम् अतस्तद्विषयप्रमाणज्ञानप्रतीत्यवश्यंभावादुक्तविरोधोऽनतिवृत्तः, अतः स्वरूपभूतज्ञानावच्छिन्नप्रतीत्यभ्युपगमोऽनुपपन्नः

उभयत्र साधनदूषणयोस्तुल्यत्वाद्भावरूपमज्ञानं परिगृह्यतामित्याशङ्क्य लाघवन्यायेन परिहरति—

सू० ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते, प्रतीयते चेत्युभयाभ्युपेतो ज्ञानप्रागभाव एव अहमज्ञो मामन्यं च न जानामीत्यनुभूयत इत्यभ्युपगन्तव्यम् ।

टी० 'ज्ञानप्रागभावस्त्वि'ति, अभ्युपगम्यते अहमज्ञ इति प्रतिपन्नस्य अभावरूपत्वे हि विप्रतिपत्तिः, न त्वभावानभ्युपगमः, अन्यथा प्रमाणज्ञानस्य प्रागभावाभावादनादित्वेन तन्निरसनीयभावरूपाज्ञानानुदयप्रसङ्गात्, अतो ज्ञानाभावस्त्वयाऽभ्युपगत इत्यर्थः, प्रतीयते च लोके तत्तज्ज्ञानाभावविवक्षया ज्ञानं नास्तीत्यादिव्यवहारदर्शनादप्रतिपन्ने च विवक्षाऽनुपपत्तेः ज्ञानाभावप्रतीतिरस्त्येवेत्यर्थः, अतः संप्रतिपन्नेनैव ज्ञानाभावेनैव अहमज्ञः इति प्रतीत्युपपत्तेरतिरिक्तकल्पने हेत्वभावाल्लाघवेन स एवाहमज्ञ इति प्रतीतेर्विषयतयाऽभ्युपगन्तव्य इत्यर्थः

ननु चोभयाभ्युपगतो ऽभावो नाम कश्चिन्नास्ति भावान्तरमभावः स्वमते परमते तु भावातिरिक्तः तत्कथमुभयाभ्युपगतेनाहमज्ञ इति प्रतीत्युपपत्तिः, उच्यते न ह्युभयाभ्युपगत इत्युक्तं, किंतु भवताऽभ्युपगम्यत-इत्युक्तम् अभावशब्दवाच्यत्वेन कश्चिदर्थ उभाभ्यामभ्युपगतः स च भावरूपस्तदतिरिक्त इति इयदेव विमतं तत्र भावत्वेन यः स्वाभिमतः यश्च तदतिरिक्तत्वेन वा अभावशब्दवाच्यतया पराभिमतः तयोरन्यतरेणाहमज्ञ इति प्रतीत्युपपत्तेस्तदुभयातिरिक्तार्थकल्पनमनुपपन्नमित्युक्तं भवतीति न विरोधः,

ननु भावान्तरमभावमिच्छता त्वया ज्ञानप्रागभावशब्देन भावरूपाज्ञानमङ्गीकृतं स्यात्, नैवं सिद्धान्तद्वयानभिज्ञानकृतं हीदं चोद्यं स्वयंप्रकाशस्यैव ज्ञानस्य सङ्कोचरूपमवस्थान्तरं प्रागभावशब्दवाच्यतयाऽस्मदभिमतं स्वप्रकाशज्ञानव्यतिरेकेण भावरूपाज्ञानं पराभिमतम् अतस्तयोः कथमैक्यं, तर्हि ज्ञानसंकोचरूपावस्थां परित्यज्याज्ञानशब्दवाच्यत्वेन परोक्तं

भावरूपमज्ञानं स्वीक्रियतां भावरूपत्वाविशेषादिति चेत् प्रामाणिकं परित्यज्य अप्रमाणिकं स्वीक्रियतामितीदमनुपपन्नं न "विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" "सर्वं हि पश्यः पश्यति" "तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता सर्वभूतेषु भूपाल ? तारतम्येन वर्तते अप्राणिमत्सु स्वल्पा सेत्यारभ्य हिरण्यगर्भेऽतितरां पुंसः शक्त्युपलक्षित इति श्रुतिस्मृतिसिद्धत्वात् ज्ञाननित्यत्वं तत्सङ्कोचादिकं प्रामाणिकं कथं त्यज्येत भावरूपाज्ञानं तु कल्प्यं, कल्पकं चान्यथासिद्धमिति तदप्रामाणिकं कथं स्वीक्रियते, कल्पनायां हि लाघवन्यायः प्रवर्त्तते न तु प्रमाणप्रतिपन्नेऽर्थे प्रवर्त्तते अतोऽहमज्ञ इति ज्ञानप्रागभाव एव प्रतीयते, एवमहमज्ञ इत्यस्य प्रत्यक्षस्य भावरूपाज्ञानविषयत्वे भावरूपतोपपत्त्यभावपक्षानुपपत्तिरूपानुकूलतर्काभाव उक्तः । अथातः प्रतिकूलतर्कपराहतिरुच्यते–

सू० नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति स्वानुभवस्वरूपत्वात् स्वानुभवस्वरूपमपि तिरोहितस्वरूपमज्ञानमनुभवतीति चेत् किमिदं तिरोहितस्वस्वरूपत्वम्? अप्रकाशितस्वरूपत्वमिति चेत् स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वं ? स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्वमा[१]पद्यत इति चेत् ॥

टी० "नित्ये"ति, नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्येति पदं हेतुगर्भं नित्यमुक्तत्वं परमार्थदोषासंस्पृष्टत्वम्, अतः परमार्थदोषो न संभवति, स्वानुभवस्वरूपत्वादपरमार्थपरानुभवो न संभवतीत्यर्थः अन्यानुभवरूपप्रदेशभेदाभावाच्चेत्येक–शब्दाभिप्रायः। एक–शब्देन ज्ञेयत्वाभावश्च विवक्षितः अभिप्रेतं हेतुगर्भत्वं विवृणोति "स्वानुभवस्वरूपत्वा"दिति, अविद्यानिवृत्तिदशायाम् अनुवर्त्तमानम् अविद्याऽवभासप्रत्यनीकं स्वानुभवैकस्वभावत्वं हेतुतया विवक्षितं, न तु भ्रमवेलायां विद्यमानं स्वयंप्रकाशत्वमात्रम्, अतः स्वानुभवैकस्वभावत्वस्य प्रागपि विद्यमानत्वादित्यर्थः, स्वानुभव-

१ अप्रकाशितस्वरूपत्वमुपपद्यते इति पा० ।

स्वरूपस्यापीति तिरोधानादज्ञानानुभवः संभवतीति शङ्कते "स्वानुभवे"ति, अभिप्रेतं विवरीतुं तिरोधानशब्दस्यार्थान्तरं नास्तीति ज्ञापनार्थं प्रश्नपूर्वकं तिरोधानशब्दार्थमाह "किमिदं तिरोहितस्वस्वरूपत्वम् अप्रकाशितस्वरूपत्व"मिति, चेदिति," स्वानुभवरूपस्याप्रकाशितत्वं व्याहतमिति बुद्ध्या चोदयति "स्वानुभवे"ति, अन्यत इति परिहारं शङ्कते "स्वानुभवे"ति, अन्यतोऽप्रकाशितस्वरूपत्वे पूर्वोक्तदूषणमतिदिशति—

सू० एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तं, किंच ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सद्ब्रह्म तिरस्करोति ब्रह्म तिर[1]स्कृतं स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम्, अनुभूतमेव तिरस्करोतीति चेत् यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभवति तदा तिरोधानकल्पना निष्प्रयोजना स्यात्, अज्ञानस्वरूपकल्पना च ब्रह्मणोऽज्ञानदर्शनवदज्ञानकार्यतयाऽभिमतप्रपञ्च[2]दर्शनस्यैव संभवात् ॥

टी० "एवं तर्ही"ति, दूषणान्तरमाह "किं चे"ति, अपरमार्थत्वाच सत्तया तिरस्कारकम्, अपि तु प्रतीयमानतिरस्कारमित्यनुभवपूर्वकस्तिरस्कारः तिरस्कारपूर्वकोऽनुभवः अतिरस्कृतस्य स्वानुभवस्वरूपस्य ब्रह्मणोऽज्ञानानुभवासंभवादित्यन्योन्याश्रयणमित्यर्थः, एतत्परिजिहीर्षया अनुभवपूर्वकतिरस्कारं शङ्कते "अनुभूतमेवे"ति, तत्र दूषणमाह "यदी"ति, अतिरोहितस्याप्यज्ञानानुभवसंभवात्तदर्थं तिरोधानकल्पना तदर्थमाच्छादकाविद्याकल्पना च निष्फलेत्यर्थः। तदुपपादयति "ब्रह्मण"इति, अथ अतिरोहितस्वरूपस्यापि अपरमार्थभूताज्ञानानुभवसंभवः तथा अपरमार्थभूतप्रपञ्चानुभ-

१ तिरस्कृत्येति तु पा० ।

२ प्रपञ्चदर्शनस्यापीति पा० ।

वोऽप्यतिरोहितस्य संभवतीति तदर्थो तिरोधानकल्पना तदर्थमाच्छादका-विद्याकल्पना च निष्फलेत्यर्थः, अनुभवपूर्वकतिरस्कारपक्ष एव विकल्पमुखेन दूषणमाह—

मू॰ किंच ब्रह्मणोऽज्ञानानुभवः किं स्वतोवाऽ? न्यतो? वा स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात् अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्या रजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवन्निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा, अन्यतश्चेत् किं तदन्यत्? अज्ञानान्तरमिति चेत् अनवस्था स्यात्, ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत् तथा सतीदमज्ञानं काचादिवत्स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानाबाध्यत्वमज्ञानस्य न स्यात्। अथेदमज्ञानं स्वयमनादि ब्रह्मणः स्वसाक्षित्वं ब्रह्मस्वरूपं तिरस्कृतिं च युगपदेव करोति अतो नानवस्थादयो दोषा इति, नैतत्।

टी॰ "किं चे"ति, स्वतःपक्षे दूषणद्वयमनिर्मोक्षः, ब्रह्मस्वरूपनिवृत्तिश्च, रजतानुभवस्यापीत्यपि—शब्देन रजतस्य च निवृत्तिः सूच्यते अन्यतः पक्षेऽनवस्था। तिरस्कारपूर्वानुभवपक्षे शङ्कते "ब्रह्मेति", तिरस्कृत्यानुभवविषयेत्युक्ते सत्तया तिरस्कारकमित्युक्तं स्यात् न तु प्रतीयमानतया तदानीं काचादिवत्परमार्थत्वेन ज्ञाननिवर्त्यत्वं न सिध्यतीत्यर्थः। अथ तिरस्कारानुभययोर्यौगपद्यं शङ्कते "अथेद"मिति, नैतदित्यादिना दूषयति-

मू॰ स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात्, हेत्वन्तरेण तिरस्कृतमिति चेत् तर्हि अस्यानादित्वमपास्तम्। अनवस्था च पूर्वोक्ता, अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकताननता च

न स्यात्, अपि चाविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किंचिदपि प्रकाशते? उत किंचित्प्रकाशते? पूर्वस्मिन् कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता, उत्तरस्मिन् कल्पे सच्चिदानन्दैकरसे ब्रह्मणि

टी० "स्वानुभवस्वरूपस्ये"ति, हेतुगर्भविशेषणं स्वानुभवस्वरूपत्वं स्वाभाविकमिति परानुभवो हेतुना विना नोपपद्यत इत्यर्थः। हेत्वन्तरेण तिरस्कृतिमाशङ्क्य दूषयति "हेत्वि"ति, यौगपद्यपक्षे पूर्वोक्तपक्षद्वयदूषणमप्यापततीत्यभिप्रायेणाह "अनवस्था च पूर्वोक्ते"ति, ज्ञानानिवर्त्यत्वदूषणस्याप्युपलक्षणमियमनवस्था अनन्तरपूर्वोक्तः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनेऽनिष्टमाह "अतिरस्कृते"ति, पूर्वं विशदाविशदावभासमभ्युपगम्य दूषणमुक्तमिदानीं तमेव दूषयितुमुपक्रमते "अपि चे"ति, विकल्पयति "अविद्यये"ति, पूर्वोक्तदूषणमतिदिशति "पूर्वस्मिन्निति," "उत्तरस्मिन्नि"ति, किं-शब्दः क्षेपे अनुपपन्नमित्यर्थः ॥

मू० कोऽयमंशः तिरस्क्रियते? को वा प्रकाशते? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयाऽसंभवेन तिरस्कारः प्रकाशश्च युगपन्न संगच्छेते। अथ सच्चिदानन्दैकरसं ब्रह्माऽविद्यया तिरोहितस्वरूपमविशदमिवालक्ष्यत इति प्रकाशमात्रस्वरूपस्य विशदताऽशदता वा किंरूपा?

टी० सच्चिदानन्दादिशब्दानामपि स्वरूपमात्रपरत्वेनाभ्युपगमात्तिरस्कृतातिरस्कृतविभागोऽनुपपन्न इति भावः। 'कोऽयमंशः तिरस्क्रियते को वा प्रकाशत' इति, को वा विशेषस्तिरस्क्रियते को वा प्रकाशत इत्यस्याप्युपलक्षणार्थमिदं निरंशे निर्विशेष इत्यनन्तरोक्तेः, कोऽयमंश इति अंशभेदो वक्तुमशक्य इत्यभिप्रायः। तदुपपादयति "निरंश" इति, । प्रकाशमात्रे-मात्रचा अविषयत्वं विवक्षितम् अविषयभूत इत्यर्थः, "युगपन्न सङ्गच्छेते" इति इति, न हि त्वया कालभेदेन प्रकाशतिरस्कारावुच्येते

अपि तु युगपदेव तदानीमंशभेदाभावादाकारभेदाभावाच्च तौ न सङ्गच्छेते इति भावः। एवं प्रकाशतिरस्कारयोर्यौगपद्यानुपपत्तौ सत्यामप्यविशद-शब्देन प्रत्यवतिष्ठते "अथे"ति, अथ-शब्दोऽनुमतिप्रदाने वर्त्तते, दूषयति "प्रकाशे"ति, किंरूपा—अनुपपन्नेत्यर्थः। कथमनुपपत्तिरिति शङ्कायां वैशद्या-वैशद्यस्वरूपं शिक्षयितुमत्र तदनुपपत्तिं च दर्शयितुमाह—

सू० एतदुक्तं भवति, यस्यांशस्य विशेषः प्रकाशविषयः तस्य सकलावभासो विशदावभासः कतिपयविशेषरहितावभासश्च अविशदावभासः, तत्र यः आकारोऽप्रतिपन्नः तस्मिन्नंशे प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यते, यश्चांशः प्रतिपन्नस्तस्मिन्नंशे तद्विषयप्रकाशो विशद एव, अतः सर्वत्र प्रकाशांशेऽवैशद्यं न संभवति, विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविषयविशेषाप्रतीतिरेवावैशद्यं, तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतीतिरूपावैशद्यं नामाज्ञानकार्यं न संभवतीति।

टी० "एतदुक्त"मिति, वैशद्यावैशद्यस्वरूपं शिक्षयति "यस्यांश" इत्यादिना, ज्ञानेऽपि तदनुपपत्तिमाह "तत्रे"ति, प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यत इति धर्म्यभावाद्धर्माभाव इत्यर्थः, ज्ञेयेऽपि ज्ञातांशस्य विशदतयाऽज्ञातांशस्याज्ञातत्वाच्च क्वचिदप्यवैशद्यं न सम्भवतीत्यत्राह "विषयेऽपी"ति, एकस्मिन्वस्तुनि कतिपयांशस्य कतिपयाकारस्य वाऽनवभासस्समुदितरूपस्यावैशद्यं न तु तत्रापि प्रकाशमानांशस्येत्यर्थः, तस्मादिति स्वरूपे प्रकाशमान इत्यस्य न ब्रह्मणीति पूर्वत्रान्वयः अपि तूत्तरत्र, वस्तुस्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्तिरूपमवैशद्यं ब्रह्मणि न सम्भवतीत्यन्वयः, कतिपयविशेषाप्रतिपत्ति—शब्दः कतिपयांशाप्रतिपत्तेरप्युपलक्षणार्थः। मुखान्तरेण दूषणमाह—

सू० अपि चेदमविद्याकार्यमवैशद्यम् तत्त्वज्ञानोदयान्निवर्त्तते न वा? अनिवृत्तावपवर्गाभावः, निवृत्तौ च वस्तु किंरूप?-मिति विवेचनीयम्, विशदस्वरूपमिति चेत् तद्विशदस्वरूपं प्रागस्ति वा न वा? अस्ति चेदविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्, नोचेन्मोक्षस्य कार्यतया अनित्यता स्यात्, अस्याज्ञानस्याश्रयानिरूपणादेवासंभवः पूर्वमेवोक्तः ।

टी० "अपि चे"ति, "अविद्याकार्यं तन्निवृत्तिश्च न स्याता"मिति, विशदस्वरूपस्याविद्याविरोधित्वादिति भावः । "मोक्षस्य कार्यतये"ति, मोक्षस्य—मुक्तस्वरूपस्य भावरूपत्वे सति कार्यं ह्यनित्यं, वैशद्यं च भावरूपम् अतः परमते त्वयोक्तं दूषणं तवैवापततीत्यर्थः, प्रागसतः पश्चादुत्पन्नस्य वैशद्यस्य अनित्यत्वप्रसङ्गः कालात्ययापदिष्टः शास्त्रेण तस्य नित्यतया प्रतिपादितत्वादिति चेत् तदा ब्रह्मणः सविशेषत्वं स्यादित्यभिप्रायः । पूर्वोक्तामाश्रयानुपपत्तिं परोक्षप्रत्यक्षप्रमाणस्य प्रतिकूलतर्कत्वेनाह "अस्ये"ति, स्वरूपानादित्वादिमुखेन परिहाराणां प्रतिवन्दीत्वं हृदि निधाय दूषणान्तरमाह—

सू० अपि चापरमार्थदोषभ्रमभ्रमवादिना निरधिष्ठानभ्रमासंभवोऽपि दुरुपपादः, भ्रमहेतुभूतदोषदोषाश्रयत्ववदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः ॥

टी० "अपि चे"ति, यथा दोषदोषाश्रयत्वादेरपारमार्थ्येऽपि भ्रमसम्भवस्तद्वदधिष्ठानापारमार्थ्येऽपि भ्रमस्सम्भवति अधिष्ठानापारमार्थ्ये तस्यापि प्रपञ्चवदपरमार्थत्वेनाधिष्ठानान्तरापेक्षयाऽनवस्था स्यादिति चेत्, तर्हि दोषस्यापि प्रपञ्चवदपरमार्थत्वेन दोषान्तरापेक्षयाऽनवस्था स्यात्, दोषस्यापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेति चेत्, तर्हि अधिष्ठानापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्था प्रवाहानादित्वेन दुर्घटत्वेन

च परिहारस्तुल्यः, दोषः प्रपञ्चदर्शनस्य स्वदर्शनस्य च स्वयमेव निर्वाहक इति न दोषान्तरापेक्षयाऽनवस्थेति चेत् न अपरमार्थस्यास्य स्वपरनिर्वाहकत्वासम्भवात्, न हि स्वयमेव[1] द्विचन्द्रज्ञानहेतुदोषभूतोऽङ्गुल्यवष्टम्भः स्वकल्पने दोषनिरपेक्षः, अपरमार्थस्य स्वपरनिर्वाहकत्वं तु सम्भवतु तथा सत्यधिष्ठानापारमार्थ्येऽपि स्वपरनिर्वाहकत्वादनवस्था न स्यात्, अपरमार्थस्य परं प्रति अधिष्ठानत्वे सिद्धे हि स्वपरनिर्वाहकत्वसिद्धिरिति चेत् अपरमार्थस्य परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वमिति तुल्यं, मिथ्याभूतजगदवभासाद्दोषसिद्धमिति चेत् तर्हि तत एवाधिष्ठानत्वमपि सिद्धमिति स्वपरनिर्वाहकत्वमधिष्ठानस्य सिध्यति, अधिष्ठानापारमार्थ्यभ्रमो न दृष्ट इति चेत् दोषदोषाश्रयत्वाद्यपारमार्थ्येऽपि भ्रमो न दृष्ट इति तुल्यश्चर्च्चं इत्यभिप्रायः । ततः किमित्यत्राह—

## भा० ततश्च सर्वशून्यत्वमेवं स्यात् ।

टी० "ततश्चे"ति, एवमहमज्ञो मामन्यं च न जानामीति प्रत्यक्षस्य प्रतिकूलतर्कपराहतिरुक्ता । अत्र केचिदाहुः सुप्तोत्थितस्य न किंचिदवेदिषमिति परामर्शान्यथानुपपत्तिर्भावरूपाज्ञाने प्रमाणं, कथमन्यथाऽनुपपत्तिः ? इत्थं, न किंचिदवेदिषमिति परामर्शो न ज्ञानाभावविषयः स्वापे ज्ञानाभावस्याननुभूतत्वात्, ज्ञानाभावानुभवे हि प्रतियोगिभूतज्ञानस्य विषयावच्छिन्नस्यावभासोऽभ्युपगन्तव्यः, तदभ्युपगमे सुषुप्तिव्याघातः ।

न चास्मरणलिङ्गजन्यं ज्ञानाभावविषयमनुमितिरूपं ज्ञानमिदमिति वाच्यम् अस्मरणस्याननुभवव्याप्तत्वाभावात् पथि गच्छता स्पृष्टं हि तृणादिकं न स्मर्यते अतः सुषुप्तावनुभूतं भावरूपमज्ञानं स्मर्यते न किंचिदवेदिषमिति, अतस्तदन्यथाऽनुपपत्त्या भावरूपाज्ञानसिद्धिरिति, नैतदुपपद्यते भावरूपत्वेऽप्यज्ञानस्य प्रतियोग्यपेक्षत्वोपपादनात्, प्रतियोगिनश्च सुषुप्तावनवभासादज्ञानानुभवाभावेन तत्स्मरणानुपपत्तेः, प्रतियोग्यवभासे सुषुप्तिव्याघातस्त्वयैवोक्तः ।

---

१ स्वप्ने इति ।

न च तदन्यावाचिनजर्थप्रतियोगिस्वरूपभूतज्ञानं तदानीमवभात-मिति वाच्यं न किंचिदवेदिषं मामन्यं च न जानामीति विषयावच्छिन्न-ज्ञानस्य प्रतियोगित्वावगमात्, अतस्तदनवभासे अज्ञानानुभवायोगात् तत्-स्मरणानुपपत्तिः । किंच सुषुप्तौ निर्विकल्पेन वा सविकल्पेन मनोव्यापारेण वा भावरूपाज्ञानानुभवः ? प्रथमे स्वाभिमतनिर्विकल्पकस्य साक्षिचैतन्याव-भासरूपस्य संस्काराधायकत्वानभ्युपगमात्प्रतिसंधानमनुपपन्नं, न द्वितीयः सुषुप्तिविरोधेन तदा मनोव्यापारासंभवात्, अतो न किंचिदवेदिषमिति ज्ञानं न स्मरणं, किं त्वस्मरणलिङ्गकं ज्ञानाभावविषयमनुमितिरूपम् ।

न च पथि गच्छता स्पृष्टतृणाद्यस्मरणेन व्यभिचारः अन्यव्यासङ्गा-दिसंस्कारविरोध्यभावविशेषितस्यास्मरणस्य व्यभिचाराभावात् "तदन्यधी-तात्पर्यं पटुत्वविरहो धियः । दुःखादितीव्रमुन्मादोऽनभ्यासो दीर्घकालता-एतेश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु । एतेष्वसत्स्वस्मरणात् ज्ञानाभावोऽ-नुमीयते"॥ पथि गच्छता स्पृष्टतृणादिकं पटुतरसंस्कारोदयविरोधिसद्भावान्न स्मर्यते पथि गच्छन् हि गन्तव्यदेशकार्यचिन्तादिव्यासक्तो भवति तृणा-दावादरश्च नास्ति प्रयोजनाभावात् तदभावेऽपि गजादिदर्शनस्येव न पटुतरत्वं तृणादिज्ञानस्य विषयवैपुल्यवैचित्र्याद्यभावात् जन्मान्तरानु-भवजसंस्कारस्तु प्रायेण नरकप्रसूतिजन्यतीव्रदुःखाभिभवादनुद्बुद्धः, उन्मा-दश्च संस्कारोद्बोधविरोधी, अनभ्यासश्च तथा, तस्य विस्मरणहेतुत्वदर्श-नात्, कालदैर्घ्यमपि तत्प्रमोषकं दृष्टं बाल्येऽनुभूतानां वृद्धावस्थायामस्मरण-दर्शनात्, न चैते हेतवः सुषुप्तौ सन्ति, न च किमप्यदृष्टं संस्कारोद्बोध-विरोधि कल्प्यं कल्पकाभावेन सौषुप्तिकज्ञानस्य तद्विषयार्थस्मरणविरोध्य-दृष्टस्य च कल्पनायोगात्, यदि किंचित्कल्पकतयोत्प्रेक्ष्येत तदा ऽप्यक्लृप्त्या निर्वाहे संभवति न कल्पनमुपपद्यते । एवमन्यपरत्वादिसंस्कारतिरोधाय-कहेतुविरहविशेषितास्मरणलिङ्गेन ज्ञानाभावानुमितिरूपमिदं न किंचिद-वेदिषमिति ज्ञानं, त्वयाऽपि ज्ञानाभावः सुषुप्तावभ्युपगतः, स चोक्तलि-ङ्गानुमेय एव इत्युपगन्तव्यं, तदस्माकमपि तुल्यम्, अतः स्मृतित्वानुपपत्ते-रनुमितिरूपत्वोपपादनाच्च न किंचिदवेदिषमिति ज्ञानमन्यथैवोपपन्नमिति

न ततो भावरूपाज्ञानसिद्धिरितीदृशदुर्वादानामनुपपन्नत्वं भावरूपाज्ञानविषयप्रत्यक्षप्रतिक्षेपात् सिद्धम् । अथानुमानं दूषयति—

भा० यदुक्तमनुमानेनापि भावरूपमज्ञानं सिद्ध्यतीति, तदयुक्तम् अनुमानासम्भवात्, ननूक्तमनुमानं, सत्यमुक्तं, दुरुक्तं तु तत्, अज्ञानेऽप्यनभिमतज्ञानान्तरसाधनेन विरुद्धत्वाद्धेतोः। तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यं, साधने च तदज्ञानमज्ञान[1]माक्षिप्तं निवारयति, ततश्चाज्ञानकल्पना निष्फला स्यात् ।

टी० यदुक्तमित्यादिना, "अनुमानासम्भवा"दिति, त्वदुक्तमनुमानमाभास इति भावः । कथं दुरुक्तत्वमित्यत्राह "अज्ञानेऽपी"ति, कथमज्ञानान्तरसाधनमवश्यं भावि तस्य च कथमनभिमतत्वमित्याशङ्कायां तदवश्यम्भावमुपपादयति "तत्रे"ति, । अज्ञानस्यानभिमतत्वमुपपादयति "साधने"चेति, ततः किमित्यत्राह "ततश्चे"ति, अस्य प्रमाणज्ञानस्य अप्रकाशितार्थप्रकाशकत्वात् स्वविषयावरणाज्ञानान्तरसाधकत्वे सति तदज्ञानं ब्रह्मस्वरूपाच्छादकं सिषाधयिषितमज्ञानमावृणोति तेनावृतात्वात्तदज्ञानं ब्रह्मणा न साक्षात्क्रियते अपरमार्थस्याप्रतीयमानस्य कार्यकरत्वायोगादज्ञानकल्पना निष्फला स्यात्, तिरोधानरूपकार्यार्थं हि तत्कल्पना, यद्यसाक्षात्कृतमेव कार्यकरं तदा सत्तया कार्यकरमिति काचादिवत्सत्यत्वात् ज्ञाननिवर्त्यं न स्यात्, एवमज्ञानस्य ज्ञानानिवर्त्यत्वनिष्फलत्वे कारणतयाऽनभिमताज्ञानान्तरसाधकत्वं तदसाधने चानैकान्त्यमुक्तम्

ननूक्तहेतुजन्यं ज्ञानं सम्यक् निश्चयरूपं चेत्तद्विरोधादेव न हेतोरनैकान्त्यं, यदि न सम्यक् तथाऽपि न हेत्वनैकान्त्यम्, अप्रकाशितार्थप्रकाशकत्वहेतोस्तत्र वृत्त्यभावात्, उच्यते हेत्वनैकान्त्यपरिहारः बाधा[2]विषयस्य

---

१ तदज्ञानमज्ञानसाक्षित्वं निवारयतीति तु साधु पुस्तकान्तरम् ।

२ साध्यविषयज्ञानस्य ।

ज्ञानस्य प्रमितिरूपत्वं प्रतिक्षिपति, ज्ञानसम्यक्त्वन्तु हेत्वनैकान्त्यपरिहारं प्रतिक्षिपति अतो ज्ञानसम्यक्त्वे तस्योक्तहेतुजन्यत्वं व्याहतं हेतोरनैकान्त्यात्, न हि सम्यग् ज्ञानं दुष्टहेतुजन्यम् उक्तहेतोरनैकान्त्यं न चेत्तस्यासम्यङ्निश्चयरूपज्ञानजनकत्वं व्याहतम् अदुष्टहेतोरसम्यग्ज्ञानजनकत्वायोगात्, एवं हेत्वनैकान्त्यपरिहारज्ञानसौष्ठवयोः परस्परविरोधेन तयोरिह समुच्चित्याऽसिद्धेरन्यतराभावेऽपि साध्यसिद्ध्यभावादनुमानमसमञ्जसमित्यभिप्राय इति

ननु न हेत्वनैकान्त्यं साध्यविषयज्ञाने हेतोरवृत्तेः, न ह्यप्रकाशितमज्ञानमनेन प्रकाश्यते किं तर्हि? साक्षिचैतन्यसिद्धस्यैवाज्ञानस्याभावाद्विवेचनमात्रं क्रियते, नैवम् अहमर्थधर्मभूतप्रकाशोत्तीर्णेन स्वरूपचैतन्येनाज्ञानसिद्धावनुमानप्रामाण्यं तत्प्रामाण्येन अ[1]भावरूपाज्ञानसिद्धिः तत्सिद्धौ ज्ञातुरपि तत्कल्पितत्वात्तदुत्तीर्णसाक्षिचैतन्येनाज्ञानानुभवसिद्धिरिति चक्रकापत्तेर्दुस्तरत्वात् । दूषणान्तरमाह—

सू० दृष्टान्तश्च साधनविकलः प्रदीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात्, सर्वत्र हि ज्ञानस्यैव प्रकाशकत्वं, सत्यपि दीपे विज्ञानेन विना विषयप्रकाशाभावात्, इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव न प्रकाशकत्वम्, प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव ।

टी० दृष्टान्तश्चेत्यादिना, किं साक्षात्प्रकाशकत्वम्? उत परम्परया? उत साक्षाद्वा परम्परया वा प्रकाशकत्वमात्रम्? उत स्वविषयावरणनिरासकत्वं प्रकाशकत्व?मिति चत्वारो विकल्पाः, तत्र प्रथमे कल्पे दृष्टान्तः साधनविकलः, द्वितीये पक्षे असिद्धिः, तृतीये इन्द्रियेष्वनैकान्त्यं, तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्, साक्षाद्वा परम्परया वा प्रकाशकयोरन्य-

१ तत्प्रामाण्येन भावरूपाज्ञानसिद्धिरिति पा० ।

तरत्वात्तेषाम्, इन्द्रियाण्यपि पक्षीकृत्य तेषां तथाविधवस्त्वन्तरपूर्वकत्व कल्पनमयुक्तम् आहङ्कारिकाणामिन्द्रियाणामुत्पत्तेः स्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकत्वाभावात् आलोक एव हि तादृशः, चतुर्थपक्षे तु साध्याविशिष्टता इत्यभिप्रेत्य प्रथमकल्पे दूषणमाह "दृष्टान्तश्च साधनविकल" इति, कथं ज्ञानस्यैव साक्षात्प्रकाशकत्व? मिति शङ्कायां तदुपपादयति "सत्यपी"ति, ज्ञानस्यैव प्रकाशकत्वमित्यनेन द्वितीये कल्पे हेतोः पक्षे असिद्धिः फलिता, इन्द्रियाणामित्यनेन तृतीयपक्षे इन्द्रियेष्वनैकान्त्यं विवक्षितं, दीपप्रभायाः परम्परयाऽपि प्रकाशकत्वमपि दूरत इत्यत्राह "प्रदीपे"ति, प्रकाशकत्वव्यवहारः कथ? मित्यत्राह–

**सू०** प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकत्वहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः, नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता, अपि तु ज्ञानस्यैव स्वविषयावरणनिरसनपूर्वप्रकाशकत्वमङ्गीकृत्येति चेन्न, न हि विरोधिनिरसनमात्रं प्रकाशकत्वम् अपि त्वर्थपरिच्छेदः, व्यवहारयोग्यतापादनमिति यावत्, तत्तु ज्ञानस्यैव, यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतम् तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्, तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् हेतोरनैकान्त्यमित्यलमनेन।

टी० "प्रकाशके"ति, चतुर्थपक्षं शङ्कते "नास्माभिरि"ति, "निरसनपूर्वके"ति, निरसनद्वारकमित्यर्थः साध्याविशिष्टतामाह "न ही"ति, ज्ञानस्य विषयावरणनिरसनरूपप्रकाश कत्वं न ह्यस्ति, तद्धि साध्यं न संप्रतिपन्नमित्यर्थः, मात्रचा परिच्छेदव्युदासः, हि-शब्देन विषयावरणनिरासकत्वस्य साध्यत्वं फलितं, तत्र संप्रतिपन्नं प्रकाशकत्वमाह "अपि त्वि"ति,

परिच्छेद-शब्दस्य परिमितिपरत्वशङ्काव्यावृत्त्यर्थमाह "व्यवहारे"ति, व्यवहारयोग्यता-व्यवहारप्रतिसंबन्धित्वम् ।

ननु न साध्याविशिष्टत्वं हेतोः स्वप्रागभावनिरासकत्वं स्वविषयावरणनिरसनशब्देन विवक्षितं तेन भावरूपनिरसनीयपूर्वकत्वं साध्यमिति नैव स्वप्रागभावनिरासकत्वमिति अस्य हेतोरिन्द्रियसंप्रयोगेऽनैकान्तिकत्वात् भासमानत्वे सत्यप्रकाशितार्थप्रकाशकत्वादिति हेतौ विशेषितेऽपि पूर्ववद्विकल्पः स्यात्, तत्र साक्षात्पक्षे दृष्टान्तस्साधनविकलः, प्राणाद्येति पक्षे हेत्वसिद्धिः, तृतीये निगदादौ व्यभिचारः, चतुर्थे साध्याविशिष्टता भासमानत्वविशेषितस्य विषयावरणनिरासकत्वस्यासंप्रतिपत्तेः । अथास्यानुमानस्य प्रतिकूलतर्कपराहतिमाह-

सू० प्रतिप्रयोगाश्च, विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम् अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत् ज्ञात्राश्रयं हि तत्, विवादाध्यासितमज्ञानं न ज्ञानावरणम् अज्ञानत्वाच्छुक्तिकाद्यज्ञानवत् ।

टी० "प्रतिप्रयोगाश्चे"ति, तर्कस्यापि व्याप्तिमूलत्वात्प्रयोगा इत्युक्तं, स्वदेशगतत्वस्वविषयावरणत्वस्वनिवर्त्यत्वानां प्रतिकूलं यथाक्रममनुमानत्रयम् अज्ञानं पक्षीकृत्योच्यते विवादाध्यासितं-ब्रह्माश्रयमतदाश्रयमिति विवादाध्यासितमित्यर्थः, ततश्च शुक्त्याद्यज्ञानव्यावृत्तिः, तद्धि जीवाश्रयम् अप्रामाणिकमपि भावरूपमज्ञानं ज्ञानमात्रं ब्रह्म चाभ्युपगम्य प्रतिकूलतर्का उच्यन्ते। शुक्त्याद्यज्ञानस्य ज्ञानानाश्रयत्वं कथ? मित्यत्राह "ज्ञात्राश्रयमि"ति, एवं व्याप्तिर्दर्शिता । अज्ञानत्वे ज्ञानानाश्रयत्वप्रसङ्ग इत्युक्तो भवति। प्रतिकूलतर्कान्तरमाह "विवादे"ति, व्याप्तिं दर्शयति-

सू० विषयावरणं हि तत्, विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यम् ज्ञानविषयानावरणत्वात्, यज्ज्ञाननिवर्त्यमज्ञानं तज्ज्ञानविषयावरणम् यथा शुक्तिकाद्यज्ञानम्, ब्रह्म ना-

ज्ञानास्पदं ज्ञातृत्वविरहात् घटवत्, ब्रह्म नाज्ञानावरणं ज्ञानाविषयत्वात् यदज्ञानावरणं तज्ज्ञानविषयभूतम् यथा शुक्तिकादि, ब्रह्म न ज्ञाननिवर्त्त्याज्ञानं ज्ञानाविषयत्वात् यज्ज्ञाननिवर्त्त्याज्ञानं तज्ज्ञानविषयभूतम् यथा शुक्त्यादि, विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वं न भवति प्रमाणज्ञानत्वात् भवदभिमताज्ञानसाधनप्रमाणज्ञानवत् ।

टी० "विषयावरण"मिति, अज्ञानत्वे ज्ञानानावरणत्वप्रसङ्ग इत्यर्थः, तृतीयेऽपि प्रयोगे ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्वप्रसङ्ग इत्यर्थः । अथ ब्रह्म पक्षीकृत्य प्रतिकूलतर्कत्रयमुच्यते "ब्रह्मेत्यादिना, अज्ञानाश्रयत्वे ब्रह्मणोऽज्ञातृत्वप्रसङ्ग इत्यर्थः । द्वितीयेऽपि प्रयोगे ब्रह्मणोऽज्ञानावरणत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । तृतीयेऽपि ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । अथ प्रमाणज्ञानं पक्षीकृत्य प्रागभावव्यतिरिक्तत्वस्य प्रतिकूलतर्कमाह "विवादाध्यासित"मिति, प्रमाणज्ञानत्वे प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावप्रसङ्ग इत्यर्थः । यद्वाऽनुमानमेवेदं धारावाहिकज्ञानेषु प्रथमस्य पक्षत्वमुत्तरोत्तरज्ञानानां सपक्षत्वमपि ह्युपपद्यते ।

सू० ज्ञानं न वस्तुनो विनाशकं शक्तिविशेषोपबृंहणविरहे सति, ज्ञानत्वात् यद्वस्तुनो विनाशकं तच्छक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टम्, यथेश्वरयोगिप्रभृतिज्ञानम्, यथा च मुद्गरादि, भावरूपमज्ञानं न ज्ञानविनाश्यं भावरूपत्वात् घटादिवदिति । अथोच्येत बाधकज्ञानेन भावरूपाणां पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यत इति ।

टी० ज्ञानं न वस्तुनो विनाशकमित्यादिना, व्यतिरेक्यनुमानमुक्तं, व्यतिरेकव्याप्तिं द्विधा दर्शयति "यद्वस्तुन"इति, शक्तिविशेषोपबृंहणवि-

रहे सति ज्ञानत्वादिति विशिष्टो हेतुः, तत्र शक्तिविशेषानुपबृंहितज्ञानव्यतिरिक्तत्वाविशेषाच्छक्तिविशेषोपबृंहितं ज्ञानं शक्तिविशेषानुपबृंहितमज्ञानं च द्वयमपि व्यतिरेकव्याप्तिभूमिरित्युभयत्र व्याप्तिर्दर्शिता। एवं भावरूपमज्ञानं पक्षीकृत्याह "भावरूप"मिति, भावरूपत्वे ज्ञानमात्रनिवर्त्यत्वं न स्यादित्यर्थः, भावरूपत्वज्ञानानिवर्त्यत्वयोर्न व्याप्तिः भयादेर्भावरूपस्य ज्ञाननिवर्त्यत्वदर्शनादिति व्याप्तिभङ्गमाशङ्कते "अथोच्यते"ति, पूर्वज्ञानोत्पन्नानां—पूर्वभ्रान्तिज्ञानोत्पन्नानामित्यर्थः। बाधकज्ञानोदयात् पूर्वं भयानुवृत्तेस्तदुत्पत्तेः पश्चाद्भयादिनिवृत्तेश्चेति भावः। परिहरति—

सू० नैवम्, न हि ज्ञानेन तेषां विनाशः क्षणिकत्वेन तेषां स्वयमेव विनाशात्, कारणनिवृत्त्या च पश्चादनुत्पत्तेः क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिकारणसन्निधान एवोपलब्धेरन्यथा[1]ऽनुपलब्धेश्चावगम्यते।

टी० 'नैव'मिति, फलविनाश्यानि हि स्वाश्रयविनाशाधीननश्वरज्ञानव्यतिरिक्तानि क्षणिकानि, उक्तविशेषणेन ज्वालाव्यावृत्तिः, तथा भयाद्यपि कम्पादिकार्यं जनयित्वा स्वयं नश्यतीत्यर्थः, न भयादेः क्षणिकत्वं चिरोपलब्धेरिति चेत् न, कारणभूतभ्रान्तिज्ञानाद्यनुवृत्त्या भयादिसन्तत्युपपत्तेर्हि चिरोपलब्धिः, तर्हि सदा भयसन्ततिरुपलभ्येतेति चेदत्राह "कारणनिवृत्त्या च पश्चादनुत्पत्ते"रिति, कारणभूतभ्रान्तिज्ञानादिनिवृत्त्या कार्यभूतभयादिसन्तत्यनुत्पत्तेर्न सदोपलब्धिरित्यर्थः पश्चादनुत्पत्तेरिति पञ्चम्याः क्षणिकत्वेनेति पूर्वेणान्वयः कारणनिवृत्त्या च पश्चादनुत्पत्तेः सिद्धेन क्षणिकत्वेन स्वयमेव विनाशादित्यर्थः। यद्वा न क्षणिकत्वमिति शङ्कायामुपपन्नं क्षणिकत्वमित्यर्थवशादाकृष्टेन वाक्येनान्वयः एवं क्षणिकत्वानुबन्धी चोद्यपरिहारः कृतः। यद्वा नैवमिति दूषणप्रतिज्ञामुपपादयितुं यावद्बाधं भयस्वरूपानुवृत्तेरसिद्धिमाह "क्षणिकत्वेने"ति, बाधकज्ञानानन्तरनिवृत्तेरन्यथासिद्धिमाह "कारणनिवृत्त्या चे"ति, तत्क्षणिकत्वं कुतः

१ अन्यदाऽनुपलब्धेश्चेति तु युक्तो भाति पाठः।

सिद्ध ? मिति शङ्कायां तदुपपादयति "क्षणिकत्वं चे"ति, स्थायिनो घटादयो हि दण्डचक्रादिकारणनिवृत्तावुपलभ्यन्ते न तु तथा ज्ञानदीपज्वालादि तथा. भयादेरपि कारणसन्निधानतन्निवृत्त्यनुविधायिसद्भावासद्भावतया क्षणिकत्वं निश्चीयते इत्यर्थः । विपक्षे बाधकमाह–

**सू० अक्षणिकत्वे च तेषां भयादीनां भयादिहेतुभूतज्ञानसन्ततावविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च स्वप्रागभावातिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाविष्कृता ।**

टी० "अक्षणिकत्वे चे"ति, स्थायिनो घटादयः प्रतिक्षणमुत्पाद्यमाना बहवो युगपदुपलभ्यन्ते तथा ऽत्रापि प्रसजेदिति भावः । अतो न भयादिकं ज्ञाननिवर्त्यं स्वयमेव क्षणिकतया नश्यति भयसन्तत्युच्छेदो भ्रान्तिज्ञानपरम्परारूपकारणनिवृत्त्या तन्निवृत्तिश्च दोषनिवृत्त्या नायं सर्पो रज्जुरेवेति ज्ञानं स्वविषयव्यापारहेतुः न तु साक्षाद्भयादिनिवृत्तिहेतुः रज्जुत्वं हि सर्पव्यावृत्तिः, अतः सर्पव्यावृत्तिरूपरज्जुत्वज्ञानाभावेन सर्पबुद्ध्यनुवृत्त्या पाश्चात्यभयानुवृत्तिः सर्पव्यावृत्तिरूपरज्जुत्वज्ञानेन सर्पपारमार्थ्याभिमाननिवृत्त्या भयनिवृत्तिरिति सर्वाभ्युपगतप्रकारेण दूषणमुक्तं, स्वपक्षे तु ज्ञानविशेष एव भयादिः क्षणिकतया स्वयं नश्यति, भयादिरूपज्ञानानुवृत्तिस्तु दोषात्सर्पभ्रमाद्यनुवृत्तिमूला तन्निवृत्त्या च तत्सन्ततिनिवृत्तिरिति परिहारः । एवमर्थदूषणमुक्तम् । अथ प्रयोगदूषणमाह "स्वप्रागभावेति, स्व–शब्दः प्राक्शब्दो ऽभावव्यतिरिक्तिशब्दो ऽन्तरशब्दश्च निरर्थकः, वस्तुशब्दो हि भाववाची अनुमानेन भावरूपाज्ञानासिद्धिं निगमयति–

**सू० अतो नानुमानेनापि भावरूपाज्ञानसिद्धिः । श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते, मिथ्याऽर्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि "न विलक्षणत्वा"दि-**

त्येतदधिकरणन्यायेन परिच्छिद्यते, अतोऽनिर्वचनीयाज्ञानविषया न कदाचिदपि प्रतीतिरस्ति । प्रतीतिभ्रान्तिबाधैरपि नान्यथाभ्युपगमनीयम्[1] प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः—

टी० "अत"इति, श्रुत्यर्थापत्तिभ्यां तत्सिद्धिमाशङ्क्याह "श्रुती"ति, अनिर्वचनीयत्वे परोक्तं हेतुं विस्तरेण दूषयति "प्रतीती"ति, प्रतीतिः—भ्रान्त्यभ्रान्तिसाधारणरूपा भ्रान्तिर्विद्यमानभेदाग्रहणपूर्वकसाधारणाकारग्रहणजन्या स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता, बाधः—आरोपितविरुद्धाधिष्ठानाकारावगाहिनी बुद्धिः, न तथाऽभ्युपगमनीयं नानिर्वचनीयत्वेनाभ्युपगमनीयमित्यर्थः । प्रतीतिभ्रान्तिबाधानां स्वविषयोल्लेखमात्रेणान्यथाऽनुपपत्त्या वा अनिर्वचनीयसिद्धिरिति विकल्पमभिप्रेत्य प्रथमं दूषयति "प्रतीयमान" मिति, प्रतीयमानं प्रतीत्योल्लिख्यमानं, न हि नीलोल्लेखः पीतोल्लेखतयाऽङ्गीकार्यः तथा सति सर्वोपप्लवप्रसङ्गादिति भावः । द्वितीयं दूषयति—

सू० आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुं शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेऽपि तन्नास्तीति बाधेन चान्यस्यान्यथा भानायोगाच्च, सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति कल्पनीयमिति चेन्न तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात् अन्यथा भानाभ्युपगमात् ।

टी० "आभि"रिति, आभिः प्रतीतिभिः प्रतीतिभ्रान्तिबाधशब्दोपात्ताभिः प्रत्यक्षप्रतीतिभिः, प्रतीत्यन्तरेण—प्रमाणान्तरजन्येन । यद्वा आभिर्लौकिकप्रतीतिभिः, प्रतीत्यन्तरेण—आगमजन्येन । यद्वा आभिः प्रतीतिभिः

[1] न तथाऽभ्युपगमनीयम् इति पा० ।

एकाधिष्ठाने सर्पभूदलनाम्बुधारादि बहुत्वाभिप्रायं बहुवचनं प्रतीत्यन्त-रेण—बाधज्ञानेन । संक्षिप्तस्य दूषणस्य विस्तरार्थं परमतमनुवदति "शुक्त्यादिष्वि"ति, अन्यस्यान्यथा भानायोगाच्चेति ।

ननु कथमन्यथा भानायोगः? उच्यते न तावद्धर्मधर्मिणोर्मिथस्तादात्म्यभानमन्यथाख्यानं पुरोऽवस्थितशुक्लभास्वरशकलं न रजतत्वजातीयतया प्रतीयते रजतत्वं च न भास्वरशकलतया प्रतीयते शकलं च शकलत्वेन जातिश्च जातित्वेन प्रतीयते तस्माच्चानयोरन्यतरस्य तदितरत्वभानमिति, नापि धर्म्यन्तरस्य धर्म्यन्तरतादात्म्यमन्यथात्वं तत्किं विषयगतम्? उत तज्ज्ञानगतं? विषये तदन्यथात्वमस्ति चेद्यथार्थैव प्रतीतिः, नास्ति चेत् असत्ख्यातिप्रसङ्गः, यदि ज्ञानगतं विषयोऽन्यः ज्ञानमन्यथेति, नोपपद्यते न हि घटज्ञानस्य पटज्ञानत्वसंभवः आत्मख्यातिप्रसङ्गश्च ज्ञानाकारत्वात् रजतादेः स्वस्मिन्नसताऽऽकारेण ख्यानमन्यथा ख्यानमिति चेत् न असत्ख्यात्यादिप्रसङ्गात् अन्यत्र सतोऽन्यत्र ख्यानं ज्ञानस्यान्यथात्वमिति चेत् न खण्डे दृष्टस्य गोत्वस्य मुण्डे दर्शनस्यापि भ्रमत्वापातात्, अन्यत्रैव सतोऽन्यत्र ख्यानमन्यथात्वमिति चेत् अन्यत्रैव सत्त्वं कथं निश्चीयते इह बाधादिति चेत् न भ्रान्तिज्ञानबाधितस्य सत्यरजतस्याप्यत्रासत्त्वनिश्चयप्रसङ्गात् प्रवृत्तेर्बाधादन्यत्रैव सत्त्वनिश्चय इति चेच्च मन्त्रौषधादिप्रतिबद्धस्याग्नेरपि स्फोटजननादिप्रवृत्तिबाधेन मिथ्यात्वनिश्चयप्रसङ्गात् दुष्टकारणजन्यज्ञानविषयत्वादिभिः(१) बाध्यत इति चेत् कथं दुष्टकारणजन्यत्वनिश्चयः? बाधकज्ञानोदयादिति चेत् पूर्वज्ञानमेव बाधकं स्यात् परत्वस्याकिंचित्करत्वं हि दर्शितं पूर्वज्ञानस्य दुष्टकारणजन्यत्वे निश्चिते पश्चात्यज्ञानस्य बाधकत्वनिश्चयः तस्य बाधकत्वे निश्चिते पूर्वस्य दुष्टकारणजन्यत्वनिश्चय इत्यन्योन्याश्रयश्च स्यात् किञ्च यत्तावद्रजतं पुरोवर्तिनि भातं तस्यैवान्यत्र सत्त्वे किं प्रमाणं? न तावत्पूर्वज्ञानम् अत्र सत्त्वेन हि

(१) दुष्टकारणजन्यज्ञानविषयत्वादिना बाध्यत इति पा० ।

तदवगमयति न बाधकज्ञानं च, तद्धि पुरोवर्तिन्यसत्त्वमवगमयति, नापि रजतं न हि प्रत्यक्षप्रमाणं तत्त्वव्यापारं रजतसत्तामवगमयति ।

ननु तस्य पुरतः ख्यातस्य चैक्यं क्वचिदप्यसतः ख्यानायोगादन्यत्र सत एव ख्यातत्वं निश्चीयत इति चेत् न असतः ख्यानायोगस्य सम्बन्धेन परित्यक्तत्वात् न हि पुरोवर्त्तिनि रजतधर्मसम्बन्धो रजतत्वजातिसंबन्धो वाऽन्यत्र विद्यते । नन्वन्यत्र सम्बन्धमात्रं ख्यातमस्ति तदिह प्रकाशत इत्यन्यत्र इवात्र ख्यानमिति न सम्बन्धद्वयानवभासात् अन्यत्र सतः सम्बन्धस्यान्यत्र ख्याने सम्बन्धिन इव सम्बन्धान्तरमपेक्षितं सम्बन्धान्तरावभासे वान्यत्र सतः ख्यानं न स्यात्, द्वितीयसम्बन्धस्य क्वचिदप्यसत्त्वात् सम्बन्धस्य सम्बन्धान्तरानपेक्षत्वात् सम्बन्धान्तराभावेऽपि पुरोवर्त्तिनि भानं युक्तमिति चेत् एवं तर्हि सम्बन्ध्यन्तरसम्बन्धः पुरोवर्त्ति च निरन्तरं भातमिति यथार्थख्यातिरेवोक्ता स्यात् ख्यानांशस्य सत्त्वादसतः कस्यचित् ख्यातत्वाभावाच्च किञ्च शुक्तिशकलस्यैव रजतज्ञानविषयत्वं रजतोपायान्यत्वे सति रजतार्थप्रवृत्तिविषयत्वात् इति साधयितुमप्ययुक्तं तथा हि इदमर्थस्य रजतत्वजातिविशिष्टताज्ञानविषयत्वं हि साध्यं तदबाधितप्रवृत्तिविषयत्वप्रयुक्तमिति हेतोस्सोपाधिकत्वं शुक्तिर्न रजतया भाति शुक्तित्वात् संप्रतिपन्नवदिति बाधः । एवमादिदूषणाभिप्रायेणान्यस्यान्यथाभानायोगाच्चेत्युक्तं दूषयति—

सू० अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेः अत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात् कल्प्यमानं चेदमनिर्वचनीयम् ।

न च तदानीमनिर्वचनीयमिति प्रतीयते अपि तु परमार्थरज(१)त्वमित्येव । अनिर्वचनीयमित्येव प्रतीतं चेद्भ्रान्तिबाधयोः प्रवृत्तेरप्यसंभवः, अतोऽन्यस्यान्यथाऽवभासविरहे

(१) परमार्थरजतमित्येवेति पा० ।

प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणाऽवभासत इति भवताऽभ्युपगन्तव्यम् ॥

टी० "ने"ति, अन्यत्रैव सताऽऽकारेण पुरोवर्तिनोविशिष्टताज्ञानमन्यथा भानं प्रतिपन्नाकारस्य पुरोवर्त्तिन्यभावनिश्चयश्च प्रवृत्तिबाधसचिवा-न्वास्तीति प्रत्ययात्, न हि प्रतिबद्धाग्नेरभिन्नत्वं नास्तीति प्रत्यय इति प्रसिद्धं कथं तत्कल्पनायामप्यन्यथा भानस्यावर्जनीयत्वमित्यपेक्षायामाह "कल्प्यमाने ही"ति, अनिर्वचनीयमित्येव प्रतीत्यभ्युपगमे प्रतीतेर्भ्रमरूपत्वं बाधः प्रवृत्तिश्च न स्युः अनिर्वचनीयं निर्वचनीयत्वेन प्रतीतं चेदस्यान्यथावभासोऽवर्जनीयः स्यादित्यर्थः तस्यापरिहार्यत्वाच्चेति तस्यान्यथाभानस्य सोऽवर्जनीयः। अयमभिप्रायः नान्यस्यान्यथाभानं विद्यमानस्यैव प्रतीतेः, लौकिकमलौकिकं चेति द्विविधं सत् अनिर्वचनीये चालौकिकं सत्त्वमस्ति अत्र तदलौकिकं सद्रजतं प्रतीयते इति चेत् किमलौकिकं सदलौकिकसत्त्वेन प्रतीयते? उत लौकिकसत्त्वेन? प्रथमे भ्रमत्वबाधप्रवृत्त्यसंभवः, अलौकिकं लौकिकं सदिति प्रतीतं चेत् अन्यस्यान्यथाभानं स्यात् अलौकिकसतो लौकिकसतो भेदाग्रहात् प्रवृत्त्यादिसंभव इति चेत् तर्हि तत्रानिर्वचनीयं वस्तु कल्पयित्वा तत्र भेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादनादपि प्रथमत एवं संप्रतिपन्नरजताच्छुक्तिस्वरूपभेदाग्रहणे प्रवृत्तिबाधभ्रमत्वोपपादने कल्पनालाघवादनिर्वचनीयं वस्त्वनुपपन्नम् इत्यादिपदकपरम्परामभिप्रेत्य तस्यापरिहार्यत्वाच्चेत्युक्तं यथार्थख्यातिव्यतिरिक्तपक्षेष्वन्यथाख्यातिपक्षः प्रबल इत्यभिप्रायेणाह—

मू० ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यथाऽवभासोऽवश्याश्रयणीयः, असत्ख्यातिपक्षे सदात्मना, आत्मख्यातिपक्षे चार्थात्मना, अख्यातिपक्षे ऽप्यन्यविशेषविशेषणमन्यविशेषणत्वेन च, ज्ञानद्वयमेकत्वेन च, विषयासद्भावपक्षेऽपि विद्यमानत्वेन,

टी० "ख्यात्यन्तरेणे"ति, सुदूरमपि गत्वा पदकपरम्परामुक्त्वापीत्यर्थः तदुपपादयति "असदि"ति, अयं माध्यमिकपक्षः किमसदित्येव प्रतीयते? उत स? दिति, असदिति चेत् भ्रमत्वबाधप्रवृत्त्यसंभवः, सदिति चेत् अन्यस्यान्यथा भानं स्यादित्यर्थः। आत्मेति अयं योगाचारपक्षः आत्मशब्दो ज्ञानपरः, किं ज्ञानमित्येव प्रतीतम्? उतार्थ? इति प्रथमे प्रवृत्तिबाधभ्रमत्वासंभवः, द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः अख्यातिपक्षे इति इदं रजतमिति किमेकं ज्ञानम्? उत ज्ञानद्वय?मिति विकल्पमभिप्रेत्य एकज्ञानमिति पक्षे ज्ञेये अन्यथाख्यातिं प्रसञ्जयति "अन्यविशेषणमन्यविशेषणत्वेने"ति, इदं रजतमित्येकत्वेन संप्रतिपन्नसम्यग्रजतत्ववदारोप्यलिङ्गानुविधायि प्रयोगानुगुणसामानाधिकरण्येन प्रतीतत्वादन्यविशेषणमन्यविशेषत्वेन प्रतीयत इत्यापादितं न तु तत्पक्ष उपन्यस्तः ज्ञानद्वयमिति पक्षे ज्ञानेऽन्यथा ख्यातिं प्रसञ्जयति "ज्ञाने"ति, ज्ञानद्वयं किं ज्ञानद्वयमित्येव प्रतीतमुतैकमिति विकल्पे पूर्वदूषणं विषयासद्भावेति किमविद्यमानत्वेन प्रतीयते? उत विद्यमानत्वेन प्रतीयते? प्रथमे प्रवृत्त्याद्यसंभवः, द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः। अथाकारणकत्वमुपपादयति॥

मू० किं चानिर्वचनीयमपूर्वरजतमच जातम् इति वदता जातस्य जन्मकारणं वक्तव्यं, न तावत्तत्प्रतीतिः तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्, निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम्। अथेन्द्रियादिगतो दोषः, तन्न तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात्॥

टी० "किंचे"ति, तस्याः—प्रत्यक्षप्रतीतेः, तद्विषयत्वेन विद्यमानविषयकारणकारणकत्वेन विद्यमानविषयकारणत्वेन कारणं हि नियतपूर्वभावीति भावः "महतामिदमुपपादनमि"ति, तस्य वृत्तिज्ञानस्य विषयरहितावस्थास्वीकारेण कारणत्वाभ्युपगमेऽपसिद्धान्तापातात् निर्विषयख्यातिवादिनामिव तत्प्रभावेन प्रवृत्त्यादेरपि सिद्धावनिर्वचनीयक्लृप्तिवैयर्थ्याद्विषयरूप-

कारेण न विनोत्पत्तिवचनाद्विरम्य व्यापारवचनाच्चात्यन्तानुपपन्नमित्यर्थः "अर्थेन्द्रियादी"ति, आदि–शब्देन विषयगतदोषः पुरुषस्यानवधानं वा गृह्यते तस्य पुरुषाश्रयत्वेनेति दूरत्वादिदोषस्य विषयगतत्वेऽपि पुरुषगतत्वस्यापि संभवादुभयत्र कार्यमुत्पाद्यं न विषयमात्रे नियामकाभावात् अतः पुरुष इव विषयेऽपि न संभवतीत्यभिप्रायः

ननु चक्षुषः पुरुषाश्रयत्वेऽपि चाक्षुषरश्मेः प्रसृतस्य विषयसंबद्धस्य तत्र कार्यकरणत्वं दृष्टं न तत्कार्यस्य ज्ञानस्य पुरुषाश्रितत्वात् दोषांशस्याकार्यकरत्वात् ॥

ननु विषयमात्रगतास्सादृश्यादयो दोषाः सन्ति तेषां तत्रैव कार्यकरत्वमुपपद्यते नैवं सादृश्यादेर्यावद्द्रव्यभाविनस्सदोत्पादकत्वप्रसङ्गात् आगन्तोरन्यस्य तत्रादृष्टेः, इन्द्रियसंयोगस्य पुरुषगतज्ञानातिरिक्तहेतुत्वासिद्धेः, दृष्टिविषादिन्यायस्यात्रासंभावत् संभवेऽपि सर्वैरुपलम्भप्रसङ्गाच्च नन्विन्द्रियाणि यथा पुरुषविशेषसंबन्धात्तत्रैव कार्यविशेषमुत्पादयन्ति एवं विषयविशेषसंबन्धात् किंचिज्जनयन्तु तत्राह

मू० नापीन्द्रियाणि, तेषां ज्ञानकारणत्वान्नापि दुष्टानीन्द्रियाणि, तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम् अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम् ।

टी० "नापीन्द्रियाणी"ति, पुरुषगतज्ञानाख्यकार्यकरत्वमन्वयव्यतिरेकावस्थितं विषये त्विन्द्रियजन्यकार्यान्तरं न दृष्टं तत् क्लृप्तिस्त्वन्यथैवोपपत्त्या निरस्तेति भावः । तथाऽपि दुष्टपुरुषसंनिधानाद्यथा देशादिषु दोषाः प्रादुःष्युः तथा दुष्टेन्द्रियसन्निधानाद्विषये कार्यविशेषः स्यादित्यत्राह "नापि दुष्टानी"ति, अन्वयव्यतिरेकादिकमतिलङ्घ्य दृष्टान्तमात्रेण न किंचित्साधयितुं शक्यमिति भावः । किमत्र हेत्वन्तरगवेषणया अनादिभावरूपाज्ञानमेव विश्वोपादानभूतं शुक्तिरजताद्यपि विचित्रकार्यं जनयेदित्यत्राह "अनादी"ति, तस्य स्वरूपानादित्वात्कार्यमपि प्रागेव स्यात् सहकारित्वेन शङ्कनीयमिन्द्रियादिकं तु निरस्तं मिथ्याभूतस्य चार्थक्रियाकारित्वमयुक्तम्

आश्रयानुपपत्त्यादयश्च पूर्वमेवोक्ता इति भावः । एवमनिर्वचनीयस्य रजतादेरुत्पादकानुपपत्तिरुक्ता, तदुक्तावपि रजतादिबुद्धिशब्दान्वयनियमानुपपत्तिमाह–

मू० किंच अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते न घटादिबुद्धिशब्दाभ्यां, रजतादिसादृश्यादिति चेत् तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्यातां, रजतादिजातियोगादिति चेत् सा किं परमार्थभूता ? उतापरमार्थभूता वा ? न तावत्परमार्थभूता तस्याः

टी० "किं चे"ति, तद्व्यवस्थापकं शङ्कते "रजतादी"ति, प्रातिभासिकरजतादेरर्थक्रियाकारिव्यावहारिकरजतादिसादृश्यादित्यर्थः । उक्तस्य व्यवस्थापकत्वाभावमभिप्रेत्य सादृश्यस्य यथादर्शनं साध्यान्तरमाह "तर्ही"ति, यदि तत्सदृशे तद्धीस्तदा गवये गोबुद्धिवदन्यथाख्यातिः स्यादित्येवकाराभिप्रायः, सादृश्यस्यानिर्वाहकत्वेऽपि तज्जातियोगस्य तद्बुद्धिनिर्वाहकत्वं दृष्टमिति शङ्कते "रजतादिजातियोगा"दिति, सा–रजतादिजातिः, अपरमार्थान्वयायोगात् अपरमार्थव्यक्त्यन्वयायोगादित्यर्थः, व्यक्तिबाधेऽपि जातेरबाधितत्वप्रसङ्ग इति भावः । जातिरपि हि बाध्यते न हि व्यक्तिर्नास्ति जातिस्त्वस्तीति प्रतीतिः, जातिरपि नास्तीत्येव हि प्रतिपत्तिः

न च प्रतिपन्नाया अपि जातेः पश्चादप्रतीतिरभिव्यञ्जकव्यक्त्यभावात् जात्यभावादिति वाच्यम् अभिव्यञ्जकवति पूर्वकाले प्रतिपन्नाया अपि जातेस्तत्कालसम्बन्धितयैव नास्तितागोचरत्वात् बाधकप्रत्ययस्य प्रतिपन्नोपाधौ नास्तीति प्रत्ययो हि बाधः । अपरमार्थपक्षं दूषयति "नापी"ति, परमार्थान्वयायोगात्–आपणस्थरजतव्यक्त्यन्वयायोगादित्यर्थः व्यक्त्यवस्थानेऽपि जातेः कदाचिद्बाधितत्वप्रसङ्ग इति भावः । न हि कदाचिदप्यापणस्थरजते रजतत्वं बाध्यते । परमार्थव्यक्त्यनन्वये बाधकमाह "अपरमार्थे इति, परमार्थबुद्धिशब्दयोः–परमार्थविषयबुद्धिशब्दयोः, परमार्थव्यक्तौ जातिरन-

न्विता चेत्तस्याः क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनात् भ्रान्तिस्थलेऽपि परमार्थबुद्धिशब्दनिर्वाहकत्वं न स्यादित्यर्थः । यद्वा जात्यपारमार्थ्ये एव दूषणान्तरं बुद्धिशब्दान्वयानुपपत्तिमाह–

सू० अपरमार्थान्वयायोगान्नाप्यपरमार्थभूता परमार्थान्वयायोगादपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलमपरिणत[1]कुतर्कनिरसनेन । अथ वा "यथार्थं सर्वविज्ञानमिति वेदविदां मतम् ।

टी० "अपरमार्थे"इति, तदानीं परमार्थबुद्धिशब्दयोः–परमार्थभूतबुद्धिशब्दयोरित्यर्थः, असत्यात्सत्योत्पत्तिव्युदासमुपजीव्येदं दूषणमुच्यते व्यक्तेस्तन्निर्वाहकत्वायोगं दर्शयितुमपरमार्थ इत्युक्तम्, अपरमार्थजातेः परमार्थभूतबुद्धिशब्दनिर्वाहकत्वायोगाज्जात्यपारमार्थ्यमयुक्तमित्यर्थः, बुद्धिशब्दयोश्च परमत्वं तद्बाधकादर्शनादेव सिद्धम् । अथ वक्ष्यमाणाया यथार्थख्यातेः स्वसिद्धान्तत्वं दर्शयति "अथ वे"ति, तस्यास्सांप्रदायिकत्वं दर्शयँस्तां प्रतिजानीते "यथार्थमि"ति, वेदविदां–भगवद्बोधायन–नाथमुनि–राममिश्रादीनामित्यर्थः । कुत इत्यत्राह–

सू० श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ॥ बहु स्यामिति संकल्पपूर्वसृष्ट्याद्युपक्रमे तासां त्रिवृतमेकैकामिति श्रुत्यैव चोदितम् । त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते

टी० "श्रुतिस्मृतिभ्य"इति, श्रुतीर्दर्शयति "बहु स्याम"तीति, आदि–शब्देन नामरूपव्याकरणमुच्यते । यद्वा सन्मूला इत्यादिवाक्योक्तं स्थितिप्रलयादिकं गृह्यते सृष्ट्यादिरुपक्रमो यस्य प्रकरणस्य तस्मिन् सृष्ट्याद्युपक्रमे इदं श्लोकार्द्धं किमर्थ? मिति चेत् उच्यते पाठक्रमेणाण्डसृष्टेः पश्चात् त्रिवृत्करणमिति ज्ञायते अण्डसृष्टेःप्रागपि त्रिवृत्करणमस्ति अण्डसृष्ट्यर्थत्वात् त्रिवृत्करणस्य, त्रिवृत्करणमुपायः अण्डसृष्टिः फलमुत्पत्तौ तत्फलं पश्चाद्भवति

१ इत्यलमपरेण कुतर्कनिरसनेनेति पा०

सङ्कल्पेतु पूर्वभावि उपायस्तूत्पत्तौ पूर्वभावी सङ्कल्पे पश्चाद्भावीति लोकसिद्धं किञ्चिन्न कथमित्यादौ, अतो नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकाङ्करवाणीत्यस्मिन् व्यष्टिसङ्कल्पवाक्ये पश्चान्निर्दिष्टमण्डसृष्ट्युपायभूतं त्रिवृत्करणं नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्युत्पत्तिवाक्ये पूर्वनिर्दिष्टस्यापि नामरूपव्याकरणस्य फलरूपत्वात् त्रिवृत्करणफलभूतसृष्टेः पूर्वभावित्वं निश्चीयते अर्थक्रमेण पाठक्रमबाधस्य न्याय्यत्वात्, अग्निहोत्रं जुहोति यवागूं पचतीति वत् अस्मिन्नर्थे निदर्शनम् उपक्रमे बहु स्यां प्रजायेयेति वाक्यम्, अत्र बहु स्यामिति फलसङ्कल्पः प्रजायेयेति तदुपायसङ्कल्पः अनेन केवलं किञ्चिन्न कथमित्यादिलोकप्रसिद्ध्या त्रिवृत्करणस्य फलभूतसृष्टेः पूर्वभावित्वनिश्चयः उपक्रमभूतसङ्कल्पवाक्यानुगुण्याच्चेति ज्ञापितम् एवं त्रिवृत्करणस्याण्डसृष्टेः प्राक्संभवं ज्ञापयितुमुपक्रमगतफलवाक्यस्य तदनुगुणत्वज्ञापनाय बहु स्यामित्यादर्द्धमुपात्तम् अण्डान्तर्वर्त्यग्न्यादिषु त्रिवृत्करणस्य प्रदर्शनादण्डसृष्टेः पश्चात् त्रिवृत्करणमिति शङ्कायां श्रुतेरर्थमाह—

**सू० यदग्ने रोहितं रूपं तेजसस्तदपामपि शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता श्रुत्यैव दर्शिता तस्मात्सर्वे सर्वेच सङ्गताः पुराणे चैवमेवोक्तम् वैष्णवे सृष्ट्युपक्रमे ।**

टी० "एवं हि प्रत्यक्षेणोपलभ्यत" इति, अग्न्यादिषु कतिपयव्यक्तिषु त्रिरूपत्वप्रदर्शनं नेयत्ताबुद्ध्या अपि त्वण्डान्तर्भूतस्यैव प्रत्यक्षयितुं योग्यत्वात् पूर्वोक्तत्रिवृत्करणसम्भावनाप्रदर्शनार्थमिति भावः । अण्डसृष्टेः प्रागेव त्रिवृत्करणमस्तीति स्पष्टं ज्ञापयति "पुराणे चे"ति, अस्यामुपनिषदि भूतत्रयसृष्टेरुक्तत्वात् सृष्टतयोक्तानां मिश्रणमुक्तम् इदं तत्त्वान्तरसृष्टिप्रतिपादकप्रकरणेषु तेषामपि मिश्रीकरणस्य प्रदर्शनार्थमिति ज्ञापनाय च पुराणवचनोदाहरणं वैष्णव इत्यनेन सात्त्विकत्वात्प्रामाण्यं सूचितं "सात्त्विकेषु च सर्वेषु विष्णोर्माहात्म्यमिष्यत" इति वचनात् संहतत्वसमागतत्वं चेत्यवस्थाद्वयमस्ति संहतत्वं नाम पृथक्स्थित्यर्हसंयोगमात्रं, समागतत्वं पृथक्स्थित्यनर्हसंश्लेषविशेषः एतद्द्वयाभावात् स्रष्टुं नाशक्नुवन्नित्याह—

भू० "नाना वीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥ नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः महदाद्या विशेषान्ता ह्यण्डमित्यादिना ततः । सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽऽवदत् त्र्यात्मकत्वात्तु भूयस्त्वादिति तेनाभिधाभिदा सोमाभावे च पूतीकग्रहणं श्रुतिचोदितं सोमावयवसद्भावादिति न्यायविदो विदुः । व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः

टी० "नानावीर्या" इति, एतदुभयप्राप्त्याऽस्रक्ष्यन्नित्याह "समेत्ये"ति, एकैकस्मिन् भूते सर्वे भूतानि सन्ति चेत् सर्वे शब्दाः सर्वत्र प्रयुज्येरन्नित्यत आह "परस्परसमाश्रया" इति, अन्येषां भूतानां समाश्रितानामेकं भूतं समाश्रयः, आश्रिताश्रयभावश्च न्यूनाधिकभावनिबन्धनः तत्कृता शब्दव्यवस्थेति भावः । उपात्तवचनानन्तरं सम्प्राप्यैक्यमशेषत इति कृत्स्नशस्समागतत्वमुक्तं, महदादय इति पाठे सत्यपि वृत्तभङ्गपरिहाराय स्वसन्दर्भे महदाद्या इत्युक्तं भाष्यकारैः । अयमेव श्रुत्यभिप्राय इति स्थापयितुं सूत्रकारोक्तिं दर्शयति "सूत्रे"ति, ततः सूत्रकारोऽप्यवददित्यन्वयः, ततः—अस्यार्थस्य श्रुतिस्मृतिसिद्धत्वादित्यर्थः । एवं प्रथमं भूते भूतान्तरसद्भावः वक्ष्यमाणस्य सदृशे सदृशान्तरसद्भावस्योपयोगित्वात् तेनाभिधाभिदा—भूयस्त्वेनाभिधानस्य व्यवस्थेत्यर्थः । सदृशे सदृशान्तरसद्भावमाह "सोमे"ति. न्यायविदः—परीक्षकाः सोमाभावे "पूतीकानभिषुणुया" दित्ययं विधिर्नियमार्थः, सोमाभावे तत्सदृशद्रव्यान्तरेषु स्वतः प्रवृत्तेः एतत्तुल्यन्याय सिद्धार्थमाह "व्रीही"ति, व्रीहिभावतः—व्रीह्यवयवसद्भावतः । ततः कथं सदृशे सदृशान्तरसद्भाव ? इत्यत्राह—

भू० तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् । शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव चोदितः ॥ रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः । रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ॥

अतस्तस्याच सद्भावः प्रतीतेरपि निश्चितः । कदाचिच्चक्षुरादेस्तु दोषात् शुक्त्यंशवर्जितः

टी० "तद्वे"ति, अनेन शुक्त्यादौ रजताद्यवयवसद्भावः फलित इत्याह "शुक्त्यादावि"ति, श्रुत्यैव बोधितः—प्रतिनिधिश्रुत्याभिहितत्वेन फलितः । यद्वा त्रिवृत्करणश्रुत्यैव बोधितत्वं फलितं तेजःप्रचुररूप्यांशः शुक्तौ त्रिवृत्करणात्सिध्यतीत्यर्थः । कथं शब्दव्यवस्थे? त्यत्राह "रूप्ये"ति-शुक्तिरूप्ययोः सादृश्ये सति हि शुक्तौ रूप्यसद्भावसिद्धिः शब्दव्यवस्थाया भूयस्त्वहेतुकत्वसिद्धिश्चेत्यत्राह "रूप्यादौ"ति. यद्वा शुक्तौ रजतैकदेशसद्भावे प्रमाणान्तरमाह "रूप्यादौ"ति, ततः कि? मित्यत्राह "अत" इति,प्रतीतेः—रूप्यसदृशतया प्रतीतेः, शुक्त्यादौ रजताद्यवयवसद्भावश्चेत् सर्वदा ग्रहेत प्रवृत्तिश्च सदा स्यात् बाधश्च नोपपद्यत इत्यत्राह "कदाचि" दिति,-दोषः शुक्त्यंशाग्रहहेतुः, प्रचुरग्रहणाभिभूतत्वाभावाददृष्टवशाच्च रजतग्रहणम्, अदृष्टवशाच्चाम्बुनोग्रहणादिति हि वक्ष्यते, उदाहरणान्तरेष्वप्युपजीव्यत्वाय हि तत्र तदुक्तिः, भूयस्त्वेन बाध्यबाधकभाव इति शुक्तिभूयस्त्वेन तज्ज्ञानस्य बाधकत्वं तत एव रजताल्पत्वं सिद्धं तेन रजतज्ञानस्य बाध्यत्वमित्यर्थः, भूयस्त्वेनेत्युक्ते भ्रान्तिज्ञानस्य रजतभूयस्त्वात्तेन शुक्तिज्ञानस्य बाध्यत्वशङ्काव्युदासार्थं भूयस्त्वेन बाध्यबाधकभावमुपपादयति—

मू० रजतांशो गृहीतोऽतो रजतार्थी प्रवर्त्तते । दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्त्तते ॥ अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु । बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते ॥ शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥ नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः ॥

टी० "शुक्ती"ति,

ननु साकल्ये सत्यपि वैकल्यं गृहीतं चेदन्यथाख्यातिरिति, नैवं न हि वैकल्यस्य ग्रहोवैकल्यग्रहः किं तु भूयस्त्ववैकल्येन ग्रहः, तद्विरहेण ग्रहः तदग्रह इति फलितं भूयस्त्वसाकल्येन ग्रहः तत्सहिततया ग्रहः

तयोर्ग्रहयोरूपात्स्वभावात् तथाविधग्रहणात्मकत्वादित्यर्थः। बहुव्रीहिर्वा भावप्रधानो निर्देशः पूर्वोत्तरज्ञानयोस्तथारूपत्वात् बाध्यबाधकभाव इत्यर्थः। ज्ञानस्य बाध्यत्वं न स्वरूपतः, न च विषयतः,

किं तु बाध्यप्रवृत्तिकत्वम्, उत्तरज्ञानस्य च बाधकत्वं पूर्वज्ञानजन्य-प्रवृत्तिनिवारकत्वम्, अन्यथा ख्यातिवादेऽपि ज्ञानस्य स्वरूपेण बाध्यत्वमन-भिमतं, किं तु विषयबाध्यत्वमेवाभिमतम्, अस्माकं तु ज्ञानफलभूतप्रवृत्तेर्बा-ध्यत्वमिति भिदा, प्रवृत्तेश्च बाधितत्वं प्रतिबद्धोत्पत्तिकत्वं विफलत्वं वा, नात इति मिथ्यार्थसत्यार्थ—शब्दाभ्यां पराभिमतमिथ्यात्वसत्यत्वे विवक्षिते।

**भू० एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः**

टी० "एवमि"ति, सर्वस्य सर्वत्वेऽपि व्यवहारव्यवस्थितिः-हानो-पानादिनियमः, एवं भूयस्त्वसाकल्यवैकल्याभ्यामित्यर्थः साधारणाकारग्रह-णभेदाग्रहदोषादृष्टानि सर्ववादिभिरभ्युपेतव्यानि तावता प्रवृत्त्यादिसम्भवे-ऽपि अधिककल्पनायामन्येषां गौरवं स्यात् तत्रेष्टरूपरूपिनिरन्तरभानात् प्रवृत्तिः द्विष्टरूपरूपिनिरन्तरभानान्निवृत्तिः रूपरूपिणोर्धर्म्यन्तरनिष्ठत्वावि-रोधिधर्मान्तराश्रितत्वभानविरहेण भानं—निरन्तरं भानम्, अत एव भेदाग्र-हात्प्रवृत्तिश्चेत् रज्जुसर्पभेदाग्रहे निवृत्तिर्न स्यादित्यादि चोद्यानि नावकाशं लभन्ते यः परमते ख्यात्यन्तरहेतुरभ्युपेतः स एवास्माकं प्रवृत्त्यादिहेतुः। प्राभा-कारैर्मन्त्रार्थवादानां स्वार्थे तात्पर्यानभ्युपगमात्केवलभेदाग्रहेणैव निर्वाहः कृतः। अत्र तु मन्त्रार्थवादयोः प्रतीयमानार्थे प्रामाण्याभ्युपगमादुपनि-षद्भागावगतं त्रिवृत्करणं तत्प्रदर्शितं पञ्चीकरणमीश्वरकर्तृकं सर्गविशेषं तथाप्रतिनिधिन्यायं भेदाग्रहमप्युपजीव्य निर्वाहः कृत इति वैषम्यं, तत्र भूते भूतान्तरभ्रमस्य त्रिवृत्करणेन बहिः स्फुटतरः सदृशे सदृशान्तरभ्रमस्य तु प्रतिनिधिन्यायेनैव निर्वाहः। न तु त्रिवृत्करणेनोपयोग इति केचिदाचार्याः त्रिवृत्करणमपि विजातीयभूतारब्धे सदृशे विजातीयभूतारब्धसदृशान्तर-भ्रमनिर्वाहोपयिकमिति संप्रदायः। श्रुतिस्मृतिभ्यः सर्वस्येत्यादियन्त्यानां स्वारस्यात्तथाऽवगतेः अतस्त्रिवृत्करणश्रवणपञ्चीकरणस्मरणाभ्यां प्रतिनि-धिन्यायाच्च सदृशे सदृशान्तरबुद्धियाथार्थ्यं निरूप्यते

ननु कथं सदृशान्तरभ्रमस्य त्रिवृत्करणेनोपयोगः, न हि त्रिवृत्करणात्पूर्वं रजताद्यवयवाः सन्ति तथा सति हि त्रिवृत्करणनिबन्धनशुक्तौ रजतादिसंमिश्रणं स्यान्न च तदस्ति त्रिवृत्करणस्याण्डसृष्टेः पूर्वभावित्वात्, उच्यते पाञ्चभौतिकेष्वपि पदार्थेषु किंचित्कार्यं केनचित्प्रचुरेण भूतेन परिणामविशेषवताऽऽरब्धं तत्रापीदृशपरिणामयुक्तं यद्भूतप्रचुरं यत्कार्यं तस्य तादृशपरिणामवतो भूतस्य कार्यान्तरेष्वपि विद्यमानत्वात्तेषु तथाविधतद्भूतप्रचुरतत्कार्यविषयबुद्धिरुपपद्यते । यद्यप्यवान्तराकाङ्क्षारविशेषस्त्रिवृत्करणदशायां नास्ति तथाऽपि त्रिवृत्करणेन कार्यानुप्रविष्टस्य भूतस्य कार्यान्तरावयवसमानपरिणामसम्भवाद्भौतिकान्तरे भौतिकान्तरबुद्धिर्याथार्थ्यं घटते तथा त्रिवृत्करणेन शुक्तौ चान्तर्गतस्य तेजोंऽशस्य शुक्लभास्वररूपेण परिणामवतो रजतसौसादृश्याद्रजतावयत्वमुपपन्नं तादृशाकारयुक्ततत्तद्भूतविशेषवन्त एव हि सम्यग्रजतादयो निरीक्ष्यन्ते, अतः शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यते ।

ननु कथं शुक्त्यादिषु प्रतीयमानानामवयवानां रजताद्यवयवत्वं, न हि ते रजतादिभ्य आनीय निवेशिताः, उच्यते संप्रतिपन्नरजताद्यवयवस्य सुसदृशाकारत्वमेव तेषां रजताद्यवयवत्वं न तु रजताद्यवयवादिभ्य आनीय निवेशितत्वं, यथा संप्रतिपन्नरजताद्यवयवानां, न ह्यापणस्थरजताद्यवयवाः कुतश्चिद्रजतान्तरादेरानीय निवेशिताः, एवमेव पूतीकादिषु प्रतीयमानानां सोमलताद्यवयवानामपि सोमाद्यवयवत्वं नाम संप्रतिपन्नसोमलताद्यवयवस्य सुसदृशत्वमेव, तच्च स्फुटतरप्रतीतिसिद्धमबाधितं च, न हि शुक्तिशकलपूतीकादिषु रजतसोमलतादिसादृश्यं नास्तीति बाधकप्रत्यय उदेति, तेषामवयवानां विजातीयावयवप्राचुर्यादकार्यकरत्वं, प्रचुरक्षीरनिविष्टाल्पसलिलस्येव प्रचुरकनकसंसृष्टाल्परजतस्येव च सम्भवति । नन्वेवं शुक्तितयाऽभिमतपुञ्जस्य शुक्तित्वमपुष्कलं स्यात् विजातीयावयवसंसर्गात्पुरुषमृगे पुरुषत्ववत्, पुरुषमृगत्वं नाम पुरुषत्वमृगत्वविलक्षणं जात्यन्तरं न तु विकलं पुरुषत्वं मृगत्वं चेति चेत् तर्हि शुक्तितयाऽभिमतपुञ्जस्यापि शुक्तित्वरजतत्वविलक्षणजात्यन्तरवत्त्वं स्यात्, ततश्च

पुरुषमृगे पुरुषव्यवहारवत् शुक्तिव्यवहारो न मुख्यः स्यात् विजातीयसंसृष्टाया भ्रमाधिष्ठानभूतायाः शुक्तेः पुरुषेण पुरुषमृगस्येव शुक्त्यन्तरेण सौसादृश्याभावात्, सौसादृश्ये सति हि सः, तत्ताव्यवहारस्य मुख्यत्वं तदभावाद्धि सिंहो देवदत्त इत्यस्यामुख्यत्वं शुक्त्यवयवप्राचुर्याच्छुक्तित्वं पुष्कलं तत एव तद्व्यवहारश्च मुख्य इति चेत् तर्हि रजतांशस्याप्रचुरत्वादेव रजतत्वं नास्तीति रजतबुद्धेर्याथार्थ्यं न स्यात्, उच्यते, पुरुषत्ववत् शुक्तित्वस्यावयवसंस्थानविशेषवृत्तित्वाभावादणुमात्रेऽपि शुक्तित्वं पुष्कलं, पुरुषत्वस्य तु संघातविशेषवृत्तितया संघातवैकल्यात् न पौष्कल्यं जात्यन्तरं वा तत्र स्यात्, शुक्तित्वं तु न तथेत्युक्तम् । अतः शुक्त्यवयवेषु शुक्तित्व तद्व्यवहारावुपपन्नौ तत्र विरुद्धजात्यन्वयाभावात् शुक्तितयाऽभिमतसंघाते तु शुक्त्यवयवप्राचुर्यादर्थक्रियाव्यवस्था शब्दव्यवस्था चोपपद्यते प्रचुरशुक्त्यभिभूतत्वेन रजतांशस्यागृहीतत्वात् गृहीतशुक्तिविवक्षया तद्विषयत्वेन प्रयुक्तशब्दो मुख्य इत्युपपन्नम् ।

न च भ्रमाधिष्ठानभूतायाः शुक्तेर्विजातीयावयवसंयोगितया शुक्त्यन्तरसौसादृश्यहानिः शुक्त्यन्तरस्याप्यल्परजतांशमिश्रत्वाद्रजतांशाभिभवेन शुक्त्यन्तरसौसादृश्यप्रतीतिरुपपद्यते शुक्त्यवयवानां तु परस्परसौसादृश्यमुपपन्नतरम्, उक्तरीत्या रजतांशस्य च रजतत्वं मुख्यं तस्मिन्नंशे विरुद्धजात्यन्वयाभावात् रजतान्तरावयवसौसादृश्यं च भ्रमदशायां गृह्यमाणस्य तस्य प्रचुरशुक्तिग्रहणाभिभूतत्वाभावाद्रजतान्तरावयवसौसादृश्यप्रतीतिरुपपद्यते, अत एव रजतव्यवहारश्च मुख्यः, अतः शुक्त्यादौ रजतादिबुद्धेर्याथार्थ्यमुपपन्नम् । अल्पस्य रजतस्य प्रचुरतया ग्रहणेऽन्यथाख्यातिप्रसङ्ग इति चेत् न प्राचुर्यग्रहणाभावात्, अल्पत्वाग्रहणमेव हि तत्र विद्यते, प्राचुर्यस्य प्रतियोग्यपेक्षत्वात्प्रतियोगिभूतशुक्त्यग्रहणात्तद्ग्रहणे प्रवृत्त्यसम्भवाच्च शुक्त्यपेक्षया रजतांशस्य प्राचुर्यं न गृहीतमिति नान्यथाख्यातिः । नन्वल्पत्वाग्रहणं नाम प्रचुरत्वग्रहणं स्यात्, भवन्मते हि भावान्तरमभावः, अतोऽन्यथाख्यातित्वमिति चेत् न अल्पत्वाग्रहणं नाम न प्राचुर्यग्रहणम् अपि तु अल्पत्वविषयज्ञानसङ्कोच इति अन्यथाग्रहणाभावात्, नेदं रजतमित्यत्र

नञर्थः कः? इति चेत् शुक्तित्वमेवेति ब्रूमः, यदाकारग्रहणेन पूर्वज्ञानोत्पन्नायाः प्रवृत्तेर्निवृत्तेर्वा निवारणं स एवाकारो नञर्थः, स चाकारः प्रतियोगिसापेक्षै-र्नेदं रजतमित्यादिशब्दैस्तदनपेक्षैः शुक्त्यादिशब्दैश्च व्यवह्रियते, एवं भूते भूतान्तरसद्भावात् सदृशे सदृशान्तरसद्भावाच्च शुक्तिरूप्यादिबुद्धेर्याथार्थ्य-मुपपादितं, न हि स्वाप्नार्थानां सदृशे सदृशावयवसद्भावो भूते भूतान्तर-सद्भावो वा वक्तुं शक्यते इत्यत्राह–

**मू० स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूता स्वार्थाः सृज्यन्ते तथा हि श्रुतिः–**

टी० "स्वप्ने चे"ति, कथं केचित्सुखरूपाः केचिद्दुःखरूपाः? इत्यत्राह "पुण्यपापानुगुण"मिति, भगवतैव–जगत्स्रष्ट्रैव । तर्ह्यन्यैरप्युपलभ्येत सदा चोपलभ्येतेत्यत्राह 'तत्तदि'ति, कथं दृष्टविजातीयाः? इत्यत्राह "तथा भूता" इति, श्रुतिं दर्शयति "तथा ही"ति, स्वप्नविषयत्वमस्य वाक्यस्य कथ? मिति शङ्कायां स्वप्नं पश्यतीति पूर्ववाक्यं स्मारयति–

**मू० स्वप्नविषया "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः सृजते स हि कर्त्तेति**

टी० "स्वप्नविषये"ति, रथयोगाः–अश्वादयः, न भवन्ति–दृष्टसजातीया न भवन्तीत्यर्थः "आनन्दा मुदः प्रमुद" इति साधारणभोग्यदर्शनजा प्रीतिर्मुत्, असाधारणभोग्यत्वज्ञानजा प्रीतिः प्रमुत्, विनियोगजा प्रीतिरानन्दः । यद्वा विलक्षणविषयदर्शनजा प्रीतिर्मुत् तस्य स्वनियोगार्हत्वज्ञान-जन्या प्रीतिः प्रमुत्, विनियोगजा प्रीतिरानन्द इति, एतैः शब्दैर्विषया लक्ष्यन्ते

मुख्यार्थत्वे दृष्टविजातीयत्वायोगात्, वेशान्ता गृहाः । यद्वा वेशान्ताः पल्वलानीत्यर्थः । कथमुपपद्यत ? इत्यत्राह "स हि कर्ते"ति. सर्वशक्तिर्हि कर्त्ता किमनुपपन्नमिति भावः । तच्छब्दो न प्रकृतजीवपरः अपि तु प्रसिद्धपरमात्मपरः । व्याघातपौनरुक्त्यशङ्कापरिहारार्थमस्याः श्रुतेरर्थमाह—

सू० यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्त्यथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थानीश्वरः सृजति, स हि कर्त्ता तस्य सत्यसंकल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं संभवतीत्यर्थः "य एषु सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति च, सूत्रकारोऽपि "सन्ध्ये सृष्टिराह हि" "निर्मातारं चैके पुत्रादयश्चे"ति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा, दि"त्यादिना न जीवस्य संकल्पमात्रेण स्रष्टृत्वमुपपद्यते जीवस्य स्वाभाविकसत्यसंकल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वादीश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतया आश्चर्यभूता सृष्टिरियं "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति परमात्मैव तत्र स्रष्टेत्यवगम्यत इति परिहरति अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमनराज्याभिषेकशिरश्छेदादयश्च पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहा-

न्तरसृष्ट्योपपद्यन्ते पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्य-
संभिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते

टी० "यद्यपि सकले"ति, "सृजत"इति पदविरोधपरिहाराय न भवन्तीति निषेधस्य संकोचो हि उत्सर्गापवादन्यायेन कृतः अतः कालान्तरस्थायित्वपुरुषान्तरानुभाव्यत्वाकारविषयो निषेधः, न तु तत्कालतत्पुरुषमात्रानुभाव्यतया स्वरूपनिषेधः, अतो जाग्रदवस्थानुभूतवस्तुसजातीया अनेकपुरुषानुभाव्याः कालान्तरस्थायिनश्च न भवन्तीत्यर्थः, स हि कर्त्तव्येतत्वखण्डमुक्तार्थोपपादकत्वेन व्याचष्टे "तस्ये"ति, स्वाप्नार्थसृष्टेरीश्वरकर्तृकत्वस्फुटीकरणार्थं श्रुत्यन्तरमाह "य एष" इति, स्वाप्नार्थानां पारमार्थ्यं पूर्वपक्षीकृत्यापारमार्थ्यं सूत्रकारेण सिद्धान्तितमिति व्याख्यातृमतभेदेनास्याः श्रुतेर्नायमर्थ इति शङ्काव्युदासार्थमुक्तार्थस्य सूत्रकाराभिमतत्वमाह "सूत्रे"ति, सूत्रार्थमाह "स्वाप्ने"ष्विति, जीवस्यापि स्वप्नदशायां सत्यसंकल्पत्वाद्याविर्भावः कल्प्यत इत्यत्राह "तस्मिँल्लोका"इति, अनन्यथासिद्धस्यैव हि कल्पकत्वं, परमात्मलिङ्गश्रवणेन स्वाप्नार्थसृष्टेः परमात्मनैवोपपन्नत्वान्न जीवस्य स्वरूपाविर्भावः कल्प्यत इत्यर्थः । कथमपवरके शयानस्य देशान्तरगमनादेः पारमार्थ्यमुपपद्यत? इत्यत्राह "अपवरकादि"ष्विति, स्वयमेव स्वदुःखावहवस्तुसृष्ट्यनुपपत्तेश्च न तदा जीवस्य स्वरूपाविर्भावः कल्प्यत इति चार्थसिद्धं शिरश्छेदादय इत्युक्तत्वात् सरूपे देहान्तरे शयानदेहव्यवहारो भेदाग्रहकृतो न त्वन्यथाख्यातिकृतः । एवं स्वाप्नार्थेषु तत्तदेकपुरुषानुभाव्यत्वतत्तत्कालावसायित्वरूपभेदाग्रहात्मवृत्त्यादिर्भवति पीतशङ्खादावीश्वरसृष्टत्वश्रुतिर्दर्शयितुं न शक्यत इत्यत्राह "पीते"ति, पीतिमवच्छ्वैत्यमपि प्रतीयेतेत्यत्राह–

भू० तत्रापि[1] पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते अतः सुवर्णानुलिप्तशङ्खवत् पीतः शङ्ख इति

१ अपि–शब्दरहितः तत्रेति पुस्तकान्तरपाठः।

प्रतीयते, पित्तद्रव्यं तद्गतपीतिमा चातिसूक्ष्मतया पार्श्वस्थैर्न गृह्यते पित्तोपहतेन तु स्वनयननिष्क्रान्ततया ऽतिसामीप्यात्सूक्ष्ममपि गृह्यते तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते

टी० "तत्रे"ति, तर्हि पार्श्वस्थैरपि पित्तद्रव्यं ग्राह्यमित्यत्राह "पित्ते"ति, तर्हि सूक्ष्मत्वात्तेनापि न पित्तं ग्राह्यमित्यत्राह "पित्तोपहतेन त्वि"ति, दूरस्थशङ्खस्यातिसामीप्याभावात्कथं तत्रस्थं पित्तद्रव्यं गृह्यत? इत्यत्राह- "तद्ग्रहणे"ति, यथा अतिदूरमुत्पतितः पतगो न द्रष्टुं शक्यते तथाऽपि सन्निकर्षात्पतनकालादारभ्य निरन्तरमवेक्ष्यमाणस्तज्जनितसंस्कारवद्भ्यां चक्षुर्भ्यां दूरेऽपि गृह्यते तद्वदित्यर्थः । प्राभाकरैः पित्तपीतिमा शङ्खद्रव्यं च निरन्तरं गृह्येते इत्युक्तम्, अत्र तु रूपिद्रव्ये चक्षुषः सामर्थ्यात् पित्तद्रव्यं गृह्यत इत्युक्तमिति विशेषः सुवर्णानुलिप्तशङ्खवदिति दृष्टान्ते चायं भावः ॥

ननु यदि पित्तद्रव्यशङ्खयोर्भेदाग्रहात् पीतशङ्खव्यवहारः तर्हि पटे पीतव्यवहारः कथं न स्यात्, अन्यथाख्यातौ वा कथं पटे पीतव्यवहाराभावः, भ्रमे सति तन्मूलनिरूपणा कार्या ।

न तु सर्वत्र भ्रमेण भवितव्यमिति चेत् तुल्यं जपाकुसुमस्फटिकादौ चाक्षुषदोषसंसर्गो दुर्वचन इत्यत्राह "जपे"ति, जपाकुसुमस्फटिकमरीचिकाजलालातचक्रदिङ्मोहेषु द्रव्यान्तरेण सम्बन्धाद् यथार्था प्रतीतिरिति निर्वाहः

स्रु० जपाकुसुमप्रभा वितताऽपि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम्, मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाद्दृष्टवशाच्चाम्बुनो ग्रहणात् यथार्थत्वम्, अलातचक्रेऽपि अलातस्य द्रुततरगमनेन सर्वदेशसं-

योगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते चक्रप्रतीताव-
प्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव,
क्वचिदन्तरालाभावादन्तरालाग्रहणं क्वचिच्छैघ्र्यादग्रहण-
मिति विशेषः, अतस्तदपि यथार्थम्

टी० जपाकुसुमप्रभासम्बन्धाद्रक्तप्रतीतिश्चेत् तत्सम्बन्धात्पाषाणा-
दिष्वपि तथा स्यादित्यत्राह "स्वच्छे"ति, "मरीचिके"ति अदृष्टस्य
नियामकत्वं सर्वैरपि ख्यात्यन्तरवादिभिरभ्युपेतव्यम्, अन्यथा सर्वेषां सर्वदा
सर्वत्र सर्वविषयभ्रमप्रसङ्गात्कदाचिदपि भ्रमाभावप्रसङ्गाच्च अलातेति
अन्तरालाग्रहणात्पूर्वोत्तरकालभाविनोस्तत्तत्प्रदेशविशेषालातसंयोगयोरन्त-
रालाग्रहणात् क्रमाग्रहणादित्यर्थः, अन्तरालाग्रहणे सति कथं याथार्थ्यमि-
त्यत्राह "चक्रे"ति, चक्रप्रतीतिः—सम्यक् चक्रप्रतीतिः। को विशेष? इत्यत्राह
"क्वचिदि"ति,—

सू० दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था दर्पणादिप्र-
तिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं
निजमुखादि गृह्णन्ति तच्चाप्यतिशैघ्र्यादन्तरालाग्रहणा-
त्तथा प्रतीतिः, दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्य-
मानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते
अतो दिगन्तरप्रतीतिर्यथार्थैव, द्विचन्द्रज्ञानादावप्यङ्गुल्य-
वष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सा-
मग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भव[१]ति तत्रैका
सामग्री स्वदेशविशिष्टचन्द्रं गृह्णाति, द्वितीया तु किंचि-
द्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं
गृह्णाति ॥

१ भविष्यतीति तु पु० ।

टी० "दर्पणादि"ष्विति, सव्यदक्षिणविपर्यासः कथमिति? चेत् उच्यते आपेक्षिको हि सव्यदक्षिणभावः, तत्र स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य मुखस्य चान्तरालाग्रहणमेव विपर्यासो दर्पणादेशगतः, तेनागृहीतान्तरालं मुखमिति अभिमुखस्य दर्पणस्य मुखस्य चान्तरालाग्रहणादाभिमुख्यप्रतीतेर्याथार्थ्यम् एवं मलिनत्वाल्पत्वादि च दिङ्मोहेऽपीत्थं सर्वत्र सर्वदिक्त्वद्भावेऽपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षया तत्र दिगन्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभाम् अतो यथार्थविषयत्वमिति दिशां बहुत्वं च "पद्भ्यां भूमिर्दिशः श्रोत्रा"दित्यवगम्यते। द्विचन्द्रेति ततः किं? मित्यत्राह "तत्रैके"ति, स्वतः ऋनुप्रसारिणोऽपि चाक्षुषतेजसो वक्रत्वं संभवति दर्पणादिषु तद्दर्शनात् इहाप्यङ्गुल्यवष्टम्भादृष्टादिना तदुपपत्तिः। ततः किं? मित्यत्राह—

सू० अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणेऽपि ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः, देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति, तच्च सामग्रीद्वित्वं पारमार्थिकं तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकं ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम्, तच्च विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञानवत् केवलचक्षुषः सामर्थ्याभावात् चाक्षुषं ज्ञानं तथैवावतिष्ठते

टी० "अत" इति, चन्द्रे[1]देशौ द्वाविति प्रतीत्यभावहेतुश्चन्द्रैकत्वाग्रहणं, देशान्तरगतस्य तद्विशेषणत्वं कथ? मित्यत्राह "देशे"ति, ततः

१ चन्द्रदेशौ द्वाविति पु०।

किं प्रतीतेर्याथार्थ्यस्येत्यत्राह "तत्र सामग्री"ति, तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकमिति ग्रहणद्वयमतिदैर्घ्यादगृहीतक्रमम् अत एवागृहीतपरस्परभेदं चेति भावः । विशेषणद्वयविशिष्टविषयग्रहणद्वयेऽपि विशेष्यैक्यं कथं न प्रतीयत? इत्यत्राह "तत्रे"ति, न हि केवलं चक्षुरैक्यप्रतिपत्तिसमर्थं दृष्टं देवतादिषु अपि तु संस्कारसंस्कृतमेव समर्थं दृष्टं संस्कारस्य विलम्बितभावित्वाच्च तदानीं नैक्यप्रतीतिरित्यर्थः । चाक्षुषज्ञानं तथैवावतिष्ठत इति अगृहीतैकत्वचन्द्रमात्रविषयमवतिष्ठत इत्यर्थः तस्यैवेति पाठे चन्द्रमात्रस्यैव ग्राहकतया तिष्ठतीत्यर्थः एकसामग्रीभूतयोश्चक्षुषोः कथं द्विसामग्रीत्वमित्यत्राह—

मू० द्वयोः चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम्, अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वादेकचन्द्र इति भवति प्रत्ययः, दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम्, अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम् ।

टी० "द्वयोश्चक्षुषो"रिति, स्वतोनिर्दोषस्येन्द्रियस्य सदोषत्वं हि कार्यकल्प्यं तथा सामग्रीद्वित्वमपीति भावः । तर्हि सदैव चन्द्रद्वित्वं गृह्येतेत्यत्राह "अपगते त्वि"ति, कथं दोषापगमे ऐक्यप्रतिपत्ति? रिति शङ्कायां द्वित्वप्रतिपत्तेरौपाधिकत्वमाह "दोषकृत"मिति, ग्राह्याकारद्वित्वमिति स्वदेशविशिष्टत्वमेकाकारः अगृहीतान्तरालप्रदेशान्तरमेकाकारः तस्याकारत्वं विशेषणत्वं न चानाकारस्याकारत्वेनान्यथा ख्यानम् अगृहीतान्तरालत्वे सत्यप्रधानतया भातस्यैव विशेषणत्वात् नेत्रवृत्तिर्वित्तिगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति प्राभाकाराः यथा संवित्सिद्धौ प्राभाकरमतोपन्यासे "नेत्रवृत्तिर्द्विधा भूता द्वे तु वृत्ती वितन्वती द्वित्वं चन्द्रं च युगपत् निर्भासयति तत्र न इति देशगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति ततोऽत्र वैषम्यं चाक्षुषतेजोग-

तिभेदरूपसामग्रीद्वयजन्यम् अतिशैघ्र्यादगृहीतक्रममगृहीतभेदं च ज्ञानद्व-यमगृहीतैकत्वं चन्द्रमगृहीतान्तरालदेशान्तरं च निरन्तरं गृह्णाति अतो द्विचन्द्रव्यवहार इत्यर्थः इति निरवद्यं यथार्थख्यातिसमर्थनमित्यर्थः। ख्यात्यन्तरदूषणानाम् अन्योन्यमुक्तानां स्वाभिमतत्वात्तत्र फलाभावमाह—

मू० ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते। अथवा किमनेन बहुनोपपादनप्रकारेण प्रत्यक्षानुमानागमाख्यप्रमाणजातम् आगमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसंकल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति, किं नोपपद्यते, भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वाय अखिलं जगत्सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः, केचन तत्तत्पुरुषमात्रानुभवविषयास्तत्तत्कालावसानास्तथा तथानुभाव्याः सृज्यन्ते तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम्

टी० "ख्याती"ति, अथवा किमनेनेत्यादिपाठो बहुषु कोशेषु दृश्यते व्याख्यातृभिर्व्याख्यातश्च तत्र परागर्थविषयापरोक्षभ्रमेष्वेकेनैवोत्तरेण परिहारः कृतो भवति। किञ्च सेत्स्यतीत्यनेन प्रमाणास्तित्वमुक्तं किंचोपपद्यत इत्यनेन उपपत्तिरुक्ता, किं प्रमाणं? कथमुपपत्ति? रित्यत्राह "भगवता ही"ति, अखिलं जगत् सृजतेत्यनेनास्यार्थस्य श्रुतिमूलत्वं सूचितं कृत्स्नकार्यकारणत्वात् ब्रह्मणः इदं सर्वमसृजतेति हि श्रुतिः प्रतीयमानत्वाविशेषादिदमपि तत् सृष्टमित्यर्थः। तर्हि बाध्यबाधकभावव्यवस्था कथं? मित्यत्राह "तत्रे"ति, न हि तत्तदेकपुरुषानुभाव्यानां तत्तत्कालावसायिनां

व सुखादीनां मिथ्यात्वमिति भावः । अथ श्रुतिस्मृत्यर्थापत्तिभ्यामनिर्वचनीयसिद्धिं दूषयितुं प्रथमं श्रुतिवाक्यं नियोजयति–

सू० यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति तदसत् "अनृतेन हि प्रत्यूढाः" इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात् ऋतेतरविषयो ह्यनृतशब्दः ऋतमिति कर्मवाचि, ऋतं पिबन्ताविति वचनात् ऋतं कर्म फलाभिसंधिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम्, अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि ।

टी० "यत्पुन"रिति, तस्या अपि मूलाज्ञानकार्यत्वात् "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ? अनात्मन्यात्मबुद्धिर्येति अनृतेनेत्यादिश्रुतिं व्याचष्टे "अनृतेने"ति, पूर्वनिरस्तप्रकारेणानिर्वचनीयस्याप्रामाणिकत्वात्तत्र व्युत्पत्तिर्नास्तीति भावः। अनृत–शब्दं व्याचष्टे "ऋतेतरविषयो ह्यनृतशब्द"इति, हि–शब्देन ऋतेतरविषयत्वसंप्रतिपत्तिः सूचिता ऋताभावस्य ऋतविरोधिनश्च ऋतभूतब्रह्माश्रयत्वानुपपत्त्या तदन्य एव नञर्थस्त्वयापि वक्तव्य इत्यभिप्रायः, अनृत–शब्दार्थे निष्कष्टुम् ऋतशब्दार्थमाह "ऋतमिती"ति, कर्मवाचि पुण्यकर्मवाचीत्यर्थः न तु सत्यवाचीति भावः । कुत इत्यत्राह "ऋतं पिबन्तावि"ति, अस्मिन्वाक्ये सुकृतस्य लोक इति ह्युक्तमिति भावः । एवंविधवाक्यान्तरेषु प्रसिद्धिश्चाभिप्रेता यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणोदूराद्गन्धोवातीत्युक्त्वा एवमनृतादात्मानं जुगुप्सेदिति पुण्यप्रतियोगिन्यनृतशब्दः प्रयुक्तः तस्मादृतशब्दः पुण्यवाची पुण्यमपि हि मोक्षविरोधि तत्कथमनृतशब्दोक्तपापमात्रप्रत्यूढत्वमिति शङ्कायां मोक्षप्रकरणोक्तं पुण्यं विविनक्ति "ऋतं कर्मे"ति, मुमुक्षोः सुकृतं दुष्कृतमुभयं हि विरोधी इत्यतस्तद् द्वयं पापम् अतोनञ्समासान्तर्गत ऋतशब्दोऽनभिसंहितफलकर्मपर इत्यर्थः परमपुरुषाराधनवेषं तत्प्राप्तिफलमित्यनेन "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मान-

व'' इत्येतत्सूचितम्, अनृत-शब्दस्य ब्रह्मप्राप्तिविरोधिपरत्वे सति ऋत-शब्दस्य बन्धकेतरकर्मवाचित्वसिद्धिरिति तदर्थं तत्पूर्ववाक्येनोपपादयति—

सू० एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा इति वचनात् न सदासीन्नो सदासीत्तदानीमित्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचित्समष्टिभूते तमःशब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य नात्र कस्यचित्सदसदनिर्वचनीयतोच्यते ।

टी० "एतमि"ति, ऋतानृतशब्दयोरेवमनृतादात्मानं जुगुप्सेदित्यादिषु श्रुतिषु पुण्यपापपरत्वेन प्रसिद्धत्वात् न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतोनिवर्त्तन्ते क्षीयन्ते चास्य कर्माणीत्यादिषु सुकृतदुष्कृतयोरपि मोक्षविरोधित्वश्रवणान्मोक्षप्रकरणेषु मुमुक्षोस्संसाराख्यानिष्टफलप्रदत्वेनोभयोरपि पापशब्दाभिधेयत्वादस्यानृतशब्दवाच्यस्यास्मिन्वाक्य एव ब्रह्मप्राप्तिविरोधित्वश्रवणादस्यान्तरायोमैत्रेयेत्यादिषु पुण्यपापकर्मणोः मोक्षविरोधिफलत्वश्रवणादनृतशब्दस्यानिर्वचनीयवाचित्वेन व्युत्पत्त्यभावाच्चानृतशब्दस्तदन्यव्युत्पत्त्या मोक्षविरोधिकर्मपर इत्यर्थः । नासदासीत्यादि अत्र "अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत" इति ब्रह्मशब्दवाच्यशुद्धात्मस्वरूपविषयः सदसच्छब्दप्रयोगः प्रतिवन्दित्वेनानुसंधेयः सदसच्छब्दयोश्चिदचिद्व्यष्टिविषयत्वमुपपादयति "उत्पत्ती"ति, उत्पन्नस्य हि प्रलयः उत्पत्तिश्च चिदचिद्व्यष्ट्योः श्रुतिसिद्धा अतस्तयोरत्र प्रलय उच्यत इत्यर्थः सत्त्यच्छब्दाभ्यां सच्च त्यच्चाभवदिति वाक्यं स्मारितं कार्यावस्थचेतनस्य सच्छब्दोक्तत्वादिह सच्छब्देन तदन्यवाचकेनासच्छब्देन च कार्यावस्थचेतनाचेतननिषेधः कृतः वाक्यान्तरैकार्थ्यादित्यर्थः तम आसीत्तमसा गूढमिति तदनन्तरवाक्याभिप्रायेणाचित्समष्टिभूते तमःशब्दाभिधेये वस्तुनीत्युक्तं, हेत्वन्तरं चाह—

सू० सदसतोः कालविशेषे सद्भावमात्रवचनाच्च तमः शब्दा-

भिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते "अव्यक्त-मक्षरे लीयते अक्षरं तमसि लीयते तमः परे देवे एकी-भवतीति सत्यं, तमःशब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते तस्यास्तु मायां तु प्रकृतिं विन्द्यादिति माया–शब्देनाभिधानादनिर्वचनीयत्वमिति चेन्नैतदेवम् माया–शब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति माया–शब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयत्वमपि चेत्तदपि नास्ति

टी० "सदसतो"रिति, न हि कालविशेषे अनिर्वचनीयमभ्युपगम्यते, अचित्समष्टेस्तमःशब्दवाच्यत्वमुपपादयति "अत्रे"ति, तम आसीन्मायां तु प्रकृतिमित्यनयोर्वाक्ययोः पूर्वक्रमेणोपादानविवक्षां चोद्यरूपेण दर्शयति "सत्य"मिति, प्रकृति–शब्दवाच्या मायेत्यभिप्रायः । परिहरति "नैतदेव"मिति, कुत ? इत्यत्राह "माये"ति, इतिर्हेतौ माया–शब्दवाच्या प्रकृतिरित्यभिप्रायः, ऐन्द्रजालिकादिषु मायावित्वशब्दप्रयोगदर्शनान्मायामिथ्याशब्दयोः पर्यायत्वादनिर्वाच्यस्य मिथ्यात्वाच्च मायाशब्दवाच्यत्वमित्यभिप्रायेण शङ्कते "माये"ति, परिहरति "तदपि नास्ती"ति, माया–शब्दस्य मिथ्यापर्यायत्वमेव नास्ति तथाऽभ्युपगमेऽपि अन्यथाख्यातिभेदायहणयोरन्यतरेणैवोपपन्नत्वाच्च तद्विषयत्वं युक्तमित्यनिर्वचनीयवाचित्वं नास्तीति भावः । तदुपपादयति–

सू० न हि सर्वत्र मायाशब्दो मिथ्याविषयः असुरराक्षसशस्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात् यथोक्तम् "तेन मायासहस्रं तच्छम्बरस्याशुगामिना बालस्य रक्षता देहमेकैकश्येनसूदित"मिति, अतो माया–शब्दो विचित्रार्थसर्गकराभिधायी, प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव "अस्मान् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो-

मायया संनिरुद्ध" इति माया–शब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति–

टी० "न ही"ति, माया–शब्दप्रयोगविषयेषु सर्वेषु मिथ्यात्वाननुवृत्तेरित्यर्थः। सत्येषु माया–शब्दप्रयोगं दर्शयति "यथोक्त"मिति, न हि ज्ञानबाध्यानामैकैकशः शस्त्रच्छेद्यत्वमस्ति तस्मादेकैकशो मायानुच्छेद्यत्ववचनान्मायाशब्दस्य सत्यपरत्वमित्यनुयायिन एव प्रवृत्तिनिमित्त्वान्मायाशब्दप्रयोगविषयेषु सर्वेष्वनुगतमाश्चर्यत्वमेव मायाशब्दप्रवृत्तिनिमित्तमित्याह "अत"इति, आश्चर्यत्वं विस्मनीयत्वं तच्च विचित्रार्थसर्गकरत्वात्, विचित्र–शब्दो नानाविधवाची नानाविधकार्यकारित्वात्प्रकृतेर्विस्मयनीयत्वं माया–शब्दो ह्याश्चर्यवाचीति हि वक्ष्यते तस्मादाश्चर्यत्वमेव प्रवृत्तिनिमित्तम् असत्येषु सत्येष्वपि माया–शब्दप्रयोगविषयेष्वाश्चर्यत्वं विद्यते प्रकृतेराश्चर्यत्वमेव मायाशब्दाभिधेयत्वनिबन्धनमित्याह "प्रकृते"रिति, तदुपपादयति "तस्मा"दिति, विचित्रकार्यकारित्वात्प्रकृतेराश्चर्यरूपत्वमिति न मायामात्रसूत्रविषयभाष्यविरोधः एवं माया–शब्दार्थ उक्तः। अथ भगवतो मायासंबन्धश्रवणात्तद्वश्यत्वशङ्काव्युदासाय मायीति पदगतमत्वर्थीयप्रत्ययार्थमाह–

मू० परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते नाज्ञत्वेन, जीवस्यैव हि मायया निरोधः श्रूयते "तस्मिंश्चान्यो मायया संनिरुद्धः इति "अनादिमायया सुप्तो यदा जीवः प्रबुध्यत"-इति च इन्द्रो मायाभिरित्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते अत एव हि भूरित्वष्टेव राजत इत्युच्यते न मिथ्याभूतः कश्चिद्विराजते मम माया दुरत्ययेत्यत्रापि गुणमयीति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम्। नाप्यैक्योपदेशानुपपत्त्या,

टी० "परमपुरुषस्य चे"ति, मायीति,पदोक्तोमायासम्बन्धो नत्त-रोभाव्यत्वम् अपि तु तच्छेषित्वं जीवस्यैव तु तत्तिरोधेयत्वं तस्यैव तथात्व-श्रवणादित्यर्थः मायाऽभिभवो जीवस्यैवेत्यस्मिन्नर्थे परोक्तमेव वचनमाह "अनादी"ति, इन्द्रोमायाभिरित्यत्र अनेकविचित्रशक्त्यभिधायित्वं बहुव-चनादवगम्यते ममेति स्पष्टं निगमयति "इती"ति, माया-शब्दस्य मिथ्याभूतविषयेषु प्रयोगो दृश्यते चेत् तत्र लाक्षणिकः स्यात् अर्थस्य सत्यत्वाभावेन तस्याश्चर्यत्वाभावात् प्रतिभासस्तु द्वित्वादिविषयत्वादा-श्चर्यरूपः मन्त्रौषधादिराश्चर्यरूप इति तत्सम्बन्धाल्लाक्षणिकत्वम् । अथ श्रुत्यर्थापत्त्या अनिर्वचनीयसिद्धिं दूषयति "नापी"ति, प्रतिज्ञातमुप-पादयति–

सू० न हि तत्त्वमसीति जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छ-ब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते ऐक्योपदेशस्तु त्वं-शब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः, "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् अतो न ब्रह्माज्ञानपरिकल्पनम् । इतिहासपुराणयोरपि न ब्रह्मा-ज्ञानवादः क्वचिदपि दृश्यते

टी० "न ही"ति, अज्ञानाकारकल्पेऽनुपपत्तिर्नास्ति तत्कल्पना एवा-नुपपत्तिर्विरुद्धधर्मश्रवणादित्यभिप्रायेण तच्छब्दावगतविशेषणान्युक्तानि स-मानविभक्तिश्रुतिसिद्धतया ह्यैक्यापरित्यागः तथा श्रुतहानस्यान्याय्यत्वा-त्तच्छब्दावगतविशेषाः स्वीकार्या इति भावः । ऐक्योपदेशानुपपत्तिरिति चेत् तत्राह 'ऐक्ये"ति, जीवपरयोर्हेयसम्बन्धतदनर्हत्वाभ्यां ह्यैक्यविरोधः जीवशरीरकस्य परमात्मन ऐक्याभिधाने हेयसम्बन्धस्य जीवद्वारकतया

विरोधः परिहृत इत्यर्थः। उपपन्नतरः—मुख्यतयोपपन्न इति भावः। जीववा, चकशब्देन तच्छरीरकपरब्रह्माभिधानममुख्यमिति चेत् तत्राह "अनेने"ति-श्रुत्यर्थापत्त्यसिद्धिं निगमयति "अत"इति, इतिहासपुराणयोर्ब्रह्माज्ञान-परत्वाभावं प्रतिजानीते "इतिहासे"ति,

सू० ननु ज्योतींषि विष्णुरिति ब्रह्मैकमेव तत्त्वमिति प्रति-ज्ञाय ज्ञानस्वरूपो भगवान् यतोऽसाविति शैल्याब्धिधरा-दिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृ-म्भितत्वमभिधाय "यदा तु शुद्धं निजरूपी"ति ज्ञानरूपस्यैव ब्रह्मणः स्वस्वरूपैक्या[1]वस्थितिवेलायां वस्तुभेदाभावदर्शने-नाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य वस्त्वस्ति किं मही-घटत्वमिति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभे-दानामसत्यत्वमुपपाद्य

टी० नन्वित्यादि, ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञायेति जडाजडयोः स्वरूपैक्यायोगेन सामानाधिकरण्यस्य बाधार्थत्वादुत्तरश्लोकेषु तद्व्यतिरिक्तस्य मिथ्यात्वकथनाच्चेत्यभिप्रायः, विज्ञानविजृम्भितानि विविधं ज्ञायते-ऽनेन विपरीतं ज्ञायतेऽनेनेति वा करणे व्युत्पत्तिः, विज्ञानमविद्या यदा तु शुद्धमित्यादिना तस्य हि व्यतिरेको वक्ष्यते विज्ञानेन विजृम्भितानीति योजना न युक्ता अस्वारस्यात् विजृम्भितानीति नपुंसकोत्त[2]रपदस्य पुंलिङ्गभे-दशब्दविशेषणत्वायोगेन जृम्भितशब्दस्य भावार्थप्रत्ययान्तत्वस्य युक्तत्वेन षष्ठीसमासस्य युक्तत्वाच्च। ब्रह्मव्यतिरिक्तस्याविद्यापरिकल्पितत्वं व्यतिरे-कमुखेन स्थिरीकरोतीत्याह "यदा त्वि"ति, शुद्धम्—अविद्यारहितं निजरूपि-तत्कृतभेददर्शनरहितम्, अपास्तदोषं—रागादिरहितम्, सङ्कल्पतरोः समन्ता-त्कल्प्यतेऽनेनेति सङ्कल्पः दोषः वस्तुषु वस्तुभेदा इत्यत्र वस्तुष्विति बहु-

१ स्वस्वरूपावस्थितिवेलायामिति पा०।

२ नपुंसकानीति पा०।

वचने न तात्पर्यं जडोपलक्षिते वस्तुनि जडगतभेदा न संभवन्तीत्यर्थः । यद्वा एको वस्तुशब्द आकारपरः जडगताकारभेदा न भवन्तीत्यर्थः । वस्त्वस्ति किं महीघटत्वमिति श्लोकद्वये प्रथमेनार्थस्वभाव उक्तः, द्वितीयेनोदाहरणं दर्शितमिति भिदा, तत्र कुतो हि तत्त्वम् एवं सति कुतः परमार्थ इत्यर्थः कृत्स्नमपरमार्थत्वेनोपलब्धं चेत्कथं तत्र प्रामाण्यमिति शङ्कायामुच्यते स्वकर्मस्तिमितात्मनिश्चयैरिति, तत्त्वार्थनिश्चयविरोधिकर्मवशादित्यर्थः । यद्वा न केवलमात्मविद्भिरेवासत्यत्वमुपलभ्यते अपि त्वज्ञैरपीति भावः । न केवलं शास्त्रप्रमाणेन लौकिकजड[१]त्वग्राहिप्रमाणेनापि तस्य मिथ्यात्वं सिध्यतीत्युक्तं भवति, तस्माच्च विज्ञानमृत इति श्लोकार्द्धमनात्मभूतविजातीयभेदनिषेधमुपसंहरतीत्याह—

सू० "तस्मान्न विज्ञानमृत" इति प्रतिज्ञातं, ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य विज्ञानमेकमिति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य ज्ञानं विशुद्धमिति ज्ञानस्वरूपस्य ब्रह्मणः

टी० "तस्मा" दिति, विज्ञानमेकमित्यर्द्धं सजातीयरूपात्मभेदनिषेधपरं भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेतीति, भेददर्शनं—सजातीयभेददर्शनं तदुत्तरोत्तरभाविकार्याज्ञानस्य हेतुः तस्यापि पूर्वकर्मैवेत्यर्थः । यो देवादिशरीरभेदहेतुस्स एवेत्येवकाराभिप्रायः । यद्वा देवादिशरीरभेदप्रतीतिहेतुकाज्ञानमात्मनि देवत्वाद्याकारारोपणरूपं तस्य हेतुः कर्मैवेत्यर्थः, अनात्मन्यात्मबुद्धेरपि अज्ञानशब्दवाच्यत्वं युक्तं तस्या अपि मूलाज्ञानकार्यत्वात् श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ? अनात्मन्यात्मबुद्धिर्येति तस्या अज्ञानपर्यायाविद्याशब्दवाच्यत्वाच्च ज्ञानं विशुद्धमिति स्वगतभेदनिषेधः विशुद्धं विमलमिति अविद्यातत्कृतभेददर्शनरहितमित्यर्थः, तत्कृतशोकादिरहितमित्याह "विशोक" मिति, एकं सदेकमिति सजातीयविजातीय-

१ लौकिकजडग्राहि प्रमाणेनेति पा० ।

भेदविरहानुवादः। यद्वा एकमिति सजातीयभेदनिषेधानुवादः सदेकमित्युक्तप्रकारेण स्वगतभेदराहित्यमुच्यते परमपरेशादिशब्दवाच्यं चिन्मात्रमेवेत्याह "परम" इति। नेदं परमतं तत्त्वमेवोक्तमित्याह—

**सू० स्वरूपं विशोध्य "सद्भाव एवं भवतो मयोक्त" इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वं नान्यस्य, अन्यस्य चासत्यत्वमेव तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टमेवेत्युपदेशो दृश्यते**

टी० "सद्भाव" इति, संव्यवहारभूतं समन्ताद्व्यवहारार्हमेदं भुवनाश्रितं भुवनेनाधिष्ठानतया श्रितमेवैतद्वर्त्तते तत्र हि हेतुरज्ञानमित्येवोक्तमित्यर्थः। यद्वा भुवनेऽश्रितं भुवनेनाश्रितं संव्यवहारभूतं व्यावहारिकम् एतल्लोकसिद्धं सत्यत्वं यत् तत्रापि कारणमविद्येत्युक्तमित्यर्थः। एतदभिप्रायेण तस्य भुवनादेः सत्यत्वं व्यावहारिकम् इति ह्युपदेशो दृश्यत इति तस्मादितिहासपुराणयोर्ब्रह्माज्ञानवादो दृश्यत इति वक्तुं न शक्यमित्यर्थः। एतत्प्रतिक्षिपति—

**सू० नैतदेवम्।**

टी० नैतदेवमित्यादिना, नैतच्चिन्मात्रब्रह्मणोऽविद्यासंबन्धित्वमविद्याकल्पितत्वेन प्रपञ्चस्य मिथ्यात्वं च यदुक्तं न तत्प्रामाणिकमित्यर्थः, तथा सत्यर्थविरोधात् प्रकरणविरोधाच्छास्त्रतात्पर्यविरोधात् अशेषमूर्त्तिर्भगवानित्यादिपदानां लाक्षणिकत्वात् प्रपञ्चधर्मिग्राहकप्रमाणविरोधात् श्रुतेः सविशेषवस्तुपरत्वोपपादने स्मृतेस्तद्विरुद्धार्थपरत्वापातात् पूर्वोक्तर्कविरोधाच्च तदभावः। अत्रार्थविरोधोनाम सर्वज्ञत्वादिगुणकस्याज्ञानादिप्रसक्तिविरोधः। अविद्याया आश्रयतिरोधानाद्यनुपपत्तिश्चास्य प्रपञ्चस्य विस्तरेण प्रतिपादनवैयर्थ्यं प्रकरणविरोधः अन्यत्तु स्पष्टं दशश्लोक्यामस्ति नास्तिसत्यासत्यज्ञानाज्ञानादिशब्दा आत्मानात्मविषया इति नात्र विगानं तत्र नास्त्यसत्यशब्दयोः किं ज्ञानबाध्यत्वं प्रवृत्तिनिमित्त?मुत परिणामित्व?मिति विचारे परिणामित्वपक्षे स्वारस्यमस्ति महीघटत्वमित्युपपादनात्

अज्ञानशब्दस्य च नानिर्वचनीयपरत्वम् अपि तु कर्मपरत्वमेव यज्ञः पशु-रित्यादिस्वारस्यात् अन्यत्र "शरीराकृतिभेदास्तु भूपैते कर्मयोनयः । अवि-द्याकर्मसंज्ञाऽन्या बाह्यकर्मवृत्तिप्रज्ञ"इत्यादिवचनाच्च विदचिद्विवेको ऽत्र क्रियत इत्यभिप्रेत्य तदनुगुणसङ्गतिमाह—

मू० अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा पूर्वमनुक्तं रूपान्तरं संक्षेपतः श्रूयतामित्यारभ्याभिधीयते चिदचि-न्मिश्रे जगति चिदंशोवाङ्मनसागोचरः स्वसंवेद्यस्वरूप-भेदो ज्ञानैकाकारतयाऽसंस्पृष्टप्राकृतभेदोऽविनाशित्वे-नास्ति-शब्दवाच्यः

टी० "अत्रे"ति, अत्र—अस्मिन् द्वितीयांशे, विस्तीर्णमिति स्वरूपवि-शेषणं विस्तीर्ण-शब्देन स्थौल्यं विवक्षितं संसृष्टस्थूलस्वरूपमुक्त्वा वियुक्तं सूक्ष्मरूपमुच्यत इति भावः । यद्वा विस्तीर्णमिति क्रियाविशेषणम् उत्तरत्र मिथ्यात्वं विवक्षितं चेत् पूर्वं विस्तरेण कथनमनुपपन्नं, न हि पूर्वमेव भ्रान्तस्य भ्रमान्तरापादनं कार्यं तस्मात्पूर्वं विस्तरेण भुवनकोशस्य कथि-तत्वाच्च मिथ्यात्वं वक्ष्यत इति भावः । वक्ष्यमाणमादिभरतचरितं कृत्स्नं विस्तररूपं तत्सङ्क्षेपश्चायं वक्ष्यमाणसङ्क्षेपः उक्तसंक्षेपश्च दृश्यते, अत उक्तसं-क्षेपशङ्काव्यावृत्त्यर्थमाह "अनुक्त"मिति, अनुक्तं संसृष्टरूपान्तरं कथ्यत इति शङ्काव्यावृत्त्यर्थमाह "रूपान्तर"मिति, वियुक्तमित्यर्थः मिथ्यात्वव्यतिरेकेण वक्तव्यं रूपान्तरं सकलमुक्तं तस्मादवक्तव्यं रूपान्तरं नाम मिथ्यात्वं नान्यदिति शङ्कायां मिथ्यात्वं विनाऽनुक्तं रूपान्तरमाह "चिदचिन्मिश्र"-इति, चिदचिन्मिश्रे जगतीत्यनेन सङ्क्षेपः श्रूयतां पुनरित्यत्र पुनः—शब्दो-व्याख्यातो भवति चिदचिदात्मके जगति स्थूलरूपत्वमुक्तं तत्रैव जगती-दमपि रूपान्तरं पुनरुच्यत इति तस्यार्थः सत्तामात्रमगोचरं वचसामात्म-संवेद्यम् इत्यादिवाक्योक्तं विशेषणमाह "चिदंशोवाङ्मनसे"ति, द्वैति-नोऽतथ्यदर्शिन इत्यादिवाक्यानां भेदनिषेधपराणामर्थं हृदि निधा-याह "असृष्टे"ति, यदि चिदंशस्य ज्ञानैकाकारत्वमचिदंशस्य

मू० अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्ति-शब्दाभिधेयः

टी० परिणामास्पदत्वं च विवक्षितं, तर्ह्यस्ति नास्तिसत्यासत्यादिशब्दप्रवृत्तिनिमित्तत्वेन किमर्थमुक्त? मिति चेत् उच्यते शाखाविशेषे "सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्" इत्यादिवाक्येषु अस्तिनास्तिसत्यासत्यादि-शब्दानां श्रूयमाणानाम् अनधीतशाखागतानां च किं ज्ञानबाध्यत्वाबाध्यत्वे प्रवृत्तिनिमित्तभूते? उत परिणामित्वापरिणामित्वे? इति शङ्कां निराकर्त्तुं परिणामित्वापरिणामित्वे एव नास्त्यसत्यादि-शब्दार्थः, न तु ज्ञानबाध्यत्वाबाध्यत्वे इत्यधीतानधीतशाखार्थज्ञापनार्थमिति पृथिव्यादितत्त्वानां सङ्घातविशेषावस्थायामेव जीवं प्रति शरीरत्वं दृष्टं न त्वेकैकस्य मनुष्यादिशरीराणां पिण्डावस्थायामेव हि शरीरत्वं दृष्टं न भस्माद्यवस्थायामिति चिदचितोः प्रत्येकमवस्थाविशेषेषु भगवच्छरीरत्वाभावशङ्काव्यावृत्त्यर्थम् आह-

मू० उभयन्तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणाभिहितम्

टी० "उभयमि"ति, चिदचिद्रूपमन्योन्यसंसृष्टं निष्कृष्टं च भगवच्छरीरमित्यर्थः निष्कृष्टस्य भगवच्छरीरत्वप्रतिपादनात् भगवन्तं प्रति शरीरत्वस्य निरुपाधिकतया स्वरूपप्रयुक्तत्वं फलितमिति मुक्तावस्थायामपि जीवस्य भगवच्छरीरत्वसिद्धिः। एतद्रूपमयमाकार इत्यर्थः, एतदुपपादयति-

मू० तथा हि "यदम्बु वैष्णवः कायस्ततो विप्र? वसुन्धरा। पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुते"त्यम्बुनोविष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायस्तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपपद्

रूपस्य सामानाधिकरण्यस्य ज्योतींषि विष्णुरित्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह

टी० "तथाहीत्यादिना, दशश्लोक्यां न भगवदात्मकत्वमसाधारणं प्रतिपाद्यं तत्तु सर्वप्रकरणसाधारणम् असाधारणप्रतिपाद्यं तु प्रकृतिपुरुषविवेक एव शास्त्रस्योपनिषदर्थोपबृंहणपरत्वात्सांख्यादिमतव्यावृत्त्यर्थं सर्वप्रकरणेषु भगवदात्मकत्वमुच्यते, अत्रासाधारणप्रतिपाद्यं तु प्रकृतिपुरुषविवेक एवेत्येतदभिप्रायेण हि पूर्वमनुक्तं रूपान्तरमित्युक्तं भगवदात्मकत्वस्य सर्वप्रकरणसाधारण्यं हि पूर्वमप्येतदसकृदुक्तमिति उत्तरत्र च वक्ष्यते दशश्लोकीस्थसामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति ज्ञापयितुं पूर्वश्लोकमुपादत्ते "यदम्बिव"ति, ऋषिणाऽभिप्रेतं फलितमर्थमाह "अम्बुनो विष्णो"रिति, न हि बाल्यावस्थायां शरीरभूतस्य वस्तुनोऽवस्थान्तरे चेतनेन स्वरूपैक्यमस्ति, अपि तु सर्वावस्थायामपि तद्वस्तु शरीरमेवेति भावः। तस्य च विष्णुरात्मेतीति, अभिप्रेत्येत्यर्थः, एवंरूपशरीरात्मभाव इति वार्थः सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येति अनधीतशाखास्वपि तादात्म्योपदेशोऽस्ति तस्यायमेवार्थ इति ज्ञापनं तादात्म्योपदेशोपबृंहणम्। यद्वा प्रत्यक्षसकलश्रुतिगततादात्म्योपदेशोपबृंहणं नामानधीतशाखासु तद्विरुद्धार्थप्रतिपादनं नास्तीति ज्ञापनम्, अत्रेति—शब्दत्रयस्थानेन श्लोकेन भगवानिममर्थमभिप्रेत्यायमर्थ इत्याहेत्यन्वयप्रकारः, न केवलमत्र समष्टिसृष्टिश्लोकगतव्यधिकरणनिर्देशेन व्यष्टिश्लोकगतसामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति ज्ञायते, अपि तु प्रदेशान्तरेषु व्यष्ट्यवस्थानां भगवन्तं प्रति शरीरत्वं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं चासकृत्कण्ठोक्तमित्याह—

मू० अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम् "तानि सर्वाणि तद्वपुः" "तत्सर्वं वै हरेस्तनुः" "स एव सर्वभूतात्मा प्रधानपुरुषात्मनः" "विश्वरूपो यतोऽव्यय" इति, तदिदं शरी-

रात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिशति "ज्योतींषि विष्णुरि"ति

टी० "अस्मिन्नि"ति, शरीरात्मभावस्य सामानाधिरण्यहेतुत्वं कठोक्तं "विश्वरूपो यतोऽव्यय" इति, तथा ऽन्यत्रापि "सर्वगत्वादनन्तस्य" "स एवाहं" "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादि द्रष्टव्यं तदिदमित्यादिना ज्योतींषीत्यादिश्लोके पादत्रयस्यार्थ उच्यते संसृष्टस्य भगवदात्मकत्वमुक्तमित्यर्थः प्रधानादिविशेषान्तं चेतनाचेतनात्मकमित्युक्तत्वात् ज्योतिरित्यादिशब्दाः संसृष्टजीववाचिनः। अथोत्तरश्लोकसङ्गत्यर्थं विशिष्टवाक्यार्थानुवादेन चतुर्थपादार्थं दर्शयति–

मू० अत्रास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम् इदमस्त्यात्मकमिदं नास्त्यात्मकमस्य च नास्त्यात्मकत्वे हेतुरयमित्याह "ज्ञानस्वरूपो भगवान् यतोऽसा"विति

टी० "अत्रास्त्यात्मक"मिति, यदम्ब्वित्यादिश्लोकेन वैयधिकरण्येन समष्ट्यवस्थचिदचितोर्भगवदात्मकत्वमुक्तं व्यष्ट्यवस्थयोरसंसृष्टयोरपि तयोः सामानाधिकरण्येन भगवदात्मकत्वमुच्यते ज्योतींषीत्यादिना श्लोकेन, तत्र पादत्रयेण व्यष्ट्यवस्थयोः संसृष्टयोः तदात्मकत्वमुक्तं, चतुर्थपादेन तु निकृष्टयोरपि तदात्मकत्वमुक्तमित्यर्थः अनन्तरश्लोकमवतारयति "इद"मिति, अचिदंशस्य नास्त्यात्मकत्वनिबन्धनमेव तात्पर्यविषयः अचिदंस्य हि मिथ्यात्वशङ्का व्युदसनीया अनस्तस्य परिणामित्वान्नास्त्यात्मकत्व एव तात्पर्यं, चिदंशस्य त्वपरिणामित्वादस्त्यात्मकत्वं फलितं स्यादित्यभिप्रायेणास्य च नास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तम्। व्याख्येये प्रतीकमुपादत्ते "ज्ञानस्वरूप" इति, अत्र ज्ञानस्वरूपो भगवानिति सामानाधिकरण्यस्य शरीरिशरीरभावनिबन्धनत्वं न केवलं पूर्वश्लोके यदम्बु वैष्णवः काय इत्युक्तत्वादवगम्यते अस्मिन्नपि श्लोके अशेषमूर्त्तिरित्यनेनापि ज्ञायत इत्यभिप्रायेण व्याचष्टे–

मू० अशेषक्षेत्रज्ञात्मनाऽवस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपं न देवमनुष्यादिवस्तुरूपं यत एवं तत एवाचिद्रूपदेवमनुष्यशैलाब्धिधराद्यश्च तद्विज्ञानविजृम्भिताः तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसंधानमूलाः देवाद्याकारानुसन्धानमूलकर्ममूला इत्यर्थः ।

टी० "अशेषे"ति, अशेष-शब्देनाचितोऽपि विवक्षितत्वे भगवन्तं प्रति तस्य मूर्त्तित्वं विहितं स्यात् अप्राप्तत्वात्, ततश्च न तु वस्तुभूत इति देवमनुष्यशैलाब्धिधरादिवस्तुभावनिषेधोऽनुपपन्नः, अतोऽशेष-शब्दः क्षेत्रज्ञविषय इत्यभिप्रायेणाशेषक्षेत्रज्ञात्मनेत्युक्तम्, अत्र ज्ञानस्वरूपादिशब्दानां परमविशेष्यपर्यन्ताभिधायित्वेऽपि विशेषणविशेषणे वाक्यस्य तात्पर्यम् अतो ज्ञानस्वरूपत्वं विशेषणभूतजीवस्यैव विधीयते यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र विशेषणगतं लौहित्यमेव विधेयं परम्परया ऋत्विक्प्रचारकर्मविशेषणं तद्वत्, काठिन्यवान् यो बिभर्त्ति नृसिंहमूर्त्तिर्भगवान् श्वेत इत्युदाहरणं द्रष्टव्यं, ज्ञानस्वरूप इत्यत्र दिव्यात्मस्वरूपस्य ज्ञानस्वरूपत्वमुच्यत इति शङ्कनीयं सर्वकर्मक्षये ज्ञानमपास्तदोषमिति विवरणानुपपत्तेः, न हि दिव्यात्मस्वरूपस्य कर्मतत्कृतरागद्वेषादिहेयसम्बन्धप्रसङ्गः । न तु वस्तुभूत इत्यस्यार्थमाह "न देवमनुष्यादि" इति, शैलादिस्थावरोक्तिः सर्वशरीराणामुपलक्षणमिति ज्ञापनार्था देवमनुष्यादि-शब्दः उत्तरार्द्धं व्याचष्टे-

मू० यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदं ततस्तन्नास्ति-शब्दाभिधेयम्, इतरदस्ति-शब्दाभिधेयमित्यर्थादुक्तं भवति, तदेव विवृणोति यदा तु शुद्धं निजरूपीति, यदैतद् ज्ञानैकाकारमात्मवस्तु

टी० "यत एव"मिति, शैलाब्धिधरादिभेदान् विज्ञानविजृम्भितानि जानीहीत्यनेन फलितं हेतुहेतुमद्भावं विवृणोति तद्विज्ञानेत्यादिना, विज्ञान-

शब्दं व्याचष्टे "तस्ये"ति, विज्ञानं–विविधज्ञानं, कथं शैलाब्धिधरादिभेदस्य वैविध्यानुसंधानमूलत्वं निजकर्मभेदविभिन्नचित्तैः सर्वेकर्मक्षये इति कर्ममूलत्वेन वक्ष्यमाणत्वात् कर्मैव हि मूलमित्यत्राह "देवादी"ति, वैविध्यानुसंधानस्य देवादिभेदहेतुत्वं सद्वारकम् उपरितनग्रन्थैकार्थ्यात् अविद्यासंचितं कर्म बाह्यकर्मवृत्तिप्रजः भूपैते कर्मयोनयः इत्यादिवचनान्तराच्चेत्यर्थः। पूर्वमिदमसत्यात्मकमित्यादिनोक्तश्लोकवाक्यार्थः कथं घटते? इत्यत्राह "यतश्चे"ति, ज्ञानस्वरूपः विज्ञानविजृम्भितानीत्यनेन तथा फलितमित्यर्थः। तदेवेति पूर्वपक्षयोजनायामुक्तेष्वर्थेष्वपेक्षितांशोपजीवनेन सिद्धान्तयोजना क्रियते विज्ञानविजृम्भितत्वमेव व्यतिरेकमुखेन विवृणोतीत्यर्थः पूर्वश्लोके देवादिभेदानां स्वात्मवैविध्यानुसंधानमूलत्वं सद्वारकमिति व्याख्यानमनन्तरश्लोके व्यतिरेकमुखेन विवरणे कर्महेतुत्वम् अवर्णनिबन्धनमिति स्पष्टयन्नाह–

**मू० देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपं भवति तदा देवाद्याकारैकीकृत्यात्मकल्पनमूलकर्मफलभूतास्तद्भोगार्थवस्तुषु वस्तुभेदा न भवन्ति।**

टी० "देवाद्याकारेणे"ति, निर्दोषमित्यादिपदानामर्थविभागो ज्ञानं विशुद्धमित्यादिश्लोकव्याख्याने विशदयिष्यत इति ग्रन्थलाघवार्थमत्र न विस्तृतः, निर्दोषं–शरीरसम्बन्धरहितं, शुद्धं तत्कृतरागद्वेषसुखदुःखादिरहितं, निजरूपं–आविर्भूतस्वरूपं, सङ्कल्प–शब्दं व्याचष्टे एकीकृत्यात्मकल्पन–शब्देन समित्येकीकार इति हि शाब्दाः। पूर्ववत्सद्वारकमिति व्याचष्टे "आत्मकल्पनामूलकर्मफलभूता" इति, देहात्मनोरेकीकृत्यानुसन्धानफलं देवाद्याकारेण स्वात्मवैविध्यानुसन्धानं तयोरेकैकं विज्ञान–शब्दे सङ्कल्पशब्देत्यर्थसिद्धं सुखदुःखे हि कर्मफले तत्कथं वस्तुभेदस्य कर्मफलत्वमिति शङ्कायां तद्भोगार्था इत्युक्तं, सुखादिभोगद्वारीभूतत्वाद्देवादिभेदाः कर्मफलमित्यर्थः भोक्ता भोग्यं प्रेरितारं च मत्वेत्यादिषु भोग्यशब्दार्थः स्पष्टीकृतोभवति

तद्भोगार्था इत्यनेन भोगस्थानभोगोपकरणानां भोगसिद्धिप्रयोजकत्वमेव भोग्यत्वमित्यर्थः सप्तम्यन्तवस्तुशब्दो जीवपर्यन्तदेहपरः, द्वितीयवस्तु-शब्दो देवादिशरीरमात्रपरः। वस्तुभेदाः—देवादिशरीरभेदाः, अत्र वस्तुभेद-शब्देन भेदस्य वस्तुरूपत्वात् पारमार्थ्यमपि फलितम् । अत्रान्वितेषु पदेषु व्याख्येयपदव्याख्यानार्थमाह—

सू० ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूता देवमनुष्य-पशुवाब्धिधरादिवस्तुभेदास्ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कत्वावस्थाविशेषयोगितया नास्ति-शब्दाभिधेयत्वम् इतरस्य सर्वदा निजसिद्धस्वा-नैकाकारत्वेन अस्ति-शब्दाभिधेयत्वमित्यर्थः प्रतिक्षण-मन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो ना-स्ति-शब्दाभिधेयत्वमेवेत्याह वस्त्वस्ति किमिति

टी० "ये देवाद्वि"ति, देवादिषु वस्तुषु आत्मतयाऽभिमतेषु प्रथमव-स्तु-शब्दो जीवपर्यन्तदेहपर एवेत्यभिप्रायः, संसृष्टाकारे ह्यात्माभिमानः तद्भोगार्था इति पूर्वोक्तस्य पदस्य व्याख्येयपदमुदाहरति "भोग्यभूता" इति, भोग्यभूता इत्यनेन वस्तुभेदा इति पदस्याविदंशमात्रपरत्वमुक्तं न तु वस्तुभूत इत्युक्तत्वात् पूर्वश्लोकोक्तभेदा एवात्र विवक्षिता इत्याह "देवमनुष्ये"ति, कारणाभावात्कार्याभावो हि व्यतिरेकः, तं स्पष्टयति "मूलभूते"ति, परमप्रकृतार्थस्य फलितत्वमाह "इत्यचिद्वस्तुन" इति पूर्वश्लोकफलितार्थकथने आत्मनोऽस्ति-शब्दवाच्यत्वे हेतुरनुक्तः, अत्र तु तस्य फलितत्वमाह "इतरस्ये"ति, जगदुपलब्धिप्रकारेणाऽपि वस्तुभेदानां परिणामित्वमुपपाद्यते श्लोकद्वयेन तत्र प्रथमस्य वाक्यार्थमाह "प्रतिक्ष-ण"मिति, श्लोकस्य नास्ति-शब्दाभिधेयतापरत्वं यदस्ति यन्नास्तीत्यु-पक्रमादवगतम् अस्मिन्नपि श्लोके प्रयोजकशिक्षा वस्त्वस्ति किमित्यर्थयो-जनौपयिकतयात्राभिधेयं यदस्ति यन्नास्तीत्युपक्रमवशात्सिद्धमर्थमाह—

मू० अस्ति-शब्दाभिधेयो ह्यादिमध्यान्तहीनस्सततैकरूपपदार्थस्तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् अचिद्वस्तु किंचित् क्वचिदपि तथाभूतं न दृष्टचरं, ततः किमित्यत्राह "यच्चान्यथात्व"मिति, यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसन्धानमस्ति

टी० "अस्ति-शब्दे"ति, सततैकरूपतया अस्ति-शब्दवाच्यत्वे सति हि पूर्वार्द्धोक्तस्य तदभावस्य नास्ति-शब्दाभिधेयताहेतुत्वसिद्धिः पूर्वार्धं व्याचष्टे "अचिद्वस्त्वि"ति, किमनेन नास्ति-शब्दाभिधेयत्वस्ये? ति शङ्कायाम् । उत्तरार्धमवतारयति "ततः किमित्युक्ताहे"ति, यातीति वर्तमाननिर्देशस्याभिप्रायमाह "प्रतिक्षण"मिति, भूयो न तत्तथेत्यस्यार्थमाह "तदि"ति, उत्तरोत्तरावस्थाप्राप्त्येति भूयः-शब्दार्थः न तत्तथेत्यस्यार्थमाह "पूर्वावस्थां जहाती"ति, तत्रेत्यस्यार्थमाह "पूर्वावस्थस्योत्तरावस्थाया"मिति, कुतस्तत्त्वमित्यस्यार्थमाह "न प्रतिसंधान"मिति, तत्त्वं-तस्य भावः, तदिदमिति प्रतिसन्धानानर्हत्वं फलितमित्यर्थः । ननु तत्त्वं कुतः पूर्वावस्थत्वं कुत इत्युक्ते कथं प्रतिसन्धाननिषेधः? उच्यते कुतः-शब्दः प्रमाणप्रतिक्षेपपरः पर्वतोऽग्निमानित्युक्ते कुत इति प्रमाणाकाङ्क्षा हि द्योत्यते अतः प्रतिक्षेपपरः कुतः-शब्दोऽपि प्रमाणप्रतिक्षेपकः कुतः प्रमाणादित्यर्थः पूर्वावस्थभूयस्तथात्वे प्रमाणं च प्रत्यभिज्ञा अतः प्रमाणे प्रतिक्षिप्ते प्रतिसन्धानं निषिद्धं भवतीति भावः । अन्यथा न तत्तथेत्यनेन पौनरुक्त्यं स्यात्, हि-शब्देन फलितमर्थमाह-

मू० अतः सर्वदा तस्य नास्ति-शब्दाभिधेयत्वमेव तथा ह्युपलभ्यत इत्याह "महीघटत्व"मिति स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु-प्रतिक्षणमन्यथाभूतमालक्ष्यते अनुभूयते इत्यर्थः । एवं

सति किमप्यचिद्वस्त्वस्ति—शब्दार्हमादिमध्यान्तहीनं सततैकरूपमाल्र्चितमस्ति किम्?

टी० "अत" इति, नास्ति-शब्दवाच्यत्वे प्रयोजकाशिवा कृता शिक्षितमर्थम् उदाहरणेन दर्शयत्यनन्तरश्लोक इत्यभिप्रायेणाह "तथा ही"ति, महीघटत्वमिति श्लोकं व्याचष्टे स्वकर्मणेत्यादिना, महीघटत्वमित्यत्र यातीति पूर्वश्लोकादनुषङ्गः कर्मणा आत्मनिश्चयविरोधित्वं सद्वाकमित्याह "देवमनुष्यादिभावेने"ति, देवादिदेहसंसर्गेणेत्यर्थः, इत्थं-प्रतिबद्धम् अस्थिरे भोग्यत्वबुद्धिः स्थिरतरसुखरूपात्मनिश्चयस्त्वेमित्यमिति भावः। यद्वा आत्मज्ञानरहितैरप्यचिद्वस्तुनोऽस्थिरत्वमालक्ष्यत इत्याह "तथा ही"ति, आलक्ष्यत इति, चानुपज्ञाने प्रयोगप्राचुर्यात्तद्व्यावृत्त्यर्थमनुभूयत इत्युक्तं श्लोकव्याख्यानसमाप्तिं द्योतयति "इत्यर्थ" इति, ब्रूहीत्यादेरर्थमाह "एवं सती"ति, त्यनेनोत्रेति पदं व्याख्यातम् अचिद्वस्त्विति पदेन श्लोकस्थवस्तुशब्दो व्याख्यातः। अस्ति-शब्दार्हमित्यादिविशेषणं सामर्थ्यसिद्धतयोक्तम्। अथवा श्लोकद्वयाभिप्रायमाह "एवं सती"ति, न तु वस्तुभूत इति पुराणग्रन्थे किमप्यचिद्वस्तु अचिद्वस्तु किंचिदिति भाष्ये च अचिद्विषयवस्तु शब्दप्रयोगात्तद्वस्तु नृप तत्त्व किमिति ग्रन्थस्थवस्तु-शब्दतुल्यत्वं न शङ्कनीयम् अस्ति किमित्यनेन श्लोकस्थस्यास्तिशब्दस्य भवत्यर्थत्वमुक्तम् अत एव यदस्तीत्यस्ति-शब्दवचात्मस्वरूपपरत्वं शङ्कनीयं, फलितमाह—

मू० न ह्यस्तीत्यभिप्रायः यस्मादेवं तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित् क्वचित्केवलास्ति-शब्द—

टी० "न ही"ति, अस्ति किं न ह्यस्तीति भाष्यस्वारस्येन श्लोकद्वयोपक्रमगतस्यास्ति किमिति वाक्यस्य प्रत्यभिज्ञातस्य भवत्यर्थतया व्याख्यातत्वं प्रतीयते। यद्वा अस्ति-शब्दाभिधेय इत्यनेन वस्त्वस्ति किमित्यत्रास्ति-शब्दो व्याख्यातः, यदस्ति तस्माच विज्ञानमृतेऽस्तीत्यनेनैकरूप्यात्, एवं वस्तुअस्ति किं महीघटत्वमिति श्लोकद्वयस्य प्रत्येकमुक्तो वाक्यार्थः पूर्वपक्षयोजनायामुपजीव्यः। उत्तरश्लोकस्य प्रथमार्धं व्याचष्टे "यस्मा"दिति

यस्मादेवं तस्मादिति, परिणामित्वादेव न तु ज्ञानबाध्यत्वादित्यर्थः अचिद्वस्तु-शब्देन वस्तुजात-शब्दार्थ उक्तः, जात-शब्दशिरस्को वस्तुशब्दो न नित्यवाचीति भावः। "केवलास्ति-शब्दवाच्य" मिति, एतच्श्लोकस्यास्ति-शब्दो न भवत्यर्थः ज्ञानव्यतिरिक्तस्य तदेतदक्षयं नित्यम् इत्यादिना नित्यत्वेनोक्तस्य निषेध्यत्वायोगात् यदस्तीत्युपक्रान्तस्योपसंहारौचित्याच्चेति भावः॥

सू० वाच्यं न भवतीत्याह तस्मान्न विज्ञानमृते इति, आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसंधानम्

टी० प्रागभावप्रध्वंसाभाववतोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमवच्छिन्नास्तिशब्दवाच्यत्वं चेति तद्व्यावृत्त्यर्थं केवल-शब्दः, एवमात्मव्यतिरिक्तवस्तुनो नास्तिशब्दाभिधेयत्वमुपसंहृतं विज्ञानमित्यादि व्याचष्टे "आत्मा त्वि"ति, तु-शब्दोऽचिद्वैषम्यपरः सर्वत्र-सर्वशरीरेषु, एक—शब्दं व्याचष्टे "ज्ञानैकाकारतये"ति, एको व्रीहिस्सुनिष्पन्नस्सुपुष्टं कुरुते प्रजा इतिवदयमेक-शब्द आकारैक्यपरः स चाकारो विज्ञान-शब्दोक्तं ज्ञानत्वमित्यभिप्रायेणोक्तं ज्ञानैकाकारतयेति भावप्रधानो निर्देशः, ज्ञानत्वैकाकारतयेत्यर्थः स्वरूपतोधर्मतश्चाविशेषेण ज्ञानत्वं सद्वारकमद्वारकं चाकारो हि भवति ज्ञानैकाकारतयेत्यत्र एकशब्देन संकोचविकासदुःखरूपत्वादिव्युदासश्च देवादिभेदप्रत्यनीकस्वरूपोऽपीति एकरूपत्वाद्भेदप्रत्यनीकत्वं, निजकर्मादिपदं व्याचष्टे "देवादी"ति, भेद-शब्दार्थमाह "विविधे"ति, बुद्धि-शब्देन चित्तशब्दार्थ उक्तः, बुद्धेर्भेद आत्मन्यारोप्यमाणदेवत्वाद्याकाररूपविषयभेदात् बहुधा देवत्वादि बहुप्रकारविशिष्टतयाऽभ्युपेतमित्यर्थः। बहुधा-शब्देन एकशब्दस्याकारैक्यपरत्वं स्पष्टं, फलितमर्थमाह—

मू० नात्मस्वरूपप्रयुक्तमित्यत्राह "विज्ञानमेक"मिति, आत्मस्वरूपं तु कर्मरहितं तत एव मलरूपप्रकृतिस्पर्शरहितम् ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणासङ्गि उपचयापचयानर्हतया एकं, तत एव सदैकरूपम् ॥

टी० "नात्मस्वरूपप्रयुक्त"मिति, औपाधिकमित्यर्थः उपाधिविमोक्षे कीदृशं स्वरूपमित्यत्र अनन्तरश्लोकं व्याचष्टे "आत्मे"ति, विशुद्धपदं व्याचष्टे "कर्मरहित"मिति, विमलपदं व्याचष्टे "तत एवे"ति, विमलपदव्याख्यानमिति स्पष्टीकर्तुम् मलरूपशब्दः मलरूपप्रकृतिस्पर्शरहितमित्यनेन सर्वकर्मक्षये ज्ञानमपास्तदोषमित्यस्यार्थोऽवगतः कर्मक्षयवाचिपदानन्तरपदस्य शरीरसंबन्धरहितपरत्वेन व्याख्यानात् तथा च श्रुतिः "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृत आत्मा ब्रह्मलोकमभिसंभवानी"ति अत्र हि पापं विधूयेत्युक्त्वा धूत्वा शरीरमित्युक्तम् । उपरितनपदानि व्याचष्टे "ततश्चे"ति, ततश्च तत एवेत्यर्थः, हेतोर्नैरपेक्ष्यसूचकश्च-शब्दः निरस्ताशेषलोभादिसङ्गमित्यर्थः । एकमिति पदं व्याचष्टे "उपचयापचयानर्हतयैक"मिति, उपचयापचयौ-वृद्धिक्षयौ तदर्हत्वं सावयवत्वं सावयवत्वाभावादेवैकशब्दवाच्यं निरवयवत्वमेकत्वमित्यर्थः तत एव सदैकरूपमिति निरवयवत्वात्सावयवत्वप्रयुक्तवृद्धिक्षयरहितमित्यर्थः । सामानाधिकरण्यं व्याचष्टे—

मू० तच्च वासुदेवशरीरमिति तदात्मकम् अतदात्मकस्य कस्यचिदप्यभावादित्याह "ज्ञानं विशुद्ध"मिति चिदंशस्सदैकरूपतया सर्वदाऽस्ति-शब्दवाच्यः, अचिदंशस्तु प्रतिक्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्ति-शब्दाभिधेयः, एवंरूपचिदचिदात्मकं जगद्वासुदेवशरीरम् तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह "सद्भाव एवमि"ति,

टी० "तच्चे"ति, यदम्बुवैष्णवः कायः अशेषमूर्तिरित्युक्तत्वात् अयमेवार्थः न यतोऽन्यदस्तीत्येन व्याचष्टे "अतदि"ति, यतः–यस्माद्वासुदेवादन्यत्स्वपर्यवसितं वस्तु नास्तीत्यर्थः । यद्वा वासुदेवादिति पदमध्याहृत्य योजना वासुदेवादन्यन्नास्तीति यतः तत इत्यर्थः । अस्यां योजनायां तच्छब्दः प्रसिद्धपरामर्शी ततोऽपि पूर्वयोजना साधीयसी तद्वृत्तस्य यद्वृत्तप्रतिनिर्देशरूपत्वस्वारस्यात् पञ्चम्यन्ताध्याहारानपेक्षत्वाच्च ज्ञानस्वरूपो यदा त्विति श्लोकौ चिदचित्साधारणौ वस्त्वित्यादिसार्धश्लोकद्वयमचित्साधारणं विज्ञानमित्यादिसार्धश्लोकश्चित्साधारण इति विभागः न परमतमुक्तं तत्त्वमेवोक्तमित्यभिप्रायेण सद्भाव इत्याद्यर्थमुक्तं, तत्र यथाशब्दार्थमाह "चिदंश" इति, यथा येन प्रकारेण परिणामित्वापरिणामित्वरूपेण न तु ज्ञानबाध्यत्वाबाध्यत्वरूपेणेत्यर्थः "एवंरूपे"ति, शरीरशरीरिभावरूपेण येन प्रकारेण भगवदात्मकत्वं न तु स्वरूपैक्येनेत्यर्थः श्लोके यथाशब्दप्रतियोग्येवंशब्दः सत्यं ज्ञानमसत्यमन्यच्च यथावस्थितम् एवं सद्भाव उक्त इत्यन्वयोऽभिप्रेतः, अतस्सत्यासत्यशब्दावाच्यत्वनिर्वाहकाममपरिणामित्वापरिणामित्वे भगवदात्मकत्वं च यथाशब्दविवक्षितं भवति

भू० अत्र सत्यमसत्यमिति यदस्ति यन्नास्तीति प्रक्रान्तस्योपसंहारः एवं ज्ञानैकाकारतया सदसच्छ[1]ब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहार्यभेदं यद्वर्तते तत्र हेतुः कर्मेत्युक्तमित्याह "एतत्तु यदि"ति तदेव विवृणोति "यज्ञः पशु"रिति

टी० अन्यदुपक्रान्तमन्यदुपसंहृतं भवति अस्तिनास्ति–शब्देन उपक्रम्य सत्यासत्य–शब्देन उपसंहारादित्यत्राह "अत्रे"ति, उपक्रमोपसंहारयोः शब्दान्तरनिर्देशस्यायं भावः । अन्येष्वपि शब्देषु क्वचिदेवंश्रुतेषु तेषामपि प्रवृत्तिनिमित्तमिदमेवेति । उत्तरार्द्धस्यार्थमाह "एत"दिति, प्रत्यस्त-

१ सममशब्दगोचरस्वरूपभेदमिति पाठः ।

मितभेदम्—अगोचरं वचसामित्यनयोरर्थमभिप्रेत्याह "ज्ञानैकाकारतया सम मशब्दगोचरस्वरूपभेद" मिति. एवकारेण विरोधस्सूचितः भुवनाश्रितत्वस्य घटकं पदमाह "अचिन्मिश्रमि" ति, भुवनाश्रितम्—अण्डान्तर्गतं, भोगस्थानमतमित्यर्थः संव्यवहारशब्दं व्याचष्टे "सम्यग्व्यवहारार्हभेद" मिति, सम्यक्छब्दः स्पष्टत्वपरः। तत्कर्म किमित्यपेक्षायाम् उत्तरश्लोकस्य तद्विवरणपरत्वमाह "तदेव विवृणोती" ति, स्वर्गमयश्च कामः स्वर्गविषयेच्छेत्यर्थः फलस्य वक्ष्यमाणत्वात् देवतायाः फलस्य च यष्टव्यत्वेन साध्यत्वेन च कर्मान्तर्भावः। इत्यादिशब्देन दानहोमादिकं च पापं चोक्तं भवति भूरादिशब्देन पापफलमप्युक्तं भवति पश्वादिपरिकरयुक्तो यत्र एकं कर्म एवंविधयज्ञात्मकं दानहोमाद्यात्मकं च कर्म तत्र हेतुराश्रितमार्गदृष्टम् ।

मू० जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह "यच्चैत" दिति अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे चानुगुणं किंचिदपि पदं न दृश्यते अस्तिनास्ति—शब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कार्यत्वेन तदात्मकं ज्ञानैकाकारस्यात्मनो देवादिविविधाकारानुभवे अचित्परिणामे च हेतुः वस्तुयाथात्म्यज्ञानविरोधिजेयज्ञानां कर्मेति प्रतिपादनात् ॥

टी० तैस्तैराश्रिता मार्गा वर्णाश्रमाः तेषु दृष्टमित्यर्थः अनन्तरश्लोकार्थमाह "जगदि" ति, कर्मवश्यस्सर्वत्र व्रजति हि । यद्वा कर्मवश्यो हि सर्वत्र व्रजति तस्मादेवं कुर्यादित्यर्थः। निगलित एव हि सर्वत्र कारागृहे वर्तते अतस्तन्मोचनाय यतत इति भावः। ध्रुवम्—अचलं सदैकरूपं स्वरूपतो रूपतोगुणतश्च एकरूपमित्यर्थः। यद्वा स्वरूपतो गुणतो रूपतश्च एकरूपमित्यर्थः। तस्माच्च तदेवमिति पूर्वेणान्वयः। एवं श्लोकानां स्वोक्तार्थानुगुण्यमुपपाद्य परोक्तार्थाननुगुणत्वमुपपादयति अत्रेत्यादिना, किंचिदपि

पदं न दृश्यत इति न वाच्यं नास्त्यादिशब्दाः सामानाधिकरण्यमज्ञान-वाचिपदजातं चानुगुणमिति चेत् तत्राह "अस्ती"ति, परमस्येत्यादि परमपरेशादिशब्दानां भवत्पक्षे मुख्यार्थासिद्धिरिति भावः । हेत्वन्तरं चाह "अस्तिनास्तिसत्यामन्य"ति, प्रथमश्च–शब्दस्त्वर्थः । स्वोक्तयोजनाया अनुगुणशब्दस्य परपक्षाननुगुणत्वरूपं–

मू० अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्व-भिधानासामर्थ्याच्च नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ, अतश्चैताभ्यामसत्त्वं हि प्रतीयते नानिर्वचनीयत्वम् अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दा न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ, अपि तु विनाशित्वपरौ वस्त्वस्ति किम् महीघटत्वमित्यत्र विनाशित्वमेव हि उपपादितम् न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा एकेनाकारेणैकस्मिन्काले ऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् ॥

टी० वैषम्यमस्तीति भावः । अस्ति सत्यशब्दौ दृष्टान्तार्थौ यथास्तिसत्यशब्दौ न सद्विलक्षणपरौ तथा नास्त्यसत्य–शब्दावपि नासद्विलक्षणपरौ तथा नास्त्यसत्यशब्दावपि नासद्विलक्षणपरावित्यर्थः । कथमनिर्वचनीयवस्त्वाभिधानासामर्थ्यमित्यत्राह "नास्ती"ति, अर्थद्वारको हि विरोधः । ततः किमित्यत्राह "ततश्चे"ति, यद्वा अनिर्वचनीयवस्त्वभिधानासामर्थ्यादिति व्युत्पत्त्यभाव उक्तः, अत्र तु परस्परविरुद्धार्थत्वमत्र हेत्वन्तरयोक्तं चः समुच्चये तथाऽपि सत्त्वाभावात्तुच्छत्वं मिथ्यात्वं चोक्तं भवतीति चेत्तत्राह "अत्रे"ति, कथं विनाशित्वपरावित्यत्राह "वस्त्वि"ति, विनाशित्वमेव मिथ्यात्वमिति शङ्कायां विनाशित्वस्वरूपं शोधयति "एकेने"ति,एकेनाकारेण कालान्तरेऽनुभूतस्य कालान्तरे आकारान्तरेणोपलब्धिरस्तु ततः कथं

विनाशित्वं तुच्छत्वं मिथ्यात्वं चोक्तं भवतीति चेत्तत्राह "अत्रे"ति, कथं विनाशित्वं तुच्छत्वव्यावृत्तमिति शङ्कायां तुच्छत्वादिस्वरूपं शोधयति-

सू० तुच्छत्वं हि प्रमाणसम्बन्धानर्हत्वं, बाधोऽपि यद्देशकालादिसंबन्धितया यदस्तीत्युपलब्धं तस्य तद्देशकालादिसंबन्धितया नास्तीत्युपलब्धिः, न तु कालान्तरेऽनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः कालभेदेन विरोधाभावात्, अतो न मिथ्यात्वम् ।

टी० तुच्छत्वं हीत्यादिना, "परिणामादिने"ति, परिणाम-शब्दः परिणामसामान्यपरः तद्विशेषपरश्च यथा वादशब्दस्सर्वकथासाधारणोवीतरागकथामात्रपरश्च तद्वत् अत्रायं परिणामशब्दो वर्धमानावस्थावाची परिणामर्द्धिजन्मभिरिति प्रयोगात् "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै परिणामादिसंभूतमिति • वक्ष्यमाणवचनकटाक्षेणैवमुक्तं, परिणाम-शब्दस्य विकारमात्रपरत्वे आदि-शब्दः प्रदेशान्तरगमनपरः । कालान्तरानुभूतस्य कालान्तरे नास्तीत्युपलब्धिः कथं न बाध इत्यत्राह "कालभेदेने"ति, विरोधे हि बाधः, बाध्यत्वं हि मिथ्यात्वमित्यभिप्रायेणाह "अत"इति, परिणामित्वापरिणामित्वयोरर्थयोर्न हि नास्त्यसत्यादिशब्दाः पारिभाषिकाः तत्कथं तदभिधानप्रकारः परिणामास्पदस्यापि वस्तुनो नित्यत्वात् नास्ति-शब्दाभिधेयत्वं चानुपपन्नमित्यत्राह-

सू० एतदुक्तं भवति ज्ञानस्वरूपमात्मवस्त्वादिमध्यपर्यन्तरहितं सतनैकरूपमिति अत एव सदाक्ति-शब्दवाच्यम्, अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयमिति, यथाक्रम "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूतां तद्वस्तु नृप? तच्च किम् । अनाशी परमार्थश्च

प्राज्ञैरभ्युपगम्यते । तत्तु नास्ति न सन्देहो नाग्निद्रव्योपपादितमिति ॥

टी० "एतदुक्तं भवती"ति, सदैकरूपत्वमस्ति—शब्दप्रवृत्तिनिमित्तं, विनाशगर्भत्वं नास्ति—शब्दप्रवृत्तिनिमित्तमित्यर्थः, घटावस्थायां पिण्डो नास्ति कपालावस्थायां घटो नास्ति चूर्णावस्थायां न कपालसत्तेति सदा नाशगर्भत्वम्, उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः, तदवस्थस्य सैवोत्पत्तिः तस्मान्नास्ति—शब्दाभिधेयत्वम् अचिद्वस्तुनः, चिद्वस्तुनस्तु अवस्थान्तरापत्त्याऽवस्थाप्रहाणाभावेनैकरूपत्वाच्च नाशगर्भत्वमतस्तदस्ति—शब्दवाच्यमेव, यत्सदाऽस्ति च तदस्ति—शब्दवाच्यं "सिद्धे शब्दार्थसम्बन्धे" इत्यत्र सिद्ध—शब्दवदवधारणगर्भोऽयं शब्दः तत्र हि सिद्धमेवेति व्याख्यातम् अब्भक्षो वायुभक्ष इत्यादि दृष्टान्तीकृत्य तथा अत्रापीत्यर्थः अस्तिनास्त्यादिशब्दानां प्रवृत्तिनिमित्तमिदमेवेत्यस्मिन्नर्थे प्रमाणमाह "यथोक्तमि"ति असदसत्यसत्सत्यादिशब्दानां मिथ्यात्वामिथ्यात्वयोः प्रसिद्धिस्वारस्यमिति प्राचुर्यमस्तीति शङ्कायां मिथ्यागर्भितत्वमपि दर्शयति—

सू० देशकालधर्मविशेषापेक्षयाऽस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इति ह्यपरमार्थ इत्युक्तम् आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम्, आतुश्च मैत्रेयस्य "विष्णुराधारं यथा चैतत्त्रैलोक्यं समवस्थितम् । परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः" इत्याद्यनुभाषणाच्च, ज्योतींषि विष्णुरित्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनं, चिदचिद्वस्तुनोश्चास्तिनास्ति—शब्दप्रयोगनिबन्धनं, ज्ञानस्याकर्मनिमित्तस्वाभाविक स्वरूपत्वेन स्वरूपप्राधान्यम् ॥

टी० "देशे"ति, "कर्मविशेषापेते"ति, पालनरञ्जनादिसद्भावासद्भावाभ्यां राजत्वपितृत्वादिरूपेणास्तित्वं नास्ति त्वं च कर्मापेक्षम् औपाधिकास्तित्वयोगिनि वस्तुनि स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वमपरमार्थमित्यर्थः अपरमार्थत्वगर्भास्त्यर्थापेतत्वादचितो नास्त्यसत्यादिशब्दवाच्यत्वमित्युक्तम्, आत्मनः स्वाभाविकास्तित्वयोगात् तत्र तद्बुद्धिविषयत्वं परमार्थ इत्याह "आत्मन एवे"ति, पदशो दशश्लोक्यामुक्तमर्थं श्रोतुरनुवादप्रकारेण द्रढयति श्रोतुश्चे"ति, प्रधानतः द्वेक्रयोरितिवद्भावप्रधाननिर्देशः प्राधान्येनेत्यर्थः, प्राधान्यमुत्कर्षः अनुभाषणश्लोकपूर्वार्द्धफलितमर्थमाह "ज्योतींषी"ति, तदेकधार्यद्रव्यत्वं हि शरीरलक्षणम् अतो विश्वाधारमित्यनेनात्मशरीरभावस्सिद्धः । उत्तरार्धफलितमर्थमाह "चिदचिदि"ति, ज्ञानप्राधान्यकण्ठोक्त्या अचिद्वस्तुनोऽप्राधान्यस्यार्थसिद्धत्वादाह—

सू० अचिद्वस्तुनश्च तत्तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते, यदुक्तं निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति, तदसत् "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्" "तमेवं विद्वानमृत इह भवति" "नान्यः पन्था अयनाय विद्यते" "सर्वे निमेषा जज्ञिरे" विद्युतः पुरुषादधि "न तस्येशे कश्चन तस्य नाम महद्यशः"

टी० "अचिद्वस्तुनश्चे"ति, प्राधान्याप्राधान्ये—उत्कर्षापकर्षौ तौ चापरिणामित्वपरिणामित्वलक्षणौ न मिथ्यात्वामिथ्यात्वलक्षणौ धर्मिणि सति हि प्राधान्याप्राधान्ये प्रतीतिमात्रसिद्धं हि मिथ्या अतो न तत्राप्राधान्यशब्दस्वरस इत्यभिप्रायः । अथ निर्विशेषब्रह्मात्मैक्यज्ञानस्य निवर्तकत्वपरत्वेन परोक्तश्रुतीनाम् अतदर्थत्वं वक्तुं परोक्तमनुवदति "यदुक्तमि"ति, परिहरति "तदसदि"ति, तत्र ज्ञानस्य निर्विशेषवस्तुविषयत्वं तेनात्मैक्यविषयत्वं च परिहरिष्यन् प्रथमं निर्विशेषवस्तुविषयत्वं व्युदसितुमुपादत्ते "वेदाहमे-

तमि''ति, अनेन विधर्हादिविशिष्टविषयज्ञानमेवोपायः नान्य इत्युक्तम्, एत-त्समानार्थत्वादाह "सर्वे निमेषा" इति, तत्र हि अद्भुः संभूतो हिरण्यगर्भ इत्यष्टाविति प्रतीकोपादानं कृतम् अनेन विद्युच्छब्दश्च व्याख्यातो भवति विद्युतः-विद्युद्वर्णादित्यर्थः आदित्यवर्णमित्यनेनैकार्थ्यात् न तस्येशे क इत्यनेन उपायभूतं ज्ञानान्तरं नास्तीति फलितम् । अधिकज्ञेयान्तराभावात् उक्ताकारविशिष्टपुरुषवेदनस्योपायत्वं दर्शयति–

सू० "य एनं विदुरमृतास्ते भवन्ती''त्याद्यनेकवाक्यविरोधात् ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषवि-षयज्ञानादेव मोक्षं वदन्ति, शोधकवाक्यान्यपि सविशेष मेव ब्रह्म प्रतिपादयन्तीत्युक्तम्, तत्त्वमस्यादिवाक्येषु सामा-नाधिकरण्यं न निर्विशेषवस्त्वैक्यपरं

टी० "य एनं विदु''रिति, एषामन्येषामित्यादि–शब्दगृहीतानां वाक्या-नाम् उपादानम् अनेकवाक्यविरोधप्रदर्शनाय । ननु सदेवैकमेवेत्यवधारणस-हितकारणवाक्येषु निर्विशेषस्य प्रतिपन्नत्वात्तज्ज्ञानमेव साक्षान्मोक्षोपाय इति सगुणज्ञानस्योपायत्वं तद् व्यवधानेन स्यात् । यद्वा सगुणज्ञानोपायत्वपरवा-क्येऽपि न सगुणत्वे तात्पर्यं वस्तुमात्रमेव लक्ष्यत इति चेत् तत्राह "ब्रह्म-ण'' इति, सद्विद्यादिष्वपि सगुणविषयत्वोपपादनात्, यथावस्थितस्वरूप-विषयज्ञानस्यैव मोक्षोपायत्वात् तान्यपि सविशेषज्ञानोपायत्वपराणीत्यर्थः तर्हि शोधकवाक्यैर्विरोध इत्यत्राह "शोधके''ति, एवं ज्ञानस्य निर्विशेषवस्तु-विषयत्वं तद्विरुद्धवचनोदाहरणेन प्रतिक्षिप्तम् । अथ तत्त्वमस्यादिसामानाधि-करण्यान्यथानुपपत्त्या निर्विशेषज्ञानमेवोपाय इति शङ्कायां तस्य जीवपरै-क्यविषयत्वं व्युदस्यति "तत्त्वमस्यादी''ति, शोधकवाक्येषु सामानाधिकर-ण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरं तत्त्वमस्यादिषु जीवब्रह्मणोस्सामाना-धिकरण्यमन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्, अचिद्ब्रह्मणोस्तु सर्वं खल्विदं ब्रह्मेत्यादावतात्त्विकरूपारोपणेन सामानाधिकरण्यं ज्योतींषि विष्णुरि-

त्वाद्वा बाधार्थमिति चतुर्धा हि परैस्सामानाधिकरण्यं तत्र तत्राभ्युपेतं तत्र तत्त्वमस्यादिवाक्येऽन्वयमुखेन वस्तुमात्रपरत्वं गत्यभावे बाधार्थत्वं चाशङ्क्य निराक्रियते तत्र प्रथमं वस्त्वैक्यपरत्वं दूषयितुमाह "न निर्विशेषवस्त्वैक्यपर"मिति,—

मू० तत्त्वमस्यादयोः सविशेषब्रह्माभिधायित्वात्, तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशतीति तु प्रतिपादयति "तदैक्षत बहु स्या"मित्यादिषु तस्यैव प्रकृतत्वात् ॥

टी० कुत इत्यत्राह "तत्त्व"मिति, तच्च कथमित्यत्राह "तत्पदं ही"ति, हिर्हेतौ, सर्वज्ञत्वादिगुणकप्रतिपादनं कथमित्यत्राह "तदैक्षते"ति तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वं व्युत्पत्तिसिद्धं यथा शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौस्तामानयेति । ननु गौस्तिष्ठति तामानयेत्यादावानयनादिक्रियानर्हस्थित्यादिविशेषणविधुरवस्तुपरामर्शित्वं दृश्यते तच्च मुख्यं, नैवम् आनयनसमकालान्वयायोग्येनापि स्थित्यादिविशेषणेन पूर्वकालवैशिष्ट्यस्य विवक्षितत्वात्, अन्यथा धावतोऽपि गोरपिषड्स्यानयनादिप्रसङ्गः, विशेषणं विशेष्ये वस्तुनि यथान्वयार्हं तथाऽन्वितस्य तस्यापरित्यागो हि विवक्षितस्त्वं प्रकृतविशेषणेष्वेकस्यापि परित्यागे प्रकृतत्वमेव हीयेत शुक्ला शोभनाक्षी मदीया पूर्णशृङ्गा घटोध्नी गौस्तामानयेत्युक्ते शौक्ल्येतरसमस्तविशेषणान्वितव्यक्त्यानयनेऽपि प्रकृतव्यक्तेरानीतत्वाभावात् अतस्सविशेषे प्रकृते निर्विशेषस्य प्रकृतत्वं दूरोत्सारितं, न च प्रकृतसर्वविशेषणपरित्यागेऽपि धर्म्यैक्येन प्रकृतत्वसिद्धिः सर्वाकारप्रहाणे प्रतिसंधानानर्हत्वात् न ह्यपवरके घटोऽस्ति तमानयेत्युक्ते घटत्वाविवक्षायां मृन्मात्रस्य प्रकृतत्वसिद्धिः कथमेकाकारपरित्या—

मू० तत्समानाधिकरणं त्वम्पदं चाचिद्विशिष्टजीवशरीरकं परं ब्रह्म प्रतिपादयति प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य ॥

टी० ऽप्यसम्भवत्प्रकृतत्वं सर्वाकारपरित्यागे सम्भवतीत्यत्र अङ्गुलीयक-त्वग्रहाणेऽपि कनकं प्रतिसंधीयत इति चेत् सत्यं, प्रत्यक्षेण तच्छब्दस्तु प्रकृताकारग्रहाणे प्रतिसन्धानमेव जनयितुं न शक्नोति, अत एव हि यद-ङ्गुलीयकं तदानयेत्युक्ते कनकमात्रं नानीयते अतः प्रकृतसर्वाकारग्रहाणे प्रति-सन्धानानर्हस्य वस्तुनः प्रकृतत्वमेव नास्तीति तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यात् तत्पदोपस्थापितसार्वज्ञ्यादीनां त्वम्पदोपस्थापिताज्ञत्वा-दीनां च विरोधान्निर्विशेषपरत्वमिति चेत् तत्राह "तत्समानाधिकरण"-मिति, घटस्य शुक्ल इत्यादिव्यधिकरणवाक्येषु धर्मवाचिपदस्य धर्मिपर्यन्त-त्वाभावात् तद्व्यावृत्त्यर्थं तत्समानाधिकरणमित्युक्तम् । अचिद्विशिष्टजीव-शरीरकमिति अज्ञत्वादिगुणानां सर्वज्ञत्वादिगुणके परमात्मनि विरोधस्स-द्वारकतया परिहृत इत्यर्थः । त्वम्पदप्रवृत्तिनिमित्तसम्बोधनीयार्थ-त्वरूपाभिमुख्यविशेषप्रयोजकोपलक्षणाभिप्रायेणाचिद्विशिष्टजीवेत्युक्तं, स-मानाधिकरणत्वे सति कथं त्वम्पदं जीवविशिष्टब्रह्मपरमित्यत्राह–

**मू० प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासम्भवेन सामाना-धिकरण्यमेव परित्यक्तं स्यात् द्वयोः पदयोर्लक्षणा च, सोऽयं देवदत्त इत्यत्रापि न लक्षणा भूतवर्तमानकाल-सम्बन्धितयैक्यप्रतीत्यविरोधात्, देशभेदविरोधस्त्व काल-भेदेन परिहृतः ॥**

टी० "प्रकारद्वये"ति, प्रकारद्वयावस्थितं–प्रकारद्वयविशिष्टं प्रकृत-तत्त्वम्पदप्रवृत्तिनिमित्तपरः प्रकारद्वयशब्दो न्यूनत्वनिवर्तकः न तु प्रकार-त्रित्वादिव्यवच्छेदकः, तदुपपादयति "प्रकारद्वयपरित्याग" इति, दूषणान्त-रमाह "द्वयोरि"ति, अविरोधेन मुख्यतया निर्वाहे सम्भवति एकस्यापि पदस्य लक्षणा न युक्ता विरोधे सत्यपि एकपदलक्षणयैवाविरोधस्सिध्यतीति पदद्वयलक्षणाऽनुपपन्नेत्यर्थः । ननु पदद्वयलक्षणा न दूषणं सोऽयं देवदत्त इत्यादिषु दृष्टत्वात् तत्र हि देशकालविशिष्टाकारे देशकालान्तरान्वयवि-

रोधात्तावत्क्षणिकमेव पदद्वयं तत्राह "सोऽयमि"ति, किमेकस्य देशद्वयसम्बन्धे विरोध ? उत कालद्वयसम्बन्ध ? इति विकल्पमभिप्रेत्याह "भूते"ति, न विशिष्टाकारे विशेषणान्तरान्वयः अपि तु विशेष्यमात्रे अतः कालद्वयसम्बन्धो न विरुद्धः, यदि विरुद्धः तर्हि बौद्धोक्तं क्षणिकत्वमापद्येत अनेककालसाध्यधर्मविधानं फलप्राप्तिश्च नोपपद्येयातामिति भावः, देशभेदेति यद्यप्येकस्य देशद्वयसम्बन्धविरोधः तर्हि विष्णुक्रमणतीर्थस्नानादिविधिर्नोपपद्यते प्रत्यभिज्ञाविरोधश्चेति भावः । यौगपद्यं कथं सम्भवतीति चेत्

सू० तदैक्षत बहु स्यामित्युपक्रमविरोधश्च एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते ॥

टी० उच्यते न हि देशद्वयसम्बन्धस्य कालद्वयसम्बन्धस्य वा न युगपद्भावः तत्प्रतिपत्तेरेव हि यौगपद्यं प्रतिपत्तिस्तु देशद्वयकालसम्बन्धं क्रमभाविनमेव दर्शयति अतो न विरोधः अन्यथाऽतीतानागतविषयज्ञानेष्वतीतानागतविषययोर्वर्तमानत्वं ज्ञानस्यातीतानागतत्वं वा प्रसजेदिति दूषणान्तरमाह "तदैक्षते"ति, उपक्रमाधिकरणे ह्युपक्रमप्राबल्यमुक्तमिति भावः उपक्रमोपक्रमे ऐक्यस्य प्रतिपन्नत्वाच्चोपक्रमविरोधः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं हि तदैक्षत बहु स्यामिति वाक्यात् पूर्वमित्यत्राह "एकविज्ञानेने"ति, तत्र निमित्तत्वोपादानत्वतदनुगुणसार्वज्ञ्यसर्वशक्तित्वादिगुणसिद्धेरित्यर्थः विशिष्टमेव कारणं तदेव स्थूलावस्थकार्यमिति द्रव्यान्तरत्वाभावात्कारणज्ञानेन कार्यज्ञानमुपपद्यते मृषावादिनस्तु कारणज्ञाने कार्यज्ञानस्य विषयतयान्तर्भावोऽभिमतश्चेद्विरोधः सत्यविषयज्ञाने मिथ्यार्थस्य विषयत्वायोगात् मिथ्यात्वेनेत्यध्याहारश्च स्यात् अनन्तर्भावे त्वज्ञाते ज्ञातत्वव्यवहारो न मुख्यः स्यात् अतोऽस्मत्पक्ष एव प्रतिज्ञावाक्यं स्वरसं, श्रुत्यन्तरविरोधमाह—

सू० ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानं तत्कार्य्यानन्तापुरुषार्थाश्रयत्वं च

न सम्भवति, बाधार्थत्वे च सामानाधिकरण्यस्य तत्त्वम्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणाद्वयस्त एव दोषाः ॥

टी० "ज्ञानस्वरूपस्ये"ति, ज्ञानस्वरूपस्य सर्वज्ञस्येत्यनेन धर्मिधर्मभूतज्ञाने विवक्षिते सर्वज्ञस्याज्ञत्वं निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्यानन्तापुरुषार्थाश्रयत्वमिति विरोधः, ज्ञानस्वरूपस्येत्यनेन तिरोधानानुपपत्तिश्च सूचिता, इत्थं सामानाधिकरण्यस्य निर्विशेषवस्त्वैक्यपरत्वं दूषितम् । अथ बाधार्थत्वं दूष्यते "बाधार्थत्वे चे"ति, रज्जुः सर्प इत्येवंरूपं बाधार्थं सामानाधिकरण्यमेव नास्ति सामानाधिकरण्यस्यैकस्मिन्विशेष्ये प्रकारद्वयोपस्थापकतया बाधार्थत्वविरोधात् अतः पदद्वयमुख्यार्थत्वे ऽभिमते बाधार्थं सामानाधिकरण्यं न सिध्येत् सर्प-शब्देन नञर्थं लक्षयित्वा असर्पो रज्जुरिति निर्वाहं दृष्टान्तवाक्यस्याशङ्क्य दार्ष्टान्तिकवाक्यस्य ततोऽप्यधिकदूषणमाह "बाधार्थत्वे" चेति, त्वन्तत्पदयोरित्यत्र न क्रमविवक्षा तत्पदमधिष्ठानमात्रं लक्षयति त्वम्पदं जीवभावनिवृत्तिं लक्षयति, यद्वा त्वम्पदेनाधिष्ठानलक्षणा तत्पदेन निवृत्तिलक्षणा, आदि-शब्देन सामानाधिकरण्यलक्षणहानिरुपक्रमविरोध एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः श्रुत्यन्तरविरोधश्चेति दूषणानि विवक्षितानि । उक्तदृष्टान्तादुपलक्ष्यसामानाधिकरण्याच्च दूषणमधिकमित्याह–

मू० इयांस्तु विशेषः, नेदं रजतमिति वदप्रतिपन्नस्यैव बाधस्यागत्या च परिकल्पनं तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च, अधिष्ठानं तु प्राक्तिरोहितम् अतिरोहितस्वरूपं तत्पदेनोपस्थाप्यते इति चेन्न ॥

टी० "इयांस्तु विशेष"इति, बाधार्थत्वे विशेषो न पूर्वोक्तदूषणहानिः अपि तु तैस्सह वक्ष्यमाणाधिकदूषणद्वयापात एव विशेष इत्यर्थः । अधिकं दूषणमाह "नेदं रजतमि"तिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पन-

म्नि"ति, शुक्तिरेव रजतमित्यत्र प्रमाणान्तरेण नेदं रजतमिति बाधस्य प्रतिपन्नत्वाद्बाधकल्पनम् अत्र बाधस्याप्रतिपन्नत्वेऽप्यगत्या बाधकल्पनमित्यर्थः तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्चेति शुक्तिरेव रजतमित्यत्र शुक्तित्वरूपं विरुद्धधर्मं शब्द एवोपस्थापयति अतस्तत्र बाधकल्पनमत्र त्वधिष्ठानमात्रं लक्षयता तत्पदेन शुक्तित्ववद्विरुद्धधर्मानुपस्थापनात् बाधकल्पनमनुपपन्नमित्यर्थः विरोधपरिहारार्थं लक्षणा चेदन्यतरपदलक्षणैव विरोधपरिहारायालं तदा सविशेषत्वप्रसङ्ग इति चार्थसिद्धं प्रमाणान्तरेण बाधस्य प्रतिपन्नत्वाच्छब्देन विरुद्धधर्मोपस्थापनाच्च बाधकल्पनम् अत्र तूभयाभावात्तदनुपपन्नमित्युक्तम् । अत्र विरुद्धाकारोपस्थापनं शङ्कते 'अधिष्ठानन्त्वि"ति, तदधिष्ठानमतिरोहितस्वरूपं यथा भवति तथोपस्थाप्यत इति क्रियाविशेषणम् अप्रकाशितविरोधिप्रकाशनं हि बाधकल्पनं न तु धर्मोपस्थापनमेव बाधकल्पनमिति नियमोऽस्ति अतस्तत्पदेन प्रागप्रकाशितविरोध्यधिष्ठानस्वरूपप्रकाशनाद्बाधकल्पनमित्यर्थः । अत्राह "ने"ति, किं विरोधिरूपमधिष्ठानं प्रकाशते उत नेति विकल्प्य अप्रकाशितपक्षे दूषणमाह—

सू० प्रागधिष्ठानाप्रकाशे तदाश्रयभ्रमबाधयोरसम्भवात् भ्रमाश्रयमधिष्ठानमतिरोहितमिति चेन्न तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ, अतोऽधिष्ठानातिरेकिपारमार्थिकधर्मैतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ ॥

टी० "अधिष्ठा"नेति, तदाश्रयेत्याश्रय–शब्दो विषयपरः । यद्वा तदधिष्ठानकभ्रमबाधयोरित्यर्थः । प्रकाशपक्षं शङ्कते "भ्रमे"ति, भ्रमाश्रयमधिष्ठानमित्यत्र पाठो निरीक्षणीय आश्रय–शब्दो विषयपरः भ्रमाश्रयमित्यत्र भ्रमस्याश्रयणं विषयीकरणं यत्रेति वैयधिकरण्येन वा भ्रम आश्रयणीयसम्बन्धनीयोयेनेति सामानाधिकरण्येन वा कथंचित् बहुव्रीहिरपि

निर्वोढुं शक्य आरोप्याकाराधिकरणभूतमधिष्ठानमिति वाऽर्थः भ्रमाश्र-
यत्वयातिरोहितमिति चेदित्यर्थः। दूषयति 'तदेवे'ति, किमिदमधिष्ठानं
विरोधिरूपमुताविरोधीति विकल्पाभिप्रायेण विरोधीति पक्षे दूषणमुक्त-
मविरोधित्वपक्षे बाधकल्पनानुपपत्तिर्भ्रमानुच्छेदश्चेति दूषणं स्पष्टमिति
न तदुक्तम् "अत इति पारमार्थिकशब्दस्यायमभिप्रायः भ्रमविरोध्याका-
रस्यापारमार्थिकत्वे अध्यस्तरूपमेव सत्यं स्याद् यथा शुक्तित्वापारमार्थ्ये
रजतत्वं सत्यं भवतीति यदिदं चोद्यं विरोध्याकारस्यापारमार्थ्येऽपि
भ्रमनिवृत्तिरुपपद्यते यथा पलाशपुष्पविषयदावभ्रमवतो भ्रमरस्य वृन्त-
विषयभ्रमरभ्रमेण पलाशपुष्पं श्लिष्यतः पलाशपुष्पविषयदावभ्रमो वृन्त-
विषयभ्रमरभ्रमश्च निवृत्त इति यथाहुः भ्रमरी भ्रमरभ्रमेण वृन्ते यद्दा-
वभ्रममाश्लिषत्पलाशमिति तदयुक्तं तत्रापि परमार्थविरोध्याकारेणैव
भ्रमविषयनिवृत्तिः दावत्वविरोधिपलाशपुष्पत्वाकारः परमार्थः भ्रमरत्ववि-
रोधी वृन्तत्वाकारश्च परमार्थः अपरमार्थत्वे दावत्वं भ्रमरत्वं च सत्यं
स्यात् शुक्तित्वे अपरमार्थे रजतत्वमिव वृन्तविषयभ्रमरभ्रमेण दावत्व-
बुद्धिर्निवृत्तेति चेत् ततः किं दावत्वबुद्धिनिवृत्तिर्भ्रमरत्वस्य सत्यत्वप्रति-
पत्तिकृता ततश्चासत्ये सत्यत्वविषयभ्रमान्तरं तिष्ठति तन्निवृत्तिरप्यसत्यविष-
यसत्यत्वभ्रमान्तरेणेति भ्रमपरम्परया निःशेषाविद्यानिवृत्त्यनुपपत्तिः। किञ्च
दावत्वविषयधीनिवृत्तावपि दावत्वनिवृत्तिर्न भ्रमरभ्रमेण अपि तु परमा-
र्थपुष्पत्वाकारेणैव अन्यथा परमार्थरजते अपरमार्थशुक्तित्वप्रतीत्या रजधी-
निवृत्त्या रजतस्यापि शुक्तित्वप्रसङ्गात्, भ्रमान्तरेण भ्रमान्तरनिवृत्तावन-
वस्था च स्यात् निवर्तकभ्रमान्तरस्यापि निवर्तकान्तरापेक्षत्वात् यथा रज्जु-
विषयसर्पभूदलनाम्बुधाराभ्रमपरम्परायाः । किञ्च भ्रमरभ्रमनिवृत्त्यनन्तरं
निवर्तकापारमार्थ्यज्ञानादापतद्दावभ्रमः परमार्थपलाशपुष्पत्वग्रहणेनैव प्र-
तिनिवृत्तः अतो निःशेषाविद्यानिवृत्तिलक्षणमोक्षवादिना भ्रमपरम्परापर्यव-
सानार्थमन्ततो गत्वा परमार्थाकारोऽभ्युपगन्तव्यः रज्जुत्ववत्, चरमभ्रमः
स्वयमेव न स्यादिति चेत् न स्वयं स्वबाधकत्वे कर्मकर्तृविरोधप्रसङ्गात् ।
किञ्च बाधकस्य सत्यात्मकत्वात् बाध्यस्य मिथ्यात्वात् एकस्यैव निवर्त्य-

निवर्तकत्वाभ्युपगमे तस्यैव मिथ्यात्वं सत्यत्वं चेति विरोधः स्यात् । किञ्च प्रपञ्चोऽपि बाधकज्ञानपेक्षः स्वयमेव स्वात्मानं निवर्तयेत् स्वयंनाशेऽपि नाशस्यावस्थान्तररूपत्वादविद्या सूक्ष्मरूपेण स्थिता स्यात् नाशकल्पकाऽविद्यान्तरं च स्यात् परमार्थविरुद्धधर्मतत्तिरोधानाभावे भ्रमबाधासम्भवं दृष्टान्तेनोपपादयति—

सू॰ अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः राजत्वोपदेशेन च तन्निवृत्तिर्भवति नाधिष्ठानमात्रोपदेशेन, तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् भ्रमानुपमर्दित्वाच्च जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयं प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम् निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति उपक्रमानुकूलता च एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् ॥

टी॰ "अधिष्ठाने ही"ति, अत्र राजकुमारसमाधिर्भगवतो भाष्यकारस्य एवं बाधार्थत्वं दूषितम् । अथ स्वपक्षे इमानि दूषणानि न सन्तीत्याह "जीवशरीरके"ति, मुख्यवृत्तमित्यनेन लक्षणाहानिरुक्ता, प्रकारद्वयेत्यनेन सामानाधिकरण्यलक्षणासिद्धिः निरस्तनिखिलदोषस्येत्यादिना तत्पदोक्तगुणाविरोधः "उपक्रमानुकूलता चे"ति, "सदेव सोम्येदं" "तदैक्षतेत्याद्युपक्रमाविरोध उक्तः । एकविज्ञानेन सर्वप्रतिज्ञोपपत्तिः कथमित्यत्राह "सूक्ष्मे"ति, विशिष्टं कारणं तदेव कार्यमिति प्रतिज्ञोपपत्तिरित्यर्थः । श्रुत्यन्तराविरोधमाह—

सू० "तमीश्वराणां परमं महेश्वरम्" "पराऽस्य शक्तिर्विविधैव श्रूयते" "अपहतपाप्मा" "सत्यकामः सत्यसङ्कल्प" इत्यादिश्रुत्यन्तराविरोधश्च तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चेन्नात्र किंचिदुद्दिश्य किमपि विधीयते ऐतदात्म्यमिदं सर्वमित्यनेनैव प्राप्तत्वात् ॥

टी० "तमीश्वराणामि"ति, वाक्यं चेदुद्देश्योपादेयविभागवत् उद्देश्यं ह्यवगतम् उपादेयं विधेयमनवगतम् अत्र तत्पदं नोद्देश्यसमर्पकं सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वात् त्वंशब्दस्य चान्तर्यामिपरत्वे सत्युद्देश्यसमर्पकत्वपरत्वमनुपपन्नम् अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वात् तस्मात् त्वंशब्देन जीवमात्रमुद्दिश्य तस्य तत्पदेन ब्रह्मभावो विधीयत इत्युपगन्तव्यं तत्र विरोधान्निर्विशेषवस्त्वैक्यपरं सामानाधिकरण्यं सम्भवतीत्यभिप्रायेण चोदयति "तत्त्वमसीत्यत्र उद्देश्योपादेयविभागः कथमिति चे"दिति, परिहरति "नात्रे"ति, प्रमाणान्तरागोचरार्थस्य कथमविधानमित्यपेक्षायां न केवलं प्रत्यक्षाद्यवगतार्थविषयमेव वाक्यमनुवादकम् अपि तु वाक्यान्तरप्रतिपन्नार्थविषयमप्यनुवादकमित्यभिप्रायेण वाक्यान्तरप्राप्तिं दर्शयति "ऐतदात्म्य"मिति, अस्मिन्नेव प्रकरणे प्रथमप्रतिपन्ननामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकशब्दानां परमात्मपर्यन्ताभिधायित्वं च ज्ञातमिति भावः । ततः किमित्यत्राह—

सू० "अप्राप्ते हि शास्त्रमर्थवत्" इदं सर्वमिति सजीवं जगन्निर्दिश्य ऐतदात्म्यमिति—

टी० "अप्राप्ते ही"ति. अप्रतिपन्नार्थविषयं शास्त्रमज्ञातज्ञापनरूपप्रयोजनवदिति तदुद्देश्योपादेयविभागवत् न तु प्रकृतनिगमनरूपं वाक्यम् अतोऽस्य निगमनवाक्यस्य प्रतिपन्नार्थविषयत्वान्नोद्देश्योपादेयविभागवत्त्वमित्यर्थः । ननु निगमनवाक्यस्याप्युद्देश्योपादेयविभागवत्त्वं प्रतीयते यथा तस्माच्छब्दोऽनित्यः तस्मादयमग्निमानिति, अत्र शब्दपर्वताद्युद्देशेन अनि-

त्यत्वाग्निमत्त्वादिकं हि विधेयतया प्रतीयते नैतद्युक्तं प्रतिपादितार्थविषयस्य निगमनवाक्यस्याप्रतिपन्नार्थविषयत्वव्याघातात्, प्रतीतिस्तु विधायकवाक्यस्योद्देश्योपादेयसमर्पकपदप्रत्यभिज्ञानान्निर्देशे प्रथमचरमभावादिसारूप्याच्चोद्देश्योपादेयविभागवत्त्वभ्रान्तिरेव यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमिति हि नीति विदः। ननु सर्वत्रोद्देश्यानुगुणा तिङ्विभक्तिरत एव हि युष्मदस्मदोः पदान्तरसामानाधिकरण्येन परस्परसामानाधिकरण्येन च प्रयोगेषूद्देश्यानुगुणा मध्यमोत्तमपुरुषव्यवस्था दृश्यते "त्वं भूतानामधिपतिरसि अहमस्मि प्रथमजा ऋतस्य," तथा "यदग्ने स्यामहं त्वं त्वं वा स्या अहं स्युष्टे सत्या इहाशिष" इत्यादिषु अग्ने अहं त्वं यदि स्यां—त्वमिव देवता स्यां त्वमहं यदि स्याः अहमिवार्थी स्याः तदा ते तवाशिष स्सत्याः स्युरित्यर्थः तस्मात्तत्त्वमसीत्यत्रापि मध्यमपदप्रयोगात् त्वंपदस्योद्देश्यसमर्पकत्वं तत्पदस्योपादेयसमर्पकत्वमकामेनापि स्वीकार्यं, नैवं पदद्वयावगतार्थस्य पूर्ववाक्यप्राप्तत्वादेव तर्हि मध्यमनिर्देशः कथमिति चेत् उच्यते तत्त्वम्पदयोरुभयोरपि प्रयुक्तत्वादुद्देश्योपादेयविभागा भावाच्च प्रथममध्यमपुरुषयोरविशेषेण प्राप्तौ निगमनवाक्यस्य प्रापकवाक्यानुरोधित्वस्य न्याय्यत्वात्तत्र च इदं सर्वमिति निर्दिष्टजगदन्तर्गतचिद्विशेषविशिष्टपरमात्मवाचिनस्त्वम्पदस्य प्रापकवाक्यस्योद्देश्यवाचिपदवाच्यैकदेशविषयत्वात्तदनुरोधेन मध्यमनिर्देश इति। नन्वैतदात्म्यमिदं सर्वमित्यचेतने ब्रह्मानुप्रवेशमुक्त्वा तत्त्वमसीति जीवब्रह्मणोः स्वरूपैक्यमुच्यत इति शङ्कायामाह "इदं सर्वमिति सजीवं जगन्निर्दिश्ये"ति, सर्व—शब्दो नाचेतमात्रपरः सङ्कोचकाभावेऽपि स्वारस्यभङ्गायोगात् सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनाः सत्प्रतिष्ठा इति पूर्ववाक्ये सर्व—शब्देन प्रजानां विशेषितत्वात् प्रजाशब्दस्याचित्संसृष्टचेतनविशेषपरत्वात् इदं सर्वमसृजतेत्यादिवाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः सर्व-शब्देन निर्दिष्टत्वाच्चेति भावः। ऐतदात्म्यमिति पदं व्याचष्टे—

भू० तस्यैष आत्मेति प्रतिपादितं तत्र च हेतुरुक्तः "सन्मूला-

स्सोम्येमाः सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा इति "सर्वं खल्विदं ब्रह्म तज्जला"निति शान्त इतिवत् ॥

टी० "तस्यैव आत्मे"ति "इदं सर्वमि"ति पदद्वयमुद्देश्यसमर्पकम् ऐतदात्म्यमेतदात्मकत्वं विधेयं विशिष्टस्य ब्रह्मणः कारणतया प्रकृतत्वे एतच्छब्दः चिदचिद्विलक्षणविशिष्यांशपरः अर्थवशात् तदात्मकत्वं मृदात्मको घट इतिवत् स्वरूपैक्यकृतं स्यादित्यत्राह "तत्र च हेतुरुक्त" इति, सदायतना इत्यनेन आधाराधेयभाव उक्तः, अनेन शरीरशरीरिभावः सिद्धः चेतनेन यावदात्मभावितया धार्यद्रव्यं हि शरीरम् अस्मिन्वाक्ये हेतुत्वमप्रकटमिति तद्विशदयाह "सर्वं खल्वि"ति, अत्रापि प्राणेन सदायतनत्वं फलितं सन्मूला इत्यादिवाक्येनैकार्थ्यात् तत्र हि सन्मूला इति तज्जत्वं, सत्प्रतिष्ठा इति तल्लत्वं, सदायतना इति तदनत्वं चोच्यते, तच्चान्तःप्रविश्य प्रशासनेन धारकतया स्थितिहेतुत्वम् अन्तः प्रविष्टः शास्ता जनानां "एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं विधृतं तिष्ठती"त्यादिश्रुतेः, एवं निष्कृष्टब्रह्मस्वरूपस्योपादानत्वलयस्थानत्वायोगात् सर्वस्य तदनत्वोक्त्या च चिदचिच्छरीरकत्वं सिद्धम्, अतः सर्व-शब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः ब्रह्मशब्दस्य चासङ्कोचेन स्वरूपगुणैर्निरवधिकबृहत्त्ववाचित्वान्निष्कृष्टब्रह्मणः कारणत्वानुपपत्तिरूपार्थसामर्थ्याच्च ब्रह्म-शब्दः कारणावस्थचिदचिद्विशिष्टपरः, एवमुभयावस्थचिदचित्प्रकारिणो ब्रह्मण एकत्वं सामानाधिकरण्यप्रतिपाद्यमिति कार्यकारणावस्थप्रकार्यैकत्वमस्य वाक्यस्यार्थः चिदचित्प्रकारित्वं प्रातिपदिकबोध्यम्

भू० तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति "अन्तःप्रविष्टः शास्ता जनानां" "सर्वात्मा" "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथि-

वीमन्तरो यमयति स त आत्मा अन्तर्यामी अमृतः य आत्मनि तिष्ठन्नात्मनोऽन्तरो–

टी० अवस्याद्वयविशिष्टवस्त्वेकत्वं सामानाधिकरण्यबोध्यमिति न वाक्यभेदः, अतो यथोक्त एवार्थः । अथ सर्वं खल्विति वाक्यप्रतिपन्नस्य तादात्म्यस्य शरीरशरीरिभावनिबन्धनत्वं नियन्तृत्वनियाम्यत्वादिना शरीरशब्देन च विशदयितुं श्रुतिवाक्यानि दर्शयति "तथे"ति, अन्तःप्रविष्टःशास्तेत्येतत् सर्वात्मकशब्दव्याख्यानरूपम् । अनेन शरीरात्मभावः फलितः अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वं तत्स्पष्टीकरणार्थमुदाहरति "यः पृथिव्यामि"ति, यः पृथिव्यां य आत्मनीति पर्यायद्वयेन चेतनाचेतनयोर्भगवन्तं प्रति शरीरत्वमुक्तम् । आत्मनि तिष्ठतीत्युक्ते वेद्यामग्निस्तिष्ठति तिले तैलं तिष्ठतीतिवत् बहिरबहिःस्थितिसाधारण्यं[1] स्यादिति तद्वैषम्यार्थमाह "आत्मनोऽन्तर" इति, अन्तरो यमयतीत्यनेन शरीरलक्षणमुक्तं तस्मात्तन्नियाम्यं तच्छरीरमित्यर्थः । न च शिलापुत्रस्य शरीरमितिवदयं निर्देशः अपवादकाभावे व्यतिरेकनिर्देशस्वारस्यभङ्गायोगात् यस्य पृथिवी शरीरमिति व्यतिरेकनिर्देशस्वारस्यभङ्गाभावस्य प्रकरणप्रसिद्धत्वात्तदपवादकत्वाभावे तत्राप्यौपचारिकत्वाश्रयणायोगादधिकरणाधिकर्त्तव्यभावव्या–

मू० यमात्मा न वेद यस्यात्मा शरीरं यः आत्मानमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः यं पृथिवीमन्तरे संचर"न्नित्यारभ्य "यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतात्मा अपहतपाप्मा दिव्यो देव एको नारायणः "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदित्यादीनि ॥

टी० प्यव्यापकभावाङ्गाङ्गिभावनियाम्यनियन्तृभावरूपविरुद्धधर्मैः स्वारस्यभङ्गस्यात्यर्थमपोदितत्वाच्च यं पृथिवी न वेदेति दृष्टान्तार्थं यथा

१ बहिरबहिः स्थितिसाधारण्याच्चद्वैशद्यार्थमाहेति पु० ।

अचेतनं न वेत्ति तथा चेतनोऽपीति भावः। य आत्मनीति पर्यायेण परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते नक्षत्रचन्द्रादित्यादीनामचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात् यस्सर्वेषु भूतेषु तिष्ठन्नित्यनुक्तानामपि संसृष्टजीवानां परमात्मशरीरत्वस्य पृथगुक्तत्वाच्च न च भूतशब्दः पृथिव्याद्यचिन्मात्रपरः यस्य पृथिवी शरीरं यस्यापश्शरीरमित्यादिना पृथिव्यबादीनां भूतानां पृथगुक्तत्वात् यमात्मा न वेदेत्वियत्तया वेदननिषेधः भगवत्प्रसादेन विना तद्धानस्य शक्यत्वनिषेधो वा क्रियते कारणावस्थमपि भगवत्तश्शरीरं शरीरी च नारायणाख्यो देवताविशेष इति ज्ञापयितुमाह "यः पृथिवीमन्तरे संचरन्नि"ति, मृत्युस्तमश्शब्दवाच्या प्रकृतिः तत्रैव तमः शब्दस्थाने मृत्युशब्दपाठात् शरीरशरीरिभावस्तत्तन्नामभाक्त्वनिर्वाहक इत्याह "तत्सृष्ट्वे"ति, न केवलं श्रुत्यन्तरानुरोधादैतदात्म्यशब्दार्थो निश्चीयते स्वप्रकरणवाक्यादपीत्याह–

**सू० अत्राप्यनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितं तदनुप्रविश्य सच्च त्यच्चाभवदित्यनेन ऐकार्थ्यात्, जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते॥**

टी० "अत्रापी"ति, अनेन जीववाचकशब्दस्य परमात्मपर्यन्तत्वमपि श्वेतकेतुनाऽवगतमिति सिद्धं जीवेनात्मना जीवशरीरकेण मया, व्याघ्रेण भूत्वा बहवो मया हता इतिवत्। नामरूपे इति पदं व्याचष्टे "वस्तुत्वं शब्दवाच्यत्वं चे"ति, तत्तद्देवादिवस्तुत्वं देवादिशब्दवाच्यत्वं चेत्यर्थः अचिद्ब्रह्मणोस्तादात्म्यमनुप्रवेशकृतमस्तु जीवब्रह्मणोस्तु स्वरूपैक्यकृतमेव स्यात् जीवेन मयेति श्रवणादित्यत्राह "तदनुप्रविश्ये"ति, ननु जीवमनुप्रविष्टस्यापि ब्रह्मणो नामवाच्यत्वं न व्याकरणात् सिध्यति नामरूपव्याकरणश्रुतेर्नामवाच्यत्वप्रतिपादनपरत्वाभावात् यथा रूपव्याकरणं रूपनिष्पादनमात्रं न तु स्वस्य तद्वाच्यत्वापादनम् एवं नामव्याकरणमपि शब्दसृष्टिरेव न तु

तद्बोध्यत्वापादनमिति नैवं, "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते" ति समानवाक्य इदंशब्दवाच्यजगदात्मकब्रह्मणः प्रलयदशायामुपसंहृतनामरूपस्य सृष्टिदशायां नामरूपाभ्यां व्याकृतत्वश्रवणात् नामरूपाभ्यामितीत्थंभावे तृतीया नामरूपाभ्यां विशिष्टमक्रियतेत्यर्थः। न च नामकर्तृत्वमेव नामविशिष्टत्वं न तु नामवाच्यत्वमिति वक्तुं युक्तं सञ्ज्ञासञ्ज्ञिसम्बन्धव्युत्पादके नामोच्चारयितरि च

पुरुषे घटादिनामविशिष्टत्वाप्रसिद्धेः नामवाच्यस्यैव हि नामविशिष्टत्वप्रसिद्धिः कृत्स्नोपादानस्य तु ब्रह्मणः शब्दोपादानत्वयोगात् रूपविशिष्टत्ववन्नामविशिष्टत्वोपपत्तिरिति चेत् न नभसि घटादिनामविशिष्टत्वाप्रसिद्धेः, न हि घटादिनामविशिष्टत्वे कथिते नभसोनामित्वं स्वरसतः प्रतीयते, वाच्यत्वेन शब्दसम्बन्धिन्येव हि नामित्वप्रतीतिस्वारस्यं, न च लक्षणादिवृत्त्यापि तत्तन्नामबोध्यत्वं ब्रह्मणस्सम्भवतीति वाच्यं लक्षणागौणवृत्तिगोचरयोः कूलमाणवकयोर्गङ्गापदाग्निपदापेक्षया नामित्वाप्रसिद्धेः। ननु श्येनशब्दस्य यागविशेषं प्रति गौणनामत्वं निर्णीतं सत्यं तदगत्याश्रितं प्राणहारित्वगुणसाम्यात् प्रयोगान्यथासिद्धेः, "यथा वै श्येनोनिपत्यादत्त" इति श्रुतेः, मुख्यस्यैव हि शब्दस्य नामत्वप्रतीतिः प्राप्ता अत्र तु स्वतःप्राप्तस्य मुख्यत्वस्यापवादाभावान्न तत्प्रहाणं युक्तम् अतोऽनेन वाक्येन नामवाच्यत्वं शब्दस्वारस्यादवगम्यते एतदैकार्थ्यान्नामरूपे व्याकरवाणीत्यत्रापि ब्रह्मपर्यन्तं नामरूपव्याकरणमेव विवक्षितम् किंच न तावद्वर्णसृष्टिप्रतिपादनशङ्कापि भवितुमर्हति नाम—शब्दस्य वर्णमात्रपर्यायत्वाभावात् ब्रह्मव्यतिरिक्तसमस्ततत्पदार्थस्वरूपनिष्पादनस्य रूपव्याकरणोक्तिसिद्धत्वेन गगनासाधारणरूपशब्दनिष्पादनस्यापि रूपव्याकरणोक्त्यैव सिद्धत्वात्तत्प्रतिपादनवैयर्थ्यं च स्यात्। न च रूप—शब्दस्य गोबलीवर्दन्यायेन सङ्कोचः, सङ्कोचकस्य नामव्याकरणनिर्देशस्यान्यथासिद्धत्वात्, अतोनिष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेव नामव्याकरणं स्यात् तत्र बहु स्यामित्यनेन स्रक्ष्यमाणबहुत्वस्य ब्रह्मविशेषणत्वावगमादस्मिन्वाक्येऽपि व्याकरणस्यानुप्रवेशपूर्वकत्वप्रतिपादनाच्च व्याक्रियमाणस्य रूपस्य ब्रह्म-

विशेषणत्वमवगम्यते अतो ब्रह्मविशेषणभूतरूपसमभिव्यवहाराचाम्नोऽपि ब्रह्मविशेषणत्वमवगम्यते नाम्नो विशेषणत्वं वाचकतयैवेत्युपपादितं कृत्स्न-स्य रूपस्य ब्रह्मविशेषणत्वावगमात्तद्रूपप्रवृत्तिनिमित्तकत्वाच्च नाम्नां ब्रह्म-विशेषणत्वं तस्य वाचकतयैवेत्यवगम्यते स्वद्यमाणबहुत्वविषयस्य बहु-शब्दस्योपक्रमे ब्रह्मपर्यन्तत्वेन प्रयोगदर्शनादुपक्रमोक्तबहुत्वावान्तरभिदा-रूपतत्तद्रूपवाचिनां च नाम्नां ब्रह्मवाचकतया तद्विशेषणत्वमित्यवगम्यते तत्तेज ऐक्षत ता आप ऐक्षन्तेति प्रकरणे तेजःप्रभृतिशब्दानां परमात्मवि-षयतया प्रयोगदर्शनाच्च नाम्नां ब्रह्मविशेषणत्वं तत्तद्वाचकतयेत्यवगम्यते "वचसां वाच्यमुत्तमं" "हरिरखिलाभिरुदीर्यते तथैकः" "नताः" स्मः "सर्व-वचसां प्रतिष्ठा यत्र शाश्वती"त्यादिस्मृतिस्वारस्याच्च नामवाच्यत्वमवग-म्यते अतश्च नामरूपे व्याकरवाणीति श्रुतिः चिदचिद्विशिष्टस्य ब्रह्म-णस्तत्तन्नामवाच्यत्वमेव प्रतिपादयतीति सिद्धम् । ऐतदात्म्यशब्दार्थव्या-ख्यानं निगमयति—

सू० अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्य-मात्मशरीरभावादेवेत्यवगम्यते तस्माद्ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात् तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्पदार्थविशिष्टब्रह्माभिधायित्वं सि-द्धमिति ऐतदात्म्यमिदं सर्वमिति प्रतिज्ञातार्थस्य तत्त्वमसी-ति सामानाधिकरण्येन विशेषेणोपसंहारः ॥

टी० "अत" इति, शरीरवाचिशब्दानां शरीरिपर्यन्तत्वं निगमयति "तस्मादि"ति, तस्मादुदाहृतवाक्यैः शरीरशरीरिभावप्रतिपादनात्तस्य तत्त-न्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः । ननु न तत्पर्यन्ताभिधानमुपपद्यते लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नतया व्युत्पत्तिभङ्गप्रसङ्गात् ब्रह्मण एकत्वेन द्वित्वबहुत्वाद्यनुपपत्तेश्चेत्यत्राह "अतस्सर्वशब्दानामि"ति, लोकव्युत्पत्ति-

शब्दस्यायं भावः—नात्र व्युत्पत्तिविरोधः व्युत्पन्नार्थापरित्यागात् ब्रह्मणोऽलौकिकप्रमाणागोचरतया तत्पर्यन्तव्युत्पत्त्यभावः न त्ववाचकतयेति सोऽन्यथासिद्धः, यथा लिङादेरपूर्ववाचित्वं वेदव्युत्पत्त्याऽवगम्य लोकतो व्युत्पत्त्यभावपरिहारः कार्यवाक्यार्थवादिभिरुच्यते तद्वत् तत्पदार्थविशिष्टशब्देन ब्रह्मणोऽपि द्वित्वबहुत्वादिकं सद्वारकमुपपन्नमित्युक्तं भवति। तत्त्वमसीत्यस्योपसंहारवाक्यत्वमाह "इत्यैतदात्म्यमि"ति, सामानाधिकरण्येन विशेष उपसंहार इति वैयधिकरण्येन प्रतिपादितस्य सामानाधिकरण्येनोपसंहारः सामान्येन प्रतिपादितस्य विशेष उपसंहार इत्यर्थः। तदैक्षतेत्यादिना तच्छब्दार्थः प्रतिपन्नः, ऐतदात्म्यमित्यादिना जीवस्य ब्रह्मात्मकत्वं प्रतिपन्नम्, अनेन जीवेनेत्यादिना जीववाचिशब्दानां ब्रह्मपर्यन्तत्वं प्रतिपन्नमिति नात्रोद्देश्योपादेयविभागः उद्देश्योपादेयविभागो ह्यप्राप्तार्थप्रतिपादकानां न तु निगमनवाक्यानां तेषां प्राप्तविषयत्वात्, निगमनं चोक्तार्थप्रतिष्ठापकत्वादपेक्षितं दृश्यते तस्मान्निगमवाक्ये ऽस्मिन्नुद्देश्योपादेयविभागमुखेन चोद्यस्य नावकाश इति परिहार उक्तो भवति, यत्र त्वप्राप्तार्थपरवाक्ये जगद्ब्रह्मणोस्सामानाधिकरण्यं तत्र ब्रह्मणस्तत्प्रकारपनामभात्त्वं विधेयं ज्ञातव्यम्, एवं भेदश्रुतिघटकश्रुत्यविरोधार्थं तत्त्वमसिवाक्यसामानाधिकरण्यं शरीरशरीरिभावेनोपपादितं शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधानं जातिगुणपदयोर्व्यक्तिगुणिपर्यन्ताभिधानवत् सम्भवतीत्याकृत्यधिकरणन्यायेनोपपिपादयिषुः शरीरवाचिशब्दानां आकृत्यधिकरणन्यायविषयतानिरूपणरूपस्य "अंशोनानाव्यपदेशादि"त्यधिकरणस्य पूर्वपक्षिभूतेष्वर्थेषु दूषणमाह—

सू० अतोनिर्विशेषवस्त्वैक्यवादिनः, भेदाभेदवादिनः, केवलभेदवादिनश्च वैयधिकरण्येन सामानाधिकरण्ये न च ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः, एकस्मिन्वस्तुनि कस्य तादात्म्यमुपदिश्यते? तस्यैवेति चेत्स्ववाक्येनावगतमिति न

तादात्म्योपदेशावसेयमि[1]त्यस्ति किञ्चित्, कल्पितभेदनिरसनमिति चेत् तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तं, सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत् ॥

टी० 'अत' इति, अतः–जगद्ब्रह्मणोः श्रुतिभिः शरीरशरीरिभावप्रतिपादनात्तस्य च तत्तन्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः, भेदाभेदवादिशब्देनौपाधिकस्वाभाविकभेदाभेदवादिनोर्द्वयोरपि तन्त्रेणोक्तिः, केवलभेद–शब्देन स्वपर्यवसितभेदो विवक्षितः, तद्वादिनश्च वैशेषिकादयः, वैयधिकरण्यं च "अस्यैष आत्मे"त्येवंरूपत्वादुपदेशस्य । ब्रह्मात्मभावोपदेशपरित्यागः कथ?मिति शङ्कायां मृषावादिपक्षे तदनुपपत्तिं वक्तुमाह "एकस्मिन्नि"ति, । शङ्कते "तस्यै"वेति, प्रतिवक्ति "तदि"ति, स्ववाक्येन सत्यं ज्ञानमित्यादिना स्ववाक्येन स्वरूपपरवाक्येन प्रतिपन्नादधिकार्थप्रतिपत्तिरस्ति वा ? न वा ? प्रथमे सविशेषत्वं, द्वितीये तादात्म्योपदेशवैयर्थ्यमिति भावः । पुनः शङ्कते "कल्पिते"ति, दूषयति "तदि"ति, प्रकारद्वयोपस्थापकत्वादिति भावः "सामानाधिकरण्यतादात्म्ये"ति, सामानाधिकरण्येन तादात्म्योपदेशावसेयमित्यर्थः । न केवलमसाधकत्वं विरुद्धत्वमप्याह "सामानाधिकरण्यं त्वि"ति, औपाधिकभेदाभेदवादे तदनुपपत्तिमाह–

सू० भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्ता जीवगता दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः, स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणस्तत एव जीवभावाभ्युपगमात् गुणवद्दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशोविरुद्ध एव

[1] तादात्म्योपदेशावसेयमस्ति इति पाठान्तरं तु युक्तम् ।

टी० "भेदाभेदे"ति, क्लेशकर्माद्यस्पृष्टस्सार्वज्ञ्यादिगुणको हीश्वरः अतः ईश्वरस्य निर्दोषस्य तदनर्हानीश्वरतादात्म्यव्याघातादीश्वरतादात्म्योपदेशो विरुद्ध इत्यर्थः । परित्यक्ताः स्युः—परित्यागः फलित इत्यर्थः । स्वाभाविकभेदाभेदपक्षे तदनुपपत्तिमाह "स्वाभाविके"ति, गुणवद्दोषाश्च स्वाभाविका भवेयुरिति ब्रह्मण ईश्वरांशेन सार्वज्ञ्यादिगुणा इव जीवांशेन दोषाश्च स्वाभाविका भवेयुः "अनादिर्भगवान् कालो नान्तोऽस्य द्विज ? विद्यते अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा" इति संसारप्रवाहानन्त्येन दोषा नित्याः स्युरि[1]त्युक्तम् । यद्वा तत्तद्दोषसम्बन्धार्हत्वं स्वाभाविकं स्यादित्यर्थः । ततः किमित्यत्राह "इति निर्दोषे"ति, सद्ब्रह्मात्मादिशब्दानां नारायणशब्दपर्यवसायित्वेनेश्वरातिरिक्तवस्तुनिषेधादिभिरीश्वरस्यैव ब्रह्मत्वं सिद्धं कृत्वा निरवद्यं निरञ्जनमित्यादिश्रुत्युक्तं ब्रह्मणो निर्दोषत्वं चाभिप्रेत्य निर्दोषब्रह्मतादात्म्योपदेशविरोध उक्तः. निर्दोषश्रुतिविरोधः फलितः, तर्हि न दोषश्रुतिविरोध इति वक्तव्ये किमर्थं निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध इत्युक्तम् ? उच्यते हेयानर्हतादात्म्यं हि

मू० केवलभेदवादिनां चात्यन्तभिन्नयोः केनापि प्रकारेण ऐक्यासम्भवादेव ब्रह्मात्मभावोपदेशो[2] न सम्भवतीति सर्ववेदान्तपरित्यागः स्यात्, निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मतादात्म्यभावोपदेशाः सर्वे सम्यगुपपादिताः भवन्ति जातिगुणयोरिव द्रव्याणामपि शरीरभावेन

टी० पुरुषार्थः स्वरूपैक्ये च ब्रह्मणो हेयार्हत्वाद्धेयार्हब्रह्मतादात्म्यधीर्न हेयापहा तत्तादात्म्यानुभवोऽप्यपुरुषार्थश्चेत्युपायत्वप्राप्यत्वविरोधात्तादात्म्योपदेशपरवाक्यस्य प्रयोजनपर्यवसानं न स्यात्, न ह्यसिना छिद्यमानस्य कालाग्निना दह्यमानस्य च पुरुषस्योपासनमुपासकानर्थं हन्ति, न च

१ नित्याः स्युरित्यर्थइति पाठान्तरम् ।
२ ब्रह्मात्मभावोपदेशा न सम्भवन्तीति पु० ।

तत्तादात्म्यधीः कस्यचित्पुरुषार्थस्तद्वदिति ज्ञापनाय तादात्म्योपदेशो विरुद्ध इत्युक्तम् । स्वनिष्ठभेदपक्षं दूषयति "केवले" ति, अत्यन्तभिन्नयोः—प्रकारप्रकारिभावरहितयोरित्यर्थः केनापि प्रकारेण—विशेष्यांशतोऽप्यैक्यासिद्धिरित्यर्थः । एवं पूर्वपक्षचतुष्टयेऽप्यनुपपत्तिमुक्त्वा स्वपक्षे वैषम्यमाह "निखिले" ति, सम्यक्छब्देन मुख्यत्वं विवक्षितं, कथं मुख्यत्वमित्यत्राह "जातिगुणयोरि" ति, दण्डादिव्यावृत्त्यर्थमाह "शरीरभावेन विशेषणत्वेन" इति, कथं मुख्यमेव दृष्टचरमित्युच्यते अमुख्यत्वेऽपि हि प्रयोगस्स भवति, अमुख्यत्वं च शरीरस्य द्रव्यत्वात् न हि दण्डकुण्डलादिशब्दानां विशेष्यपर्यन्ताभिधानं दृष्टं, तस्माद् द्रव्यत्वे सति विशेषणत्वं जातिगुणयोरन्यतरत्वे सति—

मू॰ विशेषणत्वेन गौरश्वो देवो मनुष्यो जातः पुरुषः कर्मभिरिति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरं जातिगुणयोरपि हि द्रव्यप्रकारत्वमेव खण्डो गौः शुक्लः पट इति सामानाधिकरण्यनिबन्धनं मनुष्यत्वादिविशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वान्मनुष्यः पुरुषः षण्डो योषिदात्मा जात इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनं न परस्परव्यावृत्ता जात्यादयः ॥

टी॰ विशेषणत्वं वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति शरीरवाचिशब्दस्य विशेष्यपर्यन्ताभिधानममुख्यमित्यत्राह "जातिगुणयोरपी" ति, एवकारेण जातिगुणयोरन्यतरत्वादेः प्रयोजकत्वव्युदासः । ततः किमित्यत्राह "मनुष्यत्वादी" ति, अत्र प्रकार—शब्दो विशेषणमात्रपरः, एवकारेण दण्डकुण्डलादिव्यावृत्तिरभिप्रेता । सामानाधिकरण्यमनुगतमितीति सामानाधिकरण्यस्यानुगतत्वादनुगतमेव तत्प्रयोजकं वाच्यमित्यर्थः । जातित्वगुणत्वादेः प्रयोजकत्वं किं न स्यादित्यत्राह "न परस्परे" ति, परस्परव्यावृत्ताः—परस्परानुयायिनः, जात्यादयः—जातित्वा-

इयः, अयमभिप्रायः गङ्गायां घोष इत्यादिषु प्रवाहकूलयोर्गङ्गापदप्रवृत्तिनिमित्तस्यानुयायिन आकारस्यादर्शनात्तत्र लाक्षणिकत्वं युक्तम् अत्र तु यत्र यत्र विशेष्यपर्यन्ताभिधायित्वेन प्रयोगो दृष्टचरः—

सू० स्वनिष्ठानामेव हि द्रव्याणां क्वचित्कदाचिद् द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दण्डी कुण्डलीति दृष्टः न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणां तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ।

टी० तत्र तत्र प्रयोगविषयेष्वनुवृत्ताकारदर्शनादननुगताकारप्रयोजकत्वाश्रयणेन क्वचिल्लाक्षणिकत्वं वक्तुमयुक्तम् अन्यथा अद्रव्यत्वे सति विशेषणत्वं विशेष्यपर्यन्ताभिधाने प्रयोजकमित्यपि न वक्तव्यं जातित्वं गुणत्वं वा प्रयोजकमस्तु अन्यल्लाक्षणिकं स्यात्, न च तथा भवदभिमतं, जातिगुणवाचिनामुभयेषामपि हि शब्दानां विशेष्यपर्यन्ताभिधायित्वेन प्रयोगदर्शनात्तस्माच्छरीरवाचिशब्दानामपि विशेष्यपर्यन्ताभिधायित्वेन प्रयोगदर्शनात् प्रयोगेषु सर्वेष्वनुवृत्तैकाकारदर्शनाच्चाननुवृत्ताकारान्तरस्य प्रयोजकत्वकल्पनेनान्यतरस्यामुख्यत्वकल्पनाया अयुक्तत्वादिदमपि सामानाधिकरण्यं जातिगुणवाचिशब्दानामिव मुख्यमेवेति । ननु प्रकारभूतद्रव्यवाचिपदानां मत्वर्थीयप्रत्ययनिरपेक्षविशेष्यपर्यन्ताभिधायित्वं दण्डादिशब्दानां तथात्वादर्शनादनुपपन्नमिति शङ्कायां प्रकारतयैवेति पूर्वमभिप्रेतं विवृणोति "स्वनिष्ठानामेव ही"ति, अपृथक्सिद्धप्रकारवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमित्यर्थः । यत्र यत्र नियतप्रकारत्वं तत्र सहोपलम्भनियमो दृष्टः शरीरे तु सहोपलम्भनियमाभावादपृथक्सिद्धविशेषणत्वमनुपपन्नं तस्मात् सामानाधिकरण्यं लाक्षणिकमित्यभिप्रायेण चोदयति—

सू० यदि गौरश्वो मनुष्यो देवः पुरुषो योषित्पण्ड आत्मा कर्मभिर्जात इत्यत्र खण्डो मुण्डो गौः शुक्लः कृष्णः पट इति जातिगुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते तर्हि जा-

तिश्चत्वयोरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात् न चैवं दृश्यते, न हि नियमेन गोत्वादिवदात्माश्रयतयैवात्मना सह मनुष्यादिशरीरं पश्यन्ति अतो मनुष्य आत्मेति सामानाधिकरण्यं लाक्षणिकमेव, नैतदेवं मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वं तत्प्रकारत्वं च जात्यादितुल्यम्

टी० "यदि गोरश्व" इति, पक्षे व्यापकविपर्ययं दर्शयति "न चैवमि"ति, तद्विवृणोति "न ही"ति, ततः किमित्यत्राह "अत" इति, परिहरति "नैतदेवमि"ति, सहोपलम्भनियमस्य नियतप्रकारताप्रयोजकत्वे दूषणं वक्ष्यन् प्रथमं शरीरस्यापृथग्विशेषणत्वं प्रतिपन्नमिति दर्शयति "मनुष्यादी"ति, आत्मैकत्वतदेकार्थत्वयोरन्यतरान्वितं प्रकारत्वमपृथक्सिद्धविशेषणत्वमित्यर्थः। यद्वा प्रकारत्वशब्देन प्रकारतयैव प्रतीतिर्विवक्षिता उत्तरत्र प्रकारत्व विवरणे आत्मविशेषणतयैव प्रतीतेरिति वक्ष्यमाणत्वात्तेन विशेष्यप्रतिपत्तिसम्भवे दण्डकुण्डलादिवत्पृथगर्हस्यतत्त्वेन प्रतिपन्नत्वाभावः फलितः, तदेकाश्रयत्वं तदेकप्रयोजनत्वं विशेष्यप्रतिपत्तिसम्भवे पृथक्स्थितत्वेनाप्रतीतत्वं चापृथक्सिद्धविशेषणत्वे प्रयोजकमित्यर्थः। तेषु त्रिष्वात्मैकाश्रयत्वं पक्षे दर्शयति—

सू० आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते आत्मैकप्रयोजनत्वं च तत्तत्कर्मफलभोगार्थतयैव सद्भावात् तत्प्रकारत्वमपि देवो मनुष्य इत्यात्मविशेषणतयैव प्रतीतेः, एतदेव हि गवादिशब्दानां व्यक्तिपर्य्यन्तत्वे हेतुः एतत्स्वभावविरहादेव दण्डादीनां विशेषणत्वे दण्डी कुण्डलीति मत्वर्थीयप्रत्ययः॥

टी० "आत्मैकाश्रयत्व"मिति, तदेकप्रयोजनत्वं दर्शयति "आत्मैके"ति, न च दुःखैकफलनारकशरीरेष्वव्याप्तिः, दुःखस्याप्रयोजनत्वेऽपि

तेषां पापक्षयरूपप्रयोजनहेतुत्वात् । न च पत्न्यादिप्रीतिहेतुषु भृत्यादिदेहेषु तदेकप्रयोजनत्वादतिव्याप्तिशङ्कनीया तत्प्रयोजनसाधनत्वेन विना स्थित्यभावस्य विवक्षितत्वात् क्रयविक्रयाद्यर्हस्य तदेकप्रयोजनत्वं हि न सिध्यतीति तत्कर्मफलभोगार्थतयैव सद्भावादिति ह्युक्तम् अतस्तदेकप्रयोजनशब्दस्याप्ययमेवार्थः । अथ तत्प्रकारत्वं दर्शयति "तत्प्रकारत्वमपी"ति, विशेष्यप्रतीतिस[1]म्भवे तत्पृथक्सिद्धत्वेन प्रतीत्यभावस्तत्प्रकारत्वशब्देन विवक्षित इत्यर्थः । पञ्चमीनिर्देश औपचारिकः । यद्वा तत एव तत्प्रकारत्वेनोक्तमित्यर्थः । अथवा पृथक्स्थितत्वप्रतीत्यभावे प्रतीतिविशेषो हेतुतयोदाह्रियते एतत्तदेकाश्रयत्वादि त्रितयम् सपक्षेऽपि दर्शयति "एतदेव ही"ति, विपक्षव्यावृत्तिं दर्शयति "एतत्स्वभावे"ति, ईदृशप्रकारत्वमेवपक्षे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुरित्याह–

सू० देवमनुष्यादिपिण्डानामात्मकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावात् देवो मनुष्य आत्मेति लोकवेदयोः सामानाधिकरण्येन व्यवहारः, जातिव्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात् आत्मनस्त्वचाक्षुषत्वाच्चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते पृथग्ग्रहणयोग्यस्य प्रकारतयैकस्वरूपत्वं दुर्घटमिति मा वोचः ॥

टी० "देवमनुष्यादी"ति, सहोपलम्भनियमस्यान्यथासिद्धिमाह "जातिव्यक्त्योरि"ति, सहोपलम्भनियमस्तदेकसामग्रीवेद्यत्वप्रयुक्तः न त्वपृथक्सिद्धविशेषणत्वप्रयुक्त इत्यर्थः । चाक्षुषत्वं प्रदर्शनार्थमुक्तम् । उपाधेरपक्षस्यत्वं दर्शयति "आत्मनस्त्वि"ति, एकसामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति तद्वदत्रापृथक्सिद्धविशेषणत्वमित्याशङ्क्याह "पृथग्ग्रहणे"ति, स्वरूपं धर्मः प्रकारत्वमेव धर्मो यस्य तत्प्रकारतैकस्वरूपमेकशब्देन कदाचिदप्रकारत्वव्युदासः, ततश्च दण्डकुण्डलादि-

१ विशेष्यप्रतीतिसिद्धाविति पा० ।
२ तदभावाच्चापृथक्सिद्धविशेषणत्वम् इति पा० ।

वैषम्यं किमपृथक्सिद्धविशेषणत्वे प्रयोजकान्तराभावादेकसामग्रीवेद्यत्वं प्रयोजकमुच्यते? उतास्यानुयायित्वादिदमपि प्रयोजकमुच्यत? इति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदति—

**मू० जात्यादिवत्तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात् सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम्।**

टी० "जात्यादी"ति, प्रकारतैकस्वभावत्वावगमादित्यत्र स्वभाव-शब्देनैव प्रकारत्वनियमे सिद्धेऽप्येकशब्दप्रयोग एकसामग्रीवेद्यता स्वभावत्वव्यावृत्त्यर्थः, यदि तदेकाश्रयत्वादिरेवापृथग्विशेषणत्वे प्रयोजकः कथं तर्हि जात्यादौ सहोपलम्भनियम? इत्यत्राह 'सहोपलम्भे'ति, अनेन पूर्वं चाक्षुषत्वोक्तिरेकसामग्रीवेद्यत्वप्रदर्शनार्थेति स्पष्टम्। अथ पूर्वोक्तविकल्पे द्वितीयशिरसि वाऽपृथग्विशेषणत्वप्रयोजकतयोच्यमानमिदं किं मत्वर्थीयप्रत्ययनिरपेक्षं सामानाधिकरण्यप्रयोगविषयेषु सर्वेष्वनुयायि? उत भवदभिमतजातिगुणेष्वेवानुयायी? ति विकल्पोऽभिप्रेतः, तत्र न प्रथमः, देहात्मनोरेकसामग्रीवेद्यत्वाभावात् ततस्यानुगतप्रयोजकसद्भावादपृथग्विशेषणत्वस्याप्यनुगतत्वेन सम्भवात्तद्द्वारा सामानाधिकरण्यप्रयोगाणां सर्वेषां मुख्यत्वे सम्भवत्यप्यननुगतमाकारं प्रयोजकत्वेनाङ्गीकृत्यापृथग्विशेषणत्वमपि सङ्कुचितं कृत्वा तद्द्वारा सामानाधिकरण्यप्रयोगाणाममुख्यत्वकल्पनमनुपपन्नमित्यर्थसिद्धं प्रकारतैकस्वभावत्वावगमादित्यत्रैक-शब्देनैकसामग्रीवेद्यता स्वभावत्वस्य व्युदस्तत्वात्। अथ पराभिमतस्थलानुयायित्वरूपे द्वितीयशिरसि गन्धादौ व्यभिचारेण दूषणं वदन् एकसामग्रीवेद्यत्वस्यापृथग्विशेषणत्वाव्यापकत्वमाह—

**मू० यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारतैकस्वभावमपि न तथा गृह्यते आत्मग्रहणे चक्षुषः साम-**

र्थ्याभावात् नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः तत्प्रकारैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम् आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सदैव प्रकारतया प्रतिपादयति। ननु च शाब्देऽपि व्यवहारे शरीर-शब्देन शरीरमात्रं गृह्यते इति नात्मपर्यन्तता शरीर-शब्दस्य, नैवम् आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपकाणां निष्कर्षकशब्दोऽयम् ॥

टी० "यद्यपी"ति, न ह्यचाक्षुषस्यापि गन्धस्य पृथिवीनियतप्रकारत्वहानिः, एवं-शब्दो यथा शब्दप्रतिनिर्देशरूपः। कस्मादग्रहणमित्याह "आत्मग्रहणे"इति, व्यापकत्वाभावफलमाह "नैतावते"ति, एतावता—चाक्षुषाग्रहणाभावमात्रात्। न तत्प्रकारत्वस्वभावहानिः एकसामग्रीवेद्यत्वस्यापृथग्विशेषणताव्यापकत्वाभावात्तदेकाश्रयत्वादिप्रयोजकान्तरसद्भावाच्चेति भावः। ततः किमित्यत्राह "तत्प्रकारते"ति, एक-शब्द एकसामग्रीवेद्यतास्वभावत्वव्युदासपरः, एवकारः सहोपालम्भनियमव्युदासार्थः। अपृथग्विशेषणत्वे सति शरीरस्य केनापि प्रमाणेन तत्तथोपलभ्येतेत्यत्राह "आत्मे"ति, शब्दोऽपि न शरीरिपर्यन्ताभिधायीति चोदयति "ननु चे"ति, परिहरति "नैवमि"ति, इमौ चोद्यपरिहारौ आकृत्यधिकरणेऽपि समानावित्यभिप्रायेणाह—

सू० यथा गोत्वं शुक्लत्वमाकृतिर्गुण इत्यादिशब्दाः ॥

टी० "यथा गोत्वमि"ति, निष्कर्षकशब्दानां विशेष्यपर्यन्ताभिधायकत्वाभावे चेतनाचेतनवाचिनश्शब्दा न ब्रह्मपर्यन्ताभिधायिनो भवन्ति 'यस्यात्मा शरीरं यस्य पृथिवी शरीरम्" इत्यादिष्वात्मादिशब्दानां निष्कर्षकशब्दत्वावगमादिति, उच्यते निष्कर्षकशब्दो द्विविधः वैवक्षिकनिष्कर्षको नियतनिष्कर्षकश्चेति तत्र शरीरादिशब्दा नियतनिष्कर्षकाः, आत्मादिशब्दा वैवक्षिकनिष्कर्षकाः गोत्वादिशब्दवत् शुक्लादिशब्दवच्च प्रयोगस्य

व्यवस्थापकत्वात् निष्कर्षकानिष्कर्षकविभागोऽपि हि प्रयोगाधीनः तद्द्वयमपि विभागस्तन्मूलः। ननु शुक्लादिशब्दा नियतनिष्कर्षका एव गुणिपर्यन्तता तु "गुणवचनेभ्यो मतुपो लुग्वक्तव्य" इति स्मरणात्, नैव जातिवाचिशब्दवदप्यपृथक्सिद्धविशेषणवाचित्वाविशेषात् शुक्लादिशब्दानां, प्रत्ययस्तु द्विशब्दस्य द्विवचनवत् प्रकृत्यनतिरिक्तार्थस्त्रीलिङ्गतया तथा शब्दसाधुत्वाय स्वरविशेषाय च भवति, अत एव हि "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वती"ति नैघण्टुका यतस्त्वतो गुणिपर्यन्तानामेव गुणवाचिपदानां लिङ्गस्वरार्थं मतुब्लोपस्मरणं न तु गुण्यभिधानशक्तिविरहिणां गुण्यभिधानार्थम्, अत एव हि रागशब्दस्य रक्तपदतुल्यतया प्रयोगाभावः अतः शुक्लादिशब्दा वैकल्पिकनिष्कर्षका, नियतनिष्कर्षकाणामपि तथात्वं प्रतियोगिविशेषापेक्षं न तु सार्वत्रिकं "रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः पुण्यो गन्धः पृथिव्यां चे"ति गन्धादिशब्दानामपि परमात्मपर्यन्ततया प्रयोगात्

**सू० अतो गवादिशब्दवद्देवमनुष्यादिशब्दा आत्मपर्यन्ताः॥**

टी० अतः पृथिव्याद्यपेतयैव गन्धादिशब्दानां नियतनिष्कर्षकत्वं शरीरवाचिशब्दानां शरीरिपर्यन्ततां निगमयति "अतो गवादी"ति, आत्मपर्यन्ताः–आत्मपर्यन्तशक्तयः, शरीरवाचिशब्दैरात्मबोधनं शक्तिनिबन्धनतया मुख्यमित्यर्थः। ननु यद्यपि शरीरवाचिशब्दा आकृतिमयगोचरास्तथाऽपि तैश्शरीरिबोधनं लाक्षणिकं गवादिशब्दैरपि व्यक्तिबोधनस्य लाक्षणिकत्वात् सम्बन्धानुपपत्तिभ्यां हि लक्षणा जातिमात्रस्यानयनाद्यनर्हत्वाद् व्यक्तिसम्बन्धाच्च गवादिशब्दैर्व्यक्तिर्लक्षणया बोध्यते प्रयोगे अन्यथासिद्धे शक्तिकल्पनानुपपत्तेः। नैवम् अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वात् अन्यथा जात्यादिशब्दानामपि सम्बन्धानुपपत्त्यविशेषेण क्वचिद्व्यक्तिपर्यन्तप्रयोगप्रसङ्गः आकृतिरेव शब्दशक्तिविषयः व्यक्तिबोधस्त्वर्थसामर्थ्यात् प्रत्यभिज्ञायां संस्कारसचिवेन्द्रियवदर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टबोधसामग्रीत्यपि न युक्तं जात्यादिशब्दश्रवणेऽपि विशिष्टबोधप्रसङ्गादेव, न हि सत्यां सामग्र्यां कार्यानुदय उपपद्यते। ननु गवादिशब्दा जातेर्व्यक्तिपरतन्त्रतारूपमभिदधति अतस्तैर्व्यक्तिपर्यन्तबोधः। जात्यादि-

शब्दास्तु जातिस्वरूपमात्रमतस्तैर्व्यक्तिपर्यन्तबोधाभावः । नैवं जात्यादिशब्दैर्द्रव्यपारतन्त्र्याप्रतिपत्तौ द्रव्यविलक्षणतया जातिप्रतीत्यनुपपत्तेः । ननु जातेर्द्रव्यप्रकारतैकस्वभावत्वरूपपारतन्त्र्याबोधनं विवक्षितं किन्तु विशेषणान्तरान्वयकारकभावानर्हत्वरूपपारतन्त्र्याबोधनमिति, उच्यते गवादिशब्दैस्तादृक्त्वबोधनमेकपदेन विशेष्याभिधाननिबन्धनं. न हि कुण्डलीत्युक्ते कुण्डलस्य रुचिरत्वादिविशेषणान्वयः कुण्डलेन भूषित इतिवत्कारकभावश्च भवति, एवं च सति पारतन्त्र्याबोधनाद् व्यक्त्यबोधनेऽभ्युपगम्यमाने ऽन्योन्याश्रयः स्यात् पारतन्त्र्याबोधनाद्विशेष्याबोधनं तदबोधनात्पारतन्त्र्याबोधनमिति । किंच गवादिशब्दानां विशेष्यबोधनशक्तिविरहे जात्यादिशब्दानामिव पारतन्त्र्यबोधनासामर्थ्यप्रसङ्गः धर्मिबोधनासामर्थ्यव्यापकतया जात्यादिशब्देषु दृष्टं पारतन्त्र्यबोधनासामर्थ्यं गवादिशब्देभ्यो निवर्तमानं स्वव्याप्यं धर्मिबोधनासामर्थ्यं कथं न निवर्तयेत् द्रव्यांशे शक्तिर्माभूत् जातेर्व्यक्तिपारतन्त्र्यमपि गवादिशब्दा बोधयेयुरिति न वाच्यं द्रव्यांशे शक्तिविरहितैर्जात्यादिशब्दैरपि द्रव्यपारतन्त्र्यबोधनप्रसङ्गात्, अतश्शब्दशक्तिनिबन्धनैर्गवादिशब्दैर्द्रव्यप्रतीतिः । किञ्च यदि जातिमात्रमेव मुख्यार्थः तर्हि मुख्यभूतद्रव्यपर्यन्तप्रयोगादपि जातिमात्रे गवादिशब्दानां प्रचुरप्रयोगप्रसङ्गः, मुख्यार्थतद्गतगुणसम्बन्धिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगदर्शनात् गङ्गाग्निसिंहादिशब्दानां हि कूलमाणवकप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगो दृष्टः न हि व्यक्तिनिष्ठा गौः व्यक्तिनिष्ठो महिष इति प्रयोगः, जातिरेव मुख्यार्थश्चेद्गवादिशब्दानां जातिमात्रविषयप्रयोगे त्वतलादिनैरपेक्ष्यं च स्यात् न हि गङ्गादिशब्दाः प्रवाहादिविषयप्रयोगे भावप्रत्ययान्ताः प्रयुज्यन्ते प्रचुरप्रयोगाभावो भावप्रत्ययापेक्षत्वं च गवादिशब्दानां व्यक्तौ निरूढलक्षणायोगादिति चेन्न प्रचुरप्रयोगानुगतिर्हि लक्षणाया निरूढिः ततः प्रचुरप्रयोगाभावात्प्रचुरप्रयोगाभाव इति परिहारो न घटते प्रसङ्गस्य प्रसञ्जनीयाभावपरिहार्यत्वाभावात्, न ह्यग्निमत्त्वप्रसङ्गोऽग्न्यभावात्परिह्रियते भावप्रत्ययानपेक्षत्वं च दुष्परिहरं शुक्लादिशब्दानां गुणबोधने निरूढलक्षणाऽभ्युपगमेऽपि पटस्य शुक्ला इति गुणमात्रपरप्रयोगे भावप्रत्ययानपेक्षत्व-

दर्शनात् शुक्लादिशब्दानां हि लुप्तमतुबर्थलक्षणा परैरभ्युपगता, यथा समासेषु प्रातिपदिकेनाप्रयुक्तविभक्त्यर्थलक्षणोच्यते लक्षणायां निरूढिर्नाम सर्वप्रयोगानुगतिरिति चेन्न गोशब्दे तदभावप्रसङ्गात् अनुवृत्तो गोव्यवहार इति गोत्वमात्रेऽपि हि गोशब्दः क्वापि प्रयुज्यते। किञ्च सर्वप्रयोगानुगता वृत्तिर्लक्षणैव न स्यात् आकृतिविषयवृत्तिवत् । ननु अनन्यथासिद्धा वृत्तिर्मुख्या सत्यम्, अनन्यथासिद्धिश्च दर्शिता अयुतसिद्धविशेषणवाचिशब्दानां विशेष्यलक्षणासामर्थ्याभावस्योपपादितत्वात्। ननु त्वत्पक्षे धर्मिवाचिपदानां भावप्रधाननिर्देशेषु मुख्येकदेशे लक्षणाऽभिमता, अस्माकं तु गवादिशब्दानां व्यक्तौ लक्षणा तत्र शक्तेर्विशेषणविशेष्यगोचरत्वकल्पने भवतां गौरवं स्यात्, स्यादेव, स तु नात्र दोषः लाघवेन निर्वाहायोग्ये स्थले गौरवस्य दोषत्वाभावात् लक्षणाश्रयस्यानुपपत्तिर्हि दर्शिता । किञ्च गामानयेत्यादिषु व्यक्तिप्रतीतिरर्थसामर्थ्याद्भवति चेत्तर्हि विवक्षिताया जातेः प्रतिसम्बन्धिभूतं द्रव्यमुपसर्जनतया प्रतीयेत ततश्च पुत्रः पितेतिवत् खण्डो गौरयमिति सामानाधिकरण्यं न स्यात् पुत्रमानयेत्यत्र हि ममेत्यनुक्तेऽप्यर्थवशाद्विवक्षितपुत्रप्रतिसम्बन्धिपितृत्वेन प्रतीयमानो देवदत्तः पुत्रं प्रति गुणतया प्रतीयते न तु विशेष्यत्वेन प्रधानतया तदवच्छेदार्थत्वात्तस्य, गवादिशब्देषु तद्द्रव्यमेव प्रधानतया प्रतीयते गङ्गायां घोष इत्यत्र प्रवाहस्याविवक्षितत्वात्कूलस्य तदुपसर्जनतया प्रतीत्यभावः, छत्रिणो गच्छन्तीत्यत्र स्वच्छत्रिणां छत्रिसम्बन्धितया प्रतीयमानत्वाभावात् छत्रिगुणभावेन प्रतीत्यभावः, अतो विवक्षितार्थप्रतिसम्बन्धितया प्रतीयमानत्वेऽपि प्रधानतया प्रतीयमानं द्रव्यं शब्दशक्त्यैव प्रतीयते अयं पुत्रीत्यत्र पुत्रिशब्देन प्रतीयमानपुत्रिवत् । किञ्च विशेष्यशक्तिमता रूपिशब्देन रूपिप्रतिपत्तिदर्शनात् तद्रहितेन रूपशब्देन विशेष्यप्रतिपत्तिदर्शनाभावाच्च शब्दविशेषोपश्लिष्टविशेष्यप्रतीतिरन्वयव्यतिरेकाभ्यां शब्दशक्तिनिबन्धनेत्यध्यवसीयते अतो गवादिशब्दानां विशेष्यबोधकत्वं शक्तिनिबन्धनम् । ननु व्यक्तीनामानन्त्यात्ताभिस्सम्बन्धग्रहोऽनुपपन्नः एकस्यां व्यक्तौ शब्दवाच्यता व्युत्पत्तिश्चेद् व्यक्त्यन्तरस्य गोशब्दवाच्यत्वं न स्यात् नैवं यत्र जातिस्तत्रायं शब्द इत्येवं

रूपत्वाद् व्युत्पत्तेः अतो वाच्यतानिमित्तस्यैकत्वात्प्रत्येकव्युत्पत्त्यनपेक्षा युगपत्सर्वव्यक्तीनां वाच्यताव्युत्पत्तिरेकैकव्यक्तौ शब्दवाच्यतानिमित्तस्य पुष्कलत्वादेकैकव्यक्तेर्वाच्यत्वसिद्धिश्च घटते कथमनन्तानां व्यक्तीनां लब्ध-बुद्धावारोपणं शक्य? मिति चेत् व्यक्तीनां शब्दवाच्यत्वं प्रतिषेधता त्वया व्यक्तयः प्रतिपन्ना न वा न चेत्तासु शब्दवाच्यत्वनिषेधोऽनुपपन्नः लब्धरूपे क्वचित्किञ्चित्तादृशे वा निषिध्यते प्रतिपन्नाश्चेत् किं कतिपयव्यक्तयः प्रतिपन्ना उत सर्वाः? प्रथमे सर्वव्यक्तीनां शब्दवाच्यत्वनिषेधायोगः, द्वितीये त्वमिव सर्वे सर्वा व्यक्तीः प्रतिपद्येरन् व्युत्पद्येरंश्च, अतोगवादि-शब्दाः स्वशक्त्यैव व्यक्तिबोधकाः तद्वच्छरीरवाचिशब्दानामपि स्वशक्त्यैव शरीरिपर्यन्तबोधजनकत्वं सिद्धम् ॥

सू० एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्म-शरीरतया तत्प्रकारत्वात् जीवात्मवाचिनः शब्दाः परमा-त्मपर्यन्ताः अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्व-स्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः ॥

टी० एवं शरीरवाचिशब्दाश्शरीरिपर्यन्ताः स्युस्ततः किं परमात्म-चिदचिद्वाचिशब्दानां सामानाधिकरण्यस्येत्यत्राह "एव"मिति, प्रयोजका-कारं वदन्विगमयति "अत"इति, एवं तत्त्वमसीति वाक्येन चिदचिच्छरी-रकस्य कारणावस्थस्य कार्यावस्थस्य च ब्रह्मण एकत्वं प्रतिपादितं, न च प्रकार्यैक्यं कार्यकारणैक्यं चेत्यर्थभेदाद्वाक्यभेदश्शङ्कनीयः प्रकारित्वस्य पदावगम्यत्वात् तत्पदं हि प्रकृतवाचकं, प्रकृतं हि सार्वज्ञ्यादिगुणकं जग-च्छरीरकं कारणं 'तदैक्षत एकमेव बहु स्यां तत्तेजोऽसृजत अनुप्रविश्य नाम-रूपे व्याकरवाणि सदायतनाः सत्प्रतिष्ठा" इत्यादिभिरीक्षितृत्वैकत्वानु-प्रवेशपूर्वकनामरूपव्याकरणधारणश्रवणात् अतस्तत्पदं सर्वज्ञत्वादिगुणक-जगच्छरीरकब्रह्मपरं त्वम्पदं च कार्याचित्संसृष्टजीवविशेषविशिष्टब्रह्म-परम् अत उभयावस्थस्य ब्रह्मणः चिदचित्प्रकारवत्त्वं पदावगतं पदद्वय-स्यसमानविभक्त्या कारणावस्थसमानविभक्त्या कारणावस्थस्य कार्यावस्थस्य

च ब्रह्मणा एकत्वमवगम्यते अतो न वाक्यभेदः । अतः कार्यकारणावस्थ-प्रकारैकत्वं तत्त्वमसीति वाक्येन प्रतिपादितं परमात्मानं प्रति जगतश्शरीरत्वं कथं तस्मिन् सिद्धे शरीरित्वप्रयुक्ता दोषाः स्युः । उक्तस्यानुग्राहकस्य न्यायस्य किमनुग्राहं प्रमाणं कथं व्युत्पत्तिविरोधपरिहार इति शङ्कायामाह—

**सू० अयमर्थो वेदार्थसंग्रहे समर्थितः इदमेव शरीरात्मभाव-लक्षणं तादात्म्यम् "आत्मेत्युपगच्छन्ती"ति वक्ष्यति आत्मेत्येव तु गृह्णीयात्सर्वस्येति वाक्यकारश्च ॥**

टी० "अयमर्थ"इति, परेण स्वरूपैक्यपरत्वेनोदाहृतं सूत्रं वाक्यकारवचनं व्याचष्टे "इदमेवेत्यादिना, अत्रायमर्थस्सङ्कलय्यानुसन्धेयः मृषावादिभिस्सामानाधिकरण्यनिर्वाहाय बहुधा व्याहृताः तत्र सामानाधिकरण्यस्यातद्व्यावृत्तिमुखेन वस्तुमात्रपरत्वं सत्यादिवाक्यनिरूपणे न निरस्तं व्यावृत्तीनामुपलक्षणत्वपक्षे पदान्तरवैयर्थ्याद्विशेषणत्वाभ्युपगमे मुख्ये सम्भवति लाक्षणिकार्थस्वीकारायोगाच्च तत्त्वमसीति वाक्ये चान्वयमुखेन स्वरूपमात्रपरत्वे तत्पदस्य प्रकृतपरामर्शित्वभङ्गः, पदद्वयलक्षणा, प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकरण्यलक्षणहानिः, उपलक्षणरूपप्रवृत्तिनिमित्ताश्रयणे पदान्तरवैयर्थ्यं तदैक्षतेत्याद्युपक्रमविरोधः, उपक्रमापक्रमविरोधः श्रुत्यन्तरविरोधस्तिरोधानाद्युपपत्तिरूपतर्कविरोधश्चेति दूषणान्युक्तानि । बाधार्थत्वे च स्वरूपलक्षणा नञर्थलक्षणा चेति पदद्वयलक्षणादयो दोषाः प्रत्यक्षेण बाधादर्शनाद्बाधपरत्वानुपपत्तिः पदान्तरेण विरोधिधर्मानुपस्थापनेन विरोधाभावाद्बाधकल्पनाऽनुपपत्तिरित्यधिकदूषणद्वयं चोक्तं तथा सर्वं खल्विदं ब्रह्मेत्यत्र सामानाधिकरण्यस्य चातदाकारारोपणनिबन्धनत्वमयुक्तं सर्वत्वब्रह्मत्वयोरेकाश्रयत्वाभावेन सामानाधिकरण्यलक्षणाभावात्परमार्थत ऐकाधिकरण्ये सम्भवत्यपरमार्थैक्यविषयत्वाश्रयणानुपपत्तेश्च ऐक्यापारमार्थ्ये हि सामानाधिकरण्ये वाक्यप्रामाण्यं हीयते प्रतिपिपादयिषितस्यैक्यस्य मिथ्यात्वात् । एवमन्धिद्ब्रह्मणोस्सामानाधिकरण्यं हि सत्यानृतयोरैक्याभावादयुक्तम् अन्तःकरणचिन्मात्रयोरैक्याभावात् ब्रह्माऽहमस्मीति सामानाधिकरण्यं

न घटते अहंशब्दस्य अन्तःकरणोपहितज्ञप्तिवाचित्वात्तदुपपत्तिरिति चेन्न अहंशब्दस्यान्तःकरणोपहितज्ञप्तिवाचित्वाभावात् यथाऽहमिच्छामि द्वेष्मीतीच्छादेरहमर्थविशेषणतया व्यवहारादहंशब्दस्य नान्तःकरणोपहितेच्छादिवाचित्वम् एवमहं जानामीति प्रयोगात्तदुपहितज्ञप्तिवाचित्वमप्यहंशब्दस्यानुपपन्नं, न हि ज्ञप्तिरेव ज्ञप्त्या विशेष्यते ज्ञातृज्ञेयतदवच्छिन्नज्ञानातिरिक्तस्य कस्यचित् ज्ञानस्य शशविषाणायमानस्य लौकिकबुद्ध्यगोचरत्वात् न तद्विवक्षयाऽहंशब्दप्रयोगोपपत्तिः अतोऽहं ब्रह्मास्मीति सामानाधिकरण्यमयुक्तम् अन्तःकरणाद्ब्रह्मैक्याभावात् अहमादिशब्दानां पूर्वोक्तन्यायेन तदुपहितज्ञप्तिवाचित्वाभावाच्च, अहं मनुरभवमित्यादिसामाधिकरण्यमनुपपन्नं प्राणाद्यचेतनजीवयोरैक्याभावात् "प्राणोऽस्मिप्रज्ञात्मा" "अहमेवेदं सर्वं" मत्तः सर्वमित्यादि चाप्युक्तम् 'अहं हरिः सर्वमिदं जनार्दन' इति जीवेश्वरवाचिनोरचिदीश्वरवाचिनोश्च शब्दयोस्सामानाधिकरण्यमयुक्तं जीवेश्वरयोः पृथिव्यादीनां च चिन्मात्रे कल्पितत्वात्, न हि रज्जुकल्पितसर्पभूदलनाम्बुधारावाचिनां शब्दानां मिथस्सामानाधिकरण्यम् अहं हरिः सर्वमित्यादिशब्दानामध्यस्तवाचिनामधिष्ठानभूतब्रह्मपरत्वादेकार्थत्वमिति चेत् न आकृतिवाचिनां व्यक्तिपर्यन्ततयैवाध्यस्तवाचिनां शब्दानामधिष्ठानवाचित्वेन व्युत्पत्त्यभावात् न हि रजतशब्दस्य शुक्तित्वाश्रयद्रव्यवाचित्वेन व्युत्पत्तिः, तदभावश्च शुक्तिशकलादौ रजतादिशब्दप्रवृत्तिनिमित्तभूतरजतत्वादेरभावात्। न चाध्यस्तवाचिनः शब्दा अधिष्ठाने मुख्यवृत्ताः इदं रजतमिति वृद्धव्यवहारमूलव्युत्पत्तिसद्भावादिति चेत् उच्यते यदर्थविवक्षया शब्दप्रयोगो नान्यथासिद्धः तस्य च तद्वाचित्वनिश्चयः, तत्रेदं वक्तव्यम् अध्यस्तवाचिनश्शब्दस्याधिष्ठानपर्यन्तत्वे किं भ्रान्तप्रयोगो मूलं ? उत प्रबुद्धप्रयोगः ? न प्रथमः, रजतपुरोवर्तिनोऽनध्यस्तत्वानधिष्ठानत्वबुध्यैव तत्र रजतशब्दप्रयोग इति तस्याध्यस्तवाचिनोऽधिष्ठानपर्यन्तत्वासाधकत्वात् न ह्यदेवदत्तत्वाज्ञानाद्देवदत्तशब्दप्रयोगो देवदत्तशब्दस्य यज्ञदत्तवाचित्वे मूलं भवति, द्वितीये च रज्जुसर्प इति प्रयोगात्सर्पशब्दस्य प्रागनारोपितबुद्धिमूलप्रयोगानुवादरूपत्वादारोपितविषयशक्तिकल्पने मूलं न स्यात्। नन्वपृथक्सिद्धविशेषणवा-

चिशब्दानां विशेष्यपर्यन्तत्वमिष्टम् अध्यस्तं चाधिष्ठानस्यापृथग्विशेषणं तस्मिन् सत्यवभासनात् तेन विना तदवभासाभावाच्चेति चेन्न अन्यत्र सतो विशेषणस्य पुरोऽवस्थितं प्रत्यपृथक्सिद्ध्यभावात् अख्यातिपक्षे चाध्यस्तत्वाधिष्ठानत्वयोरेवाभावात् मृषावादिपक्षे च मृद्विवर्तस्य घटादेः कनकं प्रतीवाविद्याख्यदोषविवर्तस्य रजतस्य पुरोऽवस्थितं प्रत्यपृथग्विशेषणत्वायोगाच्चेति अतो जीवेश्वरसामानाधिकरण्यमयुक्तम्। किं च तत्त्वमस्यादिवाक्येषु ब्रह्मवाचिपदसमभिव्याहृतं त्वमादिजीववाचिपदं किम्मुख्यार्थाप्रहाणेन समानाधिकरणं? मुत तत्प्रहाणेन? प्रथमे वस्तुनस्सविशेषत्वं दोषार्हतदनर्हयोरैक्यापत्तिश्च, द्वितीये जीवब्रह्मणोरैक्यं न सिध्येत् जीवभावस्य मिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च न सिध्येत् प्रकृत्यंशविवक्षिता यैकत्वपरायास्समानविभक्तेस्तदविवक्षितार्येकत्वप्रतिपादनासामर्थ्यात् तदविवक्षितविशेषणमिथ्यात्वप्रतिपादनासामर्थ्याच्च न हि प्रहृष्टो जनपदः अग्निर्माणवक इत्यत्र जनपदप्रहर्षवतोरग्निमाणवकयोश्चैकत्वं जनपदत्वाग्नित्वयोर्मिथ्यात्वेन तदधिष्ठानमात्रपारमार्थ्यं च सिध्यति जनपदशब्देन वाच्यबहिर्भूतो लक्ष्यते त्वंशब्देन तु वाच्यैकदेशो लक्ष्यत इति तस्य तत्त्वविधानेऽधिष्ठानैक्यं विरोधाज्जीवभावमिथ्यात्वं च सिध्यतीति चेत् न तत्त्वमादिशब्दानां ज्ञातृपदसमानाधिकरणानां ज्ञप्तिवैयधिकरण्येन ज्ञप्तिवाचित्वासिद्ध्या वाच्यैकदेशलक्षणाया दुर्वचत्वात्। तत्सिद्धावपि नाधिष्ठानैक्यम् इतराकारमिथ्यात्वम् च सिध्येत् न हि दूरस्थस्य पर्वतस्याग्रे ज्वलन्तमग्निं दृष्ट्वा पर्वतो ज्वलित इत्युक्ते पर्वताग्न्योरेकत्वं सान्वादिप्रदेशान्तरमिथ्यात्वेनाधिष्ठानमात्रपारमार्थ्यं च सिध्यति अतो विवक्षितैकत्वजीवभावमिथ्यात्वासिद्धेः, अतस्सर्वं सामानाधिकरण्यं मृषावादिनां विरुद्धम्। औपाधिकभेदाभेदपक्षेऽपि मुख्यया वृत्त्या सामानाधिकरण्यमनुपपन्नं तथा हि ईश्वर एव हि ब्रह्म तन्मते जीवेश्वरयोरचिदीश्वरयोश्च क्लेशकर्माद्यर्हत्वतदनर्हत्वपरिणामित्वापरिणामित्वलक्षणविरुद्धस्वभावायोगात्तद्वाचिशब्दानां घटपटादिशब्दानामिव न सामानाधिकरण्यम् अनुपपन्नं भेदवदभेदस्यापि विद्यमानत्वात्तदुपपत्तिरिति चेत् न सत्यपि केनाप्याकारेणैक्ये प्रवृत्तिनिमित्तभा-

बाधात्रलक्षणे विशेष्यांशभेदे प्रतीयमाने समानविभक्तेरेकत्वप्रतिपादनासामर्थ्यात्. यतः प्रथमपदप्रतिपन्नविशेष्यात्पदान्तरविशेष्यस्यांशतोऽपि भेदासहमभिन्नत्वमेव सामानाधिकरण्यात्रबोध्यम् अत एव हि खण्डमुण्डयोर्व्यक्तिजात्यात्मना घटशरावयोः कार्यकारणरूपेण गोपुच्छयोरेकदेशैकदेशिभावेन च भिन्नत्ववदभिन्नत्वेऽभ्युपगम्यमानेऽपि खण्डोमुण्डोघटश्शरावो गौः पुच्छमिति सामानाधिकरण्याभावः । ननु चिदचितोर्ब्रह्मैकदेशत्वात् शुक्लः कृष्णो रक्तश्चायं पट इतिवत् "व्यक्तं विष्णुस्तथा व्यक्तं पुरुषः काल एव च" त्यादिसामानाधिकरण्यमुपपद्यते नैवम् एकदेशैकदेशिभावे सत्यप्यङ्गुलिः पुरुष इति सामानाधिकरण्यादर्शनात् । ननु शुक्लादिशब्दतुल्यत्वं किं न स्यात् उच्यते पटस्यांशभेदे शुक्लादिशब्दानां पटशब्दश्रवणात् प्राक् मिथस्सामानाधिकरण्याभावे च सत्यपि शौक्ल्यादीनामपृथक्सिद्धविशेषणतया शुक्लादिशब्दैर्विशेष्यपर्यन्तैस्संहत्य चित्रशब्देनेवाभिहिताद्विशेष्यात्पटशब्दाभिहितविशेष्यस्यांशतोऽप्यनतिरेकात् सामानाधिकरण्य हस्तादीनामेकदेशानां वन्दनाद्यर्हाणामेकदेशिनं प्रत्यपृथक्सिद्धविशेषणत्वं नास्ति छेदनादावपीन्द्रियाणामविनाशित्वात् तद्गोलस्याप्रच्युतस्वरूपत्वाच्च एवं सति छिन्नहस्तादिवत् मृतशरीरस्याप्यप्रच्युतस्वरूपत्वोपलम्भादात्मानं प्रति तस्यापृथक्सिद्धिर्न स्यादिति चेत् न शरीराख्यसंघातशैथिल्यानन्तरमेव आत्मोत्क्रमणात्पश्चाच्छरीरबुद्धेर्दग्धपटे पटबुद्धिन्यायेन भ्रान्तिरूपत्वात् हस्तादीनां तु छेदनदशायामशिथिलत्वांशानां पश्चाच्छैथिल्यमिति विशेषः अतस्तद्वाचिशब्दानां हस्तादिमात्रवाचित्वाद्धस्ताद्यवयवसंघातात्मकस्यैकदेशिनो हस्तादिमात्रातिरेकादनतिरेकलक्षणमेकत्वं प्रमाणविरुद्धतया समानविभक्तिर्न प्रतिपादयितुं शक्नोति । ननु हस्तत्वादयो धर्माश्शौक्ल्यादिवदपृथक्सिद्धाः पटस्येव शरीरादेरेव वर्तन्ते अतः शुक्लः कृष्णः पट इति वस्तु हस्तः पादो मनुष्य इति वक्तुं युक्तमनभिज्ञत्वाल्लोको न प्रयुङ्क्ते उच्यते युत्त्यनभिज्ञोऽपि शुक्लादिशब्दान् विशेष्यपर्यन्तान् प्रयुङ्क्ते न तु हस्तादिशब्दानेकदेशिपर्यन्तान् अतोऽभिज्ञानभिज्ञप्रयोगानुगुणं व्यवस्थापकं वक्तव्यं तद् ब्रूमः केचित्पृथक्सिद्धधर्माः कस्यचिदेकदेश एव नियमेन वर्तन्ते

एकदेशे चान्यत्र वा केचिदनियमेन वर्तन्ते तत्र नियतैकदेशवृत्तिधर्मवाचिनश्शब्दास्तदेकदेशभूतद्रव्यमात्रे वर्तन्ते एकदेशप्रतीत्युत्पादननियमादेकदेशतयैव हस्तादयः प्रतीयन्ते एकदेशवृत्तिनियमरहितधर्मवाचिनः शब्दा एकदेशत्वप्रतीतिनियममपहाय विशेष्ये वर्तन्ते अतश्शुक्लादिशब्दैरेकदेशत्वं हित्वा तदाश्रयमात्रोपस्थापनात् तदुपस्थापिताश्रयात् पटत्वाश्रयस्यानतिरेकात् पटशब्दस्य सामानाधिकरण्यं युक्तम् एकदेशमात्रोपस्थापकैर्हस्तादिशब्दैरेकदेशिनोऽनुपस्थापितत्वेन हस्तादिप्रातिपदिकप्रतिपन्नविशेष्यातिरेकात् सामानाधिकरण्यमयुक्तम्। यदि क्वचित् सामानाधिकरण्यं विद्यते अत्र हस्तादिशब्दस्य तद्वति लक्षणतया वा मनुष्यादिशब्दस्य तदेकदेशलक्षणया वा प्राधान्याद्यभिप्रायेणोपचाराद्वा स्यात् छिद्रमाकाशमित्यत्र त्वाकाशत्वस्य समुदायान्यवृत्तित्वाभावेन छिद्रेषु पुष्कलतयाऽनेकदेशलक्षणाज्जीवत्वचित्त्वाचित्त्वादिधर्माश्च त्वन्मते ब्रह्मणो नियतैकदेशवृत्तय इति न तद्वाचिशब्दैरीश्वरवाचिशब्दानां मुख्यया वृत्त्या सामानाधिकरण्यम्। ननु शिरः पाणिरुदरं पायुश्च शरीरमिति च दृश्यते प्रयोगः सत्यं, प्रभूतकत्वावयवोपादानेऽवयविनस्तदनतिरेकात्सामानाधिकरण्यसम्भवात्प्रत्येकं सामानाधिकरण्यं तु एकदेशलक्षणाप्रसङ्गादमुख्यमेव एवं चिदचिद्विशेषवाचिशब्देष्वेकैकस्येश्वरवाचिपदसामानाधिकरण्यमयुक्तं स्यात् एकदेशवाचिशब्दानामेकदेशिनि शक्त्यभावात् "व्यक्तं विष्णुस्तथाऽव्यक्तं" "ज्योतींषि विष्णुर्भुवनानि विष्णुर्भूतानि विष्णुर्भुवनानि विष्णुरि"ति हि प्रत्येकसामानाधिकरण्यम् अहं सर्वमित्यचिज्जीववाचिपदयोरचिदीश्वरचिदीश्वरयोरपि तद्वदेव सामानाधिकरण्यमयुक्तं सर्वत्रामुख्यया वृत्त्या ब्रह्मोपस्थापनेन सामानाधिकरण्ये स एव दोषः मुख्यसामानाधिकरण्ये सम्भवत्यमुख्यतयाऽऽश्रयणस्यान्याय्यत्वात्। स्वाभाविकभेदाभेदपक्षेऽपि भोक्तृभोग्यनियन्तॄणां त्रयाणामपि ब्रह्मांशत्वाभ्युपगमात् अचिज्जीवयोरचिदीश्वरयोर्जीवेश्वरयोश्च सामानाधिकरण्यं घटश्शराव इति वदनुपपन्नमित्येतदवस्थितम्। अंशतोऽपि विशेष्यभेदासहस्यैवाभेदस्य सामानाधिकरण्यबोध्यत्वात्तेषां ब्रह्मसामानाधिकरण्यमपि चिन्त्यं ब्रह्मवाचिपदानां सत्यद्रव्यत्वा-

द्विसाधारणाकारः प्रवृत्तिनिमित्तं चेत्तत्त्वमसीत्युक्तेत्युदसि द्रव्यमसीत्युक्तं स्यात् तदानीमुपदेशवैयर्थ्यं, न हि कश्चिदहम् असद् द्रव्यमिति मन्यते सदन्तरैकत्वमुपदेष्टव्यमिति चेन्न तस्य सामानाधिकरण्यबोध्यत्वाभावात् सामानाधिकरण्यं हि पूर्वनिर्दिष्टस्य विशेष्यस्य पदान्तरोपस्थापितविशेषणान्वयमवगमयति न तु तद्विशेषणान्वितवस्त्वन्तरैक्यं न हि ब्राह्मणस्त्वमसीत्युक्ते त्वंशब्दनिर्दिष्टस्य ब्राह्मणान्तरैक्यं प्रतिपादितं भवति किं तु तस्य ब्राह्मणत्वविशेषवैशिष्ट्यमेव अतो विवक्षितैकत्वासिद्धेरुपदेशवैयर्थ्यमेव यद्यंशविशेषासाधारणाकारः प्रवृत्तिनिमित्तं तदा तत्त्वमसीत्युक्ते निरतिशयबृहद्सीत्युक्तं स्यात् ततश्चाणोर्जीवस्य निरतिशयबृहत्त्वविरोधः, त्वं निरतिशयबृहद्वस्तुनोंऽश इत्यर्थश्चेदेकदेशलक्षणा, न हि ब्रह्मशब्दस्य बृहदेकदेशो मुख्यार्थः एवमसाधारणाकारान्तरस्य प्रवृत्तिनिमित्तत्वेऽप्यनुपपत्तिर्द्रष्टव्या ततः कुदृष्टित्रयप्रत्यनीकसामानाधिकरण्यं भाष्यकारपक्ष एव मुख्य व्याख्यान्तरोक्तनिर्वाहेद्वदुक्तनिर्वाहस्य, वैषम्यम् । किं चात्यन्तभेदे सिद्धे हि शरीरशरीरिभावः स एव नास्ति कालविशेषे ऐक्यप्रतिपादनात् "पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि सकाशादात्मनस्तद्वदात्मनः प्रभवन्ति ही"त्यादिभिश्चिदचितोरुत्पत्तिप्रलयप्रतिपादनात् कार्यकारणयोरेकद्रव्यत्वाच्च, न ह्येकमेव वस्तु शरीरं शरीरि भवति, तस्मात्स्वरूपपरिणामपक्षेणैव निर्वाहो वरमिति शङ्कापरिहारार्थं सकलश्रुतीनां मुख्यार्थत्वज्ञापनार्थं तेषु तेषु प्रदेशेषु विकीर्णानामर्थानां सङ्कलय्य प्रदर्शनेन संग्रहत्वापादनार्थमारभते-

मू० अथेदं तत्त्वम् अचिद्वस्तुनश्चिद्वस्तुनः परमस्य च ब्रह्मणो-
भोग्यत्वेन भोक्तृत्वेनेशितृत्वेन च स्वरूपविवेकमाहुः
काश्चन श्रुतयः "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चा-
न्यो मायया सन्निरुद्धः" मायां तु प्रकृतिं विद्यान्मायिनं तु
महेश्वरं क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते
देव एकः अमृताक्षरं हर इति भोक्ता निर्दिश्यते प्रधानं

ह्यात्मनो भोग्यत्वेन हरतीति हर: स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप: प्रधानक्षेत्रज्ञपतिर्गुणेश: ॥

टी० "अत्रेदं तत्त्वमि"ति, भोक्तृत्वेन भोग्यत्वेन चेति भोक्तृशितव्यत्वेन तयोरेककोटिनिवेशात् अस्मान्मायीत्यमायाशब्दार्थं निष्कृष्टमुपादत्ते "मायां तु प्रकृतिमि"ति, अन्यशब्दवाच्य आत्मेति स्पष्टयितुमाह "क्षरं प्रधान"मिति, अर्थान्तरभ्रमहेतुत्वाद्धरशब्दं व्याचष्टे "प्रधान"मिति, अत्र व्यक्ताव्यक्तम्भरते विश्वमीश इति पूर्ववाक्ये श्रवणात् धार्यत्वधारकत्वलक्षणभेदोऽपि सिद्ध: ईश्वरोऽपि कर्तव्यतारूपभेदं दर्शयति "स कारण"मिति, करणाधिपाधिपशब्दव्याख्यानार्थमाह "प्रधाने"ति, गुणेश:—गुणानां सत्वरजस्तमसान्नियन्ता अनन्येश्वरत्वं दर्शयति—

सू० पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ॥

टी० अनेन शेषशेषिलक्षणभेदोऽपि सिद्ध:, न च पा र क्षणे इति धातोर्व्युत्पन्नत्वात्पतिशब्दो रक्षकवाची न शेषित्ववाचीति वाच्यं शेषिणि निरूढत्वात् अन्यथा "गमेर्डो:"इति डोप्रत्ययान्तगमिधातोर्निष्पन्नत्वात् गोशब्दस्य मनुष्यादिवाचकत्वप्रसङ्ग: गतिमत्सु सर्वेषु प्रयोगाभावात् तिष्ठत्यपि गवि प्रयोगात् तत्र निरूढशक्त्याश्रय इति चेत् एवं "वृद्धौ च मातापितरौ साध्वी भार्या सुत: शिशु: । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवी"दिति न्यायेन पितृसंरक्षके पुत्रे ऽपि पित्रपेक्षया पतिशब्दप्रयोगाभावात् गृहाधरक्षकेऽपि स्वामिनि पतिशब्दप्रयोगाच्च शेषिणि पतिशब्दो रूढ: तथा दासभूतास्स्वतस्सर्वे ह्यात्मन: परमात्मन: तथा "नन्तव्य: परमं शेषी शेषानन्तार ईरिता: नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वक:" इति दासशेषशेषिशब्दप्रयोगो भगवच्छास्त्रेषु दृश्यते पत्यादिशब्दाभावेपि "व्रीहीन् प्रोक्षती"त्यादौ द्वितीयाश्रुत्या प्रोक्षणस्य व्रीह्यादिशेषत्ववत् यस्यात्मा शरीरमित्यादिना जगत: परमात्मशरीरत्वावगमात् शरीरपारार्थ्यस्य च संघातपरार्थत्वादित्यादिभि:

प्रसिद्धत्वाच्च जगद्ब्रह्मणोः शेषशेषिभावसिद्धिः, अतो यथोक्त एव पतिश-
ब्दार्थः मुक्तानामपि भेदसिद्धिं दर्शयति–

मू० "ज्ञाज्ञौ द्वावजावीशानीशौ" "नित्यो नित्यानां चेतनश्चेत-
नानामेको बहूनां यो विदधाति कामान्" "भोक्ता भोग्यं
प्रेरितारं च मत्वा" "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो-
भिचाकशी"ति "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्त-
तस्तेनामृतत्वमेति" "अजामेकां लोहितशुक्लकृष्णां बह्वीं
प्रजां जनयन्तीं सरूपाम् अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः" "समाने वृक्षे पुरुषो निम-
ग्नोऽनीशया शोचति मुह्यमानः" "जुष्टं यदा पश्यत्यन्य-
मीशमस्य महिमानमिति वीतशोक" इत्याद्याः ॥

टी० "ज्ञाज्ञौ द्वावजा"विति, उत्पत्तिप्रलयाभावप्रतिपादनं दर्शयति
"नित्यो नित्याना"मिति, आकारान्तरेण भेदमाह "भोक्ते"ति, भगवतो
ऽस्पृष्टदोषत्वं दर्शयति "तयोरि"ति, भेदज्ञानस्य मोक्षहेतुत्वमाह "पृथ-
गि"ति, मुक्तो भेदमाह "अजा"मिति, जीवेश्वरयोः स्वतो भेदं सविशेषत्वं
च स्पष्टयितुमाह "समाने"ति, पृथक्त्वज्ञानस्य मोक्षोपायत्वपरवाक्यद्वयस्य
मध्ये अजामेकामित्यादिवाक्यमुपात्त समाने वृक्षे अजामेकामिति प्रधान-
प्रसङ्गोपेतत्वसाम्यात् जुष्ट–प्रियमाणं

मू० स्मृतावपि "अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा अपरे-
यमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूतां महाबाहो
ययेदं धार्य्यते जगत् सर्वभूतानि कौन्तेय प्रकृतिं यान्ति
मामिकाम् कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः भूतग्रामभिमं

कृत्स्नमवशं प्रकृतेर्वशात् मयाऽध्यक्षेण प्रकृतिस्सूयते स च-राचरम् हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् सम्भवः सर्वभूतानां ततो भवति भारतेति जगद्योनिभूतं महद्ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु तस्मिंश्चेतनाख्यं गर्भं संयोजयामि ततो मत्सङ्कल्पकृताच्चिदचित्संसर्गाद्देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां सम्भवो भवतीत्यर्थः ॥

टी० स्मृतावपीति अष्टधा भिन्ना प्रकृतिर्ममेत्यनेन कारणावस्थायामपि भेदसिद्धिः, मामिकां प्रकृतिं कल्पक्षये यान्तीत्यत्रापि तथा प्रकृतिं स्वामवष्टभ्य विसृजामीत्यत्रापि तथा मयाऽध्यक्षेणेत्यत्र तु स्वभावसङ्करः कारणावस्थायां भेदश्च सिध्यति प्रकृतिमित्यत्रानादित्वकण्ठोक्तिः ममेत्यत्रापि कारणावस्थायामपि भेदसिद्धिः उदाहृतस्मृतिवचनेषु व्याख्येयांशं व्याचष्टे "जगद्योनि"रिति, जगद्योनीति शब्देन त्रिगुणं तज्जगद्योनिरिति वचनं स्मर्यते कार्यावस्थाव्यावृत्त्यर्थं भूतसूक्ष्ममित्युक्तम् । एवं चिदचिदीश्वरभेदे सति कथमेकत्वावधारणमुपपद्यत इति शङ्कायां घटकश्रुतीरवतारयति—

सू० एवं भोक्तृभोग्यरूपेणावस्थितयोस्सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयतीत्यारभ्य यः आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा

शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत” इति तथा “यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेदेत्यारभ्य योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्मा ऽपहतपाप्मा दिव्यो देव एको नारायणः” अत्र मृत्युशब्देन तमःशब्द-वाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते अस्यामेवोपनिषदि “अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते” इति वचनात् ॥

टी० “एवमि”ति, यः पृथिवीमन्तरे सञ्चरन्निति सुबालोपनिषदि श्रूयते मरणयमादिव्यावृत्त्यर्थं मृत्यु-शब्दं व्याचष्टे “अत्रे”ति, लीयते इति वचनात् क्रमप्रत्यभिज्ञानादित्यर्थः यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरमिति क्रमोऽप्यव्यक्तमक्षरे लीयते अक्षरं तमसि लीयत इति क्रमेण सङ्कुच्यते तमस एकीभावमात्रं श्रुतं न लयः, तमसस्तु प्रहाणाभावात् कार्यानुपयुक्ततमःशरीरत्वे कार्योपयुक्तस्य तस्यैकीभावः मृत्युसंज्ञस्य तमसः शरीरत्वश्रवणात् विशेषणभूततमसा तमस एकीभावो युक्तः स्यात्मत्व-विवरणायाह—

मू० “अन्तःप्रविष्टः शास्ता जनानां सर्वात्मे”ति च, एवं सर्वाव-स्थावस्थचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावतिष्ठत[1] इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत्स-द् एवेत्याहुः, “सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेति तत्तेजोऽसृजतेत्यारभ्य सन्मूलाः

१ जगद्रूपेणावस्थित इति पा० ।

सोम्येमास्सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति, तथा "सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजतेत्यारभ्य सत्यं चानृतं च सत्यमभवदित्याद्याः, अत्रापि श्रुत्यन्तरसिद्धश्चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः "हन्ताहमिमास्तिस्रो देवताः—

टी० "अन्तःप्रविष्ट" इति, अन्तःप्रविष्ट इत्यनेनापि शरीरात्मभावः फलितः, अन्तःप्रविश्य नियाम्यत्वं हि शरीरत्वम् अन्तःप्रवेशशास्तिभ्यां नृपगगनव्यावृत्तिरितीदमपि शरीरलक्षणं भाष्यकाराभिप्रेतं भेदश्रुतिघटकश्रुत्यविरोधेनैक्य[1]वाक्यानामर्थमाह "एव"मिति, घटकतयोपात्त सन्मूला इति अत्रापीति—छान्दोग्यप्रकरणे तैत्तिरीयके चेत्यर्थः, हन्ताहमित्यादिछान्दोग्ये तत्सृष्ट्वेत्यादि तैत्तिरीयके जीवेनात्मनेत्यस्य । व्याख्यानार्थमाह—

स्रू० अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनु प्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं च सत्यञ्चानृतं च सत्यमभवदि"ति च अनेन जीवेनात्मनानुप्रविश्येति जीवस्य ब्रह्मात्मकत्वं तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं चेत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते एवंभूतस्यैव नामरूपव्याकरणं "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपव्याक्रियत इत्यत्राप्युक्तम् ॥

टी० "अनेने"ति, अनुप्रवेशश्रवणाभावेऽपि सामान्येनोक्तं नामरूपव्याकरणमनुप्रवेशपूर्वकनामरूपव्याकरणे पर्यवस्यतीति । सामान्यविशेषन्या-

१ ऐक्यबोधकवाक्यानामित्यर्थः ।

यादित्याह "एवं भूतमेवे"ति, । यद्वा सर्वशाखाप्रत्ययन्यायेन क्वचिदनुक्तस्यान्यतो ग्राह्यत्वात् क्वचिज्ज्ञातोऽनुप्रवेशः कार्योपयिकतया अपेक्षितत्वादन्यत्रापि स्वीकार्य इत्याह "एव"मिति, एवं भूतशब्दोऽनुप्रवेशपूर्वकत्वपरः, अनेन नामरूपव्याकरणश्रुत्युपपादानेन जीवानामुत्पत्तिप्रलयौ नामरूपव्याकरणतदभावौ न तु स्वरूपनिष्पत्तिविनाशावित्युक्तं भवति, अनेन पूर्वोक्तशङ्का च परिहृता कालविशेषेऽक्मृ ऐक्यं नामरूपव्याकरणाभावमात्रं न तु स्वरूपैक्यमित्यवगमात् । अथ सर्वश्रुतीनाम् अस्मिन्नर्थे मुख्यत्वं दर्शयन् प्रथममेकविज्ञानेन सर्वविज्ञानं परमतेऽनुपपन्नमिति प्रागुक्तं स्वमत उपपन्नमित्याह—

सू० अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्य्यस्यानन्यत्वेन कारणविज्ञानेन कार्य्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरं "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽऽनुप्रविश्य नामरूपे व्याकरवाणी"ति तिस्रो देवता इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात्सर्वे वाचकाः शब्दा अचिद्विशिष्टजीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्य्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् ।

टी० "अत" इति, कार्यकारणयोरैक्यप्रतिपादनात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् सामानाधिकरण्याच्चेति त्रिधा ह्यद्वैतप्रतीतिः, तत्र पूर्वोक्तद्वयमस्मदुक्तप्रकारेणोपपन्नमित्यत इत्यादिभाष्येणोक्तं भवति विशिष्टं कारणं तदेव कार्यमिति कारणात्कार्यस्यानन्यत्वमतः कार्यकारणैक्यपराणां श्रुतीनां तयोरेकद्रव्यत्वमेव प्रतिपाद्यं न तु विशिष्टत्वनिषेधः तस्य विहितत्वात्, एकविज्ञानेन सर्वविज्ञानमपि एवमेव यथा मृत्पिण्डेन तत्कार्यज्ञानेऽपि पिण्डगतरूपादिनिषेधो न कृतः स्यात् तद्वत् उपपन्नतरमिति

तरप्प्रत्ययेन मुख्यत्वं सर्वत्रापि विवक्षितम्, एवं सद्विद्योपक्रमगतस्यैकवि-ज्ञानेन सर्वविज्ञानस्य मुख्यत्वमुक्तम्। अथ तदुपसंहारगतस्य तत्त्वमसीति सामानाधिकरण्यस्य मुख्यत्वमाह "अहमिमा" इति, उपादानत्वस्व-भावासङ्करो कथमुपपद्यते इत्यत्राह—

मू० अतः स्थूलसूक्ष्मचिदचित्प्रकारकं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत्सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि संघातस्योपादानत्वेन चि-दचितोर्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः, यथा शुक्ल-कृष्णरक्ततन्तुसंघातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्र-देश एव शौक्ल्यादिसंबन्ध इति कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः, तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जग-तः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः

टी० "अतः स्थूले"ति, भाव्यवस्थाविशेषवतः प्रागवस्यायोगो ह्युपादा-नत्वम् अतोऽवस्थाविशेषौ स्थूलसूक्ष्म—शब्दाभ्यां दर्शितौ, अनेन कालविशे-षावच्छिन्नैकत्वावधारणं नामरूपविभागाभावाभिप्रायमिति फलितम्। उपा-दानत्वेऽपि स्वभावासङ्करमाह "सूक्ष्मे"ति, । दृष्टान्तेनेममर्थमुपपादयति "यथे"ति, ननु शुक्लकृष्णादितन्तवः कारणावस्थायामपि भिन्नाः न च ते-ष्वन्यतमं प्रत्यन्यतमस्य कारणत्वम् अतस्तत्र स्वभावासङ्करः, अत्र तु विश्वस्य सङ्घातोपादानत्वेऽपि कारणावस्थायां परमात्मैक एव स्वशब्देन श्रूयते न तु चेतनाचेतनौ, किं च परमात्मनः प्रागेकत्वं तस्मादितरयोर्द्वयोरुत्पत्त्या-दिकं च श्रूयते अतो न स्वाभावासङ्कर इत्यत्राह—

मू० तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्सं-हतानां कारणत्वं कार्यत्वं च, इह तु चिदचितोस्सर्वावस्था-वस्थितयोः परमपुरुषशरीरत्वेन तत्प्रकारतया पदार्थत्वा-

तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः, स्वभावभेदस्तदसङ्करश्च तत्र चात्र च तुल्यः, एवं सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावाद- विकृतत्वमुपपन्नतरम्, स्थूलावस्थस्य नामरूपविभागविभ- क्तस्य चिदचिद्वस्तुनः आत्मतया ऽवस्थानात्कार्य्यत्वमप्यु- पपन्नतरम्, अवस्थान्तरापत्तिरेव हि कार्य्यता

टी० "तन्तूना"मिति. न हि तन्तुष्वन्योन्यगुणप्रधानभावोऽस्तीति न तत्रान्यतमवाचिना शब्देन समुदाय उच्यते अत्र तु सर्वकार[1]णस्य भगव- तस्सर्वशब्दवाच्यत्वमुपपन्नमित्यन्यतमवाचिना शब्देनापि विशिष्टमेवोच्यत इति विशिष्टस्यैव कारणत्वात् प्रागपि भेदोऽस्तीति स्वभावासङ्कर उपपन्न इत्यर्थः । केनाकारेण साधर्म्य? मित्यत्राह "स्वभावे"ति, समागतेतरपदा- र्थानां लवणत्वापत्तिवत् ब्रह्मणोऽन्यथाभावमाशङ्क्याह "एवं चे"ति, तर्ह्यु- पादानत्वमेव अनुपपन्नमित्यत्राह "स्थूलावस्थस्ये"ति, आत्मतया ऽवस्था- नात् कथं कार्यत्वमित्यत्राह "अवस्थे"ति, अविकारत्वश्रुतीनां प्रकृतिगत- स्वरूपान्यथाभावरूपविकारो ब्रह्मणि नास्तीत्यर्थः

सू० निर्गुणवादश्च परस्य ब्रह्मणो हेयगुणासम्बन्धादुपपद्यते "अपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सो ऽपि- पास" इति हेयगुणान् प्रतिषिध्य "सत्यकामस्सत्यसङ्कल्प" इति कल्याणगुणान् विदधतीयं श्रुतिरेवान्यत्र सामान्ये- नावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ॥

टी० कार्यावस्थचिदचिन्नियमनरूपावस्थान्तराऽऽपत्तिर्ब्रह्मणः का- र्यत्वमिति कार्यत्ववादिनीनां श्रुतीनामर्थः, न हि कारणावस्थनियमनं का- र्यावस्थनियमनं भवति तत्तदवस्थचिदचिन्नियमनरूपविशेषा एव ब्रह्मणोऽ-

१ सर्वप्रकारस्येति तु पु० ।

द्वारकावस्थाः स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपविकारास्तु सद्वारकावस्था इत्यर्थः । यथा ग्राहकग्रहणेन सविधिसमाम्नातेषु वस्तुषु परमापूर्वशेषतया ऽवगतेषु यागव्रीह्यादेरद्वारकशेषत्वं प्रोक्षणादेस्सद्वारकशेषत्वं च मुख्यमेवावगम्यते तथा बहु स्यामिति ग्राहकग्रहणेन सर्वावस्थासु परमात्मीयतयाऽवगतासु स्वरूपान्यथाभावज्ञानसङ्कोचादिरूपसद्वारकावस्थायास्तत्तन्नियमनरूपाद्वारकावस्थायाश्च परमात्मीयत्वं मुख्यमेवेति भावः । निर्गुणेति अपहतपाप्मत्यादि चात्र किञ्चिद्विरुद्धं श्रुतिरेवेति मतान्तरोक्तनिर्वाहेषु श्रुतहानमश्रुतकल्पनं चास्ति, अत्र तु निर्वाहः श्रौत एव श्रुत्यनुगुणश्चेति वैषम्यमिति भावः । अथार्थगुणनिषेधपरत्वेन पराभिमतानां श्रुतीनामर्थमाह—

सू० ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वप्रकाशतया ज्ञानस्वरूपं चेत्युपगमादुपपन्नतरः, "यः सर्वज्ञः सर्ववित्" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "विज्ञातारमेव केन विजानीयादित्यादिकाः ज्ञातृत्वमावेदयन्ति, सत्यं ज्ञानमित्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानरूपतां "सोऽकामयत बहु स्यां तदैक्षत बहु स्यां तन्नामरूपाभ्यां व्याक्रियते"ति ब्रह्मैव स्वसङ्कल्पाद्विचित्रस्थिरचरस्वरूपतया नानाप्रकारमवस्थित मिति

टी० "ज्ञानस्वरूप"मिति, सर्वज्ञस्येत्यादिपदानि मङ्गलगुणविशेषविधायिवाक्यस्मरणार्थानि तद्गुणसारत्वादित्यादिसूत्रसिद्धमेवात्र निर्वाहद्वयमुक्तम् ईश्वरस्य ज्ञातृत्वात् ज्ञानैकनिरूपणीयत्वमुक्तं, ज्ञातुर्हि ज्ञानं निरूपकं तदपेक्षया मुख्यत्वमर्थः, ज्ञानस्वरूपत्वज्ञानगुणा[1]करत्वपराः श्रुतीर्दर्शयति "यस्सर्वज्ञ" इति, ज्ञानस्वरूपताम् उभयथाऽपि ज्ञानव्यपदेशयोग्यतां ज्ञानगुणक-

१ ज्ञानस्वरूपत्वज्ञानगुणाकत्वपरा इति पा० ।

त्वस्य ज्ञानस्वरूपत्वस्य च विहितत्वादुभयमप्युपपन्नमित्यर्थः । ज्ञानस्य ज्ञानाश्रयत्वानुपपत्तिचोद्यस्य परिहारः पूर्वमेव कृतः । भेदनिषेधश्रुतीनामर्थमाह "सोऽकामयते"ति, विचित्रस्थिरत्रसरूपतया विचित्रस्थिरत्रसशरीरतया अब्रह्मात्मकेति

सू० तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वमिति तत्प्रतिनिषिध्यते "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति नेह नानास्ति किं च न यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयादित्यादिना न पुनर्बहु स्यां प्रजायेयेत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते "यत्र त्वस्य सर्वमात्मैवाभूदिति निषेधवाक्यादौ च तत्स्थापितम्

टी० ब्रह्मान्तर्यामिकत्वरहितत्वमुक्तं विहितव्यतिरिक्तस्वनिष्ठवस्तुनानात्वमित्यर्थः । यद्वा स्थिरत्रसरूपतया स्थिरत्रसात्मकत्वात् अब्रह्मात्मकेति अब्रह्मभूतमित्यर्थः, तथा सति कार्यकारणभेदनिषेधः कृतः स्यात् ऐक्यश्रुतीनां प्रकार्यैक्यपरत्वादैक्यश्रुतिशेषभूतभेदनिषेधोऽपि तदैक्यानुरोधेन प्रकारिभेदनिषेध एव भवितुमर्हतीत्यर्थः निषेधसामान्यं हि विशेषविधाने दृष्टे तद्व्यतिरिक्तविषयं दृष्टं न हिंस्यादित्यादिषु विशेषविधानं सामान्यनिषेधो बाधते चेत् वैधहिंसाया अधर्मत्वप्रसङ्ग इत्यभिप्रायेणाह "न पुनरि"ति, उक्तमर्थमुपक्रमेणैवोपपादयति "यत्र त्वस्ये"ति,—

सू० "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतदृग्वेद इत्यादिना एवं चिदचिदीश्वराणां स्वभावभेदं स्वरूपभेदं च वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वं वदन्तीनां च सर्वासां श्रुतीना-

मविरोधः, चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मादशापत्तिं कार्य्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति ब्रह्माज्ञानवादस्यौपाधिकब्रह्मभेदवादस्यान्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथंचिदप्यवकाशो दृश्यते।

टी० "योऽन्यत्रात्मन" इति, अन्यत्रेत्यव्ययं विनाशब्दपर्यायं ब्रह्मणः पृथग्भूतं तदविनाभावरहितं नास्तीत्यर्थः, भेदविशेषनिषेधदर्शनात्सामान्येन भेदनिषेधोऽपि तत्रैव पर्यवस्यति छागो वा मन्त्रवर्णादिति न्यायादिति भावः इतरव्याख्यातृभिर्भवद्भिरपि निर्वाहप्रकाराः कृताः तत्र को विशेष इत्यत्राह "एवमि"ति, अस्मदुक्तनिर्वाहः श्रुतिभिरेवोक्तः श्रुत्याद्यनुगुणश्च तत्कृतस्तु निर्वाहः श्रुतिविरुद्धो ऽश्रुतस्तर्काभासमूलश्चेत्यर्थः। अपन्यायमूलस्य सकलश्रुतिविरुद्धस्येति सर्वत्रान्वेति अन्यस्येति स्वाभाविकभेदाभेदं स्वनिष्ठभेदं चाह इममर्थं वैदिकदृष्टान्तेनोपपादयति—

मू० चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्तरेण कार्य्यकारणभावप्रतिपादनं कार्य्यकारणयोरैक्यप्रतिपादनं च ह्यविरुद्धमिति सिद्धम्। यथाग्नेयादीन् षड् यागानुत्पत्तिवाक्यैः पृथगुत्पन्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् दर्शपूर्णमासाभ्यामित्यधिकारवाक्यं कामिनः कर्तव्यतया विदधाति तथा चिदचिदीश्वरान् विविक्तस्वरूपस्वभावान् "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः पतिं विश्वस्यात्मेश्वरम् आत्मा नारा-

यण: पर इत्यादिवाक्यैः पृथक् प्रतिपाद्य "यस्य पृथिवी शरीरं यस्यात्मा शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इत्यादिभिर्वाक्यैः चिदचितोः सर्वावस्थावस्थितयोः परमात्मशरीरतां परमात्मनस्तदात्मतां च प्रतिपाद्य

टी० "चिदचिदीश्वराणामि"ति, आग्नेयः आग्नीषोमीयोपांशुयाजौ ऐन्द्रौ द्वौ ऐन्द्राग्नश्चेति षड् यागाः उत्पत्तिवाक्यमिति प्रथमप्रतिपत्तिजनकं वाक्यं पृथगुत्पन्नान् पृथक् प्रतिपादितान् उत्पत्तिवाक्यैः यदाऽऽग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती"त्येवमादिभिः समुदायानुवादिवाक्यद्वयेन "य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत" इत्येताभ्यां दर्शपूर्णमासाभ्यामिति स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया विदधातीत्यर्थः तथात्रार्थप्रतिपादनं दर्शयति "तथे"ति,–

मू० शरीरिभूतमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्य्यावस्थश्च परमात्मैक एवेति पृथक् प्रतिपन्नं वस्तुत्रितयं "सदेव सोम्येदमग्र आसीत् ऐतदात्म्यमिदं सर्वं खल्विदं ब्रह्मेत्यादिवाक्यं प्रतिपादयति

टी० शरीरिभूतेति कार्यावस्थः कारणावस्थश्च परमात्मैक एवेति वचनभङ्ग्या पृथक्प्रतिपन्नं वस्तुत्रितयं प्रतिपादयतीत्यर्थः आग्नेयादिसमुदाये अन्यतमवाचिभिः शब्दैस्समुदायाभिधानं न दृष्टम् अत्र तु परमात्मवाचिशब्देन समुदायाभिधानं कथमित्यत्राह "चिदचिद्वस्त्वि"ति, दृष्टान्तमाह "यथे"ति, तत्र अन्योन्यं प्रकारप्रकारिभावाभावादन्यतमवाचिशब्देन न समुदायाभिधानम् अत्र तु तथाभावादुपपन्नं कथम्? उच्यते अर्थसामर्थ्याच्छब्दसामर्थ्याच्च चिदचितोरपृथक्सिद्धप्रकारत्वाच्छिष्टलक्षणः कारणत्वानुपपत्त्या च प्रकारिवाचिशब्देन विशिष्टोपस्थापनसिद्धिः सद्ब्रह्मशब्दो विशिष्टस्य सत्त्वबृहत्त्वयोगाद्विशिष्टोपस्थापनसमर्थौ, आत्मशब्दश्च

व्याप्तिरूपप्रवृत्तिनिमित्तस्य व्याप्यसापेक्षत्वाद्विशिष्टोपस्थापक इति । यद्वा "अक्षरात् सम्भवतीह विश्वं" "यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" "आत्मन आकाशस्सम्भूत" इत्यादिषु परमात्ममात्रवाचिभिश्शब्दैः कारणमुच्यते तेषां विशेषणभूतचिदचिदभिधाने शक्तिर्नास्ति लक्षणायां स एव दोषः अतस्सर्वत्र स्वरूपपरिणाम एव स्वरसप्राप्त इत्यत्राह—

सू० चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः, यथा मनुष्यपिण्डशरीरकस्यात्मविशेषस्यायमात्मा सुखीत्यात्मशब्देनाभिधानेनेत्यलमविस्तरेण । यत्पुनरिदमुक्तं ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति, तदयुक्तम् बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात् पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेशतत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम् ॥

टी० "चिदचि" दिति, श्रुत्यन्तरबलेन स्वरूपविकारासम्भवात्कार्योपयुक्तमनुक्तमपि विशेषणं पृषदाज्यनयादर्थस्वभावेन सन्निधापितमनुसन्धेयमिति भावः । तदेव लोकप्रयोगेणापि द्रढयति "यथे" ति, अयमात्मा सुखीत्यात्मविशेषस्य सुखित्वविधाने शरीररहितस्यात्मनो वैषयिकसुखासम्भवात्तादृशसुखोपयुक्तमनुष्यादिपिण्डविशिष्टत्वमर्थतः सिध्यति तद्वदिति भावः । निवृत्त्यनुपपत्तिं वक्तुमनुवदति "यत्पुन" रिति, दूषयति तदयुक्तमित्यादिना, प्रपञ्चस्य ज्ञानबाध्यत्वं ज्ञानस्य चैक्यविषयत्वमुभयमपि पराभिमतं तत्र प्रथमं ज्ञानबाध्यत्वानुपपत्तिमाह "बन्धस्ये" ति, सर्वप्रमाणानुगुणं पारमार्थ्यमुपपादयति "पुण्यापुण्य" ति, प्रतीतिमात्रसिद्धस्य हेतुहेतुमद्भावनियमोऽनुपपन्नः परमार्थस्यैवार्थक्रियाकारित्वादुत्पत्तिमत्त्वाच्च असत्यस्य हेतुत्वासम्भवमुत्पत्त्यसम्भवं च प्रागुपपादितम् उपजीव्योक्तं न हि प्रतीतिमात्रसिद्धमन्यत्र विद्यमानं वस्त्विह किमप्युत्पादयति, नापि स्वयमिदानीमुत्पाद्यते

सू० एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वोक्तम्, भवदभिमतस्यैक्यज्ञानस्य यथाऽवस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धनिवृत्तिरेव फलं भवति मिथ्यैतदन्यद् द्रव्यं हि नैति तद् द्रव्यतां यत" इति शास्त्रात् ॥

टी० किं चापरमार्थस्य भ्रान्तिज्ञानसामग्रीव्यतिरिक्तहेतुसापेक्षत्वं च न दृष्टं, न चाङ्कुरादिसामग्र्येव भ्रमसामग्री गिरिशिखरगतमृत्सलिलबीजसंबन्धेन अपवरकगतस्याङ्कुरभ्रमप्रसङ्गात् न चापरमार्थानामर्थक्रियाकारित्वमुत्पत्तिमत्त्वं च मिथ्येति वाच्यं ज्ञानबाध्यत्वाभावात् । किं च मिथ्यात्वे पापकारणेऽपि न प्रायश्चित्तापेक्षा मिथ्येति बुद्धिरेवालमिति भावः । भवतापि ज्ञाननिवर्त्यत्वमविद्यायाया वक्तव्यं तच्च सत्यत्वे कथमुपपद्यत इत्यत्राह "एवं रूपे"ति, परमार्थस्य ज्ञाननिवर्त्यत्वं दृष्टद्वारा नोपपद्यते अपि त्वदृष्टद्वारा यथा सत्यसर्पदष्टविषस्योपासनप्रीतगरुडप्रसादान्निवृत्तिः न तु मिथ्येति ज्ञानात्तथेत्यर्थः । प्रपञ्चस्य ज्ञानानिवर्त्यत्वमुक्तम् ऐक्यज्ञानस्योपायत्वानुपपत्तिमाह "भवदभिमतस्ये"ति, तत्त्वज्ञानं हि मोक्षोपायः भिन्नविषयस्याभेदज्ञानस्या तत्त्वज्ञानरूपत्वाद्विपरीतफलत्वमित्यर्थः । अद्वैतस्यातथ्यत्वे प्रमाणमाह "मिथ्यैत"दिति, ऐक्यस्यातात्त्विकत्वकण्ठोक्तिर्दर्शिता ऐक्यस्यासत्यत्वं यथा फलति तथा भेदज्ञानस्यैव मोक्षसाधनत्वमाह—

सू० "उत्तमः पुरुषस्त्वन्यः" "पृथगात्मानं प्रेरितारं च मत्वे"ति जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च, अपि च भवदभिमतस्य निवर्तकज्ञानस्यापि मिथ्यारूपत्वात्तस्य निवर्तकान्तरं मृग्यं निवर्तकज्ञानमिदं स्वविरोधिसर्वभेदजातं विनिवर्त्य क्षणिकत्वात्स्वयमेव नश्यतीति चेन्न

तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेन विनाशत्कल्पनाकल्पकरूपाऽविद्याया निवर्तकान्तरमन्वेषणीयम् तद्विनाशो ब्रह्मस्वरूपमेवेति चेत् ॥

टी० "उत्तम" इति, स्मृतिवचसोः संगत्यर्थं श्रुतेः पश्चादुपादानम् ऐक्यज्ञानस्य निवर्तकत्वे प्रमाणविरोध उक्तः । अथ तर्कविरोधमाह "अपि चे"ति, दावानलविषनाशकविषदृष्टान्ताभिप्रायेण शङ्कते "निवर्तकज्ञान"मिति, निवर्तकज्ञानं तद्विनाशश्च ब्रह्मव्यतिरिक्त मुत स्वरूपमित्यभिप्रेत्याह "ने"ति, ब्रह्मव्यतिरिक्तत्वाद्घटादेरिव विनाशस्य काल्पनिकत्वं यथा स्वाप्नपदार्थस्वरूपतदुत्पत्तिस्थितीनां काल्पनिकत्वान्नाशश्च काल्पनिकस्तथेति भावः । विनाशकल्पनाकल्पकरूपाविद्याया इति विनाशः कल्प्यः तद्विषयभ्रमबुद्धिः कल्पना कल्पको भ्रमाश्रयादिः एवंरूपाविद्याया इत्यर्थः । स्वरूपपक्षं दूषयति—

सू० तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यात् तद्विनाशे तिष्ठति तदुत्पत्त्यसम्भवात् ॥

टी० "तथा सती"ति, पूर्वस्मिन् पक्षे दूषणं प्रकारान्तरेणाप्युक्तं वेदार्थसङ्ग्रहे भावरूपस्य नाशो ह्युत्तरावस्थाप्राप्तिस्सा चानुपपन्ना ब्रह्मव्यतिरिक्तस्यावस्थावतोऽन्यस्य स्थित्यभ्युपगमे अद्वैतहानिप्रसङ्गादिति भावान्तरं ह्यभावः । घटस्य प्रागभावः पिण्डत्वादिपूर्वावस्था, प्रध्वंसः कपालाद्युत्तरावस्था इतरेतराभावोऽप्यश्वस्य गोत्वाभावोऽश्वत्वं गोरप्यश्वत्वाभावो गोत्वं संसर्गाभावे कथं भावरूपत्वं यदि महीमात्रमेव तर्हि घटसंसर्गे सत्यपि संसर्गाभावः स्यात् यद्व्यतिरिक्तस्तर्ह्यभावोऽङ्गीकृत इति उच्यते भवत्पक्षे अभावाश्रयस्य यद्वैलक्षण्यं तदेव संसर्गाभावो यदि महीमात्रमेव अभावाश्रयः तर्हि भावाश्रयभूतलेऽप्यभावाश्रयत्वप्रसङ्गः तत्रापि महीमात्रसद्भावात् यदि केनचिद्विशेषेण विशिष्टभूतलमभावाश्रयः स एव विशेषस्संसर्गाभाव इति कालविशेषविशिष्टत्वे सति देशविशेषत्वमेव, स च विशेषः तदानीमेव घटसहितप्रदेशान्तरव्यावृत्त्यर्थं देशविशेषत्वमित्युक्तं तस्यैव देशस्य

कालान्तरे घटसाहित्यव्यावृत्त्यर्थं कालविशेषविशिष्टत्वे सतीत्युक्तं, यथाऽऽहुः "संसर्गाभावमेवं विदुरिह सुधियो भावमेव त्वभावम्। मन्वाना: कुम्भवद्भूतलत इतरभूभागभेदस्त्वभावः । यस्तत्तत्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः कुम्भाभावाश्रयोऽन्यैरगाणि स इह नः क्वाधिकस्योपलम्भः" इति नाशस्यावस्थान्तरत्वात्कर्मनाशं वदतस्तवापि चोद्यं तुल्यमिति चेत् न कर्म ह्यस्मत्पक्षे भगवत्प्रीत्यप्रीतिरूपं

सू० अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता? अध्यासरूप इति चेन्न तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात्तत्कर्तृत्वानुपपत्तेः, ब्रह्मस्वरूपमेवेति चेत् ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वम् किं स्वरूपम्? उताध्यस्तम्? अध्यस्तं चेदयमध्यासः तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव ॥

टी० तत्र यः संसारफलानुगुणस्सङ्कल्पः तद्विनाश्यं कर्म यस्तु मोक्षानुगुणस्सङ्कल्प स एव पूर्वस्य नाश इत्युपपन्नमेव "धातुः प्रसादान्महिमानमीश" मित्यादिभिः । अथ निवर्तकज्ञानस्य ज्ञानापेक्षस्य तं विना[1] ज्ञानत्वानुपपत्तिमाह "अपि चे" ति, न हि स्वरूपभूतज्ञानस्य ज्ञात्रन्तरापेक्षा, अतस्तद्व्यावृत्त्यर्थं कृत्स्ननिषेधविषयज्ञानस्येत्युक्तं. प्रमाणजन्यज्ञानं हि साश्रयमेव दृष्टं ज्ञाता किं ब्रह्मव्यतिरिक्त? उतानतिरिक्त? इति विकल्पाभिप्रायेणाह "चिन्मात्रे" ति, प्रथमं धर्मिप्रश्नः कोऽयमिति, ब्रह्मव्यतिरिक्तपक्षे दूषणमाह "ने" ति, कर्मकर्तृत्वविरोधादिति भावः। निवर्त्यत्वे सति हि कर्मकर्तृविरोधः अतस्तत्परिहारार्थं स्वरूपपक्षं शङ्कते "ब्रह्मे" ति, ज्ञातृत्वधर्मविकल्पोऽयं किं स्वरूपमिति स्वाभाविकमित्यर्थः पाश्चात्यत्वेन बुद्धिस्थतया अध्यासपक्षं दूषयति "अध्यस्तं चे" दिति, निवर्तकज्ञानाविषयतया तिष्ठत्येवेति ज्ञातृत्वाध्यासस्य तन्मूलाविद्यान्तरस्य च निवृत्तौ निवर्तकान्तरसापेक्षत्वात्

१ ज्ञात्रनुपपत्तिमाहेति तु पा० ।

निवर्तकान्तरस्य च भवद्भिरनभ्युपगमात् तदुभयं तिष्ठत्येवेति निःशेषाविद्या-निवृत्तिर्न स्यादित्यर्थः। निवर्तकज्ञानान्तराभ्युपगमे तस्यापि कस्यचित् कञ्चित् प्रति सिद्धिरूपतया ज्ञात्रपेक्षतयाऽनवस्था स्यादित्याह-

सू० निवर्तकज्ञानान्तराभ्युपगमे तु तस्यापि चिद्रूपत्वात् ज्ञात्रपेक्षयाऽनवस्था स्यात्, ब्रह्मस्वरूपस्यैव ज्ञातृत्वे अस्मदीय एव पक्षः परिगृहीतः स्यात् निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनं भूतलव्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नमित्येतस्यामेव छेदनक्रियायामस्य छेत्तुरस्याश्छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवदुपहास्यम् अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति स्वनाशस्यापुरुषार्थत्वात् तन्नाशस्य ब्रह्मरूपत्वाभ्युपगमे भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यादित्यलमनेन दिष्टहतमुद्गराभिघातेन

टी० "निवर्तकज्ञानान्तरे"ति, आद्यं शिरो दूषयति "ब्रह्मस्वरूपस्ये"ति, निरुपाधिकस्यैव ब्रह्मस्वरूपस्याभ्युपगम्यमानं ज्ञातृत्वं स्वाभाविकमिति भवतामपि सिद्धान्तः स्यादित्यर्थः। ब्रह्मव्यतिरिक्तस्य ज्ञातुर्निवर्तकज्ञानस्य च ब्रह्मव्यतिरिक्तत्वरूपोपाधिकोडीकारबलेन प्रपञ्चतन्मूलाविद्यानिवर्तकज्ञानेनैव निवृत्तिर्भविष्यतीत्याशङ्क्य व्याघातेन दूषयति "निवर्तकज्ञानस्वरूप"मिति, ज्ञातुरपि निवर्तकज्ञाननिवर्त्यत्वे निवर्तकज्ञानार्थं श्रवणादौ प्रवृत्तिश्च न स्यादित्याह "अध्यस्तो ज्ञाते"ति, ज्ञातृनाशस्य परमपुरुषार्थरूपब्रह्मस्वरूपत्वात् नापुरुषार्थतेत्याशङ्क्याह "तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगम" इति, पूर्वपक्षनिराकरणमुपसंहरति "इतो"ति, एवं ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वनिराकरणेन बन्धस्य सत्यत्वसिद्धेस्तन्निवृत्तिः कर्मसापेक्षोपासनात्मकज्ञानादेवेति कर्मविचारस्य पूर्ववृत्तत्वं युक्तमित्याह-

मू० तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वादन्यस्य तन्निवर्ह-णमुक्तलक्षणज्ञानादेव । तदुत्पत्तिश्चाहरहरनुष्ठीयमानपर-मपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमो-चितकर्मलभ्या, न च केवलकर्मणामल्पास्थिरफलत्वमनभि-संहितफलपरमपुरुषाराधनवेषाणां कर्मणामुपासनात्मक-ज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफ-लत्वं च कर्मस्वरूपज्ञानादृते न ज्ञायते ॥

टी० "तस्मादि"ति, तस्मात्—साधनचतुष्टयस्य ब्रह्मविचारं प्रति पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः, तच्च निर्विशेषब्रह्माध्यस्तमिथ्या-भूतप्रपञ्चस्य कर्मनिरपेक्षज्ञाननिवर्त्यत्वं, तच्चानुपपन्नमित्युपपादनेन वस्तु-सामर्थ्यासिद्धेरिति तस्मादित्यस्यार्थः स्वरूपानादित्वव्यावृत्त्यर्थं प्रवाह-शब्दः, अनिर्वचनीयव्यावृत्त्यर्थः, कर्म—शब्दः, उक्तलक्षणज्ञानादेव—उपासना-त्मकादेव तदुत्पत्तिर्वर्णाश्रमोचितकर्मलभ्याऽस्तु ततः किमुपासनादिस्वरूप-ज्ञानं प्रति प्रस्तुतकर्मविचारपूर्ववृत्तत्वस्येत्यत्राह "तत्रे"ति, कर्मविचारादेव तस्याल्पास्थिरफलत्वस्य ज्ञानं फलितमिति भावः । "अनभिसंहितफले"ति, यज्ञेन दानेनेत्यादिकर्मविनियोजकवाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात्प-दार्थभूतकर्मस्वरूपाख्यविशेष्यज्ञानादृते उपासनद्वाराऽनन्तस्थिरफलत्वरूपं विशेषणं च न ज्ञायत इति भावः । ततः किमित्यत्राह—

मू० केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न सम्भवतीति कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्त्तव्य इत्य"थात" इत्युक्तम् । तच्च पूर्वपक्षवादी मन्यते

टी० "केवले"ति, केवलाकारः—आत्मयाथात्म्यबुद्धिसंस्कारशून्या-कारः, हानार्थमुपादानार्थं च हि कस्यचित् ज्ञानं तत्र फलद्वारा कर्म त्याज्यं स्वरूपेणोपादेयमुभयार्थं ज्ञानं कर्मविचारादृते न सिध्यति, तस्मात्कर्मवि-चारनिवृत्तौ तज्ज्ञानफलं हानमुपादानं च न सम्भवतीत्यर्थः । अथातश्च-

ब्दार्थं निगमयति "इति कर्मविचारानन्तरमि"ति, विचारः कर्तव्य इत्यनेन ब्रह्मजिज्ञासा-शब्दार्थ उक्तः, विचारस्य कर्तव्यतायां नातीव विवादः शाब्द आर्थ इत्येतावदेव हि वैषम्यम्, अथातः शब्दार्थ एव ह्यतीव विवादः अतो ऽथात इत्येतावदुपात्तम्, एवं सूत्रस्याक्षरयोजना कृता। अथ तात्पर्यार्थ उच्यते तत्रेत्यादिना, अक्षरयोजनायां परोक्तान्ययोक्तो ऽक्षरार्थश्च निरस्तः तन्निरसनसमय एव परोक्तान्ययोक्तस्तात्पर्यार्थोऽपि निरस्तः, परेण हि प्रपञ्चस्य सत्यत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानाय ब्रह्मविचारो नारम्भणीय इति पूर्वपक्षं कृत्वा प्रपञ्चस्य मिथ्यात्वेन ज्ञाननिवर्त्यत्वात् ज्ञानाय स आरम्भणीय इति सिद्धान्तितं तच्च पूर्वं निरस्तम् । अथ सूत्रकाराभिप्रेतां तन्निरसनीयशङ्कामुपन्यस्य तदभिप्रेतं तत्परिहारं च वक्तुमारभते "तत्रेत्यादिना, कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इत्युक्त्वा सिद्धवस्तुनि शब्दव्युत्पत्तिसम्भवात् ब्रह्मविचारः कर्तव्य इति वचनं व्याहतमिति परिचोद्यं पूर्वमीमांसानभिज्ञत्वकृतम् अथातो धर्मजिज्ञासेत्यत्राध्ययनानन्तरं तत एव हेतोर्धर्मविचारः कर्तव्य इत्युक्त्वा प्राभाकरैरध्ययनस्याचार्यकाधिकारकत्वाच्च धर्मविचारः कर्तव्य इति पूर्वपक्षं कृत्वाऽर्थबोधाधिकारत्वात्कर्तव्य इति सिद्धान्तितम् । भाट्टैस्त्वध्ययनस्य स्वर्गार्थत्वान्न धर्मविचारः कर्तव्य इति पूर्वपक्षं कृत्वा अर्थज्ञानार्थत्वात्कर्तव्यः स इति सिद्धान्तितं, तच्च व्याहतं भवत्पक्षे तत्र हि सूत्राक्षराणि योजयित्वा तात्पर्यार्थ उक्तः, तथा अत्राप्यक्षरार्थमुक्त्वा तात्पर्यार्थ उच्यत इत्युपपन्नम्, अक्षरयोजनायां ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः कर्मणोऽल्पास्थिरफलत्वनिर्णयविशिष्टानन्तस्थिरफलापातप्रतीतिरिति अनन्तस्थिरफलापातप्रतीतिर्नास्तीति चेत् अल्पास्थिरफल एव तृप्तिः स्यात् अल्पास्थिरफलत्वनिर्णयोनास्ति चेत् न निर्वेदः स्यादिति विशिष्टो हेतुः अत्रापातप्रतीतिस्सम्भावितप्रामाण्या विवक्षिता, तादृशी हि सा प्रवृत्तिहेतुः तत्र ब्रह्मज्ञानस्यानन्तस्थिरफलापातप्रतीतेः प्रामाण्यसम्भावनाऽनुपपन्ना सिद्धवस्तुनि शब्दस्य बोधकत्वानिश्चयाभावादिति विशिष्टहेतौ विशेष्यांशासिद्धिमाशङ्क्य सिद्धवस्तुनि व्युत्पत्तिसंभवादनन्तस्थिरफलापातप्रतीतिरस्तीति परिह्रियते

अत्र पूर्वपक्षिणः प्राभाकराः सूत्रकारैर्भेविष्यद्दर्शनवेदित्वात्कैश्चिदनुक्तत्वेऽपि सम्भाव्यमानानां प्रतिकूलपक्षाणाम् आशङ्क्य निरसनीयत्वाच्चैवं पूर्वपक्षीकर्तुं युक्तम् । यद्वा जैमिनिमतं हीदं चोदनालक्षणोऽर्थ एव वेदप्रतिपाद्य इति चोदना च क्रियायाः[1] प्रवर्तकं वचनं तामाशङ्क्य सिद्धवस्त्वपि वेदप्रतिपाद्यमिति सूत्रकारैस्साधयितुं युज्यते अक्षरयोजनायां ब्रह्मविचारः कर्तव्य इत्युक्तत्वात् ब्रह्मविचारारम्भो न युक्त इति पूर्वपक्षसमाप्तावुक्तत्वाद्ब्रह्मविचारारम्भो युक्त इति स्थितमिति सिद्धान्तस्योपसंहृतत्वाच्च दीपे कण्ठोक्तो विषयस्संशयश्चेहार्थसिद्धो ब्रह्मविचार इत्युक्तत्वात् ब्रह्ममीमांसा विषय इति सिद्धम्, आरम्भो न युक्त इति चोक्तत्वात्संशयसिद्धिः ब्रह्ममीमांसा किमारम्भणीया? उतानारम्भणीये? ति तदर्थं चिन्त्यते किं वेदान्ता ब्रह्मणि प्रमाणम्? उत ने? ति ।

तदर्थं परीक्ष्यते शब्दस्य सिद्धवस्तुबोधनसामर्थ्यावधारणं संभवति नेति तदर्थं विचार्यते किं वृद्धव्यवहारादन्यत्र शब्दार्थसम्बन्धावधारणं संभवति? ने? ति वृद्धव्यवहारे च शब्दस्य सिद्धवस्तुबोधकत्वावधारणं संभवति? नेति? च, न संभवतीति पूर्वः पक्षः, संभवतीति सिद्धान्तः, यदा व्यवहारादन्यत्र न व्युत्पत्तिः व्यवहारे च शब्दस्य सिद्धरूपार्थबोधकत्वावधारणं न सम्भवति तदा शब्दस्य सिद्धवस्तुबोधनसामर्थ्याभावात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्याभावनिश्चयवतः पुरुषस्यानन्तस्थिरफलापातप्रतीतेः प्रामाण्यसम्भावनाया असिद्धेर्विशिष्टहेत्वभावादनारम्भणीयेति पूर्वपक्षे फलफलिभावः, राद्धान्ते तु यदा व्यवहारादन्यत्र व्युत्पत्तिर्व्यवहारे सिद्धवस्तुपरत्वावधारणं च सम्भवति तदा शब्दस्य सिद्धरूपार्थे सामर्थ्यात् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्यात् प्रामाण्याभावनिश्चयरहितपुरुषस्यानन्तस्थिरफलरूपा ब्रह्मविषयापातप्रतीतिप्रामाण्यसम्भावनासिद्धेर्विशिष्टहेतुसिद्ध्या ब्रह्ममीमांसाऽऽरम्भणीयेति विचाराणां फलफलिभावः । पूर्वपक्षमुपक्षिपति "तत्रे"ति, पूर्वं मृषावाद्युक्तं

[1] क्रियायां प्रवर्त्तकम् इति पा० ।

सूत्रतात्पर्यं व्युदस्तं तद्व्यावृत्तिं सूचयति तत्र–शब्देन तत्र–प्रपञ्चसत्यत्वे स्थिते सतीत्यर्थः । पूर्वपक्षमुपपादयति–

सू० वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात्, वृद्धव्यवहारस्य च कार्य्यबुद्धिपूर्वकत्वेन कार्य्यार्थे एव शब्दस्य प्रामाण्यमिति कार्य्यरूप एव वेदार्थः, अतो वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि न प्रमाणभावमनुभवितुमर्हन्ति ॥

टी० "वृद्धव्यवहारा"दिति, वृद्धौ–व्युत्पन्नप्रयोज्यः प्रयोजकश्च तयोर्व्यवहारो वाचिकः कायिकश्च, व्यवहारादन्यत्र शक्त्यवधारणं माभूत् ततः किमित्यत्राह "वृद्धव्यवहारस्य चे"ति, । कार्यधीपूर्वकत्वफलमाह "कार्यार्थ एवे"ति, ततः फलितमाह "कार्यरूप" इति, वेदस्य शब्दात्मकत्वाच्छब्दस्य च व्युत्पत्त्यपेक्षत्वादिति भावः । ततः किमित्यत्राह "अत" इति, अतः–वेदार्थस्य कार्यरूपत्वादित्यर्थः, न प्रमाणभावमनुभवितुमर्हन्ति–प्रामाण्यसम्भावना च नास्ति अयोग्यत्वादित्यर्थः । प्रथमव्युत्पत्तिर्वृद्धव्यवहारादन्यत्र न सम्भवति न हि घटोऽस्तीत्युक्ते प्रवृत्त्यभावे सति तस्य बोधकत्वं ज्ञायते, गामानयेत्यादिशब्दप्रयोगानन्तरं प्रयोज्यस्य प्रवृत्तिं दृष्ट्वा प्रवृत्तेः कार्यबुद्धिपूर्वकत्वं जानन् व्युत्पित्सुरयं शब्दः कार्यरूपार्थबोधक इति निश्चिनोति तत्र बहुषु प्रयोगेष्वनुवृत्तशब्दस्यानुवृत्तार्थेन सम्बन्धं व्यावृत्तशब्दस्य व्यावृत्तार्थेन सम्बन्धं गृहीत्वा आवापोद्वापमुखेनार्थविशेषैश्शब्दविशेषसम्बन्धं निश्चिनोतीति प्रथमव्युत्पत्तिः कार्यार्थ एव, न हि प्रथमत एवास्य शब्दस्यायमर्थ इत्युक्ते अस्य शब्दस्यायमर्थ इत्येतद्वाक्यस्थपदानामप्यर्थप्रतिपत्तिः, एवं कार्यार्थ एव व्युत्पत्तिं कृतवतः पुरुषस्यास्य शब्दस्य अयमर्थ इति पश्चाच्छिक्षिते[1]ऽपि प्रथमं कार्यार्थपरतया व्युत्पन्नकतिपयपदसमभिव्याहारदर्शनात्प्रथमव्युत्पत्त्यविरोधेन तत्तच्छब्दार्थसम्बन्धग्रहणात्सर्वे शब्दाः कार्यार्थपरा एवेति गृह्यन्ते अतो "य एव लौकिकास्त एव वैदिका" इति

१ ग्रहते इति तु युक्ततरः स्यात्पाठः ।

न्यायाद्वेदान्तास्सिद्धवस्तुनि न बोधका भवन्तीत्यर्थः, वेदानां संस्कृतशब्दत्वात् भाषान्तरेण प्रथमं व्युत्पन्नस्य

सू० न च पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु हर्षहेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात्सुलग्नसुखप्रसवादिहर्षहेत्वर्थान्तरोपनिपातसम्भावनया च प्रियार्थप्रतिपत्तिनिमित्तमुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः, नापि व्युत्पन्नेतरपदविभक्त्यर्थस्य पदान्तरार्थनिश्चयेन वा प्रकृत्यर्थनिश्चयेन वा शब्दस्य सिद्धवस्त्वभिधानशक्तिनिश्चयः ॥

टी० संस्कृते शब्दे अस्य शब्दस्यायमर्थ इति व्युत्पाद्यमाने प्रथममेव सिद्धवस्तुनि व्युत्पत्तिः स्यादिति चेत् न कार्यार्थपरत्वेन प्रथमव्युत्पन्नभाषान्तरशब्दानां पर्यायत्वेन व्युत्पाद्यमानत्वात्संस्कृतशब्दा अपि कार्यार्थपरत्वेनैव हि व्युत्पन्नाः स्युः सिद्धवस्तुनि व्युत्पत्तेर्भाट्टैरुक्तमुदाहरणं व्युदस्यति "न चे"ति, कालत्रयवर्तिनामिति पञ्चिकायामुक्तं तदत्राभिप्रेतं देशकालयोग्यतादिभिः पुत्रजन्म जानातीत्यत्राह "सुलग्ने"ति, सुलग्नसुखप्रसवादिनाऽन्यथासिद्धिर्नयविवेकोक्ता, आदि–शब्देन पित्राद्यरिष्टाभावो भाविसमृद्ध्यादिकं च विवक्षितं, व्युत्पत्तिर्नाम शब्दस्यार्थविशेषैस्सह सम्बन्धग्रहणं न त्वर्थमात्रेणेत्येवं दूषणमुक्तम्। नैयायिकादिभिरुक्तम् उदाहरणं व्युदस्यति "नापी"ति, व्युत्पन्नेतरपदस्य पदान्तरार्थनिश्चयोदाहरणमिदं कः कूजतीति प्रश्नस्य पिकः कूजतीति केनचिदुक्ते व्युत्पन्नकूजति–शब्देन व्युत्पित्सुना पिकः शब्दार्थो ज्ञायते व्युत्पन्नेतरपदविभक्त्यर्थस्य प्रकृत्यर्थनिश्चयोदाहरणमिदं काष्ठैः स्थाल्यामोदनं पचतीत्युक्ते व्युत्पन्नविभक्तिपचतिशब्दार्थेन व्युत्पित्सुना काष्ठैर्दारुभिरिति[1] प्रकृत्यर्थो ज्ञायते ॥

सू० ज्ञातकार्य्याभिधायिपदसमुदायस्य तदंशविशेषनिश्चयरूपत्वात्तस्य, न च सर्पादिभीतस्य नायं सर्पो रज्जुरेषेति

[1] काष्ठादिप्रकृत्यर्थोज्ञायत इति पा० ।

शब्दश्रवणानन्तरं भयनिवृत्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः, अत्रापि निश्चेष्टं निर्विषमचेतनं वस्त्विदमित्याद्यर्थबोधेषु बहुषु भयनिवृत्तिहेतुषु सत्सु विशेषनिश्चयायोगात् ॥

टी० "ज्ञाते"ति, इदानीं श्रुते अस्मिन्वाक्ये पूर्वं कार्यपरतया व्युत्पन्नवाक्यस्थकतिपयपददर्शनादयमपि पदसमुदायः कार्याभिधायीति ज्ञायत इत्यभिप्रायेण ज्ञातकार्याभिधायिपदसमुदायस्येत्युक्तं, तदंशविशेषः–कार्यांशविशेषः, कार्यं ह्यनेककारकविशिष्टं तस्य कार्यस्य विशेषणांशनिश्चयरूपत्वात्, तस्य–पदान्तरार्थनिश्चयस्य प्रकृत्यर्थनिश्चयस्य चेत्यर्थः। यद्वा तदंशविशेषः–कार्याभिधायिपदसमुदायांशविशेषः मृषावादिभिरुक्तम् उदाहरणं दूषयति "न चे"ति,। वाचस्पतिनोक्तमर्थमाशङ्क्य परिहरति "कार्ये"ति, तेन खल्वेवं सिद्धवस्तुनि प्रामाण्यमुपपादितं सर्वशब्दानामर्थोऽनुयायी वक्तव्यः किं कार्यरूपार्थाभिधायित्वमनुयायि? उत कार्यान्वितस्वार्थाभिधायित्वम्? उत कारकान्वितस्वार्थाभिधायित्वम्? प्रथमे कारकपदेषु व्यभिचारः, तेषां कार्याभिधायित्वाभावात् द्वितीये लिङादिषु व्यभिचारः तेषां कार्यान्वितस्वार्थाभिधायित्वाभावात् तृतीये च कारकपदेषु व्यभिचारः तेषां कारकान्वितस्वार्थाभिधायित्वाभावात् तस्मादन्यान्वितस्वार्थाभिधायित्वं पदानामनुयायीति वक्तव्यमन्विताभिधानवादिना अन्यान्वितत्वं सिद्धवस्तुनोऽपि स्यादिति कार्यरूपार्थ एव व्युत्पत्तिरिति निर्बन्धोऽनुपपन्न इतीमामाशङ्कामभिप्रेत्य परिहरति–

भू० कार्य्यबुद्धिप्रवृत्तिव्याप्तिबलेन शब्दस्य प्रवर्तकार्थावबोधित्वमवगतमिति सर्वपदानां कार्य्यपरत्वेन सर्वैः पदैः कार्य्यस्यैव विशिष्टस्य प्रतिपादनान्नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः, इष्टसाधनताबुद्धिस्तु कार्य्यबुद्धिद्वारेण

प्रवृत्तिहेतुर्न तु स्वरूपेण अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्यनुपलब्धेः इष्टोपायो हि मत्प्रयत्नादृते न सिद्ध्यति ॥

टी० "कार्यबुद्धी"ति, कार्यबुद्धिप्रवृत्तिव्याप्तिबलेनेति उत्तरत्र सर्वपदानां कार्यपरत्वेनेत्यनेनान्वयः शब्दप्रयोगानन्तरं प्रवृत्तिदर्शनाच्छब्दस्य प्रवर्तकार्थावबोधकत्वात्कार्यबुद्धेः प्रवृत्तेश्च व्याप्तिबलेन प्रवर्तकस्य च तस्य कार्यरूपत्वात्सर्वैः पदैः कार्यमेव विशिष्टं प्रतिपाद्यते तस्मात् नान्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः, अपि तु विशिष्टकार्यांशविशेषे पदशक्तिनिश्चय इत्यर्थः। ननु कार्यमेव प्रवर्तकं चेत्प्रवर्तकस्य शब्दार्थत्वात्सर्वशब्दानां कार्यपरत्वं स्यात्तन्न इष्टसाधनताबुद्धेः प्रवर्तकत्वादिति भाट्टाक्तमर्थमाशङ्क्याह "इष्टसाधनते"ति, स्वप्रयोजनोपायः परेण साध्यते चेत्तत्रापि न प्रवृत्तिरिति वर्तमानाया अपीष्टसाधनताबुद्धेरप्रवर्त्तकत्वं दृष्टमतः कार्यबुद्धिः प्रवृत्तेर्व्याप्येत्यर्थः। ननु कार्यबुद्धिरपि प्रवृत्तिं व्यभिचरति निर्द्धनस्य द्विजस्य यागकर्त्तव्यताबुद्धिमत्त्वेऽपि प्रवृत्तेरभावात् नैवं ममैवाद्य साधयितुं शक्यमिति बुद्धिर्हि कार्यबुद्धिः, न तस्याः प्रवृत्तिव्यभिचारः निर्धनस्य हि नैवंविधप्रतिपत्तिः किं तु यागः कदाचित्कर्तव्यः अर्थादिलाभादनुष्ठाने सति फलप्राप्तिरस्तीति अतो न दोषः। ततः किमित्यपेक्षायामुपपादितहेतुशरीरं वदन् शङ्कान्तरं च परिहरन् पूर्वपक्षं निगमयति–

भू० अतो मत्कृतिसाध्य इति बुद्धिर्यावन्न जायते तावन्न प्रवर्तते अतः कार्य्यबुद्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाच्यतया कार्य्यस्यैव वेदवेद्यत्वात् परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलाप्रतिपत्तेः "अक्षय्यं ह चातुर्मास्ययाजिनः सुकृतं भवती"त्यादिभिः कर्मणामेव स्थिरफलत्वप्रतिपादनाच्च कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारम्भो न युक्त इति, अत्राभिधीयते निखिललोकविदितशब्दार्थसम्ब-

न्धावधारणप्रकारमपनुद्य सर्वशब्दानामलौकिकैकार्थाव-
बोधित्वावधारणं प्रामाणिका न बहु मन्यन्ते ॥

टी० अत इत्यादिना, ब्रह्मविचारारम्भे विशिष्टो हेतुरुक्तः तत्र विशेष्यांशस्यानन्तस्थिरफलापातप्रतीतिरूपस्य असिद्धिरुक्ता अत्र चोद्यमापादितं मन्त्रार्थवादेषूपासनविधिशेषभूतेष्वनन्तस्थिरफलापातप्रतीतिर्न विशेष्यांशासिद्धिरिति विशिष्ट एव हेतुरित्येतदाशङ्क्याह "अक्षय्यं ह वा" इति, अयमर्थः यदि मन्त्रार्थवादेष्वनन्तस्थिरफलप्रतीत्या ब्रह्मविचारारम्भः तर्हि पूर्वभागेऽपि "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवती"त्यादिभिरनन्तस्थिरफलापातप्रतीत्या अल्पास्थिरफलत्वनिर्णयरूपविशेषणांशासिद्धेर्ब्रह्मविचारारम्भो न युक्त इति विशिष्टहेतौ विशेषणविशेष्ययोरन्यतरांशासिद्ध्यभिप्रायेण कर्मफलाल्पास्थिरत्वं ब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुक इत्युक्तम्, अत्राभिधीयत इति अस्मिन् पूर्वपक्षे सूत्रकारैः परिहारोऽभिधीयत इति "निखिले"ति, अन्यथा वदता भवतापि वक्ष्यमाणप्रकारेणैव शब्दव्युत्पत्तिः कृतेति निखिललोकशब्दस्य भावः । प्रामाणिकाः प्रमाणेनार्थं स्वीकुर्वन्त इत्यर्थः । कथं सम्बन्धावधारणमित्यत्राह—

सू० एवं किल बालाः शब्दार्थसम्बन्धमवधारयन्ति मातापितृ-
प्रभृतिभिः अम्बातातमातुलादींश्च पशुनरमृगपक्षिसर्पा-
दींश्च एनमवेहि इमं चावधारयेत्यभिप्रायेणाङ्गुल्या नि-
र्दिश्य तैस्तैः शब्दैस्तेषु तेष्वर्थेषु बहुशः शिक्षिताः शनैश्शनैस्तैस्तैरेव शब्दैस्तेषु तेष्वर्थेषु स्वात्मना बुद्ध्युत्पत्तिं दृष्ट्वा
शब्दार्थयोः—

टी० "एवं किले"ति, "मातापितृप्रभृति"भिरिति, अयं भावः—यदा स्वयमेव बालो व्युत्पत्तिक्षमो भवति तदानीमप्येनं वृद्धैरुपाध्यायादिभिर्व्युत्पादयितुं श्रद्दधाना मातापित्रादयो न हि स्वयं व्युत्पत्तिक्षमदशायामुपेक्षन्ते अपि त्वक्षरशिक्षाद्युपयोगिनीः शिक्षाः प्रथमत एव स्वबुद्धिपूर्वकं कुर्वन्तीति

अम्बातातप्रभृतिस्सप्रतियोगिकश्शब्दगणः शशिपशुप्रभृतिरप्रतियोगिकश्श-
ब्दगण इति विभागः, असम्बन्धिशब्दव्युत्पत्तेः पूर्वमेवाम्बातातादिशब्दव्यु-
त्पत्तिर्दृश्यते सा च त्वदभिमतशब्दार्थसम्बन्धग्रहणे तु नोपपद्यते, न हि
कंचित्प्रतिपिता अन्यस्यापि पिता भवति, तस्माद् व्युत्पित्सोर्मातापित्रा-
दिषु अन्यैस्तत्तच्छब्दप्रयोगासम्भवात्प्रथममम्बादिशब्दार्थव्युत्पत्तिस्त्वन्मते
न सम्भवति, अतो बुद्धिपूर्विकैव प्रथमव्युत्पत्तिरिति ज्ञापनार्थं कोटिद्वयं
शब्देषु दर्शितं, यादृच्छिकवृद्धव्यवहारेणानन्तशब्दव्युत्पत्त्यनुपपत्तिश्च सर्व-
लोकप्रतिपन्नव्युत्पत्तिप्रकारापन्हवश्च "एनमवेहि इमं वाऽवधारये"ति, एनं
बोधकशब्दमिमं बोध्यमर्थञ्चावेहीत्यर्थः, "बहुश इति, यावदङ्गुलिशब्दप्रयो-
गसाहचर्यदर्शनजनितवासनाभूयस्त्वोदयेन स्वयमेव तत्तदर्थेषु तत्तच्छब्दात्
प्रयोक्तुमर्थमात्रदर्शनेन शब्दं स्मर्त्तुं शब्दमात्रश्रवणेनार्थं स्मर्त्तुं च क्षमो
भवति तावदित्यर्थः, शिक्षितास्तैस्तैः शब्दैः तेषु तेष्वर्थेषु उत्पादितज्ञानाः।
एवं तर्ह्यङ्गुल्या निर्दिष्टेष्वर्थेष्वमी शब्दास्सङ्केतिताः ।

**सू० सम्बन्धान्तरादर्शनात्सङ्केतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां**
**शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति,**

टी० इति मन्येरन् इति चेत् । यद्वा लिङ्गवज्जन्यजनकभा-
वादिसम्बन्धान्तराद्बोधका इति मन्येरंश्चेति चेत् अत्राह "सम्बन्धान्त-
रादर्शनात्सङ्केतयितृपुरुषाज्ञानाच्चे"ति, अयमर्थः यादृच्छिकव्युत्पत्ता-
वपि तुल्यं चोद्यं शब्दप्रयोगानन्तरं प्रयोज्यप्रवृत्तिं दृष्टवतो व्युत्पत्सोरियं
शङ्का भवति एतच्छब्दप्रयोगादनन्तरमस्य प्रवृत्तिः किं जन्यजनकभावादिस-
म्बन्धात्? उत सङ्केता? दिति, तत् सम्बन्धान्तरशङ्का त्वदर्शनादेव न जायत-
इति चेत् बुद्धिपूर्वकव्युत्पत्तावप्ययं परिहारः समानः, सङ्केतबुध्युत्पत्तिश्च नोप-
पद्यते किमेते ऽस्मन्मातापित्रादयस्सङ्केतयन्ति? उत पूर्वमेव कश्चित्सङ्के-
तितवानिति, न तावत्प्रथमः पक्षः अनेकैः पुरुषैरप्येवार्थेष्वेकरूपशब्दप्रयोग-
दर्शनात्, नापि द्वितीयः अनेन पूर्वसङ्केतिताः शब्दा इति सङ्केतयितुः पुरुषस्या-
ज्ञानादिति परिहारस्तवापि वक्तव्यः सोऽस्माकमपि समानः, सर्वप्रमाणानां

बोधकत्वे अविशिष्टेऽपि प्रत्यक्षस्य वैषम्यं सत्तया ज्ञानजनकत्वम्, अनुमानागमौ तु ज्ञाततया ज्ञापकौ, तत्रानुमानं जन्यजनकभावादिसम्बन्धान्तरज्ञानेन बोध्यविषयबोधजनकं, शब्दस्तु बोध्यबोधकभावरूपसम्बन्धज्ञानादेव बोध्यं बोधयति एवं सम्बन्धान्तरशङ्का सङ्केतितत्वशङ्का च निरस्ता सम्बन्धान्तराभावात् सङ्केतयितृपुरुषाज्ञानाच्च बोध्यबोधकभाव एव सम्बन्ध इति बालैर्ज्ञातुं शक्यमिति चेत् तत्तवापि तुल्यम् किंच शब्दोच्चारणानन्तरं प्रवृत्तेश्च कार्यबुद्धिपूर्वकत्वं स्मृत्वा यदनन्तरं यद्भवति तत्तस्य कारणमिति

भा० पुनश्च व्युत्पन्नेतरशब्देषु अस्य शब्दस्य अयमर्थ इति पूर्ववृद्धैश्शिक्षितास्सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय एतत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते

टी० यावच्छब्दोच्चारणेन कार्यबुद्धिरस्य जातेति कार्यरूपः शब्दार्थ इति बोद्धुं बालैरतीव न शक्यते अशक्यत्वं दृश्यते च, न हि बाला उक्तप्रकारेण कार्यार्थपरत्वं शब्दस्य निश्चिन्वन्ति अतो बालैर्दुरवगमत्वचोद्यम्भवत्पक्ष एवातीव प्रसजति, कालपरिपाकात् ज्ञायत इति चेत् अयं परिहारोऽस्मत्पक्षे सुसङ्गत इति पुनश्चेति अस्य शब्दस्य अयमर्थ इति व्युत्पत्तिश्चेदन्विताभिधानभङ्गप्रसङ्ग इति चेत् न प्रातिस्विकव्युत्पत्तेस्समुदायज्ञानार्थत्वात्, न हि काव्यादिषु वाक्यार्थज्ञानोपयोगित्वेन सम्पाद्यमानं पदार्थज्ञानं वाक्यार्थज्ञानविरोधि, न ह्यवरशिक्षा च पदार्थज्ञानविरोधिनी एवं तैस्तैः पदैः परस्परान्वितस्वार्थाभिधानव्युत्पत्तेः प्रतिपदमर्थव्युत्पत्तिर्न विरोधिनी अपि तु उपयुक्तैव यथा भवत्पक्षे आवापोद्वापद्वारा रूपेण प्रतिपदार्थव्युत्पत्तिर्वाक्यार्थज्ञानोपयोगित्वान्न विरोधिनी तद्वत्, भवत्पक्षे तु प्रातिस्विकव्युत्पत्तिः पश्चाद्भाविनी अत्र तु पूर्वभाविनीति विशेषः, वाक्यार्थज्ञानोपयोगित्वं समानं शब्देनान्वयपर्यन्ताभिधानं ह्यन्विताभिधानं प्रातिस्विकव्युत्पत्तावपि तथैव व्युत्पत्तिः क्रियत इति न विरोधः, अभिहितान्व-

१ अनुमायेति पा०।

यपक्षे तु अर्थानां परस्परान्वयबोधनयोग्यत्वं शब्दानां स्वार्थबोधनशक्तिश-क्तेरपि परस्परान्वययोग्यत्वेन स्वार्थाभिधानमिति त्रयमपि कल्पनीयम् अन्विताभिधानपक्षे तु शब्दानां स्वार्थबोधनशक्तेरेव अन्वयपर्यन्तत्वाभ्यु-पगमात् कल्पनालाघवमस्तीति स एवात्र स्वीकृतः । अन्विताभिधानभङ्गप्र-सङ्गश्च परिहृतः, अस्य शब्दस्य अयमर्थ इत्यत्राप्ययमर्थ इति बुध्यस्वे-ति ह्युक्तं भवति तस्मात्कार्यार्थ एव व्युत्पत्तिरिति चेत् एवं तर्हि यादृच्छि-कव्युत्पत्तावपि सिद्धवस्तुन्येव व्युत्पत्तिः स्यात् प्रयोज्यवृद्धस्य कार्यबुद्धिर्जा-तेति व्युत्पित्सुर्जानातीति शब्दबोध्यत्वं कार्यस्यैव न बुद्धेः, बुद्धिर्हि शब्द-जन्या न तु शब्दवाच्येति चेत् अत्रापि शब्दबोध्यत्वं तत्तत्पदार्थस्यैव न बुद्धेः, न हि घटबुद्धिर्घट—शब्दवाच्या अपि तु तज्जन्या, वाच्यस्तु घट एव इति तुल्यः परिहार इत्यभिप्रेत्य एनमवेहीमं चावधारयेत्यभिप्रायेणाङ्गु-ल्या निर्दिश्येत्युक्तं "तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जन" इति, यादृच्छि-कव्युत्पत्तौ कतिपयशब्दानां कार्यार्थपरत्वेन व्युत्पत्तेर्दर्शनात् व्युत्पादकाः पुरुषा अपि कार्यार्थ एव व्युत्पत्तिं कृतवन्तो गामानयेत्यादिवाक्यं प्रयुञ्जत इति चेत् अनेकशब्दानां सिद्धवस्तुपरत्वेन व्युत्पत्तिदर्शनात् व्युत्पादकाः पुरुषा अपि तथैव व्युत्पत्तिं कृत्वा तत्तदर्थविवक्षया शब्दान् प्रयुञ्जीरन् व्युत्पत्तिदर्शनं प्रयोगदर्शनमपि हि उभयमत्राविशिष्टमिति भावः एवं बुद्धिपूर्वकव्युत्पत्त्या शब्दानां सिद्धवस्तुपरत्वमुक्तं यादृच्छिकव्युत्पत्तावपि सिद्धार्थे व्युत्पत्तिरस्तीत्याह—

भा० प्रकारान्तरेणापि शब्दार्थसम्बन्धावधारणं सुशकम् केन चित्पुरुषेण हस्तचेष्टादिना पिता ते सुखमास्त इति, देव-दत्ताय ज्ञापयेति प्रेषितः कश्चित्तज्ज्ञापने प्रवृत्तः पिता ते सुखमास्ते इति शब्दं प्रयुङ्क्ते पार्श्वस्थोऽन्यो व्युत्पित्सुः मूक-वच्चेष्टाविशेषज्ञस्तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वानुगतस्तज्-ज्ञापनाय प्रयुक्तं शब्दमिमं श्रुत्वाऽयं शब्दस्तदर्थबुद्धिहे-

तुरिति निश्चिनोतीति कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो-
निर्निबन्धनः ॥

टी० "प्रकारान्तरेणापी" ति, शब्दनिरपेक्षं तत्तदर्थज्ञानं चेष्टादिना सम्भवतीति दर्शयति "मूकव" दिति, परोक्तयादृच्छिकव्युत्पत्तौ व्युत्पित्सुव्यतिरेकेण पुरुषद्वयापेक्षा गवाद्यपेक्षा च. अस्यां तद्व्युत्पित्सव्यतिरेकेण पुरुषत्रयापेक्षेति वैषम्यम् । किं च पुत्रस्ते जात इत्यादिवाक्यस्य गामानयेत्यादिवाक्यस्य च वैषम्यं दुरुपपादं कालत्रयवर्तिहर्षहेतुबाहुल्यसम्भावनया हि पुत्रजन्मवाक्ये व्युत्पत्तेरशक्यत्वमुक्तं तत्र सन्निहितं पुत्रजन्म दृष्ट्वा तज्ज्ञापनाय प्रवृत्ते पुरुषे ज्ञाते पश्चाच्च जातकर्मादौ दृष्टे ततः पूर्वमनुल्लसितमुखत्वादसम्भावितपुत्रजन्मादिविज्ञानस्य पुरुषस्यैतद्वाक्यश्रवणानन्तरभाविनो मुखविकासस्यातीतागामिहर्षहेत्वन्तरश्रवणमूलत्वशङ्कानुदयात्, न हि सन्निहितहेतुपरित्यागेनादृष्टहेतुशङ्का धियमधिरोहति, सुलग्नसुखप्रसवादिहेत्वन्तरशङ्का स्यादिति चेत् नैवं सुलग्नादिमात्रस्य हर्षहेतुत्वायोगात् न खल्वन्यदीयपुत्रजन्माद्यनुबन्धिसुलग्नत्वादीनां हर्षहेतुत्वमतः स्वपुत्रजन्मविशेषणीभूतानां सुलग्नत्वादीनामेव हर्षहेतुत्वमतः स्वपुत्रजन्मन्यज्ञाते सुलग्नत्वादीनां हर्षहेतुत्वायोगात् अस्य वाक्यस्य स्वपुत्रजन्मज्ञापकत्वमवश्यं विदितं स्यात् प्रागेव पुत्रजन्मज्ञानसम्भवादस्य वाक्यस्य सुलग्नत्वादिपरत्वशङ्का स्यादिति चेत् नैवं ततः पूर्वं मुखविकासादिविरहेण प्रागेव पुत्रजन्मज्ञानशङ्काऽनुदयात् अतः पुत्रजन्मनः सन्निहितत्वात्पूर्वं मुखविकासाभावाच्च प्राथमिकमुखविकासहेतोरस्य वाक्यस्य पुत्रजन्मज्ञापकत्वं न व्युत्पित्सुर्मन्यते तत्रैवं शङ्का सम्भवति, किं पुत्रजन्मादिमात्रज्ञापकमिदं वाक्यम्? उत सुलग्नत्वादिविशिष्टपुत्रजन्मज्ञापकं? मिति, ईदृशशङ्कायास्तत्वं गामानयेत्यादिवाक्यस्यापि तुल्यं, किमिदं वाक्यं गवानयनमात्रप्रतिपादकम्? उत पुरोवर्तिनि पिण्डे ये शुक्लत्वादिविशेषा दृश्यन्ते तैर्विशिष्टगवानयनप्रतिपादकं? मिति शङ्कोपपत्तेः प्रयोगभेदेनावापोद्वापमुखेन शङ्काऽपाकरणमुभयत्र तुल्यं पुत्रजन्मवाक्यादपि गवानयनादिवाक्यस्य अनेकार्थान्तरशङ्काग्रस्तत्वं सुतरान्दृश्यत इत्यर्थविशेषावधारणमतीव कर्तुमशक्य-

गामानयेति शब्दप्रयोगानन्तरं व्यापारान्तरविधुरं गवि समानीतायामपि गां संदर्शय, गां पुरः स्थापय, गां देहि, गां विक्री[1]णीहीत्याद्यनेकार्थशङ्का-हेतुत्वात् प्रयोज्यवृद्धप्रवृत्तेः । किं च गामानयेत्यादिशब्दप्रयोगानन्तरं समानयनात्पूर्वमेव उत्थानोपरि वासआच्छादनदण्डग्रहयादृच्छिकजनसम्भाषणागमनाद्यवान्तरव्यापाराश्च बहवो यस्य पुरुषस्याद्यव्युत्पत्तावुपलभ्यन्ते तस्य तेष्वन्यतमार्थवाचकत्वशङ्का गामानयेति वाक्यस्य जायते पश्चाद्गवानयनमपि यादृच्छिकं कृतं स्यात् न तु वाक्यप्रेरितत्वादिति च शङ्का सम्भवति, अतो नार्थविशेषसम्बन्धावधारणसम्भव इति बहुभिः प्रयोगैरर्थविशेषनिश्चयोऽन्वयव्यतिरेकाभ्यामिति चेत् एवमेव पुत्रस्ते जात इत्यादिवाक्यस्य अर्थविशेषनिश्चयस्सुतरां सम्भवति ॥

सू० अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म तदुपासनं च अपरिमितफलं बोधयन्तीति तन्निर्णयफलो ब्रह्मविचारः कर्तव्यः, कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव कथम् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः, विज्ञाय प्रज्ञां कुर्वीत, दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तः तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्, तत्रापि दहरगगनं विशोकः तस्मिन् यदन्तः तदुपासितव्य"मित्यादिभिः प्रतिपन्नोपासनविषयकार्य्याधिकृतफलत्वेन "ब्रह्मविदाप्नोति पर"मित्यादिभिः ब्रह्मप्राप्तिः श्रूयत इति ॥

टी० एवं सिद्धवस्तुनि शब्दव्युत्पत्त्युपपत्त्युपपादनेन वेदान्तानां परब्रह्मपरत्वमुपपन्नमित्याह "अतो वेदान्ता" इति, । अथ कार्यार्थपरत्वम-

---

[1] क्रीणातेर्ञित्त्वेनोभयपदित्वेऽपि व्युपसृष्टस्य तस्य "परिव्यवेभ्यः क्रियः" इति पाणिनीयानुशासनवशादात्मनेपदं नित्यमिति विक्रीणीष्वेति प्रयोक्तव्ये विक्रीणीहीत्यसाधुरेव पाणिनीयाज्ञाननिबन्धनः कस्यचिदाधुनिकस्य दुष्प्रयोगो न प्रकाशिकाकृताम् इति मन्महे ।

भ्युपगम्य ब्रह्मविचारस्य कर्तव्यतामाह "कार्यार्थत्वेऽपी"ति, कार्यार्थत्वा-भ्युपगमेऽपि स्तावकत्वसिद्धिहेतुत्वेन फलसाधनत्वेन च प्रकारद्वयेन सिद्ध-वस्तुनि तात्पर्यमुत्तरत्रोपपादयिष्यते, अत्र तु प्रकारान्तरेणोपपाद्यते अन-न्तस्थिरफलाबाधप्रतीतेर्निस्समाधयिषितत्वात्फलत्वेन तात्पर्यकथनमत्रोचि-तमिति फलतया सिद्धिरत्रोच्यते अनेकवाक्योपादानमुपासने तात्पर्याति-शयज्ञापनार्थमुपसर्गविशेषसन्प्रत्यययोगायोगेऽप्यर्थभेदो नास्तीति ज्ञापनार्थं च। "उपासनविषयकार्याधिकृते"ति, उपासनावच्छिन्नकृतिसाध्यापूर्वाधिकृ-तस्य विशिंषन् हि विषय उच्यते—

सू० ब्रह्मस्वरूपतद्विशेषणानां दुःखासम्भिन्नदेशविशेषरूप-स्वर्गादिवत् रात्रिसत्रप्रतिष्ठादिवत् अपगोरणशतयात-नासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धेः ॥

टी० "ब्रह्मस्वरूपतद्विशेषणानामि"ति, विशेषणानि गुणा विभूत-यश्च विधिवाक्योक्तस्य फलस्यार्थवादोक्तविशेषणे तात्पर्यमस्तीति ज्ञापनार्थं दुःखासम्भिन्नदेशविशेषरूपस्वर्गादिवदित्युक्तं "यस्मिन्नोष्णं न शीतं नार्ति-रि"ति श्रुतिः स्वर्गाख्यफलं विधिगतं विशेषणं च अन्यत्र फलस्य विधिवाक्य-गतत्वाभावेऽप्यन्यपरार्थवादोक्तफले विध्यपेक्षिते तात्पर्यमस्तीति दर्शयितु रात्रिसत्रप्रतिष्ठावदित्युक्तं, "रात्रीरूपेयात् प्रतितिष्ठन्तीह वा एते य एता रात्री रूपयन्ती"ति हि श्रुतिः प्रतिष्ठाकाम उपेयादिति वचनाभावेऽपि अर्थ-वादोक्तफले तात्पर्यमङ्गीकर्तमित्यर्थः, विधेयोपकारके विधिविरोधिनि फले-ऽपि तात्पर्यमस्तीति ज्ञापनार्थम् अपगोरणशतयातनासाध्यसाधनभाववच्चे-त्युक्तं, "तस्माद्ब्राह्मणाय नापगुरेत्तयोवगुरुते शतेना यातया"दिति हि श्रुतिः अनेन मोक्षोपायविरोधिफलेऽपि तात्पर्यं सिद्धमित्यभिप्रायः, अनुयायिहेतुः कार्योपयोगितयैव सिद्धेरित्युक्तम्, उपासनाविषयकार्योपयोगित्वात् फल-भूतब्रह्मस्वरूपे तद्विशेषणे गुणादौ विधिविरोधिनि फले संसारहेतुत्वादौ च विवक्षाऽङ्गीकार्येत्यर्थः। प्रवर्तकवाक्येऽपि न त्वदभिमतसिद्धिरित्याह—

मू॰ गामानयेत्यादिष्वपि वाक्येषु न कार्य्यार्थे व्युत्पत्तिः भवदभिमतकार्यस्य दुर्निरूपत्वात्, कृतिभावभाविकृत्युद्देश्यं हि भवतः कार्य्यं कृत्युद्देश्यत्वं कृतिकर्मत्वम् ॥

टी॰ "गामि"ति, कार्य्यार्थे–प्राधान्येन त्वदभिमते कृत्युद्देश्यत्वलक्षणकार्यार्थे कुत इत्यत्राह "भवदि"ति, स्वेदश्रमादेरपि कृतिसाध्यत्वात्तद्व्यावृत्त्यर्थं क्रियाकार्येऽप्युद्देश्यत्वमङ्गीकार्य्यं त्वदुक्तोद्देश्यत्वस्य दुर्निरूपतया तल्लक्षणकार्य्यस्य दुर्निरूपत्वादित्यर्थः। दुर्निरूपत्वं कथमित्यत्राह "कृती"ति, "कृतिभावभावी"ति, कृतिश्चान्तरप्रयत्नः तद्भवानन्तरभावि कृतिसाध्यत्वं स्वेदादिष्व[1]प्यस्तीति तद्व्यावृत्त्यर्थं कृत्युद्देश्यमित्युक्तं, कृत्युद्देश्यत्वं कृतिप्रधानत्वमित्यर्थः कार्यस्य कृतिसाध्यत्वम् इष्टत्वं कृत्युद्देश्यत्वमिति त्रयमपि भवन्मतेऽभ्युपगतम् इष्टत्वकृतिसाध्यत्वे फलभावार्थसाधारणे कृतिप्रधानत्वं ह्याकारद्वयविलक्षणं फलभावार्थव्यावर्तकं वर्ण्यते यथा टीकायामुक्तं "कार्यमर्थं प्रतिपादयतो वेदस्य प्रामाण्यमि"ति, अत्रार्थ–शब्देन प्राधान्यं विवक्षितं यथा पञ्चिकायां"कार्यमर्थं प्रधानतया प्रतिपादयतो वेदस्य प्रामाण्यं तत्रैव प्रामाण्यशब्दव्युत्पत्तेः व्युत्पत्त्यायत्तत्वात्तस्ये"ति प्रकरणशालिकायां 'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत' इति तत्र तृतीयाकारतयाऽभिमतं कृत्युद्देश्यत्वं कृतिसाध्यत्वेष्टत्वाकारयोरन्यतराकारे पर्यवस्यतीत्यभिप्रायेण दूषयितुमाह "कृत्युद्देश्यत्वं चे"ति, पाणिन्युक्तप्रकारेण कर्मत्वं विवृणोति "कृतिकर्मत्वं चे"ति, इष्टतमत्वं च कार्ये नास्तीत्याह "इष्टतमं चे"ति

मू॰ कृतिकर्मत्वं च कृत्या प्राप्तुमिष्टतमत्वम्, इष्टतमं च सुखं वर्तमानदुःखस्य तन्निवृत्तिर्वा तच्चेष्टसुखाद्यर्थिना पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः प्रतीता ततः प्रयतेच्छुः प्रवर्त्तते पुरुष इति न क्वचिदपीच्छाविषयस्य कृत्यधीन-

[1] भावार्थादिष्वपीति इति पा॰ ।

सिद्धित्वमन्तरेण कृत्युद्देश्यत्वं नाम किंचिदप्युपलभ्यते इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव तत एव प्रवृत्तेः, न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वं, यतः सुखमेव पुरुषानुकूलम्, न च दुःखनिवृत्तेः पुरुषानुकूलत्वं

टी० कृतिकर्मत्वं नाम प्रवर्तकत्वमित्यत्राह "तत्रे"ति, तदपीष्टस्य स्वप्रयत्नसाध्यत्वमेवेत्यर्थः, आदि-शब्देन दुःखनिवृत्तिरुच्यते स्वप्रयत्नादृते यदीत्यादेरयं भावः कृतिसाध्यत्वातिरेकि कृतिकर्मत्वं नाम इष्टतमत्वे पर्य्यवस्यतीति प्रयत्नेच्छुः चिकीर्षुः प्रवर्तते आन्तरप्रयत्नमिच्छन् स तमुत्पादयतीत्यर्थः इष्टतमस्यैव रूपद्वयमस्ति इच्छाविषयत्वं प्रेरकत्वं चेति तत्र प्रेरकत्वं कृत्युद्देश्यत्वमित्यत्राह "इच्छाविषयस्ये"ति, कुत इत्यत्राह "तत एवे"ति, पुरुषानुकूलत्वं कृत्युद्देश्यत्वमित्यत्राह "न चे"ति, सुखमेव पुरुषानुकूलमिति न वाच्यं सुखव्यतिरिक्तस्यापि अनुकूलत्वदर्शनादित्यत्राह "न च दुःखनिवृत्तेः पुरुषानुकूलत्वमि"ति, न हि दुःखनिवृत्तिः सुखं भवतीत्यर्थः । एतदुपपादयति–

सू० पुरुषानुकूलं सुखं तत्प्रतिकूलं दुःखमिति हि सुखदुःखयोः स्वरूपविवेकः, दुःखस्य प्रतिकूलतया तन्निवृत्तिरिष्टा भवति नानुकूलतयाऽनुकूलप्रतिकूलान्वयविरहेण स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः अतः सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न सम्भवति न च सुखार्थतया तस्याप्यनुकूलत्वम् ।

टी० "पुरुषानुकूलमि"ति, तर्हि दुःखनिवृत्तेरिच्छाविषयत्वं कथमित्यत्राह "दुःखस्ये"ति, स्वत इष्टत्वमनुकूलत्वं न त्विष्टान्तरहेतुतया अनिष्टनिवृत्तिरूपतया वा इष्टत्वम्, एवं स्वतो ऽनिष्टत्वं प्रतिकूलत्वं न त्वनिष्टान्तरहेतुतया इष्टनिवृत्तिरूपतया वा ऽनिष्टत्वम् अतो दुःखनिवृत्तेरिष्टत्वं दुःखस्य प्रतिकूलत्वाचानुकूलत्वादित्यर्थः, दुःखनिवृत्तेरनुकूलत्वा-

भावमुपपादयति "अनुकूलप्रतिकूले"ति, स्वरूपेणावस्थितिस्सुखनिवृत्तिरूपा दुःखनिवृत्तिरूपा च अनुकूलप्रतिकूलान्वयविरहरूपायां स्वरूपेणावस्थितौ दुःखनिवृत्त्यंशस्य सामानाधिकरण्येन व्यपदेशः, दुःखनिवृत्तिरेव सुखं चेद्दुःखनिवृत्तौ ते सुखनिवृत्तिर्न स्यात् तदा सुषुप्तावपि सुखान्वयप्रसङ्गः अन्यतरनिवृत्तिरन्यतरसंयोगश्चेत् तर्हि स्वाप्येऽपि दुःखसुखानन्वयः प्रसज्जेदिति भावः । सर्वस्या[1]नुकूलत्वासम्भवे दृष्टान्ताभिप्रायेण क्रियाद्युपादानं क्रियादेरित्यादिशब्देन प्रयत्नो विवक्षितः । सुखसाधनत्वादनुकूलत्वमित्यत्राह "ने"ति, कुत इत्यत्राह—

सू० दुःखात्मकत्वात्तस्य, सुखार्थतयापि तदुपादानेच्छामात्रमेव भवति, न च कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वं, भवत्पक्षे शेषित्वस्यानिरूपणात्, न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसम्बन्धि शेषीत्यवगम्यते, तथा सति कृतेरशेषत्वेन तां प्रति तत्साध्यत्वस्य शेषित्वाभावात्, न च परोद्देशप्रवृत्त्यर्हतायाः शेषत्वेन परः शेषी, उद्देश्यत्वस्यैव निरूप्यमाणत्वात् ॥

टी० "दुःखात्मकत्वा"दिति, तस्य क्रियादेः प्रतिकूलरूपतया भासमानं वा तद्विषयज्ञानं वा दुःखं न तद्व्यतिरिक्तमात्मगुणान्तरमित्यभिप्रेत्य दुःखात्मकत्वादित्ययं हेतुरुक्तः, "सुखार्थतये"ति, न हि दण्डचक्रादिर्घटो भवतीत्यर्थः । असुखार्थात्सुखार्थस्य किं वैषम्यमित्यत्राह "सुखार्थतयाऽपी"ति, कृतिशेषित्वं कृत्युद्देश्यत्वमिति पक्षं दूषयति "न चे"ति, अनिरूपणात्—दुर्निरूपत्वादित्यर्थः । परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति पक्षमनूद्य दूषयति "न च परोद्देशप्रवृत्तेत्यादिना, न च परोद्देशेन प्रवृत्त्यर्हताया इति उत्पत्तिश्च प्रवृत्तिमद्व्यापारः अतः प्रवृत्त्यर्हत्वम् उत्पत्त्यर्हत्वं परोद्देशप्रवृत्त्यर्हतायाः शेषत्वरूपतयेर्थः "उद्देश्यत्वस्यैव निरूप्यमाणत्वा"दिति । अयमर्थः कृत्युद्दे-

१ अपूर्वस्यानुकूलत्वासंभवे इति पा० ।

श्यत्वं कृतिशेषित्वं शेषित्वं च शेषप्रतिसम्बन्धित्वं शेषत्वं परोद्देशप्रवृत्त्यर्हत्व-मित्युक्ते सत्युद्देश्यत्वं नाम उद्देश्यत्वमित्युक्तं भवतीत्यात्माश्रयः, उद्देश्यत्व-निरूपणोपयुक्तस्य शेषत्वनिरूपणस्योद्देश्यत्वनिरूपणसापेक्षत्वादिति किं परोद्देशप्रवृत्त्ययोगव्यवच्छेदो विवक्षितः ?

**श्रु० प्रधानस्यापि भृत्योद्देशप्रवृत्त्यर्हत्वदर्शनाच्च, प्रधानस्तु भृत्यपोषेऽपि स्वोद्देशेन प्रवर्तत इति चेन्न भृत्योऽपि हि प्रधानपोषणे स्वोद्देशेनैव प्रवर्तते कार्य्यस्वरूपस्यैवानिरूपणात् कार्य्यप्रतिसम्बन्धी शेषः तत्प्रतिसम्बन्धि शेषीत्यप्यसङ्गतम् ॥**

टी० उतान्ययोगव्यवच्छेद ? इति विकल्पे प्रथमे शिरसि राजन्यतिव्याप्तिमाह "प्रधानस्यापी"ति, अत्रोद्देश्य–शब्देन प्रयोजनभावाभिसन्धि-विषयित्वं विवक्षितः, तत्परिहारमुखेन द्वितीयं शिरश्शङ्कते "प्रधानस्त्व"ति, परोद्देशेन प्रवृत्त्यन्ययोगव्यवच्छेदो विवक्षितः स तु प्रधानस्य नास्ति स्वोद्देशेनापि तस्य प्रवृत्तेः, अतो नातिव्याप्तिरित्यर्थः । परिहरति "ने"ति भृत्येष्वव्याप्तिमाह "भृत्योऽपि ही"ति, कार्यप्रतिसम्बन्धित्वं शेषत्वमिति पक्षं दूषयति "कार्य्य-स्वरूपस्ये"ति, कार्य्यस्वरूपे निरूप्यमाणे फलभावार्थविलक्षणाकारेण तन्निरू-पणार्थं कार्यत्वं कृत्युद्देश्यत्वमित्युक्तम् उद्देश्यत्वं शेषित्वं, शेषित्वं च शेषप्र-तिसम्बन्धित्वं, शेषत्वं च कार्य्यप्रतिसम्बन्धित्वमित्युक्ते सत्यात्माश्रयः स्यात् कार्यनिरूपणोपयुक्तशेषत्वनिरूपणस्य कार्यनिरूपणसापेक्षत्वादित्यर्थः । भा-ष्यकाराभिमतं शेषत्वलक्षणं स्वीकृत्य कृत्युद्देश्यत्वसमर्थनमपि दुश्शकं, तथा हि परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः, परश्च शेषीति भगवान् भाष्यकारो वेदार्थसंग्रहे शेषशेषिलक्षणमभाषिष्ट, "शेषः परार्थत्वा-दि"ति, शेषशेषिभावलक्षणपरस्य जैमिनीयसूत्रस्य परैरन्यथाव्याख्यातत्वात्त-द्व्यावृत्त्यर्थं तस्य सूत्रस्यार्थोऽनेन लक्षणग्रन्थेन यथावत्प्रदर्श्यते, अस्यार्थ उच्यते अन्यस्य प्रयोजनमेव यस्य परमप्रयोजनं स शेषस्त[1]त्प्रतिसम्बन्धी शेषीति

[1] अन्यः शेषीति पा० ।

वाक्यार्थः अत्र पर-शब्दोऽन्यपर्यायः परातिशयशब्दयोः कर्मधारयशङ्कानिवृत्यर्थो गत-शब्दः, तेन स्वगतातिशयाधायके शेषिण्यतिव्याप्तिव्युदासः, अतिशय-शब्दः प्रतिकूलेतराकारपरः निकृष्टेतराकारपरो वा, तेन परगतविनाशाधायकशस्त्राग्निकण्टकादीनां विनाश्यं प्रति शेषत्वव्युदासः। न च दुःखहेतुषु यातनाशरीरेष्वव्याप्तिः तेषामपि दुःखजननद्वारा पापक्षयलक्षणातिशयहेतुत्वात्। न चानुत्पन्ने अपूर्वे व्रीह्यादिभिरतिशयाधानायोगात्तेष्वव्याप्तिः सत्तालाभस्यातिशयरूपत्वात् निकर्षात्मकधर्मेतराकारो ह्यतिशयः । ननु मानसम्बन्धार्हं व्यवहारार्हं वा यत् स्वरूपं तदेव सदिति भवन्मतं सत्ताजात्यभावात्तत्कथं स्वरूपमेवाकार? इत्युच्यते न स्वरूपस्यैव सत्तारूपत्वेऽपि तल्लाभस्याकारत्वोपपत्तेः सत्तालाभो ह्यतिशय इत्युक्तं, सत्तालक्षणस्वरूपस्य लाभो नाम प्रथमक्षणसम्बन्धः स्वरूपस्याविद्यमानत्वेऽपि धीस्थतया परातिशयाधानव्यवहार उपपन्नः, इच्छयेति पदेन परगतातिशयस्य इच्छाविषयतया प्रयोजनत्वमवगम्यते इच्छापदस्य च निरुपपदत्वात् साक्षादेवेच्छाविषयत्वमभिप्रेतं, साक्षादिच्छाविषयश्च परमप्रयोजनम् अवान्तरप्रयोजनस्य हि तदर्थतयेष्टत्वमिति न साक्षादिच्छाविषयत्वम्, अतः परमप्रयोजनत्वज्ञापकेनेच्छयेति पदेन परार्थत्वादित्यर्थ-शब्दो व्याख्यातो भवति अर्थ्यत इत्यर्थः इष्यत

टी० इति यावत्, निरुपपदश्चार्थ-शब्दः स्वतः परमप्रयोजनपरः, अनेन स्वातिशयाधायके भृत्यादौ लक्षणस्याऽव्याप्तिशङ्काव्युदासः, भृत्यो हि स्वालङ्कारादिकमपि स्वाम्यतिशयाय भवतीति हि बुध्या स्वातिशयमाधत्ते अतो भृत्येन स्वातियाधानस्य परातिशयः परमप्रयोजनमिति नाव्याप्तिः, उपादेयत्वं-स्वीकार्यत्वं व्यवहर्त्तव्यत्वमिति यावत्, इच्छास्वीकारौ यथायोग्यं संभवतः, शेषशेषिणोरुभयोरन्यतरस्मिन् वा संभवतश्चेदिच्छास्वीकारौ तद्गतौ स्तः, यथा राजभृत्य-राजनन्दनादौ. उभयं न चेतनं चेत् उभयव्यतिरिक्तचेतनगताविच्छास्वीकारौ, यथा प्रभाप्रभावद्यागतदङ्गादिके, उपादेयत्वमुपादातुमर्हत्वं, तेनाकिञ्चित्कारदशायामव्याप्तिपरिहारः, एवकारेण कदाचित्स्वार्थनिरपेक्षपरप्रयोजनसाधकेषु प्रकृष्टकृपास्नेहान्वितेषु अतिव्याप्तिव्युदासः। अथवा केनचिदाकारे-

णोपहितस्य शेषत्वे सति तदनुपहितस्य शेषत्वव्यावृत्त्यर्थ एवकारः अनुपहितस्य प्रयोजनान्तरसाधकत्वेन परातिशयैकप्रयोजनत्वाभावात्, स्वरूपं स्वं रूपमसाधारणधर्मः–निरूपकधर्म इत्यर्थः, न च निरूपक-शब्दस्य व्युत्पादनार्थत्वात् व्यावर्त्यधर्मापेक्षा परातिशय एव परमप्रयोजनं यस्य स परं प्रति शेष इति लक्षणमुक्तं भवति, यतः परातिशयस्यैव परमप्रयोजन-स्याधायकत्वं लक्षणम्, अत एव परगतातिशयाधानायोगान्ययोगव्यवच्छेदविकल्पेन राजन्यभृत्ययोरतिव्याप्त्यव्याप्तिप्रसञ्जनमस्मत्पक्षे नावतरति परातिशयमात्राधायकत्वस्य लक्षणत्वाभावात् । न च द्वारशेषिगतस्यातिशयस्य परमशेषिगतातिशयं प्रति प्रयोजकत्वे सत्यपि तस्य परमप्रयोजनत्वाभावात् द्वारशेषिणं प्रति शेषभूतवस्तुनि लक्षणस्याव्याप्तिश्शङ्कनीया शेषभूतवस्तुगतातिशयापेक्षया शेषिगतातिशयस्य पारम्यमात्रस्य विवक्षिततया परमशेषिगतातिशयरूपपरमप्रयोजनत्वस्य व्युदसनीयत्वाभावात्तश्च द्वारशेषिगतातिशयस्य शेषभूतवस्तुगतातिशयान्तराधायकत्वेन प्रयोजनत्वं परम-शब्दव्युदसनीयम् । ननु "पुरुषश्च कर्मार्थत्वा"दिति पुरुषस्य कर्मशेषत्वं कर्ममीमांसायां राद्धान्तितम् । पुरुषश्च स्वर्गकाम इति तस्य परातिशयनिष्पादनमेव परमप्रयोजनं न भवतीत्यव्याप्तिरिति चेत्तच्च तस्य कर्तृत्वोपहितवेषेण शेषत्वादुपहितस्य कर्मनिष्पादनैकप्रयोजनत्वाच्च कर्मशेषतोपपत्तेः । नन्वेतल्लक्षणमसंभवहतं, न खलु चेतयमानः कश्चित्परगतातिशयं स्वस्य परमप्रयोजनं मत्वा प्रवर्त्तते किन्तु परमप्रयोजनमपि स्वप्रयोजनार्थं मत्वा हि प्रवर्तते, उच्यते नैवमसंभवः, अचेतनेषु परातिशयैकप्रयोजनत्वदर्शनात् यद्यपि चेतनस्वारस्येन स्वप्रयोजनमेव परमोद्दे[1]श्यं मन्यते तथाऽपि न लक्षणस्य हानिः, जन्मक्रियाऽद्यभिज्ञैर्मध्यस्थैः परातिशयनिष्पादनैकप्रयोजनतया प्रतिपत्तुं शक्यत्वात्, इच्छास्वीकारो यथा सम्भवमिति व्यक्तं[2] तथा प्रतिपत्तियोग्यत्वमनिष्टमप्यवर्जनीयं स्वयमपि भृत्यो जानाति, अपि च परातिशयस्य परमप्रयोज-

१ परमप्रयोजनं मन्यते इति पा·

२ ह्युक्तम् इति पा· ।

त्त्वावगतिः स्वरसतश्चेतनस्यापि सम्भवति, प्रकृष्टकृपास्नेहान्वितेषु तद्दर्श-
नात्, दया हि स्वार्थनिरपेक्षा परदुःखासहिष्णुता, अत्रानुकूलेतरजनः पर
इति विवक्षितः, अर्थादिकामनया परदुःखं शिक्षमयिषोस्तद्दुःखानुवृत्तिर-
निष्ठा स्यादिति तद्व्युदासाय स्वार्थानपेक्ष–शब्दः, यद्यपि कृपया परं रक्षतः
शास्त्रसिद्धमदृष्टं तथाऽप्यदृष्टाभिसन्धिरहितस्यैव परदुःखदर्शनानन्तरम्
अवशाश्रुपातादिमत्त्वदर्शनात्तद्रक्षणदशामप्यदृष्टाभिसन्धिराहित्यदर्शना-
च्च स्वार्थानपेक्षता युक्ता, परदुःखदर्शनजनिततादात्विकस्वदुःखनिवृत्तिरू-
पफलात्तत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमिति चेत्, ईदृशं स्वार्थत्वं शेषस्याप्य-
स्तीति, तद्धि स्वार्थानपेक्षत्वं न विहन्ति किंतु तदनुकूलमेव, परदुःखज्ञानरू-
परदुःखनिवृत्तिं पराभ्युदयज्ञानरूपप्रीतिमत्त्वं च विना स्वार्थानपेक्षत्वस्य विव-
क्षितत्वात्, तथा मित्रादिषु स्नेहप्रकर्षाच्च स्वार्थानपेक्षा प्रवृत्तिर्बन्धुद्रविणय-
शोधर्महानिकरी प्राणव्ययकरी च दृश्यते, सम्बन्धविशेषान्वितेषु प्रीतिः
स्नेहः यस्य विपाकाः अस्थानभयशङ्कित्वं दोषानवभासो, दोषेऽपि गुणबुद्धि-
रित्यादयः, स्निग्धश्च जनः स्वता[1]मनपेक्ष्य पुत्रादिदुःखनिवृत्त्यर्थं प्रवर्त्तमानो
दृश्यते, तच्च तद्गतदुःखासहत्वकृतं, यस्य च दुःखातिशयदर्शनं स्वसत्ता-
नपेक्षतामापादयेत् स च निरतिशयप्रीतिविषयः परानर्थनिमित्ता ऽप्रीतिता-
रतम्यस्य तद्विषयप्रीतितारतम्यनिबन्धनत्वात्, यश्च निरतिशयप्रियः तद-
भ्युदयोऽपि निरतिशयप्रियः तत्प्रीतितारतम्यस्य तत्सम्बन्धिप्रीतितारत-
म्यहेतुत्वात्, तदभ्युदयश्च परमप्रयोजनं भवति स्वप्रीतिहेतुभूतस्वग-
तार्थान्तरसाधनत्वनैरपेक्ष्येण स्वेच्छाविषयत्वात् अतः कृपया स्नेहेन च
परदुःखासहिष्णुत्वदर्शनात् परप्रयोजनस्य परमप्रयोजनत्वं सिद्धमिति न
शेषलक्षणस्यासम्भवः । न च परमप्रयोजनरूपपरातिशयाधायकत्वस्य मित्रा-
दिष्वपि संभवाल्लक्षणस्यातिव्याप्तिश्शङ्कनीया तेषां परातिशयैकप्रयोजन-
त्वनियमाभावात् । तद्धि तेषामाकारविशेषोपहितरूपेण वा यावज्जीवं वा
पुरुषविशेषम्प्रति न नियतम्पुरुषभेदेनाप्यनियतञ्च, भृत्येषु तु तन्नियतं, शेषि-

---

१ स्वसत्तामनपेक्ष्येति द्राविडपाठः परमुपेक्षणीयः ।

विशेषनियमाभावेऽपि यं कंचित्प्रतिपारार्थ्यं भृत्यादेर्यावदात्मभावीति-यदीदृक्त्वं न दृश्यते तेषां न भृत्यत्वम्। यद्वा यद्यपि गर्भदासादयः स्वेषामपरार्थैकप्रयोजनत्वमजानन्तश्शेषिण्यतिशयाधानमपि स्वार्थं मन्यन्ते तथाऽपि स्थूलोऽहमित्यात्मनो देहादभिन्नत्वबुद्धिवत्सा भ्रान्तिरिति न लक्षणाव्याप्तिः, स्वार्थत्वबुद्धेरात्मनः स्थूलत्वधिय इव प्रमाणबाधितत्वात्। न च स्वार्थत्वभ्रान्तिमात्रेण पारार्थ्यहानिः, न ह्यात्मनः स्थूलोऽहमिति भ्रान्त्या देहवैलक्षण्यहानिः, एवं चिदचितोरपि स्वातन्त्र्यबुद्धेः श्रुतिबाधितत्वाच्च लक्षणाव्याप्तिः। न खलु व्रीह्यादीनां यागीयत्वाज्ञानेऽपि यागशेषत्वहानिः, स्वातन्त्र्याभिमानवतः परमप्रयोजनरूपपरगतातिशयं नियमेनाना[1]पादयतः कथं लक्षणवत्त्वमिति चेत् न एतद्बुद्ध्या तथात्वानवगमेऽपि वस्तुतः परमात्मलीलोपकरणतया परमात्मनि लीलारसरूपातिशयस्य नियमेन सिद्धेः तत्त्वज्ञैरीश्वरपरिकरत्वेन नियमेन ज्ञायमानत्वं चास्य किञ्चित्कारः, तेन एतत्परिकरवत्तया ज्ञायमानत्वरूपातिशयः परस्य सिध्येत्, तदुक्तवीतिविद्भिः "मनागुपकारिता सर्वस्यास्यैव तत्परिकरत्वेन ज्ञायमानत्वा"दिति, शेषभूतवस्त्वाहितलीलारसाद्यतिशयभाक्त्वञ्च परमात्मनोऽवाप्तसमस्तकामत्वविरोधि इच्छायां सत्यामभिमतविनियोगानुगुणपरिकरसम्पत्तिर्ह्यवाप्तसमस्तकामत्वं, यथाऽऽह भगवान् भाष्यकारो वेदान्तसारे "अस्यात्मतृप्तस्यावाप्तसमस्तकामत्वं हि सदाऽभिमतसकलभोगोपकरणसद्भाव" इति, अतो यथोक्तशेषलक्षणमुपपन्नम्, एवमस्मदुक्तं शेषलक्षणमङ्गीकृत्य कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वमिति परैर्वक्तुन्न शक्यते विकल्पासहत्वात् किन्त्वया द्वारशेषित्वं कृत्युद्देश्यत्वमभिमतम्? उत परमशेषित्वं? प्रथमे भावार्थस्यापि कृतिशेषित्वं स्यात् तस्य कृतिसाध्यत्वात्, द्वितीये स्वर्गस्य कृतिं प्रति शेषित्वं स्यात्, कृतिसाध्यापूर्वस्यापि स्वर्गसाधनत्वादतः कृतिशेषित्वरूपं कृत्युद्देश्यत्वं फलभावार्थविलक्षणाकारेण न सिध्यति॥

श्रु० नापि कृतिप्रयोजनत्वं, कृत्युद्देश्यत्वं पुरुषस्य कृत्यारम्भप्र-

---

१ नियमेनादधतः इति पा०।

योजनमेव हि कृतिप्रयोजनं, स चेच्छाविषयः, तस्मादिष्टत्वातिरेकिकृत्युद्देश्यत्वानिरूपणात्कृतिसाध्यता कृतिप्रधानत्वस्वरूपकार्य्यं दुर्निरूपमेव ॥

टी० अथ कृतिप्रयोजनत्वं कृत्युद्देश्यत्वमिति पक्षं दूषयति "नापी"ति, न हि कृतिर्नाम चेतयमाना काचित्प्रयोजनवती, तस्मात्कृतिप्रयोजनं नाम कृतिमत्पुरुषप्रयोजनमित्यर्थः। ततः किमित्यपेक्षायां तच्चेष्टत्वे पर्यवस्यतीत्याह "स चे"ति, कृतिसाध्यता कृतिप्रधानत्वस्वरूपं कार्य्यं दुर्निरूपमेवेति कृतिप्रधानत्व-शब्देन स्वेदादिव्यावृत्तिः, कृतिसाध्यता-शब्देन आत्मव्यावृत्तिः, तस्य हि कृतिशेषित्वमस्ति विशिष्टस्य लक्षणत्वात्तत्र विशेष्ये दुर्निरूपे सति विशिष्टमेवासिद्धमित्यर्थः । एवं तृतीयाकाररूपं प्रयोजनत्वं दूषितम् ॥

मू० नियोगस्यापि साक्षादिषिविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वात्तत्साधनतयैवेष्टत्वं, कृतिसाध्यत्वञ्च, अत एव हि तस्य क्रियातिरिक्तता, अन्यथा क्रियैव कार्य्यं स्यात् ॥

टी० अथ स्वत इष्टत्वरूपं प्रयोजनत्वं तत्प्रयुक्तकृतिसाध्यत्वं च दूषयति "नियोगस्यापी"ति, इषिः— इच्छा, अत्रेच्छाविषयभूतार्थान्तरसाधनत्वविरहेणेष्टत्वं स्वत इष्टत्वं विवक्षितं, तत्सुखस्य दुःखनिवृत्तेश्च समानम्, स्वत इष्टत्वं स्वत इष्टत्वप्रयुक्तकृतिसाध्यत्वं च तयोरेव तस्मात्स्वत इष्टत्वतत्प्रयुक्तकृतिसाध्यत्वे तत्सातत्तत्साधनतयेष्टस्यनियोगस्य न सिध्यत इत्यर्थः साधनतयेष्टत्वमुपपादयति "अत एव ही"ति, साधनत्वेन सिद्ध्यनङ्गीकारे धात्वर्थ एव कार्यं स्यादित्याह "अन्यथे"ति, एतद्विवृणोति "स्वर्गकामे"ति, "अत" इति, स्वर्गकामपदान्वयात्पूर्वं धात्वर्थमात्रस्यैव कार्यताप्रतिपत्तेस्तदन्वये तत्साधनतयैव प्रतिपत्तेश्चेत्यर्थः प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणाय अपूर्वमेव पश्चात्स्वर्गसाधनं भवतीति, अयमर्थः यथा स्वप्राधान्यनिर्वहणायानुजीवि-

नामभिमतं प्रभुः प्रददाति तद्वदपूर्वमपि स्वयं प्रधानतया प्रतिपन्नं स्वप्राधान्यनिर्वहणाय स्वं साधयतः पुरुषस्य स्वर्गं ददातीति, यथा पञ्चिकायाम् "आत्मसिद्ध्यनुरूपस्य नियोज्यस्य प्रसिद्धये । कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव न" इति, उपहास्यं–समीपस्थैरपि हास्यम्, अत इत्युक्तमर्थं विवृणोति "स्वर्गकामे"ति,

**मू० स्वर्गकामपदसमभिव्याहारानुगुण्येन लिङादिवाच्यं कार्य्यं स्वर्गसाधनमेवेति क्षणभङ्गिकर्मातिरेकि स्थिरं स्वर्गसाधनमपूर्वमेव कार्य्यमिति स्वर्गसाधनतोल्लेखेनैव ह्यपूर्वव्युत्पत्तिः, अतः प्रथममनन्यार्थतया प्रतिपन्नस्य कार्य्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात्स्वर्गसाधनम्भवतीत्युपहास्यं, स्वर्गकामपदान्वितकार्य्याभिधायिपदेन प्रथममप्यनन्यार्थताऽनभिधानात् ॥**

टी० प्राधान्येन कार्यप्रतिपत्तिः किमेकपदश्रवणवेलायाम्? उत स्वर्गकामपदान्वितवेलायाऽ?मिति विकल्पमभिप्रेत्य प्रथमे पक्षे दूषणमन्यथा क्रियैव कार्यं स्यादित्यनेनोक्तं भवति, तस्मिन्नेव पक्षे अभ्युपगमेन दूषणान्तरञ्च, एक–पदेन कार्य्यमनन्यार्थप्रतिपन्नमस्तु तथाऽप्यन्विताभिधानदशायाम्प्रतिपन्न एवार्थस्सम्यगर्थः, अतोनाऽनन्यार्थत्वमिति, द्वितीयकल्पे दूषणमुच्यते "स्वर्गकामपदान्विते"ति, स्वर्गकामपदान्वितलिङादिना तत्साधनतयैवाभिधानात् प्रथममनन्यार्थतया प्रतिपन्नमिति न वक्तुं युक्तमित्यर्थः, व्युत्पत्तिदशायामपूर्वस्य साधनतया व्युत्पत्तिः, अभिधानदशायान्तु अनन्यार्थं स्थायिकार्यमित्येव प्रतीयत इति शङ्कायाम् अपूर्वव्युत्पत्तिमतोऽपि पुरुषस्य एकपदश्रवणवेलायामनन्यार्थत्वप्रतीत्यनुपपत्तिमाह–

**मू० सुखदुःखनिवृत्तितत्साधनेभ्योऽन्यस्यानन्यार्थस्य कृतिसाध्यताप्रतीत्यनुपपत्तेश्च, अपि च किमिदन्नियोगस्य प्रयोजनत्वम्? ॥**

टी० "सुखे"ति, "न निर्विशेषं सामान्य"मिति न्यायात्साध्यमिति सामान्येनाभिधेयमपि विशेषनिष्ठतया प्रतीयते सुखं दुःखनिवृत्तिस्तत्साधनं वा त्रीण्येव कृतिसाध्यानि तस्मादेषु त्रिषु अन्यतमेन साध्येन भवितव्यं तत्र सुखत्वदुःखनिवृत्तित्वायोगात् तत्साधनतयैव साध्यमिति प्रतीयते कृतिर्हि त्रिष्वन्यतममेव गोचरयति तथा दर्शनात्, दर्शनानुरोधेन च अभ्युपगन्तव्यं कृतेः क्रियातिरिक्तगोचरत्वादर्शनेन हि कृत्यपूर्वयोर्घटकत्वेन भावार्थो निवेशितः, तस्मात्त्रिषु अन्यतमत्वाभावे साध्यमिति प्रतीतिरेव न स्यादित्यर्थः । किं चान्विताभिधानवादिना स्वर्गकामपदान्वित एव लिङादिः कार्यमभिदधातीति वक्तव्यं, तदानीं तत्संनिधानबलेन तत्साधनतयैव प्रतीतिः स्यादिति नानन्यार्थतया प्रतिपत्तिरिति । सुखेत्यादेरेवं वार्थः सुखदुःखनिवृत्त्यन्यत्वात्स्वत इष्टतया कृतिसाध्यत्वमयुक्तं तत्साधनादन्यतया परम्परयेष्टत्वेन कृतिसाध्यत्वमप्ययुक्तमिति पूर्वन्तृतीयाकाररूपं प्रयोजनत्वचिरस्तम् । अथ स्वत इष्टत्वरूपप्रयोजनत्वञ्च सुखदुःखनिवृत्त्यन्यत्वाचिरस्तम् । इदानीं स्वत इष्टत्वसिद्धये अनन्यार्थत्वद्रढिम्ने च सम्भावनीयं सुखरूपप्रयोजनत्वं दूषयितुमुपक्रमते "अपि चे"ति, "किमिदं नियोगस्य प्रयोजनत्व"मिति, किं—क्षेपे, शङ्कते—

मू० सुखवन्नियोगस्याप्यनुकूलत्वमेवेति चेत्किन्नियोगः सुखं? सुखमेव ह्यनुकूलं, सुखविशेषवन्नियोगापरपर्य्यायं विलक्षणं सुखान्तरमिति चेत्, किन्तत्र प्रमाण? मिति वक्तव्यम्? ॥

टी० "सुखव"दिति अनुकूलत्वं सुखेतरस्यानुपपन्नम्मन्यमानः पृच्छति "किमि"ति, अभिप्रेतं विवृणोति "सुखमेव ही"ति, पुनः शङ्कते "सुखविशेषव"दिति, नियोगापरपर्यायम्पर्यायशब्दबाहुल्यसम्भवादपरशब्दः "सुखान्तर"मिति, यथा भौमसुखाद्विलक्षणं स्वर्गादिसुखं सम्भाव्यते तथा ततोऽपि विलक्षणं सुखान्तरमिदमित्यर्थः । प्रमाणाभावं वक्तुमाह "किन्तत्रे"ति, चन्दनादि सुखं हि स्वानुभवसिद्धमतः स्वानुभवो लौकिक

वाक्यं, वेदे च काम्यविधिवाक्यन्नित्यं नैमित्तिकवाक्यम् अर्थवादाश्च यथाक्रमन्नियोगस्य सुखरूपतां प्रति प्रमाणानि न भवन्तीत्युच्यते—

सू० स्वानुभवश्चेन्न विषयविशेषानुभवसुखवन्नियोगानुभवसुखमिदमिति भवताऽपि नानुभूयते शास्त्रेण नियोगस्य पुरुषार्थतया प्रतिपादनात्पश्चात्तु भोक्ष्यत इति चेत् किन्तन्नियोगस्य पुरुषार्थत्वादिशास्त्रम् ? न तावल्लौकिकं वाक्यम् तस्य दुःखात्मकक्रियाविषयत्वात् तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात्, नापि वैदिकम्, तेनापि स्वर्गादिसाधनतयैव कार्य्यस्य प्रतिपादनात्, नापि नित्यनैमित्तिकशास्त्रम्, तस्यापि तदभिधायित्वम् स्वर्गकामवाक्यस्यापूर्वव्युत्पत्तिपूर्वकमित्युक्तरीत्या तेनापि सुखादिसाधनभूतकार्य्याभिधानमवर्जनीयम्, नियतैहिकफलस्य कर्मणोऽनुष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्यारोगतादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलब्धेश्च, नियोगः सुखमित्यत्र न किञ्चन प्रमाणमुपलभामहे, अर्थवादादिष्वपि स्वर्गादिसुखप्रकारकीर्त्तनवन्नियोगरूपसुखप्रकारकीर्त्तनं भवतामपि न दृष्टचरम् ॥

टी० स्वानुभवश्चेदित्यादिना, तस्य दुःखात्मकक्रियाविषयत्वात्तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनादिति दुःखात्मकस्य सुखादिसाधनभूतधात्वर्थमात्रस्य कर्त्तव्यताप्रतिपादनादित्यर्थः, नियतैहिकफलस्येत्यादिना योग्यानुपलब्धिरुच्यते नियतैहिकफलस्य कर्मणः अप्रस्तुतप्रतिबन्धकस्य[1] कर्मण इत्यर्थः, अनेनान्त्येष्टिसापेक्षपरमापूर्वव्यावृत्तिः । अथ कृतिसाध्यत्वं दूषयति—

१ अप्रस्तुतप्रतिबन्धस्येति पा० ।

सू० अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यवसीयते धात्वर्थस्य च यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता समाराधितात्परमपुरुषात्फलसिद्धिश्चेति "फलमत उपपत्ते"रित्यत्र प्रतिपादयिष्यते, अतो वेदान्ताः परिनिष्पन्नं परब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वं च सिद्धम् ॥ चातुर्मास्यादिकर्मस्वपि केवलस्य कर्मणः ।

टी० 'अतो विधिवाक्येष्व'पीति, किं व्युत्पत्तिसिद्धत्वाद्धात्वर्थातिरिक्तोऽर्थः स्वीक्रियते ? उत पुरुषार्थतासिध्यर्थं ? मुत सुखसाधनत्वलक्षणाव्यवहितपुरुषार्थत्वसिध्यर्थं ? मिति विकल्पं हृदि निधाय प्रथमद्वितीयपक्षयोरुत्तरमाह "अत" इति, अयमर्थः—उक्तप्रकारेण धात्वर्थातिरिक्ते व्युत्पत्त्यभावात् तथाविधस्य स्वतः पुरुषार्थत्वाभावाच्चेति कर्तृव्यापारः प्रयत्नः शब्दशास्त्रस्वारस्यमप्यस्मत्पक्षे विद्यत इत्याह "शब्दानुशासनसिद्धमेवे"ति, साधनत्वसिद्ध्यर्थं क्रियातिरिक्तार्थस्वीकार इत्यत्राह "धात्वर्थस्य चे"ति, यज–देवपूजादाविति हि धातुरिति भावः । प्रकृतब्रह्मविचारारम्भहेतुः सिद्ध इत्याह "अतः"इति, सिद्धवस्तुनि बुद्धिपूर्वकं यदृच्छया वाद्यव्युत्पत्तिसम्भवादन्यथाऽपि विधिशेषतयाऽपि सिद्धश्चेत्यर्थः । अथ विशेषणांशासिद्धिम्परिहरति चातुर्मास्यादीत्यादिना, कर्मणामावृत्तिविधानाच्च क्षयफलत्वमवगतमिति सिद्धमित्यनुसन्धेयं "तद्यथेह कर्मचितो लोकः क्षीयत इत्यादिवाक्यान्यभिप्रेत्याह—

सू० क्षयिफलत्वोपदेशादक्षयफलश्रवणम् "वायुश्चान्तरिक्षं चैतदमृत"मित्यादिवदापेक्षिकं मन्तव्यम्, अतः केवलान्कर्मणामल्पास्थिरफलत्वाद्ब्रह्मज्ञानस्य चानन्तस्थिर-

फलत्वात् तन्निर्णयफलो ब्रह्मविचारारम्भो युक्त इति स्थितम् ॥

टी० "क्षयिफलत्वोपदेशा"दिति, अक्षयफलश्रवणनिर्वाहमाह "वाशब्दो"ति, न हि चातुर्मास्यादिवाक्येषु अक्षयफलश्रवणमर्थवादोक्तत्वात् त्यज्यते अपि तु कर्मणामावृत्तिविधानात् क्षयिफलत्वोपदेशाच्च, तस्मात्कर्मणां क्षयिफलत्वनिर्णयस्सि[1]द्धः, अतो हेतोर्विशेषणांशः सिद्धः। अधिकरणार्थमुपसंहरति "अत"इति, अस्याधिकरणस्य ब्रह्ममीमांसा विषयः, सा किमारम्भणीया? उत ने? ति संशयः, सिद्धवस्तुनि शब्दव्युत्पत्तिर्नास्तीति विचारः, अस्तीति निश्चयः, आरम्भः प्रयोजनमित्यधिकरणाङ्गपञ्चकं, यथाहुः "विषयस्संशयश्चैव विचारो निर्णयस्तथा। प्रयोजनेन सहितमेतत्स्यादङ्गपञ्चकमिति, "परीक्ष्य लोकानित्यादिवाक्यम्प्रथमसूत्रस्यन्यायसिद्धार्थानुवादपूर्वकं गुरूपसदननियमविधिपरं "गुरुमेवाभिगच्छे"दित्युक्तत्वात् रागतः प्रवृत्तौ सत्यां विधेयाभावात् अस्य सूत्रस्य वाक्यत्वं न घटते उद्देश्योपादेयविभागवद्धि वाक्यं विधेयं ह्युपादेयमिति न वाच्यम् अज्ञातज्ञापकत्वात्प्रागज्ञातं वाक्यज्ञाप्यं ह्युपादेयं रागतो ब्रह्मविचारे प्रवृत्तस्यापि सिद्धवस्तुनि व्युत्पत्तिर्नास्तीति वाक्येनानारम्भणीयत्वं ज्ञायते, तम्प्रति सिद्धवस्तुनि व्युत्पत्तिसम्भवादारम्भणीयत्वज्ञापनमज्ञातज्ञापनमेवेत्युद्देश्योपादेयविभागवत्त्वं सूत्रस्य, अत्र हि रागतः प्रवृ[2]त्तेरेव पूर्वपक्षहेतुना निवृत्तौ प्रसक्तायामप्रतिपन्नस्तत्परिहारो विधीयते ॥

इति जिज्ञासाऽधिकरणं समाप्तम् ॥

---

१ क्षयिफलत्वनिर्णयसिद्धिरिति द्राविडपाठोयुक्ततरः।

२ प्रवृत्तिमतः इति पा०।

मुमुक्षुजनसर्वस्वाय मीमांसाद्वयगुरवे श्रीमते रामानुजाय नमः ॥

अथ शास्त्रकाण्डद्विकाध्यायपादपेटिकाधिकरणरूप-
सम्बन्धिभेदेन सप्तविधासु सङ्गतिषु सङ्गत्यन्तराणां
स्पष्टत्वादधिकरणसङ्गतिमाह ।

भू० किम्पुनस्तद् ब्रह्म यज्जिज्ञास्यमुच्यते ? इत्यत्राह—

जन्माद्यधिकरणम् । सू० जन्माद्यस्य यतः ॥ २ ॥

टी० "किम्पुन"रिति, शास्त्रसङ्गतिर्हि वेदार्थविचाररूपतया स्पष्टतरा, वेदान्तार्थविचाररूपत्वात्काण्डसङ्गतिः, कारणविषयत्वाद् द्विकसङ्गतिः, कारणविषयवाक्यतर्करूपत्वादध्यायसङ्गतिः, अयोगव्यवच्छेदविश्रान्तेः पादसङ्गतिः, शास्त्रारम्भार्थत्वात्पेटिकासङ्गतिः, अतोऽवान्तरसङ्गतिः किम्पुनरित्यादिभाष्येणोच्यते, जिज्ञास्यं—विचार्यं, सकलेतरपुरुषार्थतत्साधनपरित्यागपूर्वकं प्राप्यत्वेनोपायत्वेन च यज् जिज्ञास्यमुक्तमित्यर्थः, प्राप्यतया प्रापकतयाऽपि हि ब्रह्मैव आपाततः प्रतिपन्नम् अनेन जिज्ञास्यमिति पदेन प्रणववेदप्रधानाद्यौपचारिकार्वाचीनब्रह्म—शब्दार्थव्यावृत्तिः, तत्र व्यावर्तकस्य लक्षणस्य वक्तव्यतया ऽपि हि सिध्यति ब्रह्म—शब्दवाच्यं स्वरूपेण गुणैश्च निरतिशयबृहत्त्वयोगि बृहति बृंहयति"बृहत्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यत'' इति श्रुतिस्मृतिनिर्वचनात्, तत्र "ब्राह्मणो वै सर्वा देवताः न किरिन्द्रत्वदुत्तरः अग्निस्सर्वा देवताः एक एव रुद्रः सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः जनिता अग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः'' "आपो वा इदं सर्व"मित्यादिभिर्ब्राह्मणाग्नीन्द्रादीनामपि समाभ्यधिकरहितत्वप्रतीतेरर्थतत्त्वं व्याकुलम् अतस्तेषु तापत्रयातुरजिज्ञास्यं तद् ब्रह्म किंलक्षणकमित्यर्थः, सर्वेषां समाभ्यधिकराहित्ये प्रतीतेऽपि तद् व्याहतमन्यपरवाक्यावगतं चेत्यनादरणीयं तत्त्वप्रधानेषु सृष्टिप्रलयप्रकरणेषु यदेव निरतिशयबृहद्युक्तं तदेव जिज्ञास्यमित्यभिप्रायेणाह—

सू० "जन्मादी"ति, सृष्टिस्थितिप्रलयम्,

टी० "यतो वा इमानीत्यादि श्रुति"रिति इममर्थं हृदि निधाय सूत्रकारेण जन्मादिसूत्रं प्रणीतमित्यभिप्रायवतोक्तं "किं पुनस्तद्ब्रह्म यज्जिज्ञास्यमुच्यते" इति, न हि किं पुनर्ब्रह्मेत्युक्तं, सूत्रमुपादत्ते "जन्माद्यस्य यत" इति, प्रथमपदं व्याचष्टे "जन्मादी"ति,"सृष्टिस्थितिप्रलय"मिति अन्यत्पदद्वयं वाक्यार्थयोजनायां व्याख्यास्यते, प्रथमपदव्याख्यानस्य समासार्थनिर्णयार्थं वाक्यान्तरसापेक्षत्वेन वाक्यार्थयोजनायामन्तर्भावयितुमशक्यत्वात्तस्य पृथग् व्याख्यानं, सृष्टिस्थितिप्रलयमित्यत्र सृष्टि-शब्द उत्पत्तिपरः सृष्टिस्थित्यन्तकालेषु सृष्टिस्थित्यन्तकरणीमित्यादिप्रयोगात् प्रयोज्यप्रयोजकव्यापारवाचिशब्दानां व्यतिकरेण प्रयोगो ब्रह्मण एव निमित्तोपादानत्वाभिप्रायनिबन्धनः । सृष्टिस्थितिप्रलयमिति समाहारार्थे द्वन्द्वः-एकस्मिन्कार्ये अन्योन्यसापेक्षतया तुल्यनिष्पादकत्वेनान्वय इतरेतरयोगः, यथा दर्शपौर्णमासयोः स्वर्गं प्रति, अत्र समुदितविवक्षा अयमेव समुदायविवक्षायां समाहारः, तत्कृतमेकवचनत्वं नपुंसकत्वं च, अतोऽत्र सृष्टिस्थितिप्रलयमिति समाहारे द्वन्द्वः कृतः, वाक्यार्थयोजनायां सृष्टिस्थितिप्रलया इति इतरेतरयोगे द्वन्द्वः कृतः, उभयोरपि फलैक्याज्, जन्मादीत्यत्रेतिकरणेन तत्रैकवचने तात्पर्यङ्गम्यते, तत्र पदार्थयोजनायां सृष्टिस्थितिप्रलयमित्येकवचनान्तपदेन सौत्रपदस्यैकवचनमनुसृतं तत्राप्येकवचनात् सृष्टिस्थितिप्रलयानां समुदायो लक्षणं न त्वेकैकमिति ज्ञापनार्थं, समुदायस्य लक्षणत्वं श्रुतिस्वारस्यादवसीयते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति तत्प्रयन्त्यभिसंविशन्ति" इत्यत्र हि न प्रतिवाक्यन्तद्ब्रह्मेत्युक्तम् अन्यथैकतरलक्षणवैयर्थ्यं च स्यात्, न च समुदितं लक्षणं व्यावर्त्याभावात्, न हि जगदुत्पत्तौ

सू० तद्गुणसंविज्ञानो बहुव्रीहिः,

टी० निमित्तोपादानभूतं स्थित्यादिकारणत्वव्यवच्छेद्यं किमपि वस्त्वस्तीति चेत् सत्यं, व्यवच्छेद्यं नेष्यते तथाऽपि श्रुत्यनुसारात्सूत्र-

कारेणैवमुक्तं, श्रुतिश्च तद्विजिज्ञासस्वेति विधित्सितोपासनोपयोगिनिर-
तिशयवृहत्त्वविपरीताऽवृहत्त्वशङ्काव्यवच्छेदार्थं समुदायमाह, शङ्कितव्यव-
च्छेदेनापि हि सप्रयोजनत्वं स्यात्, लक्ष्याकारविपरीतशङ्कानिवारणेन विना
लक्ष्याकारनिश्चयायोगात् । न च जन्मादिष्वेकैककारणत्वं लक्ष्याकारविप-
रीतशङ्कानिवारणक्षमं, तथा हि उत्पत्तिकारणत्वेऽभिहितेऽपि स्थित्यादि-
कारणत्वं न चेत्तदनुगुणज्ञानशक्तिविरहात् स्थितिप्रलयकरणभूतवस्त्वन्तर-
सद्भावाच्च जन्ममात्रकारणस्य निरतिशयवृहत्त्वं न स्यात् मुक्तेर्लयात्मभा-
वान्मोक्षप्रदतयोपास्यस्यैव प्राप्यत्वाच्च मोक्षप्रदत्वव्याप्यत्वानुगुणैर्गुणैश्च
वृहत्त्वं न सिध्यति, अतो जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षम-
त्वेऽपि जन्मादिसमुदायकारणत्वस्यैव निरतिशयवृहत्त्वोपयुक्तत्वात् सृष्टि-
स्थितिप्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितं, समुदायस्य लक्षणत्व-
मिहाविवक्षितं जन्मादीति बहुव्रीहेरन्यपदार्थप्रधानत्वेन जन्मनोऽन्तर्भू-
तत्वादित्यत्राह "तद्गुणे"ति, बहुव्रीहिर्द्विविधः तद्गुणसंविज्ञानोऽतद्गुणसं-
विज्ञानश्च तत्र प्रथमस्योदाहरणं "सर्वादीनि सर्वनामानि" लम्बकर्णमा-
नयेत्यादि, द्वितीयस्योदाहरणं चित्रगुमानयेति, तच्छब्देन विशेष्यं, गुण-
शब्देन विशेषणं च विवक्षितं, समित्येकीकरणेऽविशेषणं विशेषणं चैकका-
र्यान्वितत्वेन सह ज्ञापयतीत्यर्थः, एवमपि बहुव्रीहेर्वान्यपदार्थप्रधानत्वभङ्गः
स्वपदवाच्यविशिष्टसमुदायस्य तत्समुदायिनो वाऽन्यपदार्थतया विवक्षि-
तत्वोपपत्तेः समासस्थपदवाच्यस्यापि विशिष्टसमुदायान्तर्गतत्वाकारेण
ह्यन्यपदार्थत्वं युज्यते स्वपदमात्रस्य तेनाकारेण तद्वाचकत्वाभावात्

## मू० अस्य—अचिन्त्यविविधविचित्ररचनस्य

टी० "अस्येति व्याख्येयपदोपादानम्, अचिन्त्येत्यादिना तद् व्या-
चष्टे "अस्ये"ति, पदस्य जगत इत्येतावन्मात्रे वक्तव्ये किमर्थो विस्तर
इति चेत् सूत्रकारविवक्षितार्थकथनार्थः, तद्विवक्षा च श्रुतिविवक्षया, श्रुति-
विवक्षा च कथं ज्ञायत ? इति चेत् उच्यते "यतो वा इमानि भूतानि
जायन्ते" इत्यत्र भूत—शब्देन कार्यवर्गोऽभिहितेति इमानीति पदं कार्यवर्गस्य

धर्मियाहकप्रमाणसिद्धाकारविशेषपरं, तत्र जगत आभासतापरत्वं ब्रह्मणो जिज्ञास्यतानुपयोगीति वैचित्र्यपरमिमानीति पदम्, ईदृशकार्यनिष्पादनानुगुणगुणोत्कर्षं ब्रह्मेति ज्ञापनार्थं श्रुतिवाक्यस्येदं–शब्देन निर्दिशतः सूत्रकारस्यापीयमेव विवक्षा, जगतः इमानीति श्रुतौ बहुवचने सत्यपि सौत्रमेकवचनं कृत्स्नस्य भुवनस्यैककार्यताविशेषेणैककर्तृकत्वज्ञापनार्थं, भूत–शब्दस्य देवादिचतुर्विधभूतमात्रपरत्वव्यावर्त्तनेन भवनक्रियायोगिकृत्स्नकार्यसमुदायात्मकजगद्विषयत्वज्ञापनार्थं च, अत एव हि भाष्ये जगत इत्युक्तं, तत्र कार्यवर्गस्य चिदचिदात्मकत्वात्तत्तत्प्रमाणसिद्धचिदचिद्वैचित्र्यमचिन्त्येत्यादिपदद्वयेनाह। ननु ग्रहाधिकरणे "ग्रहं सम्मार्ष्टी"त्यत्र उद्देश्यगतविशेषणे विवक्षाऽभावादेकवचने तात्पर्याभाव उक्तः, तेन न्यायेन प्रसिद्धवन्निर्देशरूपतयाऽनुवादरूपस्येदं–शब्दस्योद्देश्यविशेषणे तात्पर्याभावेनैवं व्याख्यातव्यम्, मैवं, ग्रहाधिकरणे ह्युद्देश्यविशेषणमात्रविवक्षा न निषिद्धा अपि त्वनुवादस्य मूलभूतप्रापकवाक्योक्तार्थविरुद्धविशेषणे हि तात्पर्याभाव उक्तः उत्पत्तिवाक्यसिद्धस्य ग्रहबहुत्वस्य विरुद्धं ह्येकत्वम् अन्यथा अष्टवर्षं ब्राह्मणमुपनयीतेत्यत्राप्यष्टवर्षत्वादिविशेषणे तात्पर्याभावप्रसङ्गात् अत्र तु प्रापकवाक्येषु जगद्वैचित्र्यमेव स्पष्टम्। यद्वा यत्र प्रयुक्तस्य शब्दस्यार्थविवक्षायामन्वयानुपपत्त्यानर्थक्यन्तत्रोद्देश्यविशेषणविवक्षा तत्र तत्राकृताङ्गीकृता तस्मादेवं व्याख्यातुं युक्तम्। तत्राचिदंशवैचित्र्यमाह अचिन्त्येत्यादिना पदेन, जीवकर्तृकतया चिन्तयितुमशक्यत्वमचिन्त्यत्वम् आकाशवाय्वादिभेदेन विविधत्वं प्रत्येकं तत्तद्व्यष्टिबाहुल्येन विचित्रत्वमीदृशरचनस्येत्यर्थः, अत्र रचना–संस्थानम्।

भा० नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्य्यन्तक्षेत्रज्ञमिश्रस्य जगतः, यतः–यस्मात्सर्वेश्वरा–

टी०॥ अथ चिद्वैचित्र्यमाह "नियते"ति, अस्मिन्देशे अस्मिन्काले इदं फलमनेन भोक्तव्यमिति नियमो ब्रह्मादिपिपीलिकान्तानामविशेषेण भवति, ब्रह्मणोऽपि हि स्वमानपरिमितवर्षशतादधिकं जीवितुमण्डान्तरप्रवे-

ष्टमण्डाधिपत्यादधिकं फलं भोक्तुमशक्यम्, एवं चिदचिद्वैचित्र्यकथनेन क्षेत्रज्ञमात्रस्य कर्तृत्वानुपपत्तिः सूचिता । तृतीयं पदमुपादत्ते "यत" इति, पूर्वपदस्य श्रुतिविवक्षानुसारेण व्याख्यानं कृतम् अत्र तु तादृशपदश्रवणाभावेऽपि कथमनेकविशेषणोक्तिः ? उच्यते यतो–येन यदिति प्रसिद्धवन्निर्देशो हि प्रापकवाक्यसापेक्षः, तत्र प्रापकवाक्येषु जगत्कारणत्वजिज्ञास्यत्वोपयोगियादृशविशेषणविशिष्टो यो धर्मविशेष उक्तः तादृशविशेषणविशिष्टः स एवात्र श्रुतौ यच्छब्देन विवक्षित इति सूत्रकाराभिप्राय इति कृत्वा तत्तद्विशेषणविशिष्टतद्धर्मिविशेणपरत्वं

**मू० निखिलहेयप्रत्यनीकस्वरूपा–**

टी० सूत्रस्थस्य यतः–शब्दस्योक्तं, यत इत्यत्र तसिप्रत्ययस्य सार्वविभक्तिकत्वाद्विभक्त्यन्तरशङ्का स्यात् तेन जगज्जन्मादयो यत्र भवन्तीति देशकालादिवदधिकरणत्वमेव ब्रह्मलक्षणमित्यपि शङ्कितुं शक्यम्, एवन्तसिलोऽप्येकद्विबहुवचनसाधारणत्वात्कारणवाक्येषु सद्ब्रह्माद्यनेकशब्दैरभिधानाच्च कारणानेकत्वशङ्का स्यादिति तदुभयव्युदासार्थं यस्मादित्युक्तम्,उपायतयोपेयतया ऽपि जिज्ञास्यत्वे कारणत्वे चोपयुक्तानि तत्तत्प्रापकवाक्यसिद्धान्येतच्छ्रुतिविवक्षितानि विशेषणानि दर्शयति "सर्वेत्या" दिना, तिस्रो मूर्तयोंऽशा ब्रह्मांशा इति यादवप्रकाशपक्षः, प्रधानपुरुषयोः कारणत्वं केषांचिन्मतम्, ईदृशन्यूनाधिकतत्त्वव्यवच्छेदार्थं "तमीश्वराणां परमं महेश्वरं स कारणं करणाधिपाधिप" इत्यादिश्रुत्यनुसारेण सर्वेश्वरादित्युक्तं कारणवाक्यशेषभूतशोधकवाक्यसिद्धजिज्ञास्यत्वोपयोगिनं चिदचिद्व्यावर्त्तकाकारमाह "निखिलहेयप्रत्यनीकस्वभावा" दिति, निखिल–शब्देनाचिद्गतहेयाः षड्भावविकाराः चिद्गतहेयाः क्लेशकर्मविपाकाशयाश्च विवक्षिताः, हेयार्हत्वे सति तद्वियुक्तत्वं व्युदस्यते प्रत्यनीक–शब्देन, प्रत्यनीकश्चेज्जगदुपादानत्वादिकन्नोपपद्यते "स्वभा[1]वा" दिति, अद्वारकहेयसम्बन्धो व्युदस्तः न तु सद्वारक इत्यर्थः हेयप्रत्य-

१ स्वरूपादिति तु मूलानुसारी पाठः ।

नीकत्वे विशेषणांशेऽपि हेयासम्भवः तत्सम्बन्धविरोधित्वात्स्वप्रतिकूलोत्पादकत्वायोगाच्चेत्यत्राह—

सू० सत्यसङ्कल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणा-

टी० ॥ "सत्यसङ्कल्पा"दिति, स्वसङ्कल्पानुरूपं हेयसम्बन्धं संश्रितेषु तद्वियोगं च कर्त्तुं समर्थः, न च हेयं सर्वमीश्वरापेक्षया हेयं तत्सङ्कल्पनिवर्त्यत्वेन तल्लीलारसावहत्वादिति भावः। सत्यसङ्कल्पत्वं हेयप्रत्यनीकत्वोपपादकं कारणत्वजिज्ञास्यत्वोपयोगि च हेयप्रत्यनीकात्सत्यसङ्कल्पादिति पदद्वयेनापहतपाप्मेत्यादिवाक्यं सूचितं, जिज्ञास्यत्वोपयोगिनीं धर्मिस्वरूपस्य कल्याणगुणैकतानतामाह "ज्ञाने"ति, आनन्दत्वं—स्वानुकूलत्वम्, आदि—शब्देन सत्यत्वमनन्तत्वं च विवक्षितं, हेयप्रत्यनीकत्वम्पूर्वमुक्तं, ज्ञानानन्देति भावप्रधानो निर्देशः द्व्येकयोर्द्विवचनैकवचने इतिवत्, ज्ञानत्वानन्दत्वसत्यत्वानि न प्रादेशिकानि इत्यनन्त—शब्दार्थः, आदि—शब्देनानन्त्यस्य गृहीतत्वेऽपि सर्वव्यापित्वस्य कालानन्त्यकथनं नित्यत्वस्य सार्वत्रिकत्वकथनं सर्ववस्तुसामानाधिकरण्यार्हत्वस्य च नित्यत्वकृत्स्नप्रदेशवृत्तित्वकथनमपि ह्यविरुद्धं, कल्याणत्वमन्येषामनुभवितॄणामप्यनुकूलत्वं ज्ञानत्वादयः कल्याणगुणा यस्य तस्मादित्यर्थः, यथा प्रभाश्रये दीपे प्रभां विना आश्रयांशस्यैव चतुरङ्गुलत्वरूपवत्त्वोज्ज्वलत्वादिगुणः तथा ब्रह्मणोऽपि ज्ञानत्वानन्दत्वसदैकरूपत्वानि स्वरूपस्य गुणाः, धर्मिणो धर्मस्य च ज्ञानत्वे व्यक्तिभेदादविरोधः धर्मधर्म्मिणोः साधारणाकारो ज्ञानत्वानन्दत्वादिः, यथा नरस्यैव सतोराज्ञो नराः परिकरा इत्युक्तौ व्यक्तिभेदादविरोधः, नरत्वं चोभयसाधारणाकारस्तद्वत्। धर्मभूतज्ञानवत्तामाह—

सू० सर्वज्ञात्सर्वशक्तेः परमकारुणिकात्परस्मात्पुंसः सृष्टिस्थितिप्रलयाः प्रवर्त्तन्ते तद्ब्रह्मेति सूत्रार्थः।

टी० ॥ "सर्वज्ञा"दिति, सर्वज्ञत्वं निमित्तत्वोपयोगि, सर्वशक्तित्वमुपादानत्वोपयोगि, अनेन चिदचिच्छरीरकत्वमप्यभिप्रेतं भवति, अन्यथो-

१ स्मारितमिति तु युक्तः पाठः।

पादानत्वायोगात् । किं च सर्वज्ञत्वमुपासकापेक्षिततत्प्रतिबन्धकनिरसनप्रकारज्ञानोपयोगि, सर्वशक्तित्वं तद्विरोधिनिरसनोपयोगि, परमकारुणिकत्वं च जिज्ञास्यत्वकारणत्वोपयोगि, प्रलयदशायामसत्कल्पं चेतनजातं निरीक्ष्य दयया हि सृष्टिः, संश्रितसौलभ्यं च दययैव यथा "माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायण इति, ईदृशेश्वर उपायभूतः, उपेयमन्यदित्यत्राह "परस्मा"दिति, अत्र माता पितेत्यनुसंधेयम् । देवताविशेषनिर्णयार्थमाह "पुंस" इति, कारणवाक्येषु "छागोवामन्त्रवर्णा"दिति, सूत्रन्यायात्सद्ब्रह्मात्मादिसामान्यशब्दानां पुरुषनारायणादिविशेषपर्यवसायित्वात्सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरिति "यतो वा इमानि भूतानीत्यादिश्रुतेर्हृदयमिति सूत्रकारस्य भाव इति भाष्यकाराभिप्रायः । पुंस इत्यनेन कारणभूतस्य वस्तुनस्त्रिपाद्विभूतिमत्त्वमपि सूचितं पुरुषसूक्ते "त्रिपादस्यामृतं दिवी"ति श्रवणात्, "सूत्रार्थे"इति अक्षरार्थस्तात्पर्यार्थश्चेत्यर्थः । ननु यदीश्वरो लिलक्षयिषितः तर्हि तदसाधारणसर्वज्ञत्वादिप्रतिपादकसत्यज्ञानादिवाक्यानादरेण जन्मादिकारणत्वं किमर्थं सूत्रितम्? उच्यते, गुणैः स्वरूपस्य लक्ष्यमाणत्वे तदपेक्षया बहिष्ठाया विभूतेरुपास्यानन्तर्भावः प्रतीयेत सर्गादिविषयभूतया तु विभूत्या तु स्वरूपे लक्ष्यमाणे तन्नियमनधारणाद्यपेक्षितत्वादेव गुणानन्तर्भावो न शक्यशङ्कः, अतो गुणानामिव विभूतेश्च जिज्ञास्यान्तर्भावज्ञापनार्थं जन्मादिलक्षणं सूत्रितं, विभूतेश्च जिज्ञास्यान्तर्भाव उपासात्रैविध्यतत्क्रतुन्यायाभ्यां सेत्स्यति । नन्वेवमपि कृत्स्नविभूतेर्जिज्ञास्यान्तर्भावो न सिध्यति त्रिपाद्विभूतेर्जन्माद्यस्पृष्टत्वात् । मैवं, तस्या जन्माद्यस्पृष्टत्वेऽपि यत्प्रयन्तीति प्रलयवाक्यस्य यच्छब्दनिर्दिष्टे मुक्तप्राप्ये ब्रह्मण्यन्तर्भावसिद्धेः, तथा हि, प्रयन्तीत्येतदविशेषेणात्यन्तिकलयरूपमोक्षमपि प्रतिपादयतीति यच्छब्देन मुक्तप्राप्यतयाऽपि ब्रह्म निर्दिष्टं भवति, प्राप्याकारविशिष्टं च ब्रह्म प्रमाणान्तरसिद्धमिहानूद्यते प्रमाणान्तराणि च त्रिभूतिद्वयविशिष्टं ब्रह्म प्राप्यं वदन्ति, प्राप्याकारस्य चोपास्यत्वं तत्क्रतुन्यायसिद्धं, तदेवं लक्षणान्तर्भूतेन लयांशेनोपलक्षितायास्त्रिपाद् विभूतेरपि जिज्ञास्यान्तर्भावसिद्धिः सूत्रिता भवति । ननु यत इति सूत्रपदस्यायाः पञ्चम्या

उपादानार्थत्वात् ब्रह्मोपादानमिति निमित्तान्तरसद्भावात् "उपादानन्तु भगवान्निमित्तं तु महेश्वर" इत्युक्तव्योमातीतपक्षावकाशः प्रसजेत्, नैवं, यत इति पञ्चम्या हेतुमात्रविषयत्वात्, हेत्वर्थत्वं च जनिस्थितिलयसाधारण्यत्वादवगम्यते न तु "जनिकर्तुः प्रकृतिरित्यपादानसंज्ञाविधानवत् स्थितिकर्तुर्लयस्थानस्य च अपादानसंज्ञाविधानं दृश्यते तस्मादियं हेतौ पञ्चमी, ततश्च निमित्तोपादानयोरुभयोरपि हेतुत्वाविशेषाद्यत इति पदेनोभयविधकारणत्वमपि क्रोडीकृतम्भवति यतो वा इमानीत्यादिवाक्ये यत इति पदस्योभयविषयत्वात्सूत्रपदस्याप्युभयविषयत्वोपपत्तेः । ननु यतो वा इमानीत्यादिवाक्ये यतो येन यदिति यच्छब्दस्यावृत्तत्वात् यत इति पदस्य जनिस्थितिलयसाधारण्यन्नास्तीति तत्र यत इति पञ्चम्युपादानमात्रविषया, जायन्त इत्यनेनैवान्वयात्, पञ्चम्यर्थो हि जनिकर्तुः प्रकृतिरित्येव प्रतीयते । किञ्च हेतुमात्रविषयाया अपि सौत्रपदपञ्चम्याः श्रुतिवाक्यस्थपञ्चम्यभिहितोपादानरूपहेतुविशेषे पर्यवसानं स्यात् सूत्रस्य श्रुत्यैकार्थ्योपपत्तेः, अतः श्रुतिसूत्रयोरुभयोरपि पञ्चम्या उपादानमात्रविषयत्वात् ब्रह्मोपादानं न तु निमित्तमपीति चेत् नैवम्, श्रुतौ यत इति पदस्य जनिस्थितिलयसाधारणत्वाभावेऽपि यच्छब्दस्यानुवादरूपत्वादनुवादस्य च प्रापकवाक्यसापेक्षतया तद्विरुद्धार्थपरत्वासम्भवात् प्रापकवाक्येषु च एकमेवाद्वितीयं तदैक्षत बहु स्यां तत्तेजोऽसृजतेत्युपादानभूतस्यैव ब्रह्मणो निमित्तान्तरं निषिध्याहमेव जगद्रूपेण बहु स्यामिति सङ्कल्पमुक्त्वा यथासङ्कल्पं तत्कर्तृकसृष्टेश्च प्रतिपादनात् तदनुवादिनि लक्षणवाक्ये यत इति पदमुभयविषयं श्रुत्यनुविधायित्वात्, जन्मस्थितिलयसाधारणत्वाच्च, सौत्रं च यत—इति पदमुभयविषयमिति निमित्तान्तरवादो वेदविरुद्धत्वादनादरणीय एवेति । एवं तर्हि प्रकृत्यधिकरणपौनरुक्त्यं स्यादिति चेत् न तत्र हि निमित्तोपादानैक्यस्य श्रुतिप्रतिपाद्यत्वं समर्थ्यते, अत्र तु निमित्तोपादानैक्यसिद्धवत्कारेण तस्योभयविधकारणत्वस्य लक्षणत्वानुपपत्तिः परिह्रियत इति वैषम्यात् । नन्वीश्वर एव ब्रह्म चेत्सत्यज्ञानादि लक्षणत्वेन वक्तव्यं न तु जन्मादि ईश्वरस्य सर्वविधकारणत्वायोगात् निमित्तकारणमुपादानं

चैकमेव हि वेदान्तेषु मतन्तस्मादीश्वरादतिरिक्तं ब्रह्माभ्युपगच्छतो भेदा-
भेदवादिनोऽनुकूलमिदं जन्मादिलक्षणकथनं, नैवं, चिदचिद्विशिष्टतया सत्य-
सङ्कल्पतया चेश्वरस्यैव बहु स्यामिति ईक्षणक्षमत्वेन सर्वविधकारणत्वो-
पपत्तेः सन्मात्रस्य चिन्मात्रस्य च तस्य सत्यसङ्कल्पत्वायोगादीश्वरस्य च
ब्रह्मांशतयाऽध्यस्ततया चाभिमतस्यांशान्तराध्यस्तान्तरसमानाधिकरणश-
ब्दवाच्यत्वायोगाच्च, भेदाभेदपक्षे मृषादिपक्षे च बहु स्यामिति सङ्कल्पपूर्वक-
कारणत्वं न घटत इति एतल्लक्षणम्परेषामेवानुपपन्नम् । किञ्च, बुभुत्सितस्य
लक्षणं वाच्यं बुभुत्सितं चोपास्यम् ईश्वर एवोपास्यः प्राप्यश्च उपासनं
च विशिष्टविषयम् उपासात्रैविध्यस्य वक्ष्यमाणत्वात्, प्राप्तिश्च विशिष्ट-
विषया यथोपासनभावित्वात्तस्याः, जन्मादि चोपास्यलक्षणं तद् विजिज्ञास-
स्वेति प्रतिपादनात्सत्यज्ञानादि विशेष्यांस्य लक्षणं न तु विशिष्टस्य, अतो वि-
शिष्टस्योपास्यत्वात् जिज्ञास्यब्रह्मलक्षणं जन्माद्येव, यत इत्यस्यानुवादरूप-
त्वाद्विजिज्ञासस्वेति जिज्ञास्यत्ववचनाच्च, जिज्ञास्यत्वोपयोगिशोधकवाक्या-
र्थश्च यच्छब्देन गर्भितः, तस्मात् यस्मादित्यादि जन्मादीत्यादिविशेषणान्यु-
क्तानि । अथ जन्मादीनां लक्षणत्वे तत्र जन्मनोऽन्तर्भावेऽपि तत्रापि समु-
दितस्य लक्षणत्वे च किन्ते प्रमाणमित्याकाङ्क्षायां ? सूत्रकारैर्विषयत्वेनाभि-
प्रेतां श्रुतिं दर्शयति—

सू० भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवोब्र-
ह्मेत्यारभ्य "यतो वा इमानि भूतानि जायन्ते येन जातानि
जीवन्ति यत्प्रयन्त्यभिसम्विशन्ति तद्विजिज्ञासस्व तद्ब्र-
ह्मे"ति श्रूयते ।

टी० ॥ "भृगुरि"ति, शास्त्रं प्रणाड्या विषयः यतो वा इमानी-
त्यादिमात्रे उदाहर्त्तव्येऽपि अर्थवादरूपतात्पर्यलिङ्गज्ञापनार्थम्प्रकरणस्य
ब्रह्मप[1]रत्वेनानन्यपरत्वज्ञापनार्थं च भृगुर्वा इत्यादि उदाहृतम्, अग्नीन्द्रा-
दिवस्तुषु सर्वोत्कृष्टतयाऽऽपातप्रतीतेषु सर्वेषां सर्वोत्कृष्टत्वस्यानुपपन्नत्वेन

[1] ब्रह्मोपक्रमत्वेनेति पा० ।

तत्त्वस्य दुर्निश्चयतया निरतिशयबृहत्त्वाश्रयव्यक्तिविशेषजिज्ञासया हि अधीहि भगवो ब्रह्मेति प्रश्नः, तत्र व्यक्तिविशेषस्य लक्षणमुच्यते "यतो वा" इति, यतो येन यदिति यद्वृत्तयोगात्कारणत्वमनूद्यते तद्ब्रह्मेति कारणस्य ब्रह्मत्वं विधीयते, तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति, तद्विजिज्ञासस्वेति न विचारस्योपासनस्य वा विधिः, विचारात्मकं ज्ञानं रागतः प्राप्तत्वान्न विधेयम्, उपासनात्मकस्य तु ज्ञानस्य ब्रह्मविदाप्नोतीति प्राकरणिकवाक्यान्तरसिद्धत्वात्, उपक्रमे अधीहि भगवो ब्रह्मेति प्रश्नस्य तत्त्वपरत्वेनोपायविषयत्वाभावाच्च नोपासनात्मकज्ञानमिह विधेयम्, अतो विजिज्ञासस्वेति उपदिश्यमानार्थं अवधानार्थं सन्देहनिवृत्त्यर्थं वोक्तं, या गन्धवती तां पृथिवीं विद्धीतिवत्, अतः कारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेयम्। यथा यत्र सारसः स देवदत्तकेदार इत्युक्ते सारससम्बन्धस्य देवदत्तकेदारलक्षणत्वमुक्तं स्यात् तद्वत्, देवदत्तकेदारो बुभुत्सितो धीस्थः सारससम्बन्धश्च दृष्टः तस्य देवदत्तकेदारत्वलक्षणत्वं त्वज्ञातम् अतस्तदेव वाक्यस्य विधेयम्, एवं निरतिशयबृहत्त्वं बृहुल्वर्थेष्वापाततः प्रतीतं कारणत्वं च प्रापकवाक्यावगतं तस्य निरतिशयबृहद्वस्तु लक्षणत्वमनवगतमिति तदत्र विधेयं, लक्षणस्य च सजातीयविजातीयव्यावर्त्तनस्वभावत्वादन्येषां निरतिशयबृहत्त्वशङ्काव्युदासः फलितः। अतोनारायणादिविशेषशब्दवाच्यवस्तुविशेषस्यैव निरतिशयबृहत्त्वसिद्धिः। अत एव हि "परस्मात्पुंस" इत्युक्तं प्रापकवाक्यैरेव कारणभूतवस्तुविशेषस्य निरतिशयबृहत्त्वं ज्ञायत इति किमनेन लक्षणवाक्येने?ति चेत् न अग्न्यादीनामपि कर्मभागवाक्यैः सर्वोत्कृष्टत्वावगमात् तेषु बृहत्त्वशङ्काव्युदासाय कारणवाक्यानामपि तद्वदन्यपरत्वाभावेन तत्त्वपरत्वज्ञापनपरत्वादस्य वाक्यस्य। अथ श्रुतिरेव लक्षणं प्रतिपादयति चेत्किं सूत्रेणे? ति शङ्कायां सूत्रतात्पर्यार्थं विवक्षुः संशयं दर्शयिष्यन् श्रुतिगतहेतुनैव संशयोत्पत्तिं दर्शयति—

**सू॰ तत्र संशयः किमस्माद्वाक्याद्ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते न वे?ति**

टी० ॥ "तत्रे"ति, तत्र—तादृश इत्यर्थः, पूर्वपक्षानुगुणेन विशेषणब-हुत्वेन सिद्धान्तानुगुणेनैकवचनान्तब्रह्मशब्दैक्येन च विशिष्टत्वं संशयहेतुत्वेनाभिप्रेत्य तत्रेत्युक्तं, संशयस्वरूपं दर्शयति "किमस्मादि"ति, ब्रह्ममीमांसा किमारम्भणीया उत न वेति प्रथमविचारः, तदर्थं वेदान्ता ब्रह्मणि प्रमाणम्? उत ने? ति द्वितीयविचारश्च चतुःसूत्रीसाधारणः। सिद्धस्वरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह "तच्छास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येवे"ति, समन्वयाधिकरणोपक्रमे तस्याधिकरणस्य शास्त्रारम्भहेतुभूतप्रामाण्यसमर्थनार्थत्वस्य भाष्यकारैरेव वक्ष्यमाणत्वात्, तथा चाहु "व्युत्पत्त्यभावः प्रतिपत्तिदैः स्थ्यमन्येन सिद्धत्वमथाफलत्वम्। एतानि वै सूत्रचतुष्टयेनाऽनारम्भमूलानि निराकृतानी"ति, अतस्तद्विचारयुगलमत्रार्थसिद्धमित्यभिप्रेत्यैतदधिकरणसाधारणं संशयशरीरन्दर्शितं किमस्मादिति, यतो वा इमानीत्यादिवाक्यम्ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति? उत नेति संशयः, तदर्थं संशय्यते, किं सृष्ट्यादीनां विशेषणत्वेनोपलक्षणत्वेन च ब्रह्मलक्षणत्वं सम्भवति? नेति, तदर्थं विशेषणपक्षे किं विशेषणभेदेन विशेष्यभेदोऽस्ति? उत ने? ति. तदर्थं किं विशेषणस्य विशेषणत्वं स्वाश्रयसर्वधर्मव्यावर्त्तकतया? उत विरोधिधर्मव्यावर्त्तकतये? ति, उपलक्षणपक्षे किमाकारान्तरप्रतिपत्तिरस्ति? उत नास्ति? इति, सर्वधर्मव्यावर्त्तकतया विशेषणत्वम् आकारान्तरप्रतिपत्तिश्च नास्तीति पूर्वः पक्षः, विरोधिधर्मव्यावर्त्तकतयैव विशेषणत्वम् आकारान्तरप्रतिपत्तिश्चास्तीति सिद्धान्तः, सर्वधर्मव्यावर्तकतया विशेषणत्वे विशेष्यभेदप्रसङ्गेन जन्मादीनां विशेषणत्वायोगादाकारान्तरप्रतिपत्त्यभावे चोपलक्षणत्वायोगात् उभयथाऽपि लक्षणत्वासम्भवादिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं न शक्नोतीति लक्षणदौःस्थ्येन ब्रह्मणि शास्त्रप्रामाण्यासम्भवात्तद्विचारोऽनारम्भणीय इति पूर्वपक्षे फलितं, विरोधिधर्मव्यावर्त्तकतयैव विशेषणत्वे विशेष्यभेदाभावाज्जन्मादीनां विशेषणत्वोपपत्तेराकारान्तरप्रतिपत्तिसद्भावादुपलक्षणत्वोपपत्तेश्च उभयथाऽपि लक्षणत्वसम्भवादिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोतीति लक्षणसौष्ठवेन ब्रह्मणि शास्त्रप्रामाण्योपपत्तेः तद्विचारस्यारम्भणीयत्वं सिद्धान्ते फलितं, तत्र पूर्वपक्षमुपपादयितुं प्रतिजानीते—

सू० किम्प्राप्तन्न शक्यमिति न तावज्जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोऽनेकत्वप्रसक्तेः, विशेषणत्वं हि व्यावर्त्तकत्वम् । ननु देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाण इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते एवमत्राप्येकमेव ब्रह्म भवति, नैवं तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः अन्यथा तत्रापि व्यावर्त्तकत्वादनेकत्वमपरिहार्य्यम् ॥

टी० ॥ "न शक्य"मिति, जन्मादीनां ब्रह्मलक्षणत्वं किं विशेषणतयोपलक्षणतया वेति विकल्पमभिप्रेत्य प्रथमं दूषयति "न तावदि"ति, कथं विशेषणत्वेन विलक्षयन्ती ? त्यत्राह "अनेके"ति, अनेकत्वप्रसक्तिर्व्यावर्त्तकत्वं वा कथ ? मित्यत्राह "विशेषणत्वं ही"ति, विशेष्यतेऽनेनेति निर्वचनानुसारेण भेदकं विशेषणम्भेद्यं विशेष्यमिति प्रसिद्धेः, खण्डो मुण्डः पूर्णशृङ्गो नीलं शुक्लं पीतम् अजो गजो महिष इत्यादिषु तथा दर्शनाच्चेति भावः । सिद्धान्तिच्छायया चोदयति "नन्वि"ति, परिहरति "नैव"मिति, उपसंहारः—पर्यवसानम्, अन्यथा—प्रमाणान्तरेणैक्यप्रतिपत्त्यभावे सति इत्यर्थः तत्रापि—देवदत्तादावपि, पक्षे वैषम्यमाह—

सू० अत्र त्वनेनैव विशेषणेन विलक्षितत्वाद्ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्त्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम्, ब्रह्म-शब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेन्न अज्ञातगोव्यक्तेर्जिज्ञासोः पुरुषस्य खण्डो मुण्डः पूर्णशृङ्गो गौरित्युक्ते गोपदैक्येऽपि खण्डत्वादिव्यावर्त्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेर्ब्रह्मव्यक्तयोऽपि बह्व्यः स्युः

टी० ॥ "अत्र त्वि"ति, प्रमाणान्तरेणैक्यमनवगतमिति वदतोऽयं भावः एकमेवाद्वितीयमित्यादिभिरपि नैकत्वनिश्चयस्तत्राप्येकत्वादिविशेषणभेदेन बहुत्वापत्तेः, एकमित्यादिपदानामेको व्रीहिरित्यादिवन्निर्वाहसम्भवाच्चेति भावः । ननु न केवलं प्रमाणान्तरेणैवैक्यप्रतीतिः शाब्दी च विद्यते तस्यां सत्यां धर्मिबहुत्वं न स्यात् अत्र चैकवचनान्तधर्मिवाचिपदैक्यं विशेष्यैक्यज्ञापकमिति शङ्कते "ब्रह्म-शब्दे"ति, तद्ब्रह्म तद्ब्रह्मेति मुहुर्मुहुरुक्तिर्वा तानि ब्रह्माणीति बहुवचनं वा नास्तीति भावः । परिहरति "ने"ति, तत्कथमित्यत्राह "अज्ञाते"ति, एकवचनान्तधर्मिवाचिपदैक्यं विशेषणबहुत्वाधीनं विशेष्यबहुत्वं न बाधते खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र बहुत्वप्रतीतेः, एकवचनान्तधर्मिवाचिपदैक्यं स्वतो विशेष्यैक्यप्रतिपादकं खण्डादिषु प्रत्यक्षबाधात् बहुत्वप्रतीतिरिति चेत् न अप्रत्यक्षेष्वपि गोषु खण्ड इत्यादिवाक्ये प्रयुक्ते बहुत्वप्रतीतेः, तस्माद्विशेषणबहुत्वं चेद्विशेष्यभेदापादकमित्यभिप्रायेणोक्तम् "ज्ञातगोव्यक्तेरि"ति, अज्ञातगोव्यक्तेः—प्रत्यक्षेणादृश्यमाणगोव्यक्तेरित्यर्थः । खण्डो मुण्ड इत्यादिवाक्यप्रयोगासम्भवव्युदासाय जिज्ञासोरित्युक्तं, गोसामान्यज्ञाने सत्यदृष्टगोव्यक्तित्वाज्जिज्ञासासम्भवात्प्रयोगसम्भवः । सृष्टिस्थितिप्रलयाः किं प्रत्येकं लक्ष—

मू० अत एव लिलक्षयिषिते वस्तुन्येषां विशेषणानां सम्भूय लक्षणत्वमप्यनुपपन्नम्, नाप्युपलक्षणत्वेन लक्षयन्ति, आकारान्तराप्रतिपत्तेः उपलक्षणानामेकेनाकारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टम्, यथा[1]यं सारसः स देवदत्तकेदार इत्यादिषु

टी० णानि? उत सम्भूये?ति विकल्पमभिप्रेत्य प्रत्येकपक्षे दूषणमुक्तं, संभूयेति पक्षे दूषणमाह "अत एवे"ति, अत एव—विशेषणभेदस्य स्वतो विशेष्यभेदापादकत्वादित्यर्थः । उपलक्षणपक्षं दूषयति "नापी"ति, कुत इत्यत्राह "आकारान्तरे"ति, व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति भावः ।

१ यत्रायमिति पा० ।

व्यापकत्वमेवोपपादयति "उपलक्षणाना"मिति, उपलक्षणेनोपलक्ष्यप्रतिपत्तौ उपलक्षणमुपलक्ष्याकारः पूर्वप्रतिपन्नाकारश्चेत्याकारत्रयमर्जनीयं, सम्प्रतिपन्नस्थलेषु तद्दर्शनात्, यथा सारससम्बन्ध उपलक्षणं देवदत्तसम्बन्धित्वमुपलक्ष्यं केदारत्वं पूर्वप्रतिपन्नाकारः, अतोऽत्र तृतीयाकारप्रतिपत्त्यभावादुपलक्षणत्वमनुपपन्नमित्यर्थः शाखाऽग्रे चन्द्र इत्यत्र कथमाकारत्रयमिति चेत् उच्यते कालविशेषे देशविशेषसम्बन्ध उपलक्ष्याकारः शाखाग्रमुपलक्षणं शाखाचन्द्रयोश्च ऋजुप्रदेशवर्त्तित्वं सम्बन्धः, स च सम्बन्धो वाक्यावगतः आदित्यादिव्यावर्तकं चन्द्र–शब्दबोध्यं चन्द्रसंस्थानं तृतीयाकारः केदारत्वाद्याकारः प्रत्यक्षप्रतीतः चन्द्रत्वं तु पूर्वमनुभूतत्वाद्धीस्थं, कुत्र चन्द्र? इति बुभुत्सायामिवं कश्चन्द्र इति बुभुत्सायां शब्दवाच्यत्वमुपलक्ष्यं स्वारसिकेन वा–शब्दोत्थापितबुभुत्सामूलेन न वा प्रत्यक्षेण प्रतीतौ वक्रतादिः पूर्वप्रतिपन्नाकारः, अनेन निर्विशेषवस्तुवादे तूपलक्षणत्वमपि नोपपद्यते इत्युक्तं भवति ॥

भू० ननु च सत्यं ज्ञानमनन्तम्ब्रह्मेति प्रतिपन्नाकारस्य जगज्जन्मादीन्युपलक्षणानि भवन्ति न, इतरेतरप्रतिपन्नाकारापेक्षत्वेनोभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात् अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इत्येवं प्राप्तेऽभिधीयते जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते ।

टी० ॥ तृतीयाकारप्रतिपत्तिरस्तीति चोदयति "ननु चे"ति, दूषयति "ने"ति, सत्यत्वादयः किं विशेषणतया लक्षणभूताः? उतोपलक्षणतया? पूर्वस्मिन्कल्पे दूषणमुक्तम्, अन्यत्र चाकारान्तरप्रतिपत्त्यपेक्षायां वाक्यान्तरेण चेदनवस्था, स्वेन चेदात्माश्रय इति, अतो यतो वा इमानीत्यादिवाक्येन आकारान्तरप्रतिपत्तिर्वक्तव्या ततश्चान्योन्याश्रय इति भावः । 'अत'–इति, विशेषत्वोपलक्षणत्वायोगादित्यर्थः । सिद्धान्तमवतारयति "एवं प्राप्तेऽभिधीयत" इति, एवं–सूत्रकाराभिप्रेते पूर्वपक्षे प्राप्ते तदभिप्रेतस्तत्परिहार उच्यते इत्यर्थः । ज्ञाप्यबहिर्भूतोज्ञाप्यप्रतीत्युपाय उपलक्षणं, ज्ञाप्यान्तर्भूतो

ज्ञाप्यप्रतीत्युपायो विशेषणं, न चैकस्य ज्ञाप्यत्वज्ञापकत्वविरोधः घटादेरिन्द्रियसंयोगप्रतिसम्बन्धित्वेन ज्ञानोत्पत्तिहेतुत्वस्य विषयत्वस्य च दर्शनात्, एवं शब्दतोधीस्थतया स्वविशिष्टप्रतीतौ हेतुभूतं विशेषणमिति उभयथाऽपि लक्षणत्वोपपत्तिं वक्ष्यन् "कानेकस्वरूपाय स्थूलसूक्ष्मात्मने नम" इतिवच्चरमोक्तमुपलक्षणपक्षं बुद्धिस्थतया प्रथममुपपादयितुं प्रतिजानीते "जगदि"-ति, । ननूपलक्षणपक्षे ऽनुपपत्तिरुक्तेत्यत्राह–

सू॰ न चोपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेर्ब्रह्मणोऽप्रतिपत्तिः, उपलक्ष्यं ह्यनवधिकातिशयबृहत्, बृंहणं च बृहतेर्धातोस्तदर्थत्वात्, तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः, यतो येन यदिति प्रसिद्धवज्जन्मादिकारणनिर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते ॥

टी० ॥ "न चे"ति, आकारान्तरमाकारविशेषः स चोपलक्षणोपलक्ष्याकारातिरिक्त इत्यपौनरुक्त्यम् । पृथक् तृतीयाऽऽकारं दर्शयितुमाकारद्वयं विवक्षन् पूर्वमुपलक्ष्याकारमाह "उपलक्ष्यं ही"ति, अथर्वशिरसि "बृहति बृंहयति तस्मादुच्यते परम्ब्रह्मे" ति, श्रीमति वैष्णवे पुराणे च "बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते" इत्यादि निर्वचनप्रसिद्धिद्योतको हि–शब्दः, आकारत्रयपृथक्त्वद्योतनार्थाश्च–शब्दाः तत्र तत्र ज्ञेयाः, कथं निरतिशयबृहत्त्वं बृंहणत्वप्रतिपत्ति? रित्यत्राह "बृहते"रिति, मनिन् प्रत्ययान्तस्य रूढिसहकृतस्य बृहतिधातोस्तदर्थत्वादित्यर्थः । यद्वा ब्रह्म–शब्देन बृहत्त्वबृंहणत्वावगतिः कथमित्यत्राह "बृहते"रिति, बृहत्त्वस्य स्वरूपतो गुणतश्चाविवक्षितत्वात् बृंहणत्वरूपगुणो बृहत्त्वमपि धात्वर्थान्तर्गतमिति भावः । उपलक्षणाकारमाह "तदुपलक्षणे"ति, ननु सारसस्य केदारेणेव जन्मादीनां ब्रह्मणा सह सम्बन्धो वक्तव्यः, किञ्च ब्रह्मण उपादानत्वे बाह्यमत इव निमित्तान्तराधिष्ठेयताप्रसङ्गेन सत्यसङ्कल्पत्वादिगुणान्वयलक्षणबृंहणत्वासिद्धिश्च स्यादिति एतच्छङ्काद्वयं परिहरन् तृतीयाकारोपस्थापकं वाक्यं चावतारयति 'यतो येनेत्या"दि ना, कुत्र कथं प्रसिद्धि? रित्यत्राह–

सू० प्रसिद्धिश्च "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् तदैक्षत बहु स्यां प्रजायेये" ति "तत्तेजोऽसृजत" इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन तदपि सदेवेदमग्र एकमेवासीदित्युपादानतां प्रतिपाद्याद्वितीयमित्यधिष्ठात्रन्तरं प्रतिषिध्य "तदैक्षत बहु स्यां प्रजायेये" ति तत्तेजो ऽसृजतेत्येकस्यैव प्रतिपादनात् तस्माद्यन्मूला जगज्जन्मस्थितिलयास्तद्ब्रह्मेति जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति ॥

टी० ॥ "प्रसिद्धिश्चे" ति, तच्च कथमित्यपेक्षायां तत्प्रतिपादनं पदानामन्वयमुखेन दर्शयति "तदपी" ति, तन्निमित्तोपादानत्वरूपकारणत्वम् उपादानत्वाधिष्ठात्रन्तरनिवारणयोरुपपादनं कृतं "तदैक्षत बहु स्यामसृजते" ति रामकृष्णादिरूपेण बहुभवनव्यावृत्त्यर्थं, जगद्रूपेण बहुभवनमिति दर्शितं तत्तेजो ऽसृजतेत्यनेन, अत्र फलितं सम्बन्धमाह "तस्मादि" ति, यथा उपलक्षणेन सारसेनाधिकरणत्वेन सम्बन्धित्वं केदारस्य यथा चन्द्रदेशस्य शाखायाश्च ऋजुभावः सम्बन्धः, तथा ब्रह्मण उपलक्षणभूतजन्मादिभिर्हेतुहेतुमद्भावः सम्बन्ध इत्युक्तं भवति, यथा प्रसिद्ध्यनुवादरूपतया वाक्यस्य निमित्तान्तरशङ्कावार्थान्तरीकृता भवति, एवं तृतीयाकारस्याक्षेपकमुपलक्षणसम्बन्धात्मकं निमित्तोपादानरूपकारणत्वमुक्तम् । अथ तदाक्षिप्तं तृतीयाकारमाह-

सू० जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्त्वेन प्रतिपन्नं ब्रह्मेति च

टी० ॥ "जगदि" ति, यतः-शब्दस्मारितकारणवाक्येषु हि सार्वज्ञ्याद्यवगमः, अतो जगन्निमित्तोपादानताऽऽक्षिप्तेत्युक्तं, गुणानामपरिच्छिन्नतया तद्विशिष्टस्य ब्रह्म-शब्दवाच्यतायोग्यत्वज्ञापनार्थमाकारबृहत्त्वेनेत्युक्तं, यः सर्वज्ञ इत्यादिवाक्यावगतसार्वज्ञ्यादीनामुपलक्षणत्वाभावाच्चान्योन्याश्रयः, विशेषणबहुत्वं तु न विशेष्यभेदापादकमिति वक्ष्यत इति न विरोधः ।

उपलक्षणपक्षानुपपत्तिपरिहारमुपसंहरति "इति चे"ति, इति च-अतश्चेत्यर्थः उपलक्ष्यं हीत्यादिभाष्यस्यैवं वाऽर्थयोजना, अनवधिकातिशय-शब्दे तात्पर्यम् उपलक्ष्यमनवधिकातिशयबृहत्त्वं बृंहणत्वं च निरवधिकबृहत्त्वं च स्वरूपतो गुणतो विभूतितश्चानवधिकबृहत्त्वं बृहत्त्वबृंहणत्वविशेषः उपलक्ष्य इत्युक्तं भवति, ततश्चोपलक्ष्याकारैकदेशभूतं बृहत्त्वबृंहणत्वमात्रं पूर्वप्रतिपन्नाकारो भवतीति फलितं, लोके तथा दर्शनात् देवदत्तकेदारत्वं ह्युपलक्ष्यं, न च देवदत्तसम्बन्धित्वमात्रं घटपटादिष्वतिप्रसङ्गात्तदेकदेशभूतकेदारत्वमात्रेण च पूर्वप्रतिपत्तिः तस्मादुपलक्ष्यैकदेशभूतबृहत्त्वबृंहणत्वाकारेण पूर्वप्रतिपत्तिः अनवधिकातिशयबृहत्त्वं बृंहणत्वमुपलक्ष्यमित्यभिप्रायेण ह्यनवधिकातिशयबृहद् बृंहणं चेत्युक्तं, बृहत्त्वबृंहणत्वविशेषस्योपलक्ष्यत्वात् बृहत्त्वबृंहणत्वमात्रं पूर्वप्रतिपन्नाकार इत्यर्थसिद्धमिति हि-शब्देन सूचितम् । कथं तत्प्रतिपत्तिरित्यत्राह "बृहतेर्धातो"रिति, बृहत्त्वमात्रं पूर्वप्रतिपन्नाकार इत्यध्याहृतेन वाक्येन तदर्थत्वादिति पञ्चम्या अन्वयः । यद्वा न चेत्यादिना पूर्ववाक्येनान्वयः । उपलक्षणाकारमाह "तदुपलक्षणे"ति, तृतीयाकारमन्यमपि विवक्षुस्तत्प्रतिपादकं वाक्यमवतारयन्नुपलक्षणस्योपलक्ष्येण सम्बन्धं वदन्निमित्तान्तरशङ्कां च व्युदस्यति "यतो येने"त्यादिना, पूर्ववदर्थः । विवक्षितमन्यं तृतीयाकारमाह "जगदि"ति, इदानीं च-शब्दस्तृतीयाकारान्तरसमुच्चये यथा केदारत्वं सारसाधिकरणत्वदेवदत्तसम्बन्धित्वोपयोगि तथा सर्वज्ञत्वादयोऽप्यनवधिकातिशयबृहत्त्वबृंहणत्वजन्मादिकारणत्वोपयोगिनः ॥

सू० जन्मादीनां तथा प्रतिपन्नस्य लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपाऽनुपपत्तिः जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः, लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं ब्रह्म[1] लक्षयन्ति

टी० अथ विशेषणतया लक्षणत्वमुपपादयति "जगज्जन्मादीनामि"ति, कथं न दोषः? अपवादकप्रमाणाभावे विशेषणभेदस्य विशे-

१ वस्तु लक्षयन्तीति पा० ।

ष्यभेदाबहत्वं दोषत्वेन ह्युक्तमित्यत्राह "लक्षणभूतान्यपी"ति, लक्षणभूतानि–व्यावर्त्तकभूतानीत्यर्थः। यद्वा, लक्षणभूतानां विशेषणानां सजातीयविजातीयव्यावर्तनस्वभावत्वेऽपीत्यर्थः स्वविरोधिव्यावृत्तं–नियतभिन्नाश्रयविशेषणाश्रयाद् व्यावृत्तं न त्वविरुद्धविशेषणाश्रयाद् व्यावृत्तमित्यर्थः। अयं ग्रन्थः पक्षविषयः। बहुत्वापवादकप्रमाणाभावे सति विशेषणत्वमेव विरोधित्वमित्याह–

**भू० अज्ञातस्वरूपे वस्तुन्येकस्मिंल्लिलक्षयिषिते ऽपि परस्पराविरोध्यनेकविशेषणलक्षणत्वन्न भेदमापादयति विशेषणानामेकाश्रयतया प्रतीतेरेकस्मिन्नेवोपसंहारात्, खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति ॥**

टी० "अज्ञाते"ति, अयन्तु सपक्षविषयः, देवदत्तः श्यामो युवेत्याद्युदाहरणमत्राभिप्रेतम्। अप्रत्यक्षविषये ऽप्येकवचनान्तधर्मिवाचिपदैक्याद्विशेष्यैक्यम्प्रतीयत इत्यर्थः, अत्र विशेष्यैक्यव्यवस्थापकं किमित्यपेक्षायां सपक्षे विशेष्यैक्यमुपपादयति "विशेषणाना"मिति, शब्दस्वारस्याद्विशेषणानामेकाश्रयान्वयप्रतीतेरविरुद्धविशेषणानामेकाश्रयवृत्तित्वोपपत्तेरित्यर्थः। अविरुद्धविशेषणत्वं विशेष्यैक्यव्यवस्थापकमित्युक्तम्भवति। यद्वा अज्ञातस्वरूपइत्यपि ग्रन्थः पक्षविषयः पूर्वस्मिन् ग्रन्थे विशेषणानां विरुद्धविशेषणाश्रयात् स्वाश्रयभेदकत्वमुक्तम्। अप्रत्यक्षत्वे सति भिन्नविशेषणत्वमेव भेदकत्वमित्यत्राह "अज्ञाते"ति, तत्राप्यविरुद्धविशेषणभेदो न विशेष्यभेदक इत्यर्थः। कुत? इत्याह "विशेषणाना"मिति, देवदत्तः श्यामो युवा लोहिताक्षः इत्यादावविरुद्धविशेषणानामेकाश्रयत्वदर्शनात् पक्षीकृतेऽप्येकस्मिन्नेव विशेषणानामन्वयोपपत्तेरित्यर्थः अविरुद्धविशेषणानां विशेष्यभेदानापादकत्वमुक्तं विपक्षभूतखण्डादिषु बहुत्वनियामकमाह "खण्डत्वादयस्त्व"ति, ततः पक्षस्य वैषम्यमाह–

**भू० अत्र तु कालभेदेन जन्मादीनानां न विरोधः।**

टी० "अत्र त्वि"ति, कालभेदेनेत्यस्यायमभिप्रायः, विशेष्यब्रह्मब-हुत्वेऽपि जगज्जन्मादीनां यौगपद्यव्याघातात् कालभेदेनाविरोध आश्रय-णीयः विशेष्यैक्येऽपि तथैवाविरोध इति, अत्रायमर्थोऽनुसन्धेयः—विशेषण-बहुत्वं स्वत एव विशेष्यभेदापादकं खण्डो मुण्ड इत्यादिषु दर्शनात्, देवदत्तः श्यामो युवेत्यादिषु प्रत्यक्षबाधादैक्यप्रतीतिस्तस्मात्प्रत्यक्षागोचरे ब्रह्मणि विशेषणबहुत्वायत्तं विशेष्यबहुत्वमवर्जनीयमिति चेन्न एकवचना-न्तधर्मिवाचिपदैक्यस्य स्वतो विशेष्यैक्यपरत्वं देवदत्तः श्यामो युवेत्यादिषु दृष्टम्, खण्डोमुण्डइत्यादिषु प्रत्यक्षबाधाद्बहुत्वप्रतीतिः अतः प्रत्यक्षागोचरे ब्रह्मणि एकवचनान्तधर्मिवाचिपदैक्यादैक्यं सिद्धमेव, मैवं विशेषणभेदायत्तं विशेष्यबहुत्वमेकवचनान्तधर्मिवाचिपदैक्यं न बाधते अपि तु प्रत्यक्षमेव बाधते अदृश्यमानगोव्यक्तेः पुरुषस्य खण्डो मुण्ड इत्यादिवाक्यप्रयोगे सत्येकवचनान्तधर्मिवाचिपदैक्येपि बहुत्वप्रतीतेरिति हि पूर्वपक्षस्थितिः तत्रोत्तरमुच्यते अज्ञातेत्यादिना, एकवचनान्तधर्मिवाचिपदैक्यं बहुत्वं बाधत एव, अदृश्यमानेऽपि देवदत्ते देवदत्तः श्यामो युवेत्यादिवाक्यप्रयोगे विशेष-णबहुत्वे सत्यपि विशेष्यैक्यप्रतीतेः, एवं प्रत्यक्षाप्रत्यक्षविभागविधुरबहुत्वप्र-तीतिरैक्यप्रतीतिश्च भवतः । अत्र तु बहुत्वैकत्वयोः को निर्णायक ? इति चेत् नियतभिन्नाश्रयदृष्टविशेषणबहुत्वं विशेष्यैक्यविरोधि अनियतभिन्ना-श्रयदृष्टविशेषणबहुत्वमैक्याविरोधीति । अथ सत्यज्ञानादीनां लक्षणत्वोप-पत्तिं पूर्वोक्तान्योन्याश्रयपरिहारञ्चाह—

सू० "यतो वा इमानि भूतानीत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूप-मभिधीयते सत्यं ज्ञानमनन्तं ब्रह्मेति, तत्र सत्यपदं निरु-पाधिकसत्तायोगिब्रह्माह ॥

टी० "यतो वा" इति, लक्षणवाक्येनानेन कारणत्वमेव लक्षणत्वे-नोक्तमित्यस्य कारणवाक्यत्वम् आदि-शब्देन सदेवेत्यादीनि कारणत्वप्रा-पकवाक्यानि गृह्यन्ते । ननु लक्षणभूतेनैव जन्मादिकारणत्वेन ब्रह्मणः

सजातीयविजातीयव्यावृत्तिः सिद्धा अन्यथा तस्य लक्षणत्वायोगात् तत्कथं सत्यादिवाक्येन सकलेतरव्यावृत्ताभिधानोक्तिः ? उच्यते व्यावृत्तिर्द्विविधा व्यक्त्यन्तरेष्वसम्भावितधर्मयोगरूपा तत्तज्जातीयसाधारणधर्मानन्वयरूपा च, तत्र विलक्षणधर्मयोगे व्यक्त्यन्तरेभ्यो ऽन्यत्वं सिद्ध्यति न त्वतज्जातीयत्वं तज्जातीयत्वव्यञ्जकधर्मान्वयाधीनतज्जातीयत्वशङ्काया अनवगमात्, तद-नन्वये तु तज्जातीयताव्यावृत्तिः सिद्ध्यति, यथा घटस्य संस्थानविशेषेण स्वेतरसमस्तवैलक्षण्ये सिद्धे ऽपि पृथिवीत्वव्यवस्थापकगन्धवत्त्वधर्मयोगात्पृ-थिवीजातीयत्वं नापैति तदयोगादबादिषु तज्जातीयत्वापगमः, एवं जग-त्कारणत्वरूपविलक्षणधर्मान्वये सत्यपि ब्रह्मणो ऽचिज्जातीयत्व जीवजा-तीयत्वशङ्काऽवतिष्ठते इति तज्जातीयताव्यावृत्तिः सत्यज्ञानादिवाक्येन प्रतिपाद्यत इति तस्य सकलेतरव्यावृत्तस्वरूपबोधकतयोक्तिर्युक्तेति । कथं व्यावृत्तस्वरूपाभिधान ? मित्याह "तत्रेति", केनामपरिणामविशेषेण तत्त-दवस्थस्य सत्ता सोपाधिकसत्ता अतो निरुपाधिकसत्ता निर्विकारत्वं, सत्य-पदव्यावर्त्यमाह–

सू० तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनो व्यावृत्तः, नामा-न्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोग-रहितत्वात्, ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकारमाह

टी० ॥ "तेने"ति, कथमित्यत्राह "नामान्तरे"ति, निरुपपदं सत्य-पदमसङ्कोचात् स्वरूपतो धर्मतश्चैकरूपत्वं ज्ञापयतीत्यचित्तत्संसृष्टजीव-व्यावृत्तिः । ज्ञान–शब्दार्थमाह "ज्ञानपद"मिति, इदानीमस्मिन् विषय इत्या-द्युपपदरहितं ज्ञानपदं नित्यत्वमसङ्कुचितत्वं च ज्ञानस्य दर्शयति नित्या-सङ्कुचितज्ञानत्वमेवाकारो यस्य तन्नित्यासङ्कुचितज्ञानैकाकारं तेन ब्रह्मणः कदाचित्क्वचिदपि प्रदेशे जडत्वव्यावृत्तिः, नित्यासङ्कुचितज्ञानत्वमद्वारकं धर्मद्वारकं च परमात्मन आकारो भवति, "आत्मज्योतिः सम्राडिति होवाच ब्रह्मणा विपश्चिता" "विज्ञातारमरे केन विजानीयात्" इत्यादिभिः स्वरू-पस्य धर्मस्य च ज्ञानत्वावगमात्, ज्ञान–शब्दासङ्कोचनसद्वारकाद्वारकज्ञाना-

कारत्वसिद्धिः । नन्वस्य ज्ञान-शब्दस्य किं प्रवृत्तिनिमित्तं? विषयावगाहि-ज्ञानाख्यद्रव्यत्वं चेदपर्यवसानात् ज्ञानधर्मकत्वमुक्तं स्यात्, न तु ज्ञानस्वरूपता स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तं चेत् ज्ञानस्वरूपत्वमुक्तं स्यात्, न तु ज्ञानधर्मकत्वं, ततश्च तद्गुणसारत्वादिति सूत्रविरोधश्च, न च गवादि-शब्दानां परमात्मपरत्वे गोत्वसंस्थानपिण्डजीवानामिव द्वारद्वारिभावात् ज्ञानाख्यद्रव्यज्ञानत्वगुणयोर्द्वयोरपि प्रवृत्तिनिमित्तत्वं घटते, न हि धर्मभूतज्ञानं स्वरूपभूतज्ञानगतज्ञानत्वगुणे समवैति येन द्वारद्वारिभावः स्यात्, धर्मभूतज्ञाने स्वरूपे चानुगतं ज्ञानत्वमेव प्रवृत्तिनिमित्तञ्चेद्ज्ञा-शब्देन खण्डमुण्डपिण्डद्वयवत् ज्ञानव्यक्तिद्वयमुक्तं स्यादिति द्वारद्वारिभावेनानभिधानात्तयोर्ज्ञानयोर्न धर्मिभावप्रतीतिः ज्ञानत्वगुणविशेषितज्ञानद्रव्यविशिष्टतया ज्ञानत्वगुणविशिष्टतया च स्वरूपस्याभिधाने शब्दस्य युगपद् व्यापारभेदः प्रसजेत्, अतो ज्ञानपदेन स्वरूपतो धर्मतश्च ज्ञानाकारत्वमात्मनो न सिद्ध्येत्, उच्यते, ज्ञान-शब्दस्य स्वप्रकाशतारूपं ज्ञानत्व प्रवृत्तिनिमित्तं, न च तद्गुणसारत्वादिति सूत्रविरोधः, धर्मभूतज्ञानद्रव्याभिधानेऽपि ज्ञानत्वस्य प्रवृत्तिनिमित्तत्वात्स्वरूपस्य च ज्ञानत्वं "प्रकाशवच्चा वैयर्थ्यादिति सूचितं, न च सद्वारकमद्वारकञ्च स्वरूपस्याभिधानेऽपि शब्दस्य युगपद् व्यापारभेदः साक्षाद्वा परम्परया वेति विशेषमनपेक्ष्य ज्ञानत्वमात्रस्य प्रवृत्तिनिमित्तत्वे सति शब्दशक्त्यसङ्कोचात्साक्षात्प्रणाड्या च ज्ञानत्वविशिष्टतावगमेन ज्ञानधर्मकत्वज्ञानस्वरूपत्वसिद्धेः । न च द्वारद्वारिभावेनानभिधानात् खण्डमुण्डव्यक्त्योरिव धर्मधर्मिभावासिद्धिः "आत्मज्योतिः सम्राड् ब्रह्मणा विपश्चिता" अत्रायं पुरुषः स्वयं ज्योतिर्भवति एष हि द्रष्टा श्रोता रसयिता मन्ता घ्राता बोद्धा कर्त्ता विज्ञानात्मा पुरुष" इत्यादिभिः परमात्मनो जीवस्य च ज्ञानधर्मकत्वस्य ज्ञानस्वरूपत्वस्य च सिद्धेः, ज्ञान-शब्दस्य चासङ्कोचेन ज्ञानात्मनोर्विशेषणांशे विशेष्यांशे च ज्ञानत्ववैशिष्ट्यबोधनसामर्थ्याच्च, यथा सपरिकरो राजा दृष्टः सपरिच्छदं गृहं क्रीतं सवत्सा गौः क्रीतेत्यादौ विशेषणांशस्य विशेष्यांशस्य च दृष्टत्वक्रीतत्वान्वय एकव्यापारेण शब्देन बोध्यते तद्वत्, न च विशेषणांशे विशेष्यांशे च दृष्टत्वक्रीतत्वान्वयश्चार्थः विशेषणांशविशे

ष्यांशयोरन्यतरेण विनाऽन्यतरस्य दृष्टत्वक्रीतत्वान्वयप्रतीत्यनुपपत्त्यभावात् न हि प्रवाहस्य घोषं प्रति वासत्ववत् विशेषणांशेन विना विशेष्यांशस्य दृष्टत्वक्रीतत्वादिकमनुपपन्नं, न च दर्शनक्रयादियोग्यतालक्षणेनार्थसामर्थ्येन विशेषणांशस्य तदन्वयप्रतीतिः मण्डपक्षेत्रगोदोहनादीनां दर्शनक्रयादियोग्यानामपि तदन्वयाप्रतीतेः, तदप्रतीतिश्च बुभुत्सायां सत्यां सन्देहोदयात्सिद्धा। न च समभिव्याहारबलात् विशेषणांशस्य तदन्वयसिद्धिः, धार्मिको राजा दृष्ट इत्यत्र धर्मस्य दृष्टत्वाप्रतीतेः, न हि धर्मश्चक्षुर्विषयः योग्यत्वे सति समभिव्याहारबलात्तदन्वयसिद्धिरिति चेत् तर्हि विशेषणांशेऽपि तदन्वयस्य शाब्दत्वमुक्तं स्यात्, न ह्याकाङ्क्षासन्निधियोग्यतान्वयेन प्रतिपन्नत्वं शाब्दत्वं वारयति। ननु सपरिकरो राजा दृष्ट इत्यादिषु विशेषणांशस्य विशेष्यांशस्य च शब्देनोपस्थापना तत्र विशेषणांशेऽपि विधित्सिताकारान्वय उपपन्नः अत्र तु तदभावादुभयत्र विधित्सिताकारान्वयानुपपत्तिरिति नैवं ब्रह्मशब्देनैव विशिष्टवस्तूपस्थापनात् तथाहि तद्विजिज्ञासस्वेति मुमुक्षोर्जिज्ञास्यतयोक्तं ब्रह्म तदैक्षतेत्यादीनि वाक्यानि सत्यसङ्कल्पादिविशिष्टं कारणं वदन्ति तच्छोधनप्रवृत्तसत्यादिवाक्यगतब्रह्मशब्दः सत्यसङ्कल्पतादिविशिष्टकारणविषयः बृंहणत्वमपि हि ब्रह्म शब्दार्थः। तच्च स्वसङ्कल्पेनाचेतनस्य स्थूलपरिणामहेतुत्वं चेतनानां स चानन्त्यामकल्पत इत्युक्तज्ञानबृहत्त्वहेतुत्वं च ततश्च सत्यसङ्कल्पत्वादिविशिष्टार्थोपस्थापकब्रह्मशब्दप्रतिपन्नविशिष्टवस्तुविशेषकत्वात् ज्ञानपदमसङ्कुचितशक्तितया विशेष्यं विशेषणांशे च स्वप्रवृत्तिनिमित्तभूतज्ञानत्वान्वयंप्रतिपादयति सपरिकरो राजा दृष्ट इत्यादिषु पदान्तरसमभिव्याहृतशब्देन विशिष्टोपस्थापनम् अत्र तु स्वोपजीव्यवाक्यान्तरस्थनिर्वचनापेक्षब्रह्मशब्देनेति भिदा विशिष्टवस्तुन्युपस्थापिते सति विशेषणांशस्य च विधित्सिताकारान्वयित्वं तुल्यं स्वोपजीव्यवाक्यान्तरसापेक्षशब्देन विशिष्टवस्तुन्युपस्थापिते विधित्सिताकारस्योभयान्वयित्वञ्च दृष्टम् यथा सानुचरो राजा समागतः मया च स राजा सत्कृत इति सवत्सा गौः स्थिता सा च दत्तेति अतः परमात्मनो ज्ञानशब्देन ज्ञानधर्मकत्वज्ञानस्वरूपत्वाभि-

धानं युक्तम् आनन्दादिशब्देष्वप्येष न्यायः स्वतः प्रवर्त्तते प्रमाणान्तरविरोधे सति तु निवर्त्तते अतो यथोक्तार्थ उपपन्नः अतः साक्षात्प्रणाड्या च नित्यासङ्कुचितज्ञानैकाकारत्वं दर्शयता ज्ञानपदेन मुक्तव्यावृत्तिसिद्धिमाह—

मू॰ तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः, अनन्तपदं देशकालवस्तुपरिच्छेदरहितस्वरूपमाह सगुणत्वात्स्वरूपस्य, स्वरूपेण गुणैश्चानन्त्यम् ॥

टी॰ "तेनेति", अनन्त-पदस्यार्थमाह "अनन्ते"ति, इहेदं नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः, इदमिदानीं नान्यदेति परिच्छेदायोग्यत्वं कालापरिच्छिन्नत्वं न तु देशकालाभावौ, एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः किन्तु इदमिदं न भवतीति परिच्छेदानर्हत्वमेव, सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेद इति यावत् । ब्रह्मव्यतिरिक्ते भावरूपाज्ञानतत्कार्यजातेऽङ्गीकृते सति वस्त्वन्तराभावरूपो वस्त्वपरिच्छेदः परस्यानुपपन्नः, सत्यवस्त्वन्तराभावः स इति चेत् तर्हि स्वनिष्ठवस्त्वन्तराभावः स इत्यभ्युपगमो वरं, प्रमाणान्तराविरोधात्, सत्यवस्त्वन्तराभावो हि तत्तद्धर्मिग्राहकप्रमाणविरुद्धः । गुणतोऽप्यानन्त्यमाह "सगुणत्वा"दिति, गुणानां देशकालापरिच्छेदौ विद्येते न तूक्तलक्षणवस्तुपरिच्छेदाभावः, स तु स्वरूपस्यैव । यद्वा प्रकारान्तरेण वस्तुपरिच्छेदाभावमाह "सगुणत्वा"दिति, इदमियदिति वस्तुस्वभावतः परिच्छेदाभावो वस्त्वपरिच्छेदः, यथा तुल्यकालत्वे तुल्यपरिमाणत्वेऽपि दशवर्णस्वर्णापेक्षया षड्वर्णस्वर्णन्तदपेक्षया कलधौतादि चापकृष्टं सोऽपकर्षो वस्तुपरिच्छेदः,

मू॰ तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः ॥

टी॰ तत्तदपेक्षया गुरुत्वोज्ज्वलत्वपवित्रत्वादिभिर्दशवर्णसुवर्णादिकं प्रकृष्टं, तस्य प्रकर्षस्य निरतिशयत्वं वस्त्वपरिच्छेदः ईदृशवस्त्वपरिच्छेदः स्वरूपस्य गुणानां च युज्यते तेषामपि हेयप्रत्यनीकत्वादिस्वभावोत्कर्षस्य निरवधिकत्वात्समाभ्यधिकराहित्यनिदानभूतो गुणैर्निर-

तिशयप्रकर्षो वस्तुपरिच्छेद इत्युक्तं भवति, सर्ववस्तुसामानाधिकरण्या-र्हत्वं चास्मिन्नन्तर्गतं, तद्धि सर्वशरीरकत्वं तच्च नियमनधारणशेषित्व-काष्ठेति । अनन्त-पदव्यवच्छेद्यमाह । "तेने"ति, सातिशयस्वरूप-स्वगुणा इति स्वरूपमणुत्वात्सातिशयं ज्ञानव्यतिरिक्तैश्वर्यादिगुणाश्च जगद्व्यापारानर्हतया सातिशयाः, ज्ञानं च नित्यं सर्वगतमपि तथात्वस्य परमात्मनित्येच्छाधीनत्वात्सातिशयमपराधीनत्वरूपस्यातिशयस्य परस्मिन् विद्यमानत्वात् स्वाभाविकत्वेऽपि गुणानां सातिशयत्वमिति ज्ञापनार्थं स्व-शब्दः । एवं व्यावृत्तिकथनस्य हेतुमाह "विशेषणानामि"ति, अन्योन्याश्रयस्य परिहृतत्वं दर्शयति "तत" इति, ततः-एवं व्यावृत्ति-सिद्धेः, अवगतस्वरूपमवगतासाधारणाकारं जन्मादिकारणत्वं ह्यसाधारणा-कारः तल्लक्षणकत्वेनावगतमित्यर्थः, वस्तु विशेष्यस्वरूपं ब्रह्मेति वा पाठः कारणतया लक्षितस्य ब्रह्मणः कारणत्वशङ्कितदोषव्यावर्तकत्वाच्छोधक-वाक्यानां लक्षणवाक्यपूर्वकत्वमस्ति न तु तस्य शोधकवाक्यपूर्वकत्वमिति नान्योन्याश्रयणमित्यर्थः : सूत्रकारैः सत्यज्ञानादीनां लक्षणत्वेनानुक्तिनि-दानं च अनेनैव दर्शितं भवति, विशेष्यांशस्य लक्षणं सत्यज्ञानादि न तु विशिष्टस्य, विशिष्टस्यैवोपास्यत्वात्प्राप्यत्वाच्च जिज्ञास्यब्रह्मलक्षणं जन्माद्येवेति सूत्रकाराभिप्रायः, जगत्कारणं ब्रह्म जिज्ञास्यमित्युक्ते कारण-त्वशङ्कितदोषव्यावर्तकतया तच्छेषभूतशोधकवाक्यार्थश्चास्मिन्सूत्रे सूत्र-कारेणाभिप्रेतः, जिज्ञास्यत्वानुगुणस्य कारणत्वस्यैव लक्षणतया विवक्षित-त्वात्, स्वरूपेण हेयास्पदस्य जिज्ञास्यत्वानुपपत्त्या जिज्ञास्यतायाः शोध-कवाक्यार्थसापेक्षत्वात् सत्यज्ञानादिवाक्यविषयसूत्रान्तराभावात् प्राज्ञवत् प्रकाशवच्च प्रकाशादिवच्चेति सूत्राणां सत्यादिवाक्यं दृष्टान्तयोपजीव्या-र्थान्तरोपपादनपरत्वाच्च,

सू० विशेषणानां व्यावर्तकत्वात्, ततस्सत्यं ज्ञानमनन्तं ब्रह्मेत्यनेन वाक्येन जगज्जन्मादिनाऽवगतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्या-श्रयणम्,

टी० सत्यादिवाक्यार्थश्चात्राभिप्रेत इत्यभिप्रायेण भाष्यकारैर्निखिलहेयप्रत्यनीकस्वरूपादित्यादिविशेषणमुक्तम् । अधिकरणार्थमुपसंहरति—

सू० अतः सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम् । ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति तन्मते "ब्रह्मजिज्ञासा" "जन्माद्यस्य" यत इत्यसङ्गतं स्यात् "निरतिशयबृहद् बृंहणं च ब्रह्मे"ति निर्वचनात्, तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात्सूत्राणि सूत्रोदाहृताः श्रुतयश्च न तत्र प्रमाणम् ॥

टी० "अत इ"ति, अतः—जन्मादीनां विशेषणतया उपलक्षणतया च लक्षणत्वोपपत्तेः, जिज्ञास्यत्वोपयोगिशोधकवाक्यावगताकारविशिष्टमेव कारणं वस्तु यतो वा इमानीत्यादिवाक्येऽप्यर्थलब्धमित्यभिप्रायेणाह "निरवद्य"मिति सर्वज्ञत्वादिगुणजातं कारणत्वाक्षिप्तं यत इत्यत्रानूद्यत इत्यभिप्रायेण तदुक्तिः । अस्य सूत्रद्वयस्य निर्विशेषवादिपक्षासङ्गतिमाह "ये त्वि"ति, आद्यसूत्रासङ्गतिमुपपादयति "निरतिशये"ति, अथर्वशिरसि श्रीविष्णुपुराणे चोक्तन्निर्वचनमभिप्रेतं, न निर्विशेषं ब्रह्मेति निरुक्तमिति भावः । द्वितीयसूत्रासङ्गतिं विवृणोति "तच्चे"ति, न हि जगतोऽध्यासोऽयत इति लिलक्षयिषितमिति भावः । एवं सूत्रासङ्गतिकथनेन तद्विषयवाक्यासंगतिरपि फलिता, उत्तरेषां सूत्राणां तत्तद्विषयवाक्यानामपि निर्विशेषपक्षाननुगुणत्वमाह "एवमि"ति, सूत्रगणेष्विति नैकैकं सूत्रं वाक्यं वा विरुद्धमपि तु तत्तदधिकरणशरीरं तत्तद्विषयवाक्यजातं च विरुद्धमिति भावः । तर्काननुगुणत्वमाह—

सू० तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषय-

त्वान्न निर्विशेषवस्तुनि प्रमाणम्, जगज्जन्मादिभ्रमो यतः तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः, भ्रममूलमज्ञानम् अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात्, साक्षित्वं हि प्रकाशैकरसतयैवोच्यते

"तर्कश्चे"ति, तर्क-शब्दोऽनुमानपरः प्रमाणानुग्राहकतर्कपरो वा पराभिमतयोजनायामपि निर्विशेषवस्त्वसिद्धिमाह "जगज्जन्मादी"ति, "स्वोत्प्रेक्षापक्षेऽपी"ति, अयमभिप्रायः यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् तदात्मानं स्वयमकुरुत कटकमुकुटकर्णिकादिभेदैः आत्मकृतेः परिणामादिति श्रुतिस्मृतिसूत्रेषु परिणामवचनतदनुगुणदृष्टान्ततदुपपादनानि दृश्यन्ते न तु विवर्तानुगुणं किमपि दृश्यते, न हि यथा सौम्यैकेन शुक्तिशकलेन सर्वं रजतजातं विज्ञातं स्यादिति श्रुतिः विवर्तादिति सूत्रं वा दृश्यते, तस्माज्जगज्जन्मादिभ्रमो यतस्तद्ब्रह्मेत्ययमर्थः स्वयमार्जितः न तु श्रुतिसिद्ध इति, परोत्प्रेक्षितपक्षे तन्निर्विशेषत्वासिद्धिमुपपादयति "भ्रममूलम्"इति, ततः किमित्यत्राह "साक्षित्वं ही"ति ततोऽपि किमित्यत्राह-

सू० प्रकाशत्वन्तु जडाद् व्यावर्त्तकं स्वस्य च परस्य च व्यवहारयोग्यताऽऽपादनस्वभावेन भवति, तथा सति सविशेषत्वं तदभावे प्रकाशतैव न स्यात्तुच्छतैव स्यात्, जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तं, तदयुक्तम् तद्धि न वाक्यप्रतिपाद्यम् अनुमानेन सिद्धेरित्याशङ्क्याह-

टी० "प्रकाशत्वं त्वि"ति । प्रकाशत्वं-प्रकाशशब्दवाच्यं, व्यवहारयोग्यतापादनस्वभावेनेति, व्यवहारयोग्यतापादनमेव स्वभावः, तेन भवति स्वपरव्यवहारयोग्यतापादनरूपस्वभाव एव प्रकाशत्वमित्यर्थः। तथाऽभ्युपगमे सविशेषपरत्वमाह "तथे"ति । अनभ्युपगमे दूषणमाह "तदभाव" इति

समाप्तं जन्माद्यधिकरणम् ।

अथावान्तरसङ्गतिमाह—'जगज्जन्मादी''ति । कथमयुक्तत्वमित्यत्राह "तद्धी''ति, सामान्येन शब्दप्रतिपाद्यत्वे सिद्धे हि शब्दविशेषरूपवेदान्तवेद्यत्वसिद्धिरिति भावः । तच्च कुतः? न हि प्रत्यक्षेण तदीक्ष्यत? इत्यत्राह "अनुमानेने''ति, ननु ईश्वरानुमाननिरासार्थं नेदमधिकरणमारम्भणीयं साधकबाधकप्रमाणान्तरगोचरस्य शास्त्रेण प्रतिपादनायोगाद्धि तन्निरासः, न चायमपेक्षितः अनुमानेन कर्तृमात्रे सिद्धेऽपि तदप्रतिपन्नस्य निमित्तोपादानैक्यस्य गगनादिसर्गस्य च प्रतिपादनोपपत्तेः अनुमानविरुद्धांशं न शास्त्रं प्रतिपादयतीति तत्प्रतिपादनायाऽनुमाननिरास इति चेन्न, आगमविरोधस्यैवानुमानदूषणतयाऽनुमानेनागमप्रतिबन्धायोगादिति, उच्यते शास्त्रं हि साधकान्तरसिद्धं बाधकान्तरबाधितं च न प्रतिपादयति यथाहुः "असन्निकृष्टवाचा च द्वयमत्र जिहासितम् । तादूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वे''ति तत्र निमित्तत्वोपादानत्वे च शास्त्रेण प्रतीयेते तत्र निमित्तमात्रस्यानुमानसिद्धत्वात्तदुक्तिरनुवादः स्यात्, अनुवादस्य प्रमाणान्तरसिद्धिसापेक्षत्वान्निमित्तानुवादोऽनुमानसापेक्ष एव भवति, अनुमानं चामूर्तद्रव्येतरनिष्ठोपादानव्यतिरिक्तकर्तृकत्वव्याप्तिमूलमिति धर्मिग्राहकानुमानविरोधेन निमित्तोपादानैक्यं गगनाद्युत्पत्तिं च शास्त्रं न प्रतिपादयितुमलम् । एवं कारणवाक्यानामंशे प्राप्तविषयत्वादंशान्तरे बाधितविषयत्वाच्च निमित्तोपादानैक्यादिकं न सिध्येदिति तत्सिद्धये निमित्तमात्रानुमाननिरासार्थमिदमधिकरणमारम्भणीयमिति । नन्वनुमानवादिभिरपि ईश्वरस्यागमगम्यत्वमङ्गीकृतम् आगमानुग्राहकतया च अनुमानमुच्यते इति न तन्निरासो ऽयुक्त इति चेत् परतः प्रामाण्यवादिभिर्नैवं वक्तुं युक्तम् अनुमानस्य शास्त्रानुग्राहकत्वे शास्त्रमेव प्राधान्येनेश्वरे प्रमाणं भवति, अनुग्राह्यं हि प्रधानम्, ईश्वरप्रोक्ततया च तैर्वेदप्रामाण्यमङ्गीक्रियते अत ईश्वरे सिद्धे तत्प्रणीतत्वाद्वेदप्रामाण्यसिद्धिः, तत्सिद्धावीश्वरसिद्धिरित्यन्योन्याश्रयः स्यात् । ननु महाजनपरिग्रहाद्वेदप्रामाण्यं वेदादीश्वरसिद्धिरिति नान्योन्याश्रय इति चेन्न तत्परिग्रहस्य भ्रान्तिमूलत्वव्युदासार्थं निर्दोषत्वज्ञानमूलत्वं वाच्यं, निर्दोषत्वज्ञानं च गुणवद्वक्तृकत्वज्ञानादित्यन्योन्याश्रयः स्यादेव, आप्तो-

क्तत्वमनुमानतः सिद्धमिति नान्योन्याश्रय इति चेत् तत एवानुमानाद्वेद-वक्तृत्वेनेश्वरसिद्धेः किं वेदेनेति शास्त्रवैयर्थ्यपरिहाराय तन्निरासः कार्य इत्यधिकरणारम्भो युक्तः "शास्त्रयोनित्वा"त्, व्याख्यात्र ? न्तराभिमततत्पुरुषयोजनाव्यावृत्त्यर्थमाह "शास्त्रं यस्ये"ति, योनि-शब्दस्योपादानपरत्व-व्यावृत्त्यर्थं कारणमात्रपरत्वमाह "कारणमि"ति, कथं सर्वकारणस्य ब्रह्मणः शास्त्रं कारण ? मिति शङ्कायामुत्पत्तिकारणपरत्वव्यावृत्त्यर्थमाह "प्रमाण"मिति, कारणवाचिनो योनि-शब्दस्य कथं प्रमाणवाचित्व ? मित्यत्राह "ब्रह्मज्ञाने"ति, उत्पादक इव ज्ञापकेऽपि हेतु-शब्दः प्रयुज्यते तद्वद्धेतुत्वाभिप्रायेण योनि-शब्दप्रयोगसम्भव इति भावः। प्रमाणान्तरवेद्यत्वाद् ब्रह्म न शास्त्रवेद्यमिति पूर्वपक्षे सति शास्त्रवेद्यत्वादिति

शास्त्रयोनित्वाधिकरणम्। सू० शास्त्रयोनित्वात् ॥ ३ ॥

भा० शास्त्रं यस्य योनिः कारणं प्रमाणं तच्छास्त्रयोनि, तस्य भावः शास्त्रयोनित्वं तस्मात् ब्रह्मज्ञानकारणत्वाच्छास्त्रस्य तद्योनित्वं, ब्रह्मणः अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणकत्वादुक्तस्वरूपं ब्रह्म यतो वा इमानि भूतानि जायन्ते इत्यादि वाक्यं बोधयत्येवेत्यर्थः।

टी० ॥ सिद्धान्तहेतोः साध्याविशिष्टत्वं स्यादिति शङ्काम्परिहरन् पञ्चम्यन्तस्य हेतुवाचिपदस्य साध्यवाचिपदान्वयं च दर्शयति "अत्यन्ते"ति, ब्रह्मणः स्वरूपेणेन्द्रियसम्बन्धो नास्ति, न च तल्लिङ्गस्य, नापि लिङ्गलिङ्गस्य चेत्यभिप्रायेणोक्तम् "अत्यन्तातीन्द्रियत्वेने"ति, अत एव हि प्रत्यक्षादिप्रमाणाविषयतयेत्युक्तम्। यद्वा, व्यक्तिरूपेण दृष्टत्वं व्याप्त्यौपयिकं दृष्टसजातीयत्वं च नास्तीति भावः। इन्द्रियप्रत्यक्षशब्दयोः करणतत्फलभूतज्ञानविवक्षया भिन्नार्थता, शास्त्रैकप्रमाणत्वादिति अत्रेत इतिवदवधारणगर्भः शास्त्रयोनि-शब्द इति भावः, ततश्च प्रमाणान्तराविषयत्वं सिध्यति मम,

णान्तरागोचरतया शब्देन प्रतिपादयितुं योग्यत्वात् ब्रह्म यतो वा इमानी-त्यादिवाक्यविशेषो बोधयतीत्युक्तम्भवति, पूर्वस्मिन्सूत्रे यत्साध्यन्तदेवा-स्मिन्सूत्रे मुखभेदेन साध्यमित्येवकाराभिप्रायः, अत्रापि यतो वा इमानी-त्यादिवाक्यद्वारा शास्त्रं विषयः संशयोऽप्यर्थसिद्धः साधारणविचारद्वयमनु-सन्धेयं यतो वा इमानीत्यादि वाक्यं किं ब्रह्मणि प्रमाणं ? मुत ने ? ति संश-यस्तदर्थं ब्रह्म किं प्रमाणान्तरगोचरो न वेति, तदर्थं किं सामान्यतो दृष्टा-नुमानं जीवविलक्षणमवगमयति नेति, यदाऽवगमयति तदा मानान्तर-गोचरत्वात् यतो वा इमानीत्यादिवाक्यं न ब्रह्म प्रतिपादयतीति वेदा-न्तानां ब्रह्मणि प्रामाण्याभावात्तद्विचारानारम्भः पूर्वपक्षे फलितः, राद्धान्ते तु सामान्यतो दृष्टानुमानस्य जीवविलक्षणे प्रमाणत्वाभावेन ब्रह्मणो-मानान्तरागोचरत्वाद्यतो वा इमानीति वाक्यं ब्रह्मणि प्रमाणमिति ।

सू० ननु शास्त्रयोनित्वं ब्रह्मणो न सम्भवति प्रमाणान्तरवेद्य-त्वाद्ब्रह्मणः, अप्राप्ते तु शास्त्रमर्थवत्, किं तर्हि तत्र प्रमाणं, न तावत्प्रत्यक्षं, तद्धि द्विविधम् इन्द्रियसम्भवं योगसम्भवं चेति इन्द्रियसम्भवं च बाह्यसम्भवमान्तरसम्भवं चेति द्विविधम्,

टी० सर्ववेदान्तवाक्यानां तत्र प्रामाण्यात्तद्विचारस्यारम्भणीयत्वं फलितं, सूत्रान्तरयोजनायां सङ्ग्रहेणोक्तमर्थमसहमानः पूर्वपक्षी चोदयति "नन्वि"ति, शास्त्रयोनित्वं-शास्त्रप्रमाणकत्वं प्रमाणान्तरवेद्यत्वे कथं शास्त्रयोनित्वानुपपत्ति ? रित्यत्राह "अप्राप्ते तु शास्त्रमर्थव"दिति, तु-श-ब्दोऽवधारणे "स्युरेव तु पुनर्वै चेत्यवधारणवाचिन" इति हि नैघण्टुकाः, वैल-क्ष्ये वा, अबुभुत्सितयाऽहत्वेनायत्नसाध्यत्वात् प्रत्यक्षस्य ज्ञातप्रयोजनबोध-कत्वं न दूषणं, शास्त्रं तु बुभुत्सितयाऽहत्वेन यत्नसाध्यत्वात् प्रत्यक्षस्य ज्ञाता प्रयोजनबोधकत्वं दूषणं तथा सति वन्ह्यौष्ण्यवायसदन्तसङ्ख्यावाक्येष्विव श्रवणादिप्रवृत्त्यनुपपत्तेः । अस्मिन् पूर्वपक्षे सिद्धान्त्येकदेशी मीमांसकश्चोद-यति । "किं तर्हि" इति, ईश्वरानुमाननिरासेन तु सिद्धान्तित्वम् ईश्वर-

मात्रानभ्युपगमेनैकदेशित्वं किं तर्हि न किन्त्वि[1]त्यर्थः। कथमि? त्यत्राह "न तावदि"ति, सर्वस्यापि प्रत्यक्षस्यासामर्थ्यं दर्शयितुं तस्य द्वैविध्यमाह "तद्धी"ति, प्रथमस्यापि द्वैविध्यमाह—

मू० बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्यस्वविषयबोधजनकानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपरमपुरुषविशेषविषयबोधजनकानि, नाप्यान्तरम् आन्तरसुखदुःखाद्व्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः, नापि योगजन्यं भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वात् न प्रामाण्यमिति कुतः प्रत्यक्षता, तदतिरिक्तविषयत्वे कारणाभावात्,

टी० "इन्द्रियसम्भव"मिति, आन्तरसम्भवं चेति आन्तर-शब्देन मनो विवक्षितं, प्रथमे ऽनुपपत्तिमाह। "बाह्येन्द्रियाणी"ति, देशसन्निकर्षं विशिंषता विद्यमान-शब्देन कालसन्निकर्षश्च सिद्धः, योग्य-शब्देन स्वभावसन्निकर्ष उक्तः, अनेन धर्माधर्मादिव्यावृत्तिः, स्वशब्देन चक्षुरादिकं प्रति शब्दादिव्यावृत्तिः। यद्वा स्वविषयशब्देनैवातीन्द्रियस्येन्द्रियान्तरविषयस्य च व्यावृत्तिः, योग्य-शब्देन तु तत्तदिन्द्रियप्रतिनियतरूपादिजातीये ऽप्यनुद्भवादिवशादयोग्यस्य व्यवच्छेदः। द्वितीयं प्रतिवक्ति "नापी"ति, मनश्च न तद्विषयबोधजनकमित्यर्थः। आन्तरसुखदुःखादि इत्यत्रान्तरशब्द आत्मतद्धर्मपरः, तद्ग्राहित्वादेव हि मनसोऽप्यान्तरत्वं, सुखदुःखादीत्यान्तरशब्दविवरणम्, आदिशब्देनेच्छाद्वेषादेरात्मनश्च सङ्ग्रहः, व्यतिरिक्तेत्यनेन, रूपादीनां बहिष्ट्वत्वमेवेत्युपपादितम्। योगसम्भवस्यानुपपत्तिं दर्शयितुमाह—

मू० तथा सति तस्य भ्रमरूपता, नाप्यनुमानं विशेषतो दृष्टं सामान्यतो दृष्टं वा, अतीन्द्रिये वस्तुनि सम्बन्धाव-

१ न किञ्चिदित्यर्थः इति पा०।

धारणविरहान्न विशेषतो दृष्टं समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिङ्गमुपलभ्यते। ननु च जगतः कार्य्यत्वं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम्, अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम्, सर्वं हि घटादिकार्य्यं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम् अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनं च सावयवत्वेन जगतः कार्य्यत्वम्—उच्यते—

टी० "नापि योगे"ति, योगिप्रत्यक्षं किं पूर्वानुभूतानधिकविषयं प्रमाणम्? उत अनुभूताधिकविषयम्? इति अनधिकविषयत्वे दूषणमाह "भावने"ति, अनधिकविषयतया स्मृतिमात्रत्वाच्च प्रमाणत्वमिति प्रमाणावान्तरविशेषत्वं दूरोत्सारितमित्यर्थः। अनधिकविषयत्वमुपपादयति "तदतिरिक्तविषयत्वे कारणाभावादि"ति, कारणमिन्द्रियसम्बन्धः प्रमितिकारणाभावाच्च प्रामाण्यमित्यर्थः। अधिकविषयत्वे दूषणमाह "तथा सती"ति, इन्द्रियसम्बन्धाभावेऽप्यनुभूताधिकविषयत्वे तस्य दोषमूलकत्वेन भ्रान्तितैवेत्यर्थः द्विविधानुमानागोचरत्वमाह "नापीत्यादि"ना, नियतं—व्याप्तं, सिद्धान्तिच्छायया चोदयन्तं वादिनं पूर्वपक्ष्येकदेशी चोदयति "ननु चेति", नैयायिकैकदेशिभिरुक्तानुमानस्य वक्तृत्वात्पूर्वपक्ष्येकदेशित्वं सम्प्रदानम्भोक्ता प्रयोजनं विनियोगः। एककर्तृकत्वसिद्ध्यर्थमनुमानान्तरमाह "अचेतने"ति, उपादानाद्यभिज्ञकर्तृकत्वे दृष्टान्तमाह "सर्वं हीति", एकचेतनाधीनत्वे च दृष्टान्तमाह "अचेतने"ति, व्रणपरशरीरव्यावृत्त्यर्थावरोगस्व—शब्दौ, कार्यत्वे सिद्धे ह्युपादानाद्यभिज्ञकर्तृकत्वसिद्धिरित्यत्राह "सावयवत्वेने"ति, अनेनाचेतनारब्धत्वहेतोश्चासिद्धिशङ्कापरिहारोऽपि फलितः। एवम्पूर्वपक्ष्येकदेशिनोक्तमर्थं सिद्धान्त्येकदेशी दूषयति "उच्यते", इत्यादिना, बुद्धिस्थत्वात्पाश्चात्यमनुमानं दूषयति—

भू० किमिदमेकचेतनाधीनत्वं ? न तावत्तदायत्तोत्पत्तिस्थिति-
त्वं, दृष्टान्तो हि साध्यविकलः स्यात्, न हि शरीरं स्वशरीर-
मेकचेतनायत्तोत्पत्तिस्थिति, तच्छरीरस्य भोक्तृणामभा-
र्य्यादिसर्वचेतनानामदृष्टजन्यत्वात्तदुत्पत्तिस्थित्योः, कि-
ञ्च, शरीरावयविनः स्वावयवसमवेततारूपा स्थितिरवय-
वसंश्लेषविशेषव्यतिरेकेण न चेतनमपेक्षते ॥

टी० ॥ 'किमिदमिति', एकचेतनाधीनत्वं नाम किं तदायत्तोत्पत्ति-
स्थिति? त्वमुत तदायत्ततत्प्रवृत्तित्व ? मिति विकल्प्य प्रथमेऽपि तदायत्तोत्प-
त्तिस्थितित्वं नाम किं तदिच्छाधीनोत्पत्तिस्थितित्व ? मुत तददृष्टाधीनोत्प-
त्तिस्थितित्व ? मिति विकल्पोऽभिप्रेतः तेषां विकल्पानां क्षेपार्थः किं–शब्दः,
तत्र तदिच्छाऽधीनोत्पत्तिस्थितित्वन्न दृष्टमिति साध्यवैकल्यदूषणं प्रसिद्ध-
मिति बुद्ध्वा द्वितीयं शिरो दूषयति "दृष्टान्तो ही"ति, साध्यविकलत्वं
विवृणोति "न ही"ति, कुत इत्यत्राह "तच्छरीरस्ये"ति,। यद्वा न तावदि-
त्यादिग्रन्थस्तदिच्छाधीनोत्पत्तिस्थितित्वतददृष्टाधीनोत्पत्तिस्थितित्वयोः
साधारणः, तत्रेच्छाधीनत्वपक्षे साध्यवैकल्यं स्फुटमिति तददृष्टाधीनत्वपक्षे
साध्यवैकल्यं विवृणोति "न ही"ति, उत्पत्तिस्थिती हि सह दूषिते । अथ
स्थितिं पृथग्विकल्प्य दूषयितुमाह "किं चे"ति स्वावयवसमवेततारूपा स्थि-
त्युक्तिर्वैशेषिकादिमतानुसारेण, न चेतनमपेक्षत इति चेतनापेक्षा हि स्वरू-
पतो वा स्याददृष्टद्वारेण वा, इच्छाद्वारेण वा, तत्र स्वरूपमात्रमकिञ्चित्करं
तत्सद्भावेऽपि विनाशदर्शनात्, अदृष्टाधीनत्वे प्रागेवोत्तरं दत्तम् इतीच्छाधीन-
त्वपक्षोऽनेन दूषितः, चेतनेच्छां नापेक्षत इत्यर्थः; आविनाशकालादशिथिल-
त्वलक्षणा स्थितिरप्यनेन दत्तोत्तरेत्यभिप्रायेण तदनुक्तिः । अथोक्तप्रकारवि-
कल्पदूषणेन निरस्तमपि शिरोऽन्तरं दूषणान्तरसद्भावादुपादाय दूषयति–

भू० प्राणनलक्षणा तु स्थितिः पक्षत्वाभिमते क्षितिजलधिम-
हीधरादौ न सम्भवतीति पक्षसपक्षानुगतामेकरूपां स्थिति-

न्नोपलभामहे तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत् अनेकचेतनसाध्येषु गुरुतररथशिलामहीध्र[1]रादिषु व्यभिचारः, चेतनमात्राधीनत्वे सिद्धसाध्यता, किं च, उभयवादिसिद्धानां जीवानामेव लाघवन्यायेन कर्तृत्वाभ्युपगमो युक्तः। न च जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासम्भवः, सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात्, यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते ॥

टी० "प्राणने"ति, प्राणनलक्षणा—पञ्चवृत्तिप्राणसहितत्वलक्षणा- "नोपलभामहे" इति, कालात्ययापदेश इत्यर्थः। तदायत्तवृत्तित्वमेकचेतनाधीनत्वमिति पक्षं शङ्कते "तदायत्ते"ति, अचेतनारब्धत्वहेतोरनैकान्त्यमाह "अनेके"ति, अनेकचेतनसाध्येषु—अनेकचेतनप्रवर्त्त्येष्वित्यर्थः, चेतनैकत्वाविवक्षायां सिद्धसाध्यत्वमाह "चेतनमात्रे"ति, एवमेकचेतनाधीनत्वं व्युदस्तं कार्यत्वहेतोर्लाघवतर्कमुखेन सिद्धसाध्यतामाह "किं चे"ति, उभयवादिसिद्धानामिति लाघवस्य हेतुरुक्तः "क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रह" इति ह्याहुः, सम्भवन्त्यां गतौ हि लाघवतर्कः, गत्यन्तरासंभवे त्वधिककल्पनं न

सू० उपकरणभूतयागादिशक्तिरूपाऽपूर्वादिशब्दवाच्या, दृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः तत्साक्षात्कारानपेक्षणात्कार्य्यारम्भस्य, शक्तिमत्साक्षात्कार एव हि कार्य्यारम्भोपयोगी शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते न साक्षात्कारः, न हि कुलालादयः कार्य्योपकरणभूतदण्डचक्रादिवत्तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्य्यमारभन्ते,

[1] महीरुहादिष्विति पा०।

इह तु चेतनानामागमावगतयागादिशक्तिविशेषाणां कार्य्यारम्भो नानुपपन्नः । किं च यच्छक्यक्रियं शक्योपादानादिविज्ञानं च तदेव हि तदभिज्ञकर्तृकं दृष्टम्.

टी० दोषायेत्यत्राह "न चे"ति, कुत ? इत्यत्राह "सर्वेषामि"ति, पूर्वकाले चेतनानां साक्षात्कारसामर्थ्यं दृश्यमाननीत्योपपादयति "यथे"ति, इदानीमिति, एवं पूर्वकालेऽपीति भावः । धर्माधर्मसाक्षात्काराभावात्कर्तृत्वासम्भवमाशङ्क्याह "उपकरणेति", यागादिशक्तिरूपेति यागादिजन्यस्वात्मातिशयरूपेत्यर्थः । कुत इत्यत्राह" तत्साक्षात्कारेति", तर्हि घटादिनिर्माणे मृदादिसाक्षात्कारनियमः कथमित्यत्राह 'शक्तिमद्विति", शक्तिमच्छब्देन शक्तिसम्बन्ध्युच्यते जन्यजनकभावस्य च सम्बन्धविशेषरूपत्वाच्छक्तिरूपादृष्टजनकयागादिषु शक्तिमच्छब्दप्रयोगः शक्तेरपि अपेक्षितत्वसाम्यात्तत्साक्षात्कारो ऽपेक्षितः, अन्यथाऽनवगतवस्तुशक्तयोऽपि पुरुषास्तैस्तत्कार्यं कुर्युरित्यत्राह "शक्तेस्त्वि"ति, तु-शब्दः शक्तिमत इव शक्तेरपि ज्ञातव्यत्वे ऽपि विशेषद्योतनार्थः शक्तिसाक्षात्कारानुपयोगमुपपादयति "न ही"ति, शक्तिसाक्षात्कारानपेक्षत्वेऽपि शक्तिज्ञानमात्रमपेक्षितं, तच्च दण्डचक्रादिष्वन्वयव्यतिरेकवशात्सिध्यति यागादौ तु कथमित्यत्राह 'इह त्वि"ति, एवं सिद्धसाधनत्वमुक्तम् । अथ कार्यत्वहेतोरुपाधिद्वयेन सोपाधिकत्वमाह–

भा० महीमहीधरमहार्णवादि त्वशक्यक्रियमशक्योपादानादिविज्ञानं चेति न चेतनकर्तृकम्, अतो घटमणिकादिसजातीयशक्यक्रियशक्योपादानादिविज्ञानवस्तुगतमेव कार्य्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति। किं च घटादिकार्य्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवता ऽनाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्त्तारं साधयन्नयङ्कार्य्यत्वहेतुः सिषाधयिषितपुरुषसार्वज्ञ्यसर्वैश्व-

र्य्यादिविपरीतसाधनाद्विरुद्धः स्यात् । न चैतावता सर्वानुमानोच्छेदप्रसङ्गः, लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिता विपरीतविशेषास्तत्प्रमाणप्रतिहतगतयो हि निवर्त्तन्ते, इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलजगन्निर्म्माणचतुरेऽन्वयव्यतिरेकावगताविनाभावनियमा धर्म्माः सर्व एवाविशेषेण प्रसज्यन्ते निवर्त्तकप्रमाणाभावात्तथैवावतिष्ठन्ते ॥

टी० "किंचे"ति, साधनाव्यापकत्वमाह "महीमहीधरे"ति, साध्यसमव्याप्तत्वमाह "अत" इति, सोपाधिकत्वे सति साध्येन हेतोर्व्याप्यत्वासिद्धिः स्यादित्युपाधेर्दूषणत्वम् । अदृष्टवज्जीवकर्तृकत्वव्यावृत्त्यर्थम्बुद्धिमत्कर्तृपूर्वकत्वसाधन इत्युक्तम् । अथ कार्यत्वहेतोर्विशेषविरुद्धत्वमाह "किञ्चे"ति, अनीश्वरेण—कर्मवश्येन, परिग्रहवता—उपकारणवतेत्यर्थः, सर्वानुमानोच्छेदमाशङ्क्याह "न चे"ति, कथमित्यत्राह "लिङ्गिनी"ति, पक्षेऽपि तथा स्यादित्यत्राह "इह त्वि"ति, तु—शब्दाभिप्रेतं वैषम्यमाह "निवर्त्तके",ति, सिद्धान्त्येकदेशिमतमुपसंहरति—

मू० अत आगमादृते कथमीश्वरस्सेत्स्यति । अत्राहुः सावयवत्वादेव जगतः कार्य्यत्वं न प्रत्याख्यातुं शक्यते, भवन्ति च प्रयोगाः—विवादाध्यासितं भूभूधरादि कार्य्यं सावयवत्वात् घटादिवत्, तथा विवादाध्यासितम् अवनिजलधिमहीधरादि कार्य्यं महत्त्वे सति क्रियावत्त्वात् घटादिवत् तनुभुवनादि कार्य्यं महत्त्वे सति मूर्त्तत्वात् घटादिवत् ॥

टी० "अत इति", सिद्ध्यति चेत्त्वागमादृते मानमित्यर्थः । अतः—सिद्धसाधनत्वसोपाधिकत्वविरुद्धत्वैर्दूषितत्वादित्यर्थः । अथ साक्षात्पूर्वपक्षिणं प्रस्तौति "अत्राहुरि"ति, कार्यत्वहेतोः स्वरूपासिद्धिमाशङ्क्य छुद-

स्यति "सावयवत्वादि" ति, सावयत्वादेवेति पूर्वं प्रस्तुतादेवेत्यर्थः, अनेन हेत्वन्तरसद्भावोऽपि सूचितः। एवं कण्ठोक्त्यभिप्रायेण च सिद्धान् हेतून् प्रयोगतो विवृणोति "भवन्ती" ति, विवादाध्यासितपदविवरणम्भूभूधरादिपदम्, आदि–शब्दोत्पातव्यक्तिसङ्ग्राहकं विवादाध्यासितपदम्। यद्वा पक्षीकृतेष्वेव सम्प्रतिपन्नांशव्यवच्छेदाय विवादाध्यासित–शब्दः, सन्ति हि खातपूरणनिष्पाद्याः पृथिव्यंशाः सगरसुतादिनिष्पाद्याः समुद्रांशाः अस्मादिनिष्पाद्याः पर्वतादयश्च प्रलयेऽपि जलधेरवस्थानात् सर्वाभावेऽपि स्रष्टृशरीरावस्थानाच्च तयोरकार्यत्वशङ्काद्योतनाय प्रतिज्ञावाक्यावर्तनेन जलधितनुशब्दोपादानं, द्वितीयतृतीयप्रयोगयोर्मध्ये महत्त्वपदेन परमाणुव्यावृत्तिः क्रियावत्त्वमूर्त्तत्व–शब्दाभ्यां गगनादिव्यावृत्तिः, अवनिमहीधरशब्दमध्ये जलधिशब्द–निवेशस्तद्वत्तयोरपि कम्पसद्भावज्ञापनार्थः,प्रसिद्धो ह्युत्पातादौ भूभूधरकम्पः। ननु तनुपक्षीकारो न युक्तः, अस्मदादिशरीरे सिद्धसाधनादीश्वरशरीरे त्वाश्रयासिद्धेः, नैवन्तनोर्विशेषतः पक्षीकारे निर्वन्धाभावात् तदुपपादनन्तु स्वपक्षसम्प्रतिपन्नस्येश्वरशरीरस्यापि कार्यताज्ञापनार्थम्। यद्वा सावयवत्वादेवेत्यादेरयमाशयः, न सावयवत्वादुत्पत्तिमत्त्वं प्रसाध्य ततः सकर्तृकत्वं साध्यते, अपि तु सावयवत्वेनैव कृतिसाध्यत्वरूपं कार्यत्वं साध्यते, कृतिश्च न निराश्रयेति तदाश्रयः कर्त्ता सामान्यतः सिध्यतीति नन्वेवन्तर्हि कार्यत्वात्सकर्तृकत्वे साध्ये हेतोः साध्याविशिष्टता स्यात् न कृतिसाध्यत्वं हेतुः उपादानाद्यभिज्ञसमर्थकर्तृकत्वं साध्यमिति वैषम्यात्, अत एव ह्युत्तरत्र क्रियत इत्युक्तेचोत्पद्यते इति, कार्यत्वं निश्चित्य तदानीमेव कर्त्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोतीत्यादि च, एवं च कृतिसाध्यत्वलक्षणे साध्ये शरीरस्यापि विवादास्पदत्वात्पक्षतोपपत्तिः। अथ सोपाधिकत्वं सामान्येन प्रतिक्षिपति–

भा० सावयवेषु द्रव्येष्विदमेव क्रियते नेतरदिति कार्य्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरन्नोपलभामहे कार्य्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वञ्चो-

पलभ्यते इति चेन्न कार्य्यत्वेनानुमते ऽपि विषये ज्ञान-शक्ती कार्य्यानुमेये इति अन्यत्राऽपि सावयवत्वादिना कार्य्यत्वं ज्ञातमिति ते च प्रतिपन्ने एवेति न कश्चिद्वि-शेषः, तथा हि घटमणिकादिषु कृतेषु कार्य्यत्वदर्शनानु-मितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचि-त्रसन्निवेशं नरेन्द्रभवनमालोक्यावयवसन्निवेशविशेषेण तस्य कार्य्यत्वन्निश्चित्य तदानीमेव कर्त्तुस्तज्ज्ञानशक्ति-वैचित्र्यमनुमिनोति ॥

टी० "सावयवेष्वि"ति, सावयवत्वमुपलक्षणं महत्त्वे सति क्रिया-वत्त्वं महत्त्वे सति मूर्त्तत्वं च सावयवत्वसमानाश्रयं तत्समव्याप्तमिति तयोरप्युपाधिपरिहारसिद्धिः, रूपान्तरम्–आकारान्तरम् । उपाधिं शङ्कते "कार्यत्वे"ति, परिहरति "ने"ति, कार्यत्वेनानुमते सपक्षे अन्यत्र पक्षे सप-क्षेऽपिघटादौ कार्यत्वानुमेये ज्ञानशक्ती तद्वत् पक्षेऽपि कार्य्यत्वस्य प्रतिपन्न-त्वात् तज्ज्ञानशक्ती अनुमीयेते इति नाशक्यक्रियत्वमशक्यज्ञानत्वं चेत्यर्थः । तदेव दर्शयति "तथा ही"ति, किं तदकर्तुरपि शक्यक्रियत्वं शक्योपादाना-दिज्ञानत्वमुपाधिः ? उत तत्तत्कर्तुः शक्यक्रियत्वं शक्योपादानादिज्ञानत्वं ? प्रथमे कल्पे सपक्षानुयायित्वाभावान्नोपाधित्वन्द्वितीये कल्पे पक्षेऽपि विद्य-मानत्वान्नोपाधित्वं, सर्वसपक्षानुयायी पक्षेष्वविद्यमानो ह्युपाधिरित्यभि-प्रायः । कर्त्तुस्तज्ज्ञानशक्तिवैचित्र्यमित्यनेनाभिप्रेतोऽयं विकल्पः । ततः किमि? त्यत्राह–

भू० अतस्तनुभवनादेः कार्य्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्मा-णादिनिपुणः कश्चित्पुरुषविशेषः सिद्ध्यत्येव । किं च सर्वचे-तनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतना-नधिष्ठितयोरचेतनयोस्तयोः फलहेतुत्वानुपपत्तेः सर्वज्ञ-

मोनुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः, वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् ॥

टी० "अत" इति, अतः—सावयवत्वादिहेतोर्निरुपाधिकत्वादित्यर्थः। एवं सावयवत्वात्कृतिसाध्यत्वरूपे कार्यत्वे साध्ये शक्यक्रियत्वादिक उपाधिः परिहृतः, अनेनोत्पत्तिमत्त्वात्सकर्तृकत्वे साध्ये उत्पत्तिमत्त्वहेतुरपि निरुपाधिको भवति सावयवत्वादुत्पत्तिमत्त्वे साध्ये तूपाधेर्दूर्वादौ व्यभिचारश्च सिद्धो, न हि दूर्वादिरुत्पद्यमानोऽस्मदादेः शक्यक्रियः। सिद्धसाधनत्वनिरासार्थमनुमानान्तरप्रदर्शनार्थं चाह "क्रिञ्चे"ति धर्माधर्मनिमित्तेऽपीति सिद्धसाधनत्वशङ्कासूचनमनधिष्ठितयोरनुपपत्तेरित्यन्वयव्याप्तिस्थेन्ने, व्यतिरेकव्याप्त्युक्तिः, दृष्टान्तमाह "वर्द्धकिने"ति, वास्यादेर्यूपाद्यकरणत्वस्य चेतनव्यतिरिक्तसहकार्यन्तराभावप्रयुक्तत्वशङ्काव्यावृत्त्यर्थन्देशकालाद्यनेकपरिकरसन्निधानेऽपीत्युक्तं, धर्माधर्मौ स्वसाक्षात्कारिचेतनविशेषाधिष्ठितावेव कार्यकरौ अचेतनत्वात् स्वेतरसमस्तसंसारिचेतनसुखदुःखोपभोगसाधनत्वात् वास्यादिवदित्यनुमानशरीरं, जीवैर्धर्माधर्मसाक्षात्कारतत्पूर्वकतदधिष्ठानायोगात्, जीवविलक्षणसिद्धिरनधिष्ठितस्य कार्यकरत्वायोगात् जीवैः साक्षात्कारतत्पूर्वकाधिष्ठानायोगाच्च सिद्धसाधनत्वं च परिहृतं, कर्त्तुरभावे कार्यानुत्पत्तिप्रसङ्गरूपस्य विपक्षे बाधकतर्कस्य पुरुषसुखादिप्रयोजकादृष्टेन कार्योत्पत्त्युपपत्तिरिति याऽन्यथासिद्धिः साऽप्यनेनैव परिहृता भवति, अचेतनस्याऽप्यनधिष्ठितस्य बीजादेरङ्कुरोत्पादकत्वदर्शनाद् व्यभिचार इति शङ्कां परिहरति—

मू० बीजाङ्कुरादेः, पक्षान्तर्भावेण तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम्, तत एव सुखादिभिर्व्यभिचारदर्शनवचनमपि[1] तथैव, न च लाघवेनोभयवादिसम्प्रतिपन्नक्षेत्रज्ञानामेवेदृशमधिष्ठातृत्वकल्पनं युक्तम्,

[1] व्यभिचारवचनमपीति पाठान्तरम्।

टी० "बीजाङ्कुरे"ति, कार्यत्वहेतोरङ्कुरादौ व्यभिचारशङ्कापरिहारश्चाङ्कुर–शब्दोपादानेन फलितश्चेतनानभिसंहितपुलकाद्युत्पादकैश्चेतनानधिष्ठितैः स्वयमचेतनैः सुखादिभिरचेतनत्वहेतोर्व्यभिचारमाशङ्क्य परिहरति "तत एवे"ति, आदि–शब्देन दुःखादिकं चेतनानधिष्ठितं सुखाद्युत्पादकं मनः प्रभृति च विवक्षितमेतेन स्वेच्छामन्तरेणोत्पाद्यमानैः सुखासुखविशेषैस्तत्कार्यैश्च पुलकाङ्कम्पादिभिः कार्यत्वहेतोर्व्यभिचारश्च परिहृतो भवति । लाघवन्यायेन हेतोरन्यथा सिद्धेः सिद्धसाधनत्वमाशङ्क्य परिहरति "न चे"ति, कुत इत्याकाङ्क्षायामीदृशशब्दाभिप्रेतं हेतुं विवृणोति–

सू० तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयाद्, दर्शनानुगुणैव हि सर्वत्र शक्तिकल्पना, न च तेन त्वदीश्वरस्याशक्तिनिश्चयोऽस्ति अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः, समर्थकर्तृपूर्वकत्वनियतकार्यत्वहेतुना सिद्धन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसम्पन्न एव सिद्ध्यति ।

टी० "तेषा"मिति, एकेन्द्रियकल्पनस्य लाघवेऽप्येकेन्द्रियस्य शब्दादिसकलविषयग्रहणाशक्तेर्हानेकेन्द्रिकल्पनं तस्माल्लाघवार्थमशक्तस्य कार्यकरत्वकल्पनयुक्तमिति भावः । तदेवोपपादयति "दर्शने"ति, उपपन्नमेव हि कल्पनीयम्, न च जीवानां सूक्ष्मव्यवहितादिदर्शनशक्तिदृष्टेति भावः । शक्तिमत्साक्षात्कार एवापेक्षितो न तु शक्तिसाक्षात्कार इतीदमपि प्रत्युक्तं भवति सूक्ष्मव्यवहितेत्यादिना, शक्तिमतामपि, परमाण्वादीनां तेनत्रेन तत्साक्षात्कारासिद्धेरीश्वरे न तथाऽनुपपत्तिरित्याह "न चे"ति, अवान्तरानुमानैरीश्वरसिद्धिं निगमयति "अत" इति, व्याप्तिबलात्कार्यानुगुणज्ञानशक्तिमान् कर्त्ता सिध्यतु, तस्य कथं तेनत्रवैलक्षण्यं, ज्ञानं हि देहेन्द्रियादिसापेक्षमिति शङ्कायां पक्षधर्मताबलात्सिद्धमर्थमाह "समर्थे"ति, अस्वाभाविकत्वे कर्मानुगुणपरिमितज्ञानशक्तिमत्त्वं स्यादिति तद्व्युदासार्थः स्वाभाविकसर्वार्थसाक्षात्कार–शब्दः । अथ कार्यत्वहेतोर्विवृत्त्व व्युत्पत्ति–

मू० यत्त्वनैश्वर्य्याद्यापादनेन धर्म्मविशेषविपरीतसाधनत्वमुक्तं तदनुमानदृष्टान्तभिन्नत्वनिबन्धनं, सपक्षे सदृदृष्टानां सर्वेषां कार्य्यस्याहेतुभूतानां च धर्म्माणां लिङ्गत्वप्राप्तेः, एतदुक्तं भवति—केनचित्किञ्चित्क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्म्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चापेक्षते न त्वन्यासामर्थ्यमन्याज्ञानं च, हेतुत्वाभावात्, सर्वनिर्म्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां सम्बन्धितया दर्शनमात्रेणाकिञ्चित्करस्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनाऽयोगादिति। किञ्च क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकम्

टी० "यत्त्वि"त्यादिना, कथ? मित्यत्राह "सपक्ष" इति, किं सहदर्शनमात्राच्छरीरादिप्राप्ति? रुत हेतुत्वात्? नाद्यः, अतिप्रसङ्गात्, न द्वितीयः, हेतुत्वासिद्धेरित्यभिप्रायः। कार्यस्याहेतुभूतानामिति व्याप्त्यभावोऽप्यभिप्रेतः। ननु सर्वसपक्षेषु सहदृष्टत्वात्कार्यहेतुत्वं च कल्प्यं तथा सति कथं कतिपयप्राप्तिः कतिपयाप्राप्तिश्चेच्यत? इत्यत्राह "एतदुक्त"मिति, विशेषविरोधम्परिहर्तुमपेक्षितानपेक्षितांशविवेकमाह "केनचि"दिति, सपक्षे सहदृष्टत्वादज्ञानादेरपि हेतुत्वं कल्प्यतामित्यत्राह "स्वनिर्माणे"ति, अकिञ्चित्करस्येति अनन्यथासिद्धान्वयव्यतिरेकाभ्यां हि हेतुत्वनिश्चयः, तत्र ज्ञानशक्तिनिर्वर्त्यात्किञ्चित्करादधिकः कश्चित्तदन्याज्ञानासामर्थ्यनिर्वर्त्यः किञ्चित्कारो दृष्टश्चेत्स्यादनन्यथा सिद्धिः, न चाधिकः किञ्चित्कारो दृष्टो न च कल्प्यः, अज्ञानासामर्थ्यहेतुव्यतिरेके कार्यनिवृत्त्यभावात्स्वविषयसामर्थ्योपादानादिज्ञानाभ्यां विना

मू० किं सर्वविषयं क्रियोपयोगि? उत कतिपयविषयम्? न तावत्सर्वविषयं, न हि कुलालादिः क्रियमाणव्यतिरिक्तं

किमपि न विजानाति, नापि कतिपयविषयं सर्वेषु कर्त्तृषु तत्तद्ज्ञानाद्यन्वयनियमेन सर्वेषामज्ञानादीनां व्यभिचारात्, अतः कार्य्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तिरिति न विपरीतसाधनत्वं, कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेन्न सङ्कल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात्, कथमशरीरस्येश्वरस्य परप्रवर्त्तनरूपस्सङ्कल्प? इति चेत् ।

टी० यथा कार्यानुदयस्तथाऽन्यासामर्थ्याज्ञानाभ्यां विना न कार्यानुदयो दृष्टः, अतो न तस्य हेतुत्वं कल्प्यं, न हि सति भावे भावमात्रं हेतुत्वं किन्तु सत्येव भाव इति भावः । अकिञ्चित्करत्वमेव विकल्पमुखेनोपपादयति "किञ्चे"ति, सर्वेष्विति न हि कुड्यादितन्निर्माणानुगुणज्ञानसामर्थ्याभावो घटनिष्पत्तिहेतुः तदनुगुणज्ञानसामर्थ्यवतोऽपि घटादिनिष्पादकत्वदर्शनादित्यर्थः । यत्तु सपक्षे सहदृष्टत्वेन लिङ्गिनि प्राप्तविपरीतविशेषाणां धर्मिग्राहकप्रमाणसामर्थ्यप्रतिहतानां निवृत्तिः न त्वितरेषामिति, इदमपि कार्यत्वस्यासाधकानामित्यनेन प्रत्युक्तं, साध्यानुपयोगित्वेनान्यथासिद्धानां सह दृष्टानामपि धर्माणां व्यतिरेकाभावेन व्याप्तिशून्यत्वादप्राप्तेः, सहदृष्टेष्वपि कार्यानुपयोगिनां प्राप्तिर्न स्यात् ।

सू० न शरीरापेक्षस्सङ्कल्पः, शरीरस्य सङ्कल्पहेतुत्वाभावात् मन एव हि सङ्कल्पहेतुः तदभ्युपगतमीश्वरेऽपि, कार्य्यत्वेनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वान्मानसः सङ्कल्पः सशरीरस्यैव समनस्कत्वादिति चेन्न मनसो नित्यत्वेन देहापगमेऽपि मनस्सद्भावेनानैकान्तिकत्वात्, अतो विचि-

चावयवसन्निवेशविशेषतनुभुवनादिकार्य्यनिर्म्माणे पुण्य-पापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्म्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्य्योऽशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिद्ध्यति

टी० शरीरं हि कार्योपयोगीति शङ्कते "कुलालादीना"मिति, परिहरति "ने"ति, कथमित्यत्राह "सङ्कल्पे"ति, पुनः शङ्कते "कथमि"ति, परिहरति "ने"ति, को हेतुरित्यत्राह "मन एवे"ति, तत्किमस्तीत्याह "तदि"ति, कुत इत्यत्राह "कार्यत्वेने"ति, ईश्वरस्य मनः सम्बन्धोक्ति र्न्यायैकदेशिमतेन । पुनः शङ्कते "मानस"इति, परिहरति "ने"ति, अनैकान्तिकत्वात्–व्याप्त्यभावात्, अशरीरेऽपि मनःसम्बन्धस्य विद्यमानत्वात् वाऽनैकान्त्यम्मनसो नित्यत्वेऽपि चेतनस्य कार्यकरत्वे शरीरसम्बन्धसापेक्षत्वमस्ति मनसि नित्ये सत्यपि मुक्तात्मनः कार्यकरत्वाभावात्, न हि मुक्तात्मनो बुद्धिसुखदुःखादिकं मनोजनयतीति चोद्यमस्ति । अत्र मीमांसकं प्रति प्रतिवन्द्या परिहारं हृदि निधाय पक्षधर्मताबलं दर्शयन्नीश्वरसिद्धिं निगमयति "अतो विचित्रावयवे"ति, अशरीरः संकल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्च इत्याभ्यां पदाभ्यां प्रतिवन्द्या परिहाराभिप्रायो ज्ञातः, विभुद्रव्यसंयोगिनः परिस्पन्दनवतोघटादेः स्पर्शवत्त्वनियमेऽपि विभुद्रव्यसंयोगिनः परिस्पन्दनवतोऽपि मनसोन स्पर्शवत्त्वमङ्गीक्रियते अयं प्राभाकरं प्रति परिहारः महिमगुणशालिनस्तैजसस्य रूपोपलम्भनियमे दृष्टेऽपि चक्षुषि रूपोपलम्भो नाङ्गीकृतः, कार्यारम्भकस्य सावयवत्वव्याप्तिः परमाणुषु भग्ना, तस्मादनेकविरोधपरिहारायैकव्याप्तिभङ्गोन्याय्यः, अतो मनसः कार्यकरत्वे शरीरसम्बन्धसापेक्षत्वं भोगसाधनमनस्त्वप्रयुक्तमित्यङ्गीकार्यमिति भावः । एवं साधकान्तरसिद्धत्वाज्जगत्कारणवस्तुनि शास्त्रस्याप्रामाण्यं निगमयति–

सू० अतः प्रमाणान्तरावसेयत्वाद् ब्रह्मणः नैतद्वाक्यं ब्रह्म प्रतिपादयति । किञ्च अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानं च प्रतिपादयितुं शक्नोतीत्येवं प्राप्ते ब्रूमः— यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव

टी० "अतः प्रमाणे"ति, निमित्तोपादानैक्यस्य गगनादिसृष्टेश्चानुमानाविषयत्वेन शास्त्रस्याधिकविषयत्वाद्ब्रह्मणि प्रामाण्यमाशङ्क्य तत्र बाधकान्तरबाधितत्वाच्छास्त्राप्रामाण्यमुच्यते "किञ्चे"ति, निमित्तमात्रमनुवदतः शास्त्रस्यानुमानसापेक्षत्वात्तद्विरुद्धनिमित्तोपादानैक्यं न शास्त्रं प्रतिपादयति पक्षीकृतेषु क्षित्यादिषु द्रव्येषु सावयवत्वस्यैव कार्यत्वप्रयोजकतया निरवयवद्रव्यस्याकार्यत्वम्पूर्वमेव प्रतिपन्नमिति पश्चाच्छास्त्रं निरवयवद्रव्योत्पत्तिं न प्रतिपादयति, श्रुतिलिङ्गादिष्वपि पौर्वापर्यं हि प्राबल्यदौर्बल्यहेतुरिति भावः । पूर्वपक्षसमाप्तावितिशब्दः । सिद्धान्तं वक्तुमुपक्रमते "एवं प्राप्त"इति, परमसाध्यं प्रतिजानीते "यथोक्ते"ति, आकाङ्क्षापूर्वकं हेतुमाह—

सू० कुतः शास्त्रैकप्रमाणकत्वाद् ब्रह्मणः, यदुक्तं, सावयवत्वादिना कार्य्यं सर्वं जगत्, कार्य्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति, तदयुक्तम् महीमहार्णवादीनां कार्य्यत्वेऽपि एकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात्, न चैकस्य घटस्येव सर्वेषामेकं कार्य्यत्वं, येनैकदैवैकः कर्त्ता स्यात्

टी० "कुत" इति, शास्त्रैकप्रमाणकत्वात्–शास्त्रेतरप्रामाणागोचरत्वादित्यर्थः। हेत्वसिद्धिं परिहरन्नुक्तपूर्वपक्षमनुभाषते "यदुक्तमि" ति, दूषयति "तदयुक्तमि" ति, पक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यं वदता किं विपुलतरकार्याणां कर्तृकालैक्यनियममन्तर्भाव्य तदुच्यते? अथ विपुलत्वमात्रेण? उतातीन्द्रियोपादानादिदर्शनवशात्? अथवा शरीरानपेक्षसृष्टिवशात्? दिति विकल्पमभिप्रेत्य प्रथमं दूषयति "मही" ति, एकदैवैकेन निर्मितत्वाभावमुपादयति "न चैकस्य", त्यादिना, एवं कार्य्यत्वं घटादेरिव युगपदेककर्तृकत्वयोग्यमिति शङ्काद्योतकमेकमिति–पदं, कार्यत्वस्य ऐकत्वं नामैकसामग्रीपूर्वकत्वं तत्सिद्ध्यर्थमेकस्यैवेत्युक्तं, न ह्येका व्यक्तिरनेकसामग्रीसाध्या एककार्यावच्छिन्नस्य सर्वस्य हेतोरेकसामग्रीत्वात्, एकत्वेऽप्यनेककर्तृकगोपुरादिव्यवच्छेदार्थमेकदैवैककर्त्रन्वययोग्यत्वं घट–शब्देन विवक्षितम्, एकघटस्यैकं कार्यत्वं यादृशं दृश्यते तादृशं परिमितैकावयवविनिष्टं कार्यत्वमेव एकदैवैककर्तृकत्वसम्भावनाऽऽपादकं, तच्च महीमहीधरादीनां न दृश्यत इत्यर्थः स्यादिति सम्भावितत्वमात्रमुच्यते न ह्येकघटस्याऽप्येककर्तृकत्वनियमः अनेकैरप्येकघटनिष्पादनसम्भवात्। ततः किमित्यपेक्षायाम्।

सू० पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमाभावा(1)त्॥

टी० बहुषु विपुलेषु च कार्येषु तद्विपर्ययमाह "पृथग्भूतेष्वि" ति पृथग्भूतेष्वित्यत्र विपुलत्वमपि गर्भितम् एकघटस्यैवेत्युक्तेः बहुषु विपुलेषु च कार्येषु कर्तृकालैक्यनियमादर्शनान्महादीनामेकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावःप्रमाणाभावात्तदयुक्तमित्यध्याहारेण ग्रन्थान्वयः, न च कार्यत्वमेव कर्तृकालैक्ये प्रमाणं, विकल्पासहत्वात् किं कार्यत्वमात्र? मुत विपुलकार्यत्व? मुतासंभावितजीवकर्तृकं पक्षासाधारणकार्य्यत्वम्?। प्रथमेऽनैकान्त्यं, द्वितीये विरुद्धत्वं, विपुलकार्येषु कालदैर्घ्यं कर्तृबहुत्वदर्शनात्। यद्वाऽनैकान्त्यमेव तृतीये असाधारणानैकान्त्यमिति भावः। कार्य-

(1) नियमादर्शनादिति तु पा०।

त्वबलेन कर्त्तरि कल्पनीये विपुलतरसूक्ष्मतरपक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यं लाघवन्यायतः कर्तुरेकत्वं च सिध्यतीति तत्राह–

**सू० न च क्षेत्रज्ञानां विचित्रजगन्निर्माणशक्त्या कार्य्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनाऽनुपपत्तेश्चैक एव कर्त्ता भवितुमर्हति क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयिताऽदृष्टसम्भावनया च तत्तद्विलक्षणकार्य्यहेतुत्वसम्भवात् तदतिरिक्तात्यन्ताऽदृष्टपुरुषकल्पनाऽनुपपत्तेश्च**

टी० "न चे"ति, विचित्र–शब्देनास्मदाद्यशक्यत्वार्थमतिविपुलत्वमतिसूक्ष्मत्वं च विवक्षितं, कुत इत्यत्राह "क्षेत्रज्ञानामेवे"ति, क्षेत्रज्ञातिरिक्ते कल्प्ये सति ह्यनेककल्पनादेककल्पनस्य न्याय्यत्वं, क्षेत्रज्ञानामेव कर्तृत्वोपपत्त्या तदतिरिक्तो न कल्पयितव्य इत्यर्थः । उपचितपुण्यविशेषाणामिति सपक्षे शक्तिवैचित्र्योपपादनार्थमुक्तम्, अतिशयिताऽदृष्टसम्भावनयेति पक्षविषयमुक्तं "सर्वेभ्यः कामेभ्यो ज्योतिष्टोम" इत्यादिभिः क्षित्यादिस्रष्टृत्वानुगुणातिशयिताऽदृष्टसंभावना क्षेत्रज्ञानामेव योगेन सूक्ष्मव्यवहितादिदर्शनं पराभ्युपेतम् अस्मदादिषु देवेषु च ज्ञानशक्तिवैचित्र्यं दृश्यते, न च पक्षधर्मताबलमन्वयव्यतिरेकसिद्धान् धर्मान्निवर्त्तयितुमीष्टे, तस्यान्वयव्यतिरेकसिद्धधर्मप्रकर्षापकर्षमात्रहेतुत्वात्, इतरथा ज्ञानचिकीर्षयोरपि हानप्रसङ्गात् तदतिरिक्तेति धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायादीश्वरकल्पनादऽदृष्टविशेषकल्पनमेव वरमिति भावः । अचेतनत्वाच्चेतनाधिष्ठितावेव धर्माधर्मौ कार्यकरौ वास्यादिवदित्यनुपपन्नमीश्वरज्ञानप्रयत्नादौ व्यभिचारेणान्यतरानैकान्त्यात् । अथ क्षेत्रज्ञस्य सर्गे शरीरसापेक्षत्वात्तस्य सर्वसंहारदशायां शरीराभावात्तदानीं शरीरानपेक्षः कर्त्ता जीवविलक्षणः स्यादित्यत्राह–




**सू० न च युगपत्सर्वोच्छित्तिः सर्वोत्पत्तिश्च प्रमाणपदवीमधि-**

रोहतोऽदर्शनात्, क्रमेणैवोत्पत्तिविनाशदर्शनाच्च कार्य्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायामपि विरोधाभावाच्च, अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्य्यत्वस्यानैकान्त्यं पक्षस्याप्रसिद्धविशेषणत्वं साध्यविकलता च दृष्टान्तस्य,

टी० "न चे"ति, इदानीं क्रमेणोत्पत्तिविनाशौ दृश्येते तदा तूत्पत्तिविनाशयौगपद्यकल्पनमित्यत्राह "कार्यत्वेने"ति, अत्र कार्यत्वं–कृतिसाध्यत्वं, तृतीया चेत्थम्भावार्था, विरोधाभावात्–व्याप्तिविरोधाभावादित्यर्थः एवं परमतदूषणोपयुक्तार्थशिक्षा कृता । अथ फलितं दूषणं दर्शयति "अत" इति, तदयुक्तमित्यारभ्योक्तार्थानां हेतुत्वपरोऽतः–शब्दः, चलनादिषु तृणादेरिव क्रियाश्रयत्वमात्रलक्षणकर्तृत्वव्यावृत्त्यर्थो बुद्धिमच्छब्दः । किं बुद्धिमदेककर्तृकत्वं साध्य? मुत? सकर्तृकत्वमात्रं? प्रथमेऽपि किं सामान्यतो बुद्धिमदेककर्तृकत्वमात्रं साध्य? मुत सर्वज्ञसर्वशक्त्येककर्तृकत्वमिति विकल्पमभिप्रेत्य प्रथमे कल्पेऽनैकान्त्यम्, अनेककर्तृकरणगोपुरादिषु कार्यत्वस्य विद्यमानत्वादिति भावः । सर्वज्ञसर्वशक्तिककर्तृत्वपक्षे दूषणमाह "पक्षस्ये"ति, न ह्यग्निमत्त्वमिव सर्वज्ञसर्वशक्तिकर्तृकत्वमन्यत्र दृष्टं, दृष्टान्तस्य साध्यविकलता, कार्येषु घटादिष्वदर्शनात् अप्रसिद्धविशेषणत्वसाध्यवैकल्ये द्वे अप्युपपादयति–

सू० सर्वनिर्म्माणचतुरस्यैकस्याप्रसिद्धेः, बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता, सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वम् किं युगपदुत्पद्यमानसर्ववस्तुगत? मुत क्रमेणोत्पद्यमानसर्ववस्तुगतम् ?

टी० "सर्वे"ति सर्वनिर्माणचतुरस्येत्युक्तत्वादिदं दूषणद्वयं सर्वज्ञसर्वशक्तिकर्तृकत्वपक्षस्येति ज्ञायते, पूर्वस्मिन्नेव पक्षे चेदप्रसिद्धविशेषणत्वं न घटते, न ह्येककर्तृकत्वमप्रसिद्धम् । सकर्तृकत्वमात्रपक्षे दूषणमाह "बुद्धिम-

दि”ति, सिद्धसाधनत्वं वेदान्तिना न वक्तव्यं क्षेत्रज्ञकर्तृकत्वानभ्युपगमादिति चेन्न क्षेत्रज्ञानामपि द्वारकर्तृत्वाभ्युपगमात्. समष्टितत्त्वेषु न द्वारकर्तेति चेत्, न च तत्पक्षीकरणं, लौकिकप्रमाणाविषयत्वात्, आगमेन सिद्धानां तेषामपि पक्षीकार इति चेत्, तेन कर्त्ताऽपि सिद्ध इति सिद्धसाध्यतेति मुखान्तरेण दूषयितुं हेतुं विकल्पयति “सार्वज्ञ्ये”ति, अयमभिप्रायः कर्तृमात्रव्याप्येन कार्य्यत्वमात्रेण न कर्तृविशेषसिद्धिरिति प्रागेवोक्तमतः पक्षविशेषाधीनेन कार्यत्वविशेषेण कर्तृविशेषः साध्यः, कुम्भादिकार्यविशेषेण हि कुलालादिकर्तृविशेषानुमानं न तु कार्यत्वमात्रेण, अतः पक्षाधीनः कार्यविशेषो निर[1]स्यत इति “किं युगपदि”ति, पक्षप्रकर्षाधीनं हेतुवैशिष्ट्यं द्वेधा सम्भवेत् परिदृश्यमानमह्यादिविपुलकार्याणां युगपदुत्पत्त्या वा? क्रमभाविनां त्रिका[2]लवर्तिनां कार्याणामानन्त्येन वा? तत्र कीदृशेन पक्षप्रकर्षेण हेतुविशेषो विवक्षित इत्यर्थः । प्रथमं दूषयति—

सू० युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्य्यत्वस्यासिद्धता क्रमेणोत्पद्यमानसर्ववस्तुगतत्वे चैककर्तृकत्वसाधनाद्विरुद्धता, अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधः शास्त्रविरोधश्च कुम्भकारो जायते रथकारश्चेत्यादिश्रवणात् ।

टी० “युगपदि”ति, कृत्स्नप्रलयासिद्धेः भूधरादीनां युगपदुत्पत्तौ प्रमाणाभावात्तन्निबन्धनं कर्तृवैलक्षण्यसाधकहेतुवैलक्षण्यं न सिद्धमित्यर्थः। द्वितीयं दूषयति “क्रमेणे”ति, यद्यप्येकैकेन कुलालादिना जन्मसहस्रेणाप्यनन्तकार्यनिष्पादनसम्भवस्तथाऽपि तत्तज्जन्मसमानकालकुविन्दादिकृतानां कार्याणां तत्कर्तृकत्वाभावात् सर्वकार्याणामेककर्तृकत्वं नास्ति, अतस्त्रैकाल्यवर्त्तिसमस्तवस्तुनिष्ठत्वविशेषितं कार्यत्वं कर्तृभेदेनैव प्राप्तमिति कर्त्रैक्य साधने विरुद्धमित्यर्थः। अत्राप्येककर्तृकत्वसाधन इति विशिष्टकार्यताव्यापकतयाऽभिमतस्य घटपटरथादिषु दृष्टस्य भिन्नकर्तृकत्वस्य प्रतिक्षेप इत्यर्थः भिन्नकर्तृकतया प्रत्यक्षसिद्धेषु प्रत्यक्षविरोधः । अन्यत्र द्वीपान्तरवर्त्तिघटः

१ निरूप्यते इति पा० ।
२ त्रैकाल्यवर्तिनामिति पा० ।

एतद्व्यतिरिक्तकुलालकर्तृक एतद्व्यापारागोचरहेतुकत्वे सति घटत्वात्सम्प्रतिपन्नकुलालान्तरोत्पादितघटवत्, द्वीपान्तरवर्त्तिघटहेतूनां दण्डादीनामेतद्व्यापारागोचरत्वमेतस्य तत्र गमनाभावनिर्णयात् अत एवमादिभिरनुमानैर्विरोधः शास्त्रविरोधमुपपादयति "कुम्भकारे"ति, कुम्भकारो जायते रथकारो जायत इत्यर्थोपादानं न तु पाठक्रमो, न हि कुम्भरथयोरेककर्तृकत्वे कुम्भकाररथकारयोरुत्पत्तिः पृथग्वक्तव्या पृथक्संज्ञा[1]त्वेन पुनरुक्तिप्रसङ्गादिति भावः। प्रकारान्तरेण विरुद्धत्वमाह–

भा० अपि च सर्वेषां कार्य्याणां शरीरादीनां सत्त्वादिगुणकार्य्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयं कार्य्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयस्तेषां कार्य्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण पुरुषस्य च तद्योगः कर्म्ममूल इति कार्य्यविशेषारम्भायैव ज्ञानशक्तिवत्कर्त्तुः कर्म्मसम्बन्धः कार्य्यहेतुत्वेनैवावश्याश्रयणीयः,

टी० "अपि चे"ति, सुखादेः सत्त्वादिगुणकार्यत्वं शास्त्रदृष्टमिति तच्छास्त्रप्रामाण्यवादिनाऽङ्गीकार्यमिति मत्वाऽनिष्टमापादयति न तु पराभ्युपगमात्, सुखादि–शब्देन सुखदुःखमोहा विवक्षिताः, सुखाद्यन्वयः शरीरादीनां सुखादिहेतुत्वाऽवस्यान्वयः सत्त्वादिमूलत्वं सत्त्वादिगुणकद्रव्योपादानत्वमित्यर्थः। के ते सत्त्वादयः? कथं च तेषां सुखादिहेतुत्व? मित्यत्राह "कार्यवैचित्र्ये"ति, कारणगता विशेषाः कारण–शब्दो निमित्तोपादानसाधारणपरः ततः किं कर्तुर्गुणवश्यत्वस्येत्यत्राह "तेषां कार्याणा"मिति, पुरुषेण कार्याणान्तन्मूलत्वापादनं सत्त्वादिगुणयुक्तस्वकीयान्तःकरणविकारद्वारेणेत्यर्थः। ततः किमित्यत्राह "पुरुषस्य चे"ति, कार्यानुपयोगिनो हि धर्मानवाप्नुवन्तीति पूर्वपक्षिणोक्तं सत्त्वादीनां तु कार्य्योपयोगित्वात्तदधीनः कर्मसम्बन्धोऽवर्जनीय इति भाववानाह–

---

[1] एकसंज्ञात्वेनेति पा०।

सू० ज्ञानशक्तिवैचित्र्यस्य च कर्ममूलत्वात्, इच्छायाः कार्य्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्यास्सत्त्वादिमूलत्वेन कर्मसम्बन्धोऽवर्जनीयः, अतः क्षेत्रज्ञा एव कर्त्तारो न तद्विलक्षणः कश्चिदनुमानात्सिद्ध्यति, भवन्ति च प्रयोगाः—तनुभुवनादि क्षेत्रज्ञकर्तृकं कार्य्यत्वात् घटवत्, ईश्वरः कर्त्ता न भवति प्रयोजनशून्यत्वान्मुक्तवत्, ईश्वरः कर्त्ता न भवति अशरीरत्वात् तद्वदेव ॥

टी० "ज्ञानशक्तिवदि"ति, सुखदुःखमोहादीनां सत्त्वरजस्तमोहेतुकत्वं शास्त्रसिद्धं सुखादिहेतुभूतशरीराद्युपादानस्य निमित्तस्य च कर्तुः सत्त्वादिगुणान्वयश्च शास्त्रसिद्धः "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते" इत्यादिभिर्दृश्यते, अतः सत्त्वादिगुणकं शरीराद्युपादानं द्रव्यं सत्त्वादिगुणान्वयविकृतान्तःकरणः पुरुषोऽधितिष्ठति, गुणान्वयश्च कर्ममूल इति कर्मवश्यत्वप्रसङ्ग इत्यर्थः। हेत्वन्तरेणापि कर्मसम्बन्धमाह "ज्ञाने"ति, न ज्ञानशक्तिवैचित्र्यात् विचित्रसर्गः अपि तु इच्छामात्रादिति चेत्तत्राह "इच्छाया"इति, विषयविशेषविशेषिताया इच्छायाः सर्गस्यमादिविषयत्वं, तत्रापि विचित्रसर्गादिविषयत्वं च सत्त्वादिमूलत्वेन कर्ममूलमित्यर्थः। एवं क्षेत्रज्ञत्वकर्तृत्वयोर्व्याप्तिदर्शनाच्च तद्विलक्षणसिद्धिरित्यत्राह "अत"इति, प्रतितर्कानाह "भवन्ति चे"ति, "तनुभुवनादी"ति, इदं प्रत्यनुमानं प्रतितर्को वा, अन्ये प्रतितर्का एव, कार्यत्वे क्षेत्रज्ञकर्तृकत्वप्रसङ्गः, स[1]कर्तृकत्वे सापेक्षत्वप्रसङ्गः, कर्तृत्वे सशरीरत्वप्रसङ्गः इत्यर्थः। अशरीरत्वहेतोर्व्यभिचारमाशङ्क्य परिहरति—

सू० न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः, तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात्, विमतिविषयः कालो न लोक-

१ कर्तृत्वे इति पा० ।

शून्यः कालत्वात् वर्त्तमानकालवत् इति, अपि च किमो-
श्वरः सशरीरोऽशरीरो वा कार्य्यं करोति ? न तावदशरीरः
अशरीरस्य तस्य कर्तृत्वानुपलब्धेः, मानसान्यपि कार्याणि
सशरीरस्यैव भवन्ति ॥

टी० "न चे"ति, अनादेः—बीजाङ्कुरवत् प्रवाहानादेरित्यर्थः । अधि-
ष्ठानं देहेन प्रथमसम्बन्धश्चेत्सूक्ष्मस्थूलशरीरप्रवाहानादितया परिहृतः
यथा बालशरीरविशिष्टेन युवशरीरपरिग्रहः तद्वदेव अधिष्ठानं प्रेरणं चेत्
स्वपरनिर्वाहकन्यायात्परिहृतः, शरीरव्यतिरिक्तप्रेरणस्य शरीरापेक्षा न शरी-
रस्येति शरीरत्वप्रयुक्तं शरीरान्तरनिरपेक्षप्रेरणत्वं तथा जगत ईश्वरशरीर-
त्वेन सशरीरत्वात् कर्मवश्यत्वप्रसङ्गः, यथा देहः स्वज्ञानोत्पत्तौ कारणं
कर्म च भवति, यथा च घटः स्वविषयज्ञानोत्पत्तौ स्वयं सत्तया हेतुः
पश्चाद्विषयश्च भवति, तथा स्वविषयप्रेरणेऽपि शरीरमिति न कर्मकर्तृ-
विरोधः, न चाङ्कुरादौ शरीरस्य योग्यानुपलब्धिः, पिशाचसिद्धादिशरीरवददृ-
श्यत्वोपपत्तेः, देशान्तरस्थेन वा शरीरेण सङ्कल्पद्वारा विषादेरिव प्रेरणोप-
पत्तेश्च । प्रतितर्कान्तरमाह "विमतिविषय"इति, अत्र सूर्यपरिवृत्तिसङ्ख्या-
विशेषावच्छेदात् पूर्वत्वेन परत्वेन च कालस्य पक्षीकृतत्वाचाश्रयासिद्धि-
रिति । अनुमानं मुखान्तरेण दूषयति "अपि"चे,त्यादिना

सू० मनसोऽनित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्य्यादर्शनात्, नापि
सशरीरः, विकल्पासहत्वात्,तच्च शरीरं किं नित्यं मुतानि-
त्यं वा ? न तावन्नित्यं सावयवस्य तस्य नित्यत्वे जगतोऽपि
नित्यत्वाविरोधादीश्वरासिद्धेः । नाप्यनित्यं, तद्व्यतिरिक्तस्य
तच्छरीरहेतोस्तदानीमभावात्, स्वयमेव हेतुरिति चेन्न
अशरीरस्य तदयोगात्, अन्येन शरीरेण सशरीर इति
चेन्न अनवस्थानात्, स किं सव्यापारो वा निर्व्यापारो वा ?

१ कारणमिति तु पा० ।

अशरीरत्वादेव न सव्यापारः, नापि निर्व्यापारः कार्यं करोति मुक्तात्मवत्,

टी० दूषणं वक्तुं विकल्पयति "कि"मिति, धीस्थं चरमशिरो-दूषयति "न ताव"दिति, अशरीरस्य मनसा कर्तृत्वं स्यादिति प्रागुक्तं दूषयति "मानसानी"ति, कुत इत्यत्राह "मनस"इति, अपि-शब्देन स्वपक्षे नित्यत्वानभ्युपगमः सूचितः । सशरीरत्वपक्षं दूषयति "नापी"ति, विकल्पासहत्वं विवरितुं विकल्पयति "त"दिति, प्रथमं दूषयति "न ताव"दिति, जगतः-भूभूधरादेः । द्वितीयं दूषयति "नापी"ति, हेतुमाह "तद्व्यतिरिक्तस्ये"ति, तच्छरीरहेतोः शरीरान्तरस्याभावादित्यर्थः । दूषणपरिहाराय परोक्तं शङ्कते "स्वयमेवे"ति, स्वयं-शब्द ईश्वरपरः । परिहरति "ने"ति, तदयोगात्-हेतुत्वायोगात् । पुनः । शङ्कते "अन्येने"ति । अनवस्थया दूषयति "ने"ति, प्रामाणिकपरम्परा न दोष इति चेत् शरीरित्वप्रयुक्तकर्मवश्यत्वं स्यादिति भावः । कर्मवश्यत्वप्रसङ्गस्य प्रागुक्तत्वादिहाप्यनवस्थादूषणस्य सर्वकर्मवश्यप्रसङ्गपर्यन्तत्वमभिप्रेतमित्यवगम्यते । मुखान्तरेण विकल्प्य दूषयति "स किमि"ति, अशरीरस्य निर्व्यापारत्वे निर्व्यापारस्य कार्याकरणे च दृष्टान्तोमुक्तात्मा, व्यापारश्च प्रयत्नोविवक्षितः, इच्छाविशेषस्य हेतुत्वे हि गुणवश्यताप्रसङ्गः पूर्वमुक्तः, इच्छामात्रमेव व्यापार इत्यत्राह—

मू० कार्यं जगदिच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वं, दृष्टान्तस्य च साध्यहीनता, अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः, शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयम्

टी० "कार्यं जगदि"ति, मात्र-शब्देन सत्त्वादि गुणान्वयतन्मूलकर्मसम्बन्धव्यावृत्तिः । ननु कर्मवश्यत्वादिकं न कर्तुः प्रसञ्जनीयम्, अव्यापकत्वात्, न हि त्वत्पक्षेण वाऽस्मत्पक्षेण वा व्याप्तिः ईश्वरे त्वया मयापि

तदनभ्युपगमात्, नैवम् आगमादृतेऽपीश्वरः सिध्यतीति वदन्तम्प्रत्यागमम-सत्त्वं कृत्वा ऽस्मदादिभिरुच्यमानत्वात् यदीश्वरप्रतिपादकागमबलान्मदुक्त-व्याप्तिभङ्गेनेश्वरानुमानं स्थाप्यते तदानीमनुमानस्यागमानपेक्षप्रामाण्यासि-द्धिरित्यप्राप्तयाहित्वमागमस्य सिध्येत्। यद्वा अलौकिकप्रमाणैकवेद्यत्वाभावे सति कर्तृत्वस्य कर्मवश्यत्वादिव्याप्यत्वात् शास्त्र–योगि–मुक्तेश्वर–प्रत्यक्षा-ण्यलौकिकशब्दोक्तानीति, अनुमानदूषणमुपसंहरति "अत" इति, परस्य ब्रह्म-ण ईश्वरानतिरिक्तज्ञापनार्थः सर्वेश्वर–शब्दः, अनेन "तमीश्वराणां परमं महे-श्वरमिति श्रुतिः स्मारिता, भवति देवताविशेषनिर्णयार्थं "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक" इति श्रुतिस्मारणार्थः पुरुषोत्तम–शब्दः, उक्तदोषास्तदा-नीमपि प्राप्नुयुरित्यत्राह "शास्त्रन्त्विति", सर्वविजातीयत्वं दर्शयति–

भा० सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितो-दारगुणसागरन्निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादय-तीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्र-सङ्गः, यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवस्य द्र-व्यस्य कार्य्यत्वं चानुपलब्धमशक्यप्रतिपादनमित्युक्तम्, तद-प्यविरुद्धमिति "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "न वियदश्रुते"रित्यत्र प्रतिपादयिष्यते, अतःप्रमाणान्तरागो-चरत्वेन शास्त्रैकविषयत्वात् यतोवा इमानीत्यादिवाक्यमु-क्त-लक्षणं ब्रह्म प्रतिपादयतीति सिद्धम्।

टी० "सार्वज्ञ्ये"ति, सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्र–शब्दो ब्रह्मवि-शेषणं गुणविशेषणं वा तद्वितततिरूपत्वादन्येषां गुणानाम् एकैकमनवधिका-तिशया अपरिमिता निःसंख्या इत्यर्थः

शास्त्रयोनित्वाधिकरणं समाप्तम्।

यथा मृत्तिकाया घटादिनिष्पादने शक्तत्वेपि कुलालादेर्ब्रह्मणश्च निर्माणशक्तौ सत्यामपि दण्डचक्रपरिकरापेक्षाऽस्त्येव तथा शब्दस्य परिनि-

अनन्यब्रह्मप्रतिपादनशक्तत्वेऽपि ब्रह्मणोऽपि शब्देन प्रतिपत्तुं शक्यत्वेऽपि बुभुत्साख्यपरिकरापेक्षाप्रमित्युत्पादने विद्यते, यत्नसाध्यत्वाद्बुभुत्साऽपेक्षिता, सा चाज्ञातत्वपुरुषार्थत्वप्रयुक्ता, तत्रावान्तरपेटिकारूपेण प्रथमेन सूत्रद्वयेन शब्दद्वारकमर्थद्वारकं च शक्तिमत्त्वं प्रतिपादितम् । अथ सूत्रद्वयान्तरमवान्तरपेटिकान्तरं बुभुत्साहेतुनिरूपणपरं, तत्र प्रथमेन तृतीयसूत्रेणाज्ञातत्वरूपो बुभुत्साहेतुरुक्तः अनेन प्रयोजनत्वरूपो बुभुत्साहेतुरुच्यते चतुर्थेन, अर्थे प्रतिपन्ने हि प्रयोजनाप्रयोजनत्वचिन्ता प्रतीतिश्च लक्षणात इति जन्मादिसूत्रं द्वितीयमभूत् जन्मादिकं लक्षणं चेन्मानान्तरात्तत्सिद्धिः स्यादिति शङ्कायाः संगतत्वाच्छास्त्रयोनित्वादिति सूत्रं तृतीयमभूत् अज्ञातत्वेऽप्यप्रयोजने बुभुत्साऽनुदयात् प्रयोजनरूपत्वमत्र निरूप्यत इति क्रमोऽयमेव, तत्रावान्तरसङ्गतिमाह—

सू० यद्यपि प्रमाणान्तरागोचरं ब्रह्म तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह—

समन्वयाधिकरणम् । सू० तत्तु समन्वयात् ॥ ४ ॥

टी० "यद्यपी" ति, अज्ञातत्वनाम बुभुत्साहेतुर्यद्यप्यस्तीत्यर्थः, प्रयोजनं सुखं दुःखनिवृत्तिश्च शास्त्रस्य तत्पर्यवसायित्वं तदुपायप्रवृत्तिनिवृत्तिबोधनद्वारा, तच्च न सिद्धपरत्वेऽस्ति तस्य प्रवृत्तिनिवृत्तिरूपत्वाभावात्तस्मात्प्रयोजनपर्यवसायित्वाभावेन बुभुत्साऽऽख्यपरिकराभावात्सिद्धे शास्त्रं न प्रमितिं जनयतीत्यर्थः । एवं शङ्कायां सूत्रमुदाहरति "तत्तु समन्वयादि" ति, इहापि साधारणविचारद्वयमर्थसिद्धं, ब्रह्मणः शास्त्रप्रमाणकत्वं सम्भवति नेति द्वितीयविचारः, तदर्थं प्रवृत्तिनिवृत्तिरूपप्रयोजनशून्यानां वेदान्तवाक्यानां ब्रह्मपरतयाऽन्वयः सम्भवति नेति, तदर्थं किं शब्दस्य प्रामाण्यं प्रवृत्तिनिवृत्तिपरतया ? उत पुरुषार्थपरतये ? ति, शब्दस्य प्रवृत्तिनिवृत्तिपरतयैव प्रामाण्ये ब्रह्मणः सिद्धरूपस्य शास्त्रप्रमाणकत्वाभावात्तद्विचारानारम्भः शब्दस्य पुरुषार्थपरतयैव प्रामाण्ये पुरुषार्थभूतब्रह्मणः शास्त्रप्रमाणकत्वात्तद्विचार

स्यारम्भणीयत्वमिति फलितम् । एवमर्थसिद्धौ विषयसंशयावभिप्रेत्य सूत्रं व्याचिख्यासुः तत्र वाक्यार्थयोजनायामेव पदयोजनामन्तर्भावयिष्यन् पृथग्व्याख्येयन्तु–शब्दं व्याचष्टे–

सू० प्रसक्ताशङ्कानिवृत्त्यर्थस्तु–शब्दः, तत्–शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव, कुतः समन्वयात्–परमपुरुषार्थतयाऽन्वयस्समन्वयः परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात् एवमेव समन्वितो ह्यौपनिषदः पदसमुदायः, "यतो वा इमानि भूतानि जायन्ते"

टी० "प्रसक्ते"ति, सर्वेषां सूत्राणां तत्तच्छङ्कायामवतार[1]णेऽपि अस्मिन् सूत्रे–तु शब्दः प्रदर्शनार्थः, तदिति व्याख्येयं पदं, तद् व्याचष्टे "शास्त्रप्रमाणकत्वं ब्रह्मण" इति, सम्भवत्येवेत्येतत्तु–शब्दफलितं, हेतुपदस्याकाङ्क्षां दर्शयति "कुत" इति, समन्वय–शब्दस्योत्तरत्र विस्तरेण व्याख्यास्यमानत्वादिदानीं सङ्क्षेपेण व्याचष्टे "परमपुरुषार्थतये"ति, कस्य केन कीदृशोऽन्वयः? इत्यपेक्षायामाह "परमे"ति, शास्त्रेण परमपुरुषार्थभूतस्य ब्रह्मणोऽभिधेयतयाऽन्वयादित्यर्थः, शास्त्रस्य धीस्थत्वाच्छास्त्रेणेति कण्ठोक्त्यभावः, ब्रह्म शास्त्रप्रमाणकमिति प्रतिज्ञाते सति पक्षनिष्ठतया हेतोर्वक्तुमुचितत्वात्समन्वयो ब्रह्मकर्तृकतया व्याख्यातः, न तु शास्त्रकर्तृकतया । कथं तथाविधोऽन्वयः? इत्यपेक्षायामेतदुपपादयति "एवमि"ति, इव–शब्द एवार्थः, एवमेवेत्यर्थः औपनिषदः पदसमुदायः परमपुरुषार्थभूते ब्रह्मणि प्रतिपादकत्वेन समन्वित एव हीत्यर्थः । पदसमुदायोऽत्र वाक्यमित्यर्थः, औपनिषद्वाक्यबहुत्वेऽपि तेषां वाक्यैकवाक्यभावेनैकार्थपरतयैकराशित्वव्यञ्जनायैकवचनं, समन्वित इति वाक्यकर्तृकत्वेनोक्तिः फलितार्थाभिप्राया, न तु सूत्रयोजनाभिप्राया, ब्रह्मणि समन्वितानामित्युत्तरत्राप्येवमेव प्रतिपत्तिक्रमानुरोधेन प्रथमं लक्षणवाक्यमुपादत्ते "यतो वा" इति । अथ प्रापकं कारणवाक्यमाह–

१ अवतरणेऽपीति पा० ।

सू० "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेये"ति "तत्तेजोऽसृजत ब्रह्म वा इदमेवमेवाग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" "तस्माद्वा एतस्मात्मनः आकाशः सम्भूतः" "एको ह वै नारायण आसीत्" ।

टी० सदेवेत्यादिना, सच्छब्दस्य बृहदबृहत्साधारणत्वाद्विशेषकवाक्यमुपादत्ते "ब्रह्म वा" इति, यत्कारणं तद्ब्रह्मेति लक्षणवाक्येनोक्ते सतः कारणत्वे च कथिते तस्य सतो ब्रह्मत्वं सिद्ध्यतीति न बृहत्त्वनिश्चयो ब्रह्म वा इति वाक्याधीन इति चेन्न लक्षणवाक्यस्य का[1]रणवाक्यानुवादित्वेन प्रापकवाक्योपजीवित्वादुपजीव्येषु प्रापकवाक्येष्वेव विशेषनिर्धारणज्ञापनार्थं हि ब्रह्म वा इति वाक्यमुपात्तं, सद्ब्रह्मशब्दयोरीक्षणान्वयलिङ्गादचिद्व्यावृत्तवस्तुपरत्वेऽपि तयोः शब्दयोः साधारणतया शब्दसामर्थ्यादचिद्व्यावृत्तिनिश्चयस्तत्र नास्तीति शब्दशक्त्यैव विशेषज्ञापनार्थमात्मा वा इति वाक्योपादानं, ब्रह्म-शब्दस्य साधारणत्वं नाम बहुष्वर्थेषु प्रयुज्यमानत्वं न तु प्रवृत्तिनिमित्तसाधारण्यं, प्रवृत्तिनिमित्तभूतस्य निरतिशयबृहत्त्वस्य भगवद्व्यतिरिक्तगामित्वसन्देहसहत्वं वा, न हि स्वारसिकात्मशब्दैकार्थ्ये प्रतिपन्ने सति निरतिशयबृहत्त्वस्याचिद्गामित्वसन्देहः सद्विद्यायां स आत्मेत्यात्म-शब्द उपसंहारस्थ इत्युपक्रमस्थेनैवात्म-शब्देन विशेषनिश्चयार्थमात्मा वा इति वाक्यमुपात्तं, यतो इमानीत्यादिप्रकरण एव "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते"इत्यानन्द-शब्देन कारणे निर्दिष्टेऽपि यदेष आकाश आनन्दो न स्यादित्याकाश-शब्दसामानाधिकरण्यादानन्दशब्देनाचिद्व्यावृत्तिनिश्चयः प्रतिबद्ध इत्यभिप्रायेणाचिद्व्यावृत्तेः सुखेन प्रतिपत्त्यर्थमात्मा वा इति वाक्योपादानं, सर्वशाखाप्रत्ययन्यायेन, विनाऽपि प्रकरणादेव ब्रह्म-शब्द आत्मपर इति ज्ञापनार्थमेतदधिकरणापेक्षितानन्दरूपताप्रतिपादकप्रकरणस्थतया तज्ज्ञापनार्थं चोपादत्ते-"तस्माद्वा एतस्मादात्मन"इति, सत्यं ज्ञानमनन्तं ब्रह्मेति हि तत्र प्रक्र-

---

१ कारणानुवादित्वेनेति पा० ।

तम् "अन्योऽन्तरात्मा आनन्दमयः" "आनन्दं ब्रह्मणो विद्वान्" इति तत्र च वक्ष्यति। अथ "छागो वा मन्त्रवर्णा" दिति न्यायात्सामान्यशब्दानां देवताविशेषे पर्यवसानं दर्शयति "एको ह वा" इति, "सेयं देवतैक्षत" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवम्" स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ईशानो भूतभव्यस्य तमीश्वराणां परमं महेश्वरमित्यादिषु अनुभूतानां देवतादिशब्दानां पूर्वपूर्वापेक्षया विशेषशब्दानामपि साक्षात्कारणवाक्यस्थत्वाभावात्तेषु च रूढतया[1]ऽपि देवतादिशब्दानां व्यक्तिविशेषे रूढत्वाभावादीशादि-शब्दानां च "जगत ईशो नान्यो हेतुर्विद्यत ईशनाये" ति समभिव्याहृतपञ्चन्त्यादिनिर्देशादिभिरन्ययार्थविवक्षायाः स्फुटतरत्वेन निमग्नरूढितया साधारणत्वाच्च चरमविशेषशब्दप्रदर्शनेन तेषामपि तत्पर्यवसानमर्थसिद्धं स्यादित्यभिप्रायेण च सेयं देवतेत्यादिवाक्यान्यानाहृत्य "एको ह वै नारायण" इत्यादिवाक्यमुदाहृतं, हिरण्यगर्भादयः शब्दा आकाशप्राणादिशब्दवदयोग्यार्थाः, शिवादिशब्दाश्च बह्वर्थेषु प्रयोगात्साधारणा इति सदादिशब्दवन्न विशेषोपस्थापनक्षमा इत्यभिप्रायः। "वचनानि त्वपूर्वत्वात्", "विधिस्तु धारणेऽपूर्वत्वा" दिति न्यायेन यद्वाग्नेयोऽष्टाकपालः उपरि देवेभ्यो धारयति इति वाक्यवदिदं महोपनिषद्वाक्यमपि अप्राप्तार्थोपस्थापकत्वादाकाशप्राणादिवाक्यवदयोग्यार्थोपस्थापकत्वाभावाच्चानन्यापेक्षं स्वार्थं प्रतिपादयति "न सन्न चासच्छिव एव केवल" इति वाक्यविरोधादिदं वाक्यमयोग्यार्थमिति चेन्न "सदेव सोम्येद" मिति वाक्यविरोधेन "न सन्न चासदि" त्यादि वाक्यस्यायोग्यार्थत्वप्रसङ्गात्साधारणस्य सच्छब्दस्य शिवपर्यवसानाविरोधाच्चायोग्यार्थत्वमिति चेत् तर्हि शिव-शब्दस्य बहुष्वर्थेषु प्रयोगात्साधारणस्य नारायणपर्यवसानाविरोधाच्चायोग्यार्थत्वं, ब्रह्मशिवयोर्हि कार्यत्वमिन्द्रादीनामिव बह्वीभिः श्रुतिभिः प्रतिपाद्यते यजुषि "अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितं विश्वकर्मा ह्यजनिष्ट देवः" स प्रजापतिरेकः पुष्करपर्णे समभवत्

कारणवाक्यस्थविशेषणादिपदानामर्थविशेषनिर्धारणम्।

[1] रूढिमतामपि इति पा०

"तस्माद्विराडजायत विराजोऽधिपूरुषः", महोपनिषदि "तत्र ब्रह्मा चतुर्मुखोऽजायत" सुबालोपनिषदि "अद्भ्यः पृथिवी तदण्डमभवत् तत्सम्वत्सरमात्रमुषित्वा द्विधाऽकरोदधस्ताद्भूमिमुपरिष्टादाकाशं मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुष इत्यारभ्य "सोऽग्रे भूतानां मृत्युमसृजत् तस्य ब्रह्माऽबिभेत् सो ब्रह्माणमेवाविवेशे"ति अत्र परमपुरुषात्मनः पुरुषात् ब्रह्मा समुत्पन्न इति श्रुतः, पुरुष-शब्दद्वयश्रवणान्मृत्युभयवत्त्वश्रवणाच्च, श्वेताश्वतरे "वेदाहमेतम्पुरुषं महान्तं" "महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः" यो ब्रह्माणं विदधाति पूर्वमिति च हिरण्यगर्भोत्पत्तिरवगम्यते, तथा महोपनिषदि "त्र्यक्षः शूलपाणिः पुरुषोऽजायत", सुबालोपनिषदि "ललाटात्क्रोधजो रुद्रोऽजायत" बृहदारण्यके, "ब्रह्म वा इदमेक एवाग्र आसीत् तदेकं सन्नव्यभवत् तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान" इति, तथा शतपथे 'अभूद्वा इदं प्रतिष्ठेत्यारभ्य भूतानां च प्रजापतिः सम्वत्सरायादीक्षिषत' भूतानाम्पतिर्गृहपतिरासीदुषाः पत्नीत्यादिकमुक्त्वा "भूतानाम्पतिः सम्वत्सर उषसि रेतोऽसिञ्चत् सम्वत्सरे कुमारोऽजायत सोऽरोदीत् तं प्रजापतिरब्रवीत् कुमार किं रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति सोऽब्रवीत् अनपहतपाप्मा वा अहमस्मि अतो हेतोर्नामानामस्य मे धे हि पाप्म नोपहत्या इति तमब्रवीत् रुद्रोऽसीति तस्य तन्नामाऽकरोत् अग्निस्तद्रूपमभवत् इत्यारभ्य शर्वपशुपतिप्रभृतिनामकरणं पृथिवीसलिलादिमूर्तिप्रदानं चोक्तं, रुद्रवाक्यादेवानपहतपाप्मत्वं च तस्य श्रुतं, तत्रैव शतरुद्रीय ब्राह्मणे प्रजापते विस्रता देवतोदक्रामन् तमेक एव देवदेवो न जहौ महामन्युरेव सोऽस्मिन्नन्तर्हितोऽतिष्ठत् सोऽरोदीत् तस्य यान्यश्रूणि प्रास्कन्दन् तान्यस्मिन्मन्यौ प्रातिष्ठन् स एष शतशीर्षा रुद्रः समभवदिति, अत्र यत्र प्रजापतेः क्रुद्धस्य क्रोधजाश्रुसम्भवत्व मन्युपुरुषस्य रुद्रस्याभिहितं, क्रोधस्य चाश्रुहेतुत्वं प्रसिद्धं "तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दव" इति तथा शैलालिब्राह्मणे, 'प्रजापतिर्वै प्रजाकामः स तपोऽतप्यतेत्यारभ्य अग्निवाय्वादिचन्द्राणामुत्पत्तिं तेषां रेतःस्कन्दनं चोक्त्वा

स प्रजापतिर्हिरण्मयं च सममकरोदिषुमात्रमूर्द्ध्वमेवं तिर्यञ्चन्तस्मिन् रेतः- समसिञ्चत् तत उदतिष्ठत् सहस्राक्षः सहस्रपात् तत्सहस्रेणप्रतिहिताभिस्स प्रजापतिं पितरमभ्यायच्छत् तमब्रवीत् कथमभ्यागच्छतीति नाम मे कुर्वि- त्यब्रवीत् न वा इदमविहितेन नाम्ना अन्नमत्स्यामि इति शर्वो वै त्वमि- त्यब्रवीत् भव एवेति यद्भव इत्यारभ्य भवशर्वादिनामकरणं सलिला- दिमूर्त्तिप्रदानं चोक्त्वा स एषोऽष्टनामाऽष्टधा विहितो महादेव" इति नामाष्टकमूर्त्यष्टकत्वं प्रजापतिना विहितमिति स्पष्टतरमुक्तम् "तलवका- रिणां कर्मारम्भे", इदं कर्म करिष्यामि तन्मे समृद्ध्यतान्तन्मउपपद्यतां विरू- पाक्षाय विहिताञ्जलये ब्रह्मणः पुत्राय ज्येष्ठायामोघाय कर्माधिपतये नम "इति तथा छन्दोगानां च कर्मारम्भे", तस्मै विरूपाक्षाय दत्ताञ्जलये बुधा- य विश्ववेदाय सहस्राक्षाय ब्रह्मणः पुत्राय नम" इति च मन्त्रद्वयेन रुद्रस्य ब्रह्मपुत्रत्वमभिहितं, घृतसूक्ते च "यो ब्रह्मा ब्रह्मण उज्जहार प्राणैश्वरः कृत्तिवासाः पिनाकी"ति ब्रह्मणः पुत्रत्वं रुद्रस्योक्तम्, उज्जहार—उद्भू- दित्यर्थः, अतो हिरण्यगर्भादीनां कार्यत्वावगमेन तद्वाचिशब्दानामयो- ग्यार्थत्वान्नारायणे च सदादिशब्दाः पर्यवस्यन्ति ननु "हिरण्यगर्भः सम- वर्त्तताग्रे" "न सच्च वासच्छिव एव केवलः" "एको ह वै नारायण आसीत् ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति, त्रयाणामपि देवतानां कारण- त्वकार्यत्वयोरविशेषेण श्रवणात् अयोग्यत्वशङ्कायाः त्रिष्वपि तुल्यत्वात् जन्मन ऐच्छिकत्वेनायोग्यत्वपरिहारस्य त्रिष्वपि सुवचत्वात्कारणैकत्वाव- धारणस्यानुरोद्धव्यात्वाद्रूढेरपरित्यागस्य स्वतः प्राप्तत्वाच्च त्रयाणामप्यैक्या- श्रयणेन परमकारणमभ्युगन्तव्यं नैवं त्रयाणामविशेषेण कार्यत्वश्रवणाभा- वादेव त्रिष्वप्ययोग्यत्वशङ्कायाः तुल्यत्वाभावात्, तस्य हि प्रकरणस्योपक्रमे "कश्च ध्येय" इति ध्येयविधिपरत्वमवगतमिति कार्यत्वमनूद्यते अनुवादश्च प्रापकानुरोधेन स्यात् लक्ष्मीपतिविषय उत्तरनारायणे भगवदुत्पत्तिरव- ताररूपा श्रूयत इत्यस्मिन् वाक्ये भगवदवतारानुवादः, ब्रह्मशिवयोस्त्व- वतारश्रुत्यभावादिन्द्रवरुणादितुल्योत्पत्तिरनूद्यते इति नाविशेषेण कार्यत्व- श्रवणम् । किञ्चोत्पत्तिश्चेत्कर्माधीनदेहसङ्गतिरित्युत्सर्गसिद्धं, तच्च ब्रह्म-

शिवयोरनयोर्हितं नारायणे त्ववतारश्च न्यायोदितः प्रजापतिर्देवानसृजत ते पाप्मना सहिता अजायन्तेति प्रजापतिसृष्टानां देवानां सामान्येन पापसम्बन्धः श्रुतः विशेषतो रुद्रस्यानपहतपाप्मत्वं शतपथे स्ववाक्यादेव दर्शितम्, एवं सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेव एको नारायणः "तस्य यथा कप्यासपुण्डरीकमेवमक्षिणी तस्योदिति नाम एष हि सर्वेभ्यः पाप्मभ्यः उदितः "अपहतपाप्मा" "विजरो विमृत्युः" "स उत्तमः पुरुष" इति पुण्डरीकाक्षस्याकर्मकृतविग्रहवत्त्वं चोक्तम्. एवं वैषम्यस्य स्फुटत्वेन उत्पत्तिसाम्यशङ्काया अनुदयात्, योग्यार्थनारायणादिशब्दानामिवायोग्यार्थब्रह्मशिवादिशब्दानां रूढिपरित्यागाभावो ऽनुपपन्नतरः, यदि रुद्रस्य परमकारणत्वं तदुत्पत्तेरवताररूपत्वं चास्तिकतमैर्भवद्भिरुच्यते तर्हि भवतामिन्द्रे कः प्रद्वेषः "इन्द्रो मायाभिः पुरुरूप ईयते" "ब्रह्मविष्णुरुद्रास्ते सर्वे सम्प्रसूयन्त" इति कार्यत्वकारणत्वे हि ब्रह्मशिवयोरिवेन्द्रस्यापि श्रूयेते अत इन्द्रस्य परमकारणत्वं तदुत्पत्तेः परमकारणभूतेन्द्रावताररूपत्वं चाश्रित्येन्द्र-शब्दस्य योग्यार्थत्वं किमिति नाभ्युपगम्यते "प्रजापतिरिन्द्रमसृजते"ति तस्य सृज्यत्वश्रवणाद्वृत्रवधरूपब्रह्महत्याऽभिभूतत्वश्रवणात् तत्पापप्रायश्चित्तादिश्रवणाच्चेति चेत् इन्द्रस्य जन्मवृत्तापकर्षयोगः कृष्णस्य वसुदेवगृहजन्म-कालयवननिमित्तपलायनवल्लीला किन्न स्यात् इन्द्रस्य परमकारणवस्त्वैक्ये सति उत्तरनारायणप्रतिपाद्यत्वं तस्मिन्सति जन्मवृत्तापकर्षयोगस्य लीलात्वं तस्मिन्सति इन्द्र-शब्दस्य योग्यार्थत्वं तस्मिन्सति इन्द्रस्य परमकारणवस्त्वैक्यमिति चक्रकाश्रयप्रसङ्गात्, एकस्मिन्नेव वाक्ये सोमवरुणयमादिवत् सृज्यत्वप्रतीतेश्च नैवमिति चेत् तर्हि रुद्रस्य परमकारणप्रतिपाद्यान्तर्भावः तेन जन्मापकर्षलीलात्वं तेन शिवादिशब्दानां योग्यार्थत्वं तेन परमकारणवस्त्वैक्यमिति चक्रकप्रसङ्गात्, सोमवरुणादिवत्तस्मिन्नेव वाक्ये सृज्यत्वसंहार्यत्वश्रवणाच्च शिवादिशब्दानामयोग्यार्थत्वं दुष्परिहरं भगवज्जन्मनोऽवताररूपत्वे तु न चक्रकप्रसङ्गः, तस्माद्विराडजायतेति कारणतयोक्तस्य परमपुरुषस्य महापुरुषशब्देनोत्तरनारायणे प्रत्यभिज्ञातस्य लक्ष्मीपतेर्जायमान इत्यादिवाक्येनावतारस्य प्रतिपा-

दित्वात्कार्यकारणविषयशिवादिशब्दानां भिन्नार्थत्वान्नायोग्यार्थत्वमिति चेत् किङ्कार्यविषयशिवादिशब्दानां प्रसिद्धरुद्रपरत्वं ? मुत कारणविषयाणां ? प्रथमे प्रसिद्धरुद्रस्याकाशादिवत्सृज्यत्वात्तद्व्यतिरिक्तविषयशिवादिशब्दानां योग्यार्थनारायणपदोपस्थापितविशेषपरत्वमवर्जनीयं, कारणविषयशिवादिशब्दाः प्रसिद्धरुद्रपराः कार्यविषयास्तु तदतिरिक्तविषया इति चेत् कारणेन्द्रशब्दः प्रसिद्धेन्द्रपरः कार्यविषयेन्द्रशब्दस्तदतिरिक्तपर इति किन्न स्यात् । वृत्रवधादिकर्त्तरि इन्द्रशब्दव्युत्पत्तिरिति चेत् त्र्यक्षशूलपाण्यादिशब्दपर्यायत्वेन शिवादिशब्दव्युत्पत्तेः, "त्र्यक्षः शूलपाणिः पुरुषोऽजायत उमापतिः पशुपतिश्शितिकण्ठो ब्रह्मणः सुत उक्तवानिदमप्यसौ ज्ञानज्ञानं पाशुपतं शिव इति शूलपाण्यादिशब्दानां कार्यविषयतया प्रयोगाच्च । कारणविषयशिवादिशब्दानां प्रसिद्धरुद्रपरत्वमयुक्तं कारणविषयाणां नारायणादिपदश्रुतेः कस्य प्रसिद्धार्थता कस्य तदतिरिक्तविषयतेति चासम्भवः कार्यकारणरूपरुद्रधर्म्यैक्ये त्विन्द्रधर्म्यैक्ये इव चक्रकापत्तिरवर्ज्जनीयेत्युक्तम्, अतः कार्यकारणविषयशिवादिशब्दानामर्थभेदाङ्गीकारे कारणविषयशिवादिशब्दाः प्रसिद्धेतरार्थविषया इति नारायणमेवाभिदधति, नारायणादिशब्दानां प्रसिद्धार्थस्य योग्यतयाऽर्थभेदाभावाद्धर्म्यैक्यस्य प्रमाणप्रतिपन्नत्वाच्च, अतो महोपनिषत्प्रतिपादिते नारायण एव सद्ब्रह्मादिशब्दाः[1] पर्यवस्यन्तीति भावः । अथ कारणतया निर्दिष्टस्य ब्रह्मणः शङ्कितदोषव्यावर्त्तकं शोधकवाक्यमाह-

**सू० सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मेत्येवमादिः ॥**

टी० "सत्यमिति", उक्तगुणविभूत्यादिविशिष्टस्य ब्रह्मणः पुरुषार्थत्वज्ञापनायाह "आनन्दोब्रह्मेति" आनन्दत्वं ह्यनुकूलत्वम्, अनुकूलत्वं च स्वत इष्टत्वं, तदपीष्टसाधनत्वनिवर्त्यप्रतिकूलत्वाभ्यां विनाऽपीष्टत्वं, तच्च विषयज्ञानस्याप्यनुकूलत्वादानन्दत्वम् भगवतो मुक्तानां निरतिशयभोग्यत्वेनानुकूलतया स्वविषयज्ञानस्याप्यनुकूलत्वादनादित्वं भगवतो मुक्तानां निरतिशयभोग्यत्वेनानुकूलतया स्वरूपतोधर्मतश्चानन्दत्वं स्वविषयज्ञा-

---

१ नारायण-पदे "पूर्वपदात्संज्ञायामगः" इति सूत्रेण णत्वं संज्ञायामेव संज्ञा चैषा रमापतेरिति सद्ब्रह्मादिशब्दानां विशेषार्थपरत्वमिति भावः ।

नस्य स्वरूपस्य च स्वात्मानं प्रत्यनुकूलत्वाच्चानन्दत्वमिति इत्येवमादिकौपनिषदः पदसमुदाय इति पूर्वेणान्वयः । एवमन्वितेषु वाक्येषु प्रस्तुतपुरुषार्थत्वोपयोगित्वेन कोऽर्थः प्रतिपन्नः स च कियानप्रतिपन्न ? उत तात्पर्यभूमिः ? न प्रथमः तस्य तात्त्विकत्वनिश्चयत्वायोगात्, न द्वितीयः प्रतिपन्नत्वाभावे तदयोगादिति शङ्कायां प्रवृत्तिनिवृत्त्यन्वयः प्रामाण्यव्यापकः अतस्तद्व्याप्यं प्रामाण्यं तद्विरहे न सिध्यतीति किमुच्यते । किं वा प्रवृत्तिनिवृत्त्यन्वयः प्रयोजनव्यापकः, प्रयोजनञ्च प्रामाण्यव्यापकमिति प्रवृत्तिनिवृत्त्यन्वयविरहे तद्व्याप्यप्रयोजनाभावात्तद्व्याप्यं प्रामाण्यं न सिध्यतीत्युच्यते इति,। विकल्पमभिप्रेत्य प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वं नास्तीत्याह—

सू० न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वं स्वविषयावबोधपर्य्यवसायित्वात्सर्वप्रमाणानां, न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः

टी० "न चेति", व्युत्पत्तिसिद्धेति" प्रथमसूत्रार्थानुवादः प्रसिद्धवस्तुनः पुरुषार्थत्वं न शास्त्रं प्रतिपादयितुं शक्नोति प्रतिपन्नेऽपि न तत्र तात्पर्यसिद्धिर्व्युत्पत्त्यभावादिति न वाच्यं, सिद्धे वस्तुनि व्युत्पत्तेरुपपादनादिति भावः, प्रमाणान्तरगोचरत्वप्रयुक्तान्यपरत्वं दुर्वचमिति भावः । पुरुषार्थत्वाभावशङ्काव्युदासाय उदाहृतकारणवाक्यप्रतिपन्नमर्थमाह "अखिले"ति, शोधकवाक्यप्रतिपन्नं कारणवाक्यैश्च सिद्धमर्थमाह "अशेषे"ति, सांख्याभिमतप्रकृतिपुरुषपरत्वं दुर्वचमिति भावः । पुरुषार्थत्वाभावादन्यपरत्वव्युदासायाह "आनन्दस्वरूपे"ति, अन्यपरत्वतात्पर्याभावः—ब्रह्मणि न प्रामाण्याभाव इत्यर्थः । प्रवृत्तिनिवृत्त्यन्वयविरहे कथं प्रामाण्यमित्यत्राह "स्वविषये"ति, प्रमाणानि हि स्वविषयावबोधे पर्यवस्यन्ति न तु प्रवृत्ति-

निवृत्त्योरित्यर्थः। अथ प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वमभ्युपगम्य प्रयोजनस्य प्रामाण्यव्यापकत्वाभावमाह "न प्रयोजने"ति, तदुपपादयति–

**भू० प्रयोजनं हि प्रमाऽनुगुणम्, न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्पुरुषार्थान्वयप्रतीतेः।**

टी० "प्रयोजनं ही"ति, हि-शब्दो। हेतौ यद्वा प्रयोजनस्य प्रामाण्यव्यापकत्वाभावप्रसिद्धिर्हि–शब्दाभिप्रेता, तथा तत्त्वटीकायां "न हि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति सुवर्णदर्शनता कल्प्यते"ति, तथा हेतुत्वमर्थसिद्धं प्रयोजनव्यापकत्वं प्रवृत्तिनिवृत्त्यन्वयस्यास्तु तेन तन्निवृत्तौ प्रयोजनमेव निवर्तते न तु प्रामाण्यं प्रयोजनस्य प्रामाण्यव्यापकत्वाभावादित्यर्थः। न चेत्यत्र च–शब्दो व्यापकद्वयनिषेधसमुच्चये यथा प्रवृत्तिनिवृत्त्यन्वयस्य प्रमाण्यव्यापकत्वमयुक्तं तथा प्रयोजनस्य च प्रामाण्यव्यापकत्वमयुक्तमित्यर्थः प्रत्यक्षादिषु प्रयोजनस्य प्रामाण्यव्यापकत्वाभावेऽपि शास्त्रे प्रयोजनस्य प्रामाण्यव्यापकत्वमस्तीति शङ्कायां प्रयोजनव्याप्यत्वं शास्त्रप्रामाण्यस्यास्तु तथाऽपि प्रयोजनस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्तीत्याह "न च प्रवृत्ती"ति, वाक्यस्येत्यध्याहारः। कुत इत्यत्राह "पुरुषार्थान्वयप्रतीते"रिति, इदं पक्षविषयं प्रवृत्तिरूपत्वाभावेऽपि पुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयप्रतीतेरित्यर्थः। न चेत्यत्र च–शब्दो व्याप्यत्वनिषेधद्वयसमुच्चये यथा प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्ति तथा प्रयोनस्यापि प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्तीत्यर्थः प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वाभावः स्वविषयावबोधेत्यादिना सिद्धः सपक्षत्वाभिमते लौकिकेऽपि सिद्धपरवाक्ये पुरुषार्थान्वयं दर्शयति–

**भू० तथा स्वरूपपरेष्वपि पुत्रस्ते जातो नायं सर्प इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम्, अत्राह–न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात्।**

टी० "तथे"ति, यथा प्रवृत्तिपरत्वनिवृत्तिपरत्वं वा न प्रयोजनपर्यवसायित्वं किन्तु पुरुषार्थपरत्वमेव तथा प्रवृत्तिनिवृत्तिपरत्वं सिद्धवस्तुपरत्वं वा न प्रयोजनपर्यवसायित्वमपि तु साध्येन वा सिद्धेन वा पुरुषार्थेनान्वितत्वमेव वाक्यस्य प्रयोजनपर्यवसायित्वमित्युक्तं भवति पुरुषार्थान्वयप्रतीतेरित्युक्तत्वात्, एवं सूत्रान्तरयोजनार्थं संक्षेपेणार्थ उक्तः अथ तात्पर्यार्थं वक्तुं पूर्वपक्षं विस्तरेणावतारयति "अत्राहे"ति, एतावत्यधिकरणार्थ उक्ते लब्धस्वद्रष्यप्रसङ्गः पूर्वपक्ष्याहेत्यर्थः । ब्रह्मणः शास्त्रप्रतिपाद्यत्वाभावं प्रतिजानीते "न वेदान्ते"ति, । सौत्रतच्छब्देन शास्त्रयोनित्वस्य परामृष्टत्वात्पूर्वपक्षिणा तदभावोऽपि प्रतिज्ञात इति हि ज्ञायते प्रतिज्ञामुपपादयति "प्रवृत्तिनिवृत्त्यन्वयविरहिण," इति, तदन्वयाभावे प्रतिपादनमेव न पूर्यतेति भावः । तथाच वार्त्तिकं—"यावत् खलु प्रमातृणां प्रवर्तननिवर्तने। शब्दा न कुर्वते तावन्न निराकाङ्क्षबोधनमिति "शास्त्रस्येति," शासनाद्धि शास्त्रं शासनं च प्रवर्तननिवर्तनात्मकं, तत्र वार्तिकं "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येततत्तच्छास्त्रं तूपपाद्यते इति पूर्वोक्तं प्रमाणानां स्वविषयावबोधित्वमाशङ्क्य तत्प्रमाणविशेषे व्यवस्थापयन् शास्त्रस्य प्रयोजनपर्यवसानावश्यं भावमाह—

सू० यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्य्यवस्यन्ति तथाऽपि शास्त्रं प्रयोजनयोजनपर्यवसाय्येव, न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः, न किञ्चित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा सम्भवति, तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्, अर्थार्थी राजकुलं गच्छेन्मन्दाग्निर्नाम्बु पिबेत्, स्वर्गकामो यजेत, न कलञ्जं भक्षयेदित्यादिषु, यत्पुनः सिद्धवस्तुपरेष्वपि पुरुषे जातो

नायं सर्पो रज्जुरेषेत्यादिषु हर्षभयादिनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम् ॥

टी० "यद्यपी"ति, तदुपपादयति "न ही"ति, न केवलमनुपलब्धिरेव अनुपपत्तिरप्यस्तीत्याह "न किञ्चिदि"ति, किञ्चित्–स्वसम्बन्धि परसम्बन्धि वा अल्पं प्रभूतं वा वाक्यप्रयोगादेर्यत्नसाध्यत्वाद् यत्नस्य च प्रयोजनेन विनाऽनुपपन्नत्वादित्यर्थः । वाक्यानां प्रयोजनपर्यवसायित्वादेव हि पुनरुक्तेः प्रयोजनाभावात् दूषणत्वं निष्प्रयोजनवाक्यप्रयोगस्तच्छ्रवणं वाऽनुपपन्नं स्यात् । ततः किं प्रस्तुतस्य प्रयोजनपर्यवसायिनां वाक्यानां प्रवृत्तिनिवृत्तिपरत्वस्य, सिद्धपरत्वेऽपि हि प्रयोजनपर्यवसायित्वमुपपद्यत इत्यत आह "तच्चे"ति, प्रवृत्तिनिवृत्तिपरत्वेन लोकवेदयोः प्रयोगं दर्शयति "अर्थार्थी",त्यादिना, प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि प्रयोजनपरं वाक्यं दृष्टमिति शङ्कायां सिद्धपरत्वेनोक्तं वाक्यं दूषयितुमनुवदति "यत्तु न"रिति, विकल्पयति–

श्रु० तत्र किं पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिः? उत तज्ज्ञानादिति विवेचनीयम्, सतोऽप्यर्थस्याज्ञातस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत् तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिद्ध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्य्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्, तस्मात्सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्य्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्य्यसम्भवान्न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति, अत्र कश्चिदाह–वेदान्तवाक्यान्यपि कार्य्यपरतयैव ब्रह्मणि प्रमाणत्वमनुभवन्ति कथं निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्मानाद्यविद्यायासप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्य्यादिति–

टी० "तत्रे"ति, प्रथमकोट्यनुपपत्त्या द्वितीयशिरोऽभ्युपगमं शङ्कते "सतोऽपी"ति, दूषयति "तर्ही"ति,तस्मादिति पूर्वपक्षोपसंहारः, जरन्मायावादिपक्षौ द्वौ विद्येते, तत्रैको निष्प्रपञ्चीकरणनियोगवादः, अन्यो ध्याननियोगवादः, एतन्मतद्वयं ध्याननियोगवादिमुखेन शाङ्करादिमतं च दूषितवन्तमधिकरणपूर्वपक्षिणं प्रति सिद्धान्तं वक्ष्यन्निदानीं निष्प्रपञ्चीकरणनियोगवादं प्रस्तौति "अत्र कश्चिदाहे"ति, तं प्रतिजानीते "वेदान्ते"ति, कार्य्यपरस्य वाक्यस्य सिद्धवस्तुनि प्रमाणभावः कथ? मित्यभिप्रयन्नाह "कथमि"ति, उत्तरमाह "निष्प्रपञ्चमि"ति, कुर्यादित्यत्रेति–शब्दः प्रकारवचनः। निष्प्रपञ्चीकरणविधिना ब्रह्मणः कोऽन्वय? इत्यपेक्षायामन्वयमाह–

सू० ब्रह्मणः प्रपञ्चविलयद्वारेण विधिविषयत्वमिति कोऽसौ द्रष्टृदृश्यरूपप्रपञ्चप्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः? "न दृष्टेर्द्रष्टारं पश्येः न मतेर्मन्तारम्मन्वीथाः" इत्येवमादिः द्रष्टृदृश्यभेदशून्यं दृशिमात्रं ब्रह्म कुर्य्यादित्यर्थः, स्वतःसिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्वमविरुद्धमिति ॥

टी० "ब्रह्मण"इति, विषयत्वेनान्वय इत्यर्थः। सिद्धस्वरूपस्य ब्रह्मणो विधिविषयत्वानुपपत्तिशङ्कापरिहारार्थं प्रपञ्चप्रविलयद्वारेणेत्युक्तम्, अत्र सिद्धस्य साध्यत्वमाकारभेदादविरुद्धमिति गर्भितम्, इह त्विति–शब्दः समाप्तौ, स कथमित्यस्योत्तरत्वेनेत्यमिति वार्थः। विधिं दर्शयितुमाकाङ्क्षामुत्थापयति "कोऽसावि"ति, कतिपयनाशेऽप्यशक्तस्य विश्वप्रपञ्चनाशनविधिरशक्य इत्यभिप्रायः, विधिः–विधिवाक्यम्, आविद्यिकस्य प्रपञ्चस्य बुद्धिनिवृत्तिमात्ररूपो विलयः शक्य इत्यभिप्रायेण वाक्यमुपादत्ते "न दृष्टेरि"ति, दृष्टिव्यतिरिक्तत्वाविशेषाज् ज्ञेयनिषेधोऽपि फलितः, आदि–शब्दोपात्तश्रुत्यन्तरैः कण्ठोक्तश्च,आत्यन्तिकनिवृत्तेरसिद्धत्वाद्विधेयत्वं च युक्तमिति भावः। शून्य–शब्देनात्यन्तिकनिवृत्तिर्विवक्षिता मात्र–शब्देन द्रष्टृदृश्यकल्पकाविद्यानि-

वृत्तिः, तत एव ह्यात्यन्तिकत्वसिद्धिः, सिद्धस्य ब्रह्मणो विधेयत्वं कथमिति शङ्कायां प्रपञ्चप्रविलयद्वारेणेति पूर्वविवक्षितमर्थं विस्तरेणाह "स्वतः सिद्धस्यापी"ति,। यद्वा पूर्वं भावार्थव्यतिरिक्तस्य विधिविषयत्वानुपपत्तिः परिहृता, इह तु स्वतःसिद्धस्येत्यादिना प्रपञ्चविलयनद्वारेण सिद्धरूपस्यापि विधिविषयत्वानुपपत्तिः परिहृतेति भिदा। भावार्थादन्यत्व स्वर्गादेरप्यस्ति न तस्य सिद्धत्वं साध्यं हि तत्, अधिकरणपूर्वपक्षी मीमांसकस्तन्दूषयति–

सू० तदयुक्तम्, नियोगवाक्यार्थवादिना हि नियोगो नियोज्यविशेषणं विषयः करणमितिकर्त्तव्यता प्रयोक्ता च वक्तव्याः, तत्र हि नियोज्यविशेषणमनुपादेयम् तच्च निमित्तं फलमिति द्विधा, अत्र किन्नियोज्यविशेषणं? तच्च किं निमित्तं फलं वेति विवेचनीयम् ब्रह्मस्वरूपयाथात्म्यानुभवश्चेत् नियोज्यविशेषणं तर्हि न तन्निमित्तं जीवनादिवत्तस्यासिद्धत्वात्।

टी० "तदयुक्तमि"ति, कथमित्यत्राह "नियोगे"ति, विशिंषन् विषयं इति व्युत्पत्त्या विषयो यागादिः कृतिसाध्यापूर्वप्रतीतिवेलायां कृत्यवच्छेदमुखेन स विषयः, स एव कार्यनिष्पत्तौ करणं वक्तव्यः, न त्वया वक्तुं शक्यमिति भावः। प्रथमं नियोज्यविशेषणं दूषयितुमाह "तत्रे"ति, तत्र–तेषु वक्तव्येषु नियोज्यविशेषणमनुपादेयमुपादेयं विधेयं तद्व्यतिरिक्तमित्यर्थः। विकल्प्य दूषयितुं विशेषणद्वैविध्यमाह "तच्चे"ति, ततः किमित्यत्राह "अत्रे"ति, अत्र–निष्प्रपञ्चीकरणनियोगे। नियोज्यविशेषणस्वरूपं शङ्कते "ब्रह्मस्वरूपे"ति, निमित्ततां दूषयति "तर्ही"ति, कुत इत्यत्राह "जीवनादिवदि"ति, यावज्जीवमग्निहोत्रं जुहोतीत्यत्र जीवनस्य सिद्धत्वाद्यथा निमित्तत्वं न तथेत्यर्थः। पुत्रजन्मादिवद्यदा सिध्येत्तदा निमित्तं भविष्यतीत्यत्राह–

सू० निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवन्नित्यतद्विषयानुष्ठानप्रसङ्गो, नापि

फलं नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात्कश्चाच नियोगविषयो? ब्रह्मैवेति चेन्न तस्य नित्यत्वेनाभव्यरूपत्वात्, अभावार्थत्वाच्च निष्प्रपञ्चं ब्रह्म साध्यमिति चेत् साध्यत्वेऽपि ।

टी० "निमित्तत्वे चे"ति, अपवर्गोत्तरकालन्नानुष्ठानप्रसङ्गो यावन्निमित्तमनुष्ठाननियमाभावात्, परिकरशून्येषु तन्नियमाभावो दृष्टः तस्मात्करणकलेवरविरहेण न तदानीमनुष्ठानमिति चेत्, हन्त स्वदूषणमेव स्वयमाविष्करोषि तथा हि सप्रपञ्चताऽनुभवस्य यथार्थानुभवरूपत्वाभावादपवर्गोत्तरभाव्येव याथार्थ्यानुभवः तदानीं करणकलेवराभावेऽपि विषयानुष्ठानं शक्यञ्च वा, अशक्यत्वे विधेयत्वमेव न स्यात्, अतः शक्यमिति वक्तव्यम् अतो निमित्तस्य नित्यत्वात् नैमित्तिकस्य नित्यं शक्यत्वाच्च नित्यन्तदनुष्ठानप्रसङ्ग इति भावः । फलतया विशेषणत्वे दूषणमाह "नापी"ति, नियोगविषयानुपपत्तिं वक्तुमाह "कश्चे"ति, । शङ्कते "ब्रह्मैवे"ति, दूषयति "ने"ति, हेतुमाह "तस्ये"ति, अभव्यरूपत्वात्—असाध्यरूपत्वात्, अभावरूपत्वाच्च, भावार्थाः कर्मशब्दाः क्रियारूपत्वाभावादित्यर्थः साध्यत्वं फलस्यास्तीति तद्भाववर्त्तकं भावार्थत्वं तदुभयाभावादिति यावत् । निष्प्रपञ्चताऽऽकारेण साध्यत्वं शङ्कते "निष्प्रपञ्चमि"ति, प्रतिवदति "साध्यत्वेऽपी"ति,

मू० फलत्वमेव अभावार्थत्वान्न विधिविषयत्वं, साध्यत्वं च कस्य? किं ब्रह्मणः? उत प्रपञ्चनिवृत्तेः? न तावद्ब्रह्मणः सिद्धत्वादनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः न तर्हि ब्रह्मणः साध्यत्वं, प्रपञ्चनिवृत्तिरेव विधिविषय इति चेन्न तस्याः फलत्वेन विधिविषयत्वायोगात् ॥

टी० "फलत्वमेवे"ति, विषयत्वं चेत् फलव्यतिरिक्तत्वं स्यात् फलव्यतिरिक्तत्वाभावाद्विषयत्वमयुक्तमिति तात्पर्यम्। हेत्वन्तरं कण्ठोक्त्या दर्शयन् विषयत्वं दूषयति "अभावार्थत्वाच्च विधिविषयत्वमि"ति, विशिष्टस्य विषयत्वानुपपत्तिरुक्ता। अथ विशेष्यांशस्य विशेषणांशस्य च विषयत्वानुपपत्तिं च वक्ष्यन् विकल्पयति "साध्यत्वं चे"ति,। यद्वा विशिष्टस्य साध्यत्वाभ्युपगमेन विषयत्वं दूषितम्। अथ विशिष्टस्य साध्यत्वं दूषयितुं विकल्पयति "साध्यत्वं चे"ति, विशिष्टस्य साध्यत्वानुपपत्तिर्हि विशेषणस्य विशेष्यस्य उभयस्य च साध्यत्वानुपपत्त्या स्यात्, तत्र उभयस्येति विकल्पानुक्तिः शिरोद्वयेन तुल्यदूषणत्वात्, प्रथमं दूषयति "न तावदि"ति, कुत इत्यत्राह "सिद्धत्वादनित्यत्वप्रसक्तेश्चे"ति, सिद्धत्वान्न साध्यत्वं, साध्यत्वाङ्गीकारे तु भावस्वरूपत्वे सति साध्यत्वादनित्यत्वप्रसक्तेश्चेत्यर्थः। द्वितीयं शङ्कते "अथे"ति, दूषयति "न तर्हि"ति, प्रपञ्चनिवृत्तेस्साध्यत्वे ब्रह्मणः साध्यत्वाभावाच्च, विधिविषयत्वमित्यर्थः प्रपञ्चनिवृत्तेर्विधिविषयत्वमाशङ्क्य दूषयति "प्रपञ्चे"त्यादिना। तस्याः फलत्वमुपपादयति—

सू० प्रपञ्चनिवृत्तिरेव हि मोक्षः, स च फलम्, अस्य च नियोगविषयत्वे नियोगात्प्रपञ्चनिवृत्तिः प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रयत्वम्। अपि च किं निवर्त्तनीयः प्रपञ्चो मिथ्यारूपः सत्यो वा, मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किञ्चित्प्रयोजनं, नियोगस्तु निवर्त्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्त्तक इति चेत्तत्ववाक्यादेव जातमिति न नियोगेन प्रयोजनम्,

टी० "प्रपञ्चनिवृत्तिरेव ही"ति, प्रपञ्चनिवृत्तिर्मोक्षोऽस्तु ततः किं विषयत्वानुपपत्ते? रित्याह "स चे"ति, प्रपञ्चनिवृत्तेर्मोक्षरूपत्वान्मोक्षस्य च फलत्वात् फलभूताया न विषयत्वमित्यर्थः। दूषणान्तरमाह "अस्य चे"ति, अस्या इति वक्तव्येऽपि फलत्वविवक्षाऽस्येत्युक्तिः फलत्वं विषयत्वं चेत्या.

कारद्वयाभ्युपगमे प्रपञ्चनिवृत्तिः फलत्वान्नियोगसाध्या विषयत्वात्प्रपञ्चनिवृत्त्या नियोगसिद्धिरित्यन्योन्याश्रय इत्यर्थः । निष्प्रपञ्चीकरणपक्षे मुखान्तरेण दूषणमाह "अपि चे"ति, यद्वा नियोगपक्षदूषणेनान्योन्याश्रयेण नियोगश्च दूषितो भवति, मुखान्तरेणाऽपि नियोगं दूषयति "अपि चे"ति, दूषयितुं विकल्पयति "किमि"ति प्रथमं दूषयति "मिथ्ये"ति, साफल्यं शङ्कते "नियोगस्त्वि"ति, दूषयति "तद्धी"ति, स्ववाक्यात्—प्रपञ्च मिथ्यात्वब्रह्मनिर्विशेषत्वपरवाक्यादित्यर्थः । नियोगस्य निष्फलत्वदूषणोक्त्या नियोज्यविशेषणं च दूषितं भवति, नियोगसाध्यफलस्यैव फलतया नियोज्यविशेषणत्वादिह तदयोगाच्च दूषणान्तरमाह—

मू० वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात्सपरिकरस्य नियोगस्यासिद्धिश्च, प्रपञ्चस्य निवर्त्यत्वे प्रपञ्चस्य निवर्तको नियोगः किं ब्रह्मस्वरूपमेव? उत तद्व्यतिरिक्तः? यदि ब्रह्मस्वरूपमेव निवर्त्तकं नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति, नित्यत्वेन च नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते,। अथ ब्रह्मस्वरूपव्यतिरिक्तस्तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावाद् सिद्धिःप्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वान्न नियोगनिष्पाद्यं मोक्षाख्यं फलं, किञ्च, प्रपञ्चनिवृत्तेर्नियोगकरणस्येतिकर्त्तव्यताऽभावादनुपकृतस्य च करणत्वायोगान्न करणत्वं कथमितिकर्त्तव्यताऽभाव इति चेद् इत्थम् अस्येति कर्त्तव्यता—

टी० "वाक्यार्थज्ञानादेवे"त्यादिना, पूर्वविकल्पितशिरोद्वये द्वितीयं शिरो दूषयितुमाह "प्रपञ्चस्ये"ति, प्रपञ्चस्य सत्यत्वे न नियोगनिवर्त्यत्वमित्यर्थः। किमित्यादिना विकल्प्य प्रथमं दूषयति "यद्री"त्यादिना, द्वितीयं दूषयितुं तदभ्युपगमं शङ्कते "अथे"ति, दूषयति "तस्ये"ति तस्येत्यादिना, नष्ट इत्यन्तेन प्रयोक्तृदूषणं च कृतं भवति प्रपञ्चनिवृत्तीत्यादिना प्रपञ्चसत्यत्वेऽपि फलाभावोक्तिमुखेन नियोगो दूषितः, करणमितिकर्त्तव्यतां च दूषयति "किञ्चे"ति, इतिकर्त्तव्यताया अभावं विवरितुमाह "कथमि"ति, प्रतिवक्ति "इत्यमि"ति, भावरूपत्वपक्षे द्वैविध्यमाह-

सू० भावरूपा ? अभावरूपा वा ? भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्य्यभेदभिन्ना उभयविधा च न सम्भवति न हि मुद्गराभिघातादिवत् कृत्स्नप्रपञ्चनिवर्तकः कोऽपि दृश्यत इति दृष्टार्था न सम्भवति, नापि निष्पन्नस्य करणस्य कार्य्योत्पत्तावनुग्रहः सम्भवति अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः, ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत् तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम् ॥

टी० "भावरूपा चे"ति, करणशरीरनिष्पत्तिरवघातवत्प्रोक्षणवच्च दृष्टादृष्टार्थतया द्विधेति चाभिप्रेतम्। ततः किमित्यत्राह "उभयविधे"ति, उभयविधा निष्पादिका अनुग्राहिका च निष्पादकरूपपक्षे प्रथमं दृष्टार्थत्वे दूषणमाह "न ही"ति, कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरनिष्पादकाभावरूपादृष्टार्था न सम्भवतीत्यर्थः अदृष्टार्था अस्ति चेत् प्रपञ्चसत्यत्वप्रसङ्गः, अप्रामाणिकत्वं चेति स्फुटमिति न कण्ठोक्तम्। अथानुग्रहं दूषयति "नापी"ति, तदसम्भवमुपपादयति "अनुग्राहके"ति, अनुग्राहको हि करणानन्तरभावी कृत्स्नप्रपञ्चनिवृत्तिरूपकरणानन्तरमनुग्राहकः तिष्ठति

चेत् करणमेव न सिद्धं स्यात्, यदा करणसिद्धिः न तदानीमनुग्राहको विद्यत इत्यनुग्राहकासम्भव इत्यर्थः। इतिकर्त्तव्यतासद्भावमुखेन करणसिद्धिं शङ्कते "ब्रह्मण" इति, दूषयति "तेने"वेति, करणादिनिष्पाद्यं करणनिष्पाद्यो नियोगः नियोगनिष्पाद्यं फलमित्यादि-शब्दार्थः, करणं चेत्स्वकार्यकरं स्यात् तदभावात्करणत्वमयुक्तमित्यर्थः ॥

सू॰ अभावरूपत्वे चाभावत्वादेव न करणशरीरं निष्पादयति, नाप्यनुग्रहम्, अतो निष्प्रपञ्चब्रह्मविषयोविधिर्न सम्भवति। अन्योऽप्याह—यद्यपि वेदान्तवाक्यानान्न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यं तथापि ब्रह्मस्वरूपं सिद्ध्यत्येव, कुतः ध्यानविधिसामर्थ्यात् एवमेव हि समामनन्ति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "य आत्माऽपहतपाप्मा" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मेत्येवोपासीत" आत्मानमेव लोकमुपासीते"ति ॥

टी॰ अथा भावरूपे इतिकर्तव्यतां दूषयति अभावरूपत्व"इति, "अभावरूपत्व" इति, अभावादेव—अभावरूपे इतिकर्त्तव्यताया अप्रामाणिकत्वादेवेत्यर्थः निवृत्तिरूपशमादीनां नाभावरूपेतिकर्त्तव्यतात्वं तेषां ज्ञाननिष्पादकत्वेन प्रपञ्चनिवृत्तिरूपकरणनिष्पादकत्वायोगादिति भावः। अनाभावादेवेत्येवकारेण पूर्वमदृष्टार्थभावरूपेतिकर्तव्यताया अप्रामाणिकत्वस्याभिप्रेतत्वं गम्यते। दूषणमुपसंहरति "अत"इति, विधिर्नियोगः निष्प्रपञ्चीकरणविषयो नियोग इत्यर्थः, अतः प्रवर्त्तकवाक्येनैव ब्रह्मस्वरूपसिद्धिरिति वक्तुं न शक्यमिति फलितम्। अथ ध्याननियोगवादिपक्षमुपक्षिपति "अन्यो ऽप्याहे"ति, ब्रह्मणि वेदान्तवाक्यानां स्वातन्त्र्येण प्रामाण्याभावमङ्गीकृत्याह "यद्यपी"ति' तर्हि कथं तत्सिद्धि? रित्याह "तथापी"ति, व्याघाताभिप्रायेणाह 'कुत"इति, हेतुमाह "ध्यानविधी"ति, ध्यान-

विधिः कः ? तस्य सामर्थ्यं कथ - मित्यत्राह "एवमेव ही" ति, यथा वाक्यानां ध्यानपरत्वेऽपि परिनिष्पन्नं सिध्यति तथैवेत्यर्थः । ध्यानविधिवाक्यान्याह "आत्मा वा" इति, निदिध्यासितव्य इत्युपासनमुक्तं, द्रष्टव्य इति तस्य दर्शनरूपत्वं, विजिज्ञासितव्य इति सामान्य-शब्दः, आत्मेत्यैक्योपासनमुक्तम् आत्मानमिति स्वस्य जगत्तादात्म्योपासनसामर्थ्यं दर्शयति ।

मू॰ अत्र ध्यानविषयो हि नियोगः स्वविषयभूतध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा स किंरूप ? इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण सत्यं ज्ञानमनन्तं ब्रह्म सदेव सौम्येदमग्र-आसीदेकमेवाद्वितीयमित्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मरूपेऽपि तात्पर्य्यमस्त्येव ॥

टी॰ "अत्रे" ति, ध्येयमाक्षिप्तमस्तु तद् ब्रह्मेति कथं ज्ञायत ? इत्यत्राह "स च ध्येय" इति, आकाङ्क्षायां सन्निहितमेव योग्यं चेत् तत् परित्यक्तुं न युक्तं गामानयेत्यादिषु हि तथा दृष्टमिति भावः । स्वरूपमात्र-प्रतिपादकानां कारणशोधकवाक्यानामपि विध्यपेक्षितसमर्पकत्वेन प्रामाण्यमित्यत्राह "स किं रूप" इति, शोधितस्वरूपस्य ध्येयत्वात्सत्यादिवाक्यं प्रथममुपात्तं तदनुगुणार्थतया सदेवेति कारणवाक्यं पश्चादुदाहृतं "ध्यान-शरीरानुप्रविष्ट" इति "अर्थेनैव विशेषो हि निराकारतया धिया" मिति भावः । अस्त्येवेति स्ववाक्यप्रतिपन्नस्वर्गादिफलविषयस्य यस्मिन्नोण्णमित्यादिवाक्यस्येव विधिशेषतया प्रामाण्यमिति भावः । ध्येयब्रह्मस्वरूपं हि ध्यानशरीरानुप्रविष्टं प्रपञ्चमिथ्यात्वस्य ध्यानशरीराननुप्रवेशात्कथं भेदनिषेधे तात्पर्यं ? मित्यत्राह—

मू॰ अत एकमेवाद्वितीयं तत्सत्यं स आत्मा नेह नानाऽस्ति किञ्च नेत्यादिभिर्ब्रह्मस्वरूपमेकमेव सत्यं तद्व्यतिरिक्तं सर्वं

मिथ्येत्यवगम्यते प्रत्यक्षादिभिर्भेदावलम्बिना च कर्म-शास्त्रेण भेदः प्रतीयते भेदाभेदयोः परस्परविरोधे सत्य-नाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते, नच ब्रह्मध्याननियोगेन तत्साक्षात्कार-फलेन निरस्तसमस्ताविद्याकृतविविधभेदाद्वितीयज्ञानैक-रसब्रह्मभावरूपो मोक्षः प्राप्यते

टी० "अत" इति, अतः—विशेषभूतस्य सिद्धार्थे तात्पर्यस्य सद्भावात् अद्वितीयं ब्रह्म ध्येयम्भेदनिषेधश्रुतयश्च ब्रह्मणोऽद्वितीयत्वपराः, ब्रह्मणो-ऽद्वितीयत्वमेव भेदमिथ्यात्वमिति ध्यानशरीरानुप्रविष्टे भेदनिषेधे तात्प-र्यमस्तीत्यर्थः। भेदग्राहिप्रमाणविरोधान्न शास्त्रमद्वितीयं ब्रह्म प्रतिपादयति आदित्यो यूप इत्यादिवदिति शङ्कां परिहर्त्तुं प्रत्यक्षादिभिर्विरुद्धप्रतीतिम-भ्युपगच्छति "प्रत्यक्षादिभि"रिति, शङ्कां परिहरति "भेदाभेदयोरि"ति, भेदप्रतीतिरन्यथासिद्धत्वादनन्यथासिद्धशास्त्रावगतमैक्यं तात्त्विकमित्यर्थः तर्हि विषयः करणं प्रयोक्ता फलमित्यादि वक्तव्यं नियोगनिवर्त्त्यत्वे प्रपञ्चस्य सत्यत्वप्रसङ्गो नित्यप्राप्तत्वात्। ब्रह्मभावो न फलमित्यत्राह "तत्रे"ति, ध्याननियोगेनेति ध्यानस्य विषयत्वमुक्तम्। नियोगान्मोक्षश्चेन्न ज्ञानान्मोक्ष इति शङ्कां व्युदस्यति "तत्साक्षात्कारफलेने"ति, नियोगस्योपायत्वं ज्ञान-द्वारकमित्यर्थः। निरस्तेत्यादिना अविद्यानिवृत्तिः फलमित्युक्तं, तदेव फल-तया नियोज्यविशेषणमुपासकः प्रयोक्ता शमादिरितिकर्त्तव्यतेत्यादि अस्माकं सिद्धमिति भावः। वाक्यार्थज्ञानमात्रान्मोक्षवादिनं दूषयति—

मू० न च वाक्याद् वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः, अनु-पलब्धेर्विविधभेददर्शनानुवृत्तेश्च, तथा च सति श्रवणादिवि-धानमनर्थकं स्यात्। अथोच्येत रज्जुरेषा न सर्प्प इत्युपदे-शेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवद्बन्धस्यापि मिथ्यारू-

पत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता न नियोगेन, नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्स्वर्गादिवत्, मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नं । किंच धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम् ।

टी० "न चे"ति, प्रत्यक्षविरोधमाह "अनुपलब्धेर्विविधभेददर्शनानुवृत्तेश्चे"ति, शास्त्रविरोधमाह "तथा च सती"ति, अथ साक्षान्मायावादिना स्वमतम्पश्चाद्विवक्षता प्रथमं ध्याननियोगवादिपक्षप्रतिक्षेपमाशङ्कते "अथोच्येते"ति, बन्धस्य ज्ञानमात्रनिवर्त्यत्वं सोपपत्तिकमाह "रज्जुरि"ति, निवर्त्यमिथ्यात्वं ह्युभयसम्मतम्, अत एव नियोगनैरपेक्ष्यमाह "ने"ति, अन्यथाऽनिष्टमाह "नियोगे"ति, मोक्षानित्यत्वस्य तदनिष्टतामाह "मोक्षस्ये"ति, नियोगो विपरीतफलप्रदश्चेत्याह "किञ्चे"ति, द्वारेणेत्यन्तेन प्रसञ्जनीयप्रसञ्जकयोर्व्याप्तिर्दर्शिता, अवर्जनीयमित्यन्तेन प्रसङ्गः । ततः किमित्यत्राह—

मू० तस्मान्न धर्मसाध्यो मोक्षः तथा च श्रुतिः "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तन्न प्रियाप्रिये स्पृशत" इति, अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणान्न धर्मसाध्यमशरीरत्वमिति विज्ञायते, न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्, अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात्, यथाहुः श्रुतयः "अशरीरं शरीरेष्वनवस्थेष्ववस्थितं महान्तं विभुमात्मानं मत्वा धीरो न शोचति" "अप्राणो ह्यमनाः शुभ्रोऽसंयोगो ह्ययं पुरुष

इत्याद्याः, अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः ॥

टी० "तस्मादि"ति, तस्मात्संसारफलत्वप्रसङ्गाद् व्यापकस्य संसार-फलत्वस्य निवृत्त्या व्याप्यं धर्मसाध्यत्वञ्च निवृत्तमित्यर्थः । मोक्षस्याशरीर-त्वरूपत्वश्रुत्या च नियोगासाध्यत्वमाह "तथा चे"ति, अशरीरत्वरूपमोक्षे धर्माधर्मफलरूपप्रियाप्रियसम्बन्धविरहश्रवणान्मोक्षस्य धर्मसाध्यत्वाभावः फलित इत्यत्राह "इत्यशरीरत्वरूपे"ति, एवं नियोगसाध्यत्वे मोक्षस्य धर्माधर्मफलसम्बन्धराहित्यश्रवणानुपपत्तिरिति श्रुत्यर्थापत्तिरुक्ता भवति । यथा नियोगविशेषस्य पापनिवृत्तिः फलमुच्यते तद्वन्नियोगविशेषस्य बन्ध-निवृत्तिफलत्वं सम्भवतीत्यत्राह "न चे"ति नियोगविशेष–फलविशेषशब्दा-भ्याम्प्रायश्चित्तपापक्षयणे विवक्षिते । कुत इत्यत्राह "अशरीत्वस्ये"ति, अशरीरत्वस्य स्वरूपत्वे श्रुतिमाह "यथाहु"रिति, "अप्राण"इति प्राण-मनस्सम्बन्धाभावादशरीरत्वं सिद्धं, सशरीरस्य हि प्राणमनस्सम्बन्ध इति भावः । अतो–ऽशरीरत्वस्यात्मस्वरूपत्वावगमादित्यर्थः । न केवलं कर्मफल सम्बन्धविरहादशरीरत्वस्य स्वाभाविकत्वाच्च नियोगसाध्यत्वाभावः सिद्धः अपि तु कण्ठोक्तश्चेत्याह–

सू० तथा च श्रुतिः "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मा-त्कृताकृतात् अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे" ति, अपि च उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति, न तावदुत्पाद्यः, मोक्षस्य ब्रह्म-स्वरूपत्वेन नित्यत्वात्, नापि प्राप्यः आत्मस्वरूपत्वेन ब्र-ह्मणोनित्यप्राप्तत्वात्, नापि विकार्य्यः, दध्यादिवदनित्य-त्वप्रसङ्गात्, नापि संस्कार्य्यः, संस्कारोहि दोषापनयनेन वा गुणाधानेन वा साधयति, न तावद्दोषापनयनेन नित्यशुद्ध-त्वाद्ब्रह्मणः, नाप्यतिशयाधानेनानाधेयातिशयस्वरूपत्वात् ॥

टी० 'तथा च श्रुतिरि'ति, अन्यत्र धर्मात् —धर्मादन्यत्र धर्मेण विना अनेन धर्मसम्बन्धराहित्यमुक्तं, सम्बन्धश्च साध्यसाधनभाव इति भावः। अत्र कृताकृत—शब्देन क्रियमाणमुच्यते, भूतभव्य—शब्देन भूतभविष्यती मुखान्तरेण मोक्षस्य नियोगसाध्यत्वं दूषयति "अपि चे"ति, साध्यत्वस्य वैविध्यं वदंस्तदसम्भवमाह "उत्पत्ती"ति, मोक्ष—शब्देन किं निवृत्ताविद्यं स्वरूपं विवक्षितमुताविद्यानिवृत्ति? रिति विकल्पे स्वरूपस्य विवक्षितत्वे चतुर्विधसाध्यत्वानुपपत्तिमाह न तावदित्यादिना, निवृत्तेरुत्पाद्यत्वेऽप्यना- शित्वं प्रध्वंसाभावरूपत्वादिति वक्ष्यते, संस्कारोहीत्यादि अत्र नित्यशुद्ध— शब्देन परमार्थदोषानन्वयोभिप्रेतः, नित्यशुद्धस्य निर्विशेषस्य वस्तुनो- दोषापनयनगुणाधानरूपसंस्कारविषयत्वं नित्यशुद्धत्वानाधेयातिशय- त्वाभ्यां नास्तीत्युक्तम्। अथ क्रियाविषयत्वाभावात्संस्कारविषयत्वाभाव उच्यते—

मू० नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियायाः अविषयतया न निर्घर्षणेनादर्शादिवदपि संस्कार्यत्वम्। न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते किन्त्वविद्या- गृहीतस्तत्सङ्घातोऽहंकर्त्ता तत्फलानुभवोऽपि तस्यैव, न चाहं कर्तैवात्मा तत्साक्षित्वात्, तथा च मन्त्रवर्णः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति"

टी० "नित्येत्यादि"ना, निर्विकारत्वेन क्रियाविषयत्वाभावः कथम्? इत्थं—यद्यत्क्रियाविषयभूतन्तद्धि सविकारं दृष्टं, यदा दर्पणोहस्ततलादिषु निर्घृष्यते तदा दर्पणाश्रया क्रिया, यदा दर्पणे पाणिर्निघृष्यते तदा पाण्या- श्रया क्रियेति स्वाश्रयपराश्रयक्रिययोर्दर्पणोदाहरणं, क्रियाविषयत्वाभावेऽपि संस्कार्यत्वं दृष्टमित्यत्राह "न चे"ति तर्हि किं संस्क्रियत? इत्यत्राह "किन्त्वि"ति, अविद्यया गृहीतः—अविद्यया कल्पितः, तेनातिशयाधानानु- गुणविकारित्वं सूचितम्। यद्वा अविद्यागृहीत इति शुद्ध्यशुद्ध्यादिभ्रमवत्तया

शुद्धिसापेक्षत्वं दर्शितम् । अहंकर्त्तुरपि देहाद्विलक्षणत्वात्कथं देहगतस्नानादिभिस्तस्यातिशय? इत्यत्राह । "तत्सङ्गत" इति । तत्सङ्गतः—देहसङ्गतः आत्मनः फलभोक्तृत्वात्स एव संस्कार्य इत्यत्राह "तत्फले",ति । फलभोक्ताऽहमर्थश्चेत्सएवात्मेत्यत्राह । "न चाहमि"ति, हेतुमाह । "तदि"ति, योयस्य साक्षी स हि न तद्भवतीति भावः । साक्षित्वे मानमाह "तथा चे"ति, तयोरन्य इत्यादेरयमर्थः—अहङ्कारक्षात्मनोरेकः फलभोक्ता अन्योऽनश्नन्निति अहंकर्त्तैव भोक्तेति स्पष्टं दर्शयति—

मू॰ "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" । "कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" । "स पर्य्यगाच्छुक्रमकायमव्रणम[1]स्नाविरं शुद्धमपापविद्धम्" इति चाऽविद्यागृहीतादहंकर्त्तुरात्मस्वरूपनामधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते, तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः, यद्येवं किं वाक्यार्थज्ञानेन क्रियत? इति चेत् मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः ॥

टी॰ "आत्मेन्द्रियेति", आत्मा—देहः देहादिसम्बद्धस्यैव भोक्तृत्वादात्मनोऽशरीरत्वाप्राणत्वामनस्त्वादिश्रवणादनश्नन्नित्यभोक्तृत्वश्रवणाच्च भोक्तुर्विलक्षण आत्मेत्यभिप्रायः । यद्वा आत्म—शब्दः संविदात्मपरः ततश्च तद्युक्तस्य भोक्तृत्वात् तस्य भोक्तृत्वं नास्तीत्यहङ्कारस्यैव भोक्तृत्वमित्यभिप्रायः । एकोदेव इत्यत्र केवल—शब्देन फलान्वयराहित्वं विवक्षितमिति तस्यात्रोपयोगः । निर्गुणः—अगुणवश्यत्वादभोक्तेत्यर्थः । साक्षी—अहङ्कारे व्याप्रियमाणे स्वयं साक्षिमात्रतयाऽवस्थानान्न भोक्तेति भावः । "स पर्यगादि"ति, शुक्रमविद्यारहितं, वासनारहितं वा, शुद्धम् अपापविद्धं—कर्मफलरहितं कर्मरहितं च, पर्यगात्—गत्यर्थाबुद्ध्यर्था अमन्यतेत्यर्थः । उदाहृतश्रुति-

[1] अस्नाविरमिति पा॰ ।

प्रतिपन्नाकारोपेतमात्मस्वरूपं वदति । "अविद्ये"ति, अहङ्कर्त्तुर्निष्क्रम्यत इत्यन्वयः । मुक्तेरसाध्यत्वं निगमयति "तस्मादि"ति, । ज्ञानवैयर्थ्यं शङ्कते "यद्येवमि"ति, परिहरति "मैवेति" । प्रतिबन्धनिवृत्तेरेव साध्यत्वं श्रुतिसिद्धमाह–

भू० तथा च श्रुतयः "त्वं हि नः पिता योऽस्माकमविद्यायाः परम्पारन्तारयसि श्रुतं ह्येवमेव भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहंभगवः शोचामि तं माम्भगवा-च्छोकस्य पारन्तारयतु तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमार" इत्याद्याः, तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते, तन्नि-वृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति "ब्रह्म वेद ब्रह्मैव भवति तमेवं विदित्याऽतिमृत्युमेती"त्यादिव-चनं मोक्षस्य ब्रह्मवेदनानन्तरभावितां प्रतिपादयन्नियोग-व्यवधानं प्रतिरुणद्धि, न च विदिक्रियाकर्मत्वेन ध्यान-क्रियाकर्मत्वेन वा कार्य्यानुप्रवेशः, उभयकर्मत्वप्रति-षेधात् ॥

टी० "तथा चे"ति, प्रतिबन्धनिवृत्तेः साध्यत्वं निगमयति "तस्मा-दि"ति, प्रतिबन्धनिवृत्तेः साध्यत्वेनानित्यत्वं स्यादित्यत्राह "निवृत्ति-स्त्वि"ति, अयं परिहारोनियोगसाध्यत्वपक्षेऽपि तुल्य इति चेत् न नियोग-साध्यत्वे प्रपञ्चसत्यत्वं स्यादित्यभिप्रेतमित्युक्तत्वात्, । नियोगसाध्यत्वपक्षे श्रुतिस्वारस्यहानिमाह "ब्रह्मे"ति, श्रुतिस्वारस्यमेव विलम्बं न सहत इति भावः । कथं नियोगव्यवधानप्रतिरोधः? विधिशेषतया हि ब्रह्मणः सिद्धिः तत्सिद्ध्यर्थं नियोगः स्वीकार्य इति शङ्कायां नियोगशेषत्वं विदिकर्मत्वेन ध्यानकर्मत्वेन चोभयथाऽपि न सम्भवतीत्याह । "न च विदी"ति, वेदनं-

ज्ञानम्, उपासनं—ज्ञानविशेषः, अत्र वेदन—शब्दो निष्प्रपञ्चीकरणज्ञानविशेषे विश्राम्यति विवक्षावशात्, अतो निष्प्रपञ्चीकरणनियोगवादस्यापि दूषणं फलितम् । विद्युपास्तिकर्मत्वाभावे श्रुतिमाह—

मू॰ "अन्यदेव तद्विदितादथो अविदितादधि" "येनेदं सर्वं विजानाति तत्केन कं विजानीयादि"ति, "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति च, न च एतावता शास्त्रस्य निर्विषयत्वम्, अविद्यापरिकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य, न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम्, अपि त्वविषयं प्रत्यगात्मस्वरूपं प्रतिपादयदविद्याकल्पितज्ञातृज्ञानज्ञेयविभागं निवर्त्तयति, तथा च शास्त्रम्, "न दृष्टेर्द्रष्टारम्पश्येर्न मतेर्मन्तारमित्येवमादि, न च ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यं स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् ॥

टी॰ "अन्यदि"ति, विदितात्—ज्ञेयात्—अविदितात् ज्ञातुरित्यर्थः "अन्यदेवे"ति, विदिकर्मत्वनिषेधः, तदेवेति ध्यानकर्मत्वनिषेधः, विदिकर्मत्वाभावे शास्त्रवेद्यत्वासिद्धौ शास्त्रस्य निर्विषयत्वमाशङ्क्य परिहरति "न चे"ति, ब्रह्म वेद ब्रह्मविदित्यादिभिर्ब्रह्मणो वेद्यत्वं प्रतीयत इत्यत्राह—

मू॰ न च ज्ञानमात्राद्बन्धनिवृत्तिर्न दृष्टेति वाच्यम्, बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः, अत एव न शरीरपातादूर्द्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम्, न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते, यदि शरीरसम्बन्धः पारमार्थिकः तर्हि तद्विनाशापेक्षा, स तु ब्रह्मव्यतिरिक्ततया न पारमा-

र्थिकः, यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव न जात-
मित्यवगम्यते ज्ञानकार्य्यादर्शनात्

टी० "न च ज्ञानमात्रादि"ति, कथ ? मित्यत्राह "बन्धस्ये"ति, कथं
स्थित्यनुपपत्तिः ? बन्धोऽप्यनुवर्त्तेत इति शङ्का यस्य तु बन्ध इत्यादिना परिह-
रिष्यते, उक्तादेव हेतोः शरीरपातानपेक्षत्वमाह "अत एवे"ति, दृष्टान्तेनो-
पपादयति "न ही"ति, दृष्टान्ते दर्शितमर्थं व्यतिरेकमुखेन दार्ष्टान्तिके वि-
वृणोति "यदी"ति, पारमार्थिकत्वविपर्ययमाह "स त्वि"ति, विप्रतिपन्नम-
पारमार्थिकं ब्रह्मव्यतिरिक्तत्वात् शुक्तिरूप्यवदिति भावः । ज्ञानोत्तरकाल-
स्थितिरनुपपन्ना चेत्कथं बन्धस्यानुवृत्ति ? रित्यत्राह "यस्य त्विति," यस्य
त्वनिवृत्तः अनिवृत्त इति प्रतीतिः तस्य ज्ञानमेव न जातं तत्कार्यादर्शना-
दिति, तत्कार्याभावस्य कारणाभावमात्रव्याप्यत्वाभावेऽपि सामग्र्यभावव्या-
प्यत्वाद्भ्रमनिवृत्तिम्प्रति तत्त्वज्ञानस्य सामग्रीत्वात्तदभावेन ज्ञानाभावः क-
ल्प्यत इति न प्रत्यक्षविरोध इत्यर्थः । ज्ञानोत्पत्त्यनन्तरं बन्धनिवृत्तिं निग-
मयति—

सू० तस्माच्छरीरस्थितिर्भवतु मा वा वाक्यार्थज्ञानसमनन्तरम्
मुक्त एवासौ अतो न ध्याननियोगसाध्यो मोक्ष इति न
ध्यानविधिशेषतया ब्रह्मणः सिद्धिः, अपि तु "सत्यं ज्ञान-
मनन्तंब्रह्म तत्त्वमसि अयमात्मा ब्रह्मे"ति तत्परेणैव पद-
समुदायेन सिध्यतीति तद्युक्तम्, वाक्यार्थज्ञानमात्राद्ब-
न्धनिवृत्त्यनुपपत्तेः, यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः
तथाऽपि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञा-
नेन स बाध्यते ॥

टी० "तस्मादिति," शरीरावस्थितिर्भवतु वा मा वेति दग्धपटे पट-
प्रतिभासवत् शरीरप्रतिभासोऽनुवर्तेत वा निवर्तेत वेत्यर्थः, मुक्त एवासा-

विति बन्धस्य च्छिन्नफ[1]लतया दग्धपटवदकार्यकर इति भावः । बन्धनिवृत्तेर्नियोगनैरपेक्ष्यसाधकहेतुभिर्विधिशेषतया न ब्रह्मणः सिद्धिरित्याह "अतः" इति, अतः—वाक्यार्थज्ञानमात्रसाध्यत्वात् । तर्हि ब्रह्मणः कथं सिद्धि? रित्यत्राह "अपि त्वि"ति, तत्परैरेवेति भेदनिषेधपरैर्वाक्यैर्निर्विशेषतया साऽ[2]स्तीत्यर्थः । यद्वा सिद्धरूपार्थपरैरेवेत्यर्थः सिध्यतीति ब्रह्मेत्यर्थलब्धम् एतद्ध्याननियोगवादी दूषयति तदयुक्तमित्यादिना, कुत इत्यत्राह "वाक्यार्थे"ति, प्रपञ्चमिथ्यात्ववादिना ज्ञानाद्बन्धनिवृत्त्यनुपपत्तिः कथ? मुच्यत इत्यत्राह "यद्यपी"ति, ज्ञाननिवर्त्यत्वोपगमेऽपि वैषम्यमाह "तथापी"ति, परोक्षज्ञानस्यापरोक्षप्रमाबाधकत्वे दृष्टान्तमाह—

सू० रज्ज्वादावपरोक्षसर्पप्रतीतौ विद्यमानायां नायं सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात्, आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन, तथा हि रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो नायं सर्पो रज्जुरेषेत्याप्तोपदेशात्तद्वस्तुयाथात्म्यदर्शने प्रवृत्तः तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्त्तते, न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्, तस्यानिन्द्रियत्वात् ज्ञानसामग्रीष्विन्द्रियाण्येवापरोक्षसाधनानि

टी० "रज्ज्वादावि"ति, आदि—शब्देन भूदलनादि गृह्यते सर्पविपरीतज्ञानं रज्जुज्ञानन्तेन भयानिवृत्तिश्चेदाप्तोपदेशानर्थक्यं स्यादित्यत आह "आप्तोपदेशस्येति", एतेन प्रथमसूत्रे प्रबलप्रमाणबाधितत्वेन भयादिकार्यन्तु निवर्तत इति भाष्यस्यार्थो ज्ञायते, आप्तोपदेशस्य भयादिकार्यनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्ष्यज्ञाननिमित्तप्रवृत्तिद्वारकमिति

१ छिन्नमूलतयेति पा० ।

२ सिध्यतीति पा० ।

हि तस्य भाष्यार्थः, इममर्थं दृष्टान्तेन दर्शयति "तथा ही"ति, अस्त्व-परोक्षज्ञानमेव तादृशभ्रमविरोधि, शब्द एवापरोक्षज्ञानं जनयतीत्याशङ्क्याह "न चे"ति, हेतुमाह "तस्ये"ति, व्याप्तिं दर्शयति "ज्ञाने"ति, न चानिन्द्रियत्वेऽप्यालोकादेरपरोक्षज्ञानजनकत्वं दृष्टमिति हेतोर्व्यभिचारः, इन्द्रियप्रधानज्ञानसामग्र्यननुप्रविष्टत्वस्य विवक्षितत्वात् । एतच्च ज्ञानसामग्रीष्वित्यनेन सूचितम्, ज्ञानसामग्रीषु सपरिकरास्विन्द्रियलिङ्गशब्दसदृशानुपदस्त्यनुपलब्धिष्वित्यर्थः ॥

सू० न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात्

टी० "इन्द्रियाण्येवे"ति, आलोकादिसहकृतानीति शेषः, इन्द्रियमेव योगिनो व्यवहितादिकं ज्ञापयति तथा विवक्षितपुरुषविशेषस्य वाक्यमपरोक्षज्ञानं जनयतीत्याशङ्क्य परिहरति "न चे"ति, अस्य—पुरुषस्य, हेतुमाह 'निवृत्ते'ति, अनभिसंहितेत्यादि पदद्वयं हृदि निधाय विशेषणद्वयमाह "निवृत्तप्रतिबन्धे तत्परेपी"ति, स्वविषयनियमातिक्रमादर्शनेनेत्यत्र विषय—शब्दः साध्यपरः स्वसाध्यज्ञानानतिक्रमदर्शनेनेत्यर्थः, शब्दसाध्यं ज्ञानं परोक्षमेव शब्दस्तु स्वसाध्यपरोक्षज्ञानं नातिक्रामतीति यावद् । मनसः परोक्षापरोक्षज्ञानसाधारणहेतुत्वात्, शब्दस्य तु लिङ्गस्येव परोक्षज्ञानमात्रहेतुत्वात् न योगिमनसः साम्यमिति भावः । ननु शब्देनाप्यपरोक्षज्ञानं जायते दशमस्त्वमसीति वाक्येन दशमोऽहमित्यपरोक्षज्ञानादिति चेन्न उपदेशानन्तरं शीघ्रभाविप्रत्यक्षसामग्रीजन्येन ज्ञानेन पूर्वज्ञानस्य भेदाग्रहेण प्रत्यक्षत्वारोपात्, तदा ह्युपदेशात्पूर्वभाविनवकपरिसङ्ख्यानजनितसंस्कारवशेनाविलम्बिता ह्यपेक्षाबुद्धिर्जायते यथा घटोऽयमित्युक्ते घटं पश्यतोऽपरोक्षप्रतीतिरिन्द्रियजन्या न तु घटोऽयमिति वाक्यजन्या, वाक्यं त्वापरोक्ष्य-

निमित्तवस्तुव्यापारहेतुः तथा दशमस्त्वमसीति वाक्यं दशमोऽहमिति बुद्धिनिमित्तस्य पूर्वावसितापेक्षणीयवस्तुप्रतिसन्धानस्य हेतुः, न त्वपरोक्षावभासहेतुः, तत्तत्प्रतीतिसामग्रीव्यवहितस्य वाक्यस्य तत्तत्सामग्रीत्वाभावात्, विमतं प्रत्यक्षज्ञानं न वाक्यजन्यं प्रत्यक्षज्ञानत्वात् अनुपदिष्टवाक्यस्य दशमोऽहमिति प्रत्यक्षवत्, विमतं वाक्यं न प्रत्यक्षज्ञानजनकं वाक्यत्वात्संप्रतिपन्नवदिति, एवं सामग्रीशैघ्र्येणान्यथासिद्ध्या परिहारो वस्तुयाथात्म्यापरोक्षनिमित्तं प्रति हेतुत्वेनेति भाष्येणाभिप्रेतः । न च वाक्यजन्येऽपि ज्ञाने विशेष्यभूताहमर्थं प्रत्यक्षतामात्रेण विशिष्टानुप्रविष्टविशेषणांशस्यापि प्रत्यक्षतेति वाच्यम् अहंसमानाधिकृतशब्दोल्लिखितप्रतीतेरपरोक्षत्वनियमश्च नास्ति सुखदुःखाद्यनुमितपुण्यपापस्य पुरुषस्य पुण्यकृदहं पापकृदहमित्यादिप्रतीतेः पुण्यपापयोरापरोक्ष्यादर्शनात् धर्मिप्रत्यक्षतामात्रेण धर्मप्रत्यक्षे लैङ्गिके पर्वतोऽग्निमानिति ज्ञाने अग्नेरपि प्रत्यक्षत्वप्रसङ्गः । तदेतदखिलं स्वविषयनियमातिक्रमादर्शनेन तदयोगादित्यत्राभिप्रेतम् एवं शब्दस्यापरोक्षज्ञानहेतुत्वं दूषितम् ॥

सू० न च ध्यानस्य वाक्यार्थज्ञानोपायता, इतरेतराश्रयत्वाद्वाक्यार्थज्ञाने जाते तद्विषयध्यानं, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति, न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्, तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात्, न ह्यन्यध्यानमन्योन्मुख्यमुत्पादयति, ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम्, ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात्, न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं निवर्त्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम् ॥

टी० अथ ध्यानस्य वाक्यार्थज्ञानोपायतामन्योन्याश्रयणेन दूषयति "न चेत्यादिना", अन्योन्याश्रयणपरिहाराय ध्यानपूर्वभाविज्ञानमर्थान्तरवि-

थं पाश्चात्यज्ञानमर्थान्तरविषयमिति भिन्नविषयताऽऽश्रयणमयुक्तमित्याह "न च ध्याने"ति, कुत इत्यत्राह "तथा सती"ति, कथमुपायत्वहानि? रित्यत्राह "न ह्यन्यध्यान"मिति, एकविषयत्वेऽपि निवर्तकस्य वाक्यार्थज्ञानस्य ध्यानापेक्षा स्यात्, ध्यानस्य वाक्यार्थज्ञानापेक्षा कथ? मित्यत्राह "ज्ञानार्थे"ति, ध्यानहेतुभूतं ज्ञानं हेत्वन्तरजन्यं न तु ध्यानं पश्चाद्भाविवाक्यजन्यज्ञानमूलमित्येवं ध्यानवाक्यार्थज्ञानयोः सामग्रीभेदेनान्योन्याश्रयापरिहारमाशङ्क्य सामग्रीभेदो न सम्भवतीत्याह "ध्येये"ति, हेत्वन्तरासम्भवात्–ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादिति भावः। तत्परिहाराय वाक्यभेदमाशङ्क्य तथा वक्तुमयुक्तमित्याह "न चे"ति, विकल्प्य दूषयति–

सू० ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानन्तत्त्वमस्यादिवाक्यान्तरजन्यज्ञानेनैकविषयम्भिन्नविषयं वा, एकविषयत्वे तद्देवेतरेतराश्रयत्वं, भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासंभवः। किं च ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वान्निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिध्यासनविधीनामानर्थक्यमेव, यतो वाक्यादापरोक्षज्ञानासम्भवाद्वाक्यार्थज्ञानेनाविद्या न निवर्त्तते, तत एव जीवन्मुक्तिरपि दूरोत्सारिता।

टी० "ध्यानमूल"मिति, एकविषयत्वे तद्देवेतरेतराश्रयत्वमिति वाक्यान्तरेण ज्ञानोत्पत्तौ तस्य तत्त्वमस्यादिवाक्यजन्यज्ञानतुल्यविषयत्वात्तस्यापि ज्ञानस्य निदिध्यासनाऽपेक्षा स्यात्। ध्यानस्य च वाक्यार्थज्ञानापेक्षा स्यादित्यन्योन्याश्रयत्वमित्यर्थः। वाक्ययोर्भिन्नविषयत्वे दूषणमाह 'भिन्ने"ति, ध्यानस्य च वाक्यार्थज्ञानविरोधित्वमेवेत्याह 'किंचे"ति, ध्यात्रादीत्यादि–शब्देन शमादि गृह्यते "दृष्टद्वारेणे"ति, अदृष्टद्वारेणोपयोगस्त्वत्यन्तभीरुभिः परैर्निरसनीयद्वैतवासनायाः सत्यत्वप्रसङ्गभयात्प-

रित्यक्त इति ध्याननियोगवादिनोऽभिप्रायः, वाक्यार्थज्ञानमात्रादविद्या-निवृत्तिनिरासेन जीवन्मुक्तिनिरासः सिध्यतीत्याह "यत"इति, दूरोत्सारिता—वाक्यादपरोक्षज्ञानसम्भवेऽपि व्याघातादिना जीवन्मुक्तिरुत्सारिता वाक्यादापरोक्ष्यासम्भवाद्दूरोत्सारितेति भावः ॥

सू॰ का चेयं जीवन्मुक्तिः सशरीरस्यैव मोक्ष इति चेत् । माता मे वन्ध्येतिवदसङ्गतार्थं वचनम्, यतः सशरीरत्व-बन्धः, अशरीरत्वम्मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायम्प्रति-भासोऽपि मिथ्येति प्रत्ययस्तस्य सशरीरत्वनिवृत्तिरिति न, मिथ्येति प्रत्ययेन सशरीरत्वन्निवृत्तं चेत्कथं सशरीरस्य मुक्तिः, अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभास-निवृत्तिरेवेति कोऽयं जीवन्मु[१]क्त इति विशेषः

टी० "का चेयमि"ति, किं-शब्दः क्षेपे, विकल्पाभिप्रायेण प्रश्नपरो वा, तत्स्वरूपं शङ्कते "सशरीरस्ये"ति, व्याहतिमाह "माते"ति, व्याहतिमुपपादयति "यत"इति, व्याहतिपरिहारार्थं तन्मतं शङ्कते "अथे"ति, सशरीरत्वनिवृत्तिरिति निर्देशेन सशरीरत्वस्य छिन्नमूलता जीवन्मुक्तिवादिनाऽभिप्रेता, दूषयति "न"इति, सशरीरत्वस्य सत्यत्वानभ्युपगमात् तस्य प्रध्वंसरूपा स्वरूपनिवृत्तिरनभिमता, अतः प्रतिभासनिवृत्तिर्वा प्रतिभाससात्त्विकताऽभिमाननिवृत्तिर्वा विवक्षिता स्यादित्यभिप्रायेण प्रथमकल्पमनूद्याभिमतासिद्ध्या दूषयति "मिथ्येती"ति, सशरीरत्वं—सशरीरत्वप्रतिभासः अनन्तरवाक्ये प्रतिभासनिर्देशात् । कथं सशरीरस्य मुक्तिरिति सशरीरस्य मुक्तिरुक्ता भवतीत्यर्थः । तदेवोपपादयति "अजीवतोऽपी"ति, मिथ्याप्रतिभास—शब्देन भ्रान्तिज्ञानं विवक्षितं, जीवदजीवन्मुक्त्योर्विशेषाभावाच्च शरीरस्य मुक्तिरुक्ता स्यादित्यर्थः । द्वितीयं शिरः शङ्कते—

१ केयं जीवन्मुक्तिरिति पा॰ ।

मू० अथ सशरीरत्वप्रतिभासोबाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते स जीवन्मुक्त इति चेन्न ब्रह्मव्यतिरिक्तसकलविषयकत्वात् बाधकज्ञानस्य, कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुं, द्विचन्द्रज्ञानादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता, किंच "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य"-इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति

टी० "अथे"ति, अत्र पूर्वं सशरीरत्वप्रतिभासे वर्तमान इत्यादिग्रन्थाभिप्रेतार्थो विवृतो भवति। दूषयति "ने"ति, कथमित्यत्राह "ब्रह्मे"-ति, अविद्याकर्मादीत्यादि–शब्देन वासना गृह्यते, तेनैव बाधितः–बाधकज्ञानेन बाधितः इत्यर्थः "द्विचन्द्रज्ञानादौ हि बाधितानुवृत्तिर्दृष्टेत्यत्राह "द्विचन्द्रज्ञानादावि"ति, न हि रज्जुयाथात्म्यज्ञानेन शुक्तौ रजतभ्रमो निवर्तत इति भावः। प्रथमसूत्रे बाधितानुवृत्तिनिराकरणे दोषस्य पारमार्थिकत्वेन ज्ञानबाध्यत्वाभावाद्भ्रमानुवृत्तिरुक्ता, अत्र तु चन्द्रैकत्वज्ञानाविषयत्वेन दोषस्याबाधितत्वात् द्वित्वज्ञानानुवृत्तिरुक्तेति भिदा, जगन्मायावादिनोऽपि कृत्स्नमिथ्यात्वस्याभ्युपगतत्वादेवं वैषम्यमुक्तम्। जीवन्मुक्तेः श्रुतिविरोधमाह "किञ्चे"ति, स्मृतिविरोधमाह 'सैषे'ति, वेद–शब्देन त्रिवर्गसाधनकर्माण्युच्यन्ते तत्फलमुच्यते इमं लोकममुं चेति बुद्ध–वाक्यार्थज्ञाने जाते सति क्षेमप्रापणं मोक्षः तच्छास्त्रैर्विप्रतिषिद्धं, शास्त्रैरिति बहुवचनस्यायम्भावः। वाक्यार्थज्ञानोत्तरभाव्युपासनविधिपरैः, "एवं वर्तयन्

मू० सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता "वेदानिमं लोक-

ममुष्य परित्यज्यात्मानमन्विच्छेत् बुद्धे क्षेमप्रापणं तच्छा-स्त्रैर्विप्रतिषिद्धं बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपल-भेत एतेन परं व्याख्यात"मिति अनेन ज्ञानमात्रान्मोक्षस्य निरस्तः, अतस्सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न सम्भवति, तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः ॥

टी० यावदायुषमित्याप्रयाणादनुवृत्तिपरैर्मोक्षस्य शरीरपातमात्र-सापेक्षत्वपरैः "तयोर्द्ध्वमायन्नमृतत्व"मिति नाडीविशेषनिष्क्रमणपरैरर्चि-रादिमार्गेण देशविशेषप्राप्तिपरैश्चानेकैः शास्त्रैर्विरोध इति विप्रतिषिद्ध-मिति च "भूयसां स्यात् बलीयस्त्व"मिति न्यायादिति भावः । प्रत्यक्षविरो-धमपि स्मृतिरेवाह "बुद्धे चेदि"ति, एतेन परं व्याख्यातम्—एतेन शास्त्र-प्रत्यक्षविरोधेन औडुलोमिमतानुसारिणोक्तमन्यदपि व्याख्यातं सर्वमप्यपा-स्तमित्यर्थः । यद्वा यथेदानीं दुःखोपलब्धिस्तथा प्रेत्यापीत्यर्थः । यद्वा यथा दुःखनिवृत्तिर्नोपलभ्यते तथा सुखनिवृत्तिरपि नेत्यर्थः । जीवन्मु-क्तिनिरासार्थमुदाहृतेन वचनेन वाक्यार्थज्ञानमात्रान्मोक्षश्चार्थान्निरस्त इत्याह । "अनेने"ति, जीवन्मुक्तिनिरासमुपसंहरति "अत" इति, जीव-न्मुक्तिनिरासेन स्वमतस्थैर्यसिद्धिमाह "तस्मादि"ति, वाक्यार्थज्ञानमात्रा-न्मोक्षवादिनोक्तो चोद्यपरिहारो ममापि तुल्यावित्याह—

मू० न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः, प्रतिब-न्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किं च न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते किन्तु निष्प्रपञ्चज्ञानैकरस-ब्रह्मापरोक्षज्ञानेन, नियोगस्तु तदापरोक्ष्यज्ञानं जनयति, कथन्नियोगस्य ज्ञानोत्पत्तिहेतुत्व ? मिति चेत् कथं वा भवतो ऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतु-

त्वम् ? मनोनैर्मल्यद्वारेणेति चेत्, ममापि तथैव, मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत् ॥

टी० "न च योगे"ति, नियोगनिवर्त्यत्वे प्रपञ्चस्य सत्यत्वं स्यादित्याशङ्क्याह "किं चे"ति, ध्याननियोगपक्षानुपपत्तिपरिहारस्य विवक्षितत्वात् किं च–शब्दप्रयोगः, नियोगस्य निवर्त्तकत्वं ज्ञानद्वारकमिति न निवर्त्यसत्यत्वमित्यर्थः, नियोगस्य ज्ञानोत्पत्तौ किञ्चित्कारबुभुत्सया पृच्छति "कथमि"ति, न खलु ज्ञाने दृष्टः किञ्चित्कारो नियोगेन सम्भवति अतः स वक्तव्य इति भावः। प्रतिबन्द्या परिहरति "कथं वे"ति, वेदनोत्पत्तिहेतुत्वमिति इच्छाद्वारा वेदनोत्पत्तिहेतुत्वमभिप्रेतं विविदिषन्तीति श्रुतावित्याहार्यते परिहारं शङ्कते "मन"इति, तत्साम्यमाह "ममापी"ति, पुनराशङ्कते "मम त्वि"ति, मनो हि साधारणकारणं तस्मिन् सत्यप्यसाधारणकारणमपेक्षितन्तन्ममास्ति त्वया तु वक्तव्यमिति चेदित्यर्थः, वैशेषिकाद्यभिमतमानसप्रत्यक्ष इव प्रकृष्टादृष्टसहकृतमनोमात्रकारणके तत्सर्वं धर्मवीर्येण यथावत्सम्प्रपश्यसीत्यादिसिद्धे योगिप्रत्यक्ष इव च मन एवासाधारणकारणमिति परिहरति–

भू० ध्याननियोगनिर्मलम्मन एव साधनमिति ब्रूमः। केनावगम्यत? इति चेत् भवतो वा कर्मभिर्मनो निर्मलम्भवति निर्मले मनसि श्रवणमनननिदिध्यासनैस्सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयतीति केनावगम्यते? "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "श्रोतव्यो मन्तव्यो निदिध्यासितव्य." "ब्रह्म वेद ब्रह्मैव भवती"त्यादिभिः शास्त्रैरिति चेत् ॥

टी० "ध्याने"ति, मनोमात्रस्य साधारणकारणत्वेऽपि निर्मलतरस्य मनोविशेषस्यासाधारणकारणत्वं युक्तमिति भावः। तज्ज्ञापकं प्रश्न

शङ्कते "केनेति", ज्ञापकस्वारस्यलक्षणं स्वपक्षे वैषम्यं दर्शयितुं पृच्छति "भवतो वे"ति, निदिध्यासनेन विषयमुखीकृतमनस्कस्य शास्त्रेण निवर्त्तकज्ञानोत्पत्तौ प्रमाणतया पराभिमतानि श्रुतिवाक्यानि शङ्कते "विविदिषन्ती"ति, "ब्रह्म वेद ब्रह्मैव भवती"ति वेदन–शब्देन वाक्यार्थज्ञानं विवक्षितमिति पराभिप्रायः। मनसोऽज्ञानसाधनत्वे प्रमाणं दर्शयति–

सू० ममापि श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ब्रह्मविदाप्नोति परन्न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन हृदा मनीषा मनसा ऽभिक्लृप्त" इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलम्भवति निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम्। नेदं यदिदमुपासत इत्युपास्यत्वं प्रतिषिद्धमिति चेत् नैवम्, नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते, अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते॥

टी० "ममापी"ति, न चक्षुषेत्यादिवाक्यं मनस एव साधनत्वे स्वरसं ब्रह्म वेदेत्यत्र वेदन–शब्दस्य वाक्यार्थज्ञानपरत्वं तु न स्वरसतः प्रतीयते, न च श्रुत्यन्तरैकार्थ्येन तत्परत्वेऽवगमः, वाक्यार्थज्ञानस्योपायत्वकण्ठोक्तिमच्छ्रुत्यन्तराभावादित्यभिप्रेतं, मिथ्यात्वनिबन्धनाः सर्वे चोद्यपरिहाराः समानाः, परोक्षज्ञानस्याप्यपरोक्षभ्रमनिवर्तकत्वे शास्त्रप्रत्यक्षविरोधौ श्रुतिस्वारस्यहानिश्च भवतां पक्षेऽधिकं दूषणमिति वैषम्यज्ञापनाय कथमित्यादिना प्रतिबन्दिमुखेन तत्तच्छङ्कापरिहारः कृतः इति–शब्दो नानन्तरवाक्यविशेषः अपि तु प्रकरणशेषः। उपास्यत्वप्रतिषेधं शङ्कते "नेदमि"ति, परिहरति "नैवमि"ति, तस्य वाक्यस्यैवं निर्वाहो न युक्त इत्यर्थः। उपास्यत्वनिषेधः प्रतीयत इत्याह "नात्रे"ति, कस्तर्ह्यर्थः? इत्यत्राह "अपि त्वि"ति, कथं वैरूप्यप्रतिपादनम्? इत्यत्राह–

सू० यदिदं जगदुपासते प्राणिनः नेदं ब्रह्म तदेव ब्रह्म त्वं विद्धि यद्वाचाऽनभ्युदितं येन वागभ्युद्यते इति वाक्यार्थः अन्यथा तदेव ब्रह्म त्वं विद्धीति विरुद्ध्येत ध्यानविधिवैयर्थ्यं चात्मनः स्यात्, अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः। यदपि कैश्चिदुक्तम्–भेदाभेदयोर्विरोधो न विद्यत इति, तदयुक्तम् न हि शीतोष्णतमः-प्रकाशादिवद् भेदाभेदावेकस्मिन्वस्तुनि सङ्गच्छेते॥

टी० "यदिदमुपासत" इति, इदमंशे निषेधस्य तात्पर्यमिति भावः। ब्रह्मेत्युपासीतेत्यादिना विहितप्रतीकोपासनोपास्यानि हि परिच्छिन्नानि नेदम्ब्रह्म किन्त्वपरिच्छिन्नन्तदेव परम्ब्रह्मेत्यर्थः। अनेन अन्यदेव तद्विदितादित्यादिकमपि जगद्वैरूप्यपरमिति व्याख्यातम्भवति। यद्वाचानभ्युदितं–वक्तुमशक्यम् अपरिच्छिन्नम्, अन्यथेति स्ववाक्यविरोध उक्तः, ध्यानविधिवैयर्थ्यमिति वाक्यान्तरविरोध उक्तः। स्वपक्षमुपसंहरति "अत" इति, अथायमेव ध्याननियोगवादी भास्करमतन्दूषयितुन्तदभिमतभेदाभेदविरोधमनुवदति "यदपीत्या"दिना, प्रथमं संक्षेपेण दूषयति "तदयुक्तमि"ति, नियमेन भिन्नाधारत्वलक्षणः सहानवस्थानलक्षणश्चेति विरोधोद्विधा, आदि–शब्देन तृणदहनादेरिव नाश्यनाशकभावो विवक्षितः तद्वद्भेदाभेदयोरपि विरोधोऽस्तीत्याह "न ही"ति, । अथ भेदाभेदमतं विस्तरेण प्रस्तौति–

सू० अथोच्येत सर्वमेव हि वस्तुजातं प्रतीतिव्यवस्थाप्यं सर्वं च भिन्नाभिन्नं च प्रतीयते कारणात्मना जात्याऽऽत्मना चाभिन्नम्, कार्य्यात्मना व्यक्त्यात्मना च भिन्नम्, छायातपादिषु विरोधः सहानवस्थाननियमलक्षणो भिन्नाधार-

त्वरूपस्य कार्य्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते, यथा मृदयं घटः, खण्डो गौः मुण्डो गौरिति, न चैकरूपं किंचिदपि वस्तु लौकि[1]कैर्दृष्टचरम्, न च तृणादेर्ज्वलनादिवदभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः मृत्सुवर्णगवाश्वाद्यात्मना ऽवस्थितस्यैव घटमुकुटखण्ड[2]मुण्डाद्यात्मना चावस्थानात्—

टी० "अथोच्यते"ति, वक्ष्यमाणौपयिकमर्थं शिक्षयति "सर्वं ही"ति, शीतोष्णादिष्वपि विरोधः प्रतीत्यधीन इति भावः । ततः किमित्यत्राह "सर्वं चे"ति, कथमिभचाभिचत्व? मित्यत्राह "कारणात्मने"ति, पूर्वोक्तद्विविधविरोधोपलम्भस्थलवैरूप्यं वक्तुमाह "कार्ये"ति, ततः किमित्य'त्राह 'कार्यं"ति, अविरोधेनोपलब्धिमाह "प्रत्युते"ति, उपलब्धिमभिनयेन दर्शयति "यथे"ति अद्विरूपवस्त्वनुपलब्धिमाह "न चे"ति, नाश्यनाशकत्वलक्षणस्तृतीयविरोधो नास्तीत्याह "न च तृणादेरि"ति, वस्तुविरोध-शब्देन नाश्यनाशकत्वलक्षणविरोधो विवक्षितः, तादृशविरोधाभावमुपपादयति "मृत्सुवर्णे"ति, जातिगतो ऽभेदोव्यक्तिगतश्च भेद इति, कथमेकस्य भेदाभेदा? विति शङ्कायां जातिव्यक्त्योः परस्परभेदाभेदावुपपादयति—

सू० न चाभिन्नस्य भिन्नस्य च वस्तुनो ऽभेदोभेदश्चैक एवाकार इतीश्वराज्ञा, प्रतीतत्वादैकरूप्यं चेत् प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम्, न हि विस्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेष्वियं मृदयञ्च घटः, इदञ्च गोत्वमियं व्यक्तिरिति

१ लोके दृष्टचरमिति पा० ।
२ खण्डवडवाद्यात्मना इति पा० ।

विवेक्तुं शक्नोति, अपि तु मृदयं घटः खण्डो गौरित्येव च प्रत्येति, अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्य्यं व्यक्तिश्चेति विविनक्तीति, चेन्नैवम् विविक्ताकारानुपलब्धेः ॥

टी० 'न चाभिन्नस्ये'ति, अभिन्नस्य–जातेः, भिन्नस्य–व्यक्तेरित्यर्थः जातेरभेद एवाकारः, व्यक्तेर्भेद एवाकार इति किमीश्वराज्ञया स्वीक्रियते ? न हि प्रमाणतर्कानादरेण हठात्कश्चिदर्थः स्वीकार्य इति भावः। प्रतीतिबलादभ्युपगमं शङ्कते "प्रतीतत्वादि"ति, तथा स्वमतस्याभ्युपगन्तव्यतामाह "प्रतीतत्वादेवे"ति, त्वदुक्तादेवेत्येवकाराभिप्रायः "द्वैरूप्यमपी"ति, अनिष्टमपीत्यपि–शब्दस्याभिप्रायः। प्रतीतत्वमेवोपपादयति "न ही"ति–इयं जातिरियं व्यक्तिरिति विविक्ते ह्यत्राभेदोऽत्र भेद इति वक्तुं युक्तं, तथा विविच्यत इत्यर्थः। तर्हि कथं प्रतीति ? रित्यत्राह "अपि त्वि"ति, एकम् एव वस्तु जात्यात्मना व्यक्त्यात्मना च भिन्नमभिन्नञ्च प्रतीयत इत्यर्थः मृदयङ्घट इत्यनेन मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययो भेदाभेदसाधकयुक्तिरुक्ता भवति। अनुवृत्तिव्यावृत्तिभ्यां विवेकं शङ्कते "अनुवृत्ती"ति, परिहरति "नैवमि"ति, विविक्ताकारानुपलब्धिं विवृणोति–

मू० न हि सुसूक्ष्ममपि निरीक्षमाणैरिदमनुवर्तमानमिदं च व्यावर्त्तमानमिति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते यथा संप्रतिपन्नैक्ये कार्य्ये विशेषे चैकत्वबुद्धिरुपजायते तथैव सकारणे ससामान्ये चैकत्वबुद्धिरविशिष्टोपजायते, एवमेव देशतः कालतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु तदेवेदमिति प्रत्यभिज्ञा जायते, अतो ह्यात्मकमेव वस्तु प्रतीयत इति कार्य्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् ॥

टी० "न हि सुसूक्ष्ममपीति", विविक्ताकारोपलम्भे सति ह्यस्मिचंशेऽनुवृत्तिबुद्धिबोध्यत्वम् अस्मिचंशे व्यावृत्तिबुद्धिबोध्यत्वमिति ज्ञातुं शक्यमित्यर्थः । आकारभेदोऽंशभेदः, तर्हि कथमुपलम्भ? इत्यत्राह "यथा सम्प्रतिपन्ने"ति, विशेषो—व्यक्तिः यथा कार्यैकत्वं व्यत्त्येकत्वं च सम्प्रतिपन्नं तथा कार्यकारणयोर्जातिव्यक्त्योश्चैकत्वबुद्धिर्जायत इत्यर्थः । एकत्वबुद्धिरित्यनेन एक—शब्दानुविद्धप्रत्यय उक्तो भवति । सहोपलम्भनियमः—प्रथमपिण्डग्रहणे अंशभेदेनाग्रहणं चार्थादुक्तं भवति न विवेक्तुं शक्नोतीत्युक्तेः, एवं जातिव्यक्त्योरन्योन्यम्भेदाभेद उक्तः । अथ पिण्डानाम्परस्परभेदाभेद उच्यते "एवमेवेति", देशकालवैलक्षण्यं स्पष्टनीलत्वखण्डत्वादिराकारवैलक्षण्यम्, अत्यन्तभेदः—अभेदासहोभेद इत्यर्थः । अत्र चोद्यमाशङ्कते—

मू० अथोच्येत मृदयं घटः खण्डो गौरिति वत् देवोऽहमनुष्योऽहमिति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्, अत इदम्भेदाभेदोपपादनम् निजसदननिह्नितहुतवहज्वालायत इति, तदिदमनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम्, तथा ह्यबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति देवाद्यात्माभिमानस्त्वात्मयाथात्म्यगोचरैः सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं साधयति, खण्डो गौर्मुण्डो गौरिति सामानाकरण्यस्य न केनचित् क्वचिद्बाधो दृश्यते तस्मान्नातिप्रसङ्गः, अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः ॥

टी० "अथोच्येतेति", देहात्मनोः सद्रव्यात्मनैकत्वेऽभिमतेऽपि देहरूपेण आत्मरूपेण वा तयोरैक्यस्याप्रामाणिकत्वात्तयोर्भेदाभिन्नत्वचे-

ष्टमिति भावः "परिहरति", "तदिद"मिति, अबाधितं सामानाधिकरण्यमभेदाभेदसाधकम् अबाधितश्च भेदाभेदस्तत्त्वमित्यजानतोक्तमित्यर्थः। तदुपपादयति "तथा ही"ति. परिहारौपयिकमर्थं शिक्षयति "अबाधित" इति, ततः किमित्यत्राह 'देवादीति'', जातिव्यक्त्योरपि तथा स्यादित्यत्राह "खण्ड" इति", एवं लौकिकार्थानामभेदाभेद उक्तः। तदुपजीव्य वैदिकेष्वप्यर्थेषु जीवब्रह्मणोर्भेदाभेदमाह "अत एवेति", अतः-भेदाभेदयोरविरुद्धत्वादित्यर्थः। ब्रह्मांशत्वेत्यत्रांशो नानाव्यपदेशा,, दिति सूत्रं स्मारितम् अचिद्ब्रह्मणोर्भेदाभेदः स्वाभाविक इति भास्करयादवयोरुभयोरप्यभिमतं चिद्ब्रह्मणोस्तु भेदाभेदौ स्वाभाविकाविति यादवमतव्यावृत्त्यर्थमाह—

मू० तत्राभेद एव स्वाभाविको भेदस्त्वौपाधिकः। कथमिदमवगम्यत? इति "तत्त्वमसि" "नान्योतोऽस्ति द्रष्टा" "अयमात्मा ब्रह्मे"त्यादिभिः श्रुतिभिर्ब्रह्ममे द्यावापृथिवी इति प्रकृत्य "ब्रह्म दाशा ब्रह्मदासा ब्रह्ममे कितवा उत स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमानि"त्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "ज्ञाज्ञौ द्वावजावीशनीशौ क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" "स कारणङ्कारणाधिपाधिपः" तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशी"ति "य आत्मनि तिष्ठन् प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरं प्राज्ञेनात्मनाऽन्वारूढ उत्सृजन् याति" "तमेव विदित्वा ऽतिमृत्युमेती"त्यादिभिर्भेदश्रवणाच्च जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ॥

टी० "तत्रे"ति, कथमिति भेदाभेदसद्भावे तत्राभेदस्यैव स्वाभाविकत्वे च किं प्रमाणं? मित्यर्थः। अभेदस्य स्वाभाविकत्वेन प्राधान्यात् प्रथममन्यथा चेति सूत्रांशविषयवाक्यमाह "तत्त्वमसीति", दाशकितवेत्याद्यंशविषयमाह "ब्रह्मेम इति", नानाव्यपदेशादित्यंशस्य विषयमाह "नित्यो नित्याना" मिति, क्रियागुणैरात्मगुणैश्चेति क्रियागुणाः–संसारहेतुगुणाः आत्मगुणाः–मोक्षहेतुगुणाः तैः संयोगहेतुभिरित्यर्थः। अत्र भेदस्यौपाधिकत्वं कथमवगम्यते? इत्यत्राह–

सू० तच "ब्रह्म वेद ब्रह्मैव भवती"त्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात् "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कम्पश्येदिति तदानीं भेदेनेश्वरदर्शननिषेधाच्चाभेदः स्वाभाविक इत्यवगम्यते। ननु च "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति सह श्रुत्या तदानीमपि भेदः प्रतीयते, वक्ष्यति च "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्चे"ति नैतदेवं नान्योतोऽस्ति द्रष्टेत्येवमादिश्रुतिशतैरात्मभेदप्रतिषेधात्, "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति सर्वैः कामैः सह ब्रह्माश्नुते सर्वगुणान्वितं ब्रह्माऽश्नुते इत्युक्तं भवति, अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत ॥

टी० "तत्रेति", तत्स्वरूपापत्तिव्यपदेशो भेदनिषेधश्च अभेदस्यानौपाधिकत्वज्ञापकावित्यर्थः। मुक्तौ भेदनिषेधादेव भेदस्यौपाधिकत्वमप्यर्थसिद्धम्। मुक्तौ भेदं दर्शयंश्चोदयति "ननु चे"ति, सह–शब्दो भोक्तृसाहित्यपर इति चोदयितुरभिप्रायः। भोग्यसाहित्यबुद्ध्या परिहरति "नैतदिति", भेदप्रतीतिं परिहरिष्यन्मुक्तौ भेदस्य श्रुतिविरुद्धतान्दर्शयति "नान्य" इति,

भेदप्रतीतिम्परिहरति "सो ऽश्नुत" इति, इति वाक्येनोक्तम्भवतीत्यन्वयार्थः। ब्रह्मणा सह गुणानश्नुते गुणांश्च ब्रह्म चानुभवतीति, किं ब्रह्म पृथग्भूतो-ऽश्नुते उतापृथग्भूत? इत्यपेक्षायान्तद्वाक्यान्तरावगम्यम् अतो नात्र भेदप्रतीतिरिति भावः। एतदुपपादयति "अन्यथेति", अप्राधान्यम्भोक्त्रन्तरापेक्षया दोषः भोग्यभूतस्वगुणापेक्षया तु न दोष इति भावः। परोदाहृतसूत्रस्य स्वाभिमतमर्थमाह—

सू० जगद्व्यापारवर्जमित्यत्र मुक्तस्य भेदेनावस्थाने सत्यैश्वर्यस्य न्यूनता प्रसङ्गो वक्ष्यते, अन्यथा "सम्पद्याविर्भावः स्वेन शब्दादित्या" दिभिर्विरोधात्, तस्माद्भेद एव स्वाभाविको भेदस्तु जीवानाम्परस्माद्ब्रह्मणः परस्परञ्च बुद्धीन्द्रियदेहोपाधिकृतः, यद्यपि ब्रह्म निरवयवं सर्वगतं च तथाप्याकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदः सम्भवत्येव। न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीरेतराश्रयत्वम्, उपाधेस्तत्संयोगस्य च कर्मकृतत्वात्, तत्प्रवाहस्य चानादित्वात् ॥

टी० "जगदि"ति, ब्रह्मणो मुक्तस्य च भेदे सति जगद्व्यापारवर्जत्वप्रसङ्गान्न भेद इति सूत्रार्थ इत्यर्थः। तदुपपादयति "अन्यथे"ति, अभेदस्य स्वाभाविकत्वन्निगमयति "तस्मादि"ति, मुक्तौ भेदनिषेधादर्थसिद्धम्भेदस्य औपाधिकत्वमेवकाराभिप्रेतम् उपाधिः कः? इत्यपेक्षायामाह "भेदस्त्वि"ति औपाधिकत्वरूपवैषम्यपरस्तु—शब्दः शङ्काद्योतको वा ब्रह्मणो विभुत्वनिरवयवत्वाभ्यां जीवगत उपाधिर्ब्रह्मण्येवेति तदसंसृष्टप्रदेशाभावात् जीवेश्वरभेदो न सम्भवतीत्यत्राह "यद्यपी"ति, अन्योन्याश्रयमाशङ्क्याह "न चे"ति, ईश्वरांशे कर्मकृतबुद्ध्युपाधिसम्बन्धाभावादुपाधिसंयोगस्य भेदपूर्वकत्वम्प्रवाहानादितया परिहरति "उपाधेरि"ति, कथमुपा-

धितत्संयोगकर्मणाम्प्रवाहानादित्वं ? तेन वान्योन्याश्रयपरिहारः कथ ? मिति शङ्कायान्तद्विवृणोति—

सू० एतदुक्तं भवति—पूर्वकर्मसम्बद्धाज्जीवात्वसम्बद्ध एवोपाधिरुत्पद्यते, तद्युक्तात्कर्म, एवं बीजाङ्कुरन्यायेन कर्मोपाधिसम्बन्धस्यानादित्वाददोष इति, अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविको भेदस्त्वौपाधिकः, उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवत्, भेदोऽपि स्वाभाविकः उपाधीनामुपाध्यन्तराभावात्तदभ्युपगमे अनवस्थानाच्च, अतो जीवकर्मानुरूपं ब्रह्मणोभिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्त इति । अत्रोच्यते, अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते, भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते भेदाभेदयोः परस्परविरोधादनाद्यविद्याम्बकलतयाऽपि भेदप्रतीत्युपपत्तेरभेद एव परमार्थः इत्युक्तम्, तत्र यदुक्तम्भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोध इति तदयुक्तम् ।

टी० "एतदुक्तमि"ति, तद्युक्तात्कर्मेति कर्मवश्यत्वं हि जीवत्वं उपाधिना जीवत्वं जीवभावादुपाध्यन्तरमित्यनादिरित्यर्थः । फलितमाह "अत" इति, अचिदंशे वैषम्यमाह "उपाधीनाम्पुनरि"ति, पुनस्त्वर्थः वैषम्ये हेतुद्वयमाह "उपाधीनामि"ति, भिन्नाभिन्नत्वपक्षमुपसंहरति "अतो जीवकर्मे"ति, । अथ भेदाभेदपक्षं ध्याननियोगवादी दूषयति "अत्रोच्यत इत्यादिना, पूर्वं यदपि कैश्चिदुक्तमिति प्रक्रान्तस्य पूर्वपक्षस्योत्थापकं सङ्गतिस्थलन्दर्शयितुमाह "अद्वितीये"ति, तत्सङ्गतिस्थलन्दर्शयति "तत्र यदुक्तमि"ति, भेदाभेदविषयप्रवृत्तिं दूषयिष्यन् पूर्वन्तयोर्विरोधं संपादयितुं तत्स्वरूपमाह—

मू० कस्माच्चित्कस्यचिद्विलक्षणत्वं हि तस्मात्तस्य भेदस्तद्विपरीतत्वञ्चाभेदस्तयोस्तथाभावातथाभावरूपयोरेकत्र सम्भवमनुन्मत्तः को ब्रवीति, कारणात्मना जात्यात्मना चाभेदः कार्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदादविरोध इति चेन्न विकल्पासहत्वात्, आकारभेदादविरोध इति वदतः किमेकस्मिन्नाकारे भेदः? आकारान्तरे चाभेद इत्यभिप्रायः? उताकारद्वययोगिवस्तुगतावुभावपी?ति, पूर्वस्मिन्कल्पे व्यक्तिगतो भेदो जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता,

टी० "कस्माच्चिदि"ति, विलक्षणत्वमन्यत्वम् इदमिदञ्च भवति इदमिदन्नभवतीति हि भेदाभेदविषयप्रतीतिः। ततः किमित्यत्राह "तयोरि"ति, भेदाभेद इति न कस्यचिद्धर्मस्य संज्ञा लोकप्रसिद्ध्यनुगुणोऽर्थो भेदाभेद–शब्दस्य स्वीकृतश्चेद् भेदाभेदयोर्भावाभावरूपयोर्विरोधोऽवर्जनीय इत्यर्थः। किञ्चानेन क्वचिदपि विरोधोनास्तीति न वक्तुं शक्यम् त्रिविधविरोधोपलब्धेः, यदि भावाभावयोर्न विरोधस्तर्हि भिन्नाभिन्नत्वं भवति न भवतीति स्वपरवचसोरपि विरोधाभावस्स्यात्.। परोक्तं पिण्डद्वयभेदाभेदस्याकारभेदादविरोधमनुवदति "कारणात्मने"ति, तद्विकल्प्य दूषयति "नेत्यादि"ना, एकस्मिन्नाकार इति आकार–शब्दः पदार्थपरः पूर्वस्मिन्कल्प इति न जातिव्यक्त्योः किं परस्परं भेदः? उताभेदः? उताभेदाभेद? इति विकल्पत्रयमभिप्रेत्य प्रथमं शिरोदूषयति "व्यक्तिगत"इति, द्वितीयमनुवदति–

मू० जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत् तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात्, एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम्, द्वितीये तु कल्पे अन्योन्य-

विलक्षणमाकारद्वयमप्रतिपन्नञ्च । तदाश्रयभूतं वस्त्विति तृतीतयाभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यात् न पुनरभेदः, आकारद्वयनिरू[1]प्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत्स्वस्मादिलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन् विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत् ॥

टी० "जातिरि"ति, दूषयति "तर्ही"ति, विरोधस्तिष्ठत्येवेत्यर्थः । तृतीयं दूषयति "एकस्मिँश्चे"ति, जातिर्व्यक्तिर्भवति न भवतीति भावाभावविरोधः स्थित एवेत्यर्थः । कण्ठोक्तपूर्वकल्पस्यैव द्वितीयं शिरो दूषयति "द्वितीये तु कल्पे" इति, अत्र तृतीयस्य जातिव्यक्तिव्यतिरिक्तस्य वस्तुनोऽप्रतिपन्नत्वनामैकं दूषणमधिकं तदिदमप्रतिपन्नञ्चेत्यनेनाभिप्रेतम् । प्रतिपन्नत्वाभ्युपगमेऽपि दूषणमाह "तृतीयाभ्युपगमेऽपी"ति, न पुनरिति अन्यथा त्रित्वाभावादित्यर्थः । अत्र तृतीयवस्तुन्याकारद्वयेन भेदाभेदयोर्निर्वाह्यत्वेनाविरोधित्वं शङ्कते "आकारद्वये"ति, इदमाकारद्वयं किं स्वाश्रयेण भिन्न ? मुताभिन्न ? मुत भिन्नाभिन्न ? मिति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति "स्वस्मादि"ति, स्व—शब्दत्रयमप्याश्रयपरं भेदाभेदयोरेकाश्रयत्वेन हि विरोधः । अविरोधनिर्वाहकाकारद्वयं न हि भेदाभेदयोराश्रयभूतम् अतो न तदविरोधनिर्वाहकम् अग्निगतं पैङ्गल्यमौज्ज्वल्यञ्चाकारद्वयमग्नौ शीतोष्णत्वरूपविरुद्धधर्मद्वयसमावेशनिर्वाहकं न भवतीत्यर्थः । द्वितीयं शिरो दूषयति–

सू० अविलक्षणं तु कथन्तराम् ? आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयाऽनवस्था[2]नात्, न च सम्प्रतिपन्नैकव्यक्तिप्रतीतिवत्ससामान्येऽपि वस्तुन्येक-

---

[1] निरूप्यमाणेति ।

[2] अनवस्था स्यादिति पा० ।

रूपा प्रतीतिरुपजायते यत इदमित्थमिति सर्वत्र प्रकार-प्रकारितयैव सर्वा प्रतीतिः, तत्र प्रकारांशोजातिः, प्रकार्यंशोव्यक्तिरिति नैकाकारता प्रतीतिः ॥

टी० "अविलक्षणमि"ति पूर्वमाकारद्वये सम्भवति तस्य विरुद्धधर्मद्वयनिर्वाहकत्वायोग उक्तः, अत्र तु आकारद्वयमेव नास्तीति नितरां विरुद्धधर्मसमावेशायोग इत्यभिप्रायेण कथन्तरामित्युक्तं, तृतीयं शिरो दूषयति "आकारद्वयतद्वतोरि"ति, आकारद्वयस्य तदाश्रयस्य च भिन्नाभिन्नत्वनिर्वाहकमाकारद्वयान्तरमपेक्षितं, तस्यापि स्वाश्रयेण भिन्नाभिन्नत्वमस्ति चेत्तदविरोधनिर्वाहकाकारद्वयान्तरमपेक्षितमित्यनवस्था स्यादित्यर्थः । अथ "किं दृष्ट्येनुपपन्नं नामे"ति, शङ्कायां भेदाभेदविषयप्रतीतिं दूषयति "न चे"ति, हेतुमाह "यत"इति, तस्यां प्रतीतौ प्रकारप्रकारिणौ विविच्य दर्शयति "तत्रे"ति, अनेनेदमपि परिहृतं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यं सहोपलम्भनियमः एक—शब्दानुविद्धप्रत्ययः प्रथमे पिण्डग्रहणे जातिव्यक्त्योरभेदेन प्रतीतिश्चेति हेतुचतुष्टयमपृथक्सिद्धविशेषणत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुः, अपृथक्सिद्धिश्च प्रकारप्रकारिणोः सम्बन्धनियमादेवोपपन्ना, अतः प्रकारप्रकारिभावप्रतिपन्नभेदविरुद्धाभेदकल्पनाया अनवकाशः सम्बन्धनियम एव सहोपलम्भनियमहेतुश्च एकोऽयं गौरिति प्रत्ययोऽप्येको ऽयं दण्डीतिवद्विशेष्यैक्यविषयः न तु विशेषणविशेष्यैक्यविषयः प्रथमपिण्डग्रहणेऽपि प्रकारप्रकारिभावाद् भेदेनैव प्रतीतिः । किञ्च, सहत्वमपि भेदसाधकं द्वयोरेव हि साहित्यं सहोपलम्भनियमश्च सम्प्रतिपन्ने भिन्ने अभिन्ने च न दृष्ट इति असाधारणानैकान्तिकत्वान्नोभयसाधकः । भिन्नेष्वभिन्नेषु चादृष्टस्य भेदाभेदसाधकत्वेऽभ्युपगम्यमाने नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं गन्धवत्त्वं पृथिव्यानित्यत्वानित्यत्वसाधकं स्यात् चोदकं स्यात् किञ्च, साधननियमः साध्यनियमहेतुरिति सहत्वनियमोभेदनियमहेतुरेव अत्र जातिरत्र व्यक्तिरिति प्रदेशभेदाग्रहणं जातेः पिण्डव्याप्यवृत्तित्वात् । तच्च सहोपलम्भनियमान्तर्गतं । प्रदेशतः कालतश्चोपल-

म्भनियमो हि सहोपलम्भनियमः, अतो देशतः कालतश्च सम्बन्धनियम-कृतः सहोपलम्भनियमः । किञ्च सहोपलम्भनियमोऽसिद्धः इदं रजतमित्यत्र शुक्तित्वजातिव्यतिरेकेणाधिष्ठानभूतव्यक्तिप्रतीतेः, अतो नैक्यसाधकमिति लौकिकवस्तुनि भेदाभेदयोर्विरुद्धत्वमुपजीव्य वैदिकेऽपि तत्सद्भावमाह—

सू० अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भवति, तस्मादस्यान[1]न्यथासिद्धशास्त्रमूलत्वात् अनाद्यविद्यामूल एव भेदप्रत्ययः । नन्वेवं ब्रह्मण एवाज्ञत्वात्तन्मूलाश्च जन्ममरणादयो दोषाः प्रादुःष्युः, ततश्च "यः सर्वज्ञः सर्ववित्" "एष आत्माऽपहतपाप्मे"त्यादीनि शास्त्राणि बाध्येरन्, नैवम् अज्ञत्वादिदोषाणामपरमार्थत्वात्, भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गस्तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः, न हि ब्रह्मणि निरवयवेऽच्छेद्ये संबध्यमाना उपाधयस्तच्छित्त्वा भित्त्वा वा सम्बध्यन्ते अपि तु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्य्याणि कुर्वन्ति ॥

टी० "अत एवे"ति, भेदाभेदयोर्विरोधेनैकस्मिन् वस्तुनि तयोरनुपपन्नत्वादित्यर्थः । भेदाभेदनिरासमुपजीव्याभेदस्यैव तात्त्विकतामाह— "तस्मादि"ति, भेदसम्ब[2]न्धमुखेन चोदयति "नन्वि"ति, अपरमार्थतया परिहरति "नैवमि"ति, परोक्तदोषः परस्यैवेत्याह "भवतस्त्वि"ति, तदुपपादयति "न हि ब्रह्मणी"ति, अङ्गुल्यादेरिव छेदो न सम्भवतीत्यच्छेद्यत्वं ब्रह्मणः, तस्य हेतुर्निरवयवत्वं भित्त्वा अच्छिन्नत्वेऽपि पाणिपादादिवत्प्रतिनियतप्रदेशभेदेनेत्यर्थः । प्रदेशभेदेन छेदनेन वा ब्रह्मणि सम्बन्ध-

१ तस्मादभेदस्यानन्यथासिद्धेति पा० ।
२ दोषसंबन्धमुखेनेति तु पा० ।

मुपाधयोनार्हन्ति निरवयवत्वादच्छेद्यत्वाच्चेत्यर्थः । निरवयवत्वेऽप्यच्छेद्यत्वेऽपि गगनवदुपहितानुपहितांशभेदेन सदोषत्वनिर्दोषत्वोपपत्तिं शङ्कते–

सू० यदि मन्वीत उपाध्युपहितं ब्रह्म जीवः स चाणुपरिमाणः, अणुत्वञ्चावच्छेदकस्य मनसोऽणुत्वात्, स चावच्छेदोऽनादिरेवमुपाध्युपहिते[1] देशे सम्बध्यमानाः दोषा अनुपहिते परे ब्रह्मणि न सम्बध्यन्त इत्ययं प्रष्टव्यः किमुपाधिनाऽवच्छिन्नो ब्रह्मखण्डोऽणुरूपोजीव? उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः? उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्? उतोपाधिसंयुक्तं चेतनान्तरम्? अथोपाधिरेवेति? अच्छेद्यत्वाद् ब्रह्मणः प्रथमः कल्पो न कल्पते, आदिमत्त्वं च जीवस्य स्यात्, एकस्य सतो द्वैधीकरणं हि छेदनं, द्वितीये तु कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसंबन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः ॥

टी० "यदि मन्वीते"ति, उपाध्यवच्छेदाज्जीवभावः जीवभावादुपाध्यवच्छेदः, कर्मणा जीवभावस्तस्मात्कर्मेति चान्योन्याश्रयपरिहारायाऽनादिरित्युक्तं, दूषयितुमाह–"अयं प्रष्टव्य" इति विकल्पयति "किमि"ति, अणु-शब्दस्य सूक्ष्मपरत्वाभिप्रायसम्भवात् तृतीयकल्पादयः, चतुर्थपञ्चमौ आभ्यां विकल्पाभ्यां विना गतिर्नास्तीत्यभिप्रायेण कृतौ न तु पराभ्युपगतौ, ब्रह्म-शब्दस्य जीवेऽप्युपचारवृत्तेः चतुर्थकल्पः उपाधिब्रह्मणोर्भिन्नाभिन्नत्वाभ्युपगमात् पञ्चमः । प्रथमं शिरोदूषयति "अच्छेद्यत्वादि"ति, दूषणान्तरमाह–आदिमत्त्वमि"ति, तदुपपादयति "एकस्य सत इ"ति, द्वितीयं दूषयति "द्वितीये त्वि"ति, दूषणान्तरमाह–

[1] उपहिते देश इति पा० ।

मू० उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगा-
दनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशविशेषभेदात् क्षणे क्षणे
बन्धमोक्षौ स्याताम्, आकर्षणे चाच्छिन्नत्वात्कृत्स्नस्य
ब्रह्मण आकर्षणं स्यात्, निरंशस्य व्यापिन आकर्षणं न
सम्भवीति चेत् तर्ह्युपाधिरेव गच्छतीति पूर्वोक्त एव दोषः
स्यात्, अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च
जीवानां ब्रह्मण एव प्रदेशत्वेनाभेद[1]प्रतिसन्धानं स्यात् प्रदे-
शभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति सति
प्रतिसन्धानं न स्यात्, तृतीये तु कल्पे ब्रह्मस्वरूपस्यैवो-
पाधिसम्बन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मा-
सिद्धिः स्यात्, सर्वेषु च देहेष्वेक एव जीवः स्यात्, तुर्ये
तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यापाधिकत्वं
परित्यक्तं स्यात्, चरमे पक्षे चार्वाकपक्ष एव गृहीतः स्यात्

टी० "उपाधावि"ति, आकर्षणेन विना तत्परिहारासम्भवात्
तदाशङ्क्याह–"आकर्षणे चे"ति, अनुपपत्त्या तदनभ्युपगममाशङ्क्य पूर्वो-
क्तदूषणेन व्युदस्यति "निरंशस्ये"ति, दूषणान्तरमाह "अच्छिन्ने"ति,
तत्परिहारमाशङ्क्याह–"प्रदेशभेदादि"ति, तृतीयं शिरो दूषयति "तृती-
ये त्वि"ति, अनुपहितब्रह्मासिद्धिः स्यादिति निर्दोषमङ्गलगुणकत्वश्रुतीना-
मनुपहितब्रह्मविषयत्वं हि पराभ्युपेतं, जीवेश्वरभेदाभावप्रसङ्गो जीवानां
परस्परभेदाभावप्रसङ्गश्चेत्यर्थः । चतुर्थपञ्चमौ दूषयति तुरीये त्वित्यादिना,
"चरम"इति, अचिद्द्रव्यस्यैव चेतनत्ववचनात्तस्य चेतनब्रह्मतादात्म्यानुप-
पत्तिश्चेत्यभिप्रायः । भेदाभेददूषणमुपसंहरन्स्वमतसिद्धिमाह–

१ प्रदेशत्वेनैकत्वेन इति पा० ।

भा० तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम्, अतः प्रवृत्तिनिवृत्तिरूपप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति, तदप्ययुक्तम्, ध्यानविधिशेषत्वे ऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात्, एतदुक्तं भवति ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते? उत स्वतन्त्राण्येव? एकवाक्यत्वे ध्यानपरत्वेन ब्रह्मस्वरूपे तात्पर्य्यं न सम्भवति, भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादनवबोधकत्वमेव, न च वाच्यम् ध्यानन्नाम स्मृतिसन्ततिरूपम्, तच्च स्मर्त्तव्यैकनिरूपणीयमिति ॥

टी० "तस्मादिति", ध्यानविधिशेषतया ब्रह्मणः सिद्धिमुपसंहरति "अत" इति, ध्याननियोगवादिपक्षं मीमांसकोदूषयति "तदप्ययुक्तमि"ति, न केवलं निष्प्रपञ्चीकरणविधिवाद एवानुपपन्नः इदमपि मतमनुपपन्नमित्यपि-शब्दभावः। कुत इत्यत्राह-"ध्याने"ति, ध्यानविधिशेषत्वे कथमर्थसत्यत्वे तात्पर्यायोगः? विधिशेषत्वं हित्वा स्वातन्त्र्येण वा ब्रह्मणि प्रामाण्यं स्या? दित्याह-"एतदुक्तमिति" दूषयितुं विकल्पयति "ब्रह्मस्वरूपे"ति, प्रथमं शिरोदूषयति। "एकेति", एकवाक्यत्वं-महावाक्यैकत्वम्। द्वितीयं दूषयति "भिन्नेति", अनवबोधकत्वं दुःखसाध्यश्रवणादौ प्रवृत्त्ययोगात्। एकवाक्यत्वपक्षे विधिशेषतया ब्रह्मणः सिद्धिमाशङ्क्याह "न च वाच्यमि"ति, कुत इत्यत्राह-

भा० ध्यानविधेः स्मर्त्तव्यविशेषाकाङ्क्षायाम् "इदं सर्वं यदयमात्मा" "अयमात्मा ब्रह्म सर्वानुभूतिः सत्यं ज्ञानमनन्तं

ब्रह्मेत्यादीनि ब्रह्मस्वरूपतद्विशेषादीनि समर्पयन्ति तेनैकवाक्यतामापन्नान्यर्थसद्भावे प्रमाणमिति ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि मनो[1]ब्रह्मेत्युपासीतेत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः, ध्येयसत्यत्वानपेक्षणात्, अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वात् ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्य्यवसानात् स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्य्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न सम्भवतीति प्राप्तम् ॥

टी० "ध्यानविधेरिति", "नाम ब्रह्मे"त्युपासीतेत्यादिषु दृष्टिविधिषु विशेष्यसत्यत्वेऽपि विशेषणासत्यत्वेन विशिष्टासत्यत्वमवर्जनीयम् इह च तथैवेत्यर्थः। सार्थसङ्ग्रहं पूर्वपक्षमुपसंहरति "अत" इति,। ननु प्रथमसूत्रे विधिशेषतया ब्रह्मणि प्रामाण्यसमर्थनमेतदधिकरणपूर्वपक्षे विधिशेषतया तत्सिद्धिप्रतिक्षेपश्च कथं घटते? इत्थ, तत्र हि फलत्वेन सिद्धिरुक्ता फलतया सिध्यतः पारमार्थ्याभावे स्वर्गादेरप्यसत्यत्वप्रसङ्गात् तत्पारमार्थ्यं सिध्यतीति फलतया तत्सिद्धिसमर्थनं साधीयः, अत्र तु ध्यानविधिकर्मत्वेन तत्सिद्धिर्व्युदस्ता न तु फलतया तत्सिद्धिरित्यविरोधः। एवमुपन्यस्तं पूर्वपक्षमभिप्रेत्य सूत्रकारेणैवैतत्सूत्रं प्रणीतमित्यत्राह—

भू० तच्च प्रतिपद्यते "तत्तु समन्वयादिति", समन्वयः—सम्यगन्वयः पुरुषार्थतयाऽन्वय इत्यर्थः परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयात् तच्छास्त्रप्रमाणकत्वं सिद्ध्यत्येवेत्यर्थः ॥

[1] नामब्रह्मेत्यादि तु पा०।

टी० "तत्रेति", प्रतिपद्यते–सिद्धान्तः प्राप्नोति, ज्ञायते इति वाऽर्थः समन्वय–शब्दं विस्तरेण व्याचष्टे समन्वय इत्यादिना, कस्य केनान्वयः इत्यपेक्षां पूरयन् वाक्यार्थे योजयति "परमेति", परमपुरुषार्थत्वोपपादकमनवधिकेति पदं पुरुषेणार्थ्यत्वं हि पुरुषार्थत्वम् आनन्दरूपतया पुरुषार्थत्वं, तस्यानवधिकातिशयत्वात्परमपुरुषार्थत्वमिति भावः । स्वयमननुकूलस्य सुखसाधनस्यापि पुरुषार्थत्वमस्तीति तद्व्यावृत्तिश्चानवधिकेत्यादिपदेन सिद्धा । तच्छब्दं व्याचष्ट "शास्त्रप्रमाणकत्व"मिति, पूर्वपक्षव्यावर्त्तकतु–शब्दलब्धमर्थमाह "–सिध्यत्येवेति", तत्त्वमस्यादिस्वरूपोपदेशपरवाक्यार्थज्ञानमात्रेणाविद्यानिवृत्तिं तन्मुखेन वाक्यस्य प्रयोजनपर्य्यवसानञ्च वदतो मृषावादिनोध्यानविध्यानर्थक्यं स्यात् वाक्यार्थज्ञानोपयोगित्वस्य दूषितत्वान्मीमांसकपक्षे ब्रह्मणोऽसिद्धिरित्युभयविधदोषास्पृष्टेनाकारेण वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमुपपिपादयिषुस्तत्र प्रथमं ब्रह्मणः स्वतः सर्वेषां सर्वप्रकारभोग्यत्वेन पुरुषा[1]र्थवैविध्यं प्रवृत्तिनिवृत्त्योर्दुःखात्मकत्वेन पुरुषार्थत्ववैकल्यं चाभिप्रयन् प्रवृत्तिनिवृत्तिपरत्वविरहवतः पुरुषार्थत्वपर्यवसानाभावनिबन्धनामप्रामाण्यशङ्कां परिहरति–

मू० निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहात् न प्रयोजनपर्य्यवसायीति ब्रह्मणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते, एतदुक्तं भवति अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वस्वरूपाववोधानाम्–

टी० "निरस्ते"ति, राजकुलवासी–राजकुलप्रसूतोराजकुलान्तरङ्गोवा, कौलेयकाः–श्वानः श्वोपजीविनो वाम्लेच्छा लक्ष्यन्ते, यद्यपि वाक्यगणस्थाने राजकुलवासी पुरुषः प्रतीयते तथाऽप्यर्थवशाद्वाक्यार्थप्रतिपत्तृपुरु-

१ पुरुषार्थत्वाधिक्यमिति पा० ।

वस्थाने तन्निर्द्देशः फलितः, स्वतोनिरवधिकपुरुषार्थपरवाक्यस्य प्रयोजनशून्यत्वकथनमनुपपन्नमित्यर्थः, ब्रह्मणः कथमनवधिकानन्दरूपतया पुरुषार्थत्वाधिक्यं कथं च प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यं? स्वरूपपरवाक्यस्य पुरुषापर्यवसानं कुत्र दृष्टं? तथा सति कथं ध्यानविधिसाफल्य? मित्याकाङ्क्षामाह "एतदुक्तमि"ति, ब्रह्मणः पुरुषार्थताऽऽधिक्यमाह—"अनादीत्या"दिना, कर्मभिरनुभवप्रतिबन्धात् क्षेत्रज्ञानान्तस्य पुरुषार्थत्वस्य ज्ञानाभावः न तु तत्र तद्वैकल्यादित्यभिप्रायेणोक्त'मनादिकर्मे''ति, देवासुरादिपरिगणनं तेषां व्यवस्थितभोग्यत्वप्रदर्शनार्थं योग्यानुपलब्धिशङ्काव्युदासायानुभवसम्भव इत्युक्तं, तद्विषयज्ञानानुकूलत्वं हि तदनुकूलत्वेन विना न सम्भवति अतोऽनवधिकातिशयानन्दजननत्वोक्त्या ब्रह्मणोऽनवधिकातिशयानुकूलत्वं सिध्यतीत्यानन्दत्वमुपपादितं भवति ॥

मू० देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिंपुरुषयक्षरक्षः पिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुन्नपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसम्भवे स्वरूपगु[1]णविभवचेष्टितैरनवधिकातिशयानन्दजनकं परब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्य्यवसायि, प्रवृत्तिनिवृत्तिनिष्ठन्तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्य्यवसायि, । एवं भूतं ब्रह्म कथं प्राप्यत ? इत्यपेक्षायां "ब्रह्मविदाप्नोति परम्" "आत्मानमेव लोकमुपासीते"ति, वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते

टी० "स्वरूपेत्यादि"ना सर्वप्रकारभोग्यत्वमुक्तं तेन पुरुषार्थत्वाधिक्यं सिद्धं, प्रवृत्तीत्यादिना प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यमुक्तम्, दृष्ट-

१ स्वरूपरूपगुणेति तु पा० ।

सुखलवसाधनस्याप्युपादेयत्वात्, दुःखात्मकतया स्वतोभोग्यत्वाभावाच्च ध्यानादिविध्यानर्थक्यं परिहरति "एवं भूतमि"ति, परोक्षज्ञानस्यापि सुखरूपत्वात्स्वरूपपराणि वाक्यानि पुरुषार्थपर्यवसायीन्येव तदापरोक्ष्याकाङ्क्षिणास्तत्साधनज्ञापकत्वात् ध्यानविधायकानि वाक्यानि न निष्फलानीत्यर्थः। इममर्थं दृष्टान्तेन दर्शयति–

सू० यथा स्ववेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तः सन् पश्चात्तदुपादाने च प्रयतते, यथा च कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तोमार्गाद्भ्रष्टोनष्ट इति राज्ञा विज्ञातः स्वयं चाज्ञातपितृकः केनचित्

टी० "यथे"ति, एवं परोक्षज्ञानजनकस्यैव वाक्यस्य पुरुषार्थपर्यवसायित्वेऽपि फलविशेषापेक्षया ध्यानप्रवृत्तिर्युक्ता, यथा "दर्शपौर्णमासाभ्यां स्वर्गकामोयजेत ज्योतिष्टोमेन स्वर्गकामोयजेत अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिषु दर्शपौर्णमासादीनामेकैकस्य स्वर्गसाधनत्वेऽपि फल विशेषापेक्षया कर्मान्तरारम्भ एकस्यैव कर्मण आवृत्तिश्चोपपद्यते यथा पुत्रजन्मश्रवणसंजातहर्षस्यापि पश्चात्तन्मुखापरोक्ष्यसुखाशया प्रवृत्तिरुपपद्यते तथात्रापीत्यभिप्रायः। अत्र निधि–राजकुमारदृष्टान्तद्वयं चिदचिद्विभागादुक्तम् उभयगतं भोग्यत्वं ब्रह्मण्यस्तीति ज्ञापनाय, तद्यथा हिरण्यनिधिं निहितमज्ञात्वा क्षेत्रज्ञा उपर्युपरिसञ्चरन्तो न विन्देयुरिति श्रुतिः, निधिरस्तीति वाक्यस्य पुरुषार्थपरत्वं दर्शयति "तृप्तः सन्नि"ति, अविज्ञाताः कुमारकाः भगवतोऽहं पुत्रः प्रेष्यः शिष्यश्च माता पिता तथा भ्राता भूतानां योऽव्ययः पिता एक इन्द्रो जगतो बभूव राजाऽधिराजः सर्वेषामित्यादिश्रुतिस्मृत्यनुसारेण सर्वविधभोग्यत्वप्रदर्शनाय राजकुमार इति भगवति राजत्वञ्चोपप[1]न्नतरम्। अत्र कुशलवसमाधिर्द्रष्टव्यः बालक्रीडनासक्त इत्यनेन चेतनानां बाह्यविषयप्रावण्यं सूचितं, नरेन्द्रभवनान्निष्क्रान्त इत्य-

१ चेतनेषु पुत्रत्वं चोपपन्नमिति पाठान्तरं तु साधीयः।

नेन भगवत्सकाशवहिष्ठत्वं, दर्शितं परमव्योमालाभश्च, मार्गाद्भ्रष्ट इत्यनेन कर्मज्ञानाद्युपायानन्वयः ख्यापितः—

मू० द्विजवर्य्येण वर्द्धितोऽधिगतवेदशास्त्रार्थः षोडशवर्षः सर्वकल्याणगुणाकरांस्तिष्ठन् पिता ते सर्वलोकाधिपतिर्गाम्भीर्य्यौदार्य्यवात्सल्यसौशील्यशौर्यवीर्य्यपराक्रमादिगुणसम्पन्नस्त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठतीति केनचिदभियुक्तनरेण

टी० द्विजवर्य्येण वर्द्धित इत्यनेन भगवज्ज्ञाननिष्पत्तियोग्यतासिद्धिहेतुभूताध्ययनादिनिष्पादकाचार्यसम्बन्धोऽभिप्रेतः षोडशवर्षः—भोक्तृत्वावस्थोभोग्यत्वावस्थश्चेति भावः । सर्वकल्याणगुणाकरः—निर्वाणमय एवायमात्मा ज्ञानमयोऽमल इत्याद्युक्तैर्भगवदभिमतैर्गुणैः पूर्णता सूचिता पिता त इत्यादिना भगवद्गुणाः सूचिताः, गाम्भीर्य्यादय उपासकं प्रति सौलभ्योपयुक्ता गुणाः, शौर्यादयः परत्वान्तर्गताः गाम्भीर्यं सम्प्रदानलाघवद्दीयमानगौरवानपेक्षत्वम्, औदार्यं सम्प्रदानलाघवद्दीयमानगौरवानपेक्षत्वं दातृप्रतिग्रहीतृविभागबुद्धिविरहेण प्राप्तं कृतमिति प्रतिपत्तिमत्त्वम् आत्मात्मीयं दत्त्वापि ऋणं प्रवृद्धमिव म इति स्थितिर्वा, वात्सल्यं दोषेष्वपि गुणत्वबुद्धिः यथा मातुर्वत्से सौशील्यं हि नाम महतोमन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वं तद्वत्ता सौशील्यं, शौर्यं शत्रुमध्ये स्वगृह इव प्रवेशनसामर्थ्यं शूरं भीरुं कविं जडमिति भीरुत्वप्रतियोगि हि शौर्यं, वीर्यमश्रान्तिः पराक्रमो विक्रमणम् अत्रानुक्तमपि धैर्यमनुसन्धेयं, तच्च शत्रुभिर्धर्षणे तृणवन्मन्यमानत्वम् ।

मू० प्रयुक्तं वाक्यं शृणोति चेत्तदानीमेवाहं तावत् जीवतः पुत्रोमत्पिता च सर्वसम्पत्समृद्ध इति निरतिशयहर्षसमन्वितो भवति राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहर-

दर्शनं विदितसकलवेद्यं श्रुत्वा ऽवाप्तसमस्तपुरुषार्थो भवति पश्चात्तदुपादाने च प्रयतते पश्चात्तावुभौ सङ्गच्छेते चेति ।

टी० 'दिदृक्षुरि'ति, स महात्मा सुदुर्ल्लभ इति भगवदभिप्रायः सूचितः, पुरवर इत्यनेन ब्रह्मपुराख्यशरीरान्तःस्थितिरभिप्रेता, त्रिपाद्विभूतिसम्बन्धो वा अभियुक्ततम-शब्देन भगज्ज्ञानप्रदो गुरुर्विवक्षितः तस्येतरवैलक्षण्यं केनचिदित्यभिप्रेतम् । यदा ऽध्ययनादिकारयिता गुरुरेव ब्रह्मोपदेष्टा संभवति तदा ऽयमभियुक्ततम-शब्दः पूर्वनिर्दिष्टद्विजवर्यमेवाभिधत्ते तदसम्भवे ब्रह्मोपदेष्टृपुरुषमात्राभिप्रायः । अत्र केनचिदित्यनेन पूर्वेणैव वा ऽन्येनैव चेति च तात्पर्यं ग्राह्यं, शृणोति चेदित्यनेन भगवज्ज्ञानस्य दुर्लभत्वमभिप्रेतम्निरतिशयहर्षसमन्वितो भवतीत्यनेन वाक्यस्य पुरुषार्थपरत्वं दर्शितं "राजा चे"ति, राजस्थानीयोऽप्युपासको विवक्षितः अनेन सर्वविधभोग्यत्वस्य भगवति पुष्कलत्वात् गुणवत्पुत्रगतभोग्यत्वमपि तत्र विद्यत इति ज्ञापितं, न हि भगवतो ज्ञानं परोक्षरूपम्, अवाप्तसमस्तपुरुषार्थो भवतीत्यनेन च वाक्यस्य प्रयोजनपर्यवसायित्वं दर्शितं राजा चेत्यादिग्रन्थस्यापातप्रतिपन्नार्थो ऽप्यविरुद्धः, ध्यानविधेर्वैयर्थ्यं दृष्टान्तद्वयेनापि सिद्धमिति ज्ञापयितुमुक्तं पश्चात्तदुपादाने च प्रयत इति पश्चात्तावुभौ सङ्गच्छेते चेति च, अत्र पूर्वमेवार्थार्थी राजकुलं गच्छेन्मन्दाग्निर्न जलं पिबेदिति वाक्योदाहरणादिह निधिदृष्टान्तोपन्यासाच्चायमप्यर्थो ऽर्थसिद्धः किं क्रियोत्तीर्णकार्यपरतयैव वाक्यस्य प्रयोजनपर्यवसायित्वं? युत क्रियाकार्यं वा तदुत्तीर्णं वा प्रवर्त्तकमर्थमभिदधत एव तात्पर्यावसायित्वमिति मतं, न प्रथमः अर्थार्थी राजकुलं सेवेतेत्यादीनां सप्रयोजनत्वात्, न द्वितीयः निधिमद्भूभागलक्षणरत्नपरीक्षणपराणां शास्त्राणां प्रयोजनशालित्वात्, न च तत्रापि खननदारणादिविधिपरत्वं वाक्यानां कल्प्यं तयोरागप्राप्तत्वात्खननादिप्रकारस्य लोकसिद्धत्वाच्च अप्राप्ते हि शास्त्रमर्थवत् दुष्टरत्नवर्जनमप्यनर्थजिहासाप्राप्तं, वाक्यानि तु निधिमत्त्वगुणदोषज्ञापनमात्रपर्यवसायीनि, अतः प्रवर्त्तकार्थपरतयैव प्रयोजनपर्यवसानमिति नियमो भग्न इति ।

मू० यत्पुनः परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्य्यवसानाद् बालातुराद्युपच्छन्दनवाक्यवत् नार्थसद्भावे प्रामाण्यमिति तदसत्, अर्थसद्भावाभावे निश्चिते ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति बालातुरादीनामप्यर्थसद्भावभ्रान्त्यैव हर्षाद्युत्पत्तिः

टी० अथ पूर्वपक्षिणोक्तमनुभाषते "यत्पुनरि"ति, वेदान्तवाक्यानां नार्थसद्भावे प्रामाण्यमस्तीति प्रतिज्ञा तदर्थमर्थसद्भावाभावेऽपि पुरुषार्थपर्यवसानादिति हेतुर्विवक्षितः । दूषयति "तदसदि"ति, कुत इत्यत्राह— "अर्थसद्भावाभावे इ"ति, इदं वाक्यं पक्षविषयं, पक्षदृष्टान्तसाधारणं वा हेतुत्वं गर्भितम् अर्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानाभावादित्यर्थः । अर्थासद्भावेऽपि पुरुषार्थो दृश्यत इति शङ्कायां तत्रार्थासद्भावनिश्चयाभावमुपाधिमाह— "बालातुरादीनामि"ति, तदेवोपपादयति—

मू० तेषामेव तस्मिन्न[1]पि ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयोजायेत ततस्तदानीमेव हर्षादयोनिवर्त्तेरन् औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्य्यवसानं न स्यात्

टी० "तेषामेवे"ति, ततः किमित्यपेक्षायां सपक्षे दर्शितमर्थं पक्षे स्फुटीकरोति "औपनिषदेष्वपी"ति, बालातुराद्युपच्छन्दनवाक्येष्विवात्राप्यर्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानं स्यादिति चेत् पयः पिब कषायं पिब शिखा वर्द्धिष्यते पांसुषु लुठसि चेत् दन्ता उद्भिद्यन्ते इत्यादीनां प्रवृत्तिनिवृत्तिपरवाक्यानामिव "स्वर्गकामोयजेत", न कलञ्जम्भक्षये," दित्यादिवाक्यानामप्यर्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानं किन्न स्यात्, अपौरुषेयत्वाद्वेदवाक्यस्य विप्रलिप्सामूलवाक्यस्येव भ्रामकतया पुरुषार्थपर्यवसानमयुक्तं तथा सति शास्त्रस्य निरूपकाधिगन्तव्यत्वात् स्वपुत्रशिष्यादीनाम-

१ तस्मिन्नेवेति पा० ।

ध्यापनादौ प्रवृत्तिर्नोपपद्यत इति चेत् अपौरुषेयत्वमध्यापनादिप्रवृत्तिवैयर्थ्यं च, वेदान्तवाक्येष्वपि तुल्यङ्कर्मविधीनां देहातिरिक्तात्मज्ञानसापेक्षत्वात्, वेदान्तवाक्यानाङ्कर्मविधिशेषत्वेनाध्यापनादिप्रवृत्त्युपपत्तिरिति चेत् न असत्यपि देहात्मभेदे तत्सद्भावभ्रान्तिहेतुत्वशङ्कायां सत्यान्तन्मुखेन प्ररोचनाऽनुपपत्त्या विधिशेषतया ऽध्यापनाद्यनुपपत्तेः, तर्कानुगृहीतनिर्दोषश्रुतिसिद्धदेहात्मभेदस्तात्त्विक इति चेत् तत्पुरुषार्थभूतस्य परमात्मनः प्रतिपाद्यत्वेऽपि तुल्यं देहात्मभेदसाधकहेत्वन्तरसंवादाच्च भ्रान्तिहेतुत्वनिश्चय इति चेत् तर्हि तेनैव हेत्वन्तरेण देहात्मभेदसिद्धिरिति तत्त्वज्ञाप[1]नाय वेदान्तवाक्यानामपेक्षितत्वाद्विधिशेषतया तदध्यापनादिकं नोपपद्यते

सू० अतो यतो वा इमानीत्यादिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् ॥

समाप्तं समन्वयाधिकरणम्

टी० एवं निरूपकाधिकारस्य शास्त्रस्यार्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानानुपपत्तौ प्रवर्त्तकवाक्यानां प्रतिबन्ध[2]कत्वमभिप्रेत्योपनिषदेष्वपीत्यादिवा[3]क्यं प्रवृत्तमुक्तस्य हेतोर्विपर्यये पर्यवसानन्दर्शयन्नधिकरणार्थमुपसंहरति "अत" इति, कारणवाक्यानामर्थमाह—"निखिले"ति, निखिल—शब्दः परैर्नित्यतयाऽभिमतानामाकाशादीनामपि कार्यत्वज्ञापनार्थः, एक—शब्दो निमित्तोपादानैक्यद्योतकः, यतो वा इमानीत्यादिना वाक्येन शोधकवाक्यार्थश्च गर्भित इत्यभिप्रायेणाह 'निरस्ते'ति, अत्र निखिल—शब्देन चिदचिद्गताः क्लेशकर्मादयोजन्मादयश्च विवक्षिताः, कदाचिद्दोषसम्बन्धार्हत्वव्यावर्त्तकेन गन्ध—शब्देन सदा तत्प्रत्यनीकत्व-

१ तज्ज्ञापनायेति पा० ।
२ प्रतिबन्धित्वमभिप्रेत्येति तु पा० ।
३ भाष्यमिति तु पा० ।

मुक्तम्भवति । कारणत्वौपयिकान् गुणानाह—"सार्वज्ञ्ये"ति, एतदधिकरण-सिद्धमर्थमाह—"अनवधिकेति," बोधयतीति, "अध्यापनाद्युपपत्तये पुरुषार्थपर्यवसानस्यापेक्षितत्वात्तावदधिकार्यस्य शास्त्रस्यार्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानानुपपत्तेस्तदुपपत्त्यर्थं प्रकृतैकवाक्यानामिवार्थसद्भावे प्रामाण्यमङ्गीकार्यमिति यथोक्तलक्षणं ब्रह्म यतोवा इमानीत्यादिवाक्यं प्रतिपादयतीत्यर्थः ।

आरम्भचतुःसूत्र्याःशाङ्कर सिद्धान्तेऽसाङ्गत्यसंदर्शनम् ।

शास्त्रारम्भसिद्ध्यर्थैषा चतुःसूची मृषावादिनाम्मते न सङ्गच्छते तत्पक्षे विषय–प्रयोजनानुपपत्त्या शास्त्रस्यानारम्भणीयत्वात्, तथा हि विषयः किं ब्रह्म ? उत भेदमिथ्यात्वम्? उत जीवब्रह्मणोरैक्यं? न प्रथमः, ब्रह्मणोवेद्यत्वानभ्युपगमात्, वेद्यत्वे घटादेरिवाननुभूतित्वप्रसङ्गस्य स्वोक्तत्वाच्च, व्यावहारिकं वेद्यत्वमस्तीति चेत् घटस्यापि वेद्यत्वं व्यावहारिकमिति तद्वदेवाननुभूतित्वप्रसङ्गादुर्वारः, वास्तववेद्यत्वाभावस्य ब्रह्मणि साध्यत्वे घटस्य व्यतिरेकदृष्टान्तत्वं न घटते, घटस्य वास्तववेद्यत्वाभावविरहाभावात्, अनुभूतिः परमार्थतो न वेद्या अनुभूतित्वात्, यत्परमार्थतो वेद्यं तन्नानुभूतिर्यथा घट इत्युक्ते व्यतिरेकदृष्टान्तः साध्याव्यावृत्तो हि स्यात्, न हि घटः परमार्थतोवेद्यः वेद्यत्वेनाननुभूतित्वप्रसङ्गमनादृत्य ब्रह्मणोवेद्यत्वाङ्गीकारेऽपि ब्रह्मणः शास्त्रविषयत्वमयुक्तं प्रत्यक्षस्य सन्मात्रग्राहित्वमभ्युपगच्छतस्तव मते शास्त्रानर्थक्यप्रसङ्गात्, "अप्राप्ते हि शास्त्रमर्थवत्," न द्वितीयः दृश्यत्वादिलिङ्गेन भेदमिथ्यात्वमभिमन्यमानस्य तत्र शास्त्रानर्थक्यप्रसङ्गात् तत्तद्धर्मिग्राहकप्रत्यक्षादिप्रमाणविरुद्धस्य प्रपञ्चमिथ्यात्वस्य यूपादित्यैक्यस्येव शास्त्रेण प्रतिपादनायोगात्, शास्त्रस्य निर्विषयत्वं स्यात् अप्राप्ते हि शास्त्रमर्थवत्साधकस्येव बाधकस्याप्यगोचरत्वं ह्यप्राप्तत्वं ज्वालाभेदानुमानवैषम्यं च त्रिविधं प्रागेव प्रपञ्चितं, प्रमाणान्तरविरोधश्च तात्पर्यलिङ्गमिति तद्विरुद्धेऽर्थे तात्पर्यासम्भवश्च प्रागेवोक्तः, अतोभेद मिथ्यात्वस्य विषयत्वमयुक्तं, तृतीयश्च कल्पोऽनुपपन्नः ब्रह्मणोऽपि वेद्यत्वप्रसङ्गात्, न हि घटपटयोरैकत्वमुच्यते शास्त्रेण, अपि तु जीवब्रह्मणोरैकत्वन्तदानीं ब्रह्म-शब्देन ब्रह्मण्यनवबो-

धिते कथन्तस्य जीवस्य चैक्यं वक्तुं शक्यते, न हि जीव एक इत्युक्ते जीव ब्रह्मणोरैक्यं सिध्यति घट एक इत्युक्ते घटपटैक्यवत्, यद्यैक्योपदेशवाक्येष्वयमात्मा ब्रह्मेत्यादिषु ब्रह्मणः शब्दबोध्यत्वं सोढव्यन्तर्हि प्राधान्येन ब्रह्मण एव शास्त्रप्रतिपाद्यत्वं किमिति नाभ्युपगम्यते? सर्वे वेदा यत्पदमामनन्तीत्यारभ्य तद्विष्णोः परमं पदमित्यादि श्रुत्यस्वारस्यमेव तदनभ्युपगमफलम्। किंच उपदिश्यमानमैक्यं किं ब्रह्मस्वरूपानतिरिक्तं? उतातिरिक्तम्? अनतिरिक्तत्वे स्वरूपवेद्यत्वपक्ष एव स्यात् तथा चोपदेशवैयर्थ्यादिदोषप्रसङ्गः स्वरूपमात्रस्य प्रतिपन्नत्वात् अतिरिक्तत्वे तत्किं परमार्थभूत? उतापरमार्थभूतं? प्रथमे सविशेषत्व[1]प्रसङ्गः, द्वितीये ज्वालैक्यदेहात्मैक्यापारमार्थ्ये ज्वालाभेददेहात्मभेदपारमार्थ्यवज्जीवब्रह्मभेदपारमार्थ्यं स्यात्। किं च, जीवब्रह्मणोरैक्यवाम किमन्तःकरणस्य संविदश्चैक्य? उत संविदवच्छिन्नान्तःकरणस्य संविदश्च? उतान्तःकरणावच्छिन्नसंविदः? केवलसंविदश्च? न प्रथमः, जडाजडयोरैक्यानुपपत्तेः, नापि द्वितीयतृतीयौ विशिष्टैक्येऽभ्युपगम्यमाने विशेषणत्वेन विशेष्यत्वेन वा तदन्तर्भूतस्यान्तःकरणस्यापि संविदैक्यप्रसङ्गात्, तयोश्च जडत्वाजडत्वाभ्यां सत्यत्वानृतत्वाभ्यां चैक्यमयुक्तमित्युक्तम् अन्तःकरणोपलक्षितज्ञप्त्यैक्यं विषय इति चेत् तदुपलक्षितज्ञप्तेः केनैक्यमुपदिश्यते? किं स्वात्मनैव? उत ज्ञप्त्यन्तरेण? न प्रथमः उपदेशवैयर्थ्यात्, न हि कस्यचिद्वस्तुनः स्वस्मादभिन्नत्वमुपदेष्टव्यं स्वस्माद्भेदप्रसङ्गाभावात् ज्ञप्त्यन्तरेण चेत् किं परमार्थतो भिन्नेन? उताभिन्नेन? न प्रथमः, अनभ्युपगमात् अनुपपन्नत्वाच्च, अभिन्नेन चेत् भेदप्रतीतिरस्ति? वा न वा? न चेदैक्योपदेशवैयर्थ्यमस्ति चेद् भेदमिथ्यात्वोपदेश एवैक्योपदेशः स्यात् भेदमिथ्यात्वस्यानुमानसिद्धत्वाभिमानाच्छास्त्रस्य निर्विषयत्वं स्यात्, भेदपारमार्थ्ये दृश्यत्वानुपपत्तिरित्यादितर्कानुगृहीतं शास्त्रं भेदमिथ्यात्वे प्रमाणमिति न शास्त्रस्य निर्विषयत्वमिति चेत् न धर्मश्चेद्धिंसात्वन्न स्यादिति तर्कानुगृहीतेन "न हिंस्यादि"ति शास्त्रेण वैधपश्वालम्भनस्याधर्मत्वप्रतिपादनानुपपत्तिवच्छास्त्रसिद्धभेदस्य शास्त्रेण मिथ्यात्व-

---

[1] निर्विशेषत्वप्रसङ्ग इति पा०।

प्रतिपादनानुपपत्तेः, सम्बन्धिभेदभिन्नानां संयोगेच्छादीनामिव ज्ञप्तीनामपि परस्परभेदस्य प्रत्यक्षादिसिद्धत्वात् तद्विरुद्धत्वाद्योग्यस्य ज्ञप्तिभेदमिथ्यात्वस्य शास्त्रेण प्रतिपादनानुपपत्तेश्च, नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति यत्र सुप्तः स्वप्नं न कञ्चन पश्यति प्राणेभ्यो-देवा देवेभ्यो लोका देवा इन्द्रियाणि लोका आलोकनानि संविदः" एवमादिशास्त्रसिद्धः प्रत्यक्षादिसिद्धश्च कालतो विषयत आश्रयतश्च ज्ञप्तीनाम्परस्परभेदः, अन्तःकरणवृत्तिभेदविषया सा श्रुतिरिति चेत् न स्वा-प्रश्रुतेर्वृत्तिगोचरत्वे सति संविदैक्यं, संविदैक्ये सति ज्ञप्तिभेदश्रुतेर्वृत्तिगो-चरत्वमित्यन्योन्याश्रयणप्रसङ्गात्, ज्ञातृज्ञेयावच्छिन्नतया प्रतीयमानस्य ज्ञान-स्यान्तःकरणक्रियात्वे त्रितयोत्तीर्णज्ञानस्य शशविषाणायमानत्वाच्च, तद्-भेदमिथ्यात्वप्रतिपादनं शशविषाणभेदमिथ्यात्वप्रतिपादनतुल्यमिति न शास्त्रस्य सविषयत्वसिद्धिः, संप्रतिपन्नज्ञानानामेव मिथो भेदस्य मिथ्यात्वं शास्त्रविरोधात् प्रत्यक्षविरोधाच्च पश्वालम्भनाधर्मत्ववत्, यूपादित्यैक्य-वच्च न शास्त्रं प्रतिपादयितुं शक्नोति, अतः शास्त्रस्य विषयाभावादनार-म्भणीयत्वम् । तथा प्रयोजनञ्च न घटते, तथा हि प्रयोजनं द्विविधं शास्त्र-स्योपायभूतमवान्तरप्रयोजनं तत्साध्यं परमप्रयोजनं, चेति, तत्र बन्धनिवर्त्त-कज्ञानसिद्धिरवान्तरप्रयोजनं, मोक्षस्तु परमप्रयोजनं, तत्रेदानीमुपजायमानं वाक्यजन्यज्ञानमनिवर्त्तकमित्यविगीतं, वसिष्ठ–पराशर–कृष्णद्वैपायनादी-नामप्यनुत्पन्नं ज्ञानमन्येषामुत्पत्स्यत इत्यत्यन्तासम्भावितं, तेषामुत्पन्नञ्चेद्भे-दप्रतिभासो न स्यात्, स निवर्त्तिष्यत इति चेत्तत एव तदभिन्नानामन्येषामपि निवर्त्तिष्यते इति न शास्त्रमारम्भणीयं स्यात्, प्रपञ्चस्य सत्यत्वादेव-ज्ञाननिवर्त्यत्वाभावात्, अनिवर्त्तकज्ञानं नावान्तरफलमिति न तदर्थं शास्त्र-मारम्भणीयं, परमप्रयोजनं न सिध्यति ज्ञातृज्ञेयभेदस्य सत्यस्य निवृत्तेरस-म्भावितत्वात् । किं च शास्त्रश्रवणाधिकारी ज्ञप्तिमात्रस्य वा ज्ञातुर्वा, न प्र-थमः, ज्ञप्तिमात्रस्य श्रोतृत्वायोगात्, न द्वितीयः, ज्ञातुः स्वनाशस्यापुरुषार्थ-त्वेन श्रवणादौ प्रवृत्त्यनुपपत्तेः, यत्सम्बन्धिसुखं दुःखनिवृत्तिश्च पुरुषार्थः स खलु अहमर्थः, यस्य अहमिदं दुःखःसुखी स्यामिति हि प्रतीतिः तस्य पुरुषार्थवतो

नाशः कथं पुरुषार्थः? पुरुषार्थान्तरं वा कथमर्थयितुस्तस्याभावे पुरुषार्थो भवेत्। अथोच्येत भवत्पक्षे बद्धस्य वा मुक्तस्य वा शास्त्राधिकारः? प्रथमे स्वनाशस्यापुरुषार्थत्वादप्रवृत्तिः, उपाधिविशिष्टस्य बद्धस्य तद्रूपनाशो हि स्वनाशः, द्वितीये तु मुक्तस्य शास्त्रानपेक्षत्वादनधिकारः औपाधिकाकारविनाशो नापुरुषार्थः, दुःखविनिर्मुक्तस्वाभाविकरूपावस्थानादिति चेत् तर्हि ज्ञातृत्वस्यौपाधिकत्वात्तन्निवृत्तौ स्वरूपन्तिष्ठतीति नापुरुषार्थ इति, नैवं संविदि वास्तवज्ञातृत्वानभ्युपगमात्, तदारोपे त्वन्यत्र तत्सिद्धेरवश्यंभावादन्यस्य च ज्ञातुर्ज्ञप्तिधर्मत्वाभावात्, यदि ज्ञप्तिः स्वरूपं ज्ञाता तद्धर्मः तदानीमियं प्रतिबन्दी स्यात्, अहं सुखी दुःखीति सुखदुःखवत् अहं जानामीति ज्ञानस्याहमर्थधर्मतया प्रतीतेरहमर्थस्य हि धर्मितया प्रतीतेश्चाविगीतत्वात् सुखदुःखनिवृत्त्योराश्रयस्य नाशो ऽपुरुषार्थ एव धर्मिणि नष्टे कस्य दुःखनिवृत्तिः पुरुषार्थः स्यात्, ? अचेतनप्रकृतितः[1]सम्बन्धित्वमौपाधिकं दुःखावहमिति मलिनो ऽहमिति प्रत्ययवतः पुरुषस्य मालिन्यनिवृत्तिवत्तन्निवृत्तिर्नापुरुषार्थः, अत्यन्ताभिमतस्य धर्मिस्वरूपस्य स्थितत्वादनिष्टबन्धनिवृत्तेरिष्टत्वाच्च। ननु लौकिकप्रतीत्या वा निरूपकप्रतीत्या वा ऽहमर्थस्य स्वरूपत्वं? प्रथमे स्थूलो ऽहं कृशो ऽहमिति लोकदृष्ट्या प्रतिपन्नत्वात् स्थूलत्वादिविशिष्टदेहनिवृत्तिरप्यपुरुषार्थः स्यात्, द्वितीये स्थौल्यादिवदध्यस्तो ऽहमर्थो ज्ञाता ऽपि न स्वरूपमिति म तन्नाशो ऽपुरुषार्थः। नैवं मम हस्तो मम पाद इति लोकदृष्ट्या ऽप्यहमर्थस्य देहव्यतिरेकप्रतीतेरहमर्थस्यवात्मत्वे श्रुतिस्मृतिसूत्राणां प्रागेव दर्शिततया निरूपकप्रतीतावप्यहमर्थस्यैव स्वरूपताप्रतीतेश्चाहमर्थनिवृत्तेर्देहनिवृत्तितुल्यात्वाभावेनापुरुषार्थत्वस्य दुर्निवारत्वात्, अतो विषयप्रयोजनाभावाच्छास्त्रस्यानारम्भणीयत्वं मृषा–वादिनां पक्षे स्थितम्, ॥ ततः पश्चाद्भाविनो नित्यानित्यविवेकादेः पूर्ववृत्तत्वायोगादथ–शब्दार्थः परोक्तो ऽनुपपन्न इति पूर्वमेवोक्तं, शास्त्रान्तरजन्यस्य नित्यानित्यविवेकस्य वेदान्तविरुद्धत्वात्तेष्वेव

---

१ अचेतनप्रकृतिबद्धत्वमौपाधिकदुःखावहमिति पा॰ ।

मोक्षोपायोपदेशेन निराकाङ्क्षत्वाच्च, ब्रह्मविचारहेतुत्वाभावान्नित्यानित्य-विषयापातप्रतीतिस्तु उभयभागसाधारणत्वात् एकान्ततो ब्रह्मविचारहेतु-त्वाभावादितिहासपुराणयोः संशयविपर्ययग्रस्ततया तज्जन्यनित्यानित्या-दिप्रतीतेः त्रिवर्गजिहासाजनकत्वाभावेन ब्रह्मविचारं प्रति हेतुत्वाभावा-च्चातः—शब्दार्थोऽनुपपन्नः, यन्नित्यन्तदुपादेयं यदनित्यन्तद्धेयमिति विवेको नित्यानित्यवस्तुविवेक इत्युक्तलक्षणमप्ययुक्तं, वेदान्तेषु नित्यपुरुषार्थप्रतिपा-दनावगमाद् वेदान्तारम्भः तदारम्भात्तेषु नित्यपुरुषार्थप्रतिपादनावगम इत्यन्योन्याश्रयप्रसङ्गात्, शास्त्रान्तरेष्वपि नित्यपुरुषार्थसंभावनया ब्रह्म-विचारं प्रत्येकान्ततो हेतुत्वाभावात्, शास्त्रान्तरेषु तदभावस्य वेदान्तेषु तत्सद्भावनिश्चयस्य च तर्कपादाधीनत्वेन पूर्ववदन्योन्याश्रयप्रङ्गात्, वेदा-न्तर्तादितरशास्त्रेषु नित्यपुरुषार्थसद्भावासद्भावयोर्गुरुवचनागम्यत्वे ब्रह्मोपा-सनस्याऽपि गुरुवचनागम्यत्वेन शारीरकमीमांसानैरपेक्ष्येण तदनारम्भ-णीयत्वप्रसङ्गाच्च, जीवब्रह्मणोरैक्यस्य शास्त्रविषयत्वाङ्गीकारे ब्रह्म-जिज्ञासापदं न सङ्गच्छते ब्रह्मणो जिज्ञास्यत्वं हि शास्त्रादव[1]गम्यते न जीवब्रह्मणोरैक्यस्य, यथा धर्मजिज्ञासापदं धर्ममात्रस्य जिज्ञास्यतां वक्ति न तु धर्माधर्मयोरैक्यस्य जिज्ञास्यत्वं, तद्वदेवहि ब्रह्मजिज्ञासापदं, निर्वि-शेषस्य वस्तुनो लक्षणोक्तिश्च न घटते, विशेषणतया लक्षणत्वे सति सवि-शेषत्वप्रसङ्गात्, उपलक्षणतया लक्षणत्वे पूर्वप्रतिपन्नाकारातिरिक्तस्योपलक्षण-ज्ञाप्यस्याकारान्तरस्याभावेनोपलक्षणवैयर्थ्यात्, तदभ्युपगमे सविशेषत्व-प्रसङ्गाच्च । स्वरूपमेवोपलक्षणज्ञाप्यमिति चेत् तत्स्वरूपं प्राक् प्रति-पन्नं न वा? प्रतिपन्नं चेदुपलक्षणवैयर्थ्यम् अप्रतिपन्नत्वे स्वप्रकाशता न स्यात् उपलक्षयितुमशक्यता च, केदारत्वाकारेणावगतस्य देवदत्तसम्ब-न्धितया सारसेन ज्ञाप्यत्वं ह्युपलक्ष्यत्वं प्रागनवगता प्रपञ्चव्यावृत्तिरुपल-क्ष्याकार इति चेन्न, प्रपञ्चव्यावृत्तेः स्वरूपातिरिक्तत्वे सति सविशेषत्व-प्रसङ्गात्, अनतिरिक्तत्वे तत्स्वरूपं प्रागेव भातमित्युपलक्षणवैयर्थ्यं च किं च कथं कारणत्वे लक्षणे सति प्रपञ्चव्यावृत्तिः? कारणत्वं नाम कार्यज-

१ शब्दादवगम्यते इति पा० ।

गदध्यासाधिष्ठानत्वम्, अतोऽध्यस्तादनृतात्प्रपञ्चादधिष्ठानस्य ब्रह्मणः सत्यतया व्यावृत्तिरिति चेत् न घटाद्यधिष्ठानस्य मृद इव ब्रह्मणोऽप्यनृतत्वेन व्यावृत्तिप्रसङ्गात्, घटादिकारणस्यापि मृदादेः कारणान्तराध्यस्तत्वादसत्यत्वं कालत्रयवृत्तिकृत्स्नकार्याधिष्ठानस्य ब्रह्मणोऽन्यत्राध्यस्तत्वाभावात्सत्यत्वमिति चेत् न इदमग्र आसीदितीदं–शब्दवाच्यं कार्यमात्रं प्रत्यधिष्ठानत्वश्रवणेन ब्रह्मणोऽपि कारणान्तराध्यस्तत्वाविरोधाद्बीजाङ्कुरन्यायेन प्रवाहानादित्वोपपत्तेश्च कृत्स्नकार्यकारणस्य ब्रह्मणः कारणान्तरप्रतिषेधेनाकार्यत्वात्सत्यत्वमिति प्रपञ्चव्यावृत्तिरिति चेत्तर्ह्यकार्यत्वमात्रेण जगद्व्यावृत्तिसिद्धेः कारणत्वोक्तिवैयर्थ्यादकार्यत्वश्रुतिरेव लक्षणवाक्यत्वेनोदाहर्तव्या स्यान्न तु यतो वा इमानीत्यादिश्रुतिः, अकार्यत्वश्रुतिरेव विवक्षितेति चेत् तर्हि "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इत्यकार्यत्वश्रुतेः करणाधिपाधिप–शब्दवाच्येश्वरविषयत्वाल्लक्ष्यवस्तुनो निर्विषयत्वं न सिध्येत्। किञ्च जगत्कारणत्वरूपलक्षणविशेषो लक्ष्यस्य निर्विशेषत्वस्य विरोधी सार्वज्ञ्यादिगुणाक्षेपकत्वात्तस्य, आक्षिप्तमपि सार्वज्ञ्यादिकं वस्तुमात्रोपलक्षणमिति चेन्न सार्वज्ञ्येन वस्तुन्युपलक्षिते सति सर्वशक्तित्वाद्युपलक्षणान्तरवैयर्थ्यात्, न हि शाखायां चन्द्र उपलक्षिते प्रसादाग्रेण प्रयोजनं, सार्वज्ञ्येन निर्विशेषवस्तूपलक्षणं व्याहतं च, स्वेन सविशेषस्याश्रयस्य निर्विशेषत्वज्ञापनायोगात्, सर्वशक्तित्वादिविशेषणान्तरसाहित्य[1]ज्ञापनार्थत्वाच्च, अतो लक्षणसूत्रं निर्विशेषपक्षे विरुद्धं, तृतीयसूत्रमपि न घटते निर्विशेषवस्तुनि तात्पर्यविषये सति कारणत्वाक्षिप्तसार्वज्ञ्यादिसमर्थनं क्वोपयुज्यते? प्रसङ्गादपि तत्समर्थनं न न्याय्यं निर्विशेषत्वविरोधात्, किञ्च ऋग्वेदादिशास्त्रं स्वविषयादधिकविषयज्ञानवदुपादानकं वाक्यत्वादित्यनुमानमप्यसङ्गतं, तथा हि किमधिकविषयज्ञानवदुपादानकत्वं साध्यम्? उत तदुक्तकत्वम्? उत तदुच्चारितत्वं? प्रथमे दृष्टान्तः साध्यविकलः आकाशगुणशब्दस्य कालिदासाद्युपादानकत्वाभावात्, न द्वितीयो वेदस्य पौरुषेयत्वप्रसङ्गात्, न तृतीयः

१ सर्वशक्तित्वादिविशेषान्तरराहित्यज्ञापनासामर्थ्याच्च इति पा॰।

अनैकान्तिकत्वात्, न हि वैदिकमन्यद्वा वाक्यमुच्चारयतां बालादीनामत्तद्विषयादधिकविषयज्ञानमस्ति, शास्त्रप्रमाणकत्वं सूत्रार्थ इति च व्याख्या ब्रह्मणोऽनुभाव्यत्वमनभ्युपगच्छताञ्च घटते, चतुर्थे च सूत्रे ब्रह्मणः प्राधान्येन शास्त्रयोनिसूत्रनिर्दिष्टत्वाभावात्तच्छब्दस्य ब्रह्मपरत्वं न स्यात्, प्रयोजनपर्यवसिकं, वेदान्तवाक्यानां भ्रमनिवर्त्तकवाक्यार्थज्ञानजनकतया प्रयोजनपर्यवसायित्वं वाक्यार्थज्ञानमात्रेण बन्धनिवृत्तेः शास्त्रप्रत्यक्षविरोधविध्वस्तत्वादनुपपन्नं, तदन्यथासिद्धिप्रतिविधानं च पूर्वमेव कृतम् । किञ्च कस्य भ्रमनिवृत्तिः? किं ज्ञप्ते? उत चेतनस्य? न तावत् ज्ञप्तेः, तस्या अचेतनत्वेन भ्रमाश्रयत्वाभावात्, चेतनो हि भ्रान्त्याश्रयः जडत्वंभ्रमानाश्रयत्वे प्रयोजकमिति, चेत् त्वया जडत्वेनाभिमते ज्ञातरि भ्रमानाश्रयत्वाभावेन साध्यसमव्याप्त्यसिद्धेः, चेतनस्य भ्रमनिवृत्तिरपि भवत्पक्षे न पुरुषार्थः स्यात्, ज्ञातुरपि निवर्त्यकोटिनिविष्टत्वात्तम्प्रति स्वनाशस्यापुरुषार्थत्वाच्च, राज्ञः शत्रुनिवृत्तिरिव ज्ञप्तिस्वरूपस्यात्मनो ज्ञातृ[1]त्वनिवृत्तिः पुरुषार्थ इति चेत् न ज्ञातुरेवात्मत्वात्, ज्ञातृधर्मतयाऽवगम्यमानस्येच्छाद्वेषादेरिवात्मत्वाभावात्, आत्मत्वाभ्युपगमेऽपि तस्य पुरुषार्थार्थयितृत्वाभावेन पुरुषार्थप्रतिसम्बन्धित्वानुपपत्त्या ज्ञानं प्रति ज्ञातृनिवृत्तेः पुरुषार्थत्वायोगात्, पुरुषेणार्थनीयस्य हि पुरुषार्थत्वं, ज्ञानस्यात्मत्वपुरुषार्थप्रतिसम्बन्धित्वाभ्युपगमेऽपि तदपेक्ष्य ज्ञातृनिवृत्तेः पुरुषार्थत्वमयुक्तं, ज्ञानं प्रति ज्ञातुः सुख[2]तद्धेतुष्वन्यतमत्वाभावात् सुखदुःखभोक्तारं प्रति सुखतद्धेतूनां दुःखतद्धेतुनिवृत्तेरपि हि पुरुषार्थत्वं, न हि ज्ञाता ज्ञप्तेर्दुःखरूपः, न च दुःखं जनयिता ज्ञानस्य दुःखानुभवितृत्वायोगात्, प्रवृत्तिनिवृत्तिपरत्वेन प्रयोजनपर्यवसानत्वयैवापास्तं ध्याननियोगवादप्रतिक्षेपे, अतोऽनुपपन्नं शास्त्रस्य त्वदुक्तं प्रयोजनपर्यवसायित्वम् ।

यादवप्रकाशीयास्तु दुःखत्रयाभिघातज्ञानानन्तरं तदुपशमोपायेषु पुरुषप्रवृत्तेरेव हेतोर्ब्रह्मैव जिज्ञास्यञ्च तु प्रधानादीनीति प्रथमसूत्रार्थं वर्णयन्ति

१ ज्ञातृनिवृत्तिरिति पा० ।

२ दुःखतद्धेतुष्विति पा० ।

अस्तु ब्रह्मणो जिज्ञास्यत्वं नैतावता प्रधानादीनामजिज्ञास्यत्वन्तेष्वन्यतमस्यैव ब्रह्म–शब्दार्थत्वात्, शास्त्रेण हि ब्रह्मानूद्य तज्ज्ञानं विधीयते एकेन वाक्येनैकस्यार्थस्य विधानानुवादायोगात्, अनुवादः प्रमाणान्तरसापेक्षः प्रमाणान्तरैश्च वादिभिः सम्भावितास्तत्त्वप्रकारविशेषाः सर्वे परिकल्पिता इति नार्थान्तरोत्प्रेक्षा[1] न शक्या, अतस्तेष्वन्यतमस्यैव ज्ञातव्यत्वविधानाय शास्त्रेणानुवादः क्रियत इति शङ्कापरिहारार्थं जन्मादिसूत्रं, सन्मात्रवपुषोऽनेकशक्तिशालिन एकस्मादद्वितीयात् ब्रह्मणः कृत्स्नस्य चिदचित्प्रपञ्चस्य जन्मस्थितिलयं प्रतिपाद्यम्, अत ईदृशं तत्त्वं वाद्यन्तरैरपरिकल्पितमिति न तेष्व[2]न्यतमस्य ब्रह्म–शब्दार्थत्वमिति सूत्रार्थमाहुः। एवं तर्हि प्रमाणान्तरासिद्धत्वाच्छास्त्रेणानुवादासम्भव इति शङ्कायां शास्त्रयोनित्वादित्युच्यते, वेदान्तेष्वेव केनापि वाक्येन प्रतिपादितस्य वाक्यान्तरेणानुवाद उपपन्नः प्रमाणान्तरानाघ्रातचरवस्तुप्रतिपादनक्षमत्वं शब्दमहिमा इति सूत्रतात्पर्यं वदन्ति तथाऽपि सिद्धे व्युत्पत्त्यभावात्प्रवृत्तिनिवृत्तिविरहे वाक्यस्य प्रयोजनाभावाच्च ब्रह्मणः शास्त्रप्रतिपाद्यत्वायोगशङ्कापरिहारपरं समन्वयसूत्रं व्याचक्षते तत्र तावत्प्रथमसूत्रे दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वं प्रागेव प्रतिक्षिप्तं, प्रत्यक्षादिना तज्ज्ञाने विवक्षिते तत्परिहारस्यायुर्वेदादिसिद्धत्वात्। स्वर्गादेरपि तापत्रयान्तर्भावज्ञानस्य च सांख्यादिशास्त्रान्तराधीनत्वे मोक्षोपायस्यापि तत्रैव सुलभतया वेदान्तनैरपेक्ष्यात् वेदेन तज्ज्ञानस्य कर्मविचारसापेक्षतया तत्पूर्ववृत्तत्वापाताच्चेति। प्रधानादीनामजिज्ञास्यतापरत्वञ्च पूर्वमेव निरस्तं श्रुत्यविरुद्धांशे साङ्ख्यादिशास्त्रस्य भवद्भिरङ्गीकृतत्वाद्विरुद्धांशे चाप्रामाण्यस्य विरोधाधिकरणन्यायसिद्धत्वात् तत्तत्प्रमेयदौस्थ्यस्य च तर्कपादे दर्शयिष्यमाणत्वाद्वेदान्तवाक्यानामतत्परत्वस्य ईक्षत्यधिकरणादिषु वक्ष्यमाणत्वाच्च सूत्रस्य कृतकरत्वप्रसङ्गादिति जन्मादिसूत्रस्य वाद्यन्तरापरिकल्पितप्रकारौपनिषदतत्त्ववैलक्षण्यात्, ब्रह्म–शब्दस्य तत्परिकल्पितप्रधानाद्यन्यतमविषयत्वनिरासपरत्वं चायुक्तं विशेषणभेदायत्तविशेष्यबहुत्वप-

१ तत्त्वान्तरोत्प्रेक्षेति पा॰।
२ न तत्परिकल्पितार्थेषु इति पा॰।

रिहाराभावे सत्यद्वितीयवस्तुनः समस्तजगत्कारणत्वप्रतिपादनानुपपत्तेः, चिदचित्प्रपञ्चस्याद्वितीयकारणतया हि वाक्यान्तरक्लृप्ततत्त्वेभ्य औपनिषदतत्त्ववैलक्षण्यं भवद्भिरुक्तं, वेदान्तवेद्यतत्त्वस्य त्वदुक्तप्रकारेण प्रधानादिवैलक्षण्यं चेक्षत्यधिकरणन्यायनैरपेक्ष्येण न सिध्यति इह वक्ष्यमाण व्यतिरिक्तन्यायान्तरानुक्तेः, वक्ष्यमाणानुपपत्तीनां वक्ष्यमाणन्यायैर्विना परिहारायोगाच्च, वक्ष्यमाणोपजीवने च तत एव तत्त्ववैलक्षण्यं प्रधानादेरजिज्ञास्यत्वं च सिध्यतीति कृतकरत्वं स्यात्, वाक्यान्तरेण प्रतिपादितस्य वाक्यान्तरेणानुवादसम्भवपरत्वञ्च शास्त्रयोन्यधिकरणस्यायुक्तं कृतकरत्वादेव "अग्निहोत्रं जुहोती"ति वाक्यान्तरेण विहितस्य होमस्य "दध्ना जुहोती"ति, वाक्यान्तरेणानुवादः पूर्वकाण्डे प्रसिद्धः आग्नेयादिषट्कं तदुत्पत्तिवाक्यविहितं "य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वान् अमावास्यां यजते इति वाक्याभ्यामनूद्यत इति च तत्र तत्र प्रसिद्धम्, अतो वाक्यभेदेन विधानानुवादसम्भवो नात्र व्युत्पाद्यः। समन्वयसूत्रस्य च प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि शास्त्रस्य प्रयोजनवत्ताप्रतिपादनपरत्वमिष्टं सिद्धे व्युत्पत्तिप्रतिपादनपरत्वं त्वयुक्तं, प्रथमसूत्रेणैव सिद्धार्थव्युत्पत्तेः समर्थितत्वात्, तत्र च तत्समर्थनाभावेन त्वदुक्तार्थपरत्वे तत्सूत्रवैयर्थ्यस्योपपादितत्वाच्च, सिद्धवस्तुमात्रे शब्दशक्तिसमर्थनाभावे सति सिद्धवस्तुवैलक्षण्यस्य तद्विधानानुवादस्य तत्प्रयोजनादिनिरूपणस्यानपेक्षितत्वेन जन्मादिसूत्रत्रयोत्थानस्य तत्पूर्वकत्वावश्यंभावाद्वक्ष्यमाणोपजीवनेनोत्थाने प्रतिपत्तिक्रमसामञ्जस्याभावादाद्यसूत्रस्यापेक्षितविधेरनपेक्षितविधानपरत्वायोगाच्च। अतो भाष्यकारोक्तार्थपरत्वमेव चतुःसूत्र्या उपपन्नम्॥

समाप्तं समन्वयाधिकरणं चतुःसूत्रीव्याख्या च कृता।

ईक्षतेर्नाशब्दम्॥५॥ प्रथमे सूत्रे उद्देशः कृतः द्वितीये लक्षणमुक्तं तृतीयचतुर्थाभ्यां लक्ष्यस्य ब्रह्मणः परीक्ष्यत्वसिद्ध्यर्थं लक्षणस्वभावात्सिद्धरूपलक्ष्यस्वभावाच्च उत्थिते ज्ञातत्वाप्रयोजनत्वशङ्के परिहृते। अथ लक्ष्यं वस्तु किञ्चिदचिद्विलक्षणम्? उताविलक्षण?मिति परीक्ष्यते। यद्वा पूर्वं कारणत्वमनूद्य तस्य लक्षणत्वमुक्तं लक्षणलक्ष्यस्वभावनिबन्धनं शङ्काद्वयं च परिहृतम्॥

ईक्षत्यधिकरणम्

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

यतो वा इमानीत्यादिजगत्कारणवादिवाक्य-
प्रतिपाद्यं सर्वज्ञं सर्वशक्ति समस्तहेयप्रत्य-
नीककल्याणगुणैकतानं ब्रह्म जि-
ज्ञास्यमित्युक्तम् ॥

अथ लक्षणभूतकारणत्वप्रापकवाक्यानि निरूप्यन्ते । यद्वा चतुःसूत्र्या वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यरूपपरीक्ष्यतारूपपरिकरस्थापनं कृतम् । अथ प्रमेयविशेषपरीक्षा क्रियत इति पेटिकासङ्गतिः । नन्वीक्षत्यधिकरणमनारम्भणीयं सन्वयाधिकरणे पुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपाद्यत्वनिश्चयेन हेयास्पदस्य प्रधानस्य प्रसङ्गाभावादिति चेन्नैवं पुरुषार्थभूतस्य ब्रह्मणः प्रतिपाद्यत्वं न सम्भवति अपुरुषार्थभूतस्य प्रधानादेः प्रतिपादनादिति समन्वयाधिकरणोक्तार्थस्याक्षेपेणोत्थानादिति इयमवान्तरसङ्गतिरित्येतदभिप्रायेण पेटिकाभेदतत्सङ्गत्यवान्तरसङ्गतीराह "यतो वा इमानीत्यादी"ति, उद्दिष्टस्य ब्रह्मणो लक्षणमुक्तं, लक्षितस्य परीक्षणं वर्त्तिष्यत इत्यभिप्रायेण लक्षणवाक्यमुपात्तं, चतुःसूत्र्याः कारणत्वानुवादेन तस्य लक्षणत्वविधानात्, कारणस्य च चिदचिद्विलक्षणनिर्णयस्य कारणत्वप्रापकवाक्यनिरूपणसापेक्षत्वादस्मिन्नधिकरणे कारणवाक्यानि निरूप्यन्त इति च ज्ञा-

इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादि-
प्रतिपादनानर्हतोच्यते, ईक्षतेर्नाशब्दमित्यादिना,

पनार्थं लक्षणवाक्योपादानम् । आदि-शब्देन कारणत्वप्रापकवाक्यानि गृह्यन्ते, अत एव ह्यनुवादपुरोवादसाधारण्येन जगत्कारणवादीत्युक्तं, समन्वयाधिकरणार्थाक्षेपहेतुकावान्तरसङ्गत्युपयोगीनि सर्वज्ञत्वादिविशेषणानि, जिज्ञास्यमित्युक्तमिति प्रामाणिकतया परीक्ष्यमित्यर्थः, तदनन्तरं परीक्षा हि सङ्गतेत्यभिप्रायेणाह "इदानीमि"ति, अनेन चतुःसूत्र्यानन्तर्यं ब्रह्मणः पुरुषार्थताप्रतिपादनपरसमन्वयाधिकरणानन्तर्यमप्युक्तम्, आनुमा-

निकप्रधानादीत्यनेनानन्तरोक्तसमन्वयाक्षेपोत्थानादवान्तरसङ्गतिरिति सूच्यते, प्रधानादीत्यादि-शब्देन क्षेत्रज्ञमात्रं, चिद्विशेषा अचिद्विशेषाश्च गृह्यन्ते, ईक्षतेर्नाशब्दमित्यादिनेति, पादशेषेणाध्यायशेषेणेति वाऽर्थः ।

विषयमुदाहरति-

सू॰ इदमाम्नायते छान्दोग्ये "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेये"ति "तत्तेजोऽसृजते"त्यादि, तत्र सन्दिह्यते किं सच्छब्दवाच्यं जगत्कारणम्

टी॰ "इदमि"ति, प्रतिज्ञादृष्टान्तोपेतं सङ्कल्पप्रतिपादकसामान्यशब्दवत् कारणवाक्यं विषयः, तत्र सद्विद्यावाक्यमेवास्याधिकरणस्य साक्षाद्विषयः, सद्विद्याद्वारेणेदृशकारणवाक्यानां विषयत्वं न तु साक्षादेव, विषयवाक्योपादानसमये वाक्यान्तराणामनुपादानात्, दीपसारयोश्च तेषामनुपात्तत्वात्प्रतिज्ञाविरोध-स्वाप्ययगत्यपोरेव सूत्रितत्वात्तदनुग्राहकत्वेनोपनिषदन्तरगतिसामान्यस्यास्यामुपनिषदि विद्यान्तरेषु श्रुतत्वस्यापि सूत्रितत्वात्, बुद्ध्यवतरणक्रमेण प्रथममुपादानत्वोचिताचेतनत्वशङ्कायाः प्रतिक्षेप्यत्वात् सद्ब्रह्मात्मादिपदचिह्नितेषु वाक्येषु सामान्य-शब्दचिह्नितवाक्यस्य प्रथमनिरूपणीयत्वाच्च, सामान्यद्वारा हि विशेषो बुद्धिमधिरोहति, सामान्यपरिग्रहे प्रतिक्षेपे च विशेषविषयसंशयोऽवकाशवान्, विशेषे प्रतिपन्ने हि सामान्याकाङ्क्षा न स्वरसवाहिनी, सन्दिग्धे हि न्यायप्रवृत्तिः अतः संशयसद्भावमाह "तत्रे"ति, कारणस्येदं-शब्दवाच्यकार्यसालक्षण्यस्यावश्यंभावेक्षितृत्वाभ्यां संशयः, संशयशरीरं दर्शयति "किमि"ति, सच्छब्दवाच्यमिति धर्मिवाचिपदस्य साधारणतया संशयहेतु[1]त्वं दर्शितं, जगत्कारणमित्युपादानत्वात् कार्यसालक्षण्यं दुस्त्यजं निमित्तत्वात् मुख्येक्षितृत्वं चेति संशयहेतुस्थिरीकरणम् ।

सू॰ परोक्तमानुमानिकं प्रधानं ? मुतात्मलक्षणं ब्रह्मे ? ति,

---

१ संशयमहत्त्वमिति पा॰ ।

टी० परोक्तमिति विप्रतिपत्तिरपि संशय—हेत्वोरनुग्राहिकेति भावः पूर्वपक्षबीजस्मारणपरसौत्रपदद्योतनार्थमानुमानिकमिति पदम् । उक्तलक्षणं—सर्वज्ञत्वादिलक्षणमानुमानिकोक्तलक्षणपदाभ्यां संशयहेतुद्वयसूचनम् । किञ्च जगत्कारणवादिवेदान्तवाक्यानि किं प्रधानादिप्रतिपादनपराणि? उत तद्विलक्षणब्रह्मपराणी? ति पादशेषसाधारणो विचारः, अत्र तु तदर्थं सद्विद्यावाक्यानि किं प्रधानप्रतिपादनपराणि? उतोक्तलक्षणब्रह्मपराणी?ति विचारः, तदर्थं किमत्रेक्षणं गौणं? मुत मुख्य? मिति तदर्थं किमनुमानाकारता गौणेक्षणसाहचर्यं च विद्यते? नेति, तदर्थं प्रतिज्ञादृष्टान्तौ किं हेतोराक्षेपकौ ने? ति, तेजः प्रभृतिशब्दा किं तेजः प्रभृतिमात्रवाचिनः? उत परमात्मपरा? इति च, तदर्थमात्म—शब्दस्तेजः प्रभृतिशब्दानाम् अब्रह्मपरत्वस्य अविरोधि? उत विरोधीति तदर्थमात्मशब्दस्वारस्यभङ्गहेतवोऽनुरोद्धव्या ? उत तदनुग्राहकहेतव? विचारः, तत्स्वारस्यभङ्गहेतवोऽनुरोद्धव्या इति पूर्वपक्षः तदनुग्राहका एवानुरोद्धव्या इति सिद्धान्तः, यदात्मशब्दस्वारस्यभङ्गहेतोरनुरोद्धव्यत्वेनात्म—शब्दस्य तेजः प्रभृतिशब्दानां ब्रह्मपरत्व-विरोधितया तेजः प्रभृतिशब्दास्तेजः प्रभृतिमात्रवाचिनः, प्रतिज्ञादृष्टान्तौ च यदा हेत्वाक्षेपकौ तदा हेत्वाक्षेपो गौणेक्षणसाहचर्यं चास्तीति प्रथमश्रुतेक्षणस्य गौणत्वेन सद्विद्यावाक्यानां प्रधानपरत्वात्तदेकार्थतया सर्वाणि कारणवाक्यानि प्रधानपराणीति पूर्वपक्षे फलफलिभावः, यदाऽऽत्मशब्दस्वारस्योत्तम्भकहेतोरनुरोद्धव्यत्वेनात्म—शब्दस्य तेजः प्रभृतिशब्दानामब्रह्मपरत्वाविरोधित्वेन तेजःप्रभृतिशब्दाः परमात्मपराः, प्रतिज्ञादृष्टान्तौ च न यदा हेत्वाक्षेपकौ तदा ऽनुमानाकारत्वगौणेक्षणसाहचर्ययोरसिद्धा प्राथमिकेक्षणस्यागौणत्वात् सद्विद्यावाक्यानि परब्रह्मपराणि, अतस्तदैकार्थ्यात्सर्वाण्यपि कारणवाक्यानि परब्रह्मपराणीति सिद्धान्ते फलफलिभावः—

सू० किं प्राप्तं? प्रधानमिति, कुतः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमितीदं—शब्दवाच्यस्य चेतनभोग्यभूतस्य

१ अब्रह्मपरत्वविरोधितयेति पा० ।

टी० तत्र पूर्वपक्षं वक्तुमन्यतरशिरसो युक्तिमत्त्वेन निर्द्धारणाकाङ्क्षां दर्शयति "किं प्राप्तमि"ति, प्राप्तं–युक्तं, युक्तिमदित्यर्थः । पूर्वपक्षी स्वपक्षं युक्तिमत्त्वेन प्रतिजानीते "प्रधानमिती"ति, संशयक्रोडीकृतशिरोद्वये प्रधानमिति शिरो युक्तमित्यर्थः । युक्तिविशेषाकाङ्क्षां दर्शयति "कुत"इति, तदुपपादयति "सदेवे"ति, कारणस्य प्रधानत्वासिद्धौपयिकानि तद्विलक्षणपुरुषविशेषत्वविरोधीनि च विशेषणान्याह "इदं शब्दे"त्यादिना, इदं–शब्दवाच्यस्येति, परागर्थे हीदं–शब्दस्वारस्यं न तु प्रत्यग्रूपे चेतन इति भावः । जगतश्चिदचिदात्मकतया चेतनस्यापीदं–शब्दवाच्यान्तर्भावव्युदासायाह "चेतनभोग्यभूतस्ये"ति, चिदंशस्य कार्यत्वकारणत्वायोगात् न तस्य कार्यान्तर्भाव इति भोक्तृतयाऽवस्थानमेव तस्य, भोग्यस्यैव तु कार्यत्वमिति भावः । चेतनस्य ज्ञयतैकस्वभावजगद्रूपत्वमयुक्तमिति चाभिप्रायः । कार्यस्य भोग्यत्वौपयिकं कारणस्य प्रधानत्वौ[1]पयिकं च विशेषणमाह–

**भू० सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्थां वदति, कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्य्यता, अतो यद् द्रव्यं यत्स्वभावं च कार्य्यावस्थं तत्स्वभावन्तदेव द्रव्यं कारणावस्थं सत्त्वरजस्तमोमयं च कार्य्यमिति ।**

टी० "सत्त्वरजस्तमोमयस्ये"ति, सत्त्वादिकार्यसुखदुःखमोहान्वयहेतुत्वदर्शनाज्जगतः सत्त्वादिमयत्वम्, निर्गुणः कथं गुणमयस्य कारणम्? मिति चाभिप्रायः । भोग्यत्वोपपादनायाह "वियदादी"ति, यद्वा इदं–शब्दवाच्यद्रव्यस्य कारणत्वे कार्यत्वकारणत्वयोः को भेद? इत्यत्राह "वियदादी"ति, एकत्वावस्थं कारणं बहुत्वावस्थं कार्यमिति भिदेत्यर्थः । एकरूपस्य पुरुषस्य नानारूपकार्यभावोऽनुपपन्नश्चेति भावः । कारणस्य कार्यसालक्षण्यावश्यंभावेऽपि हि चेतनस्येदं–शब्दवाच्यं प्रति कारणत्वानुपपत्तिः कारणावस्था कार्योत्पादनभूतद्रव्यान्तरनिष्ठेति कथं सालक्षण्यावश्यंभाव? इति शङ्कायां

१ प्रधानत्वापादकमिति पा० ।

कार्यकारणयोरेकद्रव्यत्वमाह "कारणभूतद्रव्यस्ये"ति, ततः किमित्यपेक्षायां ? कार्यकारणसालक्षण्यनियमं फलितमाह "अत" इति, ततोऽपि किमित्याशङ्कायां कार्यस्य प्रधानसालक्षण्यमाह "सत्त्वादिमयञ्चे"ति, प्रधानस्य कार्यसारूप्यमाह—

**सू० गुणसाम्यावस्थं प्रधानमेव कारणं, तदेवोपसंहृतसकलविशेषं सन्मात्रमिति "सदेव सोम्येदमग्र आसीदेकमेवेत्यभिधीयते, तत एव च कार्य्यकारणयोरनन्यत्वम् । तथा सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः ॥**

टी० "गुणसाम्यावस्थ"मिति, कार्ये गुणवैषम्यदर्शनात्कारणमपि तथाविधं स्यादित्याशङ्कापाकरणार्थं गुणसाम्यावस्थमित्युक्तं, न तु गुणमयमिति, विषमावस्थस्य सर्वस्य कार्यत्वदर्शनात् कारणस्यापि तथात्वे कारणान्तरापेक्षयाऽनवस्थाप्रसङ्गाच्च प्रधानस्य गुणसाम्यावस्थत्वसिद्धिरिति भावः । अनेकगुणसाम्यावस्थस्य प्रधानस्य कारणत्वे एकत्वावधारणमनुपपन्नम्, एकस्यैव ब्रह्मणः कारणत्वे तूपपन्नमित्यत्राह "तदेवोपसंहृते"ति, एकमेवेति नामरूपविभागव्युदासः, अद्वितीयमिति गुणवैषम्यव्युदास इत्यभिप्रायेण उपसंहृतसकलविशेषमित्युक्तम् । "सन्मात्रमिति", सदेवेति कादाचित्कासत्त्वव्युदास इति भावः । सन्मात्रमितीत्यत्रेति–शब्दो हेतौ, प्रधानकारणत्वमेव युक्त्यन्तरेणोपपादयितुमाह "तत एवे"ति, तत इदं–शब्दवाच्यं प्रति कारणस्य त्रिगुणात्मकस्य प्रधानस्य सच्छब्दवाच्यत्वादेव हि कार्यकारणयोरनन्यत्वसिद्धिः न हि विजातीययोरनन्यत्वमिति भावः । अनन्यत्वं माभूदित्यत्राह "तथा सती"ति, अनन्यत्वे सति ह्येकविज्ञानेन सर्वविज्ञानसिद्धिः तच्चिदचिद्विलक्षणकारणत्वपक्षे न संभवतीति भावः । एवं प्रतिज्ञासिद्धिरुपयुक्तिरुक्ता भवति । यद्वा इदमग्रे सदिति सामानाधिकरण्यात् तद्धैक आहुरित्यसत्कार्यवादप्रतिक्षेपाच्चानन्यत्वसिद्धिः पूर्वग्रन्थेऽभिप्रेता । हेत्वन्तरं चाह–"तथा सती"ति, तथा सति–प्रधानकारणत्वे

सतीत्यर्थः । कार्यकारणयोरनन्यत्वे प्रतिज्ञावाक्यतात्पर्यात्तत्रैक-शब्दोऽपि गुणसमुदायैक्यात्प्रयुक्त इति भावः । युक्त्यन्तरमाह-

सू० अन्यथा "यथा सोम्यैकेन मृत्पिण्डेनेत्यादि मृत्पिण्डत-त्कार्यदृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यं चेति जगत्कारणत्वा-दिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेदं वाक्यमिति सच्छ-ब्दवाच्यमानुमानिकमेवेत्येवं प्राप्तेऽभिधीयते । 'ईक्षतेर्ना-शब्द"मिति ।

टी० "अन्यथे"ति, अचेतनमृत्पिण्डलोहमण्यादिदृष्टान्तश्चेतनका-रणस्य दार्ष्टान्तिकत्वे हि न सङ्गच्छत इत्यभिप्रायः । यद्वा सरूपमृत्पिण्ड-घटादिकार्यकारणदृष्टान्तो न विरूपकार्यकारणयोर्दार्ष्टान्तिकत्वे घटत इति भावः । कपिलस्मृत्यैकार्थ्यं हेतुत्वेनाभिप्रयन्नाह "जगत्कारणे"ति, उक्तन्यायेन श्रुत्यनुरोधात्स्मृतिनिरोधो[1] न युक्त इति भावः । महर्षिणेति पदेन "ऋषिं प्रसूतं कपिलं महान्तमि"ति, श्रुतिः स्मारिता । हेत्वन्तरमाह "प्रतिज्ञे"ति, । प्रतिज्ञादृष्टान्तयोर्हेत्वाक्षेपकत्वाभिप्रायेणोक्तमनुमानवेषमे-वेति । ननु न कारणविषया प्रतिज्ञा अपि त्वेकविज्ञानेन सर्वविज्ञानविषया अतोऽनुमानवेषत्वेऽपि न प्रधानकारणत्वसिद्धिरिति वाच्यम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सर्वस्यैकस्य चानन्यत्वेन निर्वाह्यत्वादनन्यत्वस्य कार्य-कारणभावनिबन्धनत्वाच्च प्रधानकारणत्वप्रतिज्ञानस्य फलितत्वात् । अत्रायं प्रयोगोऽभिमतो वेदितव्यः जगत्स्वानन्योपादानकं कार्यत्वाद् घटवत् । यद्वा इदं जगत् स्वकारणैकज्ञानेन ज्ञातं भवितुमर्हति कार्यत्वात्, एकमृत्पि-ण्डाद्यारब्धघटादिवदिति । पूर्वपक्षं निगमयति "इतो"ति, इतिर्हेतौ सुख-दुःखमोहात्मकसत्त्वरजस्तमोमयस्येदं-शब्दवाच्यस्य कारणत्वमेकः पूर्वपक्ष-हेतुः कार्यकारणानन्यत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानन्तदुपम्भ-

1 निरास इति पा० ।

कमनुमानाकारप्रतीतिश्चान्यो हेतुः अस्मिन् पूर्वपक्षे सिद्धान्तस्थापनाय पूर्वं सूत्रस्यावतीर्णत्वं दर्शयति "इत्येवं प्राप्त" इति, उच्यमानाः विषयसंशयपूर्वपक्षाः अस्याधिकरणस्येति ज्ञापनाय सूत्रोपादानम् ।

सू० यस्मिन् शब्द एव प्रमाणं न भवति तदशब्दमानुमानिकं प्रधानमित्यर्थः, न तज्जगत्कारणवादिवाक्यप्रतिपाद्यम् ।

टी० अस्य सिद्धान्तसूत्रत्वज्ञापनार्थमक्षरव्याख्यानार्थं चेदानीं तदुपादानमिति वैषम्यं. शब्दवेद्यतयाऽभिमतस्य कथमशब्दत्वमिति शङ्कायामाह ? । "यस्मिन्नि"ति, । अब्भक्षो वायुभक्ष इति वदवधारणगर्भितमितिभावः शब्दैकप्रमाणकत्वं न चेत्तत्र किमन्यत्प्रमाणा? मित्यत्राह "आनुमानिक"-मिति । तर्हि प्रमाणान्तरप्राप्तं शास्त्रं न प्रतिपादयतीति चेत्र सामान्यतोदृष्टानुमानेन कारणमात्रे प्रतिपन्नेऽपि तद्विशेषणानामप्रतिपन्नतया तद्विशिष्टरूपेण शास्त्रप्रतिपाद्यत्वात्, अप्राप्ते शास्त्रमर्थवदिति मीमांसकानां मतं न तु सांख्यानामिति पूर्वपक्षिणोऽभिप्रायः, तस्यानुपपन्नतां च ज्ञापयितुमशब्द-शब्दप्रयोगः, आनुमानिकत्वमिन्द्रियाणां परमाणूनामप्यविशिष्टमिति तद्व्युदासार्थं सौत्रमेकवचनमित्यभिप्रायेणाह "प्रधानमि"ति. प्रधानं ह्येकं सदनेकेषां कारणं, परमाणवस्त्वनेके सन्त एकैकस्य कार्यस्य कारणम्, इन्द्रियाणि तु बहूनि ज्ञानकारणानि न त्वर्थकारणानीति तद्व्यवच्छेदसिद्धिः, नेति पदस्य प्रधानस्वरूपप्रतिक्षेपार्थत्वशङ्कां व्युदस्यन् वाक्यार्थं योजयति "न तदिति", धर्मिनिषेधपरत्वेऽपि शास्त्रस्य वाक्यनिरूपणपरत्व हुतुपदेन धात्वस्वरूपोपादानाच्च प्रतिपाद्यतावेषेण निषेध्यत्वं विवक्षितमिति भावः । वाक्यप्रतिपाद्यत्वाभावः प्रमाणान्तरप्रतिपन्नत्वबाधितत्वाभ्यां वाक्यस्यान्यपरत्वाद्वा स्यात् योग्यानुपलब्ध्याद्यभावादप्रतिपन्नाकारवैशिष्ट्यसद्भावाच्च बाधितप्रतिपन्नत्वासम्भव, अन्यपरत्वं तु पूर्वपक्षयुक्तिभिरेव निरस्तम्, अतो हेतुर्न सम्भवतीत्यभिप्रायेण हेत्वाकाङ्क्षां दर्शयति-

सू० कुत ? ईक्षतेः सच्छब्दवाच्यसम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात् ॥

टी० "कुत" इति, हेतोरसिद्धिमन्यथासिद्धिञ्च व्युदसितुं व्याचष्टे—"सच्छब्दवाच्ये" ति, सच्छब्दवाच्यसम्बन्धीति व्यधिकरणासिद्धिव्युदासः, प्रकृतं सदेव हि तदैक्षतेति तच्छब्देन परामृश्यते इति भावः । व्यापार-विशेष—शब्देनाभिधायि—शब्देन चान्यथासिद्धिव्युदासः, न हि चेतनाचेतन-साधारणं कार्य्योन्मुख्यमात्रमीक्षतिधात्वभिधेयम्, अपि तु चेतनरूपकर्त्तृसा-धारणो व्यापारविशेषः, न च मुख्ये सम्भवति उपचारो युक्त इति भावः । "इक्श्तिपौ धातुनिर्द्देशे वक्तव्या" विति प्रक्रियया ईक्षति—शब्देन धातूपा-दानं नार्थोपादानन्तथा सतीक्षतेरिति हि वक्तव्यम्, स्यात् अनेन च शब्दस्य विवक्षितार्थे स्वारस्यं सूचितमित्यभिप्रायेणाह "धातो" रिति, श्रवणादित्य-ज्ञानासिद्धिपरिहारः श्रूयमाणादीक्षतेरिति सूत्रविवक्षितं, तत्फलितं तु षष्ठ्या निष्कृष्य व्याख्यातम्, ईक्षति—शब्देनेक्षणं लक्षितमिति । वेदान्तदीपे व्याख्या-तम् अर्थस्वारस्याय, अत्र तु—शब्दस्वारस्येन व्याख्यातं । ननु तत्तेज ऐक्षत ता आप ऐक्षन्तेति वाक्यद्वयगतमीक्षणमचित्सम्बन्धितया प्रतीयते, सेयं देव-तैक्षतेत्यत्रापि ईक्षणमचिद्गतमेवोचितं देवता—शब्दस्य हन्ताहमिमास्तिस्रो देवता इत्यासन्नवाक्यस्यदेवताशब्दविरूपार्थत्वायोगात्, प्रथमेक्षणं च सेय-मिति तच्छब्दपरामृष्टसत्सम्बन्धित्वादचिद्गतमेवेत्याकाङ्क्षयामाह—

**सू० "तदैक्षत बहु स्यां प्रजायेये" ति, ईक्षणक्रियायोगश्चाचेतने प्रधाने न सम्भवति, अत ईदृशेक्षणक्षमश्चेतनविशेष एव सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः, तथा च सर्वेष्वपि सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते ।**

टी० "तदैक्षते" ति, चरमवाक्यानुरोधेनोपक्रमस्वारस्यभङ्गो न युक्त इतीदन्तावदीक्षणं मुख्यमिति भावः । धात्वर्थानां क्रियात्वादचेतनस्य च क्रियायोगसम्भवाच्चात्रानुपपत्तिरित्यत्राह "ईक्षणक्रिये" ति, अयं क्रियाविशेषो न सम्भवतीत्यर्थः । ततः किं? मित्यत्राह "अत" इति, अतः—अचेतनस्या-सम्भावितत्वेनेक्षणस्य त्वत्पक्षे विरुद्धत्वादित्यर्थः । "ईदृशेक्षणक्षम" इति अनेनाचिद्व्यावृत्तिरुक्ता, ईदृश—शब्देन चेतनविशेष—शब्देन चेक्षणस्वभावक-

लिताच्चेतनमात्रादपि व्यावृत्तिरुक्ता, यच्चेतनमात्रेऽपि न सम्भवति तत्क-थमचेतने सम्भवतीति भावः । तदैक्षतेति सिद्धं गुणमाह "सर्वज्ञ" इति, बहु स्यामिति फलितमर्थमाह "सर्वशक्ति"रिति, चिदचिद्व्यावर्त्तकलिङ्गब-लसिद्धं सदेवेति सामान्यश्रुतेः पर्यवसानस्थलं दर्शयति "पुरुषोत्तम" इति, सेयं देवतेति देवता-शब्दोऽपीक्षणविशेषसामर्थ्याच्छागपशुन्यायेन चानुगृहीतः प्रकरणान्तरोक्तदेवताविशेषविषय इति भावः । सद्विद्यावाक्यस्योक्तार्थपर-त्वमनेकश्रुत्यन्तरस्वारस्येनोपपादयति "तथा चे"ति, नात्र विषयवाक्यतया श्रुत्यन्तरोपादानं सर्वेष्वेव सर्वेष्वपि इति अनेन प्राचुर्यमभिप्रेतम्, ईक्ष-णस्य गौणत्वाश्रयणेऽनेकश्रुतिस्वारस्यभङ्ग प्रसङ्गः इति भावः ।

भा० "स ऐक्षत लोकानुसृजा" इति, "स इमान् लोकान-सृजत" "स ईक्षाञ्चक्रे" "स प्राणमसृजते"त्यादिषु। ननु च कार्यानुगुणेनैव कारणेन भवितव्यम्, सत्यं, सर्वकार्य्यानु-गुण एव सर्वज्ञः सर्वशक्तिः सत्यसङ्कल्पः पुरुषोत्तमः सूक्ष्मचिदचिद्वस्तुशरीरकः. यथाह "पराऽस्य शक्तिर्विवि-धैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयन्तपः" "यस्याव्यक्तं शरीरं यस्या-क्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्माऽपह-तपाप्मेत्यादि ।

टी० प्रतीयत–इति प्रतीतिस्तावदविगीतेति भावः । एवं स्वपक्षसा-धकमुक्त्वा पूर्वपक्षयुक्तिं परिहर्तुं चोद्यमुपक्षिपति "ननु चे"ति, कार्यकार-णयोः सालक्षण्यन्तावदङ्गीकार्यं मृत्तत्कार्यादिषु दर्शनात्, तच्च सालक्षण्यं ब्रह्मणस्त्रिगुणात्मकत्वादियोगेन वा जगतस्तद्विधुरत्वेन वा निर्वाह्यम्? आद्ये शब्दान्तरेण प्रधानाङ्गीकारः, द्वितीये सुखदुःखमोहान्वयाद्युपलम्भ-विरोध इति भावः । परिहरति "सत्य"मिति, यद्वाङ्गीकारे सत्य-शब्दः कार्यानुगुण्यमङ्गीकृतं न तु प्रधानमिति सर्वति प्रधानस्यैव हि सर्वकार्या

ननुगुणत्वं कार्यानुप्रविष्टचिदपेक्षया तस्य कारणत्वौपयिकाकारविरहा-दिति भावः । कार्यानुगुणनिमित्तोपादानभावसिद्ध्यर्थं "सर्वज्ञः सर्वशक्ति"-रिति पदद्वयं, तदुभयफलितमाह 'सत्यसङ्कल्प" इति, सर्वशक्तित्वा-सङ्कोचान्न तस्य सङ्कल्पप्रतिबन्धसम्भावनेति भावः । विकारादीनां सद्वा-रकत्वसिद्ध्यर्थं सूक्ष्मेत्यादिपदम्, उक्ताकारविरहे कारणत्वायोगात् तद्वत्त्वे श्रुतिवाक्यानि दर्शयति "परास्ये"ति, चिदचितोः शरीरत्वं कथं शरीरत्वे च तद्गतः कर्मवश्यत्वादिदोषः स्या? दित्यत्राह–

सू० तदे"तन्न विलक्षणत्वा"दित्यादिषु प्रतिपादयिष्यते, अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते, वस्तु-विरोधस्तत्रैव परिहरिष्यते, यत्तूक्तं प्रतिज्ञादृष्टान्तयोगा-दनुमानरूपमेवेदं वाक्यमिति तदसत्, हेत्वनुपादानात्, येनाश्रुतं श्रुतमित्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते

टी० "तदेतदि"ति, न विलक्षणत्वादित्यादिसूत्रैरेषां सूत्राणां पौन-रुक्त्यमाशङ्क्याह "अत्र सृष्टौ"ति, वस्तुविरोधः–अर्थसामर्थ्यविरोधः, अत्र वाक्यतर्केणार्थनिष्कर्षस्तत्र त्वाभिमानिकव्याप्त्याभासनिबन्धनबाह्यतर्कवि-मर्शतन्निरासमुखेनार्थनिष्कर्ष इति भिदेत्यर्थः । एवं सत्त्वादिमयस्येदं–शब्द-वाच्यस्य कारणत्वन्तद्गतमक्रमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च परिहृतं भवति । अथ परोक्तं हेत्वन्तरमनुवदति "यत्तू"क्तमिति, । तस्यानुपपन्नत्व-माह "तदसदि"ति, कथमित्यत्राह "हेत्वनुपादाना"दिति, वक्तुरनुमान-विवक्षाऽस्ति चेत् तत्र प्रधानावयवो हेतुरवश्योपादेयः तदभावान्न तद्वि-वक्षेति भावः । प्रतिज्ञादृष्टान्ताभ्यां हेत्वाक्षेपोऽप्ययुक्त इत्याह "येनाश्रुत"-मिति, अनन्यथासिद्धं ह्याक्षेपकं सर्वप्रमाणसाधारणत्वात्प्रतिज्ञाऽन्यथासि-द्धेति सिद्धं कृत्वा दृष्टान्तस्य हेत्वाक्षेपकत्वायोग उच्यते न केवलं व्याप्ति-प्रदर्शनायैव दृष्टान्तोपन्यासः, अपि त्वसम्भवव्यावृत्तिप्रदर्शनार्थमपि सम्भव-तीत्यन्यथासिद्धत्वात् स नाक्षेपक इत्यर्थः ।

मू० सर्वात्मना तदसम्भवं मन्वानस्य तत्सम्भवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्, ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः। अथ स्यान्न चेतनगतं मुख्यमीक्षणमिहोच्यते, अपि तु प्रधानगतं गौणमीक्षणम् "तत्तेज ऐक्षत" "ता आप ऐक्षन्त"ेति गौणेक्षणसाहचर्य्यात् ।

टी० "सर्वात्मना तदसम्भव"मिति, एकविज्ञानेन सर्वविज्ञानं धर्म्मैक्यादेकाकारान्वयाद्वा वस्त्वन्तरव्यतिरेकाद्वा सम्भवति घटपटादिषु त्रिधाऽपि तन्न सम्भवति घटपटादिषु धर्मैक्यस्यान्वयेनान्यस्माद् व्यतिरेकेण वा समानाकारयोगस्य चाभावादिति भावः। अस्तु दृष्टान्तस्यानुमानाङ्गत्वे सम्भवप्रदर्शनार्थत्वे च साधारण्यं तथा सत्यस्मन्मतेऽपि सम्भवः पाक्षिकः स्यादित्यत्राह "ईक्षत्यादी"ति,। आदि-शब्देन वक्ष्यमाणहेतवो विवक्षिताः प्रतिज्ञादृष्टान्तयोः साधारण्येनानुमानत्वं शङ्कितम्, ईक्षणाद्यसाधारणहेतुसद्भावाच्छङ्काऽपि निरस्तेत्यभिप्रायेणोक्तमनुमानगन्धाभाव इति । उत्तरसूत्रमवतारयितुमीक्षणस्य गौणत्वं शङ्कते "अथ स्यादि"ति । चेतनगतं-चेतनत्वानुगुणम्, इहेति प्रकरणमालोचनीयमिति भावः । प्रधानगतम्-अचेतनत्वानुगुणमित्यर्थः प्रथमेक्षणस्य तेजःप्रभृतिकार्याचिद्गतत्वायोगात् प्रधानशब्दोहेतुमाह "तत्तेज" इति, प्रायदर्शनाय वाक्यद्वयमुपात्तम्, अन्यप्रायन्यायो ऽपि बाधकाभावे जीवतीति भावः । सेयं देवतैक्षतेति देवता-शब्दोऽप्यनेनैव न्यायेन इमास्तिस्रो देवता इतिवदचिद्विषयत्वौचित्यान्न गौणत्वबाधक इति भावः । गौणप्रयोगं दर्शयति—

मू० भवति चाचेतनेष्वपि चेतनधर्मोपचारः, यथा वृष्टिप्रतीक्षा शाल्यः, वर्षेण बीजं प्रतिसञ्जहर्षति, अतो गौणमीक्षणमितीमामाशङ्कामनुभाष्य परिहरति

सू० गौणश्चेन्नात्म-शब्दात् ॥ ६ ॥

यदुक्तं गौणेक्षणसाहचर्य्यात्सतोऽपीक्षणव्यपदेशः सर्ग-

नियतपूर्वावस्थाभिप्रायो गौण इति, तन्न "ऐतदात्म्यमिदं सर्वं" "तत्सत्यं स आत्मे"ति ।

टी० "भवति चे"ति, ईक्षणतुल्ययोगक्षेमहर्षादिधर्मान्तरसंग्रहाय चेतनधर्म-शब्दः, लोके शास्त्रे च प्रयोगद्वयं दर्शितं, गौणत्वं निगमयन्नुक्तश-ङ्कापरिहाराय सूत्रस्यावतीर्णत्वमाह "अत"इति, शङ्काया उत्सूत्रत्वाभा-वादनुभाष्येत्युक्तं, सू० गौणश्चेन्नात्म-शब्दात्, केन गुणयोगेन गौणत्व ?-मिति शङ्कां परिहरन्सूत्रं योजयति "यदुक्तमि"ति, पुंलिङ्गगौणशब्दविशेष्यः प्रकृते ईक्षतिरित्यभिप्रायेणोक्तमीक्षणव्यपदेश इति, गौण ईक्षतिर्नेत्युक्ते विशे-ष्यप्रतिक्षेपशङ्काव्युदासाय यत्तच्छब्दाभ्यां विशेषणनिषेधपरत्वेन व्याख्यातम् । यद्गौणत्वमुक्तं तन्नेत्यर्थः, सर्गेति गौणोऽर्थः सर्गप्रागवस्था तत्र नियतपूर्व-कत्वलक्षणं कार्यानुरूप्यं गुणयोग इत्यर्थः । आत्म-शब्दादिति सौत्रपदेना-विशेषेण ऐतदात्म्यं स आत्मेति वाक्यद्वयगत आत्म-शब्दो विवक्षित इत्यभिप्रायेण वाक्यद्वयमुपात्तम् ।

भा० सच्छब्दप्रतिपादितस्यात्म-शब्देन व्यपदेशात्, एतदुक्तम्भ-वति "ऐतदात्म्यमिदं सर्वं स आत्मेति चेतनाचेतनात्मक-प्रपञ्चोद्देशेन सत आत्मेत्यात्मोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छत इति, अतस्तेजोबन्नानामपि परमात्मैवात्मेति,

टी० सच्छब्दप्रतिपादितस्येति ऐतदात्म्यमित्यत्रैतच्छब्दस्य स आ-त्मेत्यत्र स इति पदस्य च प्रकृतपरामर्शित्वादिति भावः । आत्म-शब्दोऽपि मृदात्मको घटः, घटस्य मृदात्मेतिवत्स्वरूपानतिरिक्तार्थः स्यादित्य-त्राह "एतदुक्तमि"ति, चेतनाचेतनप्रपञ्चोद्देशेनेति, इदं सर्वमिति सर्वश-ब्दासङ्कोचस्य स्वतःप्राप्तत्वात्सन्मूलाः सर्वाः प्रजा इति पूर्ववाक्यैका-र्थ्यात् इदं सर्वमसृजत सच्च त्यच्चा भवत् विज्ञानं चाविज्ञानं चेति श्रुत्यन्तरै-कार्थ्याच्च सर्व-शब्दश्चिदचिदात्मकजगद्गोचर इति भावः । नाचेतन इति न हि अचेतनस्य चेतनेन स्वरूपैक्यं सम्भवतीत्यर्थः । एवं गौणेक्षणसाहचर्य-

मभ्युपगम्य दूषणमुक्तम्—अथ यदुक्तं तदेव नास्तीत्यत्राह "अत" इति, अतः—चिदचिदात्मकप्रपञ्चस्यात्मत्वादित्यर्थः । किमर्थमीक्षणोपदेशरहितस्याव्स्योपादनम् ? उच्यते ईक्षणोपदेशविरहनिबन्धनाब्रह्मात्मकत्वशङ्कानिराकरणार्थम्, अन्यथा सर्वस्य कार्यजातस्य ब्रह्मात्मकत्वानवगमादिदं सदिति सामानाधिकरण्यायोग्यत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं न घटते, अतस्तदुपादानेन प्रतिज्ञासिद्ध्यौपयिकमनुप्रवेशश्रुतिसिद्धम् अबस्य ब्रह्मात्मकत्वमिहानुषङ्गिकं दर्शितं, न हि किञ्चिदप्यतदात्मकमित्यपि—शब्दाभिप्रायः अतदात्मकत्वेन त्वदभिमतानामपीति वा यदाश्रयतया प्रथममीक्षणं मुख्यं स एवेत्येवकाराभिप्रायः—

सू० ति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः, तथा हि "हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वं चेति "तत्तेज ऐक्षत" "ता आप ऐक्षन्ते"त्यपि मुख्य एवेक्षणव्यपदेशः ।

टी० "तेजःप्रभृतयोऽपी"ति, सच्छब्दवदित्यपि—शब्दस्य भावः । लोके तेजः प्रभृतिमात्रपरत्वेन व्युत्पन्ना अपीति वा, परस्यात्मन एवेति विशेष्यतया प्राधान्येन प्रतिपाद्यः परमात्मैव, तेजःप्रभृतयस्तु द्वारमात्रमिति भावः । परमात्मवाचित्वमुपपादयति "तथा ही"ति, वस्तुत्वं तत्तद्रूपवस्तुत्वं, तेजसो वस्तुत्वं तेजस्त्वम्, अपां वस्तुत्वमप्त्वं, पृथिव्या वस्तुत्वं, पृथिवीत्वं, देवमनुष्यादीनां वस्तुत्वं देवत्वमनुष्यत्वादिकं, तत्तद्वस्याभाक्त्वमित्यर्थः, नामभाक्त्वं—नामवाच्यत्वम् । ननु कथं परस्य नामव्याकर्तृत्वश्रवणान्नामवाच्यत्वसिद्धिः ? उच्यते तन्नामरूपाभ्यां व्याक्रियत इति समानवाक्ये व्याकृतत्वश्रवणात् नाम्ना विशेषितत्वं हि नाम व्याकृतत्वं नामविशेषितत्वं च नामवाच्यत्वरूपमिति प्रसिद्धं न तु तदुत्पादकत्वमात्रं, न ह्याकाशस्य वा मातापित्रादेर्वा देवदत्तादिनामविशेषितत्वप्रसिद्धिः, अतो नामविशेषितत्वन्नामवाच्यत्वम्, अतस्तदैकार्थ्यादत्रापि नाम-

च्यत्वं विप्रचितं, वचसां वाच्यमुत्तममिति चायमर्थ उच्यते, एवं तेजःप्रभृतिशब्दानां परमात्मवाचित्वोपपादनफलमाह "इति तत्तेज ऐक्षत" इति, इति-शब्दो हेतुपरः । मुख्यत्वफलमाह-

सू० अतः साक्षात्कार्य्यादपि तदैक्षतेत्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः,

इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम्-

सू० तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

टी० "अत" इति, अपि-शब्दो गौणत्वशङ्काहेतुसमुच्चयपरः, इदं-शब्दवाच्यजगत्कारणत्वादिना गौणत्वशङ्का परिहृता, गौणेक्षणसाहचर्यात् गौणत्वशङ्का च निरस्तेत्यर्थः । यद्वा त्वन्मतसाधकादपि त्वन्मतं निरस्तमिति भावः । दूरोत्सारितेति गौणसाहचर्ये सत्यपि सर्व-शब्दतत्प्रतिसम्बन्धिवाचकात्मशब्दस्वारस्येन तदैक्षतेत्यत्र गौणत्वशङ्कोत्सारिता, गौणसाहचर्यासिद्धा दूरोत्सारिता इत्यर्थः, गौणेक्षणसाहचर्ये सत्यपि आत्म-शब्दात् प्रथमेक्षणमगौणम्, आत्म-शब्दादेव गौणेक्षणसाहचर्यमसिद्धं चेत्यर्थद्वयं कथमेकेन वाक्येनोच्यते ? इत्यत्राह "इति सूत्राभिप्राय" इति, प्रतिज्ञादृष्टान्तयोर्हेत्वनाक्षेपकत्वं मुख्यामुख्यार्थानुग्राहकेषु मुख्यानुग्राहकस्यानुरोद्धव्यत्वं चास्मिन्नधिकरणे व्युत्पाद्यमिति सूत्रद्वये स्पष्टम् । अवान्तरसांख्यविषयत्वशङ्कां व्युदस्यन्नुत्तरसूत्रमवतारयति "इतश्चे"ति, कारणत्वापर्यवसिततधर्मनिरूपणेन परमात्मत्वं सतः समर्थितम् । अथ "कारणन्तु ध्येय" इति कारणवस्त्वसाधारणमोक्षप्रदत्वधर्मेण परमात्मत्वं साध्यत इति सङ्गतिः । सूत्रं-तन्निष्ठस्य मोक्षोपदेशात्" तस्य तावदिति श्रुतौ तस्येति पदस्य व्याख्यानं सूत्रे तन्निष्ठस्येति पदमिति दर्शयंस्तच्छब्दनिष्ठाशब्दयोरर्थं विवृण्वन् सूत्रार्थमाह-

सू० मुमुक्षोः श्वेतकेतोस्तत्त्वमसीति सदात्मकत्वानुसन्धानमुपदिश्य तन्निष्ठस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्ये

टी० "मुमुक्षोरि"ति, अर्वाचीनफलकदृष्टिविधिसम्भवाच्चेतने कृत्स्नजगदुपादानतयोत्कृष्टप्रधानदृष्टिविधिरयमिति शङ्का मुमुक्षोरिति पदेन निरस्ता । तत्त्वमसीति सदात्मकत्वानुसन्धानमुपदिश्येति सदात्मकत्वोपदेशवाक्यगतस्तच्छब्दः प्रकृतसद्विषय इति ज्ञापनपरः सूत्रे तच्छब्द इत्यभिप्रायेण सदात्मकत्वेत्युक्तम् । अनुसन्धान–शब्देन निष्ठा–शब्दार्थ उक्तः, इहोपदेशवाक्यस्यानुसन्धानार्थत्वं कथमवगतम् ? उच्यते–उपक्रमे येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति श्रवणमननसमनन्तरभावि-विज्ञान–शब्द उपासनपरः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यनेनैकार्थ्यात्, उपसंहारे च तद्धाऽस्य विजिज्ञाविति तत्तुल्यार्थं विजिज्ञाविति पदमावर्त्तितं, मध्ये ऽपि आचार्यवान् पुरुषोवेदेत्याचार्यवत्ताफलत्वेन प्रतिपादितार्थविशेषवेदनवचनमाचार्योपदिष्टार्थस्यानुसन्धेयत्वे लिङ्गमेवमेभिः कारणैः सदात्मकत्वोपदेशस्योपासनार्थत्वोपगम ॥

सू० अथ संपत्स्य" इति शरीरपातमात्रान्तरायो–

टी० "शरीरपातमात्रान्तराय" इति, अन्तराय–शब्देन विलम्बो लक्ष्यते शरीरपातावधिविलम्ब इत्यर्थः । यावन्न विमोक्ष्य इत्युक्ते कथं शरीरात् मोक्षसिद्धिः ? उच्यते मोक्ष इत्युक्ते कस्मान्मोक्ष इति बन्धकं किञ्चिदाकाङ्क्षितं तच्च किमित्यपेक्षायामस्यामेव विद्यायाम् "अथ यदाऽस्य वाङ्मनसि सम्पद्यत इत्यादिना हेयाद्देहादुत्क्रमणश्रवणात् अन्यत्र च अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य भूत्वा शरीरमशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति, श्रवणात् त्यक्त्वा देहं पुनर्जन्म नैतीत्यादिस्मरणाच्च शरीरमित्यवगम्यते ॥

सू० ब्रह्मसम्पत्तिलक्षणो मोक्ष इत्युपदिशति, यदि च प्रधानमचेतनं कारणमुपदिश्येत तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्येत "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति तन्निष्ठस्याचेतनसम्पत्तिरेव स्यात्, न च मातापितृसहस्रेभ्योऽपि वत्सल-

तरं शास्त्रम् एवंविधतापत्रयाभिहतिहेतुभूताम चित्सम्प"-त्तिमुपदिशति, प्रधानकारणवादिनोऽपि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ।

टी० "ब्रह्मसम्पत्तिलक्षण" इति, अथ सम्पत्स्य इति सम्पत्तेः सता सोम्य तदा सम्पन्नो भवतीति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्म्मेति भावः मोक्ष इति सौत्रस्य मोक्ष-शब्दस्य शरीरपातपूर्विका ब्रह्मसम्पत्तिरेवार्थः, न तु शरीरपातमात्रमित्यभिप्रायः । ततः किं प्रधानवैलक्षण्यस्य? इत्यपेक्षायां मुमुक्षोरिति पदेनाभिप्रेतं विवृणोति "यदि चे "ति, कथमनुपपत्तिः तीर्थक्षेत्रसेवादिवदचिदुपासनस्य मोक्षोपयोगित्वं शास्त्रबलात्किं न स्यादि? ति शङ्कायामाह "यथाक्रतुरि"ति, उपासनानुरूपफलभाक्त्वं श्रुत्यर्थः, ततश्च हेयोपासनाद्धेयप्रहाणानुपपत्तिः अचेतनसम्पत्तिरचित्प्राप्तिः संसारित्वं कर्मकृताचित्सम्बन्धो हि संसारः सम्पत्ति-शब्दस्य प्राप्त्यर्थत्वन्तापत्रयाभिहतिहेतुभूतामचित्सम्पत्तिमित्यनन्तरभाष्येण व्यक्तम्, अचेतनसम्पत्तिरस्तु ततः किं? मित्यत्राह "न चे"ति, अत्र "शास्त्रं हि वत्सलतरं मातापितृसहस्रतः" इति पुराणवचनं स्मारितम् "मातापितृसहस्रेभ्य"इति, मातापितरावेकस्मिञ्जन्मन्यैहिकपोषणमात्रपरौ शास्त्रं त्वनन्तेषु जन्मस्वैहिकामुष्मिकसर्वविधरक्षणपरमिति भावः । तापत्रयेति शास्त्रस्य प्रयोजनपर्य्यवसानं न स्यादिति भावः । एवं श्रुतिसिद्धन्यायविरोध-प्रयोजनपर्य्यवसानाभावाभ्यां मोक्षोपयोगित्वचिरस्तम् । अस्मिन्नर्थे परमतसंवादं दर्शयति "प्रधानकारणे"ति, प्रधाननिष्ठस्येति व्यक्ताव्यक्तज्ञविज्ञानादिति वदताऽपि साङ्ख्येन प्रधानस्य व्याधेरिव परिज्ञानमात्रं विवक्षितं न तूपासनमिति भावः । ननु तत्त्वमसीति न सदात्मकत्वानुसन्धानोपदेशः किन्तु स्थूलोऽहमित्यादिदेहात्मधमानुवाद-अतः सच्छब्दवाच्याचेतनस्य मुमुक्षुणा ज्ञातव्यत्वं हानार्थमिति शङ्कायाऽनन्तरसूत्रसङ्गतिमभिप्रयन्नाह "इतश्चे"ति,

सू० इतश्च न प्रधानम् ।

सू० हेयत्वावचनाच्च ॥ ८ ॥

सू० यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत् तदा मुमुक्षोः श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात्, न च तत्क्रियते, प्रत्युत उपादेयत्वेनैव "तत्त्वमसि"- "तस्य तावदेव चिर"मित्युपदिश्यते ।

इतश्च न प्रधानम् ।

सू० प्रतिज्ञाविरोधात् ॥ ९ ॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति वाक्योपक्रमे हि एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम, तच्च कार्य्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात् ।

टी० सू० हेयत्वावचनाच्च न परं प्रत्यानुकूल्याभावमात्रं किन्तु प्रातिकूल्यं चास्तीत्याह "प्रत्युते"ति, स्थूलोऽहमित्याद्यनुसन्धानस्येव न सदात्मकत्वानुसन्धानस्य हेयत्वं प्रतिपाद्यते अपि तूपादेयत्वमेवोच्यते तच्च प्रधानपरत्वेऽनुपपन्नम्, अनादिमायया सुप्तः, मायया सन्निरुद्धः, अनीशया शोचति मुह्यमानः, जहात्येनां भुक्तभोगामजोऽन्य इत्यादिषु प्रधानप्रस्तावेषु तस्य हेयत्वेनैव प्रतिपादनादित्यर्थः । एवं तदैक्षतेत्यादिवाक्यप्रभृति तदुपरितनवाक्यावगता हेतव उक्ताः, तेषां समाप्तौ च-शब्दः प्रयुक्तः । यद्वा उपादेयतोक्त्यनुपादेयतानुक्त्योः सूत्रद्वयप्रतिपादितयोरन्वयव्यतिरेकात्मना परस्परसङ्गतयोरेकीकारार्थे इह च-शब्दः, अत एव हि प्रत्युतेत्यादिना पूर्वसूत्रार्थनिगमनं कृतम् । अथोपक्रमविरोधे सत्युत्तरवाक्यगतहेतूनां दौर्बल्यात् प्रधानमेव प्रतिपाद्यमिति शङ्कां परिहरति सू० "प्रतिज्ञाविरोधा"त्, कस्मिन्नर्थे विरोध? इत्यपेक्षां पूरयन् व्याचष्टे "प्रधानकारणत्व" इति, त्वन्मतानुगुणत्वेन यदुक्तं तदेव त्वन्मतप्रतिकूलमिति सूत्रकारहृदयमिति भावः । कथमित्यत्राह "वाक्योपक्रमे ही"ति, प्रतिज्ञावाक्ये सर्वशब्दाभावेऽपि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति आत्मनि खल्वरे दृष्टे श्रुते मते

विज्ञाते इदं सर्वं विदित''मिति समानप्रकारणवाक्यैकार्थ्यात्सर्वाः प्रजा इति वत्यमाणस्वारस्याच्च सर्वविज्ञानं प्रतिज्ञातमित्युक्तम् । न च सर्वं मृन्मयमिति तत्कार्य्यभूतसर्वाचिद्विज्ञानमेव सर्वविज्ञानमिति वाच्यम् ''सन्मूलास्सोम्येमाः सर्वाः प्रजा'' इति सर्वशब्दसमानाधिकरणप्रजाशब्दस्वारस्यावगतानां चेतनानामपि सन्मूलतया ज्ञातव्यसर्वकार्यान्तर्भावादिति भावः । ततः किमित्यत्राह ''तच्चे''ति, कार्यकारणयोरनन्यत्वेनेति न हि चिदचितोरनन्यत्वमिति भावः । नन्वन्यत्वेऽपि एकविज्ञानात् सर्वविज्ञानं घटते पृथिव्यादीनां कार्य्यतया चिदंशस्याकार्य्यतया च ज्ञानसम्भवादित्यत्राह–

सू० तत्कार्य्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम् । तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्य्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते ॥

इतश्च न प्रधानम् ।

सू० स्वाप्ययात् ॥ १० ॥

सदेव सच्छब्दवाच्यं प्रकृत्याह ''स्वप्नान्तम्मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवतीति, सुषुप्तं जीवं सता सम्पन्नं स्वमपीतः स्वस्मिन्प्रलीन इति व्यपदिशति ।

टी० ''तत्कार्य्यभूतचेतनाचेतनप्रपञ्चस्ये''ति, मृत्पिण्डतत्कार्य्यादिदृष्टान्तबलात्सन्मूलाः सर्वाः प्रजा इति वाक्ये प्रजा-शब्दस्वारस्याच्च चेतनस्यापि कार्य्यतयैव ज्ञातत्वं वक्तव्यमिति भावः । ज्ञाततयैवोपपादनीयमिति देवदत्तज्ञानेन ग्रामविज्ञानवदत्र सर्वविज्ञानमौपचारिकम् औपचारिकत्वे सर्वविज्ञानस्य लोकदृष्टत्वेन कथं नु भगव इति प्रश्नायोगात् अनन्यभूतमृत्तत्कार्यादिदृष्टान्तमुखेन मुख्यतयैव सर्वविज्ञानोपपादनदर्शनाच्चेति भावः । उक्तविपर्ययेण प्रतिज्ञाविरोधं दर्शयति ''तत्त्वि''ति, एकवि-

ज्ञानेन सर्वविज्ञानप्रतिज्ञानं कार्य्यकारणभावनिबन्धनं सुषुप्तौ परमात्मनि चेतनस्य प्रलयश्च तन्निबन्धन इति कार्य्यकारणभावनिबन्धनत्वसाम्यात्सङ्गतम् । सुषुप्तौ लयं हेतुत्वेनाहेत्यभिप्रयन्नाह "इतश्चे"ति, सू० स्वाप्ययात् सच्छब्दस्य जीवोपस्यापकस्वशब्दसमानविषयत्वनिबन्धनामर्थान्तरत्वशङ्कां व्युदस्यति 'तदेव सच्छब्दवाच्यमि"ति, जगत्कारणवस्तुविषय एवात्रापि सच्छब्द इत्यभिप्रायः । यत्र–यदेत्यर्थः । ननु सता सम्पत्तिः प्रकृतिसंसर्गोऽस्तु स्वाप्ययोऽपि जीवस्य स्वस्वरूपेऽवस्थानमिति स्वसच्छब्दयोर्भिन्नार्थः स्यादिति नैतद्वाक्यं प्रधानकारणत्वविरोधीति तदेतत्परिहरन्व्याचष्टे "सुषुप्तमि"ति, स्वमपीत इतीदं विवृणोति "स्वस्मिन्प्रलीन" इति, स्वमिति द्वितीया सतेति तृतीया च फलतस्सति सम्पद्येति सप्तम्यनुगुणार्था, व्यपदेशभेदस्तु धातुस्वभावभेदादित्यभिप्रायः अपीतेर्व्याप्तिरूपत्वाद् द्वितीयानिर्देशः, "ब्रह्मैव सन् ब्रह्माप्येति" "यत्प्रयन्त्यभिसंविशन्ती"ति हि श्रुत्यन्तरं साहित्यसद्भावात् तृतीयानिर्देशः, सम्पन्न इति कर्मणि निष्ठा वा तदानीं सम्पत्तेः प्राप्तिरूपत्वात्सतः कर्तृत्वविवक्षया तृतीया, प्राज्ञेनात्मना सम्परिष्वक्त इति वदप्ययस्य स्थानसापेक्षत्वात्सप्तमीनिर्देशः

सू० प्रलयश्च स्वकारणे लयः, न चाचेतनं प्रधानञ्चेतनस्य जीवस्य कारणम्भवति स्वमपीतो भवति आत्मानमेव जीवोऽपीतो भवतीत्यर्थः । चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीव–शब्देनाप्यभिधीयत इति नामरूपव्याकरणश्रुत्योक्तं तज्जीव–शब्दाभिधेयं ब्रह्म सुषुप्तकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात्केवलसच्छब्दाभिधेयमिति सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवतीत्युच्यते, तथा समानप्रकरणे नामरूपविभागपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं कि-

ष्वन वेद नान्त"रमित्युच्यते, आमोक्षाज्जीवस्य नामरूपप-रिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः, सुषुप्तिका-लेऽपि हि नामरूपे विहाय सता सम्परिष्वक्तः पुनरपि जाग्रद्दशायां नामरूपे परिष्वज्य तन्नामरूपा भवन्तीति श्रुत्यन्तरे स्पष्टमभीधीयते—

टी० व्युत्पत्तिवशेन प्रलयवाचिनां शब्दानां स्थानापेक्षाया उत्कटत्वात् सप्तम्यनुरोधेन व्याख्यातम्, एवं सम्पत्त्यप्यय—शब्दयोः प्रलयपरतयैकार्थ्यमुक्तं, स्वसच्छब्दयोश्च प्रलयस्थानपरतयैकार्थ्यमुक्तम् । अयमभिप्रायः—सता सोम्य तदा सम्पन्नः सति सम्पद्येति प्रतिज्ञानिगमनवाक्यमध्यगतस्य स्वाप्ययवाक्य-स्यानपेक्षितार्थान्तरपरत्वेऽन्वयवैष'म्यं स्फुटम् । अथैतदपियन्त्यन्ततः ब्रह्मैव सन् ब्रह्माऽप्येति तदा सम्पद्यते ब्रह्मेत्यादिप्रयोगप्राचुर्यादप्ययसम्पत्ति—श-ब्दस्वारस्योपस्थापितस्य प्रलयस्य स्थानप्रतिपादकत्वात् स्वसच्छब्दयोरैका-र्थित्वपर्य्यवसायित्वमुचितम् । जीवेनात्मना तत्त्वमसीति जीवात्म—शब्दयो-स्त्वन्तच्छब्दयोरिव च स्वसच्छब्दयोरपि जीवरूपेण स्वेन रूपेण चावस्थि-तकारणवस्तुविषयतयैकार्थपरत्वं प्रकरणवशादप्युचितम् । जीवादर्थान्तरे सति तस्य लयानुपपत्तिरिति शङ्कापरिहारार्थं स्व—शब्दाभिधेयस्य तस्य सत्पर्य्यन्तताप्रतिपादनस्यापेक्षितत्वाच्च तयोरैकार्थत्वं युक्तमिति । अस्तु लय-स्थानोपस्थापकयोः स्वसच्छब्दयोरैकार्थ्यं तत्तु स्व-शब्दस्य स्वीयपरत्वेन स्वसच्छब्दयोरुभयोरपि प्रधानपरत्वेऽप्युपपद्यत इत्यत्राह "प्रलयश्चे"ति, कार्य्यतारूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावो हि लयः । ततोऽपि किं? मित्यत्राह "न चे"ति, अचेतनम् अचित्त्वादित्यर्थः, स्थूलावस्थस्य जीवस्य सूक्ष्मावस्थे स्वकारणीभूते सत्तायोगिनि स्वात्मनि लयोपपत्तेः सच्छब्दस्य तत्परत्वं सम्भवतीति शङ्कां व्युदसितुमाह—

---

१ वैषम्यमिति पा० ।

मू० "यदा सुषुप्तः स्वप्नं न कथंचन पश्यति अथास्मिन्प्राण एवैकधा भवति तस्माद्वा एतस्मादात्मनः प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते तथा त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्तीति ।

टी० 'तथा सुषुप्तमि''ति, सूक्ष्मदेहेन्द्रियानपेक्षेक्षणादिगुणकपरमकारणविषयत्वात् तत्संवादि श्रुत्यन्तरानुरोधाच्च नात्र सच्छब्दोऽतिऽसङ्कुचितज्ञानसूक्ष्मावस्थजीवमात्रविषय इत्यभिप्रायः । ननु नित्यस्य जीवस्य लयोऽनुपपन्नः कार्य्यकारणयोरनन्यत्वाज्जीवविलक्षणस्य परस्य तत्कारणत्वायोगात्तस्मिंज्जीवलयश्चानुपपन्नः, नैवं, सर्वदा जीवविशिष्टस्य परमात्मनोऽवस्थाविशेषरूपकार्यकारणभावोपपत्तेः, तथा हि स्वमपीत इत्यत्र स्वशब्दस्तावन्न जीवमात्रपरः, "सता सोम्य तदा सपन्नो भवति स्वमपीतो भवती''ति स्वशब्दस्य सच्छब्दसमानविषयत्वात्, सच्छब्दस्य चास्मिन्प्रकरणे परमात्मविषयत्वात्, नापि निष्कृष्टब्रह्मपरः, नित्यनिर्विकारस्य तस्योपादानत्वायोगेनाप्ययस्थानत्वायोगात्, कार्य्यस्य प्रलय उपादानभाव एव, अतो जीवरूपेणावस्थितपरमात्मपरत्वं वक्तव्यम्, तत्रापि न शुक्तौ रजतस्येव लयः तस्येव जीवस्य स्वरूपनिवृत्तिप्रसङ्गात्, नापि महाकाशे घटाकाशस्येव लयः, देहाद्युपाधेरवस्थितत्वात्, नापि क्षितितले घटस्येव लयः, घटत्वस्येव जीवत्वस्य प्रहाणे जीवनित्यत्वश्रुतिविरोधादुपाधेरवस्थितत्वेन जीवत्वप्रहाणायोगात्, आमोक्षावस्थायितयाऽभिमतस्य जीवभावस्य स्वापमात्रेण निवृत्तौ मोक्षोपायवैयर्थ्यप्रसङ्गात् अकृताभ्यागमादिप्रसङ्गात् प्रत्यभिज्ञाविरोधात्, प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरमिति तदानीमज्ञत्वसर्वज्ञत्वाभ्यां भेदव्यपदेशाच्च जीवत्वे स्थित एव स्वाप्ययस्य सर्वैरभ्युपगन्तव्यत्वात्, अतो भेदादेव स्वशब्दो जीवविशिष्टपरमात्मपरः, अत एव ह्युक्तं भाष्ये, "आत्मानमेव जीवोऽपीतो भवतीत्यर्थः

जीवस्वरूपो हि पर एव नामरूपव्याकरणश्रुते''रिति तस्य सम्पत्तिर्नाम बहिर्मुखज्ञानप्रसररहितजीवरूपेणावस्थानं, निर्गमो नाम बहिर्मुखज्ञानप्रसरः । ननु कथं देहविशिष्टस्य सतो जीवस्य स्थिते देहे विशेष्यांशलयः? नैवं विशेष्यांशे रागद्वेषाद्यन्वयवत् तत्रैव प्रलयरूपावस्थान्वयोपपत्तेः । ननु तर्हि स्वापे ज्ञानेन देहधारणाभावात्स्वरूपेण धारणस्य महाप्रलयेऽपि तुल्यत्वात् देहस्य जीवं प्रत्यपृथक्सिद्धिर्देहलक्षणं च न घटते, न, जीवस्य देहापरित्यागाद्देहस्य तत्सङ्कल्पेन धारणयोग्यत्वाच्चा पृथक्सिद्धिर्देहलक्षणोपपत्तेः, अतो मनुष्यादिनामरूपाभिमानरागलोभाद्यनुगुणबहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः—

सू० तथा सुषुप्तं जीवं प्राज्ञेनात्मना सम्परिष्वक्त इति च वदति, तस्मात्सच्छब्दवाच्यं परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव ।

टी० परमात्मा देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यविरहितजीवशरीरकः सचात्मन्यन्तर्भूत इति श्रुत्यर्थः । अप्ययस्य प्राप्तिरूपत्वात् सतेि आत्मानमिति द्वितीयानिर्देशः, अप्ययस्य स्थानसापेक्षत्वात् स्वस्मिन् प्रलीन इत्युक्तं भाष्ये, एकस्य परमात्मनः स्थानस्थानिभावव्यपदेशश्चांशांशिभेदाभिप्रायः, घटादेर्लयस्थानस्य घटानुपयुक्तस्यापि पृथिव्यंशस्य हि कारणजातीयत्वात् कारणत्वं, ब्रह्मणि तु जीवविशेषविशिष्टतरितरांशभेदेन स्थानस्थानिभावो धर्म्यैक्यात्कारणत्वं, कारणावस्थाऽन्वयिनि धर्मिण्यन्तर्भावः सर्वत्र समानः, अत औपाधिकाकाराभिमानानुगुणज्ञानविकासवज्जीवविशिष्टता कार्य्यावस्था अतदभिमानजीवविशिष्टता कारणावस्था, तत्र प्रलयस्थानभूतस्य परमात्मनः कारणावस्थापेक्षया लीयमानांशस्य विसदृशावस्था हि नामरूपाद्यौपाधिकाकाराभिमानानुगुणज्ञानप्रसरवज्जीवविशिष्टता, तस्मादौपाधिकाकारानभिमानजीवविशिष्टतारूपकारणावस्थाश्रये स्वात्मन्यवस्थानं स्वाप्यय इत्यनुपपन्नम् ।

अत एव जीवस्य नित्यत्वाविरोधश्च ज्ञानसङ्कोचविकासविशेष-व्यतिरेकेण जीवत्वप्रहाणाभावात्, आमोक्षाज्जीवभावस्य स्थिरत्वं हि परैरप्यभिमतम्, अतस्तदविरोधेन स्वाप्ययो वर्णनीयः, तदानीं प्राज्ञेनात्मना सम्परिष्वक्त इति भेदप्रतिपादनाविरोधश्चैवं सति भवति, एवं विध एव प्रलयो महाप्रलयोऽपीत्यभ्युपगन्तव्यं, जीवबहुत्वानादित्वकर्मवासनाविशेषस्थित्यभ्युपगमेन वैषम्यनैर्घृण्यादेः परिहर्त्तव्यत्वात्, न च न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति ज्ञाननित्यत्वश्रुतिविरोधः तस्य सङ्कोचमात्रवतस्तुच्छत्वाभावात्, न च प्रसरोपलम्भयोरभावात् ज्ञानद्रव्यस्य तुच्छत्वं शङ्कनीयं, न ह्यनुल्लितरत्नप्रभायाः प्रसरोपलम्भयोरभावान्नास्तित्वं “यथा न क्रियते ज्योत्स्नामलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथेति” हि स्मृतिः आत्यन्तप्रलयेऽपि यथोक्तप्रकार उपपद्यते, तदानीं नामरूपाद्यौपाधिकाकाराभिमानरूपविसदृशदशाप्रहाणेन कारणावस्थे परमात्मन्यवस्थानात्, औपाधिकाकाराभिमानार्हत्वरूपकार्यावस्थाविरहितजीवविशिष्टत्वं हि परस्य कारणावस्थत्वं, विकृतिविरहितजीवविशिष्टत्वमिति यावत्, तन्महाप्रलये मुक्तौ च समानम् । ननु ‘प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तर’मिति सुषुप्तौ प्राज्ञत्वाज्ञत्वरूपवैषम्यावगमात् मोक्षे चेश्वरत्वेशितव्यत्वादिवैषम्यस्थित्यभ्युपगमात्, भवदभिमतप्रलयप्रकारोऽनुपपन्न इति, नैवं कारणत्वावस्था-

सू० तदाह वृत्तिकारः “सता सोम्य तदासम्पन्नो भवतीति सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते प्राज्ञेनात्मना सम्परिष्वक्त इति चाहेति ।

मपेक्ष्य विसदृशावस्थाया विवक्षितत्वात्, नामरूपाद्यौपाधिकाराभिमानविरहिजीवविशिष्टता कारणावस्था तदपेक्षया विसदृशावस्था च तादृगभिमानवज्जीवविशिष्टता, तत्प्रहाणस्य चात्र विद्यमानत्वात् सुषुप्तौ लय उपपन्नः, मोक्षे चेशितव्यत्वादिवैषम्याच्चात्यन्तिकप्रलयविरोधि ईशितव्यताया अवस्थारूपत्वाभावात्, कादाचित्कधर्मो ह्यवस्था, ईशितव्यत्वादि तु नित्यं,

"स ईशो ऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय" "यस्यात्मा शरीरं य आत्मानमन्तरो यमयती"त्यादि श्रुतेः, अतो नेशितव्यत्वादिकमवस्येति वैधर्म्यरूपस्यापि तस्याप्रहाणं न दोषः, अतो यथोक्त एव स्वाप्ययः । सौत्रं हेतुं परमसाध्येन सङ्गमयति "तस्मादि"ति अप्ययस्थानस्य परमकारणत्वादाह "परं ब्रह्मे"ति, जीवव्यावृत्त्यर्थं सर्वज्ञ-शब्दः, प्राज्ञेनात्मनेति हि श्रुतिः तदैक्षतेत्येतत्संवादिनी अप्ययेऽपि जीवनियन्तृत्वज्ञापनार्थमीश्वरोत्तीर्णतत्त्वव्युदासार्थं च परमेश्वर-शब्दः, सुषुप्तपुरुषवैलक्षण्यपरो देवताविशेषपरश्च पुरुषोत्तम-शब्दः, व्याख्यानान्तरव्यावृत्त्यर्थमाह "तदाहे"ति, सम्पत्त्यसम्पत्तिभ्यामिति सति सम्पद्य न विदुः सति सम्प[1]त्स्यामह इति सत आगम्य नविदुः सत आगच्छामह इत्युक्ताभ्यां सम्पत्तिनिर्गमाभ्यामित्यर्थः । यद्वा परमात्मनि सम्पत्त्या अन्यत्र असम्पत्त्या चेत्यर्थः, स्वाप्यय-शब्देनासम्पत्तिरप्यभिप्रेतेति वृत्तिकारस्य भावः । एतत्परब्रह्मकारणत्वमित्यर्थः ॥

इतश्च न प्रधानम्

सू० गतिसामान्यात् ॥ ११ ॥

वृ० "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषत् स ऐक्षत लोकान्नुसृजा स इमाँल्लोकानसृजत इति तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" "तस्य ह वा एतस्य महतोभूतस्य निश्वसितमेतदृग्वेद इत्यादिसृष्टिवाक्यानां या गतिः-प्रवृत्तिः, तत्सामान्यात्-तत्समानार्थत्वादस्य तेषु सर्वेषु सर्वेश्वरः कारणमवगम्यते, तस्माद्यापि सर्वेश्वर एव कारणमिति निश्चीयते ।

इतश्च न प्रधानम् ।

सू० श्रुतत्वाच्च ॥ १२ ॥

१ संपद्यामह इति पा० ।

सू० अतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चानेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरणवाणि' "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितं तस्मिन्कामाः समाहिताः ।

टी० पूर्वसूत्रे प्राज्ञेनात्मनेत्यादेस्सुषुप्तिविषयस्य श्रुत्यन्तरस्य प्रकृतार्थोपपादकतया बुद्धिस्थत्वात् कारणस्य परमात्मत्वमपि कारणविषयैः श्रुत्यन्तरैरुपपाद्यते, सू· गतिसामान्यात् पूर्वं गौणश्चेन्नात्म-शब्दादित्युक्त्वा दात्म-शब्दवतीः श्रुतीरुदाहरति "आत्मा वा" इत्यादिना, तस्य ह वा एतस्येत्यत्राप्यात्म-शब्दः श्रूयते आत्मा वा अरे द्रष्टव्यः आत्मनि खल्वरे दृष्टे योऽन्यत्रात्मनस्सर्वं वेदेति च, गति-शब्दं व्याचष्टे "प्रवृत्ति"रिति, बोधनव्यापारपरः प्रवृत्ति-शब्दः भिन्नप्रवृत्तिनिमित्तानामित्यत्र प्रवृत्तिशब्दवत्, समानत्वमर्थद्वारकमित्याह 'तत्समाने'ति, ततः किमि? त्यत्राह "तेषु चे"ति, ततोऽपि कि? मित्यत्राह "तस्मादि"ति, न केवलमुपनिषदन्तरेषु अत्रैव सर्वेश्वरकारणत्वं स्फुटमित्याह सू· "श्रुतत्वाच्च, आत्मत्वेन नामरूपव्याकर्तृत्वं दर्शयति "अनेन जीवेने"ति, सर्वज्ञत्वसर्वशक्तित्वे तदैक्षत बहु स्यामित्यादिवाक्येन पूर्वमेव दर्शिते, सन्मूला इति सूचिते च आधारत्वं दर्शयति "सदायतना"इति, यच्चास्येति च धारकत्वं चात्मत्वेनेति दर्शयति "ऐतदात्म्य"मिति, न ह्यत्र कारणतया कार्याधारत्वमात्रं विवक्षितमिति भावः । यच्चेत्यादिकं सत्यकामत्वप्रतिपादनोपयुक्तं च । अपहतपाप्मत्वादिगुणान् दर्शयति -

सू० एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासस्सत्यकामः सत्यसङ्कल्प" इति, तथा च

श्रुत्यन्तराणि "न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गं स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा विश्वात्मानं परायणं पतिं विश्वस्यात्मेश्वरं यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्यादीनि तस्माज्जगत्कारणवादिवाक्यानि न प्रधानप्रतिपादनयोग्यानि, अतः सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरो निरस्तसमस्तदोषगन्धोऽनवधिकातिशयासंख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति च स्थितम् ।

टी० 'एष आत्मे'ति, उक्तगुणवैशद्यार्थमनुक्तगुणदर्शनार्थं तद्गत ईश्वरत्वदेवताविशेषत्वस्फुटीकरणार्थं च पूर्वसूत्राभिप्रेतान्यनुदाहृतानि श्रुत्यन्तराणि उदाहरति "तथा चे"ति, नन्वेतत्सूत्रविषयवाक्यत्वेनास्य सूत्रस्य छान्दोग्योपनिषन्मात्रविषयत्वं दीपसारयोरपि ह्युक्तं "श्रुतमेव ह्यस्यामेवोपनिषदी"ति नात्र क्रमविवक्षा लिङ्गं शरीरं नाशब्दमित्युपक्रमसूत्रानुरोधेन प्रधानस्याप्रतिपाद्यत्वं निगमयति "तस्मादि"ति, तेन फलितं ब्रह्मणः प्रतिपाद्यत्वं निगमयति "अत" इति, सर्वज्ञत्वादयस्सर्गादिकारणत्वोपयोगिगुणाः शोधकवाक्योक्तगुणा निरस्तनिखिलेत्यादिनोक्ताः अनवधिकेत्यादिना पुरुषार्थत्वञ्च सूचितम्, ओघ-शब्दोऽस्ति चेत् गुणानामन्यत्रापर्यवसायित्वं दर्शयति, महार्णव-शब्दो गुणेभ्योऽपि तदाश्रयस्य महत्त्वं दर्शयति, पुरुषोत्तम-नारायण-शब्दौ पुरुषसूक्तनारायणानुवाकसिद्धविशेषपर्य-

वसायित्वं कारणशोधकवाक्यानां दर्शयन्तौ चिदचिद्विलक्षणत्वं तच्छरीरकत्वं च दर्शयतः, निखिलजगदेककारणमिति निखिल-शब्देन गगनादिकमपि कवलीकृतम्, एक-शब्देन निमित्तोपादानत्वे अभिप्रेते, एषां सूत्राणां ब्रह्माज्ञानवादितोऽननुगुणत्वं पूर्वमुक्तं विस्तरेणाह "अत एवे"ति, सूत्रकारेणेति न्यायनिबन्धनकृतेत्यभिप्रायः, आभिरित्यर्थप्रत्यायकत्वं विवक्षितम् न्यायानुगृहीताभिर्विशदार्थाभिः श्रुतिभिरिति भावः। किञ्च प्रामाणिकस्याप्रामाणिकत्वाभिमानादपसिद्धान्तता सिद्धान्तस्यापि भ्रान्तिमूलत्वादप्रामाणिकता च लोके दृष्टेति तदुभयव्यवच्छेदार्थस्सूत्रकारगुत्योर्निर्देशो निरस्तो वेदितव्य इति निरासः फलित इत्यर्थः। अत एवेत्युक्तं विवृणोति "पारमार्थिके"ति, ईक्षणस्यापारमार्थिकत्वे साङ्ख्याभिमतं प्रधानमेव ब्रह्म स्याच्छुक्तित्वापारमार्थ्ये हि रजतमेव परमार्थः स्यादिति साङ्ख्यनिरासोऽनुपपन्नः स्यादिति पारमार्थिक-शब्दाभिप्रायः, सच्छब्दोक्तस्वरूपस्य संशयसहत्वात्, अतिरिक्तेन व्यावर्त्तकेन भाव्यमिति गुण-शब्दस्य भावः अतस्सदादिशब्दानां साङ्ख्याभिमतप्रधानपरत्वव्यवच्छेदसिद्ध्यर्थमीक्षणादिगुणतत्पारमार्थिकत्वविवक्षावद्भिस्सूत्रैर्निर्विशेषनिरासः फलित इत्यर्थः। तदैक्षतेत्यादिवाक्यानि साक्षित्वमात्रपराणि न तु गुणविशेषपराणि। साक्षित्वमात्रेणापि सूत्राभिमता प्रधानव्यावृत्तिः सिध्यतीत्यत्राह "निर्विशेषे"ति, सच्छब्दोपस्थापितविमतिपदस्वरूपातिरेकेण साक्षित्वमप्यपारमार्थिकं त्वन्मत इत्यर्थः, ज्ञातृत्वाभावे साक्षित्वमपि न सिध्यतीति प्रागेवोक्तमित्यपि-शब्दाभिप्रायः। अपारमार्थिकत्वे किं स्यादित्यत्राह "वेदान्ते"ति, न ह्यारोपिताकारस्तत्त्वावेदकप्रमाणविषयः न चार्वाचीनं ब्रह्म जिज्ञास्यतया

सू० अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेणाऽऽभिः श्रुतिभिर्निरस्तो वेदितव्यः, पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात्, निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकं, वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम्।

प्रतिज्ञातमिति भावः । ततः किमित्यत्राह "तच्चे"ति, ततोऽपि किं न ह्य-स्माभिरचेतनमुच्यत इत्यत्राह "चेतनत्वञ्चाम चैतन्यगुणयोग"इति, ईक्षि-तृत्वं हि न चिद्रूपतामात्रमित्यभिप्रायः । निर्विशेषनिरासस्य फलितत्वं निगमयति "अत"इति, न ह्यत्र चिद्रूपतामात्रेण प्रधानव्यावृत्तिः सूत्रिता ऽपि त्वीक्षणयोगेन तदनभ्युपगच्छतो व्यावर्त्तकाभावे व्यावृत्तिरेव न स्यादि-त्यर्थः पारमार्थिकेत्यादिना एतदधिकरणविरोध उक्तः, वेदान्तेत्यादिना पूर्वाधिकरणैर्विरोध उक्तः । यद्वा स्वरूपमेव साक्षित्वं न धर्म्मः अतो नापार-मार्थिकमित्यत्राह–

सू० तच्च चेतनमितीक्षतेर्नाशब्दमित्यादिभिः सूत्रैः प्रतिपाद्यते, चेतनत्वं नाम चैतन्यगुणयोगः, अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव । किञ्च निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य स्वप्रकाशत्वमपि दुरुपपादं, प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः, निर्विशे-षस्य वस्तुनस्तदुभयरूपत्वाभावाद्घटादिवदचित्त्वमेव तदुभ-यरूपत्वाभावेऽपि तत्समत्वमस्तीति चेत्तन्न तत्समत्वं हि तत्सामर्थ्यमेव, सामर्थ्यगुणयोगे हि निर्विशेषवादः परि-त्यक्तः स्यात् । अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युप-गम्यते इति चेत्, हन्त तर्हि तत एव सर्वज्ञता, सर्वशक्ति-त्वम्, सर्वेश्वरेश्वरत्वं, सर्वकल्याणगुणाकरत्वम्, सकलहेय-प्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः, शक्तिमत्त्वं च कार्य्य-विशेषानुगुणत्वं, तच्च कार्य्यविशेषैकनिरूपणीयम्, कार्य्यवि-शेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात् । किञ्च निर्विशेषवस्तुवादिनो वस्तुत्वम-पि निष्प्रमाणम् ।

टी० "वेदान्ते"ति, । स्वरूपमेव चेत् पूर्वसूत्रैः सिद्धमिति प्रतिपाद्याधिक्याभावादीक्षतेरित्यादिसूत्रवैयर्थ्यमित्यभिप्रायः । स्वरूपविशेषोऽप्रतिपन्न इति चेत् किं स्वरूपमेव विशेषः? उत स्वरूपस्य विशेषः? प्रथमे प्रागुक्तदोषः, द्वितीये सविशेषत्वम् । पूर्वसूत्रेषु ब्रह्म कारणात्मना सिद्धं न तु चेतनरूपेण अतः ईक्षतेरित्यादिसूत्राणामारम्भणीयत्वमिति शङ्कायां चेतनरूपेण प्रतिपाद्यत्वमभ्युपगच्छन्नाह "तच्चे"ति, चेतनतया प्रधानव्यावृत्तिश्चैतन्यगुणविरहे न सिध्यतीति वक्तुं चेतनत्वं शोधयति "चेतनत्वं नामे"ति, गुण–शब्दो धर्मपरः । ततः किमित्यत्राह "अत" इति, व्यावर्तकाभावाद्व्यावृत्त्यसिद्धिरित्यर्थः । चेतन–शब्दस्य स्वरूपमात्रपरत्वेऽधिकरणारम्भवैयर्थ्यमर्थसिद्धं न प्रधानतुल्यत्वं प्रकाशत्वाभ्युपगमात् यथाऽऽत्मधर्मभूतज्ञानस्य ज्ञानान्तरायोगेऽप्यचिद्व्यावृत्तिस्त्वन्मते तद्वदित्यत्राह "किञ्चे"ति, कथं दुरुपपादत्व? मित्यत्राह "प्रकाशो ही"ति, व्यवहारयोग्यता–व्यवहारप्रतिसम्बन्धिता तदुभयरूपत्वाभावात्स्वव्यवहारहेतुत्वपरव्यवहारहेतुत्वाभावादित्यर्थः । अथ तदुभयक्षमत्वं शङ्कते "तदुभये"ति, तत्क्षमत्वमभ्युपगम्य दूषणमाह "तत्र"ति, परस्य अगतित्वं दर्शयितुमाह "अथे"ति, परिहरति "हन्त तर्ही"ति, तत्क्षमत्वमेव नास्तीत्याह "शक्तिमत्त्वं चे"ति, कार्य्यविशेषस्य निष्प्रमाणकत्वे स्वपरव्यवहारयोग्यतापादनाभावे निरूपकाभावे निरूप्याभाव इत्यर्थः, वस्तुत्वे सम्भवत्यपि प्रधानतुल्यत्वमुक्तम् । अथ वस्तुत्वमेव न सिध्यतीत्याह "किञ्चे"ति, वस्तुत्वं–तुच्छव्यावृत्तत्वं, कुत? इत्यत्राह "प्रत्यक्षे"ति प्रत्यक्षान्तर्भूतस्यापि स्वानुभवस्य पृथक्प्रमाणत्वं परमताभ्युपगमेनोक्तं, सविशेषगोचराः–वस्तुतः सविशेषभूतार्थगोचरा इत्यर्थः, वस्तुत्वं चिदचित्साधारणम् तच्च तुच्छव्यावृत्तत्वं तन्न सिध्यतीत्यर्थः । परपक्षदूषणानन्तरं स्वपक्षं निगमयति "तस्मादि"ति, परैस्त्वेवं सूत्रयोजना कृता–प्रधानं न प्रतिपाद्यम् अशब्दं हि तत् शब्देन प्रतिपादयितुमशक्यं हि तत्, अशक्यत्वं चेक्षतिश्रवणादिति

सू० प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमे-

वोक्तम्, तस्माद्विचित्रचेतनाचेतनात्मकजगद्रूपेण बहु स्यामितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्यं ब्रह्मेति सिद्धम् ।

टी० नैषोचिता प्रतिज्ञावाक्ये धर्म्युपस्थापकशब्दस्याध्याहार्य्यत्वात् अशब्दं हि तदित्युक्तेऽपि हेत्वन्तरसाकाङ्क्षत्वाच्च "नानुमानमतच्छब्दात्" "आनुमानिकमप्येकेषा" मित्यादिसूत्रेष्वानुमानिकादिशब्दवदशब्द-शब्दस्याप्यवयवार्थमुखेन धर्म्युपस्थापनक्षमतयाऽध्याहारानिरपेक्षत्वादवयवशक्त्यैवानुमानाकारतावगमकरूपपूर्वपक्षबीजस्य सूत्रेणैव द्योतमानत्वसिद्धेश्च भाष्यकाराभिमता योजना साधीयसी गौणश्चेन्नात्म-शब्दादित्यत्रात्म-शब्दस्य स्वरूपपरत्वमाश्रित्य जीवं निर्दिश्य सच्छब्दवाच्यस्य स्वरूप-परत्वेन व्यपदेशादगौणमीक्षणमित्यप्ययुक्तम्, तस्यामभिप्रेतार्थत्वायोगात् सूत्रास्वारस्याच्च, न हि गौणश्चेन्न जीवशब्दादित्युक्तं स्वरूपपर आत्म-शब्दस्सापेक्षः जीववाचिपदसमभिव्याहारेण विना तस्याचिद्व्यावर्त्तनासामर्थ्यात् चेतनपरः स्वात्म-शब्दः एतदात्म्यमिदं सर्वमिति चिदचिदात्मकसमस्तप्रपञ्चं प्रत्यात्मत्वं दर्शयन्नचिद्व्यावर्त्तनेऽतीव निराकाङ्क्षः, अतः साकाङ्क्षहेतुनिर्देशादपि निराकाङ्क्षहेतुनिर्देशो वरमिति तस्यापि सूत्रस्य-यथोक्त एवार्थः, चिदचिदात्मकसमस्तजगदन्तरात्मवाचिन आत्मशब्दस्य ममात्मा भद्रसेन इतिवन्मुख्यार्थानुपपत्त्यभावेन गौणत्वशङ्कानुदयादात्म-शब्देन गौण इति प्रतिज्ञावाक्यान्तरनिरपेक्षत्वाच्च तृतीयसूत्र-मपि परमसाम्यहेतुवाचीति युक्तम् । सर्ववेदान्तानामैककण्ठ्यन्दर्शयता गतिसामान्यसूत्रेणैव श्वेताश्वतरवाक्यस्यापि क्रोडीकृतत्वात् श्वेताश्वतर-वाक्यस्य श्रुतत्वादिति सूत्रविषयत्वाश्रयणमयुक्तम् । यत्तूक्तं यादवप्रकाशीये सता सम्पन्न इति सत्प्राप्तिमात्रमुक्तम् न त्वैक्यं सच्छब्दस्य प्रधानपर-त्वेऽपि सति सम्पत्तिर्घटते स्वाप्ययश्च सर्वेषां जीवानां पृथक् पृथक् स्वस्मिन्नप्ययो भवतीति शङ्कापरिहाराय सुषुप्तौ जीवानां गन्तव्यस्य वस्तुन एकत्वं तत्र सति तेषामैक्यापत्तिश्च गतिसामान्यादिति सूत्रे-

सू॰ एवं जिज्ञासितस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरज-
स्तमोमयप्रधानाद् व्यावृत्तिरुक्ता, इदानीं कर्मवश्या-
त्त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःख-
सागरनिमज्जनेनाशुद्धात् शुद्धाच्च प्रत्यगात्मनोऽन्यन्नि-
खिलहेयप्रत्यनीकं निरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते—

योच्यते विषयश्च "यथा सोम्य मधुनि मधुकृतो निस्तिष्ठन्ति नानात्य-
यानां वृक्षाणां रसान् समवहारमेकतां रसङ्गमयन्ति ते यथा यत्र न विवेकं
लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्ये-
माः सर्वाः प्रजाः सति सम्पद्य न विदु"रिति वाक्यं तदप्ययुक्तम् तथा हि
दृष्टान्तानुगृहीतमेकताङ्गमयत्सति सम्पद्य न विदुरिति वाक्यं किं कारण-
त्वमुपजीव्य सतः प्रधानत्वव्युदासक? उत कारणत्वमनुपजीव्य प्रथमे गति-
सामान्यसूत्रवैयर्थ्यं स्यात् स्वाप्ययस्य कारणान्वापत्तिरूपतया स्वाप्ययसूत्रे-
णैव प्रधानत्वव्युदाससिद्धेः दृष्टान्तवैघट्यञ्च । बहूनां रसानामेकस्मिन्का-
रणे लयस्य निर्दशितत्वाभावात् रसवनामवयवानां मधुरत्वरूपेण समानर-
सतापत्तिरेव हि तत्र दृश्यते, द्वितीये च जीवानां कीदृशमेकत्वं? सतः
प्रधानत्वव्युदासकम् न तावज्जीवत्वप्रहाणेन सतैकत्वं जीवत्वप्रहाणस्य
भवतामनभ्युपगमात् जीवनित्यत्वश्रुतिविरोधात्, प्राज्ञेनात्मना सम्परिष्व-
क्तोन बाह्यं किञ्चन वेद नान्तरम् इति अज्ञस्य जीवस्य तदा प्राज्ञाऽधि-
ष्ठितत्वश्रवणविरोधात् पुनरपि व्यवस्थितकर्मफलभोगाद्यनुपपत्तेश्च न च
सद्रूपेणैकत्वम् तज्जाग्रद्दशायामप्यस्तीति तदानीमिव जीवानां स्वापे स्वस्व-
रूपावस्थानप्रकृतिसंसर्गयोरविरोधादभिमतासिद्धेः । न च देवमनुष्यत्वराग
द्वेषादिबाह्याभ्यन्तरविकल्पाभिमानविरहेणैकत्वं तस्यापि स्वरूपावस्थान
प्रधानसंसर्गयोरविरोधित्वेन सम्पत्त्यप्ययाधिकरणस्य स्वस्वरूपप्रधानव्यति
रेकासिद्धेः, अतः सूत्रवैयर्थ्यशङ्कापरिहारासिध्यत्यत एवावश्यंभावात् परोक्ता-
र्थपरत्वं सूत्रस्यायुक्तम् । यच्च श्रुतत्वादिति सूत्रस्य प्रतिज्ञावाक्यप्रभृति स-
एषोऽणिमा ऐतदात्म्यमित्यादि वाक्यजातं विषयतयोक्तं तदप्ययुक्तम् प्रति-

ह्याविरोधात् नात्मशब्दादित्यादिभिः सौत्रपदैः अस्य पुनरुक्तिप्रसङ्गात् अतः सूत्राणां यथोक्त एवार्थः ॥

आनन्दमयाधिकरणम् । अथोत्तराधिकरणस्य पूर्वाधिकरणेन सह सङ्गतिमाह "एवं जिज्ञासितव्ये"ति, जगत्कारणस्य निरूपणीयत्वे चतुःसूत्र्या सिद्धे प्रत्यक्षादिसिद्धतया प्रसिद्ध्यतिशयादचेतने प्रथममव तरन्ती बुद्धिः ईक्षणादिभिस्ततो व्यावर्त्य चेतनवस्त्वभिमुखीकृता ।

आनन्दमयाधिकरणम् । सू० आनन्दमयोऽभ्यासात् ॥ १३ ॥

भा० तैत्तिरीया अधीयते "स वा एष पुरुषोऽन्नरसमय इति प्रकृत्य "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय" इति तत्र सन्देहः किमयमानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा? उत स एवे?ति किं युक्तं प्रत्यगात्मेति, कुतः? तस्यैष एव शारीर आत्मेत्यानन्दमयस्य शारीरत्वश्रवणात्, शारीरो हि शरीरसम्बन्धी जीवात्मा ।

टी० इदानीमचेतनापेक्षया प्रसिद्धिमान्द्येऽपि परमात्मापेक्षया प्रसिद्धतरेऽहंप्रत्ययसिद्धे प्रत्यगात्मन्यवतरन्ती बुद्धिर्व्यावर्त्यत इत्यर्थः। सू· आनन्दमयोऽभ्यासात् 'कारणविषस्य तस्माद्वा एतस्मादिति वाक्यस्योत्तरत्र चोद्यपरिहारमुखेन उदाहरिष्यमाणत्वात् प्रथममात्म–शब्दव्याख्यातोपक्रमभूतं स वा एष पुरुष इत्यादिकमुपात्तम् अत एव हि प्रबन्धान्तरे तस्माद्वा इत्यादिकमुदाहृतम्, तत्रेति शारीरत्वानन्दप्राचुर्याभ्यां संशय इत्यभिप्रायः, सद्विद्यायां जीवेनात्मनेति सामानाधिकरण्यमत्र पूर्वपक्षोत्थानबीजमिति सूचनार्थं जीव–शब्दाभिलपनीयादिति पदम्, किं कारणवादिनः सर्वे वेदान्ताः परिशुद्धप्रत्यगात्मस्वरूपपरा? उत तद्भिन्नलक्षणपरा? इति प्रथमविचारः, तदर्थमानन्दमयः किं परिशुद्धावस्थः? प्रत्यगात्मोऽत परमात्मे?ति तदर्थमिह प्रतिपत्तः

शरीरसम्बन्धः किं जीवात्मासाधारणः? उत न? तदर्थं मयट् किं स्वार्थकत्वविकारार्थत्वकयोरन्यतरवान्? उत प्राचुर्य्यार्थः? तदर्थं किं विकाराद्यर्थानुगुणहेतवोऽनुरोद्धव्याः? उत प्राचुर्य्याद्यर्थानुगुणहेतवः? विज्ञानमय-शब्दः किं विज्ञानमात्रपरः? उत जीवपरः, तदर्थं तत्र मयट् किं स्वार्थिकः? उत न? तदर्थं विज्ञानं यज्ञं तनुत इति विज्ञान-शब्दः किं ज्ञानमात्रे वर्त्तते? उत ज्ञानगुणके प्रत्यगात्मनी · ति पूर्वकल्पाः पूर्वपक्षाः इतरे तु सिद्धान्ताः यदा विकारार्थत्वाद्यनुगुणहेतोरनुरोद्धव्यत्वेन मयट् स्वार्थिको विकारार्थो वा भवति? तदा निरतिशयप्राचुर्य्याप्रतिपत्तेरानन्दमात्रस्य जीवेऽपि सम्भवात्स्वतो जीवानुगुणतया प्रतिपन्नस्य शरीरसम्बन्धस्य जीवासाधारणत्वे विरोधाभावादानन्दमयो जीवः, यदा च श्लोकस्थविज्ञान-शब्दो विज्ञानमात्रपरः तदा विज्ञानमय-शब्दस्यापि स्वार्थिकमयडन्तत्वेन विज्ञानमात्रपरत्वाद्विज्ञान-शब्दस्य बुद्धिपरत्वसम्भवात् तदन्तर आनन्दमयः प्रत्यगात्मेति पूर्वपक्षे फलफलिभावः, राद्धान्ते तु यदा प्राचुर्य्यार्थानुगुणहेतोरनुरोद्धव्यत्वेनानन्दमय इत्यत्र मयट् प्राचुर्य्यार्थः तदानीमानन्दप्राचुर्य्यस्य निरवधिकतयाऽवगतस्य श्रुतिविरुद्धाश्रुतोपाधिकल्पनायोगेन स्वतो निरवधिकातिशयस्य जीवात्मन्यसम्भवात्तद्विरोधेन शरीरसम्बन्धस्य जीवासाधारणकर्ममूलत्वाभावाच्च नानन्दमयः प्रत्यगात्मा, यदा च श्लोकस्थविज्ञान-शब्दो विज्ञानगुणके प्रत्यगात्मनि वर्त्तते तदा विज्ञानमय-शब्दस्यापि प्राचुर्य्यार्थमयडन्ततया प्रत्यगात्मवाचित्वाच्च तदन्तर आनन्दमयो न प्रत्यगात्मेति[1] फलफलिभावः । पूर्वपक्षोत्थानमाक्षिपति—

**सू॰** ननु च जगत्कारणतया प्रतिपादितस्य परस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारणमानन्दमय इत्युपदिशति, जगत्कारणं च तदैक्षतेतीक्षणश्रवणात्सर्वज्ञः सर्वेश्वर इत्युक्तं, सत्यमुक्तं तत्तु जीवान्नातिरिच्यते

---

[1] आनन्दमयः परमात्मेति पा॰ ।

"अनेन जीवेनात्मनाऽनुप्रविश्य" "तत्त्वमसि श्वेतकेतो" इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्, सामानाधिकरण्यं हि एकत्वप्रतिपादनपरं यथा सोऽयं देवदत्त इत्यादौ, इच्छापूर्विका सृष्टिस्तेनतस्य जीवस्योपपद्यत एव अतो ब्रह्मविदाप्नोति परमिति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते

टी० "ननु चे"ति, सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्येत्यनेन जगत्कारणप्रकरणस्य अविच्छित्तिर्द्योतिता तदेव जगत्कारणमिति वक्ष्यमाणपर्यालोचनतया विभूतिप्रकर्षाधीनातिशयितानन्दस्याश्रयत्वोपपादकं सकलजगत्कारणत्वमिति भावः। ततः किमित्यत्राह "जगत्कारणञ्चे"ति, ज्ञानशक्त्युपयोगज्ञापनाय जगत्कारणमिति पुनरुपादानं, परिहरति "सत्यमि"ति,चेतनत्वादावभ्युपगमः जीवादतिरेके विवादः। सामानाधिकरण्यनिर्देशोऽस्तु ततः किं जीवाद्वैलक्षण्यस्ये?त्यत्राह "सामानाधिकरण्यमि"ति, ईक्षतिश्रवणाज्जीववैलक्षण्यमुक्तमित्यत्राह "ईक्षे"ति, उपपद्यत एवेत्येवकारोऽस्वारस्यसूचकः, साक्षित्वमेव ईक्षित्वमेव ईक्षितृत्वमिति भावः। भेदव्यपदेशाच्चेति भेदव्यपदेशं सिद्धान्तहेतुं वदता सूत्रकारेण ऐक्यव्यपदेशस्य पूर्वपक्षहेतुत्वं विवक्षितमित्यवगम्यते एवमुत्थानोपपत्तेः सौत्रहेतुवशाच्च ऐक्यव्यपदेशः पूर्वपक्षहेतुतयोपन्यस्तः। एवं पूर्वाधिकरणेन जीवव्यतिरेकासिद्धेरधिकरणान्तरम् आरम्भणीयमिति भावः। ननु ब्रह्मविदाप्नोति परमित्यत्र ब्रह्म प्राप्यं श्रूयते अनन्तरं लक्षणं कथ्यते, तत्र सत्यत्वमानन्त्य ञ्चान्तर्भूतं जीवस्य नित्यप्राप्तत्वात् प्राप्यत्वमनुपपन्नं ज्ञातत्वाल्लक्षणञ्च न वाच्यं सत्यत्वानन्दत्वरूपलक्षणविशेषश्च नैकरूपज्ञानस्य परिच्छिन्नस्य नोपपद्यते अतः परमात्मैव प्रतिपाद्य इति शङ्कां परिहरन् पूर्वपक्षमाह "अतो ब्रह्मविदि"ति, अतश्शारीरत्वश्रवणात्सामानाधिकरण्यनैक्यस्य प्रतिपन्नत्वाच्च अचिद्वियुक्तस्वरूपप्राप्यतापरत्वं कल्प्यमित्यर्थः। लक्षणकथनं तत्प्रतिपत्त्यर्थं तद्विशेषोक्तिश्च अचिद्वियुक्ते स्वरूपे सम्भवतीत्याह—

मू० अचिद्वियुक्तस्य स्वरूपस्य लक्षणमिदमुच्यते—"सत्यं ज्ञानमनन्तं ब्रह्मेति, तद्रूपप्राप्तिरेव हि मोक्षः, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति, अतो जीवस्याविद्याविमुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते, तथा हि शाखाचन्द्रन्यायेनात्मस्वरूपं दर्शयितुमन्नमयः पुरुष इति प्रथमं शरीरं निर्दिश्य तदन्तर्भूतं तस्य धारकं पञ्चवृत्तिप्राणन्तस्याप्यन्तर्भूतं मनः तदन्तर्भूतां च बुद्धिं प्राणमयोमनोमयो विज्ञानमय इति,

टी० "अचिद्वियुक्ते"ति, न केवलं शारीरत्वसामानाधिकरण्यबलादचिद्वियुक्तस्वरूपस्य प्राप्यत्वं किन्तु तत्कण्ठोक्तं चेत्याह "तद्रूपे"ति, हि—शब्दः श्रुतिप्रसिद्धिद्योतकः । यद्वा स्वरूपस्याशेषोपाधिकाकारनिवृत्तिमात्रपरमोक्ष—शब्दस्वारस्यसूचकः । श्रुतिमेव दर्शयति "न ह वा"इति, इति—श्रवणादिति शेषः प्राप्यत्वानुगुणपुरुषार्थतां दर्शयन् निगमयति "अत"इति, ननु नाचाचिद्वियुक्तस्वरूपमुपदिश्यते स वा एष पुरुषोऽन्नरसमय इति शरीरसम्बन्धश्रवणादपरिच्छिन्नानन्दत्वश्रवणाच्चेत्यत्राह "तथा ही"ति, शरीरमुपलक्षणमात्रं न तु विशेषणमिति तद्वियोगेनापरिच्छिन्नानन्दत्वादिकमुपदिश्यत इत्यर्थः । तदन्तरभूतां च बुद्धिमिति प्राणमयमनोमययोर्मयट्प्रत्ययस्य स्वार्थिकत्वाद्विज्ञानमय इत्यत्रापि मयट् स्वार्थिकः, विज्ञानं यज्ञं तनुत इति मयडन्तत्वं विनाऽपि वक्ष्यमाणत्वात्, "विज्ञानसारथिर्यस्तु" 'बुद्धिं तु सारथिं विद्धी'ति, बुद्धिविज्ञान—शब्दयोरेकार्थत्वेन प्रयोगाच्च, विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानं बुद्धिरिति भावः । किमर्थमन्नमयादिनिर्देश ? इत्यत्राह—

मू० तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तर्भूतं जीवात्मानमन्योऽन्तर आत्मा आनन्दमय इत्युपदिश्य अन्त

रात्मपरम्परां समापयति, अतो जीवात्मस्वरूपमेव ब्रह्म-विदाप्नोति प्रक्रान्तं ब्रह्म तदेवानन्दमय इत्युपदिष्टमिति निश्चीयते । ननु च ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयादन्यद् ब्रह्मेति प्रतीयते । नैवम् ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितम् शिरःपक्षपुच्छरूपेण व्यपदिश्यते यथाऽन्नमयो देहावयवो स्वस्मादनतिरिक्तैः स्वावयवैरेव तस्येदमेव शिर इत्यादिना, शिरःपक्षपुच्छवत्तया निर्दर्शितः तथानन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निर्दर्शितं तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतयाऽखण्डरूपमानन्दमयं ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते ।

टी० "तत्र तत्र बुद्ध्यवतरणे"ति, अपरिच्छिन्नानन्दत्वमपि परिशुद्धात्मस्वरूपस्य सम्भवतीत्यर्थसिद्धम् । शारीरत्वश्रवणात् जीवसामानाधिकरण्याद्विज्ञानमयशब्दस्यान्तःकरणपरत्वात्प्राप्यत्वादेः परिशुद्धात्मस्वरूपेऽप्युपपन्नत्वाच्छरीरस्योपलक्षणत्वेन तद्वियुक्तस्वरूपेण प्राप्यत्वादिसम्भवान्मयट्प्रत्ययस्य स्वार्थिकत्वेन विकारपरत्वाभावाच्च परिशुद्धात्मप्रत्यगात्स्वरूपविषयमिदं वाक्यमिति पूर्वपक्षसंग्रहः तत्र द्वौ हेतू साधकौ अन्ये तु शङ्कितदूषणान्यथासिद्धिरूपाः, एवमानन्दमय–शब्दस्य प्रत्यगात्मपरत्ववादिनं पूर्वपक्षिणं सांख्यं मृषावादिपक्षस्यश्चोदयति "ननु चे"ति, तस्य पुच्छमिति षष्ठ्यावयविसम्बन्धप्रतीतिस्सम्बन्धस्य द्विष्ठतया प्रतिष्ठा तद्वत्त्वेन च व्यतिरेकावगमादन्यत्वमित्यर्थः । परिहरति"नैवमि"ति, अन्वयं पुरुषविध इति श्रुतिवाक्यस्मरणार्थं पुरुषविधत्वरूपितमित्युक्तम्, पुरुषविधत्वेन रूपितमनतिरिक्तत्वमुपपादयति "यथे"ति, प्रकरणे स्वस्मादनतिरिक्तैस्स्वावयवैः पुच्छप्रतिष्ठात्वरूपणदर्शनादत्रापि पुच्छप्रतिष्ठात्वेन रूपितम् ब्रह्मानन्दमयादनतिरिक्तमित्यर्थः । षष्ठीनिर्देशः समुदायतदेकदेशत्वनिबन्धनतयोपपन्न इति भावः । नन्वानन्द आत्मा इत्यानन्दोऽवयवित्वेन रूपितः

न त्ववयवत्वेन तत्कथमुच्यते? अवयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामिति, नैष दोषः आत्म-शब्दस्य स्ववाचित्वाभावात्, कायस्य मध्यभागोह्यात्म-शब्दवाच्य दशहस्त्या अङ्गुलयो दश पाद्याः द्वावूरू द्वौ बाहू पञ्चविंश आत्मेत्यादौ तथाप्रयोगदर्शनात् ।

सू० यदि चानन्दमयादन्यद्ब्रह्माभविष्यत् तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यपि निरदेक्ष्यत्, न चैवं निर्दिश्यते, एतदुक्तं भवति ब्रह्मविदाप्नोति परमिति प्रक्रान्तं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य तदेव तस्माद्वा एतस्मादात्मन इत्यात्म-शब्देन निर्दिश्य तस्य सर्वान्तरात्मत्वेनात्मत्वं व्यञ्जयद्वाक्यमन्नमयादिषु तदन्तरात्मतयाऽऽत्मत्वेन निर्दिष्टान् प्राणमयादीनतिक्रम्यान्योऽन्तर आत्माऽऽनन्दमय इत्यात्मशब्देन निर्देशमानन्दमये समापयति, अत आत्म-शब्देन प्रक्रान्तब्रह्मानन्दमयमिति निश्चीयते इति ।

टी० अत एव तस्यानन्द आत्मेति षष्ठ्या व्यतिरेकनिर्देशस्वारस्यं सिध्यति, तस्मादानन्दो मध्यभागत्वेन रूपितः । नन्वेवं पुच्छतया निर्दिष्टं ब्रह्मेत्यङ्गीकृतं स्यात् । ततः किं, तर्हि किं निरसनीयम्? आनन्दमयस्याब्रह्मत्वम् अतस्तन्निरसनमुखेन पुच्छस्य तदन्तर्भावो ऽभिधीयते । हेत्वन्तरमाह "यदि चे"ति, ननु तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यन्तरात्मतयैव भेदो वक्तव्य इति न ह्यस्ति नियमः "पृथगात्मानं प्रेरितारं" पतिं विश्वस्येत्यादिवत् व्यावर्तकारान्तरेणाप्यन्यत्वप्रतिपादनसम्भवादित्याशङ्क्याह "एतदुक्तमि"ति, प्रकरणस्य तत्तदन्तरतयैव भेदप्रतिपादनपरत्वात् तत्प्रकरणस्थैतद्वाक्येन तादृशेन भवितव्यमित्यर्थः । आत्म-शब्दस्य श्रुत्यैव व्याख्यानं कृतमिति कथमवगम्यत? इति शङ्कायां स्वोक्तस्य स्वयमेव

व्याख्यानं प्रकरणसिद्धमिति दर्शयितुमात्म-शब्दनिर्दिष्टस्यैव ब्रह्मत्वोप-
पादनोपयोगितया च ब्रह्मविदाप्नोतीत्याद्युक्तम्, तत्र ब्रह्म-शब्दव्याख्यानं
सत्यज्ञानादिवाक्यमात्म-शब्दव्याख्यानमानन्दमये समाप्तमस्तु ततः कि
मानन्दमयस्यैव ब्रह्मत्वे इति शङ्कायां ब्रह्म-शब्देन प्रकृतस्यैवात्मशब्देन
निर्द्दिष्टत्वं दर्शयति "तदेवे"ति, तस्माद्वा एतस्मादात्मन"इति, तदेत-
च्छब्दौ प्रकृतपरामर्शिनाविति भावः, पुनश्चोदयति ।

सू० ननु च ब्रह्म पुच्छम्प्रतिष्ठेत्युक्ता "असन्नेव स भवति असद्
ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो
विदु"रिति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ
दर्शयति नानन्दमयज्ञानाज्ञानाभ्यां, न चानन्दमयस्य प्रिय-
मोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञाना-
शङ्का युक्ता अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृत-
स्तस्मादानन्दमयादन्यद्ब्रह्म । नैवम् इदं पुच्छं प्रतिष्ठा
पृथिवी पुच्छं प्रतिष्ठा अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा मह:
पुच्छं प्रतिष्ठेत्येवमुक्ता तत्र तत्रोदाहृताः अन्नाद्वै प्रजाः
प्रजायन्त इत्यादयः श्लोका यथा न पुच्छमात्रप्रतिपादनपरा
अपि त्वन्नमयादिपुरुषमात्रप्रतिपादनपराः एवमत्राप्या-
नन्दमयस्यायमसन्नेवेति श्लोको नानन्दमयव्यतिरिक्तस्य पु-
च्छस्य आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण ह्यप-
तस्यापरिच्छिन्नानन्दमयस्य सद्भावज्ञानाज्ञानशङ्का युक्तव ।

टी० "ननु चे"ति, पूर्वं प्राधान्येनोक्तानामन्नयादीनां श्लोकेषु तच्छ
ब्देरेव निर्द्देशो दृष्टः, एवमत्राप्यानन्दमयः प्रधानश्चेत्तद्विषयश्लोकेऽपि
तत्तच्छब्देनैव निर्द्देष्टव्यम् । यद्वा यद्यानन्दमये आत्म-शब्दव्याख्यानपरिस-
माप्तिः तर्ह्यात्म-शब्देन निर्देष्टव्यं तथा च न कृतमपि तु ब्रह्मशब्देन निर्दिष्टं

तस्मादानन्दमयस्य न प्राधान्यमतः पुच्छब्रह्मैव प्रधानप्रतिपाद्यमित्यर्थः ब्रह्म-शब्दस्यानन्दमयविषयत्वे सिद्धे ब्रह्म-शब्देन निर्देशो न दोष इति शङ्कामर्थात्परिहरन् युक्त्यन्तरमाह "न चानन्दमयस्ये"ति, आशङ्काशब्देनोदाहृतश्रुतिवाक्यद्वयस्यः चेदर्थो व्याख्यातः। सर्वलोकप्रसिद्धस्य दुरपह्नवत्वेनासद्भाव इव सद्भावेऽप्याशङ्कावादो न युक्त इत्यर्थः। परिहरति "नैवमि"ति, ब्रह्मात्मानन्दमयशब्दानामैकार्थ्यं निश्चिते आनन्दमयशब्दनिर्देशसमो ब्रह्मशब्दनिर्देश इति स्फुटम् इति बुद्ध्वा आनन्दमयप्राधान्ये युक्तिमाह "इदं पुच्छ"मिति, प्रकरणस्यपूर्वपूर्वश्लोकानां पुच्छमात्रप्रतिपादनपरत्वाभावादयमपि श्लोको न पुच्छमात्रप्रतिपादनपर इत्यर्थः। प्रसिद्धानन्दस्य सद्भावासद्भावशङ्कानुपपत्तिं परिहरति "आनन्दमयस्ये"ति, प्रतिवन्दीमभिप्रेत्याह—

भू० पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्यसिद्धता शिरःप्रभृत्यवयवित्वाभावाद्ब्रह्मणो नानन्दमयं ब्रह्मेति चेत् ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात्पुच्छमपि ब्रह्म न भवेत्। अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याश्राश्रयभूतत्वाद्ब्रह्मणः पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत हन्त तर्ह्यसुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति, एवं च सत्यं ज्ञानमनन्तं ब्रह्मेति विकारास्पदजडपरिच्छिन्नवस्त्वन्तराद्व्यावृत्तस्यासुखाद्व्यावृत्तिरानन्दमय इत्युपदिश्यते अतश्चाखण्डैकरसानन्दरूपे ब्रह्मणि आनन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः॥

टी० "पुच्छब्रह्मणोऽपी"ति, विज्ञानमानन्दं ब्रह्म आनन्दो ब्रह्मेत्यादिवाक्येन ब्रह्मण आनन्दरूपत्वस्य उक्तत्वात् आनन्दस्य च प्रसिद्धत्वात् न तस्य सद्भावासद्भावज्ञानाशङ्का युक्तेति चोदिते तस्यानन्दरूपस्य ब्रह्मणोऽविदितत्वमपरिच्छिन्नानन्दत्वादेव हि त्वयोपपादनीयम् तदत्रापि

तुल्यमित्यर्थः शङ्कते "शिरः प्रभृती"ति, परिहरति "ब्रह्मण"इति, पुच्छत्वमवयवविशेषत्वं प्रतिष्ठात्वमाधारत्वम्, ब्रह्मणोऽवयवित्वमनुपपन्नमिति चेन्न अवयवत्वमप्युपपन्नमित्यर्थः । अवयत्वं रूपणमात्रमिति शङ्कते "अथे"ति, परिहरति "हन्त तर्ही"ति, असुखादित्यसुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन रूपिता इत्यर्थः सत्यज्ञानादिवाक्येन सकलेतरव्यावृत्तत्वे सिद्धे किमत्र क्रियते इत्यत्राह 'एवं चे"ति, सत्य—शब्दनिर्दिष्टस्य ब्रह्मणः कस्यचिद्विकारत्वाभावादानन्दमय–शब्दवाच्यत्वमयुक्तमित्यत्राह 'ततश्चे"ति, तत उक्तानुपपत्तीनां परिहृतत्वादुपपत्त्यन्तरसद्भावाच्चेत्यर्थः । किञ्च सोऽकामयतेतिवाक्ये स इति पुँल्लिङ्गतच्छब्देन कारणवस्तुनिर्द्देशाच्च आनन्दमयः परं ब्रह्म तस्माद्वा एतस्मादात्मन इत्यात्म-शब्दनिर्दिष्टात्माभिप्रायोऽयं पुँल्लिङ्गनिर्द्देश इति चेन्न व्यवहितादव्यवहितस्य ग्राह्यत्वेनानन्दमयस्य ग्राह्यत्वात् ब्रह्मपुच्छं प्रतिष्ठेति वाक्यात्पश्चात्पठितस्य तस्यैष एव शारीर आत्मेति वाक्यस्यस्यात्म-शब्दस्य व्यवधानाभावात्तदभिप्रायः स इति पुँल्लिङ्गनिर्देशः शङ्कते "शिरःप्रभृती"ति, परिहरति 'ब्रह्मण"इति, पुच्छत्वमवयवविशेषत्वं, प्रतिष्ठात्वमाधारत्वं, ब्रह्मणोऽवयवित्वमनुपपन्नमिति चेत् अवयवत्वमप्यनुपपन्नमित्यर्थः । अवयवत्वं रूपणमात्रमिति शङ्कते "अथे"ति, परिहरति "हन्त तर्ही"ति, । असुखादिति । असुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन रूपिता इत्यर्थः सत्यज्ञानादिवाक्येन सकलेतरव्यावृत्तत्वे सिद्धे किमत्र क्रियते? इत्यत्राह "एवञ्चे"ति, सत्य-शब्दनिर्दिष्टस्य ब्रह्मणः कस्यचिद्विकारत्वाभावादानन्दमय–शब्दवाच्यत्वमपि अयुक्तमित्यत्राह "ततश्चे"ति, ततः–उक्तानुपपत्तीनां परिहृतत्वात् उपपत्त्यन्तरसद्भावाच्चेत्यर्थः किञ्च सोऽकामयतेति वाक्ये स इति पुँल्लिङ्गतच्छब्देन कारणवस्तुनिर्देशाच्चानन्दमयः परं ब्रह्म । तस्माद्वा एतस्मादात्मन इत्यात्म–शब्दनिर्दिष्टात्माभिप्रायोऽयं पुँल्लिङ्गनिर्देश इति चेन्न । व्यवहितादव्यवहितस्य ग्राह्यत्वेनानन्दमयस्य ग्राह्यत्वात् । ब्रह्मपुच्छं प्रतिष्ठेति वाक्यात्पश्चात्पठितस्य तस्यैष एव शारीर आत्मेति वाक्यस्यस्यात्म–शब्दस्य व्यव-

धानाभावात्तदभिप्रायस्स इति पुँल्लिङ्गनिर्देशः आनन्दमयस्त्वेतद्वाक्यापेक्षया व्यवहितत्वान्न स परामृश्यत इति चेत् तस्यैष एव शारीर आत्मेति वाक्यस्यस्यात्मनः सर्वपर्य्यायसाधारणत्वेन एतत्पर्य्यायत्वस्य प्रधानप्रतिपाद्यत्वाभावात् सर्वनामशब्दस्य प्रधानपरामर्शित्वस्वारस्याच्च स इत्यानन्दमय एवोच्यते विज्ञानं ब्रह्मेति व्यजानात् आनन्दो ब्रह्मेति व्यजानादित्यत्र विज्ञानमयमात्मानमुपसंक्रम्यानन्दमयमात्मानमुपसंक्रम्य इत्यत्र च स्थानप्रमाणेनानन्दानन्दमय-शब्दयोरेकार्थत्वावगमात् आनन्दमय-शब्दस्य परब्रह्मविषयत्वप्रसिद्धेश्चानन्दमयः परं ब्रह्म, न चानन्दो ब्रह्मेत्यत्रानन्द-शब्दोऽप्यानन्दमयशब्दवत् ब्रह्मकोशपर इति वाच्यम् अन्नं ब्रह्म प्राणो ब्रह्मेत्यादिविज्ञानान्तरमिवानन्दो ब्रह्मेति विज्ञानानन्तरं भृगोर्वरुणोपसत्त्यभावात्, न हि तद्विज्ञाय पुनरेव वरुणं पित-

**रमुपससारेति पुनः श्रूयते, एतदुक्तम्भवति—अन्नं ब्रह्मेति व्यजानादित्यत्र किमन्नाद्युपलक्षितब्रह्मवेदनमुक्तं? उत अन्नमयादौ ब्रह्मबुद्ध्यवतरणम्? आद्ये अन्नं ब्रह्मेति विज्ञानानन्तरं वरुणोपसर्पणं स्यात् उपलक्षणभूतेन तेन ब्रह्मणः प्रतिपन्नत्वात्, द्वितीये ह्यानन्दविषयब्रह्मबुद्धेर्यथार्थत्वं स्यात् पुनर्वरुणोपसत्त्यभावादिति । किञ्चानन्दो ब्रह्मेत्यत्रानन्द-शब्दस्य ब्रह्मपरत्वं युष्माभिरेव व्याख्यातम्, उक्तं हि या तु भार्गवी वारुणी विद्याऽऽनन्दो ब्रह्मेति व्यजानादिति तस्यां मयटोऽश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वमिति, अतश्चानन्दो ब्रह्मेत्यस्य वाक्यस्य परमात्मपरत्वात् स्थानप्रमाणेनानन्दमयमात्मानमित्यत्र आनन्दमय-शब्दोऽपि परमात्मपरः आनन्दमयस्य शोध्यत्वञ्च तदनुगुणसंसारनिर्हरणादिरूपमिति चानुसन्धेयम् । प्रत्यगात्मस्वरूपमेवापरिच्छिन्नानन्दस्वरूपञ्चेत्कथं जीवानां दुःखित्वसुखित्वतारतम्यञ्चोपलभ्यते? इति शङ्कां च परिहरन् पूर्वपक्षमुपसंहरति**

**मू० तस्मादविद्यापरिकल्पितविविधविचित्रदेवादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं स्वरूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यते इत्यानन्दमयः प्रत्यगात्मा इत्येवं**

"तस्माद्धि"ति, तस्य प्रियमिति सम्बन्धवाचिन्या षष्ठ्या व्यतिरेकप्रतीतेर्ब्रह्म-विषयस्योपरितनश्लोकस्यानन्दमयविषयत्वाभावेन पुच्छतयोक्तब्रह्मण एव प्रधानत्वावगमात्, प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य सद्भावा-सद्भावज्ञानशङ्काऽनुपपत्तेर्निरवयवस्य परमात्मनोऽवयवित्वानुपपत्तेरविका-रस्य विकारित्वानुपपत्तेस्तस्यैष एव शारीर आत्मा इत्यानन्दमयवाक्यावग-तस्यात्मान्तरस्य परमात्मतयाऽऽनन्दमयस्य परमात्मत्वानुपपत्तेः अन्नमयप्रा-णमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तामिति श्रुतस्य शोध्यत्वस्य नित्य-

**सू० प्राप्ते प्रचक्ष्महे आनन्दमयोऽभ्यासात् आनन्दमयः**

शुद्धे परमात्मन्यनुपपत्तेश्च नानन्दमयः परमात्मा अपि तु पुच्छतया निर्दिष्टमेव ब्रह्म परमात्मेति पुच्छब्रह्मवादहेतुसंग्रहः, प्रकरणस्य स्वस्मादनति-रिक्तैः स्वावयवैः शिरःपक्षादिरूपणपरत्वात्तदन्तरतयाऽऽत्म-शब्दव्याख्यान-स्यानन्दमये पर्य्यवसितत्वादन्नमयादिविषयाणां प्रकरणस्थश्लोकानां पुच्छ-वद्विषयत्वात् कारणत्वप्रतिपादके सोऽकामयतेत्यनन्तरवाक्ये स इति पुंल्लि-ङ्गान्तेन प्रधानप्रकृतार्थपरामर्शितच्छब्देनाव्यवहितस्यानन्दमयस्य वक्तुं युक्त-त्वात्, आनन्दो ब्रह्मेत्यानन्द-शब्दस्यापि परब्रह्मपरत्वाभ्युपगमात् आनन्दो ब्रह्मेति व्यजानात् आनन्दमयात्मानमुपसंक्रम्येत्यानन्दानन्दमय-शब्दयो-रेकार्थत्वेनानन्दमय-शब्दस्यापि परब्रह्मपरत्वादानन्दमय-शब्दतुल्यार्था-नन्दशब्दवाच्यब्रह्मज्ञानानन्तरं वरुणोपसत्त्यश्रवणात्सूत्रस्वारस्यात्स्वस्माद-नतिरिक्तस्वावयवैरेव शिरःपक्षपुच्छादिरूपणपरप्रकरणानुगुण्येन षष्ठीनिर्दे-शस्य समुदायसमुदायिभावनिबन्धनत्वोपपत्तेरानन्दमयात्मब्रह्मशब्दाना-मैकार्थ्येन तेष्वन्यतमेन तद्विषयश्लोकनिर्देशस्य युक्तत्वादपरिच्छिन्नानन्द-स्याप्रसिद्धत्वेनानन्दो ब्रह्मेत्युक्ततयाऽभ्युपेतपुच्छब्रह्मण इव सद्भावासद्भाव-शङ्कासम्भवादवयवत्ववत् अवयवित्वेन रूपणसम्भवादानन्दमय इत्यत्र मयट्प्रत्ययस्य स्वार्थिकत्वेन प्राचुर्य्यार्थत्वेन वा विकारपरत्वाभावेन ब्रह्मणो निर्विकारत्वाविरोधात् तस्यैष एव शारीर आत्मेति वाक्यस्यानन्यात्मत्व-प्रतिपादनपरत्वात्, अन्नमयप्राणमयमनोविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्

इत्यत्र शोधनं तत्तद्वस्त्वनुगुणं कार्य्यमिति प्रत्यगात्मत्वपक्षे संसारनिर्हरणेन शोध्यत्वात्तदतिरिक्तपक्षे भगवतः कालुष्यशान्तिरूपशोध्यत्वस्य प्रपदनसाध्यस्योपपन्नत्वाच्चानन्दमयानतिरिक्तं पुच्छब्रह्मेत्यानन्दमय एव परमात्मेति पुच्छब्रह्मवादनिराकरणयुक्तिसंग्रहः, अत्राक्षेपरूपं सिद्धान्तसाधकम् उक्तहेतुगणशङ्कितविवक्षितयुक्तिपरिहारपरः, तस्मादित्यधिकरणपूर्वपक्षोपसंहारः, अस्मिन्पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमवतारयति "एवमि"ति. आनन्दमयोऽभ्यासात् तत्र प्रतिज्ञांशं साध्यसमर्पकपदेन पूरयन् व्याचष्टे "आनन्दमय"इति, उत्तराधिकरणे भेदव्यपदेशाच्चान्य इत्यन्य-शब्दः प्रयुक्तः इह तदाकर्षणलब्धोऽर्थ उक्तः परमात्मेति । यद्वा पूर्वाधिकरणसूत्रस्ययोनीशब्दमिति पदयोरनुषङ्गलब्धार्थमाह—

सू० परमात्मा कुतः ? अभ्यासात् "सैषाऽऽनन्दस्य मीमांसा भवती"त्यारभ्य "यतो वाचो निवर्त्तन्ते" इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण ।

टी० "परमात्मे"ति, यस्मिन् शब्द एव प्रमाणं न भवति स ह्यशब्दः स्वयं प्रकाशप्रत्यक्षानुमानादिभिः सिध्यतो जीवस्यापि तदशब्दत्वमुपपद्यते यथाऽऽत्मसिद्धौ "एवमात्मा स्वतः सिध्यन्नागमेनानुमानतः । योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाशत इ"ति । यद्वा एतदधिकरणसूत्रस्य एव नेतर इति साध्यांशोऽत्रापि विवक्षित इत्यभिप्रायेणोक्तं "परमात्मे"ति, अन्तरात्मपरम्परासमाप्तिद्योतनाय अत्र परमात्म-शब्देन धर्मिनिर्द्देशः अभ्यासादानन्दमयत्वं श्रुतौ प्रतीतम्, अत आनन्दमयत्वापेक्षया हेतुनिर्देशशङ्काव्युदासाय साध्यांशे हेत्वाकाङ्क्षां दर्शयति "कुत"इति, ननु भेदव्यपदेशस्य जीवादन्यत्वे स्फुटतरतया निरपेक्षहेतुत्वात्स्ववाक्यस्थत्वाच्च स एव प्रथमं वक्तव्यः न तु वाक्यान्तरस्थोऽनुग्राहकयुक्त्यपेक्षोऽभ्यासः, नैवं स्ववाक्यस्थाद् भेदव्यपदेशादपि स्वपदैकदेशमयड्वाच्यस्य प्राचुर्य्यस्योपपादनसापेक्षस्याभ्यासवत्तरत्वात् तद्विवरणरूपनिरतिशयदशाशिरस्कस्याभ्यासस्यैव प्रथमं हेतुतया वक्तुं युक्तत्वात् । कस्याभ्यासः? इत्याकाङ्क्षां पूरयन् हेतुपदं व्याचष्टे "सैषाऽऽनन्दस्ये"-

त्ति अभ्यासो गुणनमावृत्तिः, यतो वाचो निवर्तन्ते इत्यस्यार्थमभिप्रेत्य निर-तिशयदशाशिरस्क इत्युक्तम्, स एको ब्रह्मण आनन्द इति वाक्यस्या-र्थमभिप्रेत्य अभ्यस्यमान इत्युक्तम्, शतगुणितोत्तरक्रमेण गुणितत्वादित्यर्थः स एको ब्रह्मण आनन्द इति वाक्यस्य चतुर्मुखानन्दविषयत्वेन यतोवाच-इत्यादि वाक्यस्यैव ब्रह्मानन्दविषयत्वाङ्गीकारेऽभ्यासादिति हेतोर्व्यधिकर-णता स्यात् । किञ्चायं ब्रह्म-शब्दः परमात्मवाचकः, ब्रह्मशब्दस्य भगवत्येव मुख्यत्वात् ब्रह्मविदाप्नोति अस्ति ब्रह्मेत्यादिषु वाक्येषु परब्रह्मपरतयैव ब्रह्म-शब्दस्य प्रयोगप्रकरणात् यतो वाचो निवर्तन्त इति पूर्वोत्तरवाक्य-योरानन्दप्रतिसम्बन्धित्वाचिषष्ठ्यन्तब्रह्म-शब्दस्य परब्रह्मपरत्वदर्शनात् सै-षानन्दस्य मीमांसेति प्रकृतब्रह्मानन्दस्य निगमनस्यापेक्षितत्वात् स यश्चायं पुरुष इति प्रकृतपरामर्शिनाऽनन्तरवाक्यस्थेन कारणपरतच्छब्देन पूर्ववाक्य स्थस्यास्य ब्रह्म-शब्दस्य परब्रह्मपरत्वनिश्चयात्, अन्यथा चतुर्मुखस्य सर्वा-न्तरात्मत्वपरमकारणत्वप्रसङ्गात्, तदप्येष श्लोको भवतीति भगवदानन्द-विषयश्लोकोत्थानस्य भगवदानन्दप्रसङ्गसापेक्षत्वात्, निरुपपदप्रजापतिश-ब्दस्य चतुर्मुखे स्वरसत्वात्, दक्षादिपरत्वे एकवचनस्वारस्याभावात् देवानां देवगन्धर्वाणामिन्द्रस्य वृहस्पतेरिति बहुव्यक्तिषु बहुवचनस्यैकैकव्यक्तिषु च एकवचनस्य प्रकरणे प्रयुज्यमानत्वात्, तथा स एक प्रजापतिलोक आनन्दो यश्च श्रोत्रियोवृजिनोऽकामहतोऽथ ते ये शतं प्रजापतिलोक आनन्दास्स-एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियो वृजिनोऽकामहतोऽथ एष एव पर आनन्द एष ब्रह्मलोकस्सम्राडिति होवाचे''ति वृहदारण्यकवाक्यैका-र्थ्याच्च, स एको ब्रह्मण आनन्द इति वाक्यस्य परमात्मानन्दपरत्वं सिद्धम् । न च स एक इति निर्देशात् ब्रह्मानन्दस्य परिच्छिन्नत्वम्, आधिक्यमात्रे वाक्यतात्पर्य्यात्, यथा क्षिप्रेषुरिव गच्छतीति वाक्यं सूर्य्यगतिमान्द्यनिवृ-त्तिपरं न त्विषुसाम्यपरं सूर्य्यस्य निमेषमात्रे बहुयोजनातिलङ्घित्वस्य प्रमाण-सिद्धत्वात्, तथात्रापि पूर्वापरवाक्यादिभिरपरिच्छिन्नानन्दत्वसिद्धेः स एक इति वाक्यस्य चतुर्मुखानन्दाधिक्ये तात्पर्य्यमित्यवगम्यते । यद्वा "रोमकूपे-ष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते । अण्डानान्तु सहस्राणां सहस्रा-

ण्ययुतानि च ईदृशानां तथा तत्र कोटिकोटिशतानि च । गङ्गायाः सिकता धारा यथा वर्षति वासवे शक्या गणयितुं लोके न व्यतीताः पितामहाः । इत्यादिभिरण्डानां तत्र तत्र चतुर्मुखानां चासङ्ख्येयत्वावगमान्नियाम्यान्नि-नियन्तुश्शतगुणानन्दत्वे कथिते चतुर्मुखेभ्यो ऽसङ्ख्यातेभ्यः शतगुणानन्दतयाऽवगतस्य भगवतो ऽपरिच्छिन्नानन्दत्वमर्थसिद्धमित्यतो यथोक्त एवार्थः अभ्यस्यमान इति, अभ्यास-शब्दः कर्मार्थघञन्त इत्यभिप्रायः । यद्वा भावा-

सू० निरतिशयशिरस्को ऽभ्यस्यमान आनन्दो ऽनन्तदुःख-मिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवन्निखिल-

र्थत्वेऽप्यानन्दस्याभ्यस्तत्वं फलितमिति, तथोक्तं, तच्च हेतोर्वैयधिकरण्यव्युदासार्थम् । ननु गुणनं वर्द्धनम् प्राजापत्यानन्दो हि शतगुणत्वेन वर्ध्यते न तु ब्रह्मानन्दः, सत्यं, तथा ऽपि गुणितः प्राजापत्यानन्द एव ब्रह्मानन्द इत्युपचारेणोक्तिः व्रीहिचतुष्टयं गुञ्जेतिवत् गुणिततत्तदानन्दसदृशस्यैकदेशतया प्रतिपाद्यमानो ब्रह्मानन्द इत्यर्थः । यद्वा मुहुर्मुहुरुक्तिरभ्यासः, तेन तात्पर्यलिङ्गसत्त्वं सूचितम् । अस्त्वानन्दस्यापरिच्छिन्नत्वन्ततः किमित्यत्राह "अनन्तदुःखे"ति, अनेन निरतिशयानन्दविरुद्धधर्मयोग उक्तः । परिमितेति निरतिशयानन्दाभाव उक्तः, विरुद्धधर्मोपलम्भादभावोपलम्भाच्चासम्भव इत्यर्थः । कथमसम्भवः? मुक्तस्यापरिच्छिन्नानन्दत्वं श्रुतमित्यत्राह-

सू० हेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति, यथाह-तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय" इति, विज्ञानमयो हि जीवः न बुद्धिमात्रम्,

टी० "निखिलहेये"ति, प्रत्यनीकत्वमत्र निवर्तकत्वं विवक्षितं मुक्तस्यापि परमात्मप्रसादादेव हि हेयनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिः, इह च स्वत एवापरिच्छिन्नानन्दत्वम् अवगम्यते, हेत्वश्रवणात् निरतिशयत्वश्रवण

विरोधेन हेतुकल्पनायोगाच्च । न च मुक्तस्य स्वतोऽपरिच्छिन्नानन्दत्वम् अथ सोऽभयं गतो भवति एष ह्येवानन्दयाति रसं ह्येवायं लब्ध्वाऽऽनन्दीभवतीति परमात्मायत्तत्वश्रुतेः, न ह्येवं परमात्मानन्दस्यान्याधीनत्वं श्रुतं श्रोत्रियस्य चाकामहतस्येति मुक्तः पृथङ् निर्दिश्यते, श्रोत्रियः—श्रुतवेदान्तः; अकामहतः—उपासनानिवृत्तसमस्तक्लेशः, यश्च श्रोत्रियो वृजिनोऽकामहत इति श्रुत्यन्तरं मुक्तस्य जगद्व्यापाराभावाच्च परस्यैव स्वतो निरतिशयानन्दयोगः । एवं निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपतर्कानुगृहीत आनन्दमय-शब्दः परमात्मविषय इत्युक्तं भवति । न केवलं निरतिशयानन्दत्वरूपवस्तुसामर्थ्यानुगृहीतत्वाद्वैलक्षण्यमवगतं तत् कण्ठोक्तं चेत्याह "यथाहे"ति, ननु भेदव्यपदेशाच्चेति सूत्रस्य विषयवाक्यं हीदं तत्र व्याख्यास्यमानस्यास्य कथमिहोपादानमर्थोपपादनं च? उच्यते निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपस्तर्को ह्यानन्दमय-शब्दस्य परमात्मविषयत्वव्यवस्थापक उक्तः, अस्य तर्कस्य अनेन वाक्येन गर्भितत्वात्तत्सूचकत्वेनेदं वाक्यमत्रोपन्यस्तम्, अत्र ह्येतस्मादिति पदेन विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे"ति पूर्ववाक्यप्रकृतकर्मवश्यत्वादिवैशिष्ट्यं जीवस्याभिप्रेतं धर्मवाचिनाऽपि मयडन्तेन विज्ञानमय-शब्देन सर्वोपाधिनिर्विमुक्तं स्वाभाविकं रूपमसङ्कुचितज्ञानमित्यवयवशक्त्या दर्शितम् । अनेन वाक्येन स्वाभावपरिशुद्धस्यापि जीवस्य कर्मकृतानन्तदुःखभाजनस्य निरतिशयानन्दासम्भवात् ततः परमात्मनो विलक्षणत्वं प्रतिपादितमित्यत्रेदम् उपात्तम्, अस्मिन्वाक्ये विज्ञानमय-शब्दस्य बुद्धिमात्रपरत्वं व्युदस्यति 'विज्ञानमयो ही"ति, "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति श्रुतिप्रसिद्धिद्योतको हि-शब्दः, शब्दस्वारस्यानुग्राहकप्रत्यक्षप्रसिद्धिद्योतको वा, अहं विजानामीति विज्ञातृत्वं ह्यात्मनः प्रतीयते ज्ञातृत्व[१]वाचिनो विज्ञानमय-शब्दस्य ज्ञायतेऽनेनेति व्युत्पत्त्याऽन्तःकरणपरत्वमस्वरसमित्यभिप्रायेणाह "न बुद्धिमात्र"मिति, मात्रचा चाभिप्रेतं प्रत्ययवैयर्थ्यं विशदयति—

१ ज्ञप्तिवाचिनं इति तु पा॰ ।

भा० मयट्प्रत्ययेन व्यतिरेकप्रतीतेः, प्राणमये त्वगत्या स्वार्थिक आश्रीयते, इह तु तद्धतो जीवस्य सम्भवान्नानैकत्वं न्याय्यं, बद्धो मुक्तश्च प्रत्यगात्मा ज्ञानैकत्वभ्य, धर्माद्दि प्राणमयादौ तु मयडर्थसम्भवोऽनन्तरमेव वक्ष्यते, कथं तर्हि विज्ञानमयविषयश्लोके "विज्ञानं यज्ञं तनुते" इति केवलविज्ञान-शब्दोपादानमुपपद्यते? ज्ञातुरेवात्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः, ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुः स्वरूपस्य स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति गवादिशब्दवत् "कृत्यल्युटो बहुल"मिति वा कर्त्तरि ल्युडाश्रीयते नन्द्यादित्वं वाऽऽश्रित्य नन्दिग्रहीत्यादिना कर्त्तरि ल्युः ॥

टी० "मयट् प्रत्ययेने"ति, प्रकरणवशात्स्वार्थिकत्वमाशङ्क्याह "प्राणमये त्वि"ति, अगत्या विकारप्राचुर्याद्यर्थान्तरासम्भवात् पक्षे तद्वैषम्यमाह "इह त्विति", तद्वत इति प्राचुर्यार्थत्वं सम्भवतीत्यर्थः। नात्र मयडर्थस्सम्भवति ज्ञप्तिमात्रस्वरूपो ह्यात्मा, ज्ञातृत्वं हि काल्पनिकं मुक्तावस्थायां तदपि नास्तीत्याह "बद्ध इति" प्राणमयादौ स्वार्थिकत्वमभ्युपगम्य परिहार उक्तः। अथ तदेव नास्तीत्याह "प्राणमयादाविति" विज्ञानमय-शब्दस्य तद्विषयश्लोकस्थविज्ञानशब्दसमानार्थत्वात् मयट् स्वार्थिक इत्यभिप्रायेण पृच्छति "कथं तर्ही"ति, उपपद्यते—न हि विज्ञानस्य विज्ञानान्तराश्रयत्वसम्भव इति भावः। विज्ञानमय-शब्दस्य ज्ञातरि प्रवृत्तौ निमित्तं दर्शयति "ज्ञातुरेवेति" एवकारश्शङ्कितविरोधाभावद्योतकः, अपि-शब्दः स्वरूपधर्मयोर्निमित्तसाधारण्यपरः, ज्ञातृशब्दतुल्यार्थतयाऽपि निर्वाहं दर्शयति "ज्ञानैके"ति ततः किमित्यत्राह 'स्वरूपेति" स्वरूपनिरूपणधर्मशब्दा अयुतसिद्धधर्मवाचिशब्दाः आकृतिनयविषयतया सम्प्रतिपन्नं शब्दान्विदर्शयति

"गवादी"ति, एवं सूत्रन्यायाभ्यां द्विधा निर्वाह उक्तः । अथ शाब्दमर्यादया द्विधा निर्वाहमाह "कृत्स्ने"ति, प्रथमे पक्षे कर्तृपरत्वं कल्पनीयं, द्वितीये गुणान्तर्भावः कल्पनीय इत्युभयत्राप्रयुक्त-शब्दप्रयोगः, प्रत्यक्षानुगुण्यात् श्रुत्यन्तरप्रत्यभिज्ञानात् प्रथमश्रुतत्वात्प्रकृतिस्वारस्यात् प्रत्ययानर्थक्यानुपपत्तेश्च प्रबलविज्ञानमय-शब्दानुरोधेन विज्ञान-शब्दो निर्वाह्य इति भावः।

स्ववाक्यस्थयुक्त्यन्तरमाह-

सू० अत एव "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते, बुद्धिमात्रस्य हि न कर्तृत्वं सम्भवति, अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्माधीनेष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते, अत एव चेतनमचेतनं च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिशद्वाक्यं "विज्ञानं चाविज्ञानं चेति विज्ञान-शब्देन तद्गुणं चेतनं वदति,

टी० "अत एवे"ति, अत एव-विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थं यज्ञादिकर्तृत्वे श्रुते कथं विज्ञान-शब्दवाच्यस्य चेतनत्व?मित्यत्राह "बुद्धिमात्रस्ये"ति, बोद्धुरेव हि कर्तृत्वं प्रत्यक्षश्रुतिभिस्सूत्रैश्च सिद्धमिति भावः ननु सर्वेषां स्वव्यापारकर्तृत्वमस्ति सत्यं, नात्र तावन्मात्रं विवक्षितं, किं तु चेतनासाधारणः कर्तृत्वविशेषः प्रयत्नाद्याधारत्वलक्षणः यज्ञादिकर्तृत्वमिति ह्युक्तम्, अत्र विज्ञानशब्दास्वारस्यमुभयोरप्यविशिष्टं, यज्ञादिकर्तृत्वास्वारस्यं तु परस्याधिकम् । ननु अन्नतेऽत्ति च भूतानीत्यन्नमय इव प्राकरणिकमौपचारिककर्तृत्वमुपकरणत्वाविशेषात् बुद्धेरपि स्यादित्यत्राह 'अचेतनेषु ही' ति", बाधकाभावे सति उपचार एव दोषः, स च प्रकरणानुवृत्तश्चेत् सोढव्यः स्यात्, न च तदनुवृत्तिः प्राणमये मनोमये च तस्य विच्छिन्नत्वादित्यभिप्रायः । विज्ञान-शब्दस्य चेतनपरत्वे प्रयोगान्तरं दर्शयति "अत एव चेतन"मिति, अत एव-विज्ञान-शब्दस्य चेतनपरत्वादेवेत्यर्थः । "चेतनम-

चेतनं चे''ति, न ह्यन्तःकरणानन्तःकरणविभागोऽत्र क्रियते किन्तु चिद-चिद्विभाग एवेति भावः । कुत इत्यत्राह 'निलनयत्वेति', अचिद्विकारविशेषस्यान्तःकरणस्य च "जीवभूतां महाबाहो ययेदं धार्यते जगदिति" प्रकारेण चेतनधार्यस्य विश्वनिलयनत्वायोगात् परेण तस्य सत्यत्वानभ्युपगमाच्चेति भावः । विज्ञान-शब्दस्य संवित्परत्वमप्ययुक्तम् अनुप्रविश्येत्यनेनानुप्रवेशश्रवणात्, न हि संविद्रूप आत्मा आत्मान्तरव्याप्यतयाऽभिमतः परस्य विज्ञान-शब्दस्य चेतनपरत्वेन प्रयोगान्तरं दर्शयति—

सू० तथाऽन्तर्यामिब्राह्मणे "यो विज्ञाने तिष्ठन्नित्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने "य आत्मनि तिष्ठन्निति पर्यायमधीयाना माध्यन्दिनाः काण्वपाठगतं विज्ञान-शब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति, विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायं, तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तरः परमात्माऽऽनन्दमयः। यद्यपि विज्ञानं यज्ञं तनुत इति श्लोकेन ज्ञानमात्रमेवोपादीयते न ज्ञाता, तथाऽप्यन्योन्तर आत्मा विज्ञाममय इति तद्वान् ज्ञातैवोपदिश्यते, यथा "अन्नाद्वै प्रजाः प्रजायन्त" इत्यत्र श्लोके केवलान्नोपादानेऽपि "स वा एष पुरुषोऽन्नरसमय" इत्यत्र नान्नमात्रनिनिर्दिष्टम् अपि तु तन्मयस्तादृक्कारः

टी० "तथे"ति, विज्ञानस्यात्म-शब्दस्थाने श्रुतत्वादन्तःकरणपरत्वमनुपपन्नं, न चात्म-शब्दोऽप्यन्तःकरणपरः, विज्ञानशब्दवत्तस्यापि तत्रास्वरसत्वात्, यथा ज्ञायतेऽनेनेति व्युत्पत्त्याऽऽश्रयणं विज्ञान-शब्दस्य क्लिष्टं तद्वच्चेतनव्यतिरिक्तेष्वात्म-शब्दोऽपि ह्यस्वरसः अन्तःकरणपरत्वे विज्ञानात्म-शब्दयोरद्वयोरप्यस्वारस्यञ्चेतनपरत्वे तु विज्ञान-शब्दमात्रास्वारस्यं न तु द्वयोरिति विशेषः । अत्रात्म-शब्दस्य परमात्मतया स्वाभिमतसंवित्परत्वञ्च

परेण दुर्वचं, य आत्मनि तिष्ठन्नित्यत्रात्मान्तरस्यितिश्रवणात् आत्मान्तरव्याप्यस्य परमात्मत्वा¹नुपपत्तेः, सर्वत्र प्रयुक्तस्य विज्ञान-शब्दस्य ल्युट्प्रत्ययान्तत्वे विशेष्यानुगुणलिङ्गत्वादात्मविषयस्य तस्य कथं नपुंसकत्वमित्यत्राह "विज्ञानमिति चे"ति, उपपादितमर्थं परमसाध्येन घटयति "तदेवमि"ति, तत् उक्तोपपत्तिभिरेवं विज्ञान-शब्दस्य चेतनपरत्वसिद्धेरित्यर्थः । श्लोकस्थविज्ञान-शब्दस्य ज्ञातृपरत्वोपपादने च विज्ञानमय-शब्दस्य ज्ञातृपरत्वमुक्तम् । अथ श्लोकस्य ज्ञातृपरत्वाभावेऽपि विज्ञानमय-शब्दस्य ज्ञातृपरत्वमाह "यद्यपी"ति, मयड्रहितवाक्ये तदर्थः परित्यक्त इति तद्युत्यपि वाक्ये स न त्याज्य इत्यर्थः । तर्हि ब्राह्मणस्य श्लोकस्य च कथमैकार्थ्य?मित्यत्राह "यथे"ति, पूर्ववाक्योक्तार्थैकदेशविषयत्वात् श्लोकस्य तदैकार्थ्यं, यथाऽन्नमयविषयश्लोकस्येत्यर्थः, तन्मय इति श्रुतिवाक्यगतमयडर्थानुवादः । तद्विकार इति तद्व्याख्यानम् । उक्तस्यार्थस्य उत्सूत्रत्वशङ्कां परिहरन् व्याख्यास्यमानसूत्रोपयोगित्वञ्च दर्शयितुमाह-

भू० एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव भेदव्यपदेशादित्यनन्तरमेव वदति, यदुक्तं जगत्कारणतया निर्दिष्टस्य अनेन जीवेन त्मनाऽनुप्रविश्य तत्त्वमसीति च जीवसामानाधिकरण्यनिर्देशाज्जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपं ब्रह्मविदाप्नोति परमिति प्रक्रान्तम्, असुखाद्व्यावृत्तत्वेनानन्दमय इत्युपदिश्यत इति, तदयुक्तं, जीवस्य चेतनत्वे सत्यपि तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजतेति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः, शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासम्भवो "जगद्व्यापारवर्ज्जं" "भोगमात्र-

१ परमात्मत्वासिद्धेरिति तु पा० ।

साम्यलिङ्गादित्यत्रोपपादयिष्यते, कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे "अनेन जीवेनात्मना तत्त्वमसी"ति सामानाधिकरण्यनिर्देशः कथमुपपद्यते? इति चेत्

टी० 'एतत्सर्वमि'ति, "तस्माद्वा एतस्माद्विज्ञानमयादि"ति, वाक्यं जीवपरयोर्भेदप्रतिपादकं वदन् सूत्रकारो विज्ञान-शब्दस्य ज्ञातृपरत्वं तदुपपत्तिं च हृदि निदधदेव वदतीत्यर्थः । पूर्वपक्षे जीवसामानाधिकरण्यं शारीरत्वश्रवणं च हेतुद्वयमुक्तं, तत्र सामानाधिकरण्यस्य भेदावहत्वमुपपादयितुं यदुक्तमित्यादिनोपदिश्यत इत्यन्तेनानूदितम्पूर्वपक्षहेतुं दूषयति "तदयुक्तमि"ति, प्राकरणिकवाक्यैस्समानाधिकरणपदप्रातिपदिकांशेन च विरुद्धधर्माध्यासप्रतिपत्त्या भेदसिद्धेः, कालात्ययापदिष्टहेतुरिव परोक्तहेतुर्न साध्यसाधक इति दूषणं वक्तुं तस्य तत्पदोपस्थाप्यविशेषसमर्पकैः प्राकरणिकवाक्यैः पराभिमतैक्यविरुद्धभेदसिद्धिं दर्शयति "जीवस्ये"ति, प्रलयदशायामुपसंहृतकरणकलेवरस्य कर्मवश्यस्य सङ्कल्पमात्रेण विचित्रजगत्सर्गायोगात् बद्धस्य स्रष्टृत्वमनुपपन्नमित्यर्थः । शुद्धावस्थस्य सम्भवतीत्यत्राह "शुद्धे"ति, उक्तविपरीतं शङ्कते "कारणे"ति, समानविभक्त्यवगतैक्योपपत्तिः कथ? मित्यर्थः ।

भू० कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासंख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणो नानाविधानन्तदुःखाकरकर्माधीनचिन्तनतनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम्? अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत् कस्य भोः? किं वा हेयसंबन्धस्य? किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य? हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धप्रतिभासो मिथ्यारूप इति चेत्

टी० "कथं वे"ति प्रातिपदिकावगतविशेषणान्वयः कथमित्यर्थः निरस्तेत्यादिपदैस्तत्पदप्रातिपदिकावगतविशेषणान्वयो दर्शितः "तदैक्षत" "असृजतेति" यथा सङ्कल्पं जगत्सृष्टिश्रवणेन सत्यसङ्कल्पत्वादिगुणानामतिरोहितत्वावगमात् तिरोधायकहेयसम्बन्धानर्हत्वमर्थसिद्धमित्यभिप्रायेण निरस्तनिखिलदोषगन्धत्वमुक्तं जगद्व्यापारोपयिकगुणान्तराणामन्यत्र कण्ठोक्तानां सद्विद्यायाङ्गतिसामान्यनयादर्थसिद्धत्वमभिप्रेत्योक्तमनवधिकेति, त्वंपदप्रातिपदिकावगतविशेषणान्वयो दर्शितो "नानाविधे"ति, जीवस्वरूपत्वं जीवेन सह स्वरूपैक्यं जीवत्वमित्युक्ते जीवशरीरकत्वप्रतिपत्तिश्च सम्भवतीति तद्व्यावृत्त्यर्थं जीवस्वरूपत्वमित्युक्तं, साक्षात्पराभिमतं पदद्वयावगतविशेषणपरित्यागपक्षं दूषयिष्यन्सम्भावितं पक्षद्वयं शङ्कते "अन्यतरस्ये"ति," तत्त्वम्पदप्रतिपन्नविशेषणयोरन्यतरस्येत्यर्थः । विकल्पयति "कस्येति," प्रत्यक्षसिद्धागमसिद्ध–त्वन्तत्पदावगतविशेषणजातं दुस्त्यजमिति भावः । सहेतुकमविरुद्धं परेण प्रथमशिरः परिग्रहं शङ्कते "हेयप्रत्यनीके"ति, हेयन्दुःखम्मिथ्याप्रतिभासः–भ्रान्तिज्ञानं स्वतश्शुद्धस्य पटस्य वैषम्योपाधिकमालिन्यवत् परमार्थतो निर्मलस्य स्फटिकस्याध्यासादरुणिमवच्च ब्रह्मणो निर्दोषकल्याणगुणैकतानत्व हेयसम्बन्धश्च स्वाभाविकौपाधिकविभागेन परमार्थापरमार्थविभागेन वा अविरुद्धम्, उभयोरपि स्वाभाविकत्वसत्यत्वाभ्युपगमे हि विरोध इति शङ्काऽभिप्रेता । दूषयति–

श्रु० विप्रतिषिद्धमिदमभिधीयते–ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वमनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति, अविद्याश्रयत्वं तत्कार्य्यदुःखप्रतिभासाश्रयत्वञ्चैव हि हेयसम्बन्धः, तत्सम्बन्धित्वन्तत्प्रत्यनीकत्वञ्च विरुद्धमेव, तथाऽपि तस्य मिथ्यात्वान्न विरोध इति मा वोचः, मिथ्याभूतमपि अपुरुषार्थ एव यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे निरसनीयापुरुषा-

र्थयोगस्य हेयप्रत्यनीककल्याणैकताननतया विरुध्यते । किं कुर्मः । येनाश्रुतं श्रुतम्भवतीत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'सदेव सोम्येदमग्र आसीदित्यादिना निखिलजगदेककारणतां तदैक्षत बहु स्यामिति सत्यसङ्कल्पताञ्च ब्रह्मणः प्रतिपाद्य तस्यैव ब्रह्मणः तत्त्वमसीति सामानाधिकरण्येन नन्तदुःखाश्रयजीवैक्यं प्रतिपादितं तदन्यथाऽनुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत् ।

टी० "विप्रतिषिद्ध"मिति, विप्रतिषेधमुपपादयति "अविद्याश्रयत्वमिति," न केवलं दुःखमेव हेयम् अपि तु तद्धेतुतत्प्रतिभासावपि हेयावित्यर्थः । ततः किमित्यत्राह "तत्सम्बन्धित्व"मिति, अविद्या तत्कार्यदुःखतत्प्रतिभासरूपहेयानामाश्रयत्वन्तत्प्रत्यनीकत्वञ्च विरुद्धमित्यर्थः । सम्बन्धमिथ्यात्वादविरोधं शङ्कते "तथाऽपी"ति, तथाऽपि—अविद्यादीनां हेयत्वेऽपि तस्याश्रयत्वरूपसम्बन्धस्येत्यर्थः । दूषयति "मिथ्याभूतमपी"ति, आश्रयत्वम्मिथ्याभूतमप्यपुरुषार्थः इत्यर्थः, अपुरुषार्थत्वमुपपादयति "यन्निरासायेति", ततः किमित्यत्राह "निरसनीये"ति, एतदुक्तम्भवति मिथ्यात्वङ्किमत्यन्ताभाव? उत ज्ञानबाध्यत्वं? प्रथमे निरसनीयाभावात्तन्निरासाय शास्त्रारम्भो न स्यात्, द्वितीये च मिथ्याभूतस्यापुरुषार्थत्वमस्ति न वा? न चेन्निरसनीयत्वाभावाच्छास्त्रारम्भवैयर्थ्यम्, अपुरुषार्थत्वमस्ति चेद्धेयप्रत्यनीकत्वव्याघातो दुष्परिहर इति तद्विरोधेऽपि हेयसम्बन्धस्य श्रुतिबलादभ्युपगन्तव्यत्वं शङ्कते "किं कुर्म" इति, परिहरति—

भू० श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धञ्च न कल्पनीयम् । अथ हेयसम्बन्ध एव पारमार्थिकः कल्याणैकतानता तु मिथ्याभूता इन्त्वैवन्तापत्रयाभिहतचेतनोज्जिजीविषया प्रवृत्तं शास्त्र-

न्तापच्चयाभिव्यक्तिरेव तस्य पारमार्थिकी कल्याणैकतानस्व-
भावस्तु भ्रान्तिकल्पित इति बोधयत्सम्यगुज्जीवयति। अ-
थैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपा-
तिरिक्तजीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणा-
करत्वजगत्कारणत्वकल्याणगुणाद्यपि मिथ्याभूतमिति
कल्पनीयमिति चेत् अहो भवतां वाक्यार्थपर्य्यालोचनकु-
शलता? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य
मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सम्पत्स्यते, यथैक-
विज्ञानं परमार्थविषयं तथैव सर्वविज्ञानमपि यदि परमार्थ-
विषयं तदन्तर्गतञ्च तदा तज्ज्ञानेन सर्वं विज्ञानमिति
शक्यते वक्तुम् ।

टी० "श्रुतोपपत्तय" इति, अनुपपन्नन्तर्कपराहतं, विरुद्धं—प्रमाणवि-
रुद्धम्, अहतपाप्मा विशोको विजिघत्सः एष हि सर्वेभ्यः पाप्मभ्य उदितः"
अनश्नन्नन्यः अनीशया शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशम्
अस्मान्मायी सृजते तस्मिंश्चान्यो मायया सन्निरुद्धः तमक्रतुम्पश्यति अना-
तो देवतां प्रपद्ये इत्यादिश्रुतिविरोधः, एकस्मिन्हेयप्रत्यनीकत्वहेयास्पद-
त्वादिविरुद्धधर्म्मान्वयानुपपत्तिस्तर्कविरोधः । शिरोऽन्तरं शङ्कते "अथे"ति,
दूषयति "हन्तैव"मिति, शास्त्रस्य प्रयोजनपर्यवसायित्वाभावादप्रामाण्यं
प्रसज्येदित्यर्थः । परस्य सिद्धान्तभूतमुभयप्रहाणं शङ्कते "अथैतदि"ति, परि-
हरति "अहो भवतामिति," अर्थनिष्कर्षोपयुक्तपदद्वयवाक्यैतत्प्रकरणप्रकर-
णान्तरोपनिषदन्तरप्रमाणान्तरतर्कसामानाधिकरण्यनिरूपणं पर्यालोचनं
प्रथममेतत्प्रकरणोपक्रमविरोधं दर्शयति "एके"ति, सर्वसत्यत्वेऽपि कथं
सेत्स्यती?त्यत्राह "यथैके"ति परमार्थविषयत्वमिथ्याविषयत्वे ज्ञानयोर्वै-
रूप्यं स्यादिति भावः । तदन्तर्गतञ्चेति परिषज्ज्ञानेन तद्गताः पुरुषा हि
ज्ञाता भवन्ति न तु तद्बहिष्ठा इति भावः । ज्ञानस्य तदन्तर्गतत्वं

तद्विषयान्तर्गतत्वम् । यद्वा तदन्तर्गतं सर्वमिति शेषः । परमार्थविषयन्तदन्तर्गतमित्युक्तमर्थं व्यतिरेकेणोपपादयति–

सू० न हि परमार्थशुक्तिज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति। अथोच्यतैकविज्ञानेन सर्वं विज्ञानप्रतिज्ञाया अयमर्थः निर्विशेषसन्मात्रमेव सत्यमन्यदसत्यमिति न तर्हि येनाश्रुतं श्रुतं भवत्यमतम्मतमविज्ञातं विज्ञातमिति श्रूयेत येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातः यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम् इति दृष्टान्तोऽपि न घटते तत्र मृत्पिण्डविज्ञानेन तद्विकारस्य ज्ञातता निदर्शिता, तत्रापि तद्विकारस्यासत्यताभिहितेति चेत् मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय तथा सोम्येति प्रसिद्धवदुपन्यासो न युज्यते, न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्रागविकारजातस्यासत्यतामायादयत् तर्कानुगृहीतम् ।

टी० "न हि परमार्थे"ति, न हि शुक्तिरजतयोरेकधीविषयत्वमित्यर्थः, एकत्वसर्वत्वावस्थाभेदे सत्यपि धर्म्मैक्यादेकविज्ञानेन सर्वविज्ञानमुपपद्यते ज्ञातत्वसर्वत्वे ह्येकाश्रयवर्तिनी, न हि ज्ञातत्वविशिष्टाकारेण सर्वत्वं, सर्वात्मविशिष्टाकारेण ज्ञातत्वं वा, प्रागेवायं ज्ञात इत्यपि धर्मिमात्रस्यैव ज्ञातत्वञ्च त्वितदवस्थाविशेषविशिष्टस्य देशकालादिभेदात्, न हि पूर्वमेतत्कालादिविशिष्टतया ज्ञातत्वं ब्रह्मैकमेव सत्यमिति ज्ञाते चान्यत् मिथ्यात्वेन ज्ञातं स्यादिति शङ्कते 'अथोच्येते'ति, परिहरति 'न तर्हीति', सर्वम्मिथ्यात्वेन ज्ञातं भवतीति वा सर्वं निवृत्तं भवतीति वा श्रूयेत

इत्यर्थः एवञ्चार्थे सति मिथ्यात्वेनेति पदस्याध्याहारः, धर्म्यन्तरविषय-
तया ज्ञानशब्दयोर्वैरूप्यं स्वरसतः प्राप्तं हि ज्ञानैकरूप्यं तच्च भज्यते, ज्ञातं
भवतीति ज्ञातृज्ञेयतदवच्छिन्नज्ञानाभावानिवृत्तिलक्षणा चेति दोषत्रय-
मभिप्रेतं, श्रूयमाणान्वयप्रकारस्य परविहततामाह "येने"ति, एवं प्रतिज्ञा-
वाक्यास्वारस्यमुक्तम् । अथ दृष्टान्तवाक्याननुगुणत्वमाह "कारणतये"ति,
अघटितत्वमुपपादयति "मृत्पिण्डे"ति, न हि शुक्तिज्ञानाद्रजतनिवृत्तिवन्मृ-
त्पिण्डज्ञानात् घटादिनिवृत्तिर्निदर्शितेति भावः । दृष्टान्ताविरोधं शङ्कते
"तत्रापी"ति, परिहृतवदुपन्यासानुपपत्त्या दूषयति "मृद्विकारस्ये"ति, मृद्वि-
कारासत्यत्वमनुमानादिनाऽवगतमित्यत्राह "न चे"ति, ।

मू० अननुगृहीतं वा प्रमाणमुपलभामहे इत्ययमर्थः "तदनन्य-
त्वमारम्भणशब्दादिभ्य" इत्यत्र वक्ष्यते तथा "सदेव सोम्ये-
दमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति
तत्तेजोऽसृजत हन्ताहमिमास्तिस्रो देवता अनेन जीवे-
नात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि सन्मूलाः सोम्ये-
माः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं
सर्व्वमित्यादिनाऽस्य जगतः सदात्मकता सृष्टेः पूर्वकाले ना-
मरूपविभागप्रहाणं जगदुत्पत्तौ, सच्छब्दवाच्यस्य ब्रह्मणः
स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वं सृष्टिकाले अहमेवा-
नन्तस्थिरचरस्वरूपेण बहु स्यामित्यनन्यसाधारणः सङ्क-
ल्पविशेषः यथासङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षण-
क्रमविशेषविशिष्टा सृष्टिः समस्तप्रचेतनेषु वस्तुषु स्वात्म-
कजीवानुप्रवेशेनानन्तत्तन्नामरूपव्याकरणं स्वव्यतिरिक्तस-
मस्तस्य स्वमूलत्वं स्वायतनत्वं स्वप्रवर्त्यत्वं स्वेनैव जीवनं
स्वप्रतिष्ठितत्वमित्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः

प्रतिपादिताः तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिर्निरस्तनिखिलदोषतासर्वज्ञतासर्वेश्वरत्वसत्यकामत्वसत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगादयः सकलेतरप्रमाणाविषयाः सद्गुणाः प्रतिपादिताः, एवमनन्यगोचरानन्तविशेषणविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्तप्रलपितायेत ।

टी० "अननुगृहीतमिति". त्वालैक्यबुद्धिवदापातप्रतीतिमात्रजनकं विवक्षितम् । उपरितनवाक्यापर्यालोचनां दर्शयति "तथे"ति, सदायतनत्वफलितं स्वप्रवर्त्यत्वं स्वेनैव जीवनञ्च प्रशासनेन हि धारणं, धृत्या च तदुपजीवनम् निषेधाय गुणानुवाद इति शङ्काव्युदासायाह "शास्त्रैक"ेति, न हि विधेरनुवादित्वमिति भावः । श्रुत्यन्तरापर्यालोचनां दर्शयति "तत्सम्बन्धितया प्रकरणान्तरेष्वपीति", अपहतपाप्मत्वादिरूपा निरस्तनिखिलदोषतेत्यर्थः । अपूर्वतालक्षणं गुणेषु तात्पर्यलिङ्गं दर्शयितुं सकलेतरप्रमाणाविषया इत्युक्तं, ततः किमित्याकाङ्क्षां पूरयन् पदद्वयपर्यालोचनाभावं दर्शयति "एवमि"ति, एवमनन्यगोचरानन्तविशेषणविशिष्टप्रकृतेत्यनेन प्राकरणिकवाक्यविरोधो विवक्षितः, प्रकृतब्रह्मपरामर्शितच्छब्दस्येत्यनेन यत्र क्वापि प्रकृताकारविशिष्टपरामर्शितया तच्छब्दव्युत्पत्तिविरोध उक्तः, त्वंपदस्यापि वस्तुमात्रपरत्वे मुख्यार्थप्रहाणमाह—

मू० त्वं—पदञ्च संसारित्वविशिष्टजीववाचि तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात्, निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम्, एवञ्च सति समानाधिकरणप्रवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मु

स्वार्थपरित्यागेन लक्षणा च समाश्रयणीया। अथोच्येत समानाधिकरणप्रवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्य्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनान्न लक्षणाप्रसङ्गः, यथा नीलमुत्पलमिति पदद्वयस्य विशेष्यैक्यप्रतिपादनपरत्वेन नीलत्वोत्पलत्वस्वरूपविशेषणद्वयन्न विवक्ष्यते तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्यते, तत्तु न सम्भवति ।

टी० "त्वं पदञ्चे"ति, स्वाभिमुखश्चेतनस्त्वं–शब्दार्थः, आभिमुख्यं च स्ववाक्यबोध्यत्वं, बोध्यत्वं चास्य मनसाऽऽरोपणस्वतः प्राप्तमिति भावः तस्माद्बोधनार्हतोपयोग्याकारविशिष्टस्त्वमर्थः, अतस्स परित्यक्तो भवति प्रमाणतर्कापर्यालोचनापूर्वोक्तेत्याह "निर्विशेषे"ति, पदद्वयनिमित्तप्रहाणे निर्विशेषत्वस्य बुद्धिस्थत्वात्तदनुपपत्तिरूपतर्कापर्यालोचनं दर्शितं, सामानाधिकरण्यबलान्निर्विशेषवस्त्वभ्युपगम इति शङ्कायां पदद्वयलक्षणालक्षणं दूषणमाह "एवञ्चे"ति, एवञ्च सति–निर्विशेषस्वरूपोपस्थापनपरत्वे मुख्यार्थसम्बन्धितया वस्तुमात्रबोधनेऽभ्युपगते लक्षणास्वीकार इत्यर्थः । अथ परमतमुपन्यस्यति "अथोच्यतेति", समानाधिकरणवृत्तानामिति ग्रन्थः पक्षविषयसङ्ग्रहरूपः, विशेषणांशे तात्पर्य्यासम्भवादिति अन्यथा विशेषणबहुत्वादेकार्थत्वासिद्धेरिति भावः। पूर्वमप्युक्तादेवेत्येवकाराभिप्रायः। प्रथमसूत्रे हि बहुश उक्तः। यद्वा अन्यनैरपेक्ष्यपर एवकारः, न लक्षणाप्रसङ्ग इति वाच्यार्बहिर्भूतप्रतिपादनादिति भावः। एवं पक्षविषये संक्षेपेणोक्तमर्थमुपपादयति "यथेत्यादिना",तत्र महाभाष्योक्तेऽप्युदाहरणे विशेषणांशे तात्पर्यासम्भवं सिद्धं कृत्वा उदाहृतः। कथं तत्र विशेषणांशाविवक्ष? त्यत्राह "तद्विवक्षायामिति", प्रसक्तस्यानिष्टतां दर्शयति "तत्त्वि"ति, युगपदभिधाने उद्देश्योपादेयविभागहानिप्रसङ्गात् पदद्वयप्रकृत्युपस्थापितविशिष्टैक्ये समानविभक्त्या

प्रतिपाद्यमाने विशेष्यांशस्येव विशेषणभूतजातिगुणांशयोरप्यैक्यप्रसङ्गाच्च क्रमेणाभिधानपक्षोऽभ्युपगन्तव्य इति हृदि निधायाह—

**सू०** न हि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशिष्यते जातिगुणयोरन्योऽन्यसमवायप्रसङ्गात्. अतो नीलत्वोत्पलत्वोपलक्षितवस्त्वैक्यमात्रं सामानाधिकरण्येन प्रतिपाद्यते तथा सोऽयं देवदत्त इत्यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्त्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते। यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते तथापि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा, अपि तु विशेषणांशस्याविवक्षामात्रं सर्वत्र समानाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति ।

टी० "न ही"ति, क्रमपक्षेऽपि पूर्वपदप्रतिपन्नाकारविशिष्टस्य पदान्तरप्रतिपन्नाकारविशिष्टवस्तुतादात्म्यं किं समानविभक्त्या बोध्यम् ? उत पूर्वपद प्रतिपन्ने विशिष्टे विशेषणान्तरान्वय ? इति विकल्पमभिप्रेत्य प्रथमे विशेषणभूतजातिगुणयोरप्यैक्यप्रसङ्गं सिद्धं बुद्ध्वा द्वितीयेऽपि अन्योन्यसमवायप्रसङ्गमाह "जातिगुणयो"रिति, तात्पर्यबहिष्ठस्यापि विशेषणस्योपयोगं दर्शयन् फलितमाह "अत" इति, नीलोत्पलमित्यत्र विशेषणान्वये स्फुटेऽपि तात्पर्याभाव उक्तः, तत्र विशेषणानन्वयस्यास्फुटत्वाद्विशेषणान्वये स्पष्टतात्पर्याभावमुदाहरणान्तरं दर्शयति "तथे"ति, विशिष्टवाचिनश्शब्दस्य विशिष्टपरित्यागेन विशिष्टैकदेशतया तत्सम्बन्धिनि विशेष्यस्वरूपमात्रे वृत्तिर्लक्षणैव स्यादित्यत्राह 'यद्यपी''ति, "परिहरति "तथापी"ति, वाच्येऽर्थे न हि शक्तिविषयाद्विशिष्टाद् बहिर्भूतं विशेष्यमिति भावः । "प्रधानांश-

स्ये''ति, तात्पर्यविषयतया धर्मितया च प्रधानस्य विशेष्यांशस्यावर्जनादप्रधानविशेषणत्यागेऽप्यङ्गुल्यादिविकले पुरुष-शब्दस्येव न लक्षणेति भावः। मुख्यार्थत्वे तुल्येऽपि विशिष्टप्रतिपादनदशातो वैलक्षण्यं दर्शयति ''अपि त्वि''ति, अपि वक्तामात्रमिति अशक्ये क्वचिद्व्यापाराभावाद् व्यापारविषयांशेऽपि न ह्यशक्तिरिति भावः। पूर्वं पक्षे लक्षणाभाव उक्त इदानीं स पक्षो विशदीकृतो भवति, विशेषणाविवक्षायामस्वारस्यं स्यादित्यत्राह ''सर्वत्रे''ति, सामानाधिकरण्यव्युत्पत्तेरीदृशत्वाचास्वारस्यं व्युत्पत्त्यननुरोधे सति ह्यस्वारस्यम्, अत ऐकार्थ्यव्युत्पत्तिविरोधिविशेषणाविवक्षामेवास्वारस्यमिति भावः। इमम्पूर्वपक्षं प्रतिक्षिपति–

सू० तदिदमसारं सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यं, तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते, यथा नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवानीयते, यथा च विन्ध्याटव्यां मदमुदितो मातङ्गगणः तिष्ठतीति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते।

टी० ''तदिदमसार''मिति, प्रथमञ्चरमोक्ततया बुद्धिस्थं व्युत्पत्त्यन्तराश्रयणन्निरस्यति ''सर्वेष्वे''ति, सर्वेषु समानाधिकरणेषु व्यधिकरणेषु च वाक्येष्वित्यर्थः, गामानय गां बधानेत्यादिव्यधिकरणवाक्येषु, न हि प्रतिवाक्यं पदानामर्थभेदव्युत्पत्तिकल्पनं ''क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रह'' इति न्यायेन क्लृप्तव्युत्पत्त्यैव स्वार्थबोधनसम्भवे व्युत्पत्त्यन्तरकल्पनानुपपत्तेः, तथा समानाधिकरणवाक्येष्वपि न पदानां व्युत्पत्त्यन्तरं प्रवृत्तिनिमित्तविशिष्टार्थविषयं कल्पनीयमिति भावः। व्युत्पत्त्यन्तराभावेऽपि वाक्यानां परस्परवैषम्यसम्भवोपपादनपरं व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रमिति पदं व्युत्पत्तिसिद्धार्थसंसर्गविशेषाद्वाक्यवैषम्यं न तु प्रकृत्यंशस्य व्युत्प-

त्यनवगतार्थान्तरकल्पनादित्यभिप्रायः । एवं सर्ववाक्यसाधारणं रूपमुक्तम्, अनेन समानाधिकरणवाक्येषु फलितमर्थमाह "तत्रे"ति, तत्र—तेषु वाक्येषु, समानाधिकरणपदानां विशिष्टैकार्थप्रतीतिहेतुत्वमुदाहरणेन दर्शयति "यथे"ति, प्रत्यक्षविषयं परोक्षविषयञ्च उदाहरणद्वयम्, अत एव ह्यानीयते प्रतीयत इत्युक्तं, कारकविभक्त्यन्तत्वञ्च न सामानाधिकरण्यविरोधीत्यभिप्रायेण नीलमुत्पलमानयेत्युक्तं नीलिमादिविशिष्टमेवानीयत इति समानाधिकरणपदसमुदायो वस्तुमात्रप्रत्यायकश्चेद्वस्तुमात्रत्वाविशेषादनीलमप्यानीयेत इत्यभिप्रायः । किं च समानाधिकरणपदानां विशेषणपरित्यागे को हेतुस्समानविभक्त्यावगतमैक्यमिति चेन्न प्रातिपदिकावगतविशेषणान्वयबलात्समानविभक्तिरैक्यं न प्रतिपादयेत्, तदेव युक्तं विभक्त्यर्थादपि प्रातिपदिकार्थप्राधान्यात्, "अदितिः पाशान्" "ग्रहं सम्मार्ष्टी"त्यादिषु हि विभक्त्यर्थोऽनादृतः ऐक्यविषयप्रयोगदर्शनादैक्यविषयमिति चेत् विशेषणान्वयेऽपि प्रयोगदर्शनाद्विशेषणान्वयमपि प्रतिपादयति शाब्दप्रतीतिर्वस्तुमात्रस्यैव, विशेषणान्वयस्तु प्रत्यक्षबलात्स्वीक्रियते प्रत्यक्षागोचरेतु यथाशब्दं न विशेषणप्रतीतिरिति चेत् न विशेषणान्वयश्शाब्दप्रतीतिविषयः, ऐक्यन्तु प्रत्यक्षबलादङ्गीक्रियत इति किं न स्यात् ।

मू० एवं वेदान्तवाक्येष्वपि सामानाधिकरण्यनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यं, न च विशेषणविवक्षायामितरविशिष्टाकारं वस्त्वन्येन विशेषितव्यम्[1] अपि तु सर्वैरपि विशेषणैः स्वरूपमेव विशेष्यं तथा हि भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्, अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं हि सामानाधिकरण्यकार्यम्

१ विशेष्टव्यमिति पा० ।

प्रत्यक्षगोचरेऽपि देवदत्तः श्यामो युवेत्यादिप्रयोगेष्वैक्यधीप्रदर्शनादैक्यं शाब्दप्रतीतिविषय इति चेत्, तत्रैव परोक्षविषयप्रयोगे विशेषणान्वयस्यापि प्रतीतेर्विशेषणान्वयः शाब्द एव न प्रत्यक्षसिद्ध इति, इत्थं प्रत्यक्षपरोक्षविभागरहितं समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थबोधकत्वं दृश्यत इति चरमपक्षाभिप्रायेणोदाहरणद्वयं दर्शितं, तस्माद् "एव लौकिकास्त एव वैदिका" इति, लोकवेदाधिकरणन्यायेन वेदान्तवाक्येष्वपि पदद्वयावगतविशेषणापरित्यागेनैवार्थः प्रतिपत्तव्य इत्याह "एवं वेदान्ते"ति, अन्योन्यसमवायप्रसङ्गं परिहरति "न चे"ति, अरुणाधिकरणे विस्तरेण परिहारो वक्ष्यत इत्यत्र संक्षिप्तः, न हि यथाऽनुपपत्तिः स्यात्तथा वक्तव्यमिति भावः। युगपदभिधानं हृदि निधाय सर्वैर्विशेषणैः स्वरूपमेव विशेष्यमित्युक्तं, सर्वैर्विशेषणैः स्वरूपस्य विशेष्यत्वेऽनुगुणं सामानाधिकरण्यलक्षणमित्याह "तथा ही"ति, न हि विशेषणान्तरविशिष्टाकारे विशेषणान्तरान्वयप्रतिपादनं सामानाधिकरण्यमित्युक्तमित्यर्थः। सामानाधिकरण्युपलक्षणयन्थं विवृणोति—

**सू० यथा देवदत्तः श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्य इति, यच त्वेकस्मिन् वस्तुनि समन्वयायोग्यम्**

टी० "अन्वयेन निवृत्त्या वे"ति, अन्वयरूपार्थस्य व्यावृत्तिरूपार्थत्वं न कल्प्यं यथा व्युत्पत्त्यन्वयमुखेन व्यावृत्तिमुखेन वा वस्तुनः पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्तताप्रतिपादनं समानाधिकरणपदसमुदायकार्यमित्यर्थः, तत्राहरति "यथे"ति, अन्वयमुखेनानेकप्रवृत्तिनिमित्तवैशिष्ट्योदाहरणं श्यामो युवेति व्यतिरेकमुखेनानेकाकारान्वयोदाहरणम् अदीन इत्यादि, दीनत्वमभास्वरमनस्कत्वं कृपणत्वं–निर्धनत्वम्, अत्रायमर्थः क्रमेणाभिधाने व्यधिकरणवाक्येष्वपि करणकारकविशिष्टेऽधिकरणकारकान्वयः स्यात् तद्विशिष्टे इतरकारकान्वयो वा प्रसज्जेदित्यन्योन्यविशेषविशेष्यभावचोद्यं व्यधिकरणवाक्येऽपि समानं तत्र यः परिहारस्स एवात्रापि, "तथा हि पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्। न्यायसम्पा-

दितव्यक्ति पश्चाद्वाक्यार्थबोधकम् । इत्युक्तप्रकारेण स्मरणस्मारणद शायां सर्वैः पदैः पृथक् पृथक् स्वार्थस्मरणाच्च विशेषणानामन्योन्यसमवायप्रसङ्गः, परामर्शदशायां यथोपपन्नं भवति तथा परामर्शाच्चायं प्रसङ्गः पश्चाद्युगपत्सर्वैः पदैर्वाक्यार्थबोधनाच्च मिथस्समवायप्रसङ्ग, तस्मात्समानाधिकरणपदैर्युगपत्तत्प्रवृत्तिनिमित्तविशिष्टैकविशेष्यप्रतिपादनेन क्रमाभावान्नान्योन्यसमवाय इति, सर्वैर्विशेषणैः स्वरूपमेव विशेष्यमिति ग्रन्थे अयमर्थोऽभिप्रेतः, अत्र सामानाधिकरण्यलक्षणग्रन्थोपादानेन अन्यदपि चोद्यं परिहृतं भवति, युगपदभिधाने विशिष्टयोरैक्यं समानविभक्तिः प्रतिपादयतीति विशिष्टैक्यवद्विशेषणैक्यमपि स्यादिति चोद्यम्। अत्र परिहार. एकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति समानविभक्त्या विशेष्यस्यैवैक्यप्रतिपादनाच्च विशेषणैक्यमिति । ननु विशेषणे विशेष्ये चाविशेषेण प्रातिपदिकेनावगते सति समानविभक्तिर्विशेष्यमात्रैक्यपरा न तु विशेषणैक्यपरेति किं नियामक? मिति चेत् समानविभक्तिरैक्यबोधिका न तु भेदबोधिकेति. किं नियामकं? व्युत्पत्तिरिति चेत् साऽत्रापि तुल्या किं च पदान्तरासमानाधिकृते घट इति पदे प्रयुक्ते तस्या विभक्तिः प्रातिपदिकावगतानां विशेषणविशेष्यतत्सम्बन्धानामैक्यं न प्रतिपादयति इति विशेष्यमात्रैक्यमेव प्रतिपादयतीति किं नियामकं? प्रत्यक्षमूला हि व्युत्पत्तिः प्रत्यक्षञ्च विशेष्यमात्रैक्यं दर्शयति न तु विशेषणविशेष्यतत्सम्बन्धानामैक्यम् अतः प्रत्यक्षमूला व्युत्पत्तिर्नियामिकेति चेत् सैवाऽत्रापि नियामिकेति तुल्यमिति, एवं सर्वत्र व्युत्पत्तिसद्भावोऽयं एव स्वीकार्यश्चेन्न क्वचिदपि वृत्त्यन्तरकल्पनं, व्युत्पत्त्यन्तरकल्पनं वा स्यादित्यत्राह "यत्र त्वि"ति,

सू० विशेषणद्वयं समानाधिकरणपदनिर्दिष्टं तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते न द्वयं, यथा गौर्बाहीक इति, नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते। अथ मनुषे एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं वस्तु विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षणमिति

### घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात्स-मानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्

टी० "विशेषणद्वय"मिति," त्रित्वादेरप्युपलक्षणं व्युत्पत्तिसिद्धार्थ-स्वीकार एव सर्वत्र स्वतः प्राप्तः, तस्य प्रमाणविरोधादन्वयायोग्यत्वे सति वृत्त्यन्तरकल्पनं प्राप्तं, तदसम्भवे व्युत्पत्त्यन्तरकल्पनं गो-शब्दस्य किरणप-रत्व वृत्त्यन्तराभावाद्धि शक्तिकल्पनं, यदा वृत्त्यन्तरकल्पनं तदानीमप्यन्यत-रपदस्यामुख्यत्वकल्पनं तावतैव विरोधशमनात्, न पुनस्सर्वेषां पदानां ता-त्पर्यनिश्चायकाभावप्रसङ्गात् गौर्वाहीक इति प्रयोगे गोपदस्यैव ह्यमुख्यत्वं न तु वाहीकपदस्यापि अन्यतरपदस्य वृत्त्यन्तरकल्पनेऽपि न निर्विशेषवस्तु-परत्वं मुख्यवृत्त्युपनीतविशेषणानन्वयेऽपि वृत्त्यन्तरोपनीतविशेषणान्वया-दित्यभिप्रायः, नीलोत्पलादिवाक्येषु वृत्त्यन्तरकल्पनहेतुरेव नास्तीत्याह "नीले"ति, विशेषणभेदेन विशेष्यभेदं शङ्कते "अथ मनुष" इति, विशेषण-प्रतिसम्बन्धित्वं–विशेषणविशिष्टता, एकविशेषणप्रतिसम्बन्धित्वेन निरू-प्यमाणमिति भावप्रधानो निर्देश, निरूप्यमाणत्वं विवक्षितम् एक-विशेषणप्रतिसम्बन्धित्वं विशेषणान्तरप्रतिसम्बन्धित्वात् विलक्षणमि-त्यर्थः। यद्वा एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं वस्तु विशेष-णान्तरप्रतिसम्बन्धित्वाद्धेतोस्तस्माद्विशेषणान्तरविशेष्यात्पदार्थाद्विलक्षण-मित्यर्थः। विशेषणप्रतिसम्बन्धित्वभेदाद्विशेष्यस्वरूपभेदं निदर्शयति "घट-पटयोरिवे"ति, यथा घटत्वविशिष्टतायाः पटत्वविशिष्टतायाश्च भेदेन तद्विशिष्टयोर्घटपटयोर्विशेष्ययोर्भेदस्तथा विशेषणान्तरान्वयस्यान्यविशेष-णान्वयस्य च भेदेन तद्विशेष्ययोश्च भेदः समानविभक्तिनिर्देशे सत्यप्यवर्ज-नीय इति सामानाधिकरण्यं न विशिष्टैक्यप्रतिपादनक्षममित्यर्थः।

**मू०** अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपाद-नपरत्वमेवेति, स्यादेतदेवं यदि विशेषणद्वयप्रतिसम्बन्धि-त्वमात्रमेवैक्यं निरुन्ध्यात्, न चैतदस्ति, एकस्मिन्धर्मि-

ण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरु-णद्धि, अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः, नीलमुत्पलमित्यादिषु तु दण्डित्वकुण्डलित्ववत् रूपवत्त्व-रसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते, न केवल-मविरोध एव प्रवृत्तिनिमित्तभेदेनैकार्थबोधकत्वरूपं सामा-नाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टता

टी० न विशिष्टप्रतिपादनपरत्वमिति विशेषणान्वयप्रतीतेरवर्जनीय-त्वेऽपि न तत्र तात्पर्यमिति भावः। विशेषणत्यागे तत्प्रतिसम्बन्धिविशेष्या-पस्थापनायोगात्तदैक्यमपि दुष्प्रतिपादमित्यत्राह "अपि त्वि"ति, तात्प-र्याविषयस्यापि विशेषणस्य परामर्शदशाप्रतीतिमात्रेण तद्विशेष्यप्रतीति-सिद्धेस्तदैक्यप्रतिपादनं सम्भवतीत्यर्थः। परिहरति "स्यादेतदि"ति, यत्रा-योग्यत्वमभ्युपगतं तत्रापि विशेषणत्वमेव ह्ययोग्यत्वे प्रयोजकम् अतो नीलत्वादिविशेषणमपि विरुद्धं स्यादित्यत्राह "अयोग्यता चेति," प्रमा-णान्तरसिद्धेति न पुनर्विशेषणत्वप्रयुक्तमयोग्यत्वमिति भावः। प्रमा-णान्तरमपि घटत्वपटत्वयोर्भिन्नाधिकरणत्वलक्षणं विरोधमवगमयति नीलत्वोत्पलत्वयोरपि स विरोधस्तुल्यः, षट्पदे कुमुदे च पृथग्दर्शनादि-त्यत्राह "नीलमुत्पलमित्यादि"ष्विति, न केवलम्भिन्नाश्रयत्वमात्रं विरोधः अपि तु तन्नियमः, न च नीलत्वोत्पलत्वयोस्तादृशविरोधः क्वचित्सहप्रमि-तत्वादिति भावः। "दण्डित्वे"ति, दण्डादिकं युतसिद्धं, रूपादिकमयुतसिद्धं युतसिद्धत्वायुतसिद्धत्वादिविभागवद्विशेषणत्वमपि विरोधाप्रयोजकमिति भावः। यद्वा दण्डित्वादिकं परस्परपरिहारेण वर्तते रूपं तु रसम्परिहृत्य वर्तते रसस्तु न रूपं परिहृत्य वर्तते तत्र रूपापरिहारिणो रसस्य रूपस्य चावि-रोधो दुरपन्हवः क्वचित्सहोपलम्भात्, तथा परस्परपरिहारिणोरपि नील-त्वोत्पलत्वयोः क्वचित्सहोपलम्भादविरोध इत्यभिप्रायेण उदाहरणद्वयं दर्शितम्, अविरोधेऽपि विवक्षितैक्यानुपयोगाद्विशेषणाविवक्षेत्यत्राह "न केवल"मिति, पर्याययोः पदयोरेकार्थवृत्तौ निमित्तसापेक्षत्वात्तेन विना तत्र

वृत्त्ययोगाच्चात्यन्तोपयोगाद्विशेषणस्य विवक्षितत्वमित्यर्थः । उपपादकत्वमेव विवृते बाधदर्शनेन [1]घटयति ।

मू० अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात्सामानाधिकरण्यमेव न स्यात्, विशेषणानां स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे सत्येकेनैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः, सोऽयं देवदत्त इत्यत्रापि न लक्षणागन्धो विद्यते विरोधाभावात् ।

टी० "अन्यथे"ति, अन्यथा—विशेषणत्यागे। उपलक्षणतया निमित्तत्वं स्यादित्यत्राह "विशेषणानामि"ति, अनादरस्तात्पर्याभावः, यथोपलक्षणभूतायां शाखायां न तात्पर्यमपि तु चन्द्र एव तात्पर्यं तद्वदित्यर्थः ननूपलक्षणान्तरवैयर्थ्यं त्वत्रापि प्रसजेत् एकस्मिन्नुपलक्ष्ये जन्माद्यनेकोपलक्षणाभ्युपगमादित्यत्राह "उपलक्षणान्तरे"ति, अस्माभिस्तु जन्मादिभिरुपलक्षणैरुपलक्ष्यास्तदनुगुणज्ञानशक्त्याद्याकारभेदास्स्वीकृता इति न नैरर्थक्यमिति भावः। तेनाकारेणेति अन्ततोगत्वाऽप्यवर्जनीयं सविशेषत्वम्, एवं च सति उपलक्ष्याकारान्तराभ्युपगमेन तस्योपलक्षणत्वाङ्गीकारादपि उपलक्षणतयाऽभिमतानामेव विशेषणत्वाङ्गीकारो वरमिति भावः। पूर्वं लक्षणाङ्गीकारपक्षेऽन्यतरपदामुख्यत्वादिदूषणान्युक्तानि, यत्तु वाच्ये प्रधानांशस्य प्रतिपादनान्न लक्षणेति तत्रापि लक्षणा स्यादेव द्वारभूतप्रवृत्तिनिमित्ताभावेन तद्द्वारकस्याभिधानस्यानुपपत्तेः इति, इदञ्च दूषणं प्रवृत्तौ निमित्ताभावादिति भाष्येण फलितम् । अथोभयपदविशेषणाविवक्षायामपि सामानाधिकरण्यं सोऽयं देवदत्त इत्यादिषु दृश्यत इति यदुक्तं तत्प्रतिवक्ति सोऽयमित्यादिना, विरोधाभावात्—मुख्यार्थभूतविशेषणद्वयसम्बन्धे विरोधाभावात् प्रथमं कालद्वयसम्बन्धविरोधाभावमुपपादयति—

१ दृढयतीति पा० ।

सू० देशान्तरसम्बन्धितया ऽतीतस्य सन्निहितदेशसम्बन्धितया वर्त्तमानत्वाविरोधात्, अत एव हि सोऽयमिति प्रत्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिरन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात् ।

टी० 'देशान्तरे'ति, वस्तुविशेषणतया निर्दिष्टावपि देशान्तरसम्बन्धसन्निहितदेशसम्बन्धावतीतवर्त्तमानकालोपाधितया विवक्षितौ, इदञ्च कालोपाध्यन्तराणामुपलक्षणम्. अतीतवर्त्तमान–शब्दौ अतीतवर्त्तमानकालसम्बन्धिपरौ देशान्तरसम्बन्धितयाऽतीतस्य देशान्तरसम्बन्धाद्युपाध्यवच्छिन्नातीतकालसम्बन्धिनः सन्निहितदेशसम्बन्धाद्युपाधिमद्वर्त्तमानकालसम्बन्धाविरोधादित्यर्थः । अतीतत्वञ्चात्रापेक्षया विवक्षितं, न तूभयकालानुगतवस्त्वपेक्षया, एतदुक्तं भवति एकस्य कालद्वयासम्बन्धं वदतोऽतीतत्ववर्त्तमानत्वविरोधो विवक्षितः स किं प्रध्वस्तस्य वर्त्तमानत्वविरोधो विवक्षितः ? स नास्ति प्रध्वंसानभ्युपगमात्, यद्यतीतोपाधिमत्कालसम्बन्धिनो वर्त्तमानत्वविरोध उच्यते तन्निरूप्यं–किं स्वापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वम् ? उतान्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वं ? न प्रथमः स्वापेक्षयाऽतीतोपाधिमत्कालसंयोगित्वा[1]भावात् घटादेः,न द्वितीयः एकक्षणसम्बन्धस्यापि विरोधप्रसङ्गात्, एकस्य वस्तुन एकोऽपि हि क्षणः स्वपाश्चात्यत्किञ्चिदुपाध्यपेक्षयाऽतीतो भवति अतो ऽन्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धिनोवर्त्तमानत्वमविरुद्धम् एवमेकस्य स्वप्रागभावस्वप्रध्वंसोपहितकालसम्बन्धस्यैव विरुद्धत्वादन्यापेक्षयाऽतीताऽऽगाम्युपाधिमत्कालसम्बन्धे तदभावाच्च स्वाभावानुपहितकालद्वयसम्बन्ध एकस्य वस्तुन उपपन्न इति, । युक्त्यन्तरञ्चाह 'अत एवे'ति, अत एव–कालद्वयसम्बन्धाविरोधादेव,उपपाद्यते–सौगतान् प्रतीति शेषः, सौगतमतनिरासकस्य कालद्वयसम्बन्धविरोधाभ्युपगमो विरुद्ध इत्यर्थः । तदेवोपपादयति 'अन्यथे'ति, अन्यथा–कालद्वयसम्ब-

[1] सम्बन्धित्वाभावादिति पा० ।

न्थविरोधेन प्रतीतिविरोधे वस्तुस्थिरत्वविषयप्रतीतिविरोधे सर्वेषां क्षणिकत्वमेव स्यादिति, एकस्य देशद्वयकालद्वयान्वयविरोधे देशकालान्तरसाध्यफलसाधनविधानमात्मनित्यत्वोपदेशश्चाप्रमाणं स्यादित्यभिप्रायः। देशद्वयसम्बन्धविरोधं परिहरति—

सू० देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते यतस्समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्, अत एवारुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यारुण्यादिविशिष्टैकहायन्याः क्रयसाधनता विधीयते, तदुक्तम् "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्या"दिति, तच एवं पूर्वपक्षी मन्यते—

टी० "देशद्वये"ति, परिच्छिन्नस्य वस्तुनः स्वानवच्छिन्नदेशसम्बन्धो यौगपद्य एव विरुध्यते, न तु क्रमेण भावित्वे इत्यर्थः, एवं लोकसिद्धस्य नीलोत्पलादिसमानाधिकरणपदप्रयोगस्य विशेषणविवक्षा स्थापिता, एवं प्रवृत्तिनिमित्तभेदेनैकार्थपर्यवसायित्वं समानाधिकरणपदानां वैदिकप्रयोगसिद्धं चेत्याह "यत"इति, अनेन वस्तुमात्रपरत्वे अरुणाधिकरणसिद्धान्तन्यायविरोधश्चोक्तः स्यात्, यतः अत एवेति लौकिकप्रयोगसिद्धवत्कारोक्त्या पूर्वोक्तस्वपक्षपरपक्षसाधकदूषणान्यरुणाधिकरणे विवक्षितानीति भावः। अरुणयैकहायन्येत्यादिवाक्ये पदानां न सामानाधिकरण्यमित्यत्राह "तदुक्तमि"ति, । अर्थैकत्व इत्यादिसूत्रस्यान्यथा व्याख्यातत्वाच सामानाधिकरण्यपरत्वमित्यत्राह "तत्रैवमि"ति, "एवमि"ति, अस्मदुक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकाराभिप्रेताविति भावः। किमत्रारुणयेति पदाक्षमारुण्यमेकहायनीमात्रान्वयि? उत प्राकरणिकसर्वद्रव्यान्वयीति प्रथमो विचारः, तत्रारुणयेति पदमेकहायन्येत्यादिपदैरेकवाक्यतया अन्वेति? उत भिन्नवाक्यतया स्थित? मिति तदर्थविचारः, इदं विचारद्वयं पूर्वमीमांसाव्याख्यातृभिरभ्युपेतम् अधिकस्तदर्थविचार उच्यते किमरुणयेत्यादिपदानि व्य

धिकरणानि? उत समानाधिकरणानी? ति पुनस्तदर्थविचारः कारकवि- भक्त्यन्तत्वं किं सामानाधिकरण्यविरोधि? उताविरोधी? ति विरोधीति पूर्वः पक्षः अविरोधीति सिद्धान्तः यदा विरोधि तदा सामानाधिकरण्याभा- वेनैकवाक्यत्वाभावात् प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षे फलफलिभावः, अविरोधे सामानाधिकरण्येन वाक्यभेदाभावादेकहायन्यन्वयनियम इति सिद्धान्ते फलफलिभावः, अस्माकं तु पूर्वपक्षे सिद्धान्ते च अरुणयेति पदस्य द्रव्यपर्यन्तत्वमनुयायि, परेषां तु गुणमात्रपर्यन्तत्वमुभयत्रानुयायि, आकृत्य- धिकरणे गुणवाचिशुक्लादिपदानां जातिवाचिगवादिशब्दवद् द्रव्यपर्यन्तत्वं निर्णीतम् "आश्रितद्रव्य गुणजाती" इति हि टीकाकारः तत्र चात्र च को- विशेषः? इति चेत् एकैकप्रातिपदिकार्थनिरूपणमाकृत्यधिकरणे, अत्र त्वनेकप्रातिपदिकस्यसमानविभक्त्यर्थनिरूपणमिति भेदः । ननु गुणवाचि- पदस्य द्रव्यपर्यन्तत्वे एतदधिकरणपूर्वपक्षोत्थानं न स्यात्, गुणमात्रपर्य- न्तत्वे हि गुणस्य कारकतया निर्दिष्टस्य द्रव्यान्वयस्य क्रियान्वयस्य च एक- वाक्येन बोधयितुमशक्यत्वेन वाक्यभेदात्प्राकरणिकसर्वद्रव्यान्वयीति पूर्व- पक्षोत्थानं स्यात् ।

**मू॰** यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैक- स्वभावत्वात् द्रव्यपर्य्यन्तमेवारुणिमानमभिदधाति तथा- प्येकहायन्यन्वयनियमोऽरुणिम्नो न सम्भवति, एकहा- यन्या क्रीणाति तच्चारुणयेत्यर्थद्वयविधानासम्भवात् ।

**टी॰** द्रव्यपर्यन्तत्वे त्वेकहायनीपदसामानाधिकरण्येन विशिष्टक- रणीकृत्वात्तस्य क्रियान्वयमात्रस्यैकवाक्येन बोधयितुं शक्यत्वेन वाक्यभेदा- भावात् एकहायनीमात्रान्वयीति वाक्यभेदायत्तपूर्वपक्षानुदय इत्याशङ्क्याह "यद्यपी" ति, आकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात्तद्वाचिश- ब्दो यद्यपि द्रव्यमात्रपर्यन्तस्तथाऽप्येकहायनीत्वाश्रयद्रव्यविशेषपर्यन्तत्वं- च सिध्यतीत्यर्थः । कुत? इत्यत्राह "एकहायन्या क्रीणाति" "तच्चारुणयेत्यर्थ- द्वयविधानासम्भवादि" ति, न च वाच्यमरुणयेति पदं क्रीणातिनाऽन्वेति द्रव्य-

विशेषाकाङ्क्षायां स विशेषः स्ववाक्यस्थैकहायनीपदोपस्थापितं 'द्रव्यं भवती'ति, क्रयस्यैकहायन्यवरुद्धतयाऽरुणापदविभागे साकाङ्क्षत्वाभावादाकाङ्क्षोत्थापकच-शब्दद्वन्द्वाद्यभावाच्च, अत आरुण्यस्य क्रयान्वयद्वारा नैकहायन्यन्वयः, स किं पदयोस्सामानाधिकरण्येन? उत वैयधिकरण्येन स्ववाक्यस्थतया,? न तावत्पदद्वयसामानाधिकरण्येन एकहायन्यन्वयनियम आरुण्यस्य सम्भवति, कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्त्या विशेषणविवक्षानुपपत्त्या च सामानाधिकरण्यायोगात्, तत्र यद्यपि विशेषणविवक्षायां विशेषणभेदेन विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृतः विशेषणैक्यान्योन्यसमवायादयश्च पूर्वमेव परिहृताः तथाऽपि कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिः स्थिता, कारकविभक्तिर्हि क्रियान्वयबोधोपक्षीणत्वात्र परस्परान्वयं बोधयितुं शक्नोति, परस्परान्वयो हि विशेष्यैक्यम् । एवं विशेषणविवक्षा कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिभिर्न सामानाधिकरण्यम्, अतोऽरुणयैकहायन्येति पदद्वयं पृथक्करणवाचीत्येतावत्सिद्धं कृत्वा वैयधिकरण्ये सति स्ववाक्यस्थतया आरुण्यस्यैकहायन्यन्वयनियमेऽनुपपत्तिरुच्यते एकहायन्या क्रीणातीति वाक्येन एकहायन्याः क्रयस्य च सम्बन्धः प्रतिपन्नः तच्च क्रयणम् अरुणया कर्तव्यमिति वाक्येनैकहायनीसाध्यत्वविशिष्टरूपेण क्रयणमरुणद्रव्यसाध्यमिति प्रतिपन्नं, तत्पदम् एकहायनीसाध्यत्वविशिष्टक्रयणोपस्थापकं तत्र द्रव्यांशस्य तत्साध्यक्रयणस्य च पूर्वप्रतिपन्नत्वेनानूदितत्वादेकहायनीद्रव्यस्यारुणिमसम्बन्ध एव विधेयः स्यात् । एवञ्चैकहायन्याः क्रयः साध्यस्तया चारुणया भवितव्यमित्युक्तं भवति, ततश्चैकहायन्याः सम्बन्धो—

सू० ततश्चारुणयेति वाक्यं भित्त्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति, अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः, तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यादिति अत्राभिधीयते "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः

स्यात्" अरुणयैकहायन्येत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सत्येकहायनीद्रव्यारुण्यगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन सम्बन्धिनयाऽभिहितयोः क्रयाख्यैककर्मान्वयाऽविरोधादरुणिम्नः—

टी० ऽरुणिमसम्बन्धश्चेत्यर्थद्वयस्यैकवाक्येन विधानासम्भवादित्यर्थः। ततः किं? मित्यत्राह 'ततश्चे''ति, वाक्यभेदे सति स्ववाक्यस्यत्वाभावादवान्तरप्रकरणेन वा महाप्रकरणेन वा द्रव्यविशेषनिश्चये वासोयजमानादिसर्वद्रव्याणां प्रकरणान्वयाविशेषात् क्रीणातीति वाक्यं भित्त्वाऽरुणयेति पदं प्राकरणिकसर्वद्रव्यपर्यन्तस्वार्थमरुणिमानमभिदधातीत्यर्थः । अरुणयेति स्त्रीलिङ्गनिर्देशः कथं? मित्यत्राह "अरुणयेती''ति, पूर्वपक्षमुपसंहरति "तस्मा''दिति, "अत्राभिधीयत''इति, अस्मिन् पूर्वपक्षे प्राप्ते सूत्रकारः स्वसिद्धान्तमाहेत्यर्थः । सूत्रमुपादत्ते "अर्थैकत्व''इति, सूत्रस्याक्षरार्थमाह 'अरुणये''त्यादिना, कयोरर्थैकत्वम्? इत्याकाङ्क्षायां शब्दस्य अर्थप्रतिसंबन्धित्वात्पदविशेषयोः सन्निहितविषयवाक्यस्थत्वाच्च आरुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोरित्यध्याहृतं, पदद्वयसन्निधिज्ञापनार्थमरुणयैकहायन्येत्युक्तम्, आरुण्यविशिष्टमेकहायनीत्वविशिष्टं च द्रव्यं तद्वाचिपदयोस्सामानाधिकरण्येन तत्तद्विशेषणद्वारैकविशेष्यप्रवृत्तित्वादर्थैकत्वे सिद्ध इत्यर्थः, द्रव्यगुणयोरैककर्म्यादित्येतद्व्याचष्टे "एकहायनीद्रव्यारुण्यगुणयो''रित्यादिना, गुणान्वयस्य क्रयान्वयस्य च वाक्यबोध्यत्वे वाक्यभेदप्रसङ्गो विरोध उक्तः, गुणान्वयस्य प्रातिपदिकसिद्धत्वाच्च वाक्यबोध्यत्वचार्थसिद्धत्वञ्च, अतः क्रयान्वयबोधनमेव वाक्यकृत्यमित्यभिप्रायेणारुणयेति पदेनैवेत्युक्तं, क्रयाख्यैककर्मान्वयाविरोधादिति वाक्यभेदप्रसङ्गरूपविरोधाभावादित्यर्थः । नियमः स्यादित्येतद्व्याचष्टे—

सू० क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात् यद्येकहायन्याः क्रयसम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेयः स्यात् तदा वाक्यार्थद्वयविधानं स्यात्, न चैतदस्ति अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम् एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते न गुणसम्बन्धः; विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थे वृत्तिः सामानाधिकरण्यमिति हि तल्लक्षणम्,

टी० "अरुणिम" इत्यादि, सर्वद्रव्यसाधारणप्रकरणानपेक्षत्वाद्वाक्यस्यतयैव नियमसिद्धिरित्यर्थः। अत्र गुणद्रव्ययोर्विशेषणविशेष्यभावः प्रातिपदिकावसेयः, विशेष्यैक्यं सामानाधिकरण्यावसेयं क्रयान्वयो वाक्यावसेय इति वाक्यस्य क्रयान्वयबोधनमेव कृत्यन्तस्मादेकस्मिन्वाक्येऽर्थद्वयविधानप्रसङ्गाभावाद्वाक्यभेदाभावेनारुण्यं न प्राकरणिकसर्वद्रव्यान्वयि, अपि त्वेकहायनीमात्रान्वयीति सूत्रार्थः, वैयधिकरण्येन पदयोरर्थभेद इति पूर्वपक्षे प्राप्ते अर्थैकत्वे इत्युक्तं, द्रव्यगुणयोः क्रयान्वये द्वारद्वारिभावेन विना तद्योगाद्द्वारान्वयद्वार्यन्वयरूपार्थयोर्भिन्नत्वाद्वाक्यभेदप्रसङ्गरूपविरोधः स्यादिति शङ्कायामैककर्म्यादित्युक्तम्, एकहायन्यन्वयनियम इति पूर्वपक्षे नियमः स्यादित्युक्तमिति, अत्र गुणसम्बन्धः प्रातिपदिकावसेयोऽस्तु ततः किं वाक्यभेदायत्तानियमपरिहारस्येति शङ्कायां सूत्राक्षरयोजनायां सङ्ग्रहेणोक्तमर्थं विवृणोति "यदीत्यादिना, किमारुण्यस्य द्रव्यमात्रान्वये वा द्रव्यविशेषान्वये वा वाक्यबोध्ये तद्भेद उच्यते? इति विकल्पे द्रव्यमात्रान्वयस्य प्रातिपदिकावसेयत्वमाह "अरुणये"ति, यदि गुणगुणिसम्बन्धः प्रातिपदिकावसेयः तर्हि सामानाधिकरण्यस्य किं कृत्यमित्यपेक्षां शमयन् द्वितीयं शिरः प्रतिवक्ति "एकहायनीपदे"ति, तस्यैकहायनीत्वमात्रम् अरुणिमविशिष्टद्रव्यस्यैकहायनीत्वाश्रयत्वं विशेष्यैक्यमित्यर्थः, अनेन अरुणाधिकरणा-

ऽऽकृत्यधिकरणयोः प्रतिपाद्यभेदश्चोक्तो भवति, प्रातिपदिकस्य धर्म्मिपर्य्यन्तत्वमाकृत्यधिकरणार्थः, अनेकप्रातिपदिकस्थसमानविभक्तेर्विशेष्यैक्यपरत्वप्रतिपादकमरुणाधिकरणमिति कथङ्गुणसम्बन्धो न सामानाधिकरण्यावसेय इत्यत्राह "विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थ" इति, विशिष्टैक्यमित्युक्ते विशेषणांशस्यैक्यं माभूदिति विशिष्टद्रव्यैक्यमित्युक्तं द्रव्य-शब्देन विशेष्यांशोविवक्षितः । एतदुपपादकत्वेन सामानाधिकरण्यलक्षणयन्यमाह "भिन्ने"ति, न हि विशेषणविशेष्यवाचिनोः पदयोर्विशेषणविशेष्यभावसम्बन्धे वृत्तिः सामानाधिकरण्यमित्युक्तमित्यर्थः, एवं प्रातिपदिकेन गुणान्वयस्समानविभक्त्या परस्परान्वयो वाक्येन क्रियान्वयश्च बोध्यत इति कृत्यत्रयमुक्तम् । एतत्पराभ्युपेतमित्याह–

भा० अत एव हि रक्तः पटो भवतीत्यादिष्वेकार्थ्यादेकवाक्यत्वं पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः, रागसम्बन्धस्तु रक्तपदेनैवाभिहितः, रागसम्बन्धिद्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्येनावसेयमेवमेकेन गुणेन द्वाभ्यां बहुभिर्वा तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धं, देवदत्तः श्यामो युवा लोहिताक्षः दण्डी कुण्डली तिष्ठति शुक्लेन वाससा यवनिकां सम्पादयेत् ।

टी० "अत एवे"ति, किञ्च द्रव्यपर्यन्ताभिधानेऽप्येकहायनीपदेन वाक्यस्य निराकाङ्क्षत्वादरुणयेति पदं न तत्रान्वेतीति शङ्का च परिहृता भवति अर्थवादाधिकरणेऽर्थवादनैरपेक्ष्येण विधेरेव प्रवर्त्तकत्वाद्विधिवाक्येनार्थवादस्य नैकवाक्यत्वमिति शङ्कायामर्थवादस्य श्रूयमाणत्वात्तत्रापि विधेराकाङ्क्षाऽस्तीति कल्प्यन्तस्मादुत्थापिताकाङ्क्षोऽर्थवादो विधिनैकवाक्यतयाऽन्वित इति निश्चितः, तत्र तैरेवोक्तमुदाहरणमिदं रक्तः पटो भवतीति, तत्र हि पटो

भवतीत्येतावता निराकाङ्क्षत्वे ऽपि वाक्यस्य प्रयुक्तं रक्तपदं कीदृशः पट इति उत्थापिताकाङ्क्षमन्वेति एवमत्राप्यरुणयेति पदं श्रूयमाणमुत्थापिताकाङ्क्षत्वादेकवाक्यतयाऽन्वितमिति भावः । अत एव-कृत्यत्रयस्यापि यथोक्तप्रकारत्वादेव, रक्तः पटो भवतीति वाक्ये यथोक्तप्रकारेण कृत्यत्रयं दर्शयति "पटस्ये"ति, रक्तः पट इत्यादि वाक्ये विशेषणस्यैकत्वात्तदुत्थापिताकाङ्क्षमन्वेति बहूनि विशेषणानि समस्तपदोक्तानि चेदन्वितानि स्युः न तु व्यस्तपदोक्तानि, अत्र तु पदानि व्यस्तानि, तत्र प्रथमान्तत्वात्सामानाधिकरण्यमत्र तु पदानि कारकविभक्त्यन्तानि, तस्मान्नात्र सामानाधिकरण्यमिति शङ्कात्रयमभिप्रेत्याह "एकमेकेने"ति, पदेन समस्तेन व्यस्तेन वेति कारकविभक्त्यन्तेन प्रथमान्तेन वेति चात्राभिप्रेतं, तत्र प्रथमान्तबहुविशेषणान्वये उदाहरणमाह "देवदत्त"इति, देवदत्तः श्याम इत्यादिकमुदाहरतोऽयं भावः-रक्त पट इति पदद्वयमविद्वाचकमरुणयेति पदस्त्वेतनवाचकमिति वैषम्यं यथा न प्रयोजकं तथा प्रथमान्तत्वकारकविभक्त्यन्तत्ववैषम्यमप्यप्रयोजकमिति, अन्तरङ्गबहिरङ्गविशेषणे अप्येवमित्यभिप्रायेण दण्डी कुण्डलीत्युक्तम् । कारकविभक्त्यन्तैकपदान्वयोदाहरणमाह "शुक्लेन वाससे"ति, कर्मकारकमुदाहरति—

सू० नीलमुत्पलमानय नीलोत्पलमानय गामानय शुक्लां शोभनाक्षीम्, "अग्नये पथि कृते पुरोडाशमष्टाकपालं निर्वपे"दिति, एवमरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति

टी० "नीलमुत्पलमि"ति, समस्तोदाहरणमाह "नीलोत्पलमि"ति, कारकविभक्त्यन्तानेकपदान्वयोदाहरणमाह "गा"मिति, संप्रदानकारकविषयं वैदिकं चोदाहरणमाह "अग्नय"इति, पुरोडाशमष्टाकपालमिति कर्मकारकमपि सिद्धम्, । एवमरुणयेत्यादिकवाक्येऽपि तुल्यमित्यत्राह "एवमि"ति, । ननु कारकविभक्तेः क्रियान्वयबोधोपक्षीणत्वान्न परम्परान्वयबोधकत्वम् उच्यते कारकविभक्तिः क्रियान्वयबोधिका स्यात्, किमत्रायोगव्यवच्छेद एव? उतान्ययोगव्यवच्छेदश्च? अयोगव्यवच्छेदमात्रं न विरुद्धम्

अन्ययोगव्यवच्छेदश्चेत्तर्हि क्रियान्वयबोधोपक्षीणा कारकविभक्तिः पशुना यजेत्यादिषु सङ्ख्यान्वयमपि न बोधयेत्, कारकविभक्तित्वाकारात् क्रियान्वयबोधनम्, एकवचनत्वाद्विवचनत्वाकारात्सङ्ख्याऽन्वयबोधनमित्याकारभेदादविरोध इति चेत्, समानविभक्तित्वाकारविशेषेण तद्वत्परस्परान्वयमपि बोधयेत् । नन्वेकपदस्था कारकविभक्तिर्युगपत्सङ्ख्यान्वयं क्रियान्वयञ्च बोधयतीति तुल्यबलत्वाच्चान्योन्यासहत्वं, परस्परान्वयस्तु पदान्तरपरामर्शसापेक्ष इति विलम्बितत्वात्स बाधित इति चेत् किं विलम्बितत्वाविलम्बितत्वमात्रमेव प्राबल्यदौर्बल्यहेतुः ? तर्हि प्रत्यक्षमेव प्रमाणमन्यद् दुर्बलं स्यात् तत्सापेक्षत्वेन विलम्बितत्वात्, तस्माद्विजयी लोकायतिकः । किञ्च श्रुतिरेव प्रमाणं न स्मृतिः विलम्बात् श्रुतिलिङ्गादिष्वपि श्रुतिरेव प्रमाणं न लिङ्गादि विलम्बादेव, प्रथमा विभक्त्यन्तेषु चैकपदस्यैकवचनादिना प्रागेव सङ्ख्यान्वयप्रतीतेः पदान्तरस्थसमानविभक्तिपरामर्शसापेक्षसामानाधिकरण्यासिद्धिः स्यादिहापि द्रव्यगुणयोः पराभिमत आर्थः परस्परान्वयो न सिध्येत्, शब्दतः प्रथमावगताक्रियायान्वयापेक्षया तस्यार्थत्वेन चरमावगतत्वाभ्युपगमात्, नैवं विरोधे सति हि विलम्बिताविलम्बितयोर्बाध्यबाधकभाव इति चेत् तर्ह्यत्रापि क्रियान्वयसङ्ख्यान्वयवत्परस्परान्वयस्यापि विरोधाभावाद्विलम्बाविलम्बावकिञ्चित्करौ, अत्राविरोधः परैरभ्युपेतः पश्चादार्थान्वयस्सिध्यतीति सिद्धान्तोक्तेः, न केवलमविरोधमात्रात्परस्परान्वयसिद्धिः प्रयोगस्य निरू[1]पकत्वात् कारकविभक्त्यन्तपदानां सङ्ख्याऽन्वयेन सह क्रियान्वयबोधने हि प्रयोगो दृश्यत इति चेत् तथा परस्परान्वयबोधनमपि प्रयोगसिद्धमिति चरमयुक्त्यभिप्रायेण प्रथमान्तकारकविभक्त्यन्तबहूदाहरणमुदाहृतं देवदत्तश्श्याम इत्यादिकं यथैकवचनादीनामेकत्वादिसङ्ख्यान्वयबोधकत्वं प्रथमान्तेषु कारकविभक्त्यन्तेषु चाविशिष्टमङ्गीक्रियते उभयत्राविशेषेण प्रयोगदर्शनात्समानविभक्तेरप्यविरुद्धार्थैक्यबोधकत्वमुभयत्राविशेषेण प्रयोगदर्शनादङ्गीकरणीयमित्यर्थः । एवं कारकविभक्तिप्रयुक्तानुपपत्तिः परिहृता, तथा विशेषणविवक्षायां यदनुपपत्तित्रयमत्र विशेषणभेदे विशेष्यभेदो जन्माद्यधिकरणन्यायेन

[1] नियामकत्वादिति पा० ।

परिहृत इति नात्र विवक्षितः, विशेषणैक्यपरिहारः प्रागुक्तोऽत्रानुसन्धेयः । अथान्योन्यसमवायः परिहर्तव्यः, विशिष्टत्वमुपस्थाप्य विशिष्टोऽर्थ एक इति ज्ञापयित्वेति ल्यबन्तक्त्वान्तनिर्देशेन कृत्यत्रयस्य क्रमभावित्वं प्रतीयते ततश्चान्योन्यसमवायप्रसङ्ग इति तदपनोदाय करणकारणविभक्त्यन्तसामानाधिकरण्यं वदतः सूत्रकारस्य तावन्मात्राभिप्रायत्वशङ्का च निवार्या अतस्तदर्थमाह—

सू० एतदुक्तं भवति यथा काष्ठैः स्थाल्यामोदनं पचेदित्यनेककारकविशिष्टैका क्रिया युगपत्प्रतीयते, तथा समानाधिकरणपदसंघाताभिहितम् एकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः, खादिरैः शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेदित्यादिष्विति, यत्तूपात्तद्रव्यकवाक्यस्थगुण—शब्दः केवलगुणाभिधायीत्यरुणयेति पदेन केवलगुणस्यैवाभिधानमिति,

टी० "एतदुक्तं भवती"ति, "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकमिति न्यायेन युगद्बोधनात् क्रमभावित्वाभावाच्च विशेषणान्तरविशिष्टे विशेषणान्तरान्वयविधानेन विशेषणानामन्योन्यसमवायप्रसङ्ग इत्यर्थः । यौगपद्यकथनेन पूर्वं ल्यबन्तनिर्देशः कृत्यत्रयभेदनिर्वाहकपरामर्शक्रमप्रकटनार्थ इत्युक्तं भवति, तत्तत्कारकप्रतिपत्तिवेलामित्यनेनेदं सूत्रं सर्वकारकविभक्त्यन्तप्रदर्शनार्थमिति दर्शितम् । इत्यादिषु न कश्चिद्विरोध इत्यन्वयः विरोधोऽन्योन्यसमवायादिर्विवक्षितः, युगपत्प्रतिपन्नमित्यनेन तत्र परिहारो विवक्षितः, यथा काष्ठैरित्यादिकं वदता समानाधिकरणपदविषयचोद्यपरिहारो व्यधिकरणवाक्येऽपि समाना इति प्रतिवन्द्यभिप्रेता । अयमर्थः—व्यधिकरणानि पदानि तत्तत्कारकविशिष्टां क्रियां किं युगपत्क्रमेण वा प्रतिपादयन्ति ? यौगपद्ये उद्देश्योपादेयविभागाभावप्रसङ्गोऽनेककारकविशिष्टक्रियैकत्वे

विशेष्यक्रियैक्यवद्विशेषणभूतकारकैक्यमपि स्यात्, क्रमेण चेत् कारकान्तर-विशिष्टक्रियायां कारकान्तरान्वयविधानं स्यात्, तदा काष्ठस्थाल्यादेरन्यो-न्यान्वयप्रसङ्गेन काष्ठस्य स्थाल्यधिकरणं, स्थाल्याः काष्ठमधिकरणं वा स्यात् न तदस्ति, विशेष्यभूतक्रियाया एवैकत्वं वाक्यप्रतिपाद्यं न तु विशिष्टस्य अतोन विशेषणभूतकारकैक्यप्रसङ्गः, सर्वकारकैः क्रियाया एव विशेष्यत्वेन नान्योन्यसमवायप्रसङ्ग इति चेत् तथा समानविभक्तेर्विशेष्यांशमात्रैक्यपर-त्वाच्च विशेषणैक्यं प्रत्यक्षमूला व्युत्पत्तिरत्र नियामिका यथा पट इत्येक-पदप्रयोगे तत्स्थमेकवचनं न विशेषणविशेष्यैक्यं प्रतिपादयति किन्तु विशे-ष्यैक्यमेव तत्र नियामिका व्युत्पत्तिः इहापि तद्वद्युगपत्सर्वैर्विशेषणैरेकस्यै-वार्थस्य विशेष्यत्वेन न विशेषणानामन्योन्यसमवायप्रसङ्गश्चेति, एवं सूत्रका-राभिप्रेतौ पूर्वपक्षराद्धान्तौ अभिहितौ । अथ परोक्तपूर्वपक्षराद्धान्तयोरनु-पपत्तिनमर्यन्तत्तदसाधारणार्थं च व्युदस्यति यत्त्वित्यादिना, कृष्णो गच्छति श्वेतमालभेतेत्यादिषु गुणवाचिपदानां गुणिपर्यन्तत्वं तैरभ्युपेतम् आकृत्य-धिकरणन्यायात् तत्रोपात्तद्रव्यकवाक्यस्थत्वङ्गुणवाचिशब्दानां गुणिमात्रप-र्यन्तत्वे प्रयोजनमभ्युपेतं पटस्य शुक्ल इत्यादिषु तथा दर्शनात् पटश्शुक्ल इत्यादिषूपात्तद्रव्यकवाक्यस्थत्वेऽपि तदपवादकसामानाधिकरण्याद् गुण-पर्यन्ताभिधानमिति चाभ्युपेतं, तत्र गुणमात्रपर्यन्तत्वे यत्प्रयोजकमुक्तं त-दभ्युपगम्य प्रकृते गुणमात्रपर्यन्तत्वं दूषयति—

सू० तन्नोपपद्यते लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनादुपा-त्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतं पटः शुक्ल इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवा-भिधानात् ।

टी० "तन्नोपपद्यत" इति, कुत इत्यत्राह "लोकवेदयोरि" ति, का-रकविभक्त्यन्तत्वस्य सामानाधिकरण्याविरोधित्वोपपादनमुपजीव्येदं दू-

वितं, गुणिपर्यन्तत्वापवादकमुपात्तद्रव्यकवाक्यस्यगुणवाचिपदत्वं यत्तस्यापवादरूपसामानाधिकरण्यस्य अरुणयेत्यादिवाक्ये विद्यमानत्वोपपादनात् केवलगुणाभिधायित्वमयुक्तमित्यर्थः । एवं परोक्तप्रयोजकाभ्युपगमेन तत्साध्यप्रयोज्यं गुणमात्रपर्यन्तत्वं दूषितम् । अथ तदुक्तं प्रयोजकं दूषयति "उपात्तद्रव्ये"ति, तत्र हेतुमाह "पटश्शुक्ल इत्यादिष्वि"ति, गुणमात्रपर्यन्तत्वे गुणिपर्यन्तत्वेऽपि साधारणमुपात्तद्रव्यकवाक्यस्यगुणवाचित्वं गुणमात्रपर्यन्ततायाः प्रयोजकं न भवतीत्यर्थः । ननु न तस्य प्रयोजकत्वहानिः अपवादेन हि क्वचिद् गुण्यभिधानमित्यत्राह—

भू० पटस्य शुक्ल इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिरसमानविभक्तिनिर्देशकृता न पुनरुपात्तद्रव्यकत्वकृता तत्रैव पटस्य शुक्लो भाग इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यादिविशिष्टद्रव्यं प्रतीयते, यत्पुनः क्रयस्यैकहायन्यवरुद्धतयाऽरुणिम्नः क्रियाऽन्वयो न सम्भवतीति तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियाक्रियापदान्वयाविरोधादसङ्गतम्,

टी० "पटस्ये"ति, असमानविभक्तिनिर्देशः प्रयोजक इत्यर्थः । असमानविभक्तिनिर्देशोऽसमानाया विभक्तेर्निर्देशः न समानविभक्तिनिर्देशाभावः श्वेतो यातीत्यादिष्वपि गुणमात्रपर्यन्तत्वप्रसङ्गात् व्यभिचारिणः प्रयोजकत्वकल्पनं व्यभिचारस्थले तदपवादकल्पनं नायुक्तम् । अव्यभिचारिप्रयोजकसद्भावादित्यभिप्रायः । गुणमात्रपर्यन्तत्वेनेदमपि प्रयोजकमसाधारणं पटस्य शुक्लो भाग इत्यसमानविभक्तिनिर्देशेऽपि गुणिपर्यन्तत्वादिति चेदित्यत्राह "तत्रैव पटस्ये"ति, अयमर्थः पट—शब्देन समानविभक्तिनिर्देशेऽपि शुक्ल—शब्दस्य विशेष्यवाचिभागशब्देनासमानविभक्तिनिर्देशाभावाच्च तस्य गुणमात्रपर्यन्तत्वे प्रयोजकत्वभङ्गः, यथा त्वत्पक्षे गुणमात्रपरत्वापवादकाभिमतभाग—शब्दसामानाधिकरण्यात् न तस्य धर्म्मिपर्यन्तत्वाप्रयोजक-

त्वहानिरिति । किंच न केवलमुपात्तद्रव्यकवाक्यस्यतायां व्यभिचार एव कल्पनागौरवमप्यस्ति परमते श्वेतमालभेतेत्यादिषु गुणवाचिपदस्य गुणिपर्यन्तत्वमुक्तं पटस्य शुक्ल इत्यादिषु तद्‌पवादकत्वेनोपात्तद्रव्यकवाक्यस्यत्वमभ्युपेतं तस्याप्यपवादकत्वेन पटः शुक्ल इत्यादिषु सामानाधिकरण्यमुक्तमिति प्रयोजकत्रयकल्पनाऽस्ति, अस्मन्मते तु श्वेतमालभेत पटः शुक्ल इत्यादिप्रयोगेऽप्यपृथक्सिद्धधर्मवाचित्वादेव गुणिपर्यन्तत्वं सिद्धं पटस्य शुक्ल इत्यत्र असमानविभक्तिनिर्देशकृतं गुणपर्यन्तत्वमिति प्रयोजकद्वयमेव, इदमर्थं सिद्धमिति न कण्ठोक्तं कल्पनागौरवम् । एवं परस्य पूर्वपक्षसिद्धान्तानुगतमरुणयेति पदस्यानुगुणमात्रपरत्वं निरस्तम् । अथ पूर्वपक्षासाधारणार्थस्य स्वसिद्धान्तयुक्त्या परिहृतत्वं वक्तुमाह "यत्पुनरि"ति, एकहायन्यवरुद्धतया—एकहायन्या निराकाङ्क्षत्वाद्विभागे साकाङ्क्षत्वे सत्येव ह्येकवाक्यस्यत्वमिह तदभावान्न क्रयान्वय इत्यर्थः । तस्य परिहृतत्वं दर्शयति "तदपी"ति, नीलं शुक्लं कृष्णमित्यादि व्यावृत्त्यर्थं विरोधिगुणरहितशब्दप्रयोगः गुणपदस्यैव गुणिपर्यन्तत्वेन गुणविशिष्टमेकं करणमिति अरुणया द्रव्यद्वारा क्रयान्वयात् क्रयान्वयासम्भवोऽनुपपन्न इत्यर्थः । राद्धान्तासाधारणमर्थं दूषयति—

सू० राद्धान्ते चोक्तन्यायेनारुणिम्नः शाब्दद्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रयसाधनत्वाऽनुपपत्त्याऽर्थात् परस्परान्वयः सिध्यतीत्यप्यसङ्गतम्. अतो यथोक्त एवार्थः, तस्मात्तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणपरित्यागेनैवैक्यप्रतिपादनं वर्णनीयं, तच्चनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्धाशुद्धोभयावस्थाच्चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्याणगुणगणैकतानं परमात्मानमभ्युपगच्छतो न सम्भवति, अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथाऽवस्थितविशेषणविशिष्टैक्यप्रतिपादनपर-

त्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रस-
ज्येत इति चेत् ।

टी० "राद्धान्ते चे"ति, "सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते", इति न्यायेन वाक्यैक्यत्वे कथंचित्सम्भवति वाक्यभेदाश्रयणायोगात् 'गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणी'ति, न्यायेन द्रव्यगुणयोः परस्परान्वयापेक्षत्वाचष्टाश्वदग्धरथन्यायेनार्थादन्वय इति तद्राद्धान्तः, तदयुक्तं शाब्दान्वयसिद्धेरित्यर्थः । स्वोक्ताधिकरणार्थमुपसंहरति "अतोयथोक्त एवार्थ" इति, । किञ्च "गुणे शुक्लादयः पुंसी"ति गुणपर्यन्तत्वे पुँलिङ्गतायाः प्राप्तत्वादरुणयेति स्त्र्यन्तपदस्य गुणमात्रपरत्वं दुर्वचम् । किञ्च पूर्वपक्षश्चात्यन्ताभासः—भिन्नवाक्यमिति हि पूर्वपक्षः तथा सत्यरुणयेति पदं नोपात्तद्रव्यकवाक्यस्यम्भवति उपात्तद्रव्यकवाक्यस्थत्वे सिद्धे हि गुणमात्रपर्यन्तत्वसिद्धिरिति वाक्यभेदेऽप्यरुणयैकहायन्येति प्रत्यासत्त्यतिशयादेकवाक्यतुल्यतया उपात्तद्रव्यकवाक्यस्थमिति चेत् सन्निधिविशेषादेकवाक्यस्थत्वफलभूतगुणमात्रपर्यन्तत्वसिद्धिश्चेत्तत एवैकवाक्यैकवाक्यस्थताफलभूतैकहायन्यन्वयनियमोऽपि स्यादिति वाक्यभेदहेतुकस्य पूर्वपक्षस्यानुदय एव स्यादिति राद्धान्तोऽपि दुःस्थः, एकहायनारुण्ययत्न च क्रयस्साध्य इत्यकाङ्क्षायाः करणद्वयसाकाङ्क्षत्वकल्पकस्य च-शब्दस्य द्वन्द्वसमासस्य चाश्रयणात् अत इमौ पूर्वपक्षराद्धान्तावतिदुःस्थतया सूत्रकाराभिमतावितिवक्तुमयुक्तम् । अतोऽस्याधिकरणस्य यथोक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकाराभिमतौ, एवमस्तु ततः किं प्रस्तुतसामानाधिकरण्यस्येत्यत्राह "तस्मादि"ति, तस्मात्,—सामानाधिकरण्यस्य अनेकविशेषणविशिष्टैकार्थपरत्वस्य लोकवेदसिद्धत्वात् ईदृशं सामानाधिकरण्यम्परपक्षे न सम्भवति पदद्वयावगतगुणहानादित्याह "तत्त्वे"ति, जीवब्रह्मभेदमनभ्युपगच्छतो न सम्भवतीति प्रतिज्ञाया उपपादनार्थमनाद्यविद्येत्यादिकम् । अशेषहेयप्रत्यनीकेत्यादिकं च विशेषणमुभयत्र प्रवृत्तिनिमित्तफलतयोक्तम् । कर्मवश्योऽनुग्राह्यो नियाम्यश्च जीवो नियाहकोऽनुग्राहकश्च परमात्मा भवितुं नार्हतीत्येषां विशेषणानामभिप्रायः । मुक्ति-

दशायामैक्यशङ्काव्युदासार्थं शुद्ध्यशुद्ध्युभयावस्थादित्युक्तं न हि नियाम्यदशायां नियहकर्त्तुर्नेऽपेतेरन्यः पुरुषोऽनुग्रहदशायामनुग्राह्योऽयमनुग्रहकर्ता, तेन-

**सू० नैतदेवं त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात्, एतदुक्तं भवति सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वमिश्रानवधिकातिशयासंख्येयानन्तकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म बहु स्यामिति सङ्कल्प्य—**

नृपेणाभिन्ना भवतीति भावः । स्वेतरवैलक्षण्यं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थमुभयलिङ्गत्वेन वैषम्यमाह "अशेषेत्यादिना, निर्विशेषवादिनेत्येतावता पर्याप्तत्वेऽपि स्वपक्षमनभ्युपगच्छतो दूषणवचनं कुदृष्टिपक्षत्रयेऽपि दूषणसाम्यज्ञापनार्थं तच्छब्दावगतविशेषणाभ्युपगमवत्त्वं—शब्दावगतविशेषणमभ्युपगन्तव्यं, तथा सति ब्रह्मणो दुःखित्वादिप्रसङ्ग इति शङ्कते "अभ्युपगच्छतोऽपीत्या"दिना, परिहरति "नैत"दिति । कुत इत्यत्राह "त्व"मिति, "एवेति, तत्पदप्रतिपन्नस्य जीवविलक्षणस्यैवेति भावः । जीववाचित्वेन व्युत्पन्नस्य पदस्य तदन्तर्यामिपरत्वं लाक्षणिकं तत्कथं परस्यैवाभिधानादित्युक्तमित्यत्राह "एतदुक्तमिति द्वारद्वारिभावविपर्ययशङ्काव्युदासार्थोऽयमारम्भः, वेदव्युत्पत्तिसिद्धं सर्वशब्दानां परमात्मवाचित्वमभ्युपपादयति "सच्छब्देत्या"दिना, सामानाधिकरण्यबलात्त्वम्पदावगतविशेषाः स्वीकार्याः ब्रह्मणो निर्दोषत्वमङ्गलास्पदत्वादि श्रुत्यन्तरसिद्धञ्च अतस्तदविरोधायान्तर्यामिपरत्वं युक्तमिति तत्त्वम्पदसामानाधिकरण्यमुख्यत्वनिर्दोषत्वश्रुत्यन्यथानुपपत्त्यभिप्रायेण निरस्तनिखिलेत्यादिविशेषणमुक्तं सच्छब्दाभिहितमिति कारणवस्तुवाचिसच्छब्दः कारणत्वानुगुणगुणान्वितवस्तुपर इति भावः । बहु स्यामितीति यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र लिङ्वाच्येन ग्राहकेण परमापूर्वेण सन्निधिसमाम्नातेषु पदार्थेष्वविशेषेण स्वशेषतया गृह्यमाणेषु तत्र प्रोक्षणावघातगोत्वादेः परमापूर्वं प्रति शेषत्वं व्रीहियवादिद्वारकं, च यागादेस्तु तच्छेषत्वमद्वारकं च कैश्चिन्निश्चीयते तथा

बहु स्यामिति वाहकग्रहणेन तेजःप्रभृतिसर्वनामरूपेषु सामान्येन परमात्मीयतयाऽवगतेषु तत्रानुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्यादिभिस्सद्वारक-मध्यवसीयत इत्यनुसन्धेयं यथोपबृंहणेषु गुणवान् तथैव गुणसम्पचम् इत्य-विशेषोक्तेषु भगवद्गुणेषु समस्समविभक्ताङ्गस्निग्धवर्णः इत्युक्तानां स्निग्ध-वर्णत्वादीनां धर्मज्ञस्सत्यसन्धश्चेत्युक्तानां सत्यसन्धत्वादीनाञ्च गुणानां दिव्यविग्रहद्वारकत्वमद्वारकत्वञ्च दृश्यते तथेहापीश्वरशरीरभूतचिद-चिद्वारको ऽद्वारकश्च गुणान्वयो यथाश्रुति स्वीकार्य इति भावः । बहु-स्यामिति बहुनामरूपभाग् भवेयामित्यर्थः ।

सू० तेजोऽबन्नप्रमुखं कृत्स्नं जगत्सृष्ट्वा तस्मिन्देवादिविचित्र-संस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य स्वयञ्च स्वेच्छयैव जीवान्तरात्म-तया ऽनुप्रविश्य एवं भूतेषु स्वपर्य्यन्तेषु देवाद्याकारेषु संघा-तेषु नामरूपे व्याकरोत्, एवं रूपसंघातस्यैव वस्तुत्वं शब्द-वाच्यत्वञ्चाकरोदित्यर्थः, अनेन जीवेनात्मना जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति, ब्रह्मात्मकत्वञ्च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते ।

टी० तेजोबन्नप्रमुखमिति प्रमुख-शब्देन तत्त्वान्तरसृष्टिर्विवक्षिता देवादिविचित्रसंस्थानसंस्थित इति च वक्ष्यमाणचिदचिदंशविभागार्थं जग-दाकारकथनं न तु जीवानुप्रवेशपूर्वावस्थाकथनं परमात्मन एव कृत्स्नजगच्छ-रीरित्वे चेत् कथं जीवात्मनश्शरीरित्वमिति शङ्कापनोदाय "चेतनमि"ति, शब्देन चेतनत्वं शरीरित्वे प्रयोजकमित्यर्थः, चेतनमित्यनेन विज्ञानञ्चा-विज्ञानं चेत्यत्र विज्ञान-शब्दस्य ज्ञातृवाचित्वं दर्शितं, जीववर्ग-शब्देन विज्ञानं जीवेनेत्येकवचनं "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि"त्यादिभिरैकार्थ्याज्जातावित्ति व्याख्यातम्भवति अ-नेन जीवेनेत्यत्रानेनेति निर्देशस्याभिप्रायविवरणं स्वकर्मानुगुणेष्विति जीव-

विशिष्टपरमात्मविशेषणेदं–शब्दस्य जीवद्वारकवैचित्र्यपरत्वाज्जीववैचित्र्यस्य च कर्मवैचित्र्याधीनत्वात् जीवकर्तृकप्रवेशव्यावृत्त्यर्थं स्वेच्छयेत्युक्तं पारतन्त्र्यं स्वातन्त्र्यञ्चानुप्रवेशहेतुवैषम्यमित्यर्थः । एवं भूतेषु–द्वारद्वारिभावेन व्यवस्थितेष्वित्यर्थः स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु तत्तद्देवाद्यवस्थास्तत्तद्वाचिशब्दांश्चाकरोदित्यर्थः । नामरूपे व्याकरोदित्युक्ते नामरूपव्याकरणस्य परमात्मपर्यन्तत्वस्य अस्फुटत्वाद्विशदयति "एवमि"ति, पूर्वं ल्यबन्तनिर्दिष्टानां क्रियाणां क्रमविवक्षाराहित्यं चानेन प्रदर्श्यते, एवं रूपसङ्घातस्य- चिदचिदीश्वरात्मकस्य सङ्घातस्येत्यर्थः एवं स्वरूपसङ्घातस्येति पाठे अयमर्थः स्वं रूपं च स्वरूपं तस्य सङ्घातः स्व–शब्देन शरीरीश्वर उच्यते रूप–शब्देन चिदचिद्वस्तुनी शरीरशरीरिरूपसङ्घातस्येत्यर्थः । वस्तुत्वं देवादिवस्तुत्वं जीवेनात्मनेत्यत्र जीववैलक्षण्यस्यास्पष्टत्वादात्म–शब्दस्यानेकार्थसाधारण्याच्च तद्विवृण्वन् स्वपरपक्षसाधारणमन्वयार्थमाह "अनेने"ति, मयेत्यात्म–शब्दव्याख्यानम् । आत्मशब्दस्यास्मद्वाचित्वे सति हि ब्रह्मात्मत्वं दर्शितम् भवति स्वरूपैक्यशङ्कां व्युदस्यति "ब्रह्मात्मकत्वं चे"ति,

मू० "इदं सर्वमसृजत यदिदं किञ्च" "तत्सृष्ट्वा तदेवानुप्राविशत्" "तदनुप्रविश्य सच्च त्यच्चाभव"दित्यत्र इदं सर्वमिति निर्दिष्टञ्चेतनाचेतनं वस्तुद्वयं सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्याञ्च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात्, अत एवंनामरूपव्याकरणात् सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मवाचिनः इत्यवगतमिति। किञ्च ऐतदात्म्यमिदं सर्वमिति चेतनमिश्रं प्रपञ्चमिदं सर्वमिति निर्दिश्य तस्यैष आत्मेति प्रतिपादितम्, एवञ्च सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं चेतनं जगत्तस्य शरीरं च भवति ।

टी० इदं सर्वमिति निर्दिष्टश्चेतनाचेतनवस्तुद्वयम् इत्यत्र सर्व-शब्दस्यासङ्कोचोऽभिप्रेतः, तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञानञ्चाविज्ञानञ्चेत्यनन्तरवाक्येन सर्वशब्दस्य स्वतःप्राप्तत्वमसङ्कुचितत्वं स्थापितमित्याह "इदं सर्वमि"ति, अनुप्रविश्य नामरूपे व्याकरवाणीत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वं गम्यते तत्सृष्ट्वा तदेवानुप्राविशदित्यनुप्रवेशस्य सृष्टिपूर्वकत्वङ्गम्यते तस्मान्नात्र पौर्वापर्यविवक्षा समानकर्तृकत्वमात्रमेवात्र विवक्षितं "तस्य त्वष्टा विदधद्रूपमेती"ति वाक्ये सृष्ट्यनुप्रवेशयोस्समानकालीनत्वावगमात् तस्माद्व्याप्येऽप्यनुप्रविश्येति ल्यबन्तनिर्देशोऽनुप्रविष्टसृष्ट्योर्विविच्य ज्ञापनार्थ इत्यवगन्तव्यं सृष्ट्वानुप्रविशदिति स्थित्यर्थानुप्रवेशो वा एवं नामरूपव्याकरणप्रकार उक्तः । ततः किं प्रस्तुतस्येत्यत्राह "अत एवमि"ति, अतः उदाहृतश्रुतिवाक्यात् एवं परमात्मपर्यन्तनामरूपव्याकरणप्रतिपादनात् सर्व-शब्दानां परमात्मपर्यन्तत्वे मानं दर्शितं देहवाचिशब्दस्याकृतिनयसञ्चरणेन परमात्मपर्यन्तत्वमुपपादयिष्यन् शरीरत्वात्तपकम् वाक्यं दर्शयति "किञ्चे"ति ततः किमित्यत्राह "एवञ्चे"ति, न केवलमात्म-शब्देन शरीरत्वं गम्यम् अपि तु शरीरत्वं शरीरलक्षणेन सह कण्ठोक्तं चेत्याह-

मू० तथाच श्रुत्यन्तराणि "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृत" इति प्रारभ्य "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यम् आत्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत इत्यादि, "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं योऽपामन्तरे सञ्चरन् यस्यापः शरीरमित्यारभ्य यो ऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरन्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्यादीनि सचे-

तनं जगत्तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति, अतः चेतनवाचिनोऽपि शब्दास्चेतनस्यापृथग्भूतं चेतनशरीरकं परमात्मानमेवाभिदधति यथाऽचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दास्तत्तच्छरीरकजीवात्मन एव वाचकाः चत्वारः पञ्च दशरात्रा देवत्वं गच्छन्तीत्यादिषु देवा भवन्तीत्यर्थः—

टी० "तथा च श्रुत्यन्तराणी"ति, अन्तःप्रविष्टश्शास्तेत्येतत्सर्वात्मत्वविवरणं, विशेषणद्वयेन नृपनभोव्यावृत्तिः, भगवतो नियन्तृत्वकथनात्तदेकनियाम्यत्वं शरीरलक्षणमुक्तं भवति । जगत्परमात्मशरीरमस्तु ततः किं प्रस्तुतस्य सामानाधिकरण्यस्य? शरीरात्मभावो हि भेदरूपतया सामानाधिकरण्यस्य विरोधीत्यत्राह "अतश्चेतनवाचिन" इति, अतः—चिदचिदात्मकजगतः परमात्मशरीरत्वात्, शरीरभूतचेतनवाचिपदानान्तच्छरीरिपरमात्मवाचित्वं कथमिति शङ्कायां शरीरिवाचिपदानां शरीरिपर्यन्ताभिधायित्वदर्शनादित्याह "यथे"ति, शरीरिपर्यन्तं वैदिकप्रयोगं दर्शयति "चत्वार" इति तत्र देव—शब्दस्य शरीरिपर्यन्तत्वं स्पष्टयति "देवा भवन्ती"ति, देवत्वं गच्छन्तीत्युक्तं, न तु देवं गच्छतीति देव—शब्दस्य शरीरमात्रपरत्वे शरीरत्वं गच्छन्तीत्युक्तं स्यात् ततश्च देहात्मैक्यमुक्तम् अतश्शरीरित्वं गच्छतीत्यभ्युपगन्तव्यम् अतः भावप्रत्ययान्तत्वं प्रकृतिभूतदेवशब्दस्य शरीरिपर्यन्तत्वज्ञापकमित्यर्थः । शरीरवाचिपदानां शरीरिपर्यन्तबोधकत्वमपि लाक्षणिकमित्यत्राह—

सू० शरीरस्य शरीरिणं प्रति प्रकारत्वात्, प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानाच्छरीराभिधायिनां शब्दानां शरीरिपर्यवसानं न्याय्यं, प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनीत्थमिति प्रतीयमानोंऽशः तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्य्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्य्यवस्यति ।

टी० "शरीरस्थे"ति, शरीरवाचिनां प्रकारिपर्यन्तत्वं जातिगुणवाचिपदानामिव आकृत्यधिकरणन्यायसिद्धमित्यर्थः । जातिगुणवाचिनां द्रव्यपर्यन्तवाचित्वं कथमित्यपेक्षायामाकृत्यधिकरणन्यायं विवक्षुस्तदर्थं प्रथमं प्रकारप्रकारिणौ विविच्य दर्शयति "प्रकारो हि नामे"ति, तद्वाचिशब्दस्य प्रकारिपर्यन्तत्वमुपपादयति "तस्ये"ति, तस्य तद्वस्त्वपेक्षत्वेन प्रकारस्य प्रकार्यपेक्षस्थिति स्वरूपत्वेन तत्प्रतीतेः—प्रकारस्य यथाऽवस्थितस्वरूपप्रतीतेः तदपेक्षत्वात्—प्रकारिसापेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति प्रकारप्रतीतेः प्रकारिण्येव पर्यवसानं युक्तमिति प्रकारवाचिशब्दः प्रकारिणि पर्यवस्यतीत्यर्थः । शब्दशक्तेर्विशेषणमात्रविषयत्वेऽप्यर्थसामर्थ्याद्विशेष्यांशबोधनम् । अतोऽर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टार्थबोधसामग्री तच्च बोधनं मुख्यकोटिनिविष्टं यथासंस्कारसचिवेन्द्रियजन्यमपि प्रत्यभिज्ञानमिन्द्रियप्रसूतत्वात्प्रत्यक्षमेव न स्मृतिर्भवति तथाऽत्र मुख्यत्वम् । अतश्शब्दशक्तिः प्रवृत्तिनिमित्तमात्रे पर्यवस्यति विशेष्यबोधनमर्थसामर्थ्यादिति केचिदाहुः तदयुक्तं शब्दशक्तेर्विशेष्यपर्यन्तत्वाभावे निष्कर्षकशब्देऽप्यर्थसामर्थ्याद्विशेष्यपर्यन्तधीप्रसङ्गात् रूपग्रहणेन नयनशक्तिः रूपिज्ञानमर्थसामर्थ्यजन्यं स्यात् तदाभ्युपगमे गन्धशब्दादिग्रहणे सत्यर्थसामर्थ्यात् पृथिवीगगनादिप्रतिपत्तिश्च स्यात्, न च तथा प्रतिपत्तिरस्ति जात्यादिशब्दशक्तिर्जात्यादिस्वरूपमात्रविषया गवादिशब्दशक्तिर्द्रव्यपरतन्त्रजात्यादिविषयेति निष्कर्षकानिष्कर्षविभाग इति चेत् तर्हि शब्दशक्तेः प्रकारिविषयत्वमभ्युपगन्तव्यं स्यात् धर्मिपरतन्त्ररूपताऽवगतेर्द्धर्मिप्रतिपत्तिसापेक्षत्वाच्छब्दशक्तेस्तत्प्रतिपत्तिहेतुत्वाच्च । किंच "वचसां वाच्यमुत्तमं" नताः स्म सर्ववचसाम्प्रतिष्ठा यत्र शाश्वतीत्यादिवचनस्वारस्यं च शब्दशक्तेरेव विशेष्यपर्यन्तत्वे सिध्यति ततो विशेष्यपर्यन्ता शब्दशक्तिरित्यत्र तात्पर्यम् । एवं न्यायशिक्षा कृता इत्थं प्रमाणोपपत्तिसिद्धत्वात्सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचितत्पदेन त्वं-पदसामानाधिकरण्यं मुख्यवृत्तमित्याह—

टी० "अत एवे"ति, पर्यवस्यन्तः पूर्वं क्वचिद्व्यापृतस्य तत्रानुपरम्य तदन्वयिन्यन्यत्र व्यापारः पर्यवसानमिह विवक्षितं न तु व्यापारोप-

त्मः व्यापारोपरमवाचित्वे सत्पर्यवस्यन्त इति पदच्छेदः । यद्वा पर्यवस्यन्तः पर्यवसा[1]तुमप्रवृत्ता इत्यर्थः परमात्मप्रकारत्वाच्चेत्यन्तेन पूर्वोक्तन्यायस्सञ्चारितः नामरूपव्याकरणश्रुतिः पूर्वम्प्रमाणत्वेन पूर्वोदाहृताऽत्राभिप्रेता विशेषणवाचिशब्दोऽपि विशेष्यपर्यन्तोऽस्तु न तु विशेषणवाचिशब्दस्य परमविशेष्यवाचिशब्देन सामानाधिकरण्यं दृष्टमिति चेत्, उच्यते यथा नैल्यगुणगतावान्तरजातिवाचिनीलशब्दो नैल्यगुणद्वारा तद्विशिष्टे पर्यवसित उत्पल-शब्देन समानाधिकरणो दृश्यते यथा गवादिशब्दा गोत्वा-

मू० अत एव गौरश्वो मनुष्य इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डे पर्य्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्य्यस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचकशब्देन सामानाधिकरण्यं मुख्यमेव। ननु खण्डो गौः खण्डः शुक्ल इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टं द्रव्याणान्तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः-यथा दण्डी कुण्डलीति नैवं जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम् अन्योन्यस्मिन् व्यभिचारात् ॥

द्विजातिवाचिनस्तद्विशेष्यपिण्डद्वारा तद्विशिष्टचेतने पर्यवसिताः खण्डादि-शब्दैस्समानाधिकरणा दृश्यन्ते। तद्वत् उक्तं प्रयोजकमतिव्याप्त्या दूषयंश्चोदयति "नन्वि"ति, परिहरति "नैवमि"ति, प्रयोगदर्शनमविशिष्टमित्यभिप्रायेण द्रव्यं वेत्युक्तं, सामानाधिकरण्यं मत्वर्थीयप्रत्ययानपेक्ष इति भावः हेतुमाह "अन्योन्यस्मिन्नि"ति, व्यभिचारात्साध्यस्य सामानाधिकरण्यस्य जातिवाचिमात्रं गुणवाचिमात्रं वातिलङ्घ्य वृत्तेरित्यर्थः जातिर्वा गुणो वा

१ पर्यवस्यातुमिति पा०।

मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति नाभ्युपेतं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यस्य जातिगुणवाचिशब्दयोरविशेषेण प्रयोगदर्शनादिति चेत्तर्हि शरीरवाचिशब्दानामपि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्येन प्रयोगदर्शनात्सर्वप्रयोगविषयानुयायिप्रयोजकं वाच्यमिति भावः । जातिगुणयोरन्यतरत्वञ्च अव्याप्तमित्यर्थः । इदमव्याप्तं प्रकारत्वञ्चातिव्याप्तं तत् किं प्रयोजकमित्यत्राह–

सू० यस्य पदार्थस्य कस्यचित् प्रकारतयैव सद्भावः तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिस्तद्वाचकानां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वात् धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव, यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित् क्वचिद् द्रव्यान्तरप्रकारत्वमिष्यते तत्र मत्वर्थीयप्रत्यय इति निरवद्यं, तदेवस्परमात्मनः शरीरतया तत्प्रकारत्वादचिद्विशिष्टस्य जीवस्यापि, जीवनिर्देशविशेषरूपा अहंत्वमित्यादिशब्दाः परमात्मानमेवाचक्षत इति तत्त्वमसीति सामानाधिकरण्येनोपसंहृतम्,

टी० "यस्ये"ति, तदपृथक्सिद्धिस्थितिप्रतीतिभिरिति सिद्धिस्सत्ता प्रमाणसम्बन्धयोग्यत्वरूपा, स्थितिस्तदनुवृत्तिः, अपृथक्शब्दः सिद्ध्यादिसाधारणः, प्रतीति–शब्देनापृथक्प्रतीतेः स्वतः प्राप्तत्वं विवक्षितं, प्रकारैकस्वभाववस्तुवाचिशब्दत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमित्यर्थः । निष्कर्षकशब्दान्यत्वे सतीति विशेष्टव्यं मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्ये हेतुं पक्षे तदभावज्ञापनाय दर्शयति "यत्र पुनरि"ति, इति निरवद्यमिति मत्वर्थीयप्रत्ययसापेक्षदण्डकुण्डलादिव्यावृत्तं मत्वर्थीयप्रत्ययनिरपेक्षसर्वप्रयोगविषयानुयायिप्रयोजकं सिद्धमिति नाव्याप्त्यादि॰

दोष इत्यर्थः । इति निरवद्यमित्यनेन सहोपलम्भनियमादेः प्रयोजकत्वशङ्का-परिहारादिः प्रथमसूत्रोक्तोऽभिप्रेतः । परिहृतचोद्येन शिक्षितेन न्यायेन पर-मसाध्यसिद्धिमाह "तदेवमि"ति, तच्च चोद्यस्य परिहृतत्वात् एवं पूर्वं शि-क्षितप्रकारेण ऐतदात्म्यमिदं सर्वमिति पूर्वमेव वैयधिकरण्येन ब्रह्मात्मकत्वं सर्वस्य विहितं, तस्य सामानाधिकरण्येन जीवविशेषे उपसंहारः, यथा स त आत्मान्तर्य्याम्यमृत इति जीवविशेषे कृत्स्नस्य ब्रह्मशरीरत्वं वैयधिक-रण्येनोपसंहृतन्तद्वदित्यर्थः, अनेन उद्देश्योपादेयविभागनिबन्धनचोद्यपरि-हारोऽभिप्रेतः । त्वम्पदप्रतिपन्नदोषभाक्त्वप्रसङ्गस्य परिहृतत्वं दर्शयति । यद्वा अपुरुषार्थस्य ब्रह्मण्यस्पर्शाय हि शरीरशरीरिभाव उक्तः । तथाऽपि तत्संसर्गात्तत्प्रसङ्ग इत्यत्राह—

भा० एवञ्च सति परमात्मानं प्रति जीवस्य शरीरतया अन्वयात् जीवगता धर्माः परमात्मानं न स्पृशन्ति, यथा शरीरगता बालत्वयुवत्वादयो धर्माः जीवं न स्पृशन्ति, अतस्तत्त्व-मसीति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यस-ङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमा-त्मानमाचष्टे, त्वमिति च तमेव सशरीरजीवशरीरकमा-चष्टे इति सामानाधिकरण्यं मुख्यवृत्तं, प्रकरणाविरोधः सर्वश्रुत्यविरोधो ब्रह्मणि निरवद्ये कल्याणैकताने ऽविद्या-दिदोषगन्धाभावश्च, अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जी-वादन्य एवानन्दमयः परमात्मा, यदुक्तं तस्यैष एव शारीर आत्मेत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न स-म्भवतीति

टी० "एवञ्च सती"ति, जीवशरीरगतधर्मा जीवमिव जीवधर्माः

परमात्मानं न स्पृशन्तीत्यर्थः, पूर्वं यानि दूषणानि परमते स्वोक्तानि तानि स्वपक्षे नायान्तीत्याह "अत" इत्यादिना, अतः—सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वोपपादनात्, अयं हेतुः प्रकरणाविरोधादीनामपि साधारणः पदद्वयावगतविशेषणापरित्यागेन विशेष्यैक्यात् सामानाधिकरण्यस्य मुख्यत्वसिद्धिः प्रकरणाविरोध इति "तदैक्षत" "ऐतदात्म्यमिदं सर्वम्" "अनुप्रविश्य नामरूपे व्याकरवाणी"त्यादिवाक्याविरोध इत्यर्थः । सर्वश्रुत्यविरोध इति भेदश्रुतिघटकश्रुत्यविरोध उक्तः, अविद्यादिदोषगन्धाभावश्चेति उभयलिङ्गत्वश्रुतिसिद्धार्थविरोधाभाव उक्तः, पूर्वोक्तजीवगतधर्मास्पर्शस्य फलमविद्याद्यभाव इति न पौनरुक्त्यम् । पूर्वपक्षिणा जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य राद्धान्तानुगुणत्वमाह "अत" इति, अतस्तत्त्वम्पदयोः प्रवृत्तिनिमित्तस्यावश्याश्रयणीयत्वात् त्वं-शब्दावगतधर्माणां ब्रह्मणि साक्षादन्वयविरोधेन जीवद्वाराऽन्वयात् द्वारभूतजीवाद् द्वारिणो ब्रह्मणो वैलक्षण्यसाधकं सामानाधिकरण्यमित्यर्थः । उक्तमर्थं परमप्रकृतेन सङ्गमयति "इति विज्ञानमयादि"ति, इति-शब्दोहेतौ पूर्वपक्षे जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य भेदावहत्वादेतदधिकरणसाध्यमानन्दमयस्य जीवादन्यत्वं सुस्थमित्यर्थः । अथ शारीरत्वश्रवणं पूर्वपक्षहेतुमनुवदति "यदुक्तमि"ति । परिहरति—

सू० तदयुक्तम्, अस्मिन्प्रकरणे सर्वत्र तस्यैष एव शारीर आत्मा यः पूर्वस्येति परमात्मन एव शारीरात्मत्वाभिधानात् कथं "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्याकाशादिस्रज्यवर्गस्य परमकारणत्वेन प्रतिज्ञा तज्जीवव्यतिरे[1]कस्य-परस्य ब्रह्मणः आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशादीनामन्नमयपर्य्यन्तानान्तच्छरीरत्वमवगम्यते "यस्य पृथिवी शरीरं यस्यापः शरीरं यस्य तेजश्शरीरं यस्य वायुः

१ जीवव्यतिरिक्तस्य परस्येति तु पा० ।

शरीरं यस्याकाशः शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते, अतस्तस्माद्वा एतस्मादात्मन इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः, प्राणमयं प्रस्तुत्याह "तस्यैष एव शारीर आत्मा यः–

टी० "तदयुक्त"मिति, ननु प्राणमयपर्यायस्थशारीरात्म-शब्दो मनोमयपरः, मनोमयपर्यायस्थस्तु विज्ञानमयपरः, तत्तदन्तरसद्भावज्ञापनपरत्वाच्छारीरात्म-शब्दस्य, अतस्सर्वत्र शारीरात्मत्वं परमात्मन एवेति कथमवगतमिति पृच्छति "कथमि"ति, प्रतिवक्ति "तस्माद्वा" इत्यादिना, अन्नमये शारीरात्मत्वकण्ठोक्त्यभावात् प्राणमये "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"त्युक्तत्वाच्च तस्य वाक्यस्यार्थं विवक्षुस्तत्संघटनायाह "तस्माद्वा" इति, आकाशादिसृष्टेः पश्चाद्धि जीवस्य करणकलेवरसृष्टिरतस्ततः पूर्वं जीवस्य सृष्टृत्वमत्वादाकाशादिस्रष्टृत्वं जीववैलक्षण्यसाधकं तस्य जीवविलक्षणस्यात्म-शब्देनाभिधानादात्म-शब्दस्य पुत्रादिवत्सप्रतियोगिकत्वादन्नमयादीनां परमात्मशरीरत्वमर्थादवगतमित्यर्थः । शरीरत्वं कण्ठोक्तं चेत्याह "यस्य पृथिवी"ति, अत इति श्रुत्यन्तरेषु शरीरत्वस्य कण्ठोक्तत्वात् "तस्माद्वा" इति, वाक्य आत्म-शब्दनिर्देशेन अन्नमयादीनां शरीरत्वस्यार्थसिद्धत्वाच्च परमात्मैवान्नमयस्यात्मेत्यवगत इत्यर्थः । एवमात्मशब्दनिर्दिष्टः परमात्मैवान्नमयस्यात्मेति यः पूर्वस्येत्युत्तरत्रानुवादस्य पुरोवादनिर्वाहः कृतः । उपादित्सितस्य तस्यैष इति वाक्यस्य प्राणमयपरत्वज्ञापनायाह "प्राणमय प्रस्तुत्ये"ति, तद्व्याचष्टे–

श्रु० पूर्वस्ये"ति पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा स एव तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः, एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्,

आनन्दमये त्वेष एवेति निर्देशः तस्यानन्यात्म[१]कत्वं दर्श-
यितुं, तत्कथं विज्ञानमयस्यापि पूर्वोक्तया रीत्या परमात्मैव
शारीर आत्मेत्यवगतः, एवं सति विज्ञानमयस्य यः
शारीर आत्मा स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते
आनन्दमयस्याभ्यासावगतपरमात्मभावस्य परमात्मनः स्व-
यमेवात्मेत्यवगम्यते

टी० "पूर्वस्ये"ति, य इति प्रसिद्धवन्निर्देशः श्रुत्यन्तरसिद्धिमेतत्क-
कारणसिद्धिञ्च ज्ञापयतीत्यभिप्रायेण श्रुत्यन्तरसिद्धः परमकारणभूत इति
विशेषणाद्वयमुक्तम् । उक्तमर्थं मनोमयादावतिदिशति "एवमि"ति, आन-
न्दमयस्य परमात्मत्वमयुक्तं तस्यात्मान्तरश्रवणादित्यत्राह "आनन्दमये
त्वि"ति, अनन्यात्मत्वं दर्शयितुं "पतिं विश्वस्यात्मेश्वरं" न "तस्येशे कश्च-
न "नान्योऽतोऽस्ति द्रष्टे"त्यादिवदयन्निर्देश इत्यर्थः, अत्रोपपत्तिजिज्ञासया
पृच्छति "तत्कथमि"ति, अनन्यात्मत्वप्रदर्शनार्थत्वं कथमित्यर्थः । परिह-
रति "विज्ञानमयस्यापी"ति, आनन्दमयं प्रति श्रूयमाणे यः पूर्वस्येत्यादि-
वाक्ये पूर्वशब्दविवरणार्थं विज्ञानमयस्येत्युक्तं, विज्ञानमयशारीरात्मनः पर-
मात्मत्वे सिद्धे ह्यानन्दमयशारीरात्मनः परमात्मत्वसिद्धिरिति शङ्काव्युदा-
साय विज्ञानमयस्यापीत्युक्तं, पूर्वोक्तया—प्राणमयादावुक्तया । ततः किमि-
त्यत्राह "एवं सती"ति, अभ्यासावगतपरमात्मभावस्येति आनन्दं ब्रह्मणो
विद्वानिति पूर्वमभ्यस्तस्यानन्दस्य ब्रह्मसम्बन्धित्वनिर्देशात् ब्रह्मणश्चा-
नन्दो ब्रह्मेत्यानन्दशब्दवाच्यत्वादानन्दो ब्रह्मेति व्यजानादित्यानन्द-श-
ब्दवाच्यत्वादानन्दो ब्रह्मेति व्यजानादित्यानन्दशब्दवाच्यस्याने एतमा-
नन्दमयमात्मानमुपसङ्क्रम्येत्यानन्दमयशब्दनिर्देशेनानन्दानन्दमयशब्दयोः
पर्यायत्वाच्च आनन्दमयस्य परमात्मभावोऽवगत इत्यभिप्रायः । अभ्यासाव-
गतपरमात्मभावत्वं पुच्छब्रह्मवादनिरासयुक्तीनामुपलक्षणतयोक्तं, ब्रह्मपुच्छं

१ अनन्यात्मत्वमिति पा० ।

प्रतिष्ठेति पुच्छब्रह्मप्राधान्येन निर्दिष्टञ्चेत्सोऽकामयतेत्यऽनन्तरवाक्येपि तच्छब्देन पुच्छब्रह्म परामर्शनीयं तदयुक्तं स इति पुल्लिङ्गनिर्देशात्, आत्मन आकाशस्सम्भूत इत्यात्मशब्दाभिप्रायः पुँल्लिङ्गत्वनिर्देश इति चेन्न व्यवहितादव्यवहितस्यैवानन्दमयस्य परामर्शनीयत्वात् "तस्यैष एव शारीर आत्मेत्यनन्तरपूर्वोक्तस्यात्मनः पुँल्लिङ्गनिर्देशेन परामर्श इति चेन्न तस्यान्नमयादिसर्वपर्यायसाधारण्येन एतत्पर्यायप्रधानप्रतिपाद्यत्वाभावात्, अत प्रधानप्रतिपाद्याव्यवहितानन्दमय एव स इति परामृश्यते, अतःकारणभूतस्स एव परमात्मेति ।

सू० एवञ्च स्वव्यतिरिक्तचेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीरआत्मा, अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते, अतो विज्ञानमयाज्जीवादन्य एव परमात्माऽऽनन्दमयः। आह नायमानन्दमयोजीवादन्यः—विकार—शब्दस्य मयट्प्रत्ययस्य श्रवणात् "मयड्वैतयो"रिति प्रकृत्य

टी० एवं विज्ञानमयस्य जीवस्यान्तर्यामितया व्यपदेशादभ्यासावगतपरमात्मभावात्तदन्तरत्वेन आत्मशब्दव्याख्यानपर्यवसानभूमित्वादात्म-शब्दवाच्यस्यादावेव जगत्कारणत्वेनोक्तत्वादनन्तरकारणवाक्ये सोऽकामयतेति पुँल्लिङ्गनिर्देशात् पुच्छतया निर्दिष्टब्रह्मणोऽप्यानन्दमयानतिरिक्तत्वाद्वक्ष्यमाणसूत्रस्थहेतुभिश्चानन्दमयः परमात्मेत्यवगतं, तस्य च परमात्मन आत्मान्तरवत्त्वम् "आत्मेश्वरं" न "तस्येशे कश्चन" नान्योऽतोस्ति द्रष्टेत्येवमादिश्रुतिविरुद्धमुपपत्तिविरुद्धञ्च आकाशादिसृज्यवर्गपरमकारणत्वादिना शारीरात्मनः परमात्मत्वमवगतमेवम् आनन्दमयस्य शारीरात्मनश्च परमात्मत्वे सति परमात्मद्वित्वासंभवात्परमात्मन आत्मान्तरवत्त्वव्याघाताच्च तस्यैष एव शारीर आत्मेत्युक्तिरात्मेश्वरमित्यादिवत्तस्यानन्यात्मत्वज्ञापनार्थेत्यर्थसामर्थ्यादवगम्यत इत्यर्थः। शारीरात्मत्वम्परमात्मन एव

मुख्यमित्याह "एवञ्चे" ति निरुपाधिक इति क्वचित्कदाचित्किञ्चित्प्रतिकर्मानुगुणं हि कश्चिदात्मा भवति, अयन्तु सर्वेषां सर्वदा सर्वत्राकर्मवश्यः स्वतः आत्मेति निरुपाधिक इति भावः। तदेवोपपादयति "अत एवे" ति अभियुक्तैर्भगवद्बोधायनादिभिः "संहितमेतच्छारीरक" मिति हि वृत्तिकारवचः सूत्रार्थमुपसंहरति "अत" इति, मुखान्तरेणानन्दमय–शब्दस्य परमात्मपरतामाक्षिप्य प्रतिवक्ति विकारेत्यादिना सूत्रेण, तत्र पूर्वपक्षमुपन्यस्यति "आहेत्या" दिना, मयटो विकारवाचित्वमुपपादयति "मयड्वैतयोरि," त्यादिना, विकारार्थत्वस्य ज्ञापनार्थम्मयड्वैतयोरित्युक्तम्। एतयो "स्तस्य विकारः अवयवे च प्राण्योषधिवृक्षेभ्य इति" प्रकृतयोर्विकारावयवयोरिति हि तस्यार्थः। अयमर्थः प्राग्दीव्यतोऽण् इत्यधिकारसूत्रं तस्मिन्नर्थद्वये वृद्धसंज्ञानां शरादिगणान्तर्गतानां च मयडेव नाण् प्रत्यय इत्यपवदति–

सू० "नित्यं वृद्धशरादिभ्य" इति विकारार्थे मयट् स्मर्य्यते वृद्धश्चायमानन्द–शब्दः। ननु प्राचुर्य्येऽपि मयडस्ति "तत्प्रकृतवचने मयडि" ति स्मृतेः, यथाऽन्नमयो यज्ञ इति, स एवायम्भविष्यति, नैवम् अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम्, अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम्। किञ्च प्राचुर्य्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति, तथा हि आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्ज्जनीयम्, आनन्दस्य हि प्राचुर्य्यं दुःखस्याल्पत्वमवगमयति दुःखमिश्रत्वमेव हि जीवत्वम्, अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम्। किञ्च लोके मृण्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च पर्णमयी जुहूः शमीमय्यः स्रुचो दर्भमयी रशनेत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं धियमारोहति जीवस्य चानन्दविकारत्वम-

स्यैव तस्य स्वत आनन्दरूपस्य सतः संसारित्वावस्था तद्विकार एवेति, अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति तदेतदनुभाष्य परिहरति–

टी० "नित्यं वृद्धशरादिभ्य" इति, सूत्रं "वृद्धिर्यस्याचामादिस्तद्वृद्ध"-मित्यादिसूत्रेणानन्दशब्दस्य वृद्धिसंज्ञकत्वाद्विकारार्थे मयट् प्रत्ययो विहित इति सिद्धान्तच्छायया चोदयति "नन्वि"ति, "स एवायं भविष्यती"ति, विकारार्थत्वेऽपि जीवात्मनि विकारासम्भवात् विकारपरत्वं त्वन्मतेऽप्यनुपपन्न-मिति भावः । अव्ययायायन्यायेन परिहरति "नैवमि"ति, अतः–उपक्रमदर्शनात् औचित्यादुपक्रमप्रतिपन्नस्वीकारौचित्यात् प्राचुर्यार्थत्वेऽप्यभिमतासिद्धिमाह "प्राचुर्ये"ति, जीवादनन्यत्वे हेतुमाह "तथा ही"ति, दुःखमिश्रत्वे-हेतुमाह "आनन्दस्ये"ति, प्राचुर्यार्थस्वभावात् प्रतियोगिन्यपेक्षिते सुख-प्रतिसम्बन्धितया साहचर्यप्रसिद्धदुःखगताल्पत्वस्य प्रतियोगित्वमिति भावः ततः किमित्यत्राह "दुःखे"ति, उभयथाऽपि जीवत्वसिद्धौ किमिति विकारा-र्थत्वमाद्रियत ? इत्यत्राह 'अत' इति, अतः प्राचुर्येऽपि जीवान्यत्वासिद्धेरौचित्यस्याधिकत्वाच्च विकारार्थत्वमेव ग्राह्यमित्यर्थः । प्रयोगप्राचुर्यमाह "किञ्चे"ति, अवयवार्थादपि प्राचुर्यार्थे प्रयोगबाहुल्यात्तद्व्यावृत्त्यर्थं प्रथ-मतरमिति तरपः प्रयोगः । प्रसिद्धमप्ययोग्यं न ग्राह्यमिति शङ्कायां जीवस्य विकारित्व[१]मुपपादयति "जीवस्य चे"ति, तर्ह्यजत्वनित्यत्वादिविरोध इत्यत्राह "तस्ये"ति, स्वत आनन्दरूपस्य दुःखित्वाद्यवस्थायोगो जीवत्वम् अतः आनन्दविकारो जीवः आनन्दात्मकस्वरूपापेक्षया नित्यत्वादिवाद इत्यर्थः शङ्कायास्सूत्रस्थत्वात्तदनुभाष्येत्युक्तं, सूत्रमुपादत्ते–

सू० विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥

भा० नैतद्युक्तं कुतः प्राचुर्यात् परस्मिन् ब्रह्मण्यानन्दप्राचु-

१ विकारत्वमिति पा० ।

र्थ्यात्, प्राचुर्य्यार्थे च मयटः सम्भवात्, एतदुक्तम्भवति शनगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवात् ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति तस्मिन् ब्रह्मणि विकारासम्भवात् प्राचुर्य्येऽपि मयड्विधिसद्भावाच्चानन्दमयः परं ब्रह्मेत्यौचित्यात्प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न सम्भवति । किञ्चौचित्यं प्राणमये एव परित्यक्तं तत्र विकारार्थत्वासम्भवात्, अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वं प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्रचुरत्वाद्वा । न च प्राचुर्य्य मयट् प्रत्ययस्य प्रौढिर्नास्ति अन्नमयो यज्ञः शकटमयी यात्रेत्यादिदर्शनात्,

टी० "विकारशब्दान्नेति चेन्न प्राचुर्यात्" द्वितीयस्य नञो निषेध्यं पूर्वपक्षिमतस्योपपन्नत्वमित्यभिप्रायेण नैतद्युक्तमित्युक्तम् । प्रतिज्ञां हेतुपदेन घटयितुम् आकाङ्क्षां दर्शयति "कुत" इति, कस्मिन् कस्य प्राचुर्य्यमित्यपेक्षायामाह "परस्मिन्नि"ति, न केवलं प्राचुर्यरूपार्थसद्भावेनालं शब्दशक्तिश्चापेक्षितेति शङ्कायां सूत्राभिप्रेतार्थमाह "प्राचुर्यार्थे चे"ति, मयट्प्रत्ययस्य प्राचुर्यार्थत्वमपि सम्भवतु तथाऽपि विकारार्थत्वपरित्यागे को हेतुरित्यत्राह "एतदुक्तमि"ति, अभ्यस्यमानानन्दयोग उत्तरसूत्रगतानामन्येषामपि हेतूनां प्रदर्शनार्थः अयोग्यत्वं त्यागहेतुरित्यर्थः । बाधकसद्भावाद्विकारार्थत्वं प्रस[1]ज्यते चेत् पूर्वोक्तसाधकसद्भावात्तत्स्वीक्रियतामिति शङ्कायां परेण विकारार्थत्वस्वीकारसाधकतयोक्तमध्यप्रायत्यायं प्रयोगप्राचुर्यं च परिहरति "औचित्यादि"ति, औचित्यं–प्रकरणौचित्यं तल्लिङ्गबाध्यं प्रयोगप्रसिद्धिरपि गङ्गापदादिष्वर्थविरोधेन बाधिता, अतः उभयमपि प्रमा-

१ त्यज्यते चेदिति पा० ।

णान्तराबाधितत्वे सत्येवार्थसाधकम्, अत्र त्वर्थविरोधाच्च साधकमित्यर्थः अर्थविरोधात्, आनन्दमये जीवत्वविकारत्वयोः पूर्वोक्तादसम्भवादित्यर्थः। प्रकरणरूपमौचित्यमेव नास्तीत्याह "किञ्चे"ति, अर्थान्मयट्प्रत्ययस्य विकारवाचित्वं प्रकरणविवक्षितमिति शङ्कां शमयन् प्राणमयशब्दस्यार्थमाह "अत" इति, प्राण-शब्दोऽननरूपवृत्तिमात्रपरः मयट् प्रत्ययः प्राचुर्येण आश्रयान्तरगतस्यानन्दप्राचुर्यस्य आश्रयान्तरगतमानन्दाल्पत्वं न सह सम्बन्धमभिदधातीति तत्र सम्बन्धमात्रपरत्वेन प्रथमयोजनायां प्राणनवृत्तिमान्नित्यर्थः । कृत्स्नमुख्यार्थत्यागादपि मुख्यार्थैकदेशाङ्गीकारोन्याय्य इति भावः । यद्वा प्राणाख्यवृत्तिविशेषसम्बन्धित्वमात्रेण प्रत्ययस्यानर्थक्यादमुख्यार्थत्वं वरमिति भावः । उचिततमयोजनान्तरमाह "प्राणापानादिष्वि"ति, पूर्वपक्षयुक्त्यन्तरमनुवदति—

सू० यदुक्तमान्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति तदसत्, तत्प्रचुरत्वं हि तत्प्रभूतत्वमेव, तच्चेतरस्य सत्तां नावगमयति, अपि तु तस्याल्पत्वं निवर्त्तयति, इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ, इह च प्रमाणान्तरेण तदभावोऽवगम्यते अपहतपाप्मेत्यादिना, तच्चैतावदेव वक्तव्यं ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्य स्वल्पत्वमपेक्ष्य इति उच्यते च तत् स एको मानुष आनन्द इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशाऽऽन्नः प्रभूत इति,

टी० "यदुक्तमि"ति, आनन्दप्राचुर्यप्रतियोगितत्समानाश्रयं दुःखाल्पत्वमेव आश्रयान्तरगतस्यानन्दप्राचुर्यस्यानन्दात्मत्वमाश्रयान्तर्गतं न प्रतियोगितामर्हति स्वाश्रयगतदुःखाल्पत्वस्यैवान्तरङ्गत्वेन ग्राह्यत्वादिति पराभिप्रायः । दूषयति "तदसदि"ति, प्रमाणान्तरविरुद्धप्रतियोग्यपेक्षत्वं न युक्तम्, अपि तु प्रमाणान्तरसिद्धप्रमाणान्तराविरुद्धप्रतियोग्यपेक्षत्वमेव

युक्तमिति परिहर्तुं प्रचुर-शब्दस्यार्थान्तरसद्भावव्यावृत्त्यर्थमाह "तत्प्रचुरत्वं ही"ति, ततः किमित्यत्राह "तच्चे"ति, तर्हि व्यवच्छेद्याभावे प्रत्ययवैयर्थ्यमित्यत्राह "अपि त्वि"ति, यदि प्राचुर्यवाची मयट्प्रत्ययः स्वयं नार्थान्तरसद्भावे प्रमाणन्तर्हि तत्सद्भावः केनावगम्यत? इत्यत्राह "इतरे"ति, ततः किमत्यपेक्षायां पराभिमतप्रतियोग्यभावो ब्रह्मणि प्रमाणसिद्ध इत्याह "इह चे"ति, तर्हि ब्रह्मणि प्रमाणविरुद्धप्रतियोगिदुःखान्वयद्योतको मयडर्थस्त्यज्यतामितरथा तस्यानन्दप्राचुर्यस्य प्रतियोगि किं? मित्यत्राह "तत्रैतावदि"ति, प्रमाणान्तरसिद्धार्थान्तरप्रतियोगिकं प्राचुर्यमभिदधतो मयट्प्रत्ययस्य स्वयमर्थान्तरसाधकत्वाभावात् ब्रह्मणि च दुःखसम्बन्धस्य प्रमाणबाधितत्वात् जीवानन्दाल्पत्वस्य लोकसिद्धत्वाच्च ब्रह्मानन्दप्राचुर्यप्रतियोगिजीवानन्दाल्पत्वमित्यर्थात्सिद्धमित्यर्थः । जीवानन्दाल्पत्वस्य प्रतियोगित्वं न केवलमर्थसिद्धमपि तु कण्ठोक्तं चेत्याह "उच्यते चे"ति, अयमर्थः-यदि सजातीयाल्पत्वं समानाश्रयं प्रतियोगि तद् व्याहतं यदि विजातीयं सामानाश्रयं तत्प्रमाणान्तराधीनसद्भावासद्भावम् अन्याश्रयमपि सजातीयं विजातीयं वा प्रतियोगि मानान्तरावसेयं तत्र च यथा तेजःप्रचुरो गभस्तिमानित्युक्ते तेजःप्राचुर्यस्य चन्द्रादिगतं सजातीयतेजोमान्द्यं प्रतियोगि न तु गभस्तिमद्गततिमिराल्पत्वादि तद्धि प्रमाणबाधितम् इतरत्प्रमाणसिद्धं तारतम्यवाचिनंशब्दस्य सजातीयप्रतियोगिज्ञापनपरत्वं स्वारसिकं बलवत्तर इत्युक्ते पुरुषान्तरबलं हि प्रतियोगितया प्रतीयते न तु स्वगतं विजातीयज्ञानम् अतोऽन्तरङ्गत्वं विफलम् एवं ब्रह्मणि समानाश्रयमानन्दविजातीयदुःखाल्पत्वस्वरूपं प्रतियोगि श्रुतिनिषिद्धम् अन्याश्रयं सजातीयाल्पत्वलक्षणं प्रतियोगि श्रुत्यैव सिद्धमिति जीवस्यानन्दविकारत्वमनुवदति-

मू० यच्चोक्तं जीवस्यानन्दविकारत्वं सम्भवतीति तदपि नोपपद्यते, जीवस्य ज्ञानानन्दैकस्वरूपस्य केनचिदाकारेण मृद इव घटाद्याकारेण परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः, संसारदशायान्तु कर्मणा ज्ञानानन्दौ सङ्कुचितावि-

त्युपपादयिष्यते, अतश्चानन्दमयो जीवादन्यः परं ब्रह्म।

इतश्च जीवादन्य आनन्दमयः

सू० तद्धेतुव्यपदेशाच्च ॥ १५ ॥

"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाती"ति,

एष एव जीवानानन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते, अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्यः आनन्दमयः परमात्मेति विज्ञायते, आनन्दमय एवात्रा-नन्द-शब्देनोच्यते इति चानन्तरमेव वक्ष्यते

इतश्च जीवादन्य आनन्दमयः ।

टी० 'यच्चोक्तमि"ति, आनन्दविकारत्वम्मयड्वाच्यमित्यर्थः दूषयति 'तदपी"ति, स्वरूपान्यथाभावलक्षणविकारार्थत्वमेव मयटो व्युत्पत्तिसिद्धं तच्चात्र नास्तीत्यर्थः। ज्ञानानन्दौ जीवस्य स्वरूपञ्चेत्कथं दुःखाज्ञानसम्भव इत्यत्राह "संसारदशायान्त्वि"ति, सूत्रार्थं प्रकृतार्थेन सङ्गमयति "अत" इति, प्रसिद्धतरमुख्यार्थासम्भवे तदनुग्राहकहेत्वननुरोधेन सम्भवदनतिप्रसिद्धमुख्यार्थानुग्राहकहेतूनामनुरोद्धव्यत्वमस्मिन् प्रकरणे व्युत्पाद्यमिति स्फुटम्। हेत्वन्तरञ्चाह सूत्रकारः 'तद्धेतुव्यपदेशाच्च" पूर्वोक्तमानन्दप्राचुर्य्यमप्येतेनोपपादितम्भवति अतितरसुकरमोक्षप्रदानक्षमत्वं हि नितरामानन्दहेतुर्भवति। किञ्च धनप्रचुरो हि पुरुषोऽन्यस्मै तदभिप्रेतं धनं ददातीति सूत्रानन्तर्यम्। अस्य सूत्रस्य विषयवाक्यमाह 'को ह्येवे"ति, श्रुतेरर्थमाह "एष एवे"ति, अन्यात्–प्राण्यादिति भोगापवर्गसुखहेतुत्वमुक्तं यद्वा सत्ताहेतुत्वं सुखहेतुत्वं चोक्तं पूर्वोक्त एव सम्यगर्थः। फलितहेतुमाह "अतश्चे"ति, कर्मकर्त्रैक्यं न सम्भवतीति हेतुः, आनन्दशब्दवाच्यस्य ह्यानन्दयितृत्वं यु[१]क्तं न त्वानन्दमयस्येत्यत्राह "आनन्दमय एवे"ति, एवमानन्द-

(१) आनन्दयितृत्वमुक्तमिति पा० ।

मयपदप्रकृतिप्रत्ययार्थविषयं सूत्रत्रयं प्रवृत्तम् । अथानन्दवल्लिमादिमध्यान्ततोऽनुसन्धायार्थं निष्क्रष्टुकामः प्रथममुपक्रमस्थहेतुम् अवतारयति—

सू॰ मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

वृ॰ "सत्यं ज्ञानमनन्तब्रह्मे"ति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते नत्तु जीवस्वरूपादन्यत् परं ब्रह्म तथा हि "ब्रह्मविदाप्नोतिपरमि"ति, जीवस्य प्राप्यतया ब्रह्म निर्दिष्टं "तदेषाऽभ्युक्तेति" तद् ब्रह्माभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य ऋगेषाऽध्येतृभिरुक्ता ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रवर्णेन क्रियत इत्यर्थः, जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव, अनन्तरञ्च "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैः मन्त्रश्चै[1]तदेव विशदीक्रियते अतो जीवादन्य आनन्दमयः अत्राह यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यं तथाऽपि न वस्त्वन्तरं जीवात् मान्त्रवर्णिकं ब्रह्म

टी॰ "इतश्चे"ति, "मान्त्रवर्णिकमेव च गीयते" अत्रार्थमाह "सत्यमि"ति, शाब्द एवार्थः न तुच्छब्दः फलित इति ज्ञापयितुं वर्ण—शब्दः। ततः किमित्यत्राह "तन्वि"ति, ब्राह्मणस्थपरशब्दप्रत्यभिज्ञापनाय परं ब्रह्मेत्युक्तं मान्त्रवर्णिकस्य जीवादन्यत्वं कथमित्यत्राह "तथा ही"ति, । प्राप्यत्वमस्तु ततः किं मान्त्रवर्णिकब्रह्मणो जीवादन्यत्वे इत्यपेक्षायां ब्राह्मणमन्त्रयोर्घटकं वाक्यमाह "तदेषाऽभ्युक्ते"ति, तद्व्याचष्टे "तदि"ति, तत्पदं ब्रह्मवाचि अभिमुखीकरणं चेतनधर्म इति तद्व्यावृत्त्यर्थमाह "प्रतिपाद्यतये"ति, एषेति पदस्य विशेष्यमाह "ऋगि"ति, उक्तेति कथिते पौरुषेयत्वशङ्का स्यादिति तद्व्युदासार्थमाह "अध्येतृभिरि"ति, किमुक्तं भवतीत्यत्राह "ब्राह्म-

1 मन्त्रैश्च तदेव इति पा॰ ।

णे''ति, श्रुतिषु मन्त्राणां प्राबल्यं केचिद्वदन्ति तन्निरासार्थमाह "ब्राह्मणो-क्ते''ति, ब्राह्मणोक्तार्थविशदीकरणरूपो मन्त्र इति प्रयोजकं संग्रहेणोक्तस्य विस्तरेण कथनं विस्तृतस्य प्रतिपत्तिसौकर्याय सङ्ग्रहेण कथनमपि वैशद्या-वहमित्यनिर्दोषत्वाविशेषान्मन्त्रब्राह्मणयोः प्राबल्यदौर्बल्यविभागोऽनुपपन्न इति भावः । एवं मन्त्रवर्णेन जीवब्रह्मभेदसिद्धिं फलितां दर्शयति "जीव-स्ये''ति, प्राप्तुरस्योपासकात्मस्वरूपस्य प्राप्तव्यस्य परब्रह्मणश्च कथमैक्यमि-त्यर्थः मान्त्रवर्णिकं ब्रह्म जीवादन्यदस्तु अस्यैवानन्दमयत्वं कथ? मित्यत्राह "अनन्तरञ्चे''ति, पूर्वस्मिन्नस्मिन्नपि सूत्रे च-शब्दो हेतुसमुच्चये विकारश-ब्दादिति सूत्रे स्वतन्त्रहेत्वन्तराभावान्न च-शब्दः तद्धानन्दमयोऽभ्यासा-दिति सूत्रशेषम् उत्तरसूत्रस्य शङ्कामाह "अत्राहे''ति, उपासकप्राप्यभेदे ऽभिहिते सतीत्यर्थः ॥

सू॰ किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धं निर्विशे-चिन्मात्रैकरसं शुद्धस्वरूपं तदेव सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रेण विशोध्यते तदेव च "यतो वाचो निवर्तन्ते ऽप्राप्य मनसा सहे''ति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते, अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आ-नन्दमय इति, अत उत्तरं पठति–

सू॰ नेतरोऽनुपपत्तेः ॥ १७ ॥

परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः कुतः अनुपपत्तेः, तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते, इदमेव हि निरुपाधिकं विपश्चित्त्वं सोऽकामयत बहु स्यां प्रजायेयेति सत्यसङ्कल्प-त्वप्रदर्शनेन विवरिष्यते विविधं पश्यच्चित्त्वं हि विपश्चित्त्वं

टी॰ तस्यैवेति कारणाविद्याच्छादिका कार्याविद्या विक्षेपिकाऽवि-

क्षा च विवक्षिता समस्तशब्देनगन्धशब्देनापारमार्थ्यं फलितम् । अपुनस्सव-न्धोवाभिप्रेतः शुद्धं—कर्मतत्फलान्वयरहितं। निर्विशेषत्वमेवोपपादयति ''त-देवे''ति, ज्ञानपदेन निर्विशेषत्वमर्थसिद्धं ज्ञानस्य ज्ञानान्तराश्रयत्वाऽयोगात् वाङ्मनसनिवृत्तिवचनाच्च । निर्विशेषत्वसिद्धिमाह ''तदेव चे''ति, तदेव—शुद्धस्वरूपमेव उपासकप्राप्यभेदोऽवस्थाभेदेनाप्युपपन्न इति न जीवविल-क्षणत्वसिद्धिरित्यर्थः । नेतरोऽनुपपत्तेः'' इतर—शब्दस्य सप्रतियोगिकत्वात् परमात्मन इत्युक्तम् । अनुपपत्तेरित्यस्मिन् पदे पञ्चम्यर्थं पश्चाद्दृश्यन् अनुपप-त्तिस्वरूपमाह ''तथे''ति, निरुपाधिकं विपश्चित्त्वमिति कर्मविशेषेन्द्रिया-नपेक्षत्वं निरुपाधिकत्वम्, इह चोपाधिरस्ति चेत्स वक्तव्यः, तदभावादेव तदनुक्तिरिति केवलविपश्चिच्छब्दो निरुपाधिकविपश्चित्त्वमाहेत्यर्थः न केवलनिरुपपदत्वाद्विपश्चित्त्वस्य निरुपाधिकत्वमर्थसिद्धं श्रुतिसिद्धमपी-त्याह 'इदमेवे''ति, मुक्तस्य निरुपाधिकविपश्चित्त्वं सम्भवतीति शङ्कायां किं भवदभिमतमुक्तस्य विपश्चित्त्वोपपत्तिः? उतास्मदभिमतस्येति विकल्पमभि-प्रेत्य स्वाभिमतस्य मुक्तस्य तदनुपपत्तिरिदमेवेत्यादिभाष्येणोच्यते विप-श्चिच्छब्दार्थे ज्ञाते हि जीवे तदनुपपत्तिर्वाच्येत्यत्राह ''विविधमि''ति तर्हि विपश्चिदिति वक्तव्यम् इत्यत्राह—

मू॰ पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः, यद्यपि मुक्तस्य विप-श्चित्त्वं सम्भवति तथाऽपि तस्यैवात्मनः संसारदशायामवि-पश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते, निर्विशेषचिन्मात्रताऽऽपन्नस्य मुक्तस्य विविधदर्शनाभावा-त्सुतरां विपश्चित्त्वं न सम्भवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तं, ''यतोवाचो-निवर्त्तन्ते इति च वाक्यं यदि च वाङ्मनसयोर्ब्रह्मणो निवृ-त्तिमभिदधीत न ततो निर्विशेषतां वस्तुनोऽवगमयितुं

शक्नुयात् अपितु वाङ्मनसयोस्तत्राप्रमाणतां वदेत्, तथा च सति तस्य तुच्छत्वमेवापद्यते ॥

टी० "पृषोदरादित्वादि"ति, "पृषोदरादीनि यथोपदिष्टमि"ति पाणिनिः पृषच्छब्दा वयवतकारलोपवत् यच्छब्दलोपः, पाणिनिवदाप्र- तममुनिभिः कृतनिर्वाहत्वादीदृशशब्दानां साधुत्वस्य पाणिन्यभिमतत्वम् अनेन ज्ञातं भवति अतो विविधं विपश्यच्चेतनत्वं विपश्चित्त्वमित्यर्थः चिच्छब्दस्य ज्ञानवाचित्वे विविधं पश्यच्चित्त्वमिति बहुव्रीहिः, स्वपक्षे मु- क्तस्य निरुपाधिकविपश्चित्त्वायोग उक्तः । अथ पराभिमतमुक्तस्य विपश्चित्त्वा- योगमाह "निर्विशेषे"ति विपश्चित्त्वमात्रमेव न सम्भवतीत्यभिप्रायेण सुत- रामित्युक्तं, न सम्भवतीत्यत्रेति-शब्दस्सूत्रस्थपञ्चमीव्याख्यान, न केवलं विपश्चिच्छब्दमात्रासङ्गतिस्सर्वप्रमाणविरोधश्चेत्याह "न केनापी"ति, आ- र्थगुणनिषेधपरस्य सत्यज्ञानादिवाक्यस्य परिहारः प्रथमसूत्रोक्तोऽनुसन्धेयः यतो वाचोनिवर्त्तन्त इत्यस्य वाक्यस्य निर्विशेषपरत्वं व्युदस्यति "यतो वा- च" इत्यादिना, यदीत्यनुज्ञानप्रदर्शनं तर्हि किमवगमये? दित्यपेक्षायां न केवलमिष्टाबोधकत्वं किन्त्वनिष्टबोधकत्वं चेत्यभिप्रयन्नाह "अपि त्वि"- ति, कथमस्यानिष्टत्वमित्यत्राह "तथा च सती"ति मनसोऽप्यगोचरत्वेन सर्वप्रमाणागोचरत्वं सिद्धं कृत्वा प्रमाणान्तरागोचरत्वमप्युपजीव्य तुच्छत्व- मापादितं किं सर्वथा वाङ्मनसनिवृत्तिरुच्यते उतेयत्तागोचरवाङ्मनसनि- वृत्तिः? द्वितीयशिरसोऽभ्युपगमो विवक्षित इति प्रथमे शिरसि तुच्छत्वमुक्तं, ब्रह्मविदाप्नोति परमिति पूर्वापरवाक्यविरोधात् । ब्रह्मणस्तुच्छत्वं व्याह- तमित्यत्राह—

सू० ब्रह्मविदाप्नोतीत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारण- त्वमानन्दैकतानत्वमितरान् प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृतत- दात्मत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं

शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयोर्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यतइति भ्रान्तजल्पितं यतो वाचो निवर्त्तन्त इति यच्छब्दनिर्दिष्टमानन्दं ब्रह्मणो विद्वानित्यानन्द—शब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं विद्वानिति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदनर्थकं वा[1]च्यानन्तर्गतञ्च स्यात्, अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुम् उपक्रम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिर्यतो वाचो निवर्त्तन्त इत्युच्यते एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेतीत्युच्यते । किंचास्य मान्त्रवर्णिकस्य विपश्चितः सोऽकामयतेत्यारभ्य वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेः मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव ।

सू० इतश्चोभयस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः

टी० "ब्रह्मविदि"ति, व्याहतार्थं श्रुतिर्न प्रतिपादयतीति चेत् तर्हि विशेषपरत्वेऽपि तुल्यमित्यभिप्रायेण तत्तद्वाक्यप्रतिपन्नान् गुणानाह "विपश्चित्त्वमि"त्यादिना, "ब्रह्मणा विपश्चिता" "आकाशस्सम्भूतः" "रसो वै सः" "एष ह्येवानन्दयाति" "सोऽकामयत बहु स्यां प्रजायेय" "तदनु प्रविश्य अथ सोऽभयङ्गतो भवति भीषाऽस्माद्वातः पवते" "स एको मानुष आनन्द" इत्येतेषां वाक्यानामर्थो विपश्चित्त्वमित्यादिना उक्तः । शतगुणिता-

[1] वाच्यानन्तर्गतं चेति पा० ।

त्तरक्रमेणेति निर्विशेषत्वं विवक्षितं चेत् गुणापकर्षो वाच्यः, गुणप्रकर्षमुक्त्वा वाङ्मनसानिवृत्त्यभिधानमानन्त्यविवक्षाकृतमित्यभिप्रायः, अन्यच्चेति आदित्यमण्डलान्तर्वर्त्तित्वादिकं विवक्षितम् । एवं पूर्वापरवाक्यव्याहतिपरिहारार्थं स्वरूपमङ्गीक्रियते चेत् तद्वद् गुणाश्च स्वीकार्या इत्युक्तं भवति, एवं प्रकरणविरोध उक्तः । अथ स्ववाक्यविरोधमाह "यतोवाच" इति, यच्छब्दनिर्दिष्टमानन्दमित्यत्र "कश्चैष मौनः यतो न वेद" इति सनत्सुजातोक्तश्लोकद्वयैकार्थ्यमनुसन्धेयं, व्यतिरेकनिर्देशेन भेदनिर्देशेन वैयधिकरण्येनेत्यर्थः, यच्छब्देनानन्दनिर्देशः, आनन्द–शब्देन प्रतिनिर्देशो ब्रह्मसम्बन्धित्वनिर्देशश्च वागविषयत्वे व्याहताः स्युः, विद्वानिति तद्वेदनाभिधानं मनोगोचरत्वाभावे व्याहतं स्यादित्यर्थः । अनर्थकं वाच्यानन्तर्गतं च स्यादिति अनर्थकं–व्याहतार्थं स्यात् व्याहतिपरिहारोऽभिमतश्चेत् ब्रह्म न शब्दवाच्यमितीदं समुद्रघोषादिवद्वाक्यमेव न स्यादित्यर्थः, वाक्यत्वे व्याहतिरनिवार्येति भावः । ब्रह्मणोऽशब्दगोचरत्वं ब्रह्म न शब्दगोचर इत्यनेनापि शब्देन व्याहतं स्यादिति चाभिप्रायः, सत्यं ज्ञानमिति स्वरूपस्य सत्यत्वं कण्ठोक्तं न गुणानामतस्तद्विरोध इति चेन्न तत्र सत्यपदेन ह्यविकारित्वमुक्तं न तु मिथ्यात्वव्यावृत्तिः, मिथ्यात्वव्यावृत्तिरुक्ताऽस्तु तथाऽपि गुणानां च सत्यत्वं दुरपह्नवं प्रमाणसिद्धत्वात् प्रामाणिकत्वं हि सत्यत्वं । किंच गुणानां सत्यत्वं कण्ठोक्तं "सत्यकामस्सत्यसङ्कल्पः" "त इमे सत्याः कामाः एतांश्च सत्यान् कामान्" इत्यादिभिरतः स्वरूपवद् गुणा अपि स्वीकार्याः प्रमाणोपपत्तिसाम्यात्, अतो वाङ्मनसानिवृत्तिर्न निर्विशेषत्वनिबन्धना । ननु न शब्देन मुख्यवृत्त्या प्रतिपाद्यते ब्रह्म अपितु लक्षणया अतो यतो वाच इति मुख्यवृत्तिविषयो निषेध इति विषयविभागान्न व्याहतिरिति चेन्न निवर्त्तन्त इत्यस्यैकस्य वाक्यस्य मुख्यत्वायानेकवाक्यत्वकल्पनाश्रयणायोगात् "भूयसां स्यात्सधर्मत्व"मिति न्यायादेकवाक्यस्वारस्यभङ्गेन अनेकवाक्यस्वारस्यं ह्यनुवर्त्तनीयम् । किंचात्र न हिंस्यात्सर्वाभूतानि अग्नीषोमीयं पशुमालभेतेतिवद्विषयविभागेनोभयमुख्यत्वं सिध्यति चेत् तदेव हि युक्तं, लोके च गामानय बलीवर्दं विनेति विषयविभागो मुख्यत्वानुरोधी दृश्यते अविरुद्धार्थः कः?

इत्यपेक्षायां विषयविभागं दर्शयति "अत" इति, वाङ्मनसनिवृत्तिरस्ति चेत् कथं वेदनवचन? मित्यत्राह "एवमि"ति, इयत्तारहितत्वेन वेदनमुच्यत इत्यर्थः, अनुपपत्तेरिति सौत्रपदस्य विपश्चिच्छब्दोक्तसर्वज्ञत्वानुपपत्तिरर्थ उक्तः । अथ सर्वशक्तित्वानुप[1]पत्तेरर्थान्तरमाह "किञ्चे"ति, इदं सूत्रं मान्त्रवर्णिकसूत्रोक्तहेत्वन्यथासिद्धिपरिहारपरं तच्छेषमिति स्व तन्त्रहेतुपरत्वाभावाच्च-शब्दाप्रयोगः । एवमनेन सूत्रद्वयेन उपक्रमस्य हेतुरनुसंहितः । अथ मध्यगतं स्फुटतरं हेतुमनुसंधत्तेऽनन्तरसूत्रेण, आनन्दमयस्य जीवादन्यत्वं स्ववाक्यैकदेशमयडन्तपदवाच्यनिरतिशयानन्दयोगेन प्रथमसूत्रेणोपपादितम्, अतोऽत्र स्ववाक्यस्थहेतुश्चोक्तो भवति ।

सू० भेदव्यपदेशाच्च ॥ १८ ॥

भू० तस्माद्वा एतस्मादात्मन आकाश इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यम् अन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय इति, अतो जीवाद्भेदव्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति विज्ञायते ।

इतश्च जीवादन्यः

सू० कामाच्च नानुमानापेक्षा ॥ १९ ॥

भू० जीवस्याविद्यापरवशस्य जगत्कारणत्वे अवर्जनीयाऽऽनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा तथैव हि चतुर्मुखादीनां कारणत्वम्, इह च सोऽकामयत बहु स्यां प्रजायेयेति अचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः, इदं सर्वमसृजत यदिदं

[1] सर्वशक्तित्वानुपपत्तिमर्थान्तरम् इति पा० ।

किंचेत्याम्नायते अतो ऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते । अतश्च जीवादन्य आनन्दमयः । इतश्च जीवादन्यः

सू० अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

टी० "भेदव्यपदेशाच्च" यदि जीवात्मस्वरूपं परिशुद्धावस्थं ब्रह्म तर्हि अन्नमयादेरिवैक्यावस्थायां भेदव्यपदेशो न सम्भवति तस्मादन्नमयादिभिरिव जीवैक्यं ब्रह्मणो न सम्भवतीत्यर्थः, विज्ञान-शब्दस्य अन्तःकरणपरत्वानुपपत्त्यादिकं पूर्वोक्तमनुसन्धेयम् । अथोपसंहारस्य हेतुमाह "कामाच्च नानुमानापेक्षा" कैश्चित्प्रधानव्यावृत्तिपरमिदं व्याख्यातं तत्पक्षोऽति दुःस्थत्वाच्चानूद्य दूषितः, पूर्वाधिकरणे अचिद्व्यावृत्तिः कृता । प्रधानशङ्काहेतुश्चास्मिन्ननुवाके नास्ति अपेक्षाशब्दवैयर्थ्यञ्च स्यादिति जीवस्येति अत्यन्तमचिदनपेक्षत्वे स्वरूपपरिणामप्रसङ्गः, देहातिरिक्ताचिदनपेक्षत्वं देवादिसृष्टौ चतुर्मुखादीनामप्यस्ति अतस्तत्परिहारार्थमाह "इह चे"ति, सङ्कल्पहेतुभूतकरणकलेवरावस्थाचित्संसर्गापेक्षा नास्तीत्यर्थः । देहानपेक्षं सत्यसङ्कल्पत्वकार्यं स्रष्टृत्वम् आविर्भूतगुणाष्टकस्य मुक्तस्यापि श्रूयते इति शङ्कां च परिहरन् सोऽकामयतेति वाक्यादुपरितनहेत्वन्तरमाह "अस्मिन्नस्य च तद्योगं शास्ति" कस्मिन्? कस्य? केन योगं? किं शास्ती? त्यपेक्षायामक्षरार्थमाह-

सू० अस्मिन्-आनन्दमये, अस्य च-जीवस्य, तद्योगं शास्ति-आनन्दयोगं शास्ति शास्त्रं, "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दीभवती"ति रस-शब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीयः आनन्दीभवतीत्युच्यमाने यल्लाभाद्य आनन्दीभवति स स एवेत्यनुन्मत्तः कोऽब्रवीतीत्यर्थः, एवमानन्दमयः परं ब्रह्मेति निश्चिते सति यदेष

आकाश आनन्दो न स्यात् विज्ञानमानन्दं ब्रह्मेत्यादिष्वानन्द-शब्देनानन्दमय एव परामृश्यते यथा विज्ञान-शब्देन विज्ञानमयः, अत एवानन्दं ब्रह्मणो चिद्वानिति व्यतिरेकनिर्देशः अत एवैतमानन्दमयमात्मानमुपसंक्रामतीति फलनिर्देशश्च, उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्नमयादीनामन्नं ब्रह्मेति व्यजानात् प्राणो ब्रह्मेति व्यजानात् मनो ब्रह्मेति व्यजानात् विज्ञानं ब्रह्मेति व्यजानादिति प्रतिपादनात्

टी० अस्मिन्नानन्दमय इति, अस्मिन्निति विषयसप्तमी ब्रह्मानुभवरूपानन्दस्य व्यवच्छेदकं ब्रह्म शास्तिशब्दार्थः कः ? शास्त्रं किम् ? एतत्सूत्रार्थस्य हेतुत्वं कथमित्यत्राह "रसोवै स" इति, रसो वै स इति शास्त्रम् उक्तम् उच्यमान इति शास्ति शब्दार्थ उक्तः। हेतुत्वमुपपादयति "यल्लाभादि"ति हेतुत्वस्य स्फुटतरत्वात्सूत्रे हेतुत्वानिर्देश इत्यभिप्रायेणानुन्मत्तः को ब्रवीतीत्युक्तं, मान्त्रवर्णिकसूत्रेऽपि हेतुत्वानिर्देशस्यायमेवाभिप्रायः, कथमानन्दमये जीवस्यानन्दयोगं वदति शास्त्रम् आनन्दे ह्यानन्दयोगं वदतीति शङ्कायाम् आनन्दानन्दमयशब्दयोरेकविषयत्वमाह "एवमि"ति, कथमानन्दशब्दस्यानन्दमयवाचित्व? मित्यपेक्षायां विज्ञान-शब्दनिर्वाहे पूर्वोक्तन्यायमिहातिदिशति "यथा विज्ञाने"ति, अत्र पूर्वोक्ता हेतवोऽनुसन्धेयाः, स्वरूपस्यानुकूलवेदनीयत्वादानन्द-शब्दो धर्मिपरः धर्मपरत्वेऽप्यपर्यवसानाद्धर्मिपर इति भावः। व्यतिरेकनिर्देशं हेतुमाह "अत एवे"ति, अतएव आनन्दानन्दमयशब्दयोरेकविषयत्वेनेत्यर्थः। हेत्वन्तरमाह "अत एवे"ति, स्थानप्रमाणमाह "उत्तरे चे"ति, पूर्वानुवाके एतदनुवाकोर्ध्वभागे च मयडन्तपदनिर्दिष्टानाम् अत्र मयड्रहितपदनिर्देशप्रकरणे आनन्द-शब्देन प्रतिपादनात् आनन्दमय एवानन्द-शब्दवाच्य इत्यर्थः आनन्द-शब्दवाच्यस्य परमात्मत्वं पराङ्गीकृतं "तद्धेतुव्यपदेशाच्च" "अस्मिन्नस्य च तद्योगं

शास्त्री''ति सूत्रयोरियं भिदा पूर्वत्र सामान्येन समस्तसुखहेतुत्वम्, उत्तरत्र मोक्षहेतुत्वस्योक्तमिति तदा को ह्येवान्यात्कः प्राण्यादित्यत्र अन्यात्प्राण्यादिति पदाभ्यां सत्ताहेतुत्वं सुखहेतुत्वं चोक्तं भवति । यद्वा पूर्वसूत्रमुपायपरमेतत्तूपेयपरमिति भिदा आनन्दयाति रसो वै स इति तादृशत्वप्रतीतेः तदा अन्यात् प्राण्यादिति पदाभ्यां सांसारिकसुखहेतुत्वं मोक्षहेतुत्वं चोक्तं भवति । अथवा अन्यादिति सत्ताहेतुत्वं प्राण्यादित्यविशेषेण त्रैवर्गिकापवर्गिकसर्वसुखहेतुत्वम् । अधिकरणार्थमुपसंहरति ''अत''इति, जीवसामानाधिकरण्यं शरीरसम्बन्धः शोध्यत्वं विकारश्रवणं प्राप्यत्वानन्त्यादीनाम् अवस्थाभेदेनोपपत्तिः ज्ञानस्वरूपत्ववाङ्मनसनिवृत्त्यभिधानरूपार्थगुणनिषेधश्चास्यानन्दमयस्य प्रत्यगात्मव्यतिरिक्तत्वे हेतुः, स्वतस्सिद्धनिरतिशयदशाशिरस्कानन्दाभ्यास आनन्दयितृत्वं भयाभयहेतुत्वं समस्तप्रशासितृत्वं प्राप्यत्वं निरुपाधिकविपश्चित्त्वं बद्धमुक्तयोरसम्भावितमाकाशादिसमस्तजगत्कारणत्वं बद्धदशायामेव विज्ञानमयाज्जीवाद्भेद-

भू० आनन्दो ब्रह्मेत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते, तत एव तच्चाप्यानन्दमयमात्मानमुपसंक्रम्येत्युपसंहृतम्, अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् । आनन्दमयाधिकरणं समाप्तम् ॥

व्यपदेशः करणकलेवराद्यनपेक्षसत्यसङ्कल्पत्वं मुक्तानां निरतिशयभोग्यत्वं च सिद्धान्तहेतुः शरीरशरीरिभावः तस्य निरुपाधिकत्वं प्रसाध्यत्वं प्राचुर्यसम्भवः बद्धदशायामेव भेदव्यपदेशस्यावस्थाभेदेन निर्वाहानुपपत्तिः प्रभाप्रभावन्यायेन स्वरूपतो धर्मतश्च ज्ञानत्वोपपत्तिर्वाङ्मनसनिवृत्तेरियत्ताराहित्यनिबन्धनत्वं पूर्वपक्षयुक्तिपरिहारहेतवः षष्ठ्याऽन्यत्वमवेद्यि नैनमवद्य्ब्रह्मोको नचा ज्ञातता ज्ञातस्यास्य तथा च नावर्यावता तस्यान्य आत्मा श्रुतः शोध्यत्वं च विकारवाचकवचस्तद् ब्रह्म पुच्छं भवेत् न त्वानन्दमयः कोशो बहिः कथ्यते पुंल्लिङ्गान्तप्रधानप्रकृतपरवचोरूपणं चाप्यनन्यैः श्लोकाः पुच्छं

न चाहुः स्वरसमपि हि सूत्रमस्यान्तरो न चक्षुरादिश्चांशभावान्निरतिशयत-
याऽऽरूपणादानुरूप्यात् पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतुः परास्त''
इति पुच्छब्रह्मवादतन्निरासस‍ङ्ग्रहः । भास्करीये तु अभ्यासादिति पदस्या-
नन्दशब्दाभ्यासादित्यर्थ उक्तः कथमानन्द-शब्दाभ्यासस्य परमात्मत्वसा-
धकत्व?मित्यपेक्षायामानन्दशब्दस्य कारणविषयत्वान्निरतिशयानन्दविषय-
त्वाच्चेति वक्तव्यं तत्र हेत्वन्तरसाकाङ्क्षस्य हेतुत्वोक्तेरपि निराकाङ्क्षस्य हेतु-
त्वपरत्वं युक्तं, नेतरोऽनुपपत्तेरित्यत्र संसारिजीवादन्यत्वोपपादनमयुक्तं नि-
रतिशयानन्दयोगिनो मान्त्रवर्णिकस्य ब्रह्मणः संसारित्वशङ्काया अभा-
वात्, भेदव्यपदेशाच्चेति सूत्रस्यापि रसं ह्येवायं लब्ध्वाऽऽनन्दीभवतीति
लब्धृलब्धव्यभावेन भेदोपपादकत्वमुक्तं ततोऽपि विज्ञानमयादन्यत्वव्यपदे-
शस्यैव हेतुत्वोक्तिपरत्वमत्यन्तोचितं भेदव्यपदेशशब्दस्वारस्यात् कामा-
च्चेति सूत्रं च न प्रधानव्युदासपरम् अपेक्षा-शब्दवैयर्थ्यात् निरतिशया-
नन्दयोगिनः प्रधानत्वशङ्काया हेत्वभावात्, तृतीयसूत्रचरमसूत्रगतयोस्त-
च्छब्दयोरानन्दपरतया एकरूपार्थवाचित्वं युक्तं, यदा ह्येवैष इत्यादिवाक्य-
विषयतया निर्वाहे तत्र सिध्यति वक्ष्यमाणमपि दूषणमिहानुसन्धेयम् ।
यादवप्रकाशीये च अभ्यासादिति पदस्य ब्रह्म-शब्दपदाभ्यासपरत्वमयुक्तं
विज्ञानमयपर्यायेऽपि ब्रह्मज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेदेति ब्रह्म-शब्द-
स्य अभ्यस्ततया हेत्वनैकान्त्यात् तद्धेतुव्यपदेशाच्चेत्यस्य प्राचुर्यस्य हेतुव्यप-
देशादित्यर्थो न युक्तः तद्विषयस्यैव ह्येवानन्दयातीति वाक्यस्यानन्दहेतु-
त्वप्रतिपादकस्य प्राचुर्यहेतुवाचित्वाभावात् प्रथमप्रकृतस्य साध्यस्य हेत्व-
न्तरवाचित्वाभावेन च शब्दानन्वयाच्च नेतरो भेदव्यपदेशादित्यनयोरनुप-
पत्तिः पूर्ववत्, कामाच्चेत्यादिसूत्रे चाधीहि भगवो ब्रह्मेति ब्रह्मविषयाया
विद्यायाः सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते''ति परम-
व्योमविषयत्वावगमात् परमाकाशस्य चाचेतनस्य प्रधानादिलक्षणत्वादचे-
तनस्य स्वकार्यापेक्षया कारणत्वसम्भवाच्च ब्रह्म-शब्दवाच्यं प्रधानमित्या-
शङ्का निराक्रियत इति यदुक्तं तदयुक्तं परमव्योमन्प्रतिष्ठितत्वमात्रेण
तद्विषयत्वासिद्धेः, न हि ब्राह्मणभूयिष्ठदेशे वेदविद्या प्रतिष्ठितेत्युक्ते तस्या-

स्तद्वेशप्रतिपादकत्वं परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते''ति परमाकाशस्य ब्रह्माधारत्वावगमात्तस्य ब्रह्मत्वशङ्कानिराकरणम् अस्मिन् सूत्रे क्रियत इत्यप्ययुक्तं, मान्त्रवर्णिकमेव च गीयत इति मान्त्रवर्णं विषयीकुर्वता सूत्रेणैवास्याश्शङ्कायाः प्रतिहतोदयत्वात्. नापि सत्यत्वज्ञानत्वानन्त्यत्रिविधपरिच्छेदविरहादयः परमाकाशस्य सामस्त्येन सम्भवन्ति, अपेक्षाशब्दवैयर्थ्यं च पूर्ववत् चरमसूत्रमप्येवं व्याख्यातम् अस्मिन् ब्रह्मणि प्रतिबुद्धस्यास्य जीवस्य तद्भोगं परमात्मप्राप्तिं दर्शयति सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते''ति, तथा यदा ह्येवैष इत्यादिवाक्यैश्चास्मिन्निष्ठाङ्गतस्याऽस्य अथ सोऽभयङ्गतो भवतीति ब्रह्मप्राप्तिरुच्यत इति तदनुपपन्नं मन्त्रवर्णोदितायाः परमात्मविदस्तत्प्राप्तेर्मान्त्रवर्णिकमेव च गीयत इति सूत्रेणैव दर्शितत्वादिह च तद[1]नपेक्षणात्, यदा ह्येवैष इत्यादिवाक्योक्ताऽभयप्राप्तिहेतुत्वं च तद्धेतुव्यपदेशाच्चेति सूत्रेणैव दर्शितमिति इह तदुक्तिरनपेक्षिता तद्विषयभूतवाक्योक्तमानन्दयितृत्वं हि मोक्षानन्दहेतुत्वं, मोक्षानन्दश्च संसारभयनिवृत्तिपूर्वकस्तस्मादानन्दयितृत्ववाक्यासन्नतरवाक्योक्तमभयप्राप्तिहेतुत्वं मोक्षप्रदत्वान्तर्भूतमिति न पृथग् हेतुः, आनन्दयातीति वाक्ये आनन्दहेतुत्वमुक्तं ब्रह्मप्राप्तस्य चैवानन्दः, अतोऽस्मिन् वाक्ये अभय–शब्दवाच्यब्रह्मप्राप्तिरुच्यत इति चेत् न तस्य ब्रह्मशब्दसामानाधिकरण्याभावात् अथ तस्य भयं भवतीत्युक्तभयाभावप्राप्तेरेवाथसोऽभयङ्गतो भवतीत्युच्यमानत्वाच्चातोऽभयनिवृत्तिपूर्वकानिरतिशयानन्दहेतुत्वं तद्धेतुव्यपदेशादित्यन्तर्भूतमिति न पृथग्वक्तव्यम्, अतो मोक्षप्रदत्वेऽभिहिते मुक्तप्राप्यत्वकथनं प्राप्तेर्निरतिशयानन्दत्वरूपविशेषकथनं चात्यन्तापेक्षितमिति तदेव वक्तव्यम्, अतः सूत्राणां यथोक्त एवार्थः । समाप्तमानन्दमयाधिकरणम् ॥ अवान्तरसङ्गतिमाह–

सू० यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टिः अतिशयितानन्दयोगोऽभयाभयहेतुत्वमित्यादि न सम्भवति त-

१ तदुक्त्यनपेक्षणादिति पा० ।

थाऽपि विलक्षणपुरुषाणामादित्येन्द्रप्रजापतिप्रभृतीनां स-म्भवत्येवेतीमामाशङ्कां निराकरोति—

टी० "यद्यपी"ति, कारणत्वादिवाक्यानां परमात्मपरत्वं हि नि-रूप्यते कारणवाक्यत्वाभावेऽपि कथमन्तरादित्यविद्या निरूप्यत ? इति चेत् उच्यते, आनन्दमयाधिकरणशेषतयेति कथमुपनिषद्भेदे सत्यपि तच्छेषतया निरूपणम् ? इत्थम्-आनन्दवल्ल्यां "स यश्चायं यश्चासावादित्ये स एक इत्यानन्दमयस्यैवादित्यमण्डलवर्तित्वमुक्तं छान्दोग्यप्रतिपादितस्य आदि-त्यान्तर्वर्तिनो देहसम्बन्धेन जीवातिरेके सत्यानन्दवल्ल्यामपि जीवाति-रिक्त आदित्यान्तर्वर्तिपुरुष उक्तः स्यादित्यानन्दमयो जीव एवेति शङ्कायां तच्छेषत्वेन उत्तराधिकरणारम्भ इति अधिकरणभेद उक्तन्यायाविषयभूतो-पनिषद्भेदहेतुकः । ननु "तस्यैष एव शारीर आत्मे"ति वाक्यप्रतिपन्नशरीरस-म्बन्धस्य परिहृतत्वाच्छारीरत्वाश्रवणहेतुकजीवत्वशङ्का नोत्पद्यत इति चेत् उच्यते तत्र ह्यन्नमयादीनां शरीरत्वमुक्तं, न हि ते प्रत्येकं करणादिसंस्थान-वन्तः तैस्सम्बन्धश्चाधिष्ठानाधिष्ठेयभावलक्षणश्शेषशेषिभावलक्षणो वा येन केनापि प्रकारेणोपपद्यते, अत्र तु हिरण्यश्मश्रुर्हिरण्यकेश इत्यादिना करचरणादिसंस्थानकं शरीरं श्रूयते तस्य च कर्मकृतत्वं लोकप्रसिद्धम्, अतः उपकरणोपकरणिकभावलक्षणसम्बन्धस्यार्थसिद्धः । ननु तत्राप्यान[1]न्दमय-स्यात्मत्वश्रवणादात्मप्रतिसम्बन्धिनश्शरीरस्य करचरणादिमत्त्वात् तत्कृत जीवशङ्काऽपि तत्रैव निरस्तेति चेत् न प्राणमयादीनां करचरणादिमत्त्वा-भावात्, अन्नमयस्य तु तथाविधत्वे सत्यपि तं प्रति विज्ञानमयस्यैव शरीरि-त्वाद्विज्ञानमयं प्रति शरीरिणा आनन्दमयस्य करचरणादिमच्छरीरकत्वा-भावात्, शरीरमात्रेण सम्बन्धमात्रनिबन्धनशङ्कैव तत्र निरस्ता, अत्र त्वा-नन्दमयस्यैवादित्यान्तर्वर्तिनः करचरणादिमत्त्वं प्रतीयते अतः पूर्वाधिक-रणे शरीरमात्रेण सम्बन्धमात्रश्रवणादुत्थितायां जीवत्वशङ्कायां निरस्तायां पुनः करचरणादिसंस्थानकदेहविशेषेण उपकरणोपकरणित्वलक्षणसम्बन्ध-

१ तत्राप्यन्नमयस्येति पा० ।

विशेषाश्रवणेन जीवत्वशङ्का स्यादिति तन्निरासार्थम् आनन्दमयाधिकरण-शेषत्वेन एतदधिकरणारम्भ इति, अयमर्थो यद्यपीत्यादिसङ्गतिग्रन्थेनाभिप्रेतः ।

अन्तरादित्याधिकरणम् ।
अन्तरधिकरणमिति वा ।

सू० अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

भा० इदमाम्नायते छान्दोग्ये "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः

टी० "अन्तस्तद्धर्मोपदेशात्" विषयं दर्शयति "इदमि"ति, य एष इति प्रसिद्धवन्निर्देशादनुवादरूपता शङ्क्या, अस्यार्थस्य प्रमाणान्तराप्राप्तत्वात् यदाग्नेयोऽष्टाकपाल इतिवत्, आदित्यशब्दो दित्यदित्यादित्यपत्युत्तरपदाद् ण्य" इत्यण्यप्रत्ययान्तो मण्डलवाची "य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्निति" बृहदारण्यके "य एष एतस्मिन्मण्डलेऽर्चिषि पुरुष" इति तैत्तिरीयके च पुरुषस्य मण्डलवर्त्तित्वश्रवणात्, हिरण्मयशब्दो रमणीयत्वपरः हिरण्मय इति रूपसामान्याच्चन्द्रमुखवदिति हि वाक्यकारः दृश्यते—योगिभिरित्यर्थः "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि"ति, अन्यैकार्थ्यात् "य एवं वेदे"त्युत्तरत्रोपासनविधानादुपासनार्थमारोपितरूपपरमिदं वाक्यमिति नाशङ्कनीयम् "न सन्दृशे तिष्ठति रूपमस्ये"त्युक्त्वा "हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ती"ति, "यदा पश्यः पश्यते रुक्मवर्णमि"ति, प्रकरणे "मनसा तु विशुद्धेने"ति, विशुद्धमनोग्राह्यत्वोक्तेः अत आरोपिताकारो दुष्टमनोग्राह्यः न च रूपमस्येति स्वरूपमुच्यते षष्ठीस्वारस्यभङ्गप्रसङ्गात्, अतो विग्रहविशिष्टस्य विशिष्टमनोग्राह्यत्वात् विग्रहपारमार्थ्यम् । किंच दृश्यत इति वर्त्तमानव्यपदेशाच्च उपासनाया आरोपितत्वमयुक्तम्, आत्मन्यारोप्यमाणं हि गरुडत्वं न ततः पूर्वं केनाप्यवगम्यते, इह तूपासनविधानात्प्रागेव विग्र-

मानतायऽनेन वर्त्तमानव्यपदेशेन प्रतीयते, अतो वास्तवत्वं दृश्यत इत्यनेन पूर्वपूर्वोपासकप्रवाहैरारोपेणानुसन्धीयमानत्वमुच्यत इति चेत् न अशब्द- त्वात्, न ह्यारोप्य दृश्यत इति श्रूयते दृश्यत्वमेवारोपितत्वमिति चेत् न व्युत्पत्तिविरोधात् "दृश्यते त्वग्र्यया बुद्ध्ये"ति, दृश्यतयोक्तपरमात्म- स्वरूपस्याप्यवास्तवत्वप्रसङ्गाच्च तन्मिथ्यात्वं प्रमाणविरुद्धमिति चेत् तुल्यम् "आदित्यवर्णं तमसः परस्तादि"ति, तमसः परस्तात् स्थितस्य विग्रहस्य स्वरूपस्यैव मिथ्यात्वं हि प्रमाणविरुद्धम् अतो वास्तवत्वसिद्धिरश- रीरत्वश्रुतेरेवकारो वक्ष्यते "तस्य यथेत्य"स्य वाक्यस्य भाष्य[1]कारेण षडर्थाः पूर्वपक्षतया सिद्धान्तत्वेन चोक्ताः, तत्रार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादे- वावगतं कपिरादित्यः "कपृ चलन"इति धातोर्निष्पन्नः कपि-शब्दः कं पिबतीति च, कपिर्विभस्तितेजनमिति च वैदिकप्रयोगः, तस्यास मण्डलं यथाऽऽदित्यमण्डलं हृदयपुण्डरीकं च परमात्मन उपासनस्थानं तथा तस्योपासकस्याक्षिणी अप्युपासनस्थानमित्येकोऽर्थः

**सू० उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक् च साम च गेष्णावित्यधिदैवतम्, अथाध्यात्मम् अपि अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते**

टी० अयं नोपपद्यते तथा हि अग्निश्चेन्द्रश्चेतिवदपवादक च- शब्दाद्यभावेऽपि समानविभक्त्यन्तयोः पदयोः स्वतःप्राप्तसामानाधिकर- ण्यस्वारस्यभङ्गः पुण्डरीकसदृशे पुण्डरीकशब्दो गौणः स्यात् हृदयपुण्डरी- कमिति प्रयोगस्तु पुरुषव्याघ्र इतिवदुपमितं व्याघ्रादिभिस्सामान्याप्रयोग इति सूत्रविहितसमासत्वादुपमानोपमेयवाचकशब्दसद्भावाच्च मुख्य एव अत्र तु तदभावाद्गौणत्वमवर्जनीयम् उपासनस्थानमिति प्रथमान्तप- दाध्याहारः उपासकस्येति षष्ठ्यन्तपदाध्याहारश्च तत्परिहाराय तस्ये- त्युपासकपरत्वे सत्यप्यप्रकृतपरामर्शित्वमनन्तरवाक्यस्य षष्ठ्यन्तशब्दविरू- पर्णता च स्यात् दिव्याङ्गवर्णनप्रकरणानौचित्यञ्च नामविधिवाक्यात्पूर्वं

[1] वाक्यकारेणेति पा० ।

रूपकथनं ह्युचितं य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्निति दक्षिणस्याक्ष्णः उपासनस्थानत्वश्रवणादक्षिणी इति द्विवचनविरोधश्च, ऊर्ध्वमक्षिविद्याया उक्तत्वादिह तदुक्त्यनपेक्षणादस्य वाक्यस्य पुनरुक्तिश्च, अन्तरादित्यविद्यायां य एषोऽन्तरादित्य इति स्थानस्योक्तत्वात् अक्षिविद्यायां च य एषोऽन्तरक्षिणीति स्थानस्योक्तत्वादुभयत्र स्थानविध्यपेक्षा नास्तीत्यनाकाङ्क्षितत्वादिदं वाक्यम् अनन्वितं स्यात्, अन्तरादित्य इत्यादित्यमण्डलस्य स्थानतया विहितत्वादेवमक्षिणीत्यक्ष्णः स्थानत्वे विहिते सति स्थानभेदाद्रूपभेदेन विद्याभेदादेकवाक्येन विद्याद्वयस्य विधातुमशक्यत्वाच्च वाक्यभेदः स्यात्, स चैकवाक्यत्वे सम्भवति नोपपद्यते, कप्यासम्पुण्डरीकञ्च दृष्टान्ततयाऽनूद्य एवमक्षिणी इत्यक्ष्णः स्थानत्वस्य विधेयत्वङ्गम्यत इति चेत् तथा चान्तरादित्य इत्युपक्रमविरोधः, उपक्रमे आदित्यमण्डलस्यानुवाद इति चेत्तथा सति इयमक्षिविद्यैव स्यात् तथा चान्तरादित्यविद्येत्याख्याविरोधः अक्षिविद्यायामेतद्विद्योक्तरूपाद्यतिदेशानुपपत्तिश्च न केवलं कप्यासवाक्यमात्रस्य अपि तु कृत्स्नाया अन्तरादित्यविद्यायाः पुनरुक्तिश्च स्यात् उभयोरप्यक्षिविद्यात्वाविशेषात् रूपादिवैषम्याभावाच्च, तस्मादस्य वाक्यस्य उपासनस्थानविधिपरत्वमनुपपन्नं कपिर्मर्कटः तस्यासं जघनप्रदेशः मर्कटपृष्ठसाम्यमुच्यत इति यावत्, तदप्ययुक्तं मर्कटपृष्ठम्पुण्डरीकञ्च किमुपमानद्वयम् उतैकोपमा तत्रोपमाद्वित्वमयुक्तं स्वतःप्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात श्लाघ्यार्थतया निर्वाहे सम्भवत्यपि हीनोपमाश्रयणायोगाच्च, यद्येकोपमा तथा सति मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात् तदा कप्यासपदस्य गौणता स्यादिति कप्यासमीषद्विकसितमित्यपरोऽर्थः तत्रात्यन्तार्थानौचित्यन्नास्त्येव तथाप्यवयवशक्त्या वा रूढ्या वा ईषद्विकासपरत्वन्नास्तीति सोऽप्ययुक्तः एवं शब्दार्थस्वभावपर्यालोचनायामिदमर्थत्रयं पूर्वपक्षतया वाक्यकाराभिप्रेतमित्यवगतम् । अर्थान्तरत्रयन्तूपपन्नं कम्पिबतीति कपिरादित्यः तेनास्यते क्षिप्यते विकस्यत इति कप्यासन्तथाह वाक्यकारः "आदित्यक्षिप्तं वा श्रीमत्त्वा"दिति, कम्पिबतीति कपिर्नालं

तस्मिन्नास्त इति कप्यासम्। अपचितादपि पङ्कजात् नालस्थस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षितः, कं जलम् आस उपवेसन इति धातुरपिपूर्वकः वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति वचनादपेरकारलोपः कप्यासं सलिलस्थमित्युक्तं भवति । एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्य हि भगवता भाष्यकारेण वेदार्थसङ्ग्रहेऽभिहितं—गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षण इति, गेष्णौ—गानविशेषौ, अधिदैवतं—देवतायामुपासनम्, अध्यात्मम्—आत्मन्युपासनम् अध्यात्मशब्दो देहवचनः अमुष्य—आदित्यस्थस्य आदित्यतद्धर्मोपदेशादिति वा अक्षिणि तद्धर्मोपदेशादिति वा न सूत्रितम्, अपि त्वन्तच्छब्दस्सूत्रकारेण प्रयुक्तः अन्तश्शब्दस्य अन्तर-

सू० सैवर्क्तत्साम च तदुक्थ्यं तद्यजुः तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे"ति तत्र सन्दिह्यते किमयमक्ष्यादित्यमण्डलान्तरवर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्य आदित्यादिशब्दाभिलप्यो जीव एव एषः ? आहोस्वित्तदतिरिक्तः परमात्मे ? ति किं युक्तम् ?

दित्ये अन्तरक्षिणीत्युभयत्र श्रवणाद्विद्याद्वितयमपि सङ्गृहीतमित्यभिप्रायेणाक्षिविद्यावाक्यमप्युदाहृतं, संशयं दर्शयति 'तत्रे'ति, शरीरसम्बन्धापहतपाप्मत्वादियोगात्संशयः आदित्यादिशब्दाभिलपनीयो जीव एवेति यत्र यत्र प्रकरणेषु करणकलेवरावस्थशरीरसम्बन्धेन जीवत्वशङ्का तेषाम्प्रकरणानां सर्वेषां परमात्मप्रदर्शनार्थमयम् अधिकरणारम्भ इत्याभिप्रायेणादिशब्दः प्रयुक्तः, अत एव हिरण्यगर्भादिजीवेभ्योऽन्य इति अधिकरणोपसंहारे मध्ये चादित्यादिजीवव्यक्तय इति चोक्तं, वेदान्तवेद्यङ्कारणं ब्रह्म किं प्रकृष्टगुणयो जीव ? उत नेति विचारः, तदर्थमानन्दमयः किं जीव ? उत परमात्मे ? ति, तदर्थमन्तरादित्येऽन्तरक्षिणि च वर्तमानः किं जीवः ? उत

परमात्मा? तदर्थं सशरीरत्वं जीवस्यैव? उत परमात्मनोऽपि सम्भवती? ति-तदर्थं शरीरसम्बन्धस्यैच्छत्वं सम्भवति नेति तदर्थम्पाप्मोदितत्वादि-श्रुतिः अजायमानः इत्यादिश्रुतिरादित्यवर्णत्वादिश्रुतिश्च कथमैच्छत्वं ज्ञापयति ने? ति तदर्थमिह पाप्म-शब्दः किं पापमात्रपर? उत पुण्यपापरूपकर्मपरः? अपहतशब्दः प्रध्वंसपरः? उतात्यन्ताभावपरः? अजत्वादिश्रुतिः किं कर्मकृतजन्मविषयतया व्यवस्थापयितुं शक्यते? नेति आदित्यवर्णत्वादि-श्रुतिः विग्रहस्य प्रकृति प्रकृतादिविलक्षणत्वज्ञापिका न वे? ति चतुर्धा संशयः अत्र पूर्वे कल्पा पूर्वपक्षाः, अपरे तु सिद्धान्ता यदा पाप्म-शब्दः पापमात्र-परः अपहतिः प्रध्वंसः जन्मनिषेधश्च न कर्ममूलजन्मविषयः, विग्रहश्च न प्राकृतविलक्षणः तदानीं विग्रह[1]मात्रस्येच्छामूलत्वासम्भवेन कर्मनिबन्धनतया परस्मिन्नसम्भवे जीवासाधारण्यादादित्यादिवर्तिपुरुषो जीव इत्यन्तरादित्यवाक्यैकार्थ्यादानन्दवल्लीवाक्येऽपि जीवस्य प्रतिपाद्यत्वात्सर्वाणि कारणवाक्यानि प्रकृष्टपुण्योपचयजीवपराणीति पूर्वः पक्षः, यदा पाप्म-शब्दः कर्ममात्रपरः अपहत-शब्दोऽन्यन्ताभावपरः, जन्मनिषेधश्च कर्ममूलजन्मविषयः, विग्रहश्च प्राकृतविलक्षणः ।

पू॰ उपचितपुण्यो जीव एवेति, कुतः सशरीरत्वश्रवणात्, शरीरसम्बन्धो हि जीवानामेव सम्भवति कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसम्बन्धः, अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वम् अशरीरत्वेनोच्यते "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तन्न प्रियाप्रिये स्पृशत" इति, सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यं शक्त्याधिक्यञ्च, अत एव लोककामेशत्वादि तस्यैवोपपद्यते, तत एव चोपास्यत्वं फलदायित्वं च पापक्षपणकरत्वेन, मोक्षोपयोगित्वञ्च मनुष्येष्वप्युपचि-

[1] विग्रहसम्बन्धस्येच्छामूलत्वासम्भवे नेति पा॰ ।

तपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते, ततश्च सिद्धगन्धर्वादयः ततश्च देवास्ततश्चेन्द्रादयः,

टी० तदानीं विग्रहस्यैकतया तस्य जीवात्परस्मिन्नसम्भवाच्चादित्यादित्यान्तर्वर्तिपुरुषपर इति तदैकार्थ्यादानन्दवल्लीप्रतिपाद्यपरमात्मत्वमविचार्यमिति तदैककण्ठ्यात्सर्वाणि कारणवाक्यानि परमात्मपराणीति सिद्धान्तफलमिति भावः । पूर्वपक्षमाह "उपचिते"ति, जीवानामेव शरीरसंबन्धमुपपादयति "कर्मानुगुणे"ति, कर्मकृतप्रियाप्रिययोगार्थत्वं व्यतिरेकेणोपपादयति "अत एव ही"ति, अत एव–शरीरसम्बन्धस्य कर्ममूलप्रियाप्रिययोगार्थत्वादेव हि कर्मसम्बन्धरहितो मोक्षो ऽशरीरतया प्राप्यत्वेनोच्यत इत्यर्थः, ज्ञानशक्त्यादिकं लोककामेशितृत्वञ्च कथं जीवस्य स्यादि?त्यत्राह "सम्भवति चे"ति, तथा दर्शयति "मनुष्येष्वि"ति, अत्र स एको मानुष आनन्द इत्याद्यभिप्रेतम्, आदित्येन्द्रप्रजापतिप्रभृतीनां सर्वेषाङ्कारणत्वश्रवणात्कथमर्हतिः? स्यात् पुण्यहेतुत्वात् तथित्वञ्च स्यादित्यत्राह–

मू० अतो ब्रह्मादिष्वन्यतम एव एवैकैकस्मिन्कल्पे पुण्यविशेषेणैवं प्रभूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते, अतो न जीवातिरिक्तः परमात्मा नाम कश्चिदस्ति । एवं च सत्यस्थूलमनण्वह्रस्वमित्यादयो जीवात्मन एव स्वरूपाभिप्राया भवन्ति, मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणीत्येवं प्राप्तेऽभिधीयते

## "अन्तस्तद्धर्मोपदेशात्"

मू० अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः प्रतीयते स जीवादन्यः परमात्मैव, कुतः तद्धर्मोपदेशात् जीवेष्वसम्भ-

वैस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः स एष सर्वेभ्य पाप्मभ्य उदित इत्यादिनोपदिश्यते, अपहतपाप्मत्वं हि अपहतकर्मत्वं कर्मवश्यतागन्धरहितत्वमित्यर्थः ।

टी० "अतो ब्रह्मादिष्वि"ति, सर्वविधिवाक्यानां जीवपरत्वमाह "जगदि"त्यादिना, अपहतपाप्मत्वादिश्रुतयो नाकर्मवश्यतां वदन्ति अपि तु केवलपुण्यहेतुकशरीरवतः पापराहित्यं पापहेतुकम्पुण्यहेतुकं मिश्रहेतुकञ्चेति त्रिविधं शरीरमित्यभिप्रायेण उपचितपुण्यविशेष इत्युक्त, मोक्षशास्त्राणि उपायपराण्युपेयपराणि चेत्यर्थः । राद्धान्ते सौत्र प्रतिज्ञापरमन्तः-शब्दं व्याचष्टे "अन्तरादित्य" इति, द्वितीयसूत्रस्यान्य शब्दान्वयलब्ध साध्यधर्ममाह "स जीवादन्य" इति, तेन फलितमाह "परमात्मे"ति, हेत्वंशमवतार्य व्याचष्टे "कुत इत्यादि"ना, तद्धर्मोपदेशादिति तच्छब्दपरमात्मपरः परमात्मनि सिद्धे तद्धर्मोपदेशः तद्धर्मोपदेशात्परमात्मत्वसिद्धिरिति परस्पराश्रयशङ्कायामाह "जीवेष्वसम्भवद्वि"ति, जीवेष्वसम्भवन्नयं धर्मो जीवातिरिक्तस्वाश्रयप्रतिपादकत्वं श्रुतेर्निश्चाययति योग्यतापरामर्शसहकृतेयं श्रुतिः परमात्मानमभिधत्त इत्यर्थः । अपहतपाप्मत्वं पापहेतुकमिश्रहेतुकशरीरवत्त्वव्यावर्तकमित्यत्राह "अपहते"ति, यद्यपि सर्वेभ्यः पाप्मभ्य उदित इति विषयवाक्यन्तथाप्यपहतपाप्म-शब्दप्रयोगश्रुत्यन्तरस्मरणार्थः, अपहतकर्मत्वमिति पाप्मभ्य इति पाप्म-शब्दः पुण्यपापरूपोभयविधकर्मपर इत्यर्थः, हि-शब्दः परमात्मप्रकरणेषु पाप-शब्दस्य पुण्यपापपरत्वप्रसिद्धिं सूचयति "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृत सर्वे पाप्मानोऽतो निवर्त्तन्ते इति न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्न कर्मणा वर्धते नो कनीयानि"त्यादिश्रुतयोऽस्मिन्नर्थे प्रमाणं स्युः, पाप्मान कालजरामृत्युशोकादयस्सङ्ख्यातत्वादिति वाक्यकारवचः लौकिकत्वे सत्यनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगादुपपन्नं च पुण्यस्यापि पाप-शब्दाभिधेयत्वं मुमुक्ष्वपेक्षया स्वर्गादीनामनिष्टफलत्वं अमूनि यानि स्थानानि देवानां परमात्मनः इत्यारभ्य एते वै निरया स्तात? स्थानस्य परमात्मन इति, नाकपृष्ठगमनं पुनरावृत्तिलक्षणं कनपोवासुदेवेति मुक्तिबीजमनुत्तममिति च,

सू० कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवा अतो ऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः ॥

टी० पाप्मशब्दव्याख्यानमुखेन शब्दव्यावृत्तिरुक्ता । अथापहत शब्दव्याख्यानमुखेन मुक्तव्यावृत्तिमाह "कर्मे"ति, जीवव्यावृत्तिं स्फुटयति "कर्माधीने"ति, । अपहतपाप्म-शब्दोऽसङ्कोचात्स्वस्मिन् परत्र च पाप्मनामपघा[1]तकत्वं स्वतस्सिद्धं वदतीति हेयप्रत्यनीकत्वसिद्धिः । नन्वपहत-शब्दः प्रध्वंसपरः उत्पन्नस्यैव प्रध्वंसः, अतः प्रध्वस्तपाप्मत्वश्रवणात्परमात्मनः कर्मसम्बन्धस्य प्राग्विद्यमानत्वङ्गम्यते, अतश्च परस्य प्रध्वस्तपाप्मनः परमात्मनो मुक्तादवैलक्षण्यं स्यात् यदि नित्यासंस्पृष्टपाप्मत्वं विवक्षितं तदत्यन्तमशाब्दम्परस्य कुर्वतोऽकुर्वतो वा पाप्मासंस्पृष्टत्वं प्रथमे व्याघातः कर्तृसमवेतत्वात्क्रियायाः, द्वितीये त्वस्मदादेरवैलक्षण्यं, न ह्यकृतेन कर्मणा कश्चिल्लिप्यत इति, उच्यते, परस्य तावत्पाप्माभावपराणि वाक्यानि विविधानि श्रूयन्ते "सर्वेभ्यः पाप्मभ्य उदित" इति पाप्मभ्य उदयः श्रूयते, अपहतपाप्मेति पाप्मनामपहतिः श्रुता, "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्त" इति तरतेः प्राप्तिवाचित्वादप्राप्तेर्निवृत्तिश्च श्रूयते "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानि"ति कर्मफलास्पर्श उच्यते, तत्र प्रथममुदित-शब्दस्य मुख्यार्थोऽनुपपन्नः विभोःपरस्य पापान्वितदेशाद्दूरगमनायोगात्तस्मादश्लेषलक्षणा युक्ता, तत्राकृतकर्माश्लेषस्य सर्वसाधारणस्य प्रतिपादनवैयर्थ्यं स्यात् अतः कृतानामपि कर्मणामश्लेषपरत्वं तस्य वाक्यस्याभ्युपगन्तव्यं क्रियायाः कर्तृसमवेतत्वेन स्वरूपासंश्लेषस्य व्याघातादेव फलासंश्लेषपरत्वमाश्रयणीयं तत्र हेत्वकथनात्तिरोधानाविर्भावयोः निष्प्रामाणिकत्वाच्च तस्य स्वाभाविकत्वं नित्याविर्भूतत्वञ्च सिद्धम्, अपहत-शब्दस्य हिंसारूपधात्वर्थासम्भवाद्विनाशं लक्षयन् क्रियास्वरूपस्य नश्वरतया स्वरूपनाशनप्रतिपादनवैयर्थ्यात् फलजननशक्तिविशिष्टरूपेण नाशं प्रतिपादयति, यथा "सर्वमेकपदे नष्टं

---

१ अवघातकत्वमिति द्राविडः पाठः ।

दानमश्नोच्चिये यद्येऽ'ति नाश–शब्दो दानस्य फलजननशक्तिहानिं प्रतिपादयति तद्वत् अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानि स्युः, ईदृशम् अपहतपाप्मत्वञ्च पूर्वोक्तन्यायान्निरुपाधिकन्नित्याविर्भूतञ्चाभ्युपगन्तव्यं "स न साधुना कर्मणेत्यत्राप्यसाधुकर्मफलास्पर्शस्तत्प्रायश्चित्तरूपसाधुकर्मनिबन्धन इति शङ्का च साधुकर्मप्रतिषेधेनैव निरस्ता । न च साधुकर्महतिस्तस्यापि निवर्त्तकविद्याबलादिति शङ्कनीयं ध्यानकर्तृत्वानुक्तेः, उद्वेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेति तस्य ध्येयत्वश्रवणाच्च साधुकर्मनिषेधादेव ध्यानकर्तृत्वमपि निषिद्धम्भवति यज्ञादिकमुपासनात्मकञ्च कर्म हि साधुकर्मशब्दाभिलापार्हमतः प्रायश्चित्तादिभिर्विनैव कर्मफलाश्लेष इत्यपहतपाप्मशब्दस्थो हन्तिधातुश्च हानिपरः, न च प्रध्वंसपरः, नैतं सेतुमित्यत्रापि कृतानामेव कर्मणां फल जननशक्तिमत्त्वविशेषेण प्राप्त्यभाव उच्यते, अतो निरुपाधिकमपहतपाप्मत्वन्नाम कर्मवश्यतागन्धरहितत्वं, न च परमात्मनि फलजननासमर्थस्य तत्कृतकर्मणस्तं प्रति न पाप्मत्वमिति श्रुतिवाक्यस्थपाप्म–शब्दस्य अमुख्यत्वमिति वाच्यम् अनन्तख्यातिनिर्वीर्यं जरयामास तद्विषं जपन्विषधरो हर इत्यादिषु निर्गीर्णवीर्यविषानीश्वरादीन् प्रति विषशब्दस्येव मुख्यत्वोपपत्तेः, तेनेश्वरेषु प्रत्यवायकरपापसजातीयानाङ्कर्मणां स्वलीलाकृतानामपि फलजननशक्तिप्रतिभटत्वन्नाम कश्चिदयमीश्वरस्य स्वभावविशेषः, परिशुद्धात्मस्वरूपविषयस्याप्यपहतपाप्मशब्दस्यायमेवार्थः स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानानर्होनित्याविर्भूत इति विशेषः अतोऽपहतपाप्मत्वविषयश्रुतीनां यथोक्त एवार्थ इति तेन धर्मणान्तरादित्येऽवस्थितस्य भगवतो जीववैलक्षण्यसिद्धिः, । गुणान्तराणामपि जीवेष्वसम्भवं दर्शयति–

सू० तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वं सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः, यथाह "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प" इति,

टी० "तत्पूर्वकं स्वरूपोपाधिकमि"ति, अपहतपाप्मत्वपूर्वकत्वात्स्वरूपोपाधिकं स्वाभाविकमित्यर्थः, एवं प्रसिद्धाप्रसिद्धयोरर्थयोरेकनिमित्तसम्भवे प्रसिद्धवाचिनैकेनैव शब्देनोपादानार्हत्वमिह व्युत्पादितम्, आदित्यान्तर्वर्त्तिनोऽपहतपाप्मत्वगुणयोगेन आनन्दवल्ली–दहरविद्या–सुबालोपनिषत्प्रतिपाद्यस्येह प्रत्यभिज्ञानात्तत्र तत्रोक्ता गुणा अप्यस्यैव हिरण्मयपुरुषस्य धर्मा इत्यभिप्रायेण सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वञ्चेत्युक्तम् अपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वादौ श्रुतिं दर्शयति "एष आत्मे"ति, तत्पूर्वकसर्वभूतान्तरात्मत्वे श्रुतिमुदाहरति–

सू० तथा "एष सर्वभूतान्तरात्मा ऽपहतपाप्मा दिव्यो देव एको नारायण" इति, "सोऽकामयत बहु स्यां प्रजायेये"त्यादि सत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वं वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्याः स्वाभाविका धर्माः जीवस्य न सम्भवन्ति । यत्तु शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तं, तदयुक्तं न हि सशरीरत्वङ्कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात् । अथोच्येत शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसंघातः, तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात्, कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोप भोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्ज्जनीय इति,

टी० "एष सर्वभूतान्तरात्मे"ति, तत्तदन्तरत्वेन आत्मत्वव्याख्यानपरस्यानन्दवल्लीवाक्यस्य नारायणपरत्वज्ञापनार्थं च, एष सर्वभूतान्तरात्मेति वाक्योपादानं,केषुचिद्वाक्येषु अपहतपाप्मत्वपूर्वकगुणविधानात्सर्वशा-

खाग्रत्ययन्यायेन वाक्यान्तरेष्वपि तत्पूर्वकत्वं विवक्षितमित्यभिप्रायेणाह "सोऽकामयते"ति, जगत्कारणत्वमेव वेदान्तवेद्यस्य ब्रह्मणो लक्षणं कारणञ्चेत्सत्यसङ्कल्पं सत्यसङ्कल्पत्वं चेदपहतपाप्मत्वपूर्वकं तच्च नारायणप्रत्यभिज्ञापकं च सुबालोपनिषदैकार्थ्यादिति भावः । वाङ्मनसेति परिच्छेदकासिद्धिमाह, पूर्वपक्षमनुवदति "यस्त्वि"ति, परिहरति "तदस"दिति, शास्त्रैकप्रमाणके वस्तुनि लोकदृष्टव्याप्तिमूलस्तर्को न कर्मवश्यत्वसाधक इत्यभिप्रायेणाह "न ही"त, कल्पकस्यान्यथासिद्धिमाह "सत्यसङ्कल्पस्ये"ति, सत्यसङ्कल्पत्वस्य कर्मनैरपेक्ष्यमपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वश्रुत्युपपादनेन समर्थितम् । अत एव "स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च स एष ये चै तस्मादर्वाञ्चो लोकास्तेषाञ्चेष्टे मनुष्यकामानामित्यादित्याक्षिपुरुषविषयवाक्यद्वयेन प्रतिपन्नमैश्वर्यम् अनवच्छिन्नं, तदवच्छेदे शङ्क्यमानेऽपि सोऽवच्छेदोऽप्यैच्छिकतया ऽन्यथासिद्ध इति फलितत्वान्न कण्ठोक्तम् । विग्रहविषयाया इच्छाया असम्भवं शङ्कते "अथोच्यते"ति, हेयत्वसूचकस्त्रिगुणात्मक–शब्दः "सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकञ्चलञ्च रजः गुरुवरणकमेव तमः" इत्युक्तेः, इच्छाया अभावेऽपि कर्मपारवश्याज्जीवस्य तत्सम्बन्धसम्भवमभिप्रेत्याह "कर्मे"ति, कर्माचरणहेतुस्वस्वरूपानभिज्ञस्येति विशेषणं, परिहरति–

मू० स्यादेतदेवं, यदि त्रिगुणमयः प्राकृतोऽस्य देहस्स्यात्, स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् । एतदुक्तम्भवति, परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति, तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति

टी० "स्यादि"ति, स्वाभिमतेत्युक्तेऽभिमतत्वमयोग्यत्वेऽपि सम्भवतीति तद्व्यावृत्त्यर्थमाह "अनुरूपे"ति, कुत इत्यत्राह "अप्राकृत" इति, परमात्मस्वरूपं हि निरतिशयमानन्दरूपं सर्वज्ञत्वाच्च तच्च जानात्येवेति स्वस्वरूपादन्यत्र भोग्यत्वज्ञान न वक्तुं युक्तम्, अतस्सर्वज्ञस्य तस्य विग्रहे स्पृहणीये स्वरूपस्य भोग्यतावैकल्यं स्यादित्यत्राह "सर्वमुपपन्नमि"ति. कथमुपपन्नमित्यत्राह "एतदुक्तमि"ति स्वतस्सर्वज्ञस्य सर्वशक्तेर्ज्ञानार्थं प्रवृत्त्यर्थञ्च करणानपेक्षत्वात् न देहापेक्षा रूपादिमत्त्वे प्राकृतं स्यात्, नित्यत्वे चानित्यबहुवतारासम्भवः तिर्यगादिरूपपरिग्रहे "वाचकैः पक्षिमृगतामित्यादिप्रकारेण तन्मूलकर्मसम्बन्धः स्यादिति शङ्कापरिहारार्थञ्चैतदुक्तमित्यारम्भः यथा परस्य ब्रह्मणो धर्मिस्वरूपं स्वभाविका गुणाश्च प्रामाणिकत्वादङ्गीक्रियन्ते तथा विलक्षणशरीरमभ्युपगन्तव्यमित्यभिप्रायेणाह "परस्यैवे"ति, स्वाभिमतेति करणानपेक्षज्ञानक्रियस्यापि परस्य भोगार्थो विग्रहः, निरतिशयानन्दस्यापि तस्य प्रीतिविशेषापेक्षा घटते प्रभूतानन्दानामप्यानन्दान्तरापेक्षादर्शनादिति भावः। "एकरूपे"ति, हेयप्रतिभटत्वमङ्गलाकारत्वाद्याकारैरैकरूप्यं शरीरत्वादस्मदादिशरीरवत् दुःखावहमित्यादि तर्कागोचरत्वमभिप्रयन्नाह "अचिन्त्ये"ति, अचिन्त्यत्वे हेतुमाह "दिव्ये"ति, अनेन दिव्य-शब्देन विलक्षणद्रव्यत्वमुक्तं रूपादिमत्त्वात् प्राकृतत्वं धर्मिग्राहकमानबाधितमिति भावः। द्वितीयेन दिव्य-शब्देन विलक्षणसन्निवेशत्वं यथा तद्विश्वरूप वैरूप्यं रूपमन्यद्धरेर्महदिति अद्भुतत्वं प्रतिक्षणमभिनवत्वं नित्येति सावयवत्वादनित्यमित्याद्यनुमानं धर्मिग्राहकप्रमाणबाधितमिति भावः। कल्याणाकरत्वेऽपि हेयमिश्रत्वशङ्काव्युदासार्थो निरवद्य-शब्दः, निरतिशया वक्ष्यमाणसर्वगुणाः आदि-शब्देन पराक्रमादयो विवक्षिताः। नित्यत्वे कथमनित्यबहुवतारसम्भवः? कथञ्च निकृष्टदेवादिसाजात्य?मित्यत्राह-

सू० तद्देवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानङ्करोति

अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यजलधिर्निरस्त-

निखिलहेयगन्धोऽपहतपाप्मा परमात्मा परब्रह्मपुरुषोत्तमो नारायण इति, "यतो वा इमानि, भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" "एको ह वै नारायण आसीत् न ब्रह्मा नेशान" इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्मे"त्यादिषु एवम्भूतं स्वरूपमित्यवगम्यते, निर्गुणं निरञ्जनम् अपहतपाप्मा विजरो विमृत्यु र्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च "तमीश्वराणां परमं महेश्वरं" "तं दैवतानां परमञ्च दैवतं स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते वेदाहमेतं पुरुषं महान्तम्-

टी० "तदेवे"ति, तदेवाप्रच्युतसन्निवेशमेवेत्यर्थः संस्थानाशैथिल्येऽपि देवाद्यनेकदेहोत्पादकत्वं चतुर्मुखदेहे दृष्टं परमात्मविग्रहे युज्यत इति भावः । नित्यालिङ्ग्यास्वभावसंसिद्धिरिन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती उज्जहारात्मनः केशौ सितकृष्णौ अंशांशिनावतीर्याभ्यां समस्तशक्तिरूपाणि तत्करोति जनेश्वर कल्पे कल्पे जायमानःस्वमूर्त्या सोंऽशो विष्णुमयस्थानमित्याद्यनुसन्धेयम् । उपासकानुग्रहोपयुक्ता गुणा उच्यन्ते "अपारे"ति, कारुण्यं-परदुःखासहिष्णुत्वं, सौशील्यं-महतोमन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावत्वं वात्सल्यं-दोषानादरे हेतुः स्नेहः यथा मातुः पुत्रे, औदार्यं-दातृप्रतिग्रहीतृविभागबुद्धिरहितं दातृत्वम्, एते सौलभ्या-

प्रयुक्तगुणाः । अथ परत्वमुच्यते "निरस्ते"ति, परत्वसौलभ्ये अप्युपास्यत्वोपयोगिनी मनुष्यादिसाजात्येऽपि तत्प्रयुक्तशोकमोहाद्यस्पृष्टत्वमभिप्रयन्नाह "निरस्ते"ति, जीवानुप्रवेशेषु शोकादयो जीवांशगताः साक्षादवतारेष्वभिनयमात्रं, निखिल–शब्देन चिदचिद्गता दोषा विवक्षिताः शोकाद्यस्पर्शहेतुमाह "अपहते"ति, अर्वाचीनात्मव्यावृत्त्यर्थः परमात्मशब्दः प्रधानव्यावृत्त्यर्थः तत्समानाधिकृतः परब्रह्मशब्दः, पुरुषोत्तमशब्दो वैलक्षण्यपरः नारायण–शब्दो घटकः यथा परमात्मपरब्रह्मशब्दौ सामान्यशब्दावेकविषयौ यथा पुरुषोत्तमनारायणशब्दौ विशेषशब्दावेकविषयौ, तथा सामान्यविशेषशब्दाः एकविषया इति भावः । अत्र स्वरूपस्य भोग्यत्ववैकल्यशङ्का च परिहृता भवति स्वसम्बन्धिभोग्यत्वं स्वस्य न भोग्यताविरोधि अपि तु स्वभोग्यत्वातिशयावहं, यथा स्वसम्बन्धिगुणगणभोग्यत्वं, न हि स्वसम्बन्धिनामप्यामोदकरस्य कस्तूरिकादेरामोदवैकल्यमपि तु तत्पौष्कल्यमेव, तथा स्वसम्बन्धाद्विग्रहभोग्यत्वमपि स्वभोग्यत्वातिशयावहमिति अथोक्तार्थे प्रमाणान्याह "यतोवा इमानीत्या"ति, जगत्कारणत्वधर्म्मिस्वरूपविषयप्रमाणोपन्यासो दृष्टान्तार्थः, गुणविभागकथनं वादिविवादशमनार्थं दृष्टान्तार्थञ्च विद्युतः–विद्युद्वर्णात्

मू० "आदित्यवर्णन्तमसः परस्तात्' सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी"त्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासंबन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपञ्च वदन्ति, तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्, तदिदमाह श्रुतिः "अजायमानोबहुधा–

टी० आदित्यवर्णं रुक्मवर्णमिति वाक्यसरूपार्थस्वीकारस्योचितत्वात्, आदित्यवर्णो विग्रहश्च न प्राकृतः तमसः परस्तादिति श्रुतेः, अति-

सूक्ष्मप्रकृतिर्हि तमः अतस्तत्कार्यवैलक्षण्यसिद्धिः, अन्यथा स्वरूपस्य तमसोऽन्यत्वकथनं स्यात्, तदानीं परस्तादित्यस्तातिप्रत्ययस्यादित्यवर्णोक्तेश्च वैयर्थ्यं स्यात्, अतो विग्रहविशिष्टस्यैव तमः स्पर्शाभावोक्तिरिति विग्रहवैलक्षण्यसिद्धिः, प्राकृतहेयेति क्वचित्सतो हि क्वचिन्निषेधः, अतो निषेध्यहेयगुणानां प्रकृतितत्संश्लिष्टजीवेषु विद्यमानत्वं प्राकृतेत्यादिना शब्देन दर्शितं, विग्रहविशेषविधानदर्शनाद्विग्रहसामान्यनिषेधस्तद्व्यतिरिक्तविषयः न हिंस्यादितिवत्, निर्गुणमितिवच्च विशेषनिषेधदर्शनाद्देहसामान्यनिषेधो विशेषे पर्यवस्यति पशुना यजेतेति पशुशब्दवन्निर्गुणशब्दवच्चेति तात्पर्यं पूर्वोक्तमर्थं वक्ष्यमाणवचनस्यैतदर्थविषयताज्ञापनार्थमनुवदन् पूर्वोक्तसंस्थानशब्दं विवृणोति "तदिदमि"ति, परमकारुणिक इति देवादिसाजात्यञ्च कर्मनिबन्धनमुपासकानुग्रहार्थत्वादित्यर्थः । श्रुतिं दर्शयति "तदिदमि"ति, अजायमान इति कर्महेतुकसुखाद्यर्थप्राकृतदेहसङ्गतिरूपजन्मनिषेधः ।

सू० विजायत" इति, स्मृतिश्च "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममाययेति "परित्राणाय साधूनां विनाशाय च दुष्कृतामिति साधवो ह्युपासकास्तत्परित्राणमेवोद्देश्यम् आनुषङ्गिको[१] दुष्कृतां विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः, प्रकृतिं स्वामिति प्रकृतिः,—स्वभावः स्वमेव स्वभावमास्थाय न संसारिणां स्वभावमित्यर्थः । आत्ममाययेति स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः, माया वयुनं ज्ञानमिति ज्ञानपर्य्यायमपि माया—शब्दं नैघण्टुका अधीयते ।

टी० विजायत इति चेच्छाहेतुकजगद्रक्षणार्थः प्राकृतविग्रहाधिष्ठानरूपजन्मविधिः । ननु अजायमान इति परमार्थजन्मनिषेधः बहुधा विजा-

१ आनुषङ्गिकस्त्विति ।

यत इत्यपरमार्थजन्मविधिः स्यात्, न कृत्स्नमिथ्यात्ववादिपक्षे प्रयोजनाभावात्, प्रपञ्चमिथ्यात्ववचनेनैवेश्वररूपमिथ्यात्वमपि हि सिद्धं, किं विशेषतोऽभिधानेन, विहितस्य निषेधायोगाच्चायुक्तं मानान्तरागोचरं जन्माभिधाय तदेव कथं निषिध्यते, स्वरूपस्याजत्वं शरीरद्वारा बहुभवनं चोच्यत इति चेत् न स्वरूपनित्यत्ववद्देहद्वारकजन्मनो जीवानामपि समानतया "तस्य धीराः परिजानन्ति योनि"मिति अनन्तरवाक्यप्रतिपन्नवैलक्षण्यानुपपत्तेः सर्वसाधारणलोकविदितजन्मप्रकारवैजात्ये सत्येव ह्येवं वक्तुं युक्तं, न हि देवदत्तस्य जन्म धीरैरेव परिज्ञायत इति वक्तव्यं यज्ञदत्तजन्मनो वैलक्षण्याभावात्, स्वरूपेणाजस्य विचित्रसमस्तजगद्रूपेण बहुभवनमुच्यते तद्धि जीवेषु न सम्भवतीति चेत् न "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्त" इति पूर्वानुवाकेऽभिधाय तस्य त्वष्टा विदधद्रूपमेतीत्यस्मिन्नप्यनुवाके जगद्रूपेण बहुभवनस्योक्तत्वात्, एवमर्थान्तरपरत्वे सत्यानर्थक्यप्रसङ्गात्तत्परिहारायास्याः श्रुतेरवतारपरत्वमभ्युपगन्तव्यं तथाऽस्याः श्रुतेरवतारविषयत्वे सत्येवाजोऽपि सन्नित्याद्युपबृंहणैकार्थ्यं सिध्येत्, अतोऽस्य वाक्यस्य यथोक्त एवार्थः उपबृंहणैकार्थ्यं दर्शयति "स्मृतिश्चे"ति, अजोऽपि सन् सम्भवामीति विधिनिषेधयोरपि यथोक्त एवार्थः, उपासकानुग्रहार्थत्वं कथमत्रावगम्यत? इत्यत्राह "साधव" इति, आनुषङ्गिक इति विनाशाय च दुष्कृतामिति च-शब्दोऽन्वाचयपर इति भावः, समुच्चयस्समप्रधानयोः, अन्वाचयः प्रधानानुषङ्गिकयोः, दुष्कृद्विनाशस्यानुषङ्गिकत्वमुपपादयति "सङ्कल्पे"ति, प्रकृतिसम्बन्धभ्रमनिवृत्त्यर्थं व्याचष्टे "प्रकृतिं स्वामि"तीति, स्वभावो-निरुपाधिकधर्मः अनेन विग्रहश्च स्वाभाविक इत्युक्तम्भवति । अपारमार्थिकत्वभ्रमनिवृत्त्यर्थं व्याचष्टे "आत्ममायये"ति, नैघण्टुकाः-वेदनिघण्टुकाराः,तन्मूलभूतप्रयोगश्च "यावन्तः पांसवो भूमेः सङ्ख्याता देवमायये"ति । स्वोक्तार्थवशद्धार्थमाह-

सू० आह च भगवान् पराशरः "समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूप वैरूप्यं रूपमन्यद्धरेर्महत् । सम-

स्तान्यक्तिरूपाणि तत्करोति जनेश्वर ? देवतिर्य्यङ्मनुष्याख्य-चेष्टावन्ति स्वलीलया । जगतामुपकाराय न सा कर्मनिमित्तजेति, महाभारतेऽपि अवताररूपस्याप्यप्राकृतत्वमुच्यते—"न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इति, अतः परस्यैव ब्रह्मणः एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः अत आदित्यमण्डलाद्यधिकरण आदित्यादिजीवव्यतिरिक्तः परमात्मैव ॥

सू० भेदव्यपदेशाच्चान्यः ॥ २२ ॥

भा० आदित्यादिजीवेभ्यो भेदो व्यपदिश्यते अस्य परमात्मनः "य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति

टी० "आह चे"ति, अयमपि तस्यैव धर्मः एवंरूपरूपमपि जीवादन्यत्वसाधकमित्यर्थः, तद्धर्मोपदेशादिति सौत्रधर्म्मशब्दे मैवं रूपरूपवत्वमपि विवक्षितमिति भावः । सूत्रार्थमुपसंहरति "अत" इति, हेत्वन्तरमाह सू० भेदव्यपदेशाच्चान्यः अयमन्य-शब्दः पूर्वापरसूत्रेष्वप्यन्वेतव्यः । आदित्याख्यजीवाद्भेदव्यपदेशे श्रुतिमाह "य आदित्य" इति, आदित्यपर्यायोपादानं प्रकरणस्थजीवान्तरविषयपर्यायाणां प्रदर्शनार्थम्, आदित्यादीत्यत्रादि-शब्दोपात्तदेवताविशेषेभ्यो भेदव्यपदेशश्चात एव दर्शितो भवति तत्र हि प्रकरणे यस्सर्वेषु देवेषु तिष्ठन्निति पर्याये सर्वदेवताभ्यो भेदो व्यपदिश्यते आसान्देवतानाम्मुक्तावस्थायामपि ताभ्यः परमात्मनो भेदज्ञापनार्थन्निकृष्टात्मनः परमात्मनियाम्यत्वादिप्रतिपादकं पर्यायमुदाहरति "य आत्मनी"ति, कारणावस्थामपि भेदज्ञापनार्थमाह—

मू० यस्याक्षरं शरीरं यमक्षरन्न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यम्मृत्युर्न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण इति, चास्यापहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति, अतः सर्वेभ्य एवा[१]दित्यादिजीवेभ्यो ऽन्य एव परमात्मेति सिद्धम् ॥ अन्तरधिकरणं समाप्तम् ॥ यतो वा इमानि भूतानि जायन्त इति जगत्कारणं ब्रह्म इत्यवगम्यते किं तज्जगत्कारण? मित्यपेक्षायां सदेव सौम्येदमग्र आसी तत्तेजोऽसृजत आत्मा वा इदमेक एवाग्र आसीत्स इमाँल्लोकानसृजत तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति साधारणैश्शब्दै र्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात्प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्युक्तम्, इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्य्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते आकाशस्तल्लिङ्गात् इत्यादिना पादशेषेण,

टी० "यस्याक्षरमि"ति, अक्षरम्—अचित्समष्टिसंसृष्टा पुरुषसंसृष्टिः मृत्युश्चित्समष्टिसंसृष्टाचित्समष्टिः, देवकामानां चेष्ट इति वाक्यमस्य सूत्रस्य विषयतयोपात्तं यादवप्रकाशैः तन्नात्यन्तोचितम् इन्द्रादीनामपि स्वावरदेवकामनिष्पादकत्वसम्भवेन तेत्रज्ञवैलक्षण्यसाधकत्वाभावात्, देवकामेशनस्य आदित्यपुरस्कारेणोत्थिते पूर्वपक्षे तमादित्यङ्कण्ठोक्त्या निर्दिश्य तदितरदेवतानान्तस्य च नियाम्यत्वं व्याप्यत्वमज्ञत्वं चोक्त्वा नियन्तृत्व-

१ हिरण्यगर्भादिजीवेभ्य इति पा० ।

व्यापित्वसार्वज्ञ्यैः परमात्मनस्तेभ्यः स्फुटतरभेदव्यपदेशपरप्रकरणस्य विप-यतयोदाहरणं ह्यन्ततोचितं शरीरसम्बन्धावच्छिन्नैश्वर्यश्रवणसिद्धकर्मवश्य-त्वाल्लोककामेशत्वादीनां सुकृतप्रकर्षेणोपपत्तेः पाप्मोदयश्रवणस्य पाप-सम्बन्धनिवर्त्तकत्वेन पुण्यसम्बन्धनिवर्त्तकत्वाभावाच्च पूर्वः पक्षः, मोक्ष-प्रकरणेऽभयकर्मविषयपाप्म–शब्दप्रयोग–श्रुत्यन्तरैकार्थ्यप्रवृत्तिनिमित्तयो-गैः पाप्म–शब्दस्योभयपरत्वेन कर्मवश्यत्वनिषेधात्तत्पूर्वकगुणान्तराणामपि जीवेष्वसम्भवाद्धेतुतः फलतो द्रव्यतश्च–

टी० विलक्षणविग्रहयोगस्य जीववैलक्षण्यसाधकत्वादिजीवेभ्यो भेदव्यपदेशाच्च परमात्मेति राद्धान्तः । अधिकरणार्थमुपसंहरति "अत"-इति, समाप्तमन्तरधिकरणम् ।

आकाशाधि-करणम् ।

सू० आकाशस्तल्लिङ्गात् ॥ २३ ॥

भू० इदमाम्नायते छान्दोग्ये "अस्य लोकस्य का गतिरित्या-काश इति होवाच सर्वाणि ह

अथ चिदचिद्विलक्षणस्य वस्तुनो वेदान्तवेद्यत्वनिर्णयात्तदुत्तराधि-करणमनारम्भणीयमिति शङ्कां परिहरन् पेटिकाभेद–तत्सङ्गतिमाह "यतो वा इमानीत्यादि"ना, सद्ब्रह्मात्मादिसाधारणशब्दानां जगत्कारणवाचि-नामर्थस्वभावादभिमतविशेषपर्यवसानं कृतं वस्त्वन्तरविशेषासाधारणत्वेन व्युत्पन्नैरपि शब्दैर्जगत्कारणे निर्दिष्टे तेषामप्यर्थस्वभावादभिमतविशेषप-र्यवसानं क्रियत इत्यर्थः, पूर्वं संशयव्युदासः कृतः, अथ विपर्ययव्युदासः क्रियत इति यावत्, लिङ्गाच्छ्रुतेर्बलीयस्त्वात् कारणविशेषे आकाशा-दिपदश्रुत्या निश्चिते सति लिङ्गात्तद्विरुद्धविशेषनिश्चयोऽनुपपन्न इति पूर्वपक्षोत्थानादधिकरणस्यारम्भणीयत्वं सिद्धमिति भावः, । पादशेषेणेति पादशेषोऽधिकरणचतुष्टयात्मकः, तत्र प्रथमे वस्त्वन्तरप्रसिद्धशब्दविशेषेण प्रत्यवस्थानम्, अर्थविरोधेन परिहारः, अर्थाविरोधशङ्कया प्रत्यवस्थानं द्वितीये विरोधोद्घाटनमुखेन परिहारः, विरोधिलिङ्गाभावेनात्यानुकूल-लिङ्गसद्भावेन च प्रत्यवस्थानम्, तृतीये स्ववाक्यविरोधिलिङ्गाभावेऽप्युपक्रम-

वाक्यस्यविरोधिलिङ्गप्रदर्शनेन सिद्धान्तः उपक्रम एवानुकूललिङ्गभूयस्त्वेन प्रत्यस्थानं चतुर्थे तन्निरासेन सिद्धान्त इति भिदा, अनेनाधिकरणसङ्गतिश्च फलिता। आकाशस्तल्लिङ्गात् सिद्धान्ते कारणत्वानुवादस्य वक्ष्यमाणत्वाद्विधेयं किमित्यपेक्षायां विधेयार्थज्ञापनार्थमस्य लोकस्य का गतिरित्यादिकमुपात्तं गतिः—प्राप्य, संशयमाह "तत्रे"ति, भूताकाशे प्रसिद्ध्यतिशयपरायणात्वाद्यनुपपत्तिभ्यां संशयः, भूताकाशे परमात्मनि च आकाशशब्दप्रयोगात्संशय इत्युक्तं परैः, तदयुक्तम् अश्रुतवेदान्तस्य सर्वाणि ह वा

सू० वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैतेभ्यो भूतेभ्यो ज्यायानाकाशः परायण'मिति, तत्र सन्देहः किं प्रसिद्धाकाशमेवाचाकाशशब्देनाभिधीयते? उतोक्तलक्षणमेव ब्रह्म? ति किं प्राप्तं प्रसिद्धाकाश इति, कुतः शब्दकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धिः शब्देन प्रतीयते स एव ग्रहीतव्यः ।

टी० इमानि भूतानीति वाक्यस्याकाशशब्दवत् "आकाशो ह वै नामरूपयोर्निर्वहितेत्यादिवाक्यस्याकाश—शब्दस्य न परमात्मविषयत्वाप्रतिपत्तेः श्रुतवेदान्तस्य संशयाभावाच्च, चिदचिद्विलक्षणकारणास्तित्वायोगव्यवच्छेदो हि प्रथमपादसाध्यः न त्वन्ययोगव्यवच्छेदः, स त्रिपादीसाध्य एव, इतः पूर्वैरधिकरणैरेवायोगव्यवच्छेदस्सिद्ध इति चेन्न सदेव ब्रह्मविदाप्नोति आत्मन आकाशस्सम्भूतः इत्यादिषु कारणविषयाणां सद्ब्रह्मादिशब्दानां साधारणानाम् आकाशप्राणेन्द्रादिविशेषपर्यवसाने सति चिदचिद्विलक्षणकारणास्तित्वासिद्धेराकाशादिपदानामीक्षणानन्दविशेषयोगानुगुणतया नेयत्वे सत्येव तत्सिद्धेश्च, अतो यथोक्तहेतुनिबन्धनस्संशयः जगत्कारणवादिवाक्यप्रतिपाद्यं वस्तु किमाकाश? उत परमात्मे? ति विचारः, तदर्थम् अस्य लोकस्य का गति? राकाश इत्यत्राकाशः किं प्रसिद्धः?

उत परः ? तदर्थं किमाकाशशब्दो रूढ्या वर्त्तते ? उतावयवशक्त्या ? तदर्थं ज्यायस्त्वादिगुणाः किं मुख्यतया नेयाः ? उत न तदर्थमात्मन आकाशस्सम्भूत इत्यात्म-शब्दः किं कारणाकाशपरः ? उत परमात्मपरः ? तदर्थं किमयमात्म-शब्दः स्वरूपपरः ? उत देहप्रतिसम्बन्धिपरः ? इति विचारः, यदा स्वरूपपरः तदात्मन आकाशत इत्यत्रात्म-शब्दकारणाकाशपरतया ज्यायस्त्वादिगुणानामपि कथं चिन्नेयत्वेन रूढिशक्तेः स्थितत्वाद्विषयवाक्यस्याकाश-शब्दः प्रसिद्धाकाशपर इति वेदान्तवेद्यं वस्तु प्रसिद्धाकाशपर इति पूर्वपक्षे फलफलिभावः । यदात्म-शब्दः शरीरप्रतिसम्बन्धिपरः तदा आत्मन आकाश इत्यत्रात्म-शब्दस्य परमात्मपरतया ज्यायस्त्वादिगुणानामपि मुख्यत्वाद्यौगिकवृत्त्या विषयवाक्यस्याकाश-शब्दः परात्मपर इति कारणवाक्यप्रतिपाद्यः परमात्मेति राद्धान्ते फलफलिभावः पूर्वपक्षसमर्थनैापयिकं प्रयोजकं शिक्षयति "शब्दे"ति, प्रमाणान्तरसिद्धार्थानुवादे सति हि तदनुरोधाय क्लिष्टगत्याऽर्थस्य वर्णनीयत्वं स्यात् आदित्यो यूप इत्यादिषु यूपादेः प्रमाणान्तरगोचरतया हि तदनुरोधादैक्यहानं, मानान्तरागोचरे वस्तुनि प्रतिपाद्ये न तथा व्युत्पत्तिसिद्धार्थस्सा[1]ध्यः अनुरोद्धव्यान्तराभावेन शब्दस्वातन्त्र्यस्याकुण्ठितत्वादिति भावः । ततः किमित्यत्राह-

सू० अतः प्रसिद्धाकाश एव चराचरात्मकभूतजातस्य कृत्स्नस्य कारणम् अतस्तस्मादनतिरिक्तं ब्रह्म । नन्वीक्षापूर्वकस्रष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तं, सत्यमुक्तं दुरुक्तन्तु तत्, तथा हि यतो वा इमानि भूतानि जायन्ते तद्ब्रह्मेत्युक्ते कुत इमानि भूतानि जायन्त ? इत्यादिविशेषाकाङ्क्षायां सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यादिना विशेषप्रतीतेर्जगज्जन्मादिकारणमाकाश एवेति निश्चिते सदेव सौम्येदमग्र आसीदित्यादि-

१ व्युत्पत्तिसिद्धार्थस्त्याज्य इति पा० ।

ष्वपि सदादिशब्दाः साधारणाकारास्तमेव विशेषमाकाशमभिदधति, आत्मा वा इदमेक एवाग्र आसीदित्यादिष्वपि आत्म-शब्दस्तत्रैव वर्त्तते तस्यापि हि चेतनैकान्तत्वं न सम्भवति यथा मृदात्मको घट इति आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्म-शब्दो वर्तते अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः ।

टी० "अत" इति, प्रसिद्धाकाश एवेति अर्थान्तरपरत्वे हि यौगिकवृत्तिराश्रयणीया न तद्युक्तं रूढिर्हि योगात्प्रबलेति भावः । अर्थविरोधाद्रुत्पत्तिसिद्धार्थस्त्यज्यत इति चोदयति "नन्वि" ति, परिहरति "सत्यमि" ति, इत्यादीत्यादि-शब्देन किं प्रयन्ति? केन जीवन्ती? त्यपेक्षा विवक्षिता विशेषप्रतीतेरिति एतद्वाक्यविशेषेण वस्तुविशेषप्रतीतिर्हेतुतयोक्ता जगज्जन्मादिकारणमाकाश एवेति निश्चित इति सद्विद्यादिप्रतिपन्नकारणानुवादिलक्षणवाक्योक्तं ब्रह्म आकाश एवेति निश्चित इत्यर्थः । यद्वा आपातप्रतीतिः पूर्वमुक्ता निश्चित इति युक्तितो निर्णय उक्तः । ननु यतो वा इमानीत्यादिवाक्यप्रकरण एवानन्दो ब्रह्मेत्यानन्द-शब्देन विशेषनिर्णयोऽस्ति नैवं यदेष आकाश आनन्दो न स्यादित्याकाश-शब्दसामानाधिकरण्यादानन्द-शब्दः किमाकाशपरः? आकाश-शब्दः किमानन्दपर? इति संशयः स्यात्, तस्मादानन्दशब्दसामानाधिकरण्यरहितादाकाशादेव समुत्पद्यन्त इति वाक्यादेव विशेषनिर्णय इत्यभिप्रायेणाकाश एवेति निश्चित इत्युक्तं, साधारणाकाराः-साधारणरूपाः "छागोवा मन्त्रवर्णादि" ति न्यायोऽभिप्रेतः, आत्म-शब्देन विशेषनिर्णयशङ्कां व्युदस्यति "आत्मा वा" इत्यादिना, तत्रैव आकाशे आकाश-शब्दापेक्षया आत्म शब्दोऽपि साधारण इत्यर्थः । आत्म-शब्दस्यावयवशक्त्याप्याकाशपरत्वं दर्शयति "आप्नोती" ति,

व्यवस्थितरूढिशक्तेराकाश–शब्दस्य रूढिभङ्गादपि नानार्थसाधारणरूढिशक्तेरात्म–शब्दस्य रूढिभङ्ग उचित इति भावः । ईक्षणादीनां गौणत्वेन निर्वाह्यत्वमाह "अत एवमि"ति, श्रुतिप्राबल्याल्लिङ्गं तदनुगुणं नेयमित्यर्थः, ईक्षणादिमुख्यत्वानुरोधिसदादिशब्दैरेव विशेषनिर्णय इति शङ्कायां सदादिशब्देभ्यः आकाशपदश्रुतेः प्राबल्यमुपपादयति–

मू० यदिह साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यत ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत आकाश–शब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति। नन्वात्मन आकाशस्सम्भूतः इत्याकाशस्यापि कार्य्यत्वं प्रतीयते सत्यं, सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति तत्राकाशस्य सूक्ष्मावस्था कारणं, स्थूलावस्था तु कार्यम् आत्मन आकाशस्सम्भूत इति स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपः सम्भूत इत्यर्थः सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति सर्वस्य जगतः आकाशादेव प्रभवाप्ययादिश्रवणात्, तदेव जगत्कारणं ब्रह्मेति निश्चितं यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव यदेष आकाश आनन्दो न स्यात् आकाशो ह वै नामरूपयोर्निर्वहितेत्येवमादिनिर्देशोऽप्युपपन्नतरः, अतःप्रसिद्धाकाशादनतिरिक्तं ब्रह्मेत्येवं प्राप्ते ब्रूमः ।

टी० "यदि ह्यो"ति, साधारण-शब्दैरेवेति न तु विशेषशब्दान्तरे सतीति भावः। यदीत्यभिप्रेतं, विपर्ययेण विशेषनिश्चायकसद्भावं दर्शयति "आकाश-शब्देन त्वि"ति, "रूढिर्हि योगमपहरती"ति न्यायाद्विलम्बितप्रतिपत्ताद्यौगिकादपि शीघ्रधीविषये रूढ्यर्थ एवाकाश-शब्दस्य परिग्राह्ये सदादिशब्दानाम् ईक्षणादिलिङ्गपरामर्शसापेक्षत्वेन विलम्बितप्रवृत्तितया अतिशीघ्रप्रवृत्तित्वात्प्रबलतराकाशपदश्रुत्याऽपेक्षिते विशेषे लब्धे अर्थस्वभावनिर्णीतव्यविशेषाभावादीक्षणादयस्तदनुरोधेन वर्णनीयाः, अतो न चेतनविशेषकारणत्वसिद्धिरित्यर्थः। कार्यतयाऽवगतस्य परमकारणत्वानुपपत्तिमुखेन चोदयति "नन्वि"ति, परिहरति "सत्यमि"ति, कार्यत्वेऽभिमतिः तस्य कारणत्वभञ्जकत्वेऽनङ्गीकारः, वाय्वाद्युपादानत्विदर्शनतया सूक्ष्मावस्था-शब्देन तन्मात्रावस्था कथ्यते आत्मन आकाश इति वाक्ये आत्म-शब्दः स्ववाचीत्यर्थः। कुत इत्यमस्वारस्येनार्थो वर्ण्यत? इत्यत्राह "सर्वाणी"ति, प्रभवाप्ययादीत्यादि-शब्देनावकाशप्रदानेन स्थितिहेतुत्वमुच्यते, परायणमिति स्वत्रोक्तं नामरूपयोर्निर्वहितेत्येवमादीत्यादि-शब्देन कं ब्रह्म खं ब्रह्म प्राणं चास्मै तदाकाशं चोचुः परमे व्योमन् प्रतिष्ठिते"ति वाक्यान्यभिप्रेतानि, पूर्वपक्षमुपसंहरति "अत"इति, राद्धान्तमारभते।

आकाशस्तल्लिङ्गात् ॥ २३ ॥

भू० आकाश-शब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव, कुतः—तल्लिङ्गात्, निखिलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते, निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाश-शब्दाभिधेयस्य नोपपद्यते चेतनवस्तुनस्तत्कार्य्यत्वासम्भवात्, परायणत्वं चेतनानां परमप्राप्यत्वन्तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न सम्भवति

सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः, तदप्यचितो नोपपद्यते ।

टी० "एव"मिति, पूर्वाधिकरण इव नात्र तद्धर्मापदेशादित्युक्तम्, अपि तु तल्लिङ्गादित्युक्तं, वाक्यान्तरप्रसिद्धार्थस्यानूदितस्य हेतुतया विवक्षितत्वात् लिङ्गिसम्बन्धित्वेन प्रमाणान्तरोपलब्धं हि लिङ्गं भवति, लिङ्गं च किमि? त्यत्राह "निखिलजगदि"ति, सर्वाणि ह वा इमानि भूतानि इत्यस्मिन् विषयवाक्ये सर्व-शब्दस्यासङ्कोचमभिप्रेत्य निखिलेत्युक्तं, भूत-शब्दस्य वाय्वादिचतुष्टयमात्रपरत्वव्युदासाय जगच्छब्दः, महच्छब्दपञ्चशब्दपृथिव्यादिशब्दसमभिव्याहाराभावे भूत-शब्दस्याचित्संसृष्टचेतनपरत्वं स्वतःप्राप्तं यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति "न हिंस्यात्सर्वा भूतानि" "भूतानां प्राणिनः श्रेष्ठाः" इत्यादिप्रयोगस्वारस्यात्, अतस्सर्वभूतकारणत्वोक्त्या चिदचिदात्मकसमस्तप्रपञ्चकारणत्वमुक्तं भवतीत्यभिप्रायेण निखिलजगदित्युक्तं, तत्र निमित्तान्तराश्रवणाद्वाक्यान्तरैकार्थ्याच्च निमित्तोपादानादिरूपसर्वविधसाधारणकारणत्वाभिप्रायेणैककारणत्वमित्युक्तम् । आकाशस्य तल्लिङ्गानुपपत्तिमाह "निखिलकारणत्वमि"ति, अनेनैककारणत्वानुपपत्तिश्चाभिप्रेता, न ह्याकाशो निमित्तकारणं भवितुमर्हति हेयत्वात्पुरुषार्थविरोधित्वाच्च । प्राप्यत्वं च न सम्भवतीत्याह "परायणत्वं चे"ति, अचेतनस्य अचेतनत्वेन स्वरूपानन्तर्भूतत्वाद्धेयत्वमित्यर्थः, सकलपुरुषार्थविरोधिनः—सकलानां जीवानां साक्षात्पुरुषार्थो मोक्षः बन्धहेतुतया तस्य विरोधिन इत्यर्थः । यद्वा मोक्षविरोधितया हेयस्य शब्दादिनिषिद्धविषयप्रावण्यजननाद्धर्मादिसकलपुरुषार्थविरोधिनः सर्वविधसुखस्य मोक्षान्तर्भावात्सकलपुरुषार्थरूपो मोक्षस्तद्विरोधिन इति वार्थः । यद्वा कारणावस्थायामत्यन्तज्ञानसङ्कोचहेतुतया चतुर्णामपि पुरुषार्थानां विरोधिन इत्यर्थः । ज्यायस्त्वाद्यनुपपत्तिमाह "सर्वस्मादि"ति, अत्र पूर्वपक्षयुक्तेः कः परिहार? उक्तो भवतीत्यपेक्षायां सूत्राभिप्रेतार्थं वक्ष्यन् परोक्तमनुवदति—

सू० यदुक्तं जगत्कारणविशेषाकाङ्क्षायामाकाश—शब्देन विशेष-समर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति तदयुक्तं "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त" इति प्रसिद्धवन्निर्देशात्, प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते, प्रमाणान्तराणि च "सदेव सोम्येदमग्र आसीदि"त्येवमादीन्येव वाक्यानि, तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्म आकाश—शब्देन प्रसिद्धवन्निर्दिश्यते, सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाश—शब्दाभिधेयत्वम्, आकाशते आकाशयति चेति, किञ्चानेनाकाश—शब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतनविशेषमभिदधानेन "तदैक्षत बहु स्यां प्रजायेये"ति ।

टी० "यदुक्तमि"ति, परिहरति "तदयुक्तमि"ति, प्रथमं पुरोवादसापेक्षेण अनुवादेन पुरोवादिवाक्यविरुद्धार्थप्रतिपादनायोगं वक्तुमनुवादलिङ्गवत्त्वमाह "सर्वाणी"ति, प्रसिद्धवन्निर्देशोऽस्तु ततः किमित्यत्राह "प्रसिद्धवदि"ति, सापेक्षत्वमस्तु ततः किं? मित्यत्राह "प्रमाणान्तराणि चे"ति, कथमाकाश—शब्दस्य परब्रह्मवाचित्वं? मित्यत्राह "सम्भवति चे"-ति, प्रकाशकत्वात्—अन्येषां सर्वार्थप्रकाशकत्वात्, आकाशते स्वस्मै प्रकाशते आकाशयति अन्यं प्रकाशयति स्वात्मने इत्यर्थः । यद्वा प्रकाशकत्वादिति णिजन्तत्वेन अणिजन्तत्वेन च व्युत्पत्तिद्वयस्य तन्त्रोक्तिस्तस्यैव विवरणमाकाशत इत्यादि रूढिप्राबल्यमर्थाविरोधे सतीत्यपशूद्राधिकरणन्योपजीवनेनात्रावयवशक्त्या निर्वाहः कृतः, रूढ्यपरित्यागेनापर्यवसानवृत्त्याऽऽकाशशब्दस्य आकाशशरीरकपरमात्मपरतया निर्वाहोऽप्यभिमतः, वैश्वनराधिकरणे वैश्वानर—शब्दे उभयथाऽपि परमात्मपरत्वस्य वक्ष्यमाणत्वादाकाशादि-

च्छानान्तच्छरीरकपरमात्मवाचित्वस्यानन्तरपादेऽनुवदिष्यमाणत्वाच्च आ-काश-शब्दस्याव्याकृतशरीरकपरमात्मपरत्वं तु यादवप्रकाशोक्तं विलम्बद्रुय-वत्त्वादुपेक्षितं, न केवलं प्रसिद्धवन्निर्देशमात्रमनुवादत्वसाधकं यदाऽऽग्नेयो-ष्टाकपालः, उपरि हि देवेभ्योधारयतीत्यादावदर्शनादिति शङ्कायामयोग्यत्वे निश्चिते सति प्रसिद्धवन्निर्देशोऽनुवादत्वसाधक इत्यभिप्रायेणाह "किञ्चे"-ति, विशेषसमर्पणक्षमेणापीति एकपदश्रवणवेलायां विशेषसमर्पणक्षमेणापि परामर्शदशायाम् अयोग्यतया निश्चितार्थो न प्रतिपादयितुं शक्यत इत्यभि प्रेत्य असम्भावितकारणाभावमित्युक्तं, तदैक्षतेति सद्विद्यावाक्यशेषः ।

भू० "सोऽकामयत बहु स्यां प्रजायेये"त्यादिवाक्यशेषावधारित-सार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसम-र्थवाक्यार्थोन्यथाकरणन्न प्रमाणपदवीमधिरोहति, एवमपू र्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्य-गतिसामान्यं चैकेनानुवादस्वरूपेणान्यथा कर्त्तुं न शक्यते, यत्त्वात्म-शब्दस्चेतनैकान्तो न सम्भवति मृदात्मको घटः इत्यादिषु दर्शनादित्युक्तं, तत्रोच्यते—यद्यपि चेतनादन्य-त्रापि क्वचिदात्म-शब्दः प्रयुज्यते तथाऽपि शरीरप्रतिसम्ब-न्धिन्यात्म-शब्दस्य प्रयोगप्राचुर्य्यादात्मावा इदमेक एवा-ग्र आसीदात्मन आकाशः सम्भूत इत्यादिषु शरीरप्रतिस-म्बन्धिचेतन एव प्रतीयते, यथा गो-शब्दस्यानेकार्थवाचि-त्वेऽपि प्रयोगप्राचुर्य्यात्सास्नादिमानेव स्वतः प्रतीयते, अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा,तथा स्वतः-प्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव "स ऐक्षत लो-कान्नुसृजा" इति सोऽकामयत बहु स्यां प्रजायेयेत्यादि तत्त-द्वाक्यशेषा एव स्थिरीकुर्वन्ति ।

टी० सोऽकामयतेति ब्रह्मविदाप्नोतीत्यनुवाकवाक्यशेषः ब्रह्मणो योग्यार्थत्वज्ञापनाय सार्वज्ञ्यादिकमुक्तं, न प्रमाणपदवीमधिरोहतीति अयोग्यार्थेनानुवादरूपवाक्येन योग्यापूर्वार्थवाक्यानाम् अन्यथा करणमयुक्तमित्यर्थः उक्तवैषम्यद्वयानुवादेनानेकवाक्यानि एकेन वाक्येन बाधितुम् अशक्यानीत्याह "एवमि"ति, गतिसामान्यं—प्रवृत्तिसामान्यम्, अस्य लोकस्य का गतिरित्युपक्रमवशादन्यपरत्वं स्फुटम्, एवमाकाशकारणपक्षे अन्यपरत्वमेकवाक्यत्वमयोग्यार्थत्वमनुवादरूपत्वं स्वपक्षे त्वनन्यपरत्वं, वाक्यबहुत्वं, योग्यार्थत्वम,पूर्वत्वञ्चे,ति वैषम्यचतुष्टयमुक्तम्, एवं योग्यार्थश्रुतिमूलं लिङ्गम् अयोग्यार्थश्रुतितः प्रबलमिति सिद्धान्तन्याय उक्तो भवति, यथा गङ्गा—शब्दः स्वार्थसमर्पणक्षमो भूतलधर्मतया प्रत्यक्षसिद्धघोषाऽधिकर[1]णत्वलिङ्गविरोधेन अन्वयायोग्यः स्वार्थप्रतिपादनक्षमत्वाभावात् श्रुत्याभासः, एवं योग्यार्थ श्रुतिमूललिङ्गापेक्षया आकाशश्रुतिः श्रुत्याभास इति, आत्म—शब्दानैकान्त्यं यत्त्वित्यादिनाऽनूद्य परिहरति "तत्रे"ति,स्वतःप्राप्त्याऽऽत्म—शब्दो विशेषवाचीत्यर्थः, प्रकृतब्रह्मवाचितच्छब्दसामानाधिकरण्याच्च न स्वरूपपरत्वमित्यर्थसिद्धं, न केवलमर्थान्तरसाधकनिर्देशाभावः स्वतःप्राप्तार्थसाधकनिर्देशोऽप्यस्तीत्याह "स ईक्षते"ति, अधिकरणार्थमुपसंहरति—

सू० एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं सदेव सोम्येदमग्र आसीदिति वाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत्सर्वाणि ह वा इमानि भूतानीत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ।

समाप्तमाकाशाधिकरणम् ।

सू० अत एव प्राणः ॥ २४ ॥

श्री: इदमाम्नायते छान्दोग्ये "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते"ति प्रस्तुत्य "कतमा सा देवता इति प्राण" इति

[1] योगाधिकरणत्वेति पा० ।

होवाच "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यदि"ति अत्र प्राण-शब्दोऽप्याकाशशब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्त्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन् निर्दिष्टात् अधिकाशङ्का तु कृत्स्नभूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात्प्रसिद्ध एव प्राणो जगत्कारणतया निर्दिश्यत इतीति ।

टी० "एवमि"ति, योगाद् रूढेः प्राबल्यात् प्रसिद्धार्थपरत्वे सति श्रुतिविरोधाद्दुर्बलं लिङ्गादि तदनुरोधेन नेयमिति पूर्वपक्षयुक्तिः, योग्यार्थश्रुतिमूललिङ्गाद्ययोग्यार्थस्य पदस्य श्रुत्याभासत्वाद्योग्यार्थः स्वीकार्य इति राद्धान्तयुक्तिः । आकाशाधिकरणं समाप्तम् ॥

उक्ताधिकरणन्यायमतिदिशति "अत एव प्राणः" विषयमाह "इदमि"ति, मूर्धा ते व्यपतिष्यत्—आत्मसत्ता न लभ्येतेत्यर्थः, किं वेदान्तवेद्यः प्रसिद्धः प्राणः? उत परमात्मा? तदर्थं प्राण इति होवाच प्राणमेवाभिसंविशन्तीत्युक्तः प्राणः किं प्रसिद्धः? उत परः? तदर्थं किं प्राण-शब्दो रूढः? उत यौगिकः? तदर्थं भूतजातस्य प्रसिद्धप्राणायत्तस्थितिप्रवृत्तित्वमस्ति? उत ने?ति विचारः, यदाऽस्ति तदा रूढत्वात् विषयवाक्यस्थप्राण-शब्दः प्रसिद्धप्राण पर इति सर्ववेदान्तवेद्यः प्रसिद्धः प्राण इति पूर्वपक्षे फलितम् । राद्धान्ते तु यदा प्राणायत्तस्थितिप्रवृत्तित्वं नास्ति तदाऽवयवशक्त्या विषयवाक्यस्थप्राण-शब्दः परमात्मपर इति सर्ववेदान्तवेद्यः परमात्मेति फलफलिभावः । अत्रार्थमाह "अत्रे"ति, आकाशशब्दवदित्यत्र रूढिप्राबल्यतत्परिहारादिकं पूर्वोक्तं सर्वमनुसन्धेयं, न हि प्रत्युदाहरणन्यायो ऽतिदेष्टव्यः, अतिदेशस्य हि प्रयोजनम् अधिकाशङ्कापरिहारः, अतः सूत्रकाराभिमतामधिकाशङ्कां दर्शयति "कृत्स्नस्ये"ति, अत्र अविरोधश-

द्ध्या प्रत्यवस्थानं, विरोधस्फुटीकरणं चानुसन्धेयं, स्थितिप्रवृत्त्यादीत्यादि-शब्देन निवृत्तिरुच्यते, प्रवृत्तिहेतुभूतज्ञानचिकीर्षे च स्थितिप्रवृत्तिहेतुत्वेनोत्पत्तिकारणत्वमर्थसिद्धमिति भावः। यद्वा "यदा वै पुरुषः स्वपिति प्राणन्तर्हि वागप्येति प्राणञ्चक्षुः प्राणं श्रोत्रं प्राणं मनः यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त" इति प्रसिद्धवाचिर्देशरहिततया श्रुत्या प्राणस्य अप्ययोद्गमन-हेतुत्वावगमश्च आदि-शब्देन विवक्षितः, अस्मिन्प्रकरणे उद्गीथप्रतिहार-योर्देवतात्वेन अन्नादित्यावुक्तौ, तयोश्चाब्रह्मत्वात् प्राणोऽपि ब्रह्मव्यति-रिक्तः प्रसिद्ध एव ग्राह्य इति इदं भाष्येऽनादृतं प्रकरणोक्तानामन्नमयादी-नामब्रह्मत्वेऽपि कारणस्य परब्रह्मत्वमानन्दवल्ल्यां समर्थितमिति प्रकर-णमात्रस्य पूर्वपक्षावलम्बनत्वेन बुद्धावनारोहात्, जगत्कारणतयेति संसृष्टं प्रति कारणत्वं सम्भवतीति भावः। अधिकं परिहारं दर्शयति—

सू० परिहारस्तु शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात्स-र्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राण-मभ्युज्जिहत इति नोपपद्यत इति, अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राण—शब्देनाभिधीयते, अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपह-तपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादि—शब्दाभिधेयमिति सिद्धम्। समाप्तं प्राणाधिकरणम् ॥

अतः परं जगत्कारणत्वव्याप्तेन येन केनापि निरति-शयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैर्यौगान्तरप्रसिद्धै-रप्यभिधीयमानं परं ब्रह्मैवेति प्रतिपाद्यते "ज्योतिश्चरणा-भिधानादित्यादिना,।

टी० "परिहारस्त्वि"ति, आदि—शब्दोक्त आकाशादिः, प्राणन्तर्हि

वागप्येतीति श्रुतिरिन्द्रियव्यापारविषया, प्राण-शब्दस्य परब्रह्मवाचित्वङ्कथ? मिति शङ्कां परिहरन् अधिकरणार्थमुपसंहरति "अत" इति, वृत्ताधिकरणद्वयस्य अवान्तरपेटिकात्वं दर्शयति "अतः प्रसिद्धे" ति, प्राणाधिकरणं समाप्तम् ।

वर्त्तिष्यमाणाधिकरणद्वयस्य पेटिकान्तरत्वमाह "अतः परमि" ति, वस्त्वन्तरासाधारणैशब्दैर्जगत्कारणे निर्दिश्यमानेऽपि कारणत्वाभिधायिनां वाक्यानां विशेषपर्यवसानं कृतम् । अथ कारणत्वाक्षेपकलिङ्गवाचिनां वाक्यानामभिमतविशेषपर्यवसानमुच्यत इत्यवान्तरपेटिका ज्योतिरधिकरणभेदस्तत्सङ्गतिश्चेत्यर्थः ज्योतिः-शब्देनावान्तरसङ्गतिश्च द्योतिता, प्राणो-वायुविशेषः, आदित्यादिज्योतिस्तेजोविशेषः, अतः आकाशप्राणज्योतिषां क्रमो युक्त इति । नन्वात्काशादिशब्दत्रयं परमात्मपरमिति सिद्धान्तितं सत्यन्तथाऽपि प्रसिद्ध्यनुसारिण्या पूर्वपक्षदृष्ट्या सङ्गत्युपपत्तिः, येन केनापीति न लिङ्गाल्पत्वं विवक्षितं किन्तूदाहृतविषयवाक्यप्रतिपन्नोऽयमेव गुणः कारणत्वाक्षेपक इति गुणविशेषानियम इति भावः । उभयोः पेटिकयोरनुयायिनीमाकाङ्क्षां दर्शयति "अर्थान्तरप्रसिद्धेरपी" ति,

ज्योतिरधिकरणम् ।

सू॰ ज्योतिश्चरणाभिधानात् ॥ २५ ॥

भा॰ इदमाम्नायते छान्दोग्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति" रिति, तत्र सन्देहः किमयं ज्योतिश्शब्दनिर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म? उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभास्सर्वज्ञः सत्यसङ्कल्पः पुरुषोत्तम इति, किं युक्तं प्रसिद्धमेव ज्योतिरिति, कुतः प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत्स्ववाक्योपात्तपरमात्मव्याप्त-

टी० सू० "ज्योतिश्चरणाभिधानात्" इदमित्यादि—पृष्ठेषु उपरितनेषु त्रिपादूर्ध्वस्तमसोपरिष्टादित्यादिश्रुतिभ्यः व्यष्टिसमष्टिविवक्षया विश्वतस्सर्वत इत्युक्तम् । अनुत्तमेषु स्वस्मादन्य उत्तमो नास्तीत्यनुत्तमः, विश्वतः—कृत्स्नभूमिप्रदेशात्, सर्वतः—कृत्स्नान्तरिक्षप्रदेशात्, पृष्ठेषु बहिर्भूतेष्विति योजनासम्भवात्पूर्वपक्षोत्थानम्, आदित्यो ह्यूर्ध्वलोकेष्वपि रश्मिद्वारा दीप्यते, तत्रेति लोकप्रसिद्धि—भूतचरणत्वाभ्यां संशयः, निरतिशयदीप्तियुक्तोऽर्थ इति पूर्वपक्षसिद्धान्तसाधारणनिर्देशः, निरतिशयदीप्तिरेव कारणत्वापेक्षकं लिङ्गं, "न तत्र सूर्यो भाति तस्य भासा सर्वमिदं विभाती"ति प्रकरणे "तथाऽक्षरात्सम्भवतीह विश्वमि"ति निरतिशयदीप्तियुक्तवस्तुनः कारणत्वश्रवणात्तत्प्रकरणस्य कारणविषयत्वं ह्यविगीतं, परमात्मविषयत्वे हि विमतिः निरतिशयदीप्तियोगात्कारणभूतं ब्रह्म भवतु ज्योतिश्शब्दनिर्दिष्टोऽर्थः किं प्रसिद्धमादित्यादि ज्योतिरेवेत्यन्वयार्थः, सावान्तरभेदसमष्टिव्यष्ट्यादिविवक्षया समस्तचिदचिद्वस्तुजातशब्दो, व्याप्तिग्रहणस्यानोपनिषत्प्रसिद्धं विशेषणमाह "सर्वज्ञस्सत्यसङ्कल्प" इति, "यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयन्तप" इति हि श्रूयते अस्यामुपनिषदि पुरुषसूक्तप्रत्यभिज्ञानात् पुरुषोत्तम इत्युक्तम्, "अथ यदतः परो दिवो ज्योतिर्दीप्यते इत्यत्र ज्योतिश्शब्दः किं प्रसिद्धादित्यादिज्योतिर्विषय? उत परमात्मपर? इति तदर्थं पूर्ववाक्ये द्युसम्बन्धितया निर्दिष्टस्य परमात्मनः किमत्र प्रत्यभिज्ञानं नास्ति? उतास्ति? तदर्थं कौक्षेयज्योतिषैक्योपदेशः उपदेशभेदश्च किं प्रत्यभिज्ञाविरोधिनौ? उताविरोधिनौ? पूर्वस्मिन् ब्राह्मणवाक्ये गायत्रीशब्दः किं प्रसिद्धगायत्रीपर? उत नेति विचारः, यदा विरोधिनौ गायत्रीशब्दार्थश्च प्रसिद्धः तदाऽस्मिन्वाक्ये परमात्मप्रत्यभिज्ञाऽभावात् द्युसम्बन्धिज्योतिः प्रसिद्धादित्यादिज्योतिरेवेति पूर्वपक्षे फलफलिभावः, यदा कौक्षेयज्योतिषैक्योपदेशो विभक्तिभेदश्च न परप्रत्यभिज्ञाविरोधिनौ गायत्रीशब्दश्च ब्रह्मपरः तदा पूर्ववाक्योक्तद्युसम्बन्धिपरमात्मन इह प्रत्यभिज्ञानाद्दिवः परत्वेनोक्तज्योतिः—

**सू० लिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासम्भवात्कौ-**

क्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं ब्रह्मेत्येवं प्राप्ते प्रचक्ष्महे—

ज्योतिश्चरणाभिधानात् । २५ ।

टी० परमात्मैवेति सिद्धान्ते फलफलिभावः । ननु कथं स्ववाक्ये परमात्मलिङ्गाभावः ? निरतिशयदीप्तियोगाक्षिप्तं कारणत्वं हि परमात्मलिङ्गं नैवं, न हि जगत्कारणत्वमात्रम्परमात्मलिङ्गम् अपि तु कारणत्वविशेष एव तल्लिङ्गं कृत्स्नचेतनाचेतनं प्रति सर्वविधकारणं हि परमात्मा पूर्वाधिकरणद्युविषयवाक्ये ऽपि सर्वाणि ह वा इमानि भूतानीति समस्तचेतनाचेतनं प्रति कारणत्वरूपं परमात्मलिङ्गं स्ववाक्यस्थन्न तथाऽत्र परमात्मलिङ्गभूतकारणत्वविशेषः स्ववाक्ये दृश्यते इत्यभिप्रायेणोक्तं परमात्मव्याप्तलिङ्गविशेषादर्शनादिति । ततः किमित्यत्राह "परमपुरुषे"ति, हेत्वन्तरमाह "कौक्षेये"ति, प्राकृततेजस्तत्त्वकार्यतयाऽऽदित्यादेः कौक्षेयज्योतिषश्च एकजातीयतया सामानाधिकरण्यनिर्देश ऐक्योपदेशः, कौक्षेयज्योतिषश्च भौतिकत्वम् उष्णत्वघोषगुणकत्वाम्नानात्सिद्धं "तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्य निनदमिव नदथुमिवाग्नेरिव ज्वलत उपशृणोतीति हि श्रूयते प्रसिद्धमेव ज्योतिरिति, आदित्यादौ ज्योतिश्शब्दस्य प्रसिद्धत्वादिति भावः । एवं स्ववाक्यत्यादिना कौक्षेयेत्यादिना च स्ववाक्ये विरोधिलिङ्गाभावाल्पानुकूललिङ्गसद्भावौ दर्शितौ भवतः । दीप्यत इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवतीत्यभिप्रेतम्, अस्यापि हेतोः परिहरिष्यमाणत्वात् सर्वगतस्य ब्रह्मणो द्युमर्यादत्वासम्भवस्तु परैः पूर्वपक्षहेतुतयोक्तो भाष्ये नादृतः भौतिकज्योतिषोऽपि द्युमर्यादत्वासम्भवात्, सर्वत्र भौतिकानि ज्योतींषि हि विद्यन्ते, उपासनार्थं प्रदेशविशेषपरिग्रहस्तु ब्रह्मणोऽप्युपपद्यते लोकेष्वित्यधिकरणबहुत्वप्रतीतिश्च सर्वत्र सतो ब्रह्मण उपपन्ना तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेदेत्यल्पफलत्वश्रवणात्तु ब्रह्मविदा-

मपि विघ्नानुकूलसकलप्रदत्वात्परमात्मन उपपद्यते । एवमेतेषां हेतूनाम-धिकरणान्तरपरिहार्यत्वादमी पूर्वपक्षेऽनादृताः एवं प्राप्त—इति चरणत्वेन सर्वभूताभिधानं कारणस्य जीववैलक्षण्यनिश्चायकं जीवमात्रस्य सर्वभूत-पादवत्त्वानुपपत्तेः, ततः एव पुरुषसूक्तप्रत्यभिज्ञापकतया देवताविशेषनि-श्चयः तद्द्वारा दीप्तियोगस्य भौतिकज्योतिष्ट्वे हेतुनापरिहारश्च भवति पुरुषसूक्तं कस्मात्सूत्रकारेण न निरूपितं? संशयहेत्वभावादिति ब्रूमः सन्दिग्धे हि न्यायः प्रवर्त्तते, पुरुषसूक्ते च ज्योतिश्शब्दः छन्दोऽभिधाना-दिकं प्रधानक्षेत्रज्ञासाधारणलिङ्गान्तरं वा क्वचिन्न दृश्यते सर्वभूतपादवत्त्वा-दिधर्माश्च तयोरसम्भाविताः, तर्हि चिदचिद्विलक्षणकारणास्तित्वविषयस्य प्रथमपादस्यानारम्भः स्यादिति चेत् न बहूनां वेदान्तवाक्यानां प्रकृतिपुरुष-कारणमात्रवादित्वे तद्विरोधेनात्रापि संशयप्रसङ्गात्, तेषाम्भूयसाम्बलीय-स्तया विपरीतस्य निश्चयप्रसङ्गाच्च, तद्व्युदासायारम्भणीयत्वात् तेषु च प्रकृतिपुरुषविलक्षणविषयतया न्यायतो निश्चितेषु संशयविपर्ययाभावा-त्पुरुषसूक्तस्य चिदचिद्विलक्षणे परे ब्रह्मणि प्रामाण्यमप्रतिभटमवतिष्ठते अतो न तत्र निरूपणीयं, तस्य च तत्त्वपरत्वं पुरुषसूक्तस्य भगवत्परत्वं तत्र महापुरुषसंज्ञदेवताविशेषविषयत्वमप्यविगीतम्, अनेकोपपत्तिसिद्धञ्च तथा हि—

**सू० द्युसम्बन्धितया निर्दिष्टन्निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव, कुतः "पादोऽस्य सर्वा—**

टी० इदं तावत् "अग्निमीडे पुरोहितम्" "अभित्वा शूर नो नुमः स्तो-मीन्द्रं नाधितो जोहवीमि स्तोम्यग्निन्नाधितो जोहवीमीत्यादिवत् अस्य स्ववाक्यन्न स्तुतिपरत्वमवगमयति "अर्हन् बिभर्षि सायकानि धन्वेत्याह स्तोम्यैवैनमेतत् ततो दे वा ऊर्द्धवाहवोरुद्रमस्तुवन्नित्यादेरिव वाक्यान्तरे-णास्य स्तुतिपरत्वञ्चावगम्यते, नापि स्तुतिपरत्वलिङ्गमुपलभ्यते न हि नमस्ते-ऽस्तु मामाहिंसीः देहि मे ददामि त" इति वत् नमस्कारोऽनिष्टनिवृत्तीष्ट-लाभप्रार्थना वा दृश्यते विश्वस्मादिन्द्र उत्तरः तस्य वज्रमादाय शीर्षाण्य-

च्छिनत् तम्भूतान्यभ्यक्रोशन् ब्रह्मह"न्निति "अग्निस्सर्वा देवताः अग्निं वै जातं पाप्मा जग्राहेत्यादिभिरग्नीन्द्रादीनामिव प्रतिपन्नस्य प्रकर्षस्य बाधकश्च न दृश्यते, न हि परमपुरुषस्य कार्यत्वकर्मवश्यत्वादिकं क्वचिदनन्यपरवाक्येनावगम्यते "आकाशो ह वै नाम" "यतो वा इमानीत्यादिवाक्यानामिवानुवादरूपतया नान्यसा[१]काङ्क्षत्वं प्रतीयते तदेषाभ्युक्ता तदेतदृचाभ्युनूक्तमितिवत् स्वोपदिष्टार्थसाक्षित्वेन प्रमाणान्तरानुपस्थानाच्च नैरपेक्ष्यमवगम्यते, तदेतदृचाऽभ्यनूक्तम् तावानस्य महिमेत्यादिभिस्साक्षित्वेनोदाहृतत्वाच्च स्वयमन्यानपेक्षस्य प्रमाणान्तरोपजीव्यत्वं च प्रतीयते "इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते । ऋतं सत्यं च विख्यातम् ऋषिं सिंहेन चिन्तितम्" इति मोक्षधर्मे, तत्त्वनिष्कर्षकतया व्यासेनोदाहृतम्, अत्र च सर्वेषु वेदेषु पठिततया सन्निहितत्वात्तत्तच्छाखागतानां तत्त्वपरवाक्यानामाकाङ्क्षितयोग्यविशेषसमर्पकतयाऽनुरोद्धव्यमिदमवगम्यते, एवं तत्त्वपरस्यास्य सूक्तस्य देवताविशेषपरत्वं दुरपन्हवं "पुरुषो ह वै नारायणोऽकामयतेति वृहदारण्यके पुरुष–शब्दस्य नारायणपरत्वदर्शनात् । किञ्च छान्दोग्ये "एषा वैष्णवी नाम संहिता एतां प्रयुञ्जन् विष्णुं प्रीणाती"त्युक्तम्, अथर्वणे अष्टादशमहाशान्तिप्रकरणे तत्तद्दैवत्यशान्तिषु तत्तद्दैवत्यमन्त्रविनियोगावसरे "वैष्णव्यां पुरुषसूक्त"मिति वैष्णव्यां शान्तौ पुरुषसूक्तं विनियुज्यते तथा "आद्यया वाहयेद्देवमृचा तु पुरुषोत्तममित्यादिना शौनकेन भगवत्समाराधने "जितं ते इत्यादिमन्त्रतुल्यं विनियुज्यते महापुरुष–शब्दश्च कल्पसूत्रकारैर्देवताविशेष एव प्रयुक्तः "महादेवं वा महापुरुषं वाऽर्चयेदि"ति इह च "वेदाहमेतं पुरुषं महान्तम्" इत्युच्यते अतश्च भगवदसाधारण्यन्तथा "पुरुषस्य हरेस्सूक्तं स्वार्ग्यं धन्यं यशस्कर"मिति स्मर्यते, तथा "योऽनूचानं द्विजं मर्त्यो हतवानर्थलोभतः । स पठेत्पौरुषं सूक्तं स्मरन् विष्णुं जले सकृदि"ति यमस्मृतौ रहस्यप्रायश्चित्तेपूक्तं, तथा योगवासिष्ठे "आसीनः प्राङ्मुखः शुद्धः चिन्तयन्मनसा हरिम् पौरुषेणैव सूक्तेन जुहुयाद्धव्यवाहन"मित्युक्तं लक्ष्मीपतिप्रतिपादकोत्तरनारायणसमानप्रकरणं चेदम् "सहस्रशीर्षा पुरुषः पुरुष एवेदं

१ नास्य साकाङ्क्षत्वमिति ।

सर्वमिति नारायणानुवाकैकार्थ्यञ्च प्रतीयते पुरुष एवेदं सर्वमिति वाक्येन सुबालोपनिषदैकार्थ्यञ्च प्रतीयते, तत्र हि दिव्यो देव एको नारायण इति नारायणपरत्वमवगम्यते, तत्र च पुरुष एवेदं सर्वमित्युपसंहृतम्, तथा पाद्मे पुराणे "ब्रह्महत्यादिपापानां सर्वेषामपनुत्तये । पठेत्तु पौरुषं सूक्तमेकान्ते संस्मरन् हरि"मित्युच्यते, तथा स्कान्दे "यथा भास्कर-शब्दोऽयमादित्ये प्रतितिष्ठति । यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः तथा पुरुष-शब्दोऽयं वासुदेवेऽवतिष्ठते तथा शङ्करशब्दोऽयं महादेवे व्यवस्थित इति शङ्करशब्ददृष्टान्तत्वेन पुरुष-शब्दस्य भगवदसाधारणत्वकथनाच्च पुरुषसूक्तस्य तदसाधारण्यं प्रतीयते । पाद्मे पुराणे नामनिर्वचनाध्याये "पूस्सञ्ज्ञे तु शरीरेऽस्मिन् शयनात्पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्यासेन प्रयुज्यते ॥ यद्वा पुरे शरीरेऽस्मिन् आस्ते स पुरुषो हरिः । यदि वा पुरि वासीति पुरुषः प्रोच्यते हरिः । यदि वा पूर्वमेवासमिहेति पुरुषं विदुः । यदि वा बहुदानाद्धैर्विष्णुः पुरुष उच्यते । पूर्णत्वात्पुरुषो विष्णुः पुराणत्वाच्च शार्ङ्गिणः पुराणभजनाच्चापि विष्णुः पुरुष उच्यते । यद्वा पुरुष-शब्दोयं रूढ्या वक्ति जनार्दन"मिति च योगरूढत्वमवगम्यते अतः पुरुषप्रतिपादकं सूक्तं भगवदसाधारणमिति चरणाभिधानादिति वदता सूत्रकारेण देवताविशेषनिष्कर्षः कृतः, सारे चैवं विशदतममुक्तं भगवता भाष्यकारेण अतो यथोक्तार्थ उपपन्नः, अत्र पादोऽस्येति मन्त्रे त्रिपादस्यामृतं दिवीति-द्यु-शब्देन द्योतमानसंविदात्मस्वरूपमुच्यत इति केचिदाहुः, तदानीमस्य दिवीति व्यतिरेकनिर्देशस्य क्लिष्टता स्पष्टा । किञ्च द्युसम्बन्धप्रत्यभिज्ञापकतया तदेकार्थत्वेन सूत्रकारोदाहृते "अथ यदतः परो दिवो ज्योतिर्दीप्यत इति वाक्ये पञ्चम्यन्ततया श्रूयमाणेन द्यु-शब्देन विरोधश्च स्यात्, न हि द्योतमानमात्मस्वरूपं स्वस्वरूपात्परं भवति । दिवि हृदयाकाशे स्थितमिति भास्करः, तदयुक्तम् अतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विति श्रुतिविरोधात् न हि हृदयाकाशो दिव उपरितनेषु लोकेषु वर्त्तते परमात्मन आदित्यमण्डलेऽप्यवस्थानात् तद्विषयन्तद्वाक्यमिति चेन्न रविमण्डलस्य भूमेर्योजनलक्षेऽवस्थितस्य

विश्वप्रपञ्चबहिर्भावाभावात्, विश्वसर्वशब्दयोर्भूम्यन्तरिक्षमात्रपरत्वे स्वारस्यभङ्गाच्च । किञ्च पञ्चम्यन्तसप्तम्यन्तयोर्द्यु–शब्दयोरविरोधेनार्थैकत्वं चतुर्थसूत्रे समर्थितं, तच्च तयोर्हृदयाकाशरविमण्डलपरत्वेऽनुपपन्नं विश्वसर्वशब्दस्वारस्यभङ्गप्रसङ्गादेव द्यु–शब्दस्य प्रसिद्धद्युपरत्वं चायुक्तं जाग्र-

सू० भूतानि त्रिपादस्यामृतन्दिवीत्यस्यैव द्युसम्बन्धिनः चरणत्वेन सर्वभूतानामभिधानात् ।

त्स्वप्नसुषुप्त्यवस्थासु जीवसञ्चारभूमितया त्रेधा विभक्ताः कार्याकाशप्रदेशविशेषप्रदेशास्त्रयः पादाः तदुपलक्षणं कारणब्रह्मस्वरूपं त्रिपाददमृतमुच्यत इति चायुक्तम् अस्य त्रिपादिति व्यतिरेकनिर्देशस्यामुख्यत्वात्, जीवस्य जाग्रदवस्थायां बाह्याकाशस्सञ्चारभूमिरिति चायुक्तं तदानीमपि शरीरान्तर्वर्तित्वात् स्वप्ने शरीराकाशवर्त्तित्वमप्ययुक्तम् ईश्वरसृष्टशरीरैर्बहिरप्यवस्थानात् तदनभ्युपगमेऽपि पूर्वसंस्कारसहकृतमनोव्यापारमात्रेण हृदयावस्थानेऽपि जीवस्य स्वाप्नभ्रमोपपत्तेः, स्वप्ने जीवस्य हृदयान्निष्क्रमणस्य निष्प्रमाणकत्वाच्च, हृदि ह्ययमात्मेति जीवस्य स्वतो हृद्यवस्थानं श्रूयमाणं स्वप्नावस्थायां कथं वचनेन विनाऽपोद्यते, तस्मादृचोऽयमर्थः सर्वाभूतानीति कार्यजगदन्तर्गताचित्संसृष्टचेतना उच्यन्ते द्यु–शब्दस्तु समस्तव्यष्टिसमष्टितत्त्वबहिर्भूतस्थानविशेषपरः "विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वि"ति श्रवणात् विश्व–शब्दविवरणं सर्व–शब्द इति गत्यभावलिङ्गं तथाऽन्तरात्सम्भवतीह विश्वमिति जगदन्तर्वर्त्तिव्यष्टिजाते विश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः सर्व–शब्दः परिशेषात्समष्टितत्त्वपरः, अत एव गद्ये[१]ऽपि गदितं भाष्यकारैः "समस्तं कार्यकारणजातमतीत्य वर्तमान" इति पुरुषसूक्ते "तेह नाकं महिमानस्सचन्त" इति मुक्तप्राप्यदेशस्य नाक–शब्देनोक्तत्वात्, मुक्तस्य च दुःखमिश्रकार्यलोकानां हेयत्वात् नास्मात्कं भवतीत्यवयवार्थपौष्कल्योपपत्तेः, तत्रैव तमसः परस्तादिति विशेषितत्वात्, क्षयं तमस्य रजसः पराक इति निवासशब्दात् तदक्षरे परमे व्यो-

---

१ श्रीभाष्यकाराचार्यप्रणीतग्रन्थरत्नत्रयके गद्यत्रयं नाम ग्रन्थः ।

मन् विश्वम्पुराणं तमसः परस्तादिति तमसः परस्य स्थानस्य स्थानिनो ब्रह्मणश्च व्यतिरेकनिर्देशात्, तस्य तमसः परत्वविशेषणेन पुरुषसूक्तप्रत्यभिज्ञानाच्च दिवीत्यप्राकृतं स्थानमुच्यते, त्रिपात्त्वञ्च अप्राकृतैर्भोग्यभोगोपकरणभोगस्थानविशेषैर्वा भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरैश्च नित्यसिद्धैर्मुक्तैश्चात्मभिर्वा सम्भवति, एवं चास्य दिवीति व्यतिरेकनिर्देशो ऽमृतत्वं च मुख्यं भवतीति, एवं पूर्ववाक्ये द्युसम्बन्धिनश्चरणाभिधाने सति कथमस्य वाक्यस्य परमात्मपरत्वम्? एकविषयत्वादिति चेत् कथमेकविषयत्व? मित्यत्राह—

भू० एतदुक्तम्भवति—यद्यपि अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यस्मिन्वाक्ये परमपुरुषासाधरणलिङ्गन्नोपलभ्यते तथाऽपि पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषनिर्देशादिदमपि द्युसम्बन्धिज्योतिस्स एवेति प्रत्यभिज्ञायत इति कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः, कौक्षेयज्योतिषश्च तदात्मकत्वम्भगवता स्वयमेवोक्तम् "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित" इति,

सू० छन्दोऽभिधानान्नेति चेन्न तथाचेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २६ ॥

पूर्वस्मिन्वाक्ये "गायत्री वा इदं सर्वमिति गायत्र्याख्यं छन्दोऽभिधाया तदेतदृचाभ्यनूक्तमित्युदाहृतायास्तावानस्य महिमा इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेन्न तथा चेतोऽर्पणनिगमात् ।

टी० "एतदुक्तमि"ति, ज्योतिश्शब्दश्रुत्यपेक्षया स्ववाक्यस्थं पूर्ववाक्यप्रत्यभिज्ञापकं द्युसम्बन्धित्वलिङ्गं प्रकरणञ्च दुर्बलमिति चेत् न अनु-

वादलक्षणयच्छब्दसमभिव्याहारेण अन्यसापेक्षताज्ञापकेन ज्योतिश्शब्दस्य दुर्बलत्वावगमात् प्रथमप्रतिपन्नयच्छब्दश्रुत्या सहकृतस्य द्युसम्बन्धित्व- लिङ्गस्य प्रबलत्वाच्च, इदं ज्योतिश्शब्दस्यादित्याद्यसाधारण्याभ्युपगमेनो- क्तं, तच्च न अवभासकत्वनिमित्तत्वाज् ज्योतिश्शब्दस्य, नारायणपरो ज्यो- तिरित्यादिप्रयोगाच्च। उक्तं पूर्वपक्षहेतुं परिहरति 'कौक्षेये'ति, फलायेति चक्षुष्यः श्रुतो भवतीत्युक्तफलायेत्यर्थः, तदात्मकत्वेति "तदेतद्दृष्टञ्च श्रुतं चेत्युपासीते"त्यत्र तदेतच्छब्दौ तदात्मकज्योतिर्विषयौ तदात्मकत्वेन प्रकृ- तत्वादिति भावः। "अन्नादो वसुदानः" "चतुर्विधा भजन्ते मां" "सकलफलप्रदो हि विष्णु"रित्यादिश्रुतिस्मृतिवशात्सकलफलप्रदस्य पर- मात्मनश्च चक्षुष्यत्वादिविद्यानुगुणफलहेतुत्वमत्र युक्तमित्यभिप्रायेणाह "न कश्चिद्दोष" इति, तदात्मकत्व प्रमाणं दर्शयति 'कौक्षेयज्योतिषश्चे'ति, वेदनस्य यथार्थविषयत्वे सम्भवति अतस्मिंस्तद्दृष्टिरूपताऽऽश्रयणं परोक्त- मयुक्तमिति भावः। द्युसम्बन्धिविषयस्य पूर्ववाक्यस्य परमात्मपरत्वमा- क्षिप्य समाधत्ते "छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्तथा हि दर्शनम्"। सूत्रे शङ्कोपन्यासपरम् अंशं व्याचष्टे 'पूर्वस्मिन्नि'ति, परिहा- रखण्डस्थं नेति पदं सपूरकमादत्ते "तन्ने"ति, छन्दोऽभिधानन्नेत्यर्थः, तथा चेतोऽर्पणनिगमादिति स्वाभिमतनिर्वाहं वदता सूत्रकारेणाभिप्रेतां छन्दो- मात्रपरत्वानुपपत्तिमाह –

सू० न गायत्री–शब्देन छन्दोमात्रमिहाभिधीयते छन्दोमा- त्रस्य सर्वात्मकत्वानुपपत्तेः, अपि तु ब्रह्मण[1] एव गायत्रीचे- तोऽर्पणमिह निगम्यते ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः, सम्भवति च पादोऽस्य सर्वाभू- तानि त्रिपादस्यामृतं दिवीति चतुष्पदो ब्रह्मणः चतुष्प- दा गायत्र्या च सादृश्यम्।

१ ब्रह्मण्येवेति पाठान्तरं तु युक्तम्।



टी० "न गायत्री"ति, कुत इत्यत्राह "छन्दोमात्रस्ये"ति, पूर्वसूत्रे
चरणाभिधानादिति स्वपक्षसाधकतया कण्ठोक्तस्य हेतोः पूर्वपक्षेऽनुपपत्तिः
सूत्रकाराभिप्रेतेति भावः । ननु गायत्र्यां ब्रह्मदृष्टिरिति दृष्टिविशेषणभू-
तब्रह्मणश्चरणाभिधानोपपत्तिरिति चेन्न मनो ब्रह्मेतिवत् दृष्टिविशेषण-
भूतब्रह्मवाचिपदसामानाधिकरण्याभावात्. दृष्टिविधानाभ्युपगमेऽपि ता-
वानिति मन्त्रस्य दृष्टिविशेषणब्रह्मपरत्वेनोत्तरवाक्ये ब्रह्मप्रत्यभिज्ञानो-
पपत्तेस्तदभ्युपगमवैयर्थ्यात्, अतो गायत्र्यां ब्रह्मदृष्टिश्चोदयितुरनभिमता-
यादवप्रकाशैस्तु "गायत्री वा इत्यादिब्राह्मणोक्तसर्वभूतवाक्पृथिवीशरीर-
हृदयप्राणात्मकत्वाभिधानात् न छन्दोमात्रमिति व्याख्यातं, ततोऽपीदमु-
चितम् अश्रुतं हेतुं कल्पयित्वा तदनुपपत्त्या छन्दःपरत्वप्रतिक्षेपादपि पूर्व-
सूत्रश्रुतहेतोरेवानुपपत्त्या तत्प्रतिक्षेपोपपत्तेः स्ववाक्यस्थहेतुविवक्षा न्याय्येति
चेत् सत्यं, स तु हेतुरनन्तरसूत्रे विवक्षितः, मन्त्रवर्णोक्तपादवत्त्वं तत्र विव-
क्षितमिति चेत् न स्वपक्षसाधनाय तस्याद्यसूत्रे कण्ठोक्तत्वात्तच्छङ्काप-
रिहाराय तत्रेन्यत्र तस्यैवाभिप्रेतत्वाश्रयणोपपत्तेः क्वचिदुक्तस्य ह्यन्यत्रोपजी-
व्यत्वं न्याय्यम्, अन्यत्रानुक्तस्य च क्वचिदुक्तिरपेक्षिता सा चेत्सिध्यति तदनु-
गुणो निर्वाहो न्याय्यः, एवं छन्दःपरत्वेन उपपन्ने सति तस्य वाक्यस्य कोऽर्थः?
इत्यत्राह "अपि त्वि"ति, चेतोऽर्पण-शब्दं निगम-शब्दं च विवृण्वन्
कस्मिन् किमर्थं? मित्याकाङ्क्षां च पूरयति "ब्रह्मणि"इति, अनुसंधानोपदेश-
शब्दाभ्यां चेतोऽर्पणनिगम-शब्दौ विवृतौ । केनाकारेण सादृश्यम्? इत्य-
त्राह "सम्भवति चे"ति, गायत्रीसादृश्यं चतुष्पात्त्वलक्षणं चतुष्पात्त्वमेवानु-
संधेयम् । नन्विह नामसंधेयत्वं फलं च श्रूयते 'न पूर्णामप्रवर्त्तिनीं श्रियं
लभते य एवं वेदे"ति श्रवणात् पूर्णत्वम्—अपरिच्छिन्नत्वमप्रवर्तित्वमचलत्वं
स्थिरत्वमनन्ता स्थिरा च श्रीः—मुक्तैश्वर्यम् । ननु हार्दाकाशविशिष्टपरमात्मो-
पासनफलं हि तच्छ्रूयते "यद्वैतद् ब्रह्मेति इदं वाव तद्योऽयं बहिर्धा
पुरुषादाकाशः यो वै स बहिर्धा पुरुषादाकाशोऽयं वाव सः योऽयमन्तः
पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशोऽयं वाव सः योऽयमन्त-
र्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ती"ति हि श्रूयते अतो न गायत्रीसादृ-

श्यानुसन्धानफलमिदमिति, उच्यते स्वतोऽपरिच्छिन्नत्वेऽपि ब्रह्मणः परिच्छिन्नैः पदार्थैः चतुष्पात्त्वोपदेशस्योपासनार्थत्वाभावे वैयर्थ्यात्, प्रकरणे तस्य फलान्तराविधानाच्च गायत्रीसादृश्यरूपस्य चतुष्पात्त्वस्यानुसन्धेयता प्रतीयते, तत्र भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वेऽभिहिते ब्रह्मणोऽपूर्णत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवृत्तित्वगुणकतयैव चतुष्पाद्ब्रह्मण उपासनं विधीयत इति, "त्रिपदा गायत्रीति" हि श्रुतिः तत्कथं चतुष्पात्त्व? मित्यत्राह–

सू० चतुष्पदा च गायत्री क्वचिद्दृश्यते तद्यथा "इन्द्रः शचीपतिर्बलेन पीडितः दुश्च्यवनो वृषा समित्सु सासहि"रिति, तथा ह्यन्यत्रापि सादृश्याच्छन्दोऽभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते यथा सम्वर्गविद्यायां "ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्त इत्यारभ्य "सैषा विराडन्नादि"त्युच्यते। इतश्च गायत्री–शब्देन ब्रह्मैवाभिधीयते–

सू० भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

टी० "चतुष्पदा चे"ति, गायत्री–शब्दस्य मुख्यार्थाविवक्षा कथ? मिति शङ्कायां तथा हि दर्शनमिति सूत्रखण्डं व्याचष्टे "तथा ह्यन्यत्रापीत्यादिना, वाय्वग्निचन्द्रसूर्यसलिलानि प्राणवाक्चक्षुःश्रोत्रमनांसि च दशसङ्ख्यात्वाद्विराट्, सदृशे सदृशान्तरवाचिशब्दप्रयोगः श्रुतिसमाधिरित्यर्थः अन्नात् अत्रञ्च तदत्ति चेत्यन्नात्। ननु ज्योतिर्वाक्ये परमात्मलिङ्गाभावादाद्यं सूत्रं तस्य परमात्मपरत्वसमर्थनार्थमिति सप्रयोजनं, द्वितीयन्तु किमर्थं छन्दोमात्रप्रसिद्धस्यापि गायत्रीशब्दस्य परमात्मासाधारणसर्वात्मकत्वलिङ्गबलात् परमात्मविषयत्वं ह्याकाशाधिकरणनयेन सिद्धम्, उच्यते गायत्री–शब्दस्य स्वार्थप्रहाणेन ब्रह्मपरत्वे चतुष्पात्त्वमविवक्षितं स्यात् तच्चोपदिश्यते गायत्र्यवच्छिन्नब्रह्मपरत्वे सर्वात्मकत्वमनुपपन्नं, गायत्र्यवच्छिन्नब्रह्मणस्सर्वात्मत्वोक्तिः स्तुतिरिति चेत् ततोऽपि गायत्र्या एव स्तुतिः सर्वात्मकत्वा-

क्तिरिति वरमित्यधिकशङ्कापरिहारपरं सूत्रं गायत्री-शब्दस्य तत्सदृशब्रह्मपरत्वाच्चतुष्पात्त्वसर्वात्मकत्वोपपत्तिरिति परिहारः । उपक्रमस्यगायत्री-शब्दानुरोधेन मन्त्रगतसर्वात्मकत्वमस्वारस्येन निर्वाह्यं न तु सर्वात्मकत्वानुरोधेनोपक्रमस्थगायत्रीपदास्वारस्यं न्याय्यमिति शङ्कायाम् उपक्रमएव गायत्रीपरत्वे स्वारस्यहानिरुच्यते सू॰"भूतादिपादव्यपदेशोपपत्तेश्चैवम्" पूर्वस्मिन्सूत्रे पादोऽस्येति मन्त्रोक्तसर्वात्मकत्वानुपपत्तिरुक्ता, अत्र तु गायत्री वा इत्यादिब्राह्मणोक्तचतुष्पात्त्वानुपपत्तिरुच्यते भूतमात्मवर्गः पृथिवी अयं लोकः कर्मार्जनभोगस्थानं तदुपकरणं शरीरं हृदयमात्मनः स्थित्यनुगुणः प्रदेशविशेषः, एवमुपक्रमस्यैव परमात्मपरत्वं दर्शितं, यादवप्रकाशैस्त्विदं सूत्रं पादोऽस्येति मन्त्रवर्णोक्तभूतादिपादानुपपत्त्या ब्रह्मप्रतिपादनसमर्थनपरं व्याख्यातं गायत्री वा इदं सर्वमित्यादिब्राह्मणं न चतुष्पात्त्वपरं किन्तु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणरूपविधाषट्कपरं, सैषा चतुष्पदा षड्विधेति वाक्यञ्च षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरं चतुष्पात्त्वं च पादोऽस्येति मन्त्रवर्णप्रतिपाद्यन्तत्र चेतनाचेतनरूपनिखिलविकारात्मा प्रथमः पादः, त्रिपादस्यामृतन्दिवीति वाङ्मयप्राणमयमनोमयात्मानस्त्रयः पादा उच्यन्ते इति प्रतिपादितं तदनुपपन्नं कथमुच्यते तत्र मन्त्रवर्णोक्तचतुष्पात्त्वपरत्वादपि ब्राह्मणोक्तार्थविषयत्वोपपत्तिः पूर्वमेव दर्शिता । किञ्च प्राथमिकगायत्रीवाक्यानुरोधात्पश्चादुदाहृतमन्त्रवर्णो नेय इति शङ्का तावदवतरति सा च मन्त्रवर्णोक्तार्थस्य हेतुतयोपन्यासेऽप्यवतिष्ठते उपक्रमस्थगायत्रीवाक्य एव परमात्मसाधकहेतुप्रदर्शनेन तु निवर्त्तते, स तु हेतुस्सूत्रे नेत्यनेन अभिप्रेत इति चेच शङ्कायाः परिहारस्य च उत्सूत्रत्वादपि शङ्कामात्रस्य उत्सूत्रस्य शब्दादेव परिहारसिद्ध्यनुगुणनिर्वाहस्य न्याय्यत्वात् गायत्री वा इदं सर्वमि-

ब्र॰ भूतपृथिवीशरीरहृदयानि निर्दिश्य सैषा चतुष्पदेति व्यपदेशो ब्रह्मण्येव गायत्री-शब्दाभिधेये उपपद्यते ।

त्यादिवाक्यस्य षाड्विध्यपरत्वमप्ययुक्तम्, सैषा चतुष्पदा षड्विधेति निगमन-

वाक्यस्य स्वरसतश्चतुष्पात्त्वषाड्विध्यनिगमनपरत्वप्रतीतेः । ननु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणाख्यपदार्थषट्कप्रतिपादनात्स्वारस्यभङ्गेनापि षाड्विध्यनिगमनपरत्वमास्थेयमिति चेत् न, वाक्प्राणयोर्गानत्राणादिवदन्यार्थमुक्ततया भूतपृथिव्यादिवत् प्राधान्यतः प्रतिपाद्यत्वाभावेन पदार्थषट्कासिद्धेः, ब्रह्मणो गायत्राणाभ्याङ्गायत्री-शब्दवाच्यत्वोपपादनाय वाक् प्रस्तुता, शरीरस्य प्राणप्रतिष्ठात्वोपपादनाय प्राणप्रसङ्गः तथा हि "गायत्री वा इदं सर्वं भूतमिति गायत्रीशब्दः चतुष्पाद्ब्रह्मपरः सर्वभूत-शब्द आत्मपरः आत्मवर्गस्य तत्पादत्वं सामानाधिकरण्येनोक्तं तस्यैव ब्रह्मणो गानत्राणादिभिः षाड्विध्यञ्च विवक्षुः श्रुतिर्गानत्राणोपपादनाय वाग्रूपत्वमाह "वाग्वै गायत्री" ति, गायत्री-शब्दवाच्यं चतुष्पाद् ब्रह्म वाग्रूपविशिष्टमित्यर्थः "रसोऽहमप्सु कौन्तेये" त्यारभ्योच्यते-शब्दः खे पौरुषं नृष्विति, तथा भगवत्पराशरवचनं "शब्दमूर्त्तिपर[१]स्यैतद्रूपं विष्णोर्महात्मन" इति, ततः किं विवक्षितषाड्विध्यस्ये? त्यत्राह "वाग्वा इदं सर्वं भूतं गायति च त्रायते चे" ति वाग्विशिष्टम्परं ब्रह्म सर्वं भूतं गायति अभिधत्ते हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः, एवमेकः पादो गानत्राणरूपविधाद्वयञ्चोक्तं तदनुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाह "या वै सा गायत्री इयं वाव सा येयं पृथिवी" ति उक्ताकारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ या सर्वभूतरूपैकपादा गायत्री गायत्र्याख्यं ब्रह्म तदेव पृथिवीत्यर्थः । कथं पृथिव्या ब्रह्मात्मकत्व? मित्यत्राह "अस्यां ही" ति, ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वं, न हि केवलपृथिव्याः सर्वभ[२]रणे शक्तिरित्यर्थः, प्रतिष्ठात्वञ्च नियतमित्याह "एतामेव नातिशीयत" इति, पृथिवीं भूतजातं नातिवर्त्तते कर्मवश्यात्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थः, पृथिवीमयब्रह्माण्डोदरे हि कर्तृभोक्तृवर्गः परिवर्तते, एवं द्वितीयः पादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । अथ तृतीयपादमाह "या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीर" मिति पुरुष-शब्दः शरीरवि-

१ शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः" इति तु कोशान्तरे पाठः ।
२ सर्वभूतधारणे इति पा० ।

शिष्टजीवपरः पृथिवीरूपपादविशिष्टा या सा गायत्री गायत्र्याख्यं ब्रह्म सा शरीरं शरीराख्यपादविशिष्टेत्यर्थः भूतपृथिव्योर्गायत्री सामानाधिकरण्येन निर्दिष्टतया पृथिवी—शब्दस्य ब्रह्मपर्यन्तत्वेन तदुपस्थापनत्वमत्वा-दय्यप्रायन्यायेन अत्रापि पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्तत्वाच्च शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्याम् उपपादयति "अस्मिन् ह्नी मे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते" इति, चतुर्थम्पादमाह "यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमि" ति, शरीराख्यपादविशिष्टं यद्गायत्र्याख्यं ब्रह्म तदेव हृदयमित्यर्थः पूर्ववद् ब्रह्मात्मकत्वमुपपादयति "अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त" इति, प्राणाः—प्राणापानादयः, इन्द्रियाणि वा तेषां हृदयसम्बन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वं, प्राण—शब्दस्य जीवपरत्वं केचिदाहुः तदयुक्तं भूतप्राणशब्दयोरवैषम्याभावेन तदभिमतषाड्विध्यासिद्धेः, भूतपृथिवीशरीरहृदयवाक्प्राणैर्हि तेषां[1] षाड्विध्यं वदन्ति एवं तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यरूपं विधाद्व यञ्चोक्तम् । एवमुक्तं चतुष्पात्त्वं षाड्विध्यं निगमयति "सैषा चतुष्पदा षड्विधा गायत्री" ति, नन्वेवन्तर्हि ब्रह्मणः परिच्छिन्नत्वं स्यादिति शङ्कायाम् उक्तस्य महिम्न एतावत्त्वप्रतिक्षेपिकामृचमुदाहरति "तदेतदि" ति, ब्रह्माभिप्रायेण नपुंसकत्वं तदेतच्चतुष्पात् षड्विधं च ब्रह्मेत्यर्थः "स भूमिं विश्वतो वृत्वे" त्युक्त्वा "एतावानस्य महिमा अतो ज्यायांश्च पुरुष" इति पुरुषसूक्ते श्रूयते इह च पृथिव्यां भूतशरीरहृदयान्यन्तर्गतानि, अतस्तावानस्य महिमेत्यनेन पृथिवीतदन्तर्गतपदार्थैश्चतुष्पात्त्वरूपमहिमानुवादः तावत्त्वं प्रतिषेधति "अतो ज्यायानि" ति, पादोऽस्येति इहोक्तं पादचतुष्टयमेकपादस्थानीयम् अतोऽतिरिक्ता त्रिपाद्विभूतिः तस्मादतो ज्यायानित्युपपन्नमित्यर्थः, एवमस्या ऋचः परिच्छिन्नत्वशङ्काव्युदासार्थत्वं युक्तम्, अनन्तरमपि तदेतत्पूर्णमप्रवर्त्ति पूर्णामप्रवर्त्तिनीं श्रियं लभते य एवं वेदेति पूर्णत्वादिगुणकतया उपासनविधानात् । नन्वेवं सति ब्राह्मणोक्तचतुष्पा-

[1] ते प्राड्विध्यमिति पा· ।

त्वविषयत्वाभावेन ब्राह्मणस्य ऋचश्चैकार्थ्यं न सिध्येत् न, उभयोर्ब्रह्मवि-
षयत्वाद् यदीयमृगुक्तचतुष्पात्त्वविषया न भवति तर्हि किमर्थं तदुदा-
हरणं परिच्छिन्नत्वशङ्काव्युदासार्थम् इत्युक्तं, तथा सत्येवार्थवत्त्वं, न ह्युक्त-
मात्रज्ञापने प्रयोजनं, न चेयमृक् पूर्वोक्तविवरणरूपा दृश्यते । किञ्च ऋच-
श्चतुष्पात्त्वान्तरपरत्वं परेषामप्यवर्जनीयं जाग्रदाद्यवस्थात्रयोपलक्षितं बाह्य-
शारीरहार्दरूपेण त्रेधा विभक्तकार्याकाशोपलक्षितं वा कारणस्वरूपं त्रिपा-
दुच्यत इति हि तत्कृतयोजना, तत्र कथं सर्वभूतैर्जाग्रदाद्यवस्थात्रयत्रिवि-
धाकाशोपलक्षितरूपेण चतुष्पात्त्वं भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वं चैकरूपं
भवति, चतुष्पात्त्वं हि बहुविधं श्रूयते "चतुष्पाद् ब्रह्म वाक् पादः प्राणः पादः
चक्षुः पादः श्रोत्रम्पाद" इति तथा "अग्निः पादो वायुः पाद आदित्यः पादः
दिशः पाद" इति च, एवं ज्ञातमात्रज्ञापने प्रयोजनाभावात् पुरुषसूक्तप्रक्रिया-
नुगुण्यादनन्तरवाक्यानुगुण्यात् ब्रह्मणो विविधचतुष्पात्त्वसम्भवाच्चतुष्पा-
त्त्वभेदस्य परपक्षेऽप्यवर्जनीयत्वाच्च यथोक्त एवास्या ऋचोऽर्थः । अथ चतुर्थ-
पादत्वेनोक्तस्य हृदयस्याकाशस्य महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सा-
मानाधिकरण्येनाह "यद्वै तद् ब्रह्मे" ति, "इदं वाव तद्योऽयं बहिर्धा पुरुषादा-
काश" इति, आकाशः स्वकार्यव्यापित्वामूर्त्तत्वाचलत्वादिभिर्ब्रह्मतुल्य इत्य-
र्थः "अयं वाव सः योऽयमन्तः पुरुष आकाशः अयं वाव स योऽयमन्तर्हृदय आ-
काश इति निर्देशो धर्मैक्याभिप्रायः, एवं हार्दाकाशमाहात्म्येन हृदयं स्तुतम्भ-
वति एवं चतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चातर्भावेन परिच्छिन्नास्थिरत्वशङ्का-
व्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलकं विदधाति "तदेत-
दि" ति, तदेतच्चतुष्पात् षड्विधमित्यर्थः, नात्र हृदयमात्रे ब्रह्मोपासनविधिः
सप्तम्यश्रवणात् । अथ ब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते "तस्य ह
वा एतस्य हृदयस्येत्यादिना, तत्र च प्राणवृत्तिविशेषाऽऽप्यायितचक्षुराद्यनु-
ग्राहकतया आदित्यादय उपास्याः, न च हृदयस्येत्युक्तत्वात् द्वारपोपासनं हृद-
योपासनाङ्गमिति वाच्यं किन्तु प्रकृतचतुष्पाद्ब्रह्मोपासनाङ्गं, हृदयस्येति
निर्देशस्तु चतुर्थपादत्वेन हृदयस्याव्यवहितप्रकृतत्वान्नाडीद्वारा चक्षुरादीनां
तत्सम्बन्धित्वाच्च कृतः, एवं गायत्रीविद्या प्रकृतस्य सकलफलप्रदस्य व्युस-

समिन्धनः परस्य ज्योतिष आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनविधानाय "अथ यदतः परो दिवो ज्योतिरित्याद्यारभ्यते, एवं वाक्प्राणयोरन्यार्थमुदाहृतत्वान्निगमनवाक्यस्वारस्याच्च भूतपृथिवीशरीरहृदयान्येव पादाः गानत्राणभूतप्रतिष्ठात्वतदनतिशयप्राणप्रतिष्ठात्वतदनतिशयाः षड्विधाः। ननु सैषेत्यादिवाक्यस्य षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरत्वे सति ऋचश्चतुष्पात्त्वोपदेशपरत्वं सिध्यति, ततश्च तदेतदृचाऽभ्यनूक्तमिति घटकवाक्यस्वारस्यं भवेदिति चेत्तदयुक्तं प्रथमश्रुतस्य ब्राह्मणवाक्यनिगमनस्य स्वारस्यभङ्गेन पाश्चात्यसन्दंशकवाक्यानुरोधानुपपत्तेः, अन्यार्थतयाप्रस्तुतयोर्वाक्प्राणयोर्भूतपृथिव्यादितुल्यतापरिकल्पनस्योपक्रमस्वारस्यविरुद्धत्वाच्च, ऋगुपन्यासस्य प्रयोजनं तत्रोपपत्तयश्च दर्शिताः, न ह्येकरूपमेव ब्रह्मणश्चतुष्पात्त्वमिति नियन्तुं शक्यं चतुष्पात्त्ववैविध्यस्य अन्यत्राऽपि श्रुतत्वात्। किंच त्रिपाच्छब्दनिर्वाहश्च निरूपणीयः, तथा हि मनोमयवाङ्मयप्राणमयास्त्रय ईश्वरस्य व्यूहास्तैस्त्रिप्रकारमवस्थितं ब्रह्म त्रिपादमृतं विवक्षितमित्युच्यते, तत्र तावत्प्रसिद्धमनोवाक्प्राणानामचिद्विकारत्वान्नेश्वरव्यूहत्वममृतत्वं च सम्भवति, सप्तान्नब्राह्मणोक्तानां मनोवाक्प्राणानुग्राहकाणामग्न्यादित्यचन्द्राणां च कर्मवश्यत्वात् सृज्यत्वाच्च नेश्वरव्यूहत्वममृतत्वं च युज्यते, "चन्द्रमा मनसो जातः चक्षोः सूर्योऽजायत मुखादिन्द्रश्चाग्निश्च" "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च असौ योऽपक्षायति असौ य आपूर्यतीति तेषां सृज्यत्वकर्मवश्यत्वे हि श्रूयेते मनोवाक्प्राणशब्दवाच्यतयाऽभिमतानां सत्त्वतमोरजसां शक्तिरूपाणां प्रज्ञाशक्तिवाक्छक्तिक्रियाशक्तिशब्दवाच्यानां द्युपृथिव्यप्छब्दवाच्यतयाऽभिमतानां स्थूलानां सविकाराणां सत्त्वतमोरजसां चाधिष्ठातार ईश्वरांशास्त्रय ईश्वरव्यूहा इति चेत् तैरपि त्रिपात्त्वं दुर्वचं वाङ्मयप्राणमययोर्मनोमयादुत्पत्त्यभ्युपगमेन त्रयाणां नित्यत्वायोगेन त्रिपादमृतमिति निर्देशानुपपत्तेः, तेषां शक्तिरूपेणामृतत्वमिति चेत् शक्तिरूपेणामृतत्वं पादोऽस्य सर्वाभूतानीति पादत्वेनोक्तानां सर्वभूतानां सप्रकृतिकानामप्यस्तीति त्रिपादस्यामृतन्दिवीति वचनं व्यर्थं स्यात्। किञ्च ईश्वरः पर आत्मा

तपो ब्रह्म मनोमय इत्यारभ्य "तस्य द्वौ व्यूहौ आकाशशरीरः प्राणशरीरश्च तयोरन्ये प्रत्येकं असंख्याताः प्रतिजीवमवस्थिता व्यूहा इत्युपनिषत्कल्पे भवद्भिरुच्यते किमसंख्येयानामीश्वरव्यूहानां जीवानामिव स्वत एव स्वरूपगतो भेदः? उताधिष्ठेयगतभेद एवेश्वरव्यूहभेद इत्युपचारादुच्यते? प्रथमे जीवबहुत्वेश्वरैकत्वश्रुतीनां वैयर्थ्यं समष्टेक्यस्य व्यष्टिभेदस्य च जीवेश्वरयोस्तुल्यत्वात्, श्रूयते हि "त्वमेकोऽसि बहूननुप्रविष्टः अन्तः प्रविष्टः शास्ता जनानाम् एकस्सन् बहुधाविचार एको देवः सर्वभूतेषु गूढः एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति एको बहूनां योविदधाति कामान् यः पृथिवीमन्तरे सञ्चरन्नित्यारभ्य बहुव्यवस्थानमुक्त्वा "एष भूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इत्यादि, द्वितीये च पक्षे किमीश्वरव्यूहाधिष्ठेया गुणाः? उत गुणशक्तयः? प्रथमे सत्त्वतमोरजसामुत्पत्तेः पूर्वं निर्गुणानां तेषामवस्थानवादो न घटते, उक्तं हि तत्त्वविचारणायाम्भवद्भिः—यस्मादेषां प्रलयकाले व्यवस्थानमाम्नायते तस्माद्गुणोत्पत्तेः प्रागप्येषामवस्थानान्निर्गुणा एते इति, द्वितीये च गुणप्रलयात्पश्चाद् गुणशक्तीनामीश्वराधिष्ठेयत्वंनोपपद्यते तासामधिष्ठानं हि कार्याभिमुखीकरणलक्षणं प्रेरणं तत्तदानीमस्ति चेदासर्गकालाद्गुणानुत्पत्तिरनुपपन्ना कार्यानुत्पादनमपि ईश्वराधिष्ठानाधीनमिति चेत् तर्हि परमात्मनः स्वापे गुणशक्तीनां तदधिष्ठितत्वाभावात्कार्योत्पत्तिप्रसङ्गः, स्वापप्रबोधौ हीश्वरस्य त्वदभ्युपगतौ अतः कार्यानुत्पादनस्येश्वराधिष्ठानानपेक्षत्वेन गुणशक्तीनामधिष्ठातृत्वाभावेन व्यूहभेदाभावात् गुणोत्पत्तेः प्राक् निर्गुणत्वेन त्रयाणां व्यूहानां कञ्चित्काल मवस्थानमयुक्तम् अधिष्ठेयभेदमनपेक्ष्य स्वत एव भेदश्चेत् त्रित्वस्यानादित्वान्मनोमयादितरयोरुत्पत्तिरनुपपन्ना किं च तिसृष्वपि ईश्वरव्याप्तिषु किं प्रमाणम् एतन्मयो वाऽयमात्मा वाङ्मयो मनोमयः प्राणमय इति श्रुतिरिति चेन्न जीवस्य मनोवाक्प्राणोपकरणत्वप्रतिपादनपरत्वापरत्वात्तस्याः तथा हि यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति परमात्मनः सङ्कल्पाद्विहिनामुपजीव्यत्वादन्नशब्दवाच्यानां सप्तानामुत्पत्तिमुक्त्वा तत्र प्रासङ्गाच

दर्शपूर्णमासौ पयश्चेत्यत्रचतुष्टयस्य मानुषदेवतिर्यक्षु विनियोगमुक्त्वा त्री-
ण्यात्मने ऽकुरुतेत्यवशिष्टात्र त्रयस्य सर्वविधप्रवृत्तिहेतुत्वात् सामान्येन सर्व-
भोक्तृवर्गशेषमकरोदित्युक्त्वाऽन्यत्र मना अभूवं नादर्शमन्यत्र मना अभूवं नाश्रौषं
कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन
एवे"ति प्रसिद्धं मन एव प्रतिपादितं कामादीनाम्मनः कार्यत्वात्, सामाना-
धिकरण्यं यः कश्चनशब्दो वागेवेति सामानाधिकरण्यमपि शब्दस्य वागि-
न्द्रियाधीनोच्चारणत्वनिबन्धनम्, अतः शब्दोच्चारणकारणं प्रसिद्धवागिन्द्रि-
यमेवोक्तं प्राणोऽपानो व्यान उदानस्समान इत्येतत्सर्वं प्राण एवेति पञ्चवृ-
त्तिप्राण एव स्पष्टमभिहितः एतन्मय इत्येतच्छब्दश्च प्रकृतमनोवाक्प्राणपर·
अयमात्मेत्ययं-शब्दविशेषित आत्मा च प्रसिद्धो जीवोन तु परमप्रकृतः पर-
मात्मा तस्य जीवस्य त्रिविधोपकरणवत्त्वमेतन्मय इति प्रतिपादितं
पश्चात् त्रयो लोका एत एवेत्यादिना तेषां प्रशंसा कृता यत्किञ्च विज्ञातं
वाचस्तद्रूपं वाग्विज्ञाता वागेवैनन्तद्भूत्वाऽवतीति यद्वाग्व्यवहाराद्विज्ञात-
न्तत्सर्वं वाचोरूपम् अवच्छेदकं वाग्विज्ञाता विज्ञायमानं सर्वं वागधीनम्
उपचारात् सामानाधिकरण्यं वागेवैनन्तद्भूत्वावतीति यद्वाचा विज्ञातं वस्तु
पुरुषस्योपकरोति तद् भूत्वा तद्रूपेण वागेवोपकरोतीत्यर्थः, विजिज्ञास्यमिति
चिन्तनीयं पूर्ववद्योजनाय यच्चिन्तितं दैवतादिकम् उपकरोति तद्भूत्वा मन
एवोपकरोतीत्यर्थः, अविज्ञातमिति पूर्ववद्योजना पूर्वसुकृतवशादचिन्तितं
यदुपकरोति तद्भूत्वा प्राण उपकरोतीत्यर्थः, एवं प्रशस्य त्रयाणाम् अधि-
ष्ठानानि अधिष्ठातॄंश्च दर्शयति तस्यै वाच इत्यादिना, वाचः वागिन्द्रि-
यस्य पृथिवी शरीरमायतनं जिह्वा गोलकस्थं पार्थिवांशमाश्रित्य वागिन्द्रिय-
न्तिष्ठतीत्यर्थः, ज्योतीरूपमयमग्निर्ज्योतिर्मयमधिष्ठातृदेवतास्वरूपमग्निरि-
त्यर्थः, यावती वाक् तावती पृथिवी तावानयमग्निरिति, यत्र यत्र वागि-
न्द्रियन्तत्र तत्र तदधिष्ठानतया पृथिव्यप्यस्ति अधिष्ठातृतया अग्निरप्य-
स्तीत्यर्थः । अथैतस्य मनसो द्यौः शरीरमितीह द्यु-शब्द आकाशमात्रपरः
न तु लोकविशेषपरः, अनुपपत्तेः, न हि स्वर्गलोक एव मनसोऽधिष्ठानमनु-
ष्याणाममनस्कत्वप्रसङ्गात् द्यु-शब्दो हि लोकविशेषे नभोमात्रे च वर्त्तते

"सुरलोको द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बर''मिति हि नामानुशासनम् अतः आकाशमात्रविवक्षा तत्रापि सामर्थ्याद् हृदयाकाशे पर्यवस्यति हृदयच्छिद्ररूपाकाशः आयतनमित्यर्थः, ज्योतीरूपमित्यादेः पूर्ववत् तौ अग्न्यादित्यौ मिथुनं समेतां मिथुनीभावमगच्छतान्ततः प्राणोऽजायत'' अयमस्याभिप्रायः—आदित्याधिष्ठेयमनःपूर्विका अग्न्यधिष्ठेयवाक्प्रवृत्तिः तदुभयपूर्विका पञ्चवृत्तिप्राणाधीना शरीरप्रवृत्तिरिति प्राणस्यासपत्नत्वञ्चक्षुरादिषु स्वसदृशस्वप्रतिस्पर्धिविरहितत्वम् । अथैतस्य प्राणस्य आपश्शरीरमिति प्राणा वा आप इति हि श्रुतिः "पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम्'' इत्यायुर्वेदविदः अतः प्राणस्य आप आयतनं ज्योतीरूपमित्यादि पूर्ववत्, मनः प्राणयोरभिमानिदेवतान्तरश्रवणेऽपि श्रुतित्वाविशेषात् एवमपि सम्भवतीत्यभ्युपगन्तव्यम्, आनन्त्यं प्रतिशरीरं मनआदिव्यष्टिभेदात् स एव सम्वत्सर इत्यादिना चन्द्रमाः षड्ढोता स ऋतून् कल्प[1]यतीति प्रकारेण सर्वर्तुप्रवर्तकतया सम्वत्सरसंज्ञस्य राज्यधीनोपचयापचयान्वितकलामयस्य प्राणाधिदैवस्य चन्द्रस्य प्रजारक्षकत्वं "सौम्यो वै देवतया पुरुष इति प्रक्रियया पुरुषस्य चन्द्राधीनत्वं तद्वेदनफलञ्चोक्तं पश्चान्मनोवाक्प्राणानां व्यापारस्य परलोकेऽभ्यधिकत्वं वक्तुम् अथ त्रयो लोका इत्यादिना लोकत्रयं प्रस्तुत्य पुत्रे विन्यस्तभारस्य तन्मुखेनैहलौकिकार्थप्राप्तिं केवलकर्मणाऽन्तरिक्षप्राप्तिं काम्यविद्याविशेषेण देवलोकप्राप्तिञ्चाभिधाय प्रैष्यतो मनुष्यस्याध्ययनयज्ञादिकं श्रेयस्सर्वं पुत्रेण सम्पाद्यमिति तस्मिन्निहितभरत्वमुक्त्वा "अथ यदैवंविदस्मात् लोकात्प्रैति अथैभिरेव प्राणैस्सह पुत्रमाविशती''त्युक्तं, पुत्रो भूत्वा यज्ञादिकम् अयमेव करोति पुत्रकृतं सर्वं परलोकगतस्य पितुः स्वानुष्ठितसुकृतवदुपकारकम्भवतीत्यर्थः "अथैनमेते देवाः प्राणा अमृता आविशन्तीति'' एवं पुत्रे निक्षिप्तभरं परलोकगतं पुण्यकर्माणं पुरुषं देवाः प्राणशब्दवाच्या मनआदयः आविशन्तीत्यर्थः । तदेव प्रपञ्चयति "पृथिव्यै चैन''मित्यादिना, शापानुग्रहादिस-

१ कल्पयातीति तु पा॰ ।

मर्त्या वाक् दैवी वाक् अमोघसङ्कल्पमानन्दैककारणम्मनो दैवम्मनः अप्र-
तिहतगगनगमनादिव्यापारहेतुः, प्राणो दैवः प्राणः एते पृथिव्यस-
लिलरूपाधिष्ठानेभ्योऽग्न्यादित्यचन्द्ररूपाधिष्ठातृदेवताभ्यश्चास्य सम्भव
तीति, देवताप्रसादादेवाऽस्य मनोवाक् प्राणा एवंविधा भवन्तीत्यर्थः, एवं
जीवोपकरणानान्तेषां परलोके शक्त्यतिशयमुक्त्वा स एवंवित्सर्वेषां भूताना-
मात्मा भवतीति वागिन्द्रियादिदेवताविज्ञानप्रकर्षेणास्य सर्वभूतान्तर्गतिज्ञा-
नसामर्थ्यं तस्य दुःखासंस्पर्शञ्चाभिधायोपसंहृतम्, अत्र द्युपृथिव्यप्छब्दानां
मनो वाक् प्राणशब्दानाञ्च सत्त्वतमोरजोवाचित्वाभावात् प्रज्ञाशक्तिवाक्-
छक्तिक्रियाशक्तिवाचित्वाभावाच्च तदधिष्ठात्रीश्वरव्यूहप्रतिपादनमनुपपन्नं
शब्दस्वारस्याभावेऽप्यर्थानुपपत्त्या तादृगर्थपरत्वमाश्रयणीयमिति चेत्का पुन-
रत्रानुपपत्तिः? यावती वाक् तावती पृथिवीत्यादिवाक्यैः पृथिव्यादीनां
व्याप्त्यवगमात् प्रसिद्धपृथिव्यादिपरत्वमनुपपन्नमिति चेत् न, वागिन्द्रियादि-
भिस्तदधिष्ठानभूतानां पृथिव्यादीनां तुल्यदेशत्वमात्रप्रतिपादनात् इन्द्रिय-
समष्टेरपि हि न व्याप्तिमत्त्वं कार्याणां तत्त्वानां दशगुणकारणपरिच्छिन्नत्वे
नेन्द्रियसमष्टेरहङ्कारतत्त्वपरिच्छिन्नत्वात् । ननु तवल्कारिणां श्रुतौ "नास-
दासीन्नो सदासीत्तदानीं नासीद् रजो नो व्योमापरो यत् किमावरीवः कुह-
कस्य शर्मन् अम्भः किमासीद्गहनङ्गभीर"मिति तस्मिन्नसति सति न कस्मि-
श्चन सति ऋतं ज्योतिष्मत् उदप्लवत सत्यं ज्योतिष्मत् उदप्लवत तपो ज्यो-
तिष्म उदप्लवत तदृतमिति वाक् सा यत्सत्यमिति प्राणः सयत्तप इति
मनस्ततस्तेषामन्नमेव ज्योतिरासीत्तान्येकमभवंस्तदेकं भूत्वाऽन्येन ज्योति-
षाऽप्यायत तद्यथा मध्वष्ठीला वा स्वासिक्तास्याद्दृत्तिर्वैव तदैक्षत हन्त प्राणं
कारवा इत्यादिना तेषामृतसत्यतपश्शब्दवाच्यानां वाक्प्राणमनसां प्रलये
ऽप्यवस्थानात् सत्त्वाद्यधिष्ठातार ईश्वरव्यूहा एव मनआदिशब्दवाच्या इति
चेत् न अस्यां श्रुतौ प्रलयेऽप्यवस्थानाश्रुतेः उदप्लवतेतिहि श्रूयते उत्प्लवच-
नञ्च न स्थितिः किंतूद्गमनं तेनोत्पत्तिरेवावगम्यते यथा ऽब्धेस्तरङ्गोद्गम इति-
कारणात्कार्योदय इति च न ह्युद्गमनादिशब्दैः क्वचिदप्यवस्थानं प्रतीयते अत्र
प्रसिद्धवागाद्युत्पत्तौ प्रतिपाद्यमानायामाख्यातपदानां कारकपदानां च

स्वरसता स्यात्, इतरथा अस्वारस्यमेव तेषामन्नमेव ज्योतिरासीदित्यत्र ज्योतिश्शब्दः ओजश्शब्दवत् प्रवृत्तिसामर्थ्यपरः, त्रिविधकरणानामप्यन्नमेव प्रवृत्तिसामर्थ्यहेतुरित्यर्थः तान्येकप्रभवन्तीति एककार्योत्पत्तिं प्रत्येकसाधीमत्त्वमभजन्नित्यर्थः, करणत्रयेणापि हि तियज्ञादिकर्मनिष्पत्तिः अनन्तरन्तदैक्षतेति तच्छब्दश्च सृष्टिप्रतिपादनाक्षिप्तकारणब्रह्मपरः, एवं प्रलयदशायामप्यवस्थानश्रवणरूपापवादाभावात् मनआदिशब्दो नेश्वरव्यूहपरः, यत एवं तस्मात् सम्राजस्रष्टौ तौ मिथुनं समैतान्ततः प्राणो ऽजायत इन्द्रः स एषोऽसपत्न इति वाङ्मयव्यूहपत्नीकान्मनोमयादीश्वरात्प्राणमयव्यूहोत्पत्तिरुच्यत इति चानुपपन्नम् । ननु बृहदारण्यक एव षष्ठेऽध्याये इन्धो ह वै नामैषः योयं दक्षिणेऽक्षन् पुरुषः तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । अथैतद्वामेऽक्षिणि पुरुषस्य रूपम् एषाऽस्य पत्नी विराट् तयोरेष संस्तावो य एषो ऽन्तर्हृदय आकाश इत्यत्र दक्षिणाक्षिप्रतिष्ठितस्य पुरुषस्य वामाक्षिगतं पुरुषरूपं पत्नीत्वेनोच्यते, अतोऽत्र वाङ्मयपत्नीको मनोमयः प्रतिपादित इति न ततः प्राणो ऽजायत स इन्द्र इति मिथुनोत्पन्नस्येन्द्रशब्दवाच्यत्वावगमात्, इह च पत्नीवतः पुरुषस्य इन्द्रशब्दवाच्यत्वावगमाच्च ततश्चेन्द्र—शब्दवाच्यप्राणमयस्य वाङ्मयः पत्नी प्रसज्येत् न तु मनोमयस्य वाङ्मयपत्नीकत्वं प्राणमयस्य तदुत्पन्नत्वमपि हि भवदभिमतं तस्मादत्रायमर्थः दक्षिणाक्षिस्थः पुरुषोत्तमः य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्निति दक्षिणाक्षिस्थस्य आदित्यान्तरवस्थितत्वश्रवणात् तस्य च पुण्डरीकाक्षत्वात् "इन्द्रं निचिक्युः परमे व्योमन्" इन्द्रो मायाभिरित्यादिषु परमपुरुषस्य इन्द्रशब्दवाच्यत्वं च सिद्धं, वामाक्षिस्था तत्पत्नी साक्षाल्लक्ष्मीरेव इन्द्र—शब्दवाच्यस्य पत्नीत्वेन प्रतीतेः तैत्तिरीयके च राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी इतीन्द्रपत्न्याः श्री—शब्दवाच्यत्वावगमात् किञ्च हृदयगुहायामवस्थानं तयोरिह श्रूयते "तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाश इति, संस्तावः अधिकरणे घञ् संस्तावः स्थानं संस्तवः परिचयः सहवासः पद्म कोशप्रतीकाशमित्यारभ्य तस्याश्शिखाया मध्ये परमात्मव्यवस्थित इति नारायणस्य हृदयस्थितिश्रवणादत्रापि श्रियः पतिर्नारायण

एव प्रतिपादित इति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतं तवल्कारिणां श्रुतावपि ईश्वरव्यूहत्रयप्रतिपादनाभावात्, अघमर्षणसूक्तेऽपि न तत्प्रतिपादनमिति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम्, अपि तु तपश्शब्दः परमात्मपरः यस्य ज्ञानमयन्तप इति तपश्शब्दस्य ज्ञानवाचित्वात्, परस्य ज्ञानगुणसारत्वेन ज्ञानशब्दस्येव धर्मिपर्यन्ताभिधानोपपत्तेः, तस्मात् ऋत-शब्द-सत्यशब्दवाच्ययोर्यज्ञादि कर्मतद्वोक्तृचेतनवर्गयोरुत्पत्तिर्वाक्प्राणयोर्वा "तद्यद्वृत"मिति वाक् सा यत्सत्यमिति प्राणस्स इति श्रुतेः । यद्वा ऋतं यथार्थशब्दः सत्यमबाध्योऽर्थः नामरूपे उत्पन्ने इत्यर्थः, अतो मिथः कार्यकारणभावेनावस्थितं वाङ्मयादिव्यूहत्रयं निष्प्रमाणकम् । किञ्च वाङ्मयपत्नीकात्मयोमयात् प्राणमयोत्पत्तिः किं प्रलयदशायां महदादिसर्गात्पूर्वभाविनी? उत महदादिसर्गानन्तरभाविनी? तत्र प्रथमं शिरोनिष्प्रमाणकत्वाच्चिरस्तं, द्वितीये तु ब्रूमः—वाङ्मयः पृथिवीशरीरो लयपरिणामशक्तिमधितिष्ठति तमः पृथिवीत्युच्यते लयपरिणामशक्तिर्वागिति । मोक्षस्थानमिति चेत्युक्तमुपनिषत्कल्पे, तत्रैव प्राणमयोऽप्छरीरः क्रियाशक्तिमधितिष्ठति रज आप इत्युच्यन्ते, क्रियाशक्तिः प्राण इति चोक्तं, यदि तमोरजश्शक्त्यधिष्ठातारौ वाङ्मयप्राणमयौ तदा वाङ्मयपत्नीकात् मनोमयात् प्राणमयोत्पत्तिं वदता चतुर्मुखोत्पत्तेः पूर्वमेव रुद्रोत्पत्तिरुक्ता स्यात्, तच्छ्रुतिविरुद्धं महोपनिषदि "तत्र ब्रह्मा चतुर्मुखोऽजायतेति ब्रह्मसृष्टिमुक्त्वाऽथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायतेति रुद्रसृष्टेः पश्चात्तनत्वश्रवणात्, सुबालोपनिषदि ललाटात् क्रोधजो रुद्रोऽजायत इति रुद्रस्य चतुर्मुखललाटोत्पन्नत्वश्रवणात्, शैलालिब्राह्मणे रुद्रस्य चतुर्मुखसृष्टाग्न्यादिजीववदुत्पन्नत्वश्रवणात्, शतपथे चाष्टमूर्तिब्राह्मणे सम्वत्सरशब्दवाच्येन प्रजापतिना रुद्रसृष्टेः श्रुतत्वात्तद्रोदनपरिहाराय तेन तस्य नाममूर्त्यष्टकप्रदानप्रतिपादनाच्च । ननु श्वेताश्वतरे 'विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वमि'ति श्रूयत इति चेत् तदपि भवत्पक्षे विरुद्धम्, अनन्तरमेव 'वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात् महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः अङ्गुष्ठमात्रः पुरुषो-

ऽन्तरात्मा" सहस्रशीर्षा पुरुष इत्यादिषु वाक्येषु एतं महान्तं पुरुषम् महान् प्रभुर्वै पुरुष" इति प्रकृतरुद्रपरामर्शिनैतच्छब्देन महापुरुषशब्दसामानाधिकरण्यात् "यदेष आकाश आनन्दो न स्या" दित्यानन्दशब्दसमानाधिकरणाकाशशब्दस्य प्रसिद्धाकाशप्रहाणेन परमात्मपरत्ववत् रुद्र—शब्दस्यापि प्रसिद्धार्थप्रहाणेन महापुरुषपरतया न्याय्यत्वात्, सत्त्वप्रवर्त्तकविषयस्य वाक्यस्य तमोऽधिष्ठातृ वाङ्मयपरत्वाभावात्, पुरुषसूक्तवाक्योपादानेन पुरुषोत्तमविषयत्वस्य स्फुटत्वाच्च, परमपुरुषादेव हिरण्यगर्भोत्पत्तेस्तत्र प्रतिपाद्यमानतया वाङ्मयपत्नीकत्वप्रसङ्गाभावात् यथा "मृत्युनैवेदमावृतमासीत् अशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्[1]त्वी स्यामिति सोऽर्चन् तस्यार्चत आपो ऽजायन्तेत्यारभ्याशनाया लक्षणान्मृत्योरब्पृथिव्यग्नीनां सृष्टिप्रतीतावपि न प्रसिद्धमृत्योः क्षुधो वा पृथिव्यादिप्रपञ्चकारणत्वमभ्युपगम्यते । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः । मृत्युर्यस्योपसेचनन्तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमः मृत्युरीशान इति परमात्मसृज्यत्वतसंहार्यनियाम्यत्वश्रवणात् एवं ब्रह्मसृष्टस्य रुद्रस्य न ब्रह्माणं प्रति स्रष्टृत्वमिहोच्यत इत्यभ्युपगन्तव्यं, शैलालिब्राह्मणशतपथसुबालोपनिषदां तु नैवमर्थान्तरपरत्वं वक्तुं शक्यम् । नन्वेवमपि कल्पभेदेन सृष्टिप्रकार इत्यास्थेयं, नैवं त्वदभिमतसृष्टिप्रकारस्य स्फुटश्रवणाभावात् । आकाशादीनामपि कल्पभेदेन परमकारणत्वकल्पनाप्रसङ्गात्, श्रुतिविरोधेन कल्पनानुपपत्तेश्च अतो वाङ्मयरुद्रपत्नीकान्मनोमयात् प्राणमयाद्धिरण्यगर्भोत्पत्तिः श्रुतिविरुद्धा । किञ्च वाङ्मयो लयपरिणामशक्तिमधितिष्ठति लयपरिणामशक्तिश्च वागिति कथ्यते मोक्षस्थानमिति च मोक्षस्थानं परमाकाशः स च प्रकृत्युत्तमशब्दवाच्याया आद्यावस्थेति भवद्भिरुच्यते, तथा तत्त्वविचारणायामुक्तं परमाकाशो नाम प्रकृतेराद्यावस्थेत्युपक्रम्य सा च तमोऽवस्थापन्ना प्रकृतिः परस्मादात्मनो विभागरूपं विकारं प्रतिपद्यते स एव परमाकाशः स एव मुक्तानामीश्वरस्य च स्थानं शब्दपरिणामशक्तियुक्तत्वाद्वागिति चोच्यते अक्षरमिति

१ आत्मन्वी स्यामिति युक्तः ।

चेति यद्व्यक्ततमसोर्मध्यपति[1]तमक्षरं परमाकाशः स तावन्नाद्यो विभागः तम एकी भवति मृत्युर्वै परे देव एकी भवति तस्मात्तमस्स(ञ्)जायत इति तमस एव विभागश्रवणाच्च विभक्तात्तमसो ह्यक्षरविभाग तमस्तस्मादक्षररूपेण जायत इति योजना त्वस्वरसा, अक्षरं तमसि लीयत इति लयश्रवणविरुद्धा च तच्चाक्षरं न मुक्तानामीश्वरस्य च स्थानं तस्याव्यक्ताद्यपेक्षया अक्षरत्वेऽपि तमसि लयश्रवणेन क्षरत्वात्, तदक्षरे परमे व्योमन्निति परमव्योम्नः क्षरणाभावाच्च । तत्राप्यापेक्षिकमक्षरत्वमिति चेन्न तत्र स्वारस्यम् उक्तप्रलयश्रवणाभावात् तमसो विभक्तमक्षरमेव तत्राक्षर–शब्देन प्रत्यभिज्ञाप्यत इति चेन्न वर्णानुपूर्वीसादृश्येऽप्यन्यविशेषणतया प्रयुक्तेनाक्षर–शब्देन विशेष्यसमर्पकाक्षरशब्दार्थस्य प्रत्यभिज्ञानाभावात्, न ह्यरुणः पट इति वाक्यस्योऽरुणशब्दो रविरथस्थमरुणं प्रत्यभिज्ञापयति । किंच स्वप्रकरणे "विश्वं पुराणं तमसः परस्ता"दिति, समानप्रकणे च "आदित्यवर्णं तमसः परस्तात् ते ह नाकं महिमानस्सचन्ते" "आदित्यवर्णं तमसस्तपार" इति मुक्तात्मेश्वरस्थानस्य तमसः परत्वश्रवणात्तमसोऽर्वाचीनस्याक्षरस्य न तत्र प्रत्यभिज्ञा, तमसः परस्तादिति परस्वरूपस्य तमोवैलक्षण्यमुच्यत इति चेत् न दिग्देशकालेष्वस्तादिति प्रत्ययस्य विवक्षि[2]तत्वेन वैलक्षण्यमात्रपरत्वस्य क्लिष्टत्वात्, स्थानविशेषस्य सन्निहितत्वाच्च तमसः परत्वस्य देशविशेषवर्तिपरमात्मविशेषणत्वोपपत्तेः, तमसस्तु पार इति पार–शब्दश्चावधिवाचकः न तु वैलक्षण्यवाचकः, अतस्तमसः परस्य स्थानस्येह प्रत्यभिज्ञानाभावात्तमोविभागरूपमक्षरं न मुक्तात्मपरमात्मस्था[3]नपरं तमोविभागरूपं चाक्षरं न वाङ्मयाधिष्ठेयं तस्याक्षरस्य ब्रह्मरुद्रसृष्टेः पूर्वभावित्वात्, यः पृथिवीमन्तरे सञ्चरन्नित्यारभ्य "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यस्य मृत्युश्शरीरमित्युक्त्वा "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण"इति, तस्याक्षरस्य कारणभूतमृत्युशरीरकस्य नारायणत्व-

(१) मध्यपठितमिति पा० ।

(२) विहितत्वेनेति द्राविडपाठो युक्तः ।

(३) मुक्तात्मपरमात्मस्थानमिति पा० ।

प्रतिपादनाच्च, तस्यैवान्तरात्मत्वश्रवणात् वाङ्मयोऽन्तरात्मेति चानुपपन्नम्, अत एव हिरण्यगर्भस्य प्राणमयस्यान्तर्यामित्वं च निरस्तं नारायणस्यैव ह्यन्तर्यामित्वं श्रुतं, हिरण्यगर्भस्य महत्तत्त्वाभिमानित्वं तु ब्रह्माण्डान्तरव्यष्टिशरीरविषयं क्वचिदुक्तमिति मन्तव्यं परमकारणत्वाभावात् अग्नीन्द्रादीनां वाक्पाण्याद्यभिमानित्ववत् सर्वभूतान्तरात्मेत्यत्र सर्वभूत-शब्देन ब्रह्मरुद्रयोरपि जीवान्तर्भावः, तस्माद्विराडजायत विराजो अधिपुरुषः त्र्यक्षः शूलपाणिः पुरुषोऽजायत इन्द्रो वरुणस्सोमो रुद्रः स ब्रह्मा स शिवस्सेन्द्र इति इन्द्रवत्कार्यत्वादिश्रवणात् एवमेव ह्युपबृंहितं भगवता व्यासेन ब्रह्मरुद्रसंवादे "ममान्तरात्मा तव च । ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् । अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः मत्तो जगत्स्थावरजङ्गमं च सर्वे वेदास्सरहस्याश्च पुत्रेति, अत एव मानवे धर्मशास्त्रेऽपि योऽस्यात्मनः कारयितेत्यादिवचनानि च न भवदभिमतवाङ्मयप्राणमयविषयाणि श्रुत्यनुसारित्वात्, स्मृतिवचनानाम् अत एव मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाश आत्मा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्यादिश्रुतयश्च न भवदभिमतपरिपाटीप्रतिपादिकाः स्ववाक्यस्वारस्याभावात् श्रुत्यन्तरविरोधादनुपपन्नत्वाच्च यत ईश्वरस्य प्रलयकाले व्यूहत्रयं प्रामाणिकमत एव ब्रह्मरुद्रयोर्वाङ्मयप्राणमयव्यूहत्वं च दूरोत्सारितं, स्मृतयश्च श्रुत्यनुरोधेन वर्णनीयाः, अशक्यवर्णनाश्चेदनादरणीयाः एवं वाङ्मयादिव्यूहत्रयकल्पनस्य निर्मूलत्वात् त्रिपादस्यामृतं दिवीति वाक्यस्य यादवप्रकाशीयैरभिहितार्थोऽनुपपन्नः तस्माद् भूतादिपादेत्यादिसूत्रस्य भाष्यकाराभिमतार्थ एवोपपन्न इति स्थितम् ॥

इन्द्रप्राणाधिकरणम् ।

सू० उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

व्या० पूर्ववाक्ये त्रिपादस्यामृतं दिवीति दिवोऽधिकरणत्वेन निर्देशात् इह च दिवः पर इत्यवधित्वेन निर्देशादुपदेशस्य

भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायते इति चेन्न उभयस्मिन्नप्युपदेशेऽर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्, यथा वृक्षाऽग्रे श्येनो वृक्षाग्रात्परतः श्येन इति तस्मात्परमपुरुष एव निरतिशयतेजस्को "दिवः परो ज्योतिर्दीप्यत इति प्रतिपाद्यते एतावानस्य महिमा अतो ज्यायांश्च पुरुषः पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताऽप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥ समाप्तं ज्योतिरधिकरणम् ।

टी० सू० "उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्" यथा वृक्षाग्रे श्येन इति सप्तम्यन्तर्बहिरधरोर्ध्वभागस्थितिसाधारणी, पञ्चमी तु उपरि स्थित्यसाधारणी, अत उभाभ्यां स्थानविक्षेपात् उपरि स्थितिरेव विवक्षितेति भावः । सूत्रार्थं परमसाध्येन घटयति "तस्मादि"ति, स खल्वात्मस्वरूपे दीप्तिरस्ति तत्कथं ज्योतिर्दीप्यत इत्युक्तज्योतिःशब्दाभिधेयत्वमिति शङ्कां परिहरन् अधिकरणार्थं निगमयति "एतावानि"ति, पुरुषसूक्तवाक्योपादानं विग्रहविशेषज्ञापनार्थम् । ज्योतिरधिकरणं समाप्तम् । अवान्तरसङ्गतिमाह–

स्व० निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम्, इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतया उपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह–

सू० प्राणस्तथाऽनुगमात् ॥ २९ ॥

कौषीतकिब्राह्मणे प्रतर्दनविद्यायां "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य वरं वृणीष्वेति वक्तारम् इन्द्रं प्रति त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति प्रतर्दनेनोक्तः[1] "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वेति श्रूयते तत्र संशयः किमयं हिततमोपासनकर्मतया—

टी० "निरतिशये"ति, ज्योतिश्शब्दाभिधेयमिति आकाशप्राणतेजसां क्रमोपपत्तेः अत एव प्राण इत्यस्यानन्तरं ज्योतिश्चरणाभिधानादित्यधिकरणं सङ्गतमिति भावः । प्रसिद्धवन्निर्दिष्टमिति अनेनाधिकरणयोः पौर्वापर्यनियम उक्तः सर्वाणि ह वा इमानि भूतानीति पूर्वस्मात् पूर्वाधिकरणद्वयविषयवाक्ययोः प्रसिद्धवन्निर्देशो दृश्यते, अत्रापि "अथ यदतः पर इति यच्छब्देन प्रसिद्धवन्निर्देशो दृश्यते तस्मात् ज्योतिरधिकरणं पूर्वाधिकरणद्वयेन सङ्गतम् । एवं सत्युत्तराधिकरणस्य ज्योतिरधिकरणान्तर्भावित्वं प्राप्तमिति भावः । अवान्तरपेटिकानुगतमर्थमाह "कारणत्वव्याप्ते"ति, पूर्वाधिकरणे परमपुरुषस्य ज्योतिश्शब्दाभिधेयत्वमुक्तं तदयुक्तं, परमपुरुषादन्यस्येन्द्रादिशब्दवाच्यस्य वेदान्तवेद्यत्वादिति शङ्कया सङ्गतिरित्यर्थः । तत्र कारणत्वात्मकलिङ्गभूयस्त्वमनुसन्धेयम । सू० प्राणस्तथाऽनुगमात् तत्रेति इन्द्रस्य प्रियं धामोपजगामेत्युपक्रमे इन्द्र—शब्दनिर्दिष्टत्वात् प्राणोऽस्मि प्रज्ञात्मा स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत इति प्राण—शब्देन निर्दिष्टत्वाच्चेन्द्रप्राण—शब्दनिर्दिष्ट इत्युक्तम्, प्राणशब्दस्य परमात्मलिङ्गप्रतिपादकवाक्यस्थत्वेन सिद्धान्तहेतुद्योतकत्वात् सूत्रे प्राण—शब्देन धर्मी निर्दिष्टः न त्विन्द्र—शब्देन, इन्द्रशब्दनिर्दिष्टस्य विचारविषयत्वमार्थमिति सूत्रकाराभिप्रायः इति भावः । जीवमात्रलिङ्गसद्भावेऽपि विशेषका-

१ प्रतर्दनेनोक्ते इति पा० ।

ङ्गायां जीवधर्मस्य इन्द्रशब्दवाच्यप्रकृतजीवविशेषनिष्ठत्वप्रतीतेर्जीवोवेति शिरोऽन्तरं परीक्षमयुक्तमिति भावः । प्राणलिङ्गे सत्यपि प्राणोऽस्मीति सामानाधिकरण्येन प्राणस्य जीवविशेषणत्वप्रतीतेः प्राधान्येन प्रतिपाद्यत्वशङ्काया असम्भवात् प्राणोवेति चानुपन्यस्तम् । कारणवाक्यप्रतिपाद्यं ब्रह्म किं प्रसिद्धजीवभाव इन्द्रः ? उत परमात्मेति विचारः, तदर्थं हिततमोपासन—

सू० इन्द्रप्राणशब्दनिर्दिष्टो जीव एव? उत तदतिरिक्तः परमात्मे? ति, किं युक्तं जीव एवेति, कुतः इन्द्र—शब्दस्य जीवविशेष एव प्रसिद्धेः, तत्समाधिकरणस्य प्राण—शब्दस्याऽपि तत्रैव वृत्तेः अयमिन्द्राभिधानो हि जीवः प्रतर्दनेन त्वमेव वरं वृणीष यं त्वं मनुष्याय हिततमं मन्यस इत्युक्तः मामुपास्स्वेति स्वात्मोपासनं हिततममुपदिदेश हिततमश्चामृतत्वप्राप्त्युपाय एव जगत्कारणोपासनस्यैवामृतत्वप्राप्त्युपायता "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इत्यवगता, अतः प्रसिद्ध जीवभाव इन्द्र एव कारणं ब्रह्मेत्याशङ्कायामभिधीयते सू० "प्राणस्तथानुगमा"दिति, अयमिन्द्रप्राण—शब्दनिर्दिष्टो न जीवमात्रम् अपि तु जीवादर्थान्तरभूतं परं ब्रह्म

टी० कर्मतयेन्द्रप्राणशब्दनिर्दिष्टः किं प्रसिद्ध इन्द्रः ? उत परमात्मे ? ति, तदर्थमानन्दादिगुणाः किं गौणाः ? उत मुख्याः ? तदर्थं किमुपक्रमावगतत्वाष्ट्रहननादिलिङ्गानुरोधेनानन्दादिवर्णनम् ? उत आनन्दादिलिङ्गानुगुणतया त्वाष्ट्रहननादिवर्णनं ? तदर्थं मामुपास्स्वेति किं स्वोपासनमुच्यते ? उत स्वावस्थपरमात्मोपासनमि ? ति विचारः, यदा स्वोपासनोक्तिः तदा त्वाष्ट्रवधाद्यनुगुणम् आनन्दादेर्वर्णनीयत्वेन आनन्दादिगुणानाम् अमुख्यत्वाद्धिततमोपासनकर्मतयोक्त इन्द्र इति जगत्का-

रथं प्रसिद्धजीवभाव इन्द्र इति पूर्वपक्षे फलफलिभावः, यदा स्वावस्यपरमात्मोपासनोपदेशः, तदाऽऽनन्दादिगुणानुगुणं त्वाष्ट्रवधादेर्वर्णनीयत्वादानन्दादिगुणानां मुख्यत्वाद्धिततमोपासनकर्मभूतेन्द्रप्राणशब्दनिर्दिष्टः परमात्मेति सर्ववेदान्तवेद्यं जगत्कारणं ब्रह्म परमात्मेति, राद्धान्ते फलिफलिभावः जीवविशेष एव प्रसिद्धेरिति अनेन जीवमात्रपक्षस्यानुदयस्सूचितः, प्राण–शब्दस्य कथं जीवपरत्वमित्यत्राह "तत्समानाधिकरणत्वे"ति, अनेन प्राधान्येन प्राणपरत्वशङ्कानुत्थानमप्यर्थात्सूचितम् । इन्द्रस्य जीवत्वे कथं कारणस्य जीवानतिरिक्तत्व? मित्यत्राह 'अयमि"ति. स्वात्मोपासनं हिततममुपदिष्टमस्तु ततः किम् इन्द्रस्य जगत्कारणत्व? इत्यत्राह "हिततम"इति, ततः कि? मित्यपेक्षायां मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तिं दर्शयति "जगदि"ति, 'अत इति पूर्वपक्षोपसंहारः । राद्धान्तं प्रतिजानीते "अयमि"ति, उपपादयति–

सू० स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते ।

सू० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ ३० ॥

यदुक्तम् इन्द्रप्राणशब्दनिर्दिष्टस्यानन्दोऽजरोऽमृत इत्यनेनैकार्थ्यादयं परं ब्रह्मेति तन्नोपपद्यते मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमु[1]पास्स्वेति, वक्ता ह्यन्द्रस्त्रिशीर्षाणं त्वाष्ट्रमहनमित्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति,

---

१ अमृतमित्युपास्स्वेति पा० ।

टी० "स एष" इति, अनुगमः—पूर्ववाक्यप्रतीतस्य उत्तरवाक्यसम्बन्धः स्ववाक्यानभिव्यक्तस्य सिद्धान्तहेतोः उत्तरवाक्याभिव्यक्ततयाऽनुगमादित्युक्तम् आकाशाधिकरणे ज्योतिरधिकरणे च, सिद्धान्तहेतोर्हि स्ववाक्यपूर्ववाक्याभिव्यक्ततयाऽनुगमादित्यनुक्तिः सौत्रं तथा पदं साधकाकारपरामर्शित्वेन व्याचष्टे "आनन्दाजरे"ति, प्राणः—परमात्मा तथाऽनुगमात् परमात्मत्वानुगुण्येन अनुगमादिति सूत्रयोजना, तथा—शब्दस्य साध्याकारपरामर्शित्वमप्यभिप्रयन्नाह "तथा सत्येवे"ति, । तथा सतीन्द्रप्राणशब्दनिर्दिष्टे परस्मिन् ब्रह्मणि सत्येवेत्यर्थः, प्राणः परमात्मा तथाऽनुगमात् परमात्मतयाऽनुगमादिति योजना अनुगमक्रियाविशेषणं तथा—शब्दः बुद्धिस्थसाध्यसाधकधर्मवत्तयाऽनुगमो विवक्षित इत्यभिप्रायः । आद्यसूत्रं स एष प्राण एवेत्यादिवाक्यमात्रविषयं व्याख्यातं न तु परैरिव वाक्यान्तरस्थहेतवोऽप्यत्र विवक्षितत्वेनोक्ताः, अध्यात्मसम्बन्धभूमेति द्वितीयसूत्र एव बहुवाक्यस्थहेतुबाहुल्यस्य विवक्षितत्वावगमात्, आनन्दादिगुणप्रतिपादकवाक्यस्य प्राणशब्दचिह्नितत्वात्तद्गतहेतुपरत्वेन हि प्राण—शब्दचिह्नितसूत्रव्याख्यानं युक्तं प्राणशब्दचिह्नितस्याऽपि प्राणोऽस्मीत्यादेरत्रानुदाहरणमन्यविशेषणभूतपरमात्मलिङ्गत्वात्, प्राणोऽपिता इत्यस्यानुदाहरणं तु सूत्रान्तरैकार्थ्यात् श्रौः । सू० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्, निषेध्याध्याहारेण नञर्थमाह "यदुक्तमि"ति, त्वाष्ट्रवधादीत्यत्रादि—शब्देन सालावृकयतिप्रधानदैत्यातिसन्धानपौलोमनिरासेन्द्रशब्दा विवक्षिताः । ततः किमित्यत्राह—

सू० अतः उपक्रमे जीवविशेष इत्यवगम्यते सत्यानन्दोऽजरोऽमत इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत् परिहरति—अध्यात्मसम्बन्धभूमा ह्यस्मिन्नात्मनि यः सम्बन्धः सोऽध्यात्मसम्बन्धः तस्य भूमा—भूयस्त्वं बहुत्वमित्यर्थः आत्मन्याधेयतया संबध्यमानानां बहुत्वेन सम्बन्धबहुत्वं, तच्चास्मिन् वक्तरि परमात्मन्येव हि सम्भवति

"तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमे-वैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिता स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत इति भूतमात्रा—शब्देनाचेतनवस्तुजातमभिधाय

टी० "अत" इति, उपक्रमो बलीयानित्यर्थः, विकारशब्दान्नेति चेन्ने-तिवत् सूत्रे सिद्धान्तखण्डे निषेधवादिशब्दाभावात् खण्डान्तरस्य सिद्धा-न्तपरत्वद्योतनाय परिहरतीत्युक्तम्, भूम—शब्दो भूयस्त्व—शब्देन व्याख्यातः भूम-शब्दस्य प्रकृतिं दर्शयितुं बहुत्वमित्युक्तम्, आपेक्षिकं हि बहुत्वं पूर्वप-त्तयुक्तिबहुत्वादपि बहुतरमिति भावः। सम्बन्धबहुत्वनिबन्धनमाह सम्ब-ध्यमानायामि''ति, सम्बन्धः कीदृश? इत्यत्राह "आधेयतये''ति, अस्मिन्नि-ति पदं व्याचष्टे "तत्त्वे''ति,। आधेयतया सम्बन्धे श्रुतिमाह "तद्यथे''ति, न केवलमुपसंहारवचनमात्रं, किन्तु पूर्वमप्यस्तीति बहुत्वाभिप्रायेण स ए प प्राण एवेत्यादिकमुपात्तम्। पूर्वोपात्तश्रुत्यर्थमाह "भूतमात्रे''ति,। ननु कथं प्रज्ञामात्रा—शब्देन चेतनवर्गाभिधानं? वाग्घ्राणचक्षुः श्रोत्रजिह्वाः पाणिपा-दोपस्थशरीरमनांसि च प्रतिपाद्य, "ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अभिभूतं यद् ह वै दश भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः यद् ह वै न प्रज्ञामात्राः स्युः न भूतमात्राः स्यु''रिति, भूत-मात्राः प्रज्ञामात्राश्च प्रत्येकं दशसङ्ख्याः परस्परसाकाङ्क्षा उक्ताः, तत्र प्रज्ञा-मात्रा—शब्दो गन्धादिचतुष्टयवागादिव्यापारचतुष्टयशारीरसुखदुःखमन्त-व्यविषयज्ञप्तिपरः। यद्वा भोग्या गन्धादयः शरीरानुप्रविष्टभूतांशाश्च भूत-मात्राः दशेन्द्रियाणि प्रज्ञामात्राः प्रत्येकं दशसङ्ख्याश्रवणबलादनुक्ताः पदा-र्थाश्च अजहल्लक्षणया विवक्षिता इत्यभ्युपेत्य प्रज्ञामात्रा—शब्दस्य जीव-परत्वे दशसङ्ख्याविरोधात्। एवं ताश्च ताश्च दश दशोक्ताः, न ह्यन्यतरतो रूपं किंचन सिध्येत् नो एवैतन्नानेत्यासामुभयविधानामपि परस्पराવि-नाभावमुक्त्वा तत्र दृष्टान्तमाह 'तद्यथा रथस्ये''ति वाक्येन, न च वाच्य

यो वै प्राणस्सा प्रज्ञा या प्रज्ञा स प्राणस्सह ह्येतावस्मिञ्छरीरे वसतस्स-
होत्क्रामत इति प्रकृतजीवविषयोऽयम्

सू० प्रज्ञामात्रा-शब्देन तदाधारतया चेतनवर्गं चाभिधाय
तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य

टी० प्रज्ञामात्राशब्द इति मात्रान्तेन प्रज्ञा-शब्देन व्यवहितवा-
क्यस्थकेवलप्रज्ञाशब्दनिर्दिष्टजीवप्रत्यभिज्ञानाभावात् अनन्तरपूर्ववाक्यप्रकृ-
तदशसंख्यप्रज्ञामात्राणामेव स्वतः प्रत्यभिज्ञायमानत्वाच्चेति तदयुक्तम्
अर्थविरोधात्,दृष्टान्तदार्ष्टान्तिकभावानुपपत्तेश्च प्रत्यभिज्ञानस्य भग्नत्वात्,
न हि वागादीन्द्रियाणि भूतमात्राणामाश्रयः भूतसंघातरूपशरीरमेव ही-
न्द्रियाश्रय इत्यर्थविरोधः स्फुटः, तथा दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञा-
मात्रा अधिभूतमिति परस्परसाकाङ्क्षत्वं पूर्ववाक्योक्तम् । अनेनाभिदृष्टान्त-
वाक्ये तु न परस्परसाकाङ्क्षत्वं प्रदर्श्यते,भूतमात्राः प्रज्ञामात्रास्वर्पिता इत्युक्त्वा
प्रज्ञामात्रा भूतमात्रास्वर्पिता इति न ह्युक्तं, तथा सति हि परस्परसाकाङ्क्षत्वे
दृष्टान्तता विवक्षिता स्यात्, अपि तु प्राणेऽर्पिता इत्येवोक्तं, प्राणश्च पर-
मात्मा, अनन्तरमेव स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत इत्युक्तेः, अतो
दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिः, अतः प्रत्यभिज्ञानभञ्जकहेतुसद्भावात्
"तपसा चीयते ब्रह्म" "तस्मादेतद् ब्रह्म"ति वाक्यद्वयस्थब्रह्मशब्दयोरिव
पूर्वापरवाक्यस्थयोः प्रज्ञामात्रा-शब्दयोर्नैकार्थत्वम् । किंच द्वयोर्वाक्ययोर्मि-
थस्सन्निकृष्टत्वेऽपि अन्यतरस्य संभवन्मुख्यार्थस्तयोरैकार्थ्यश्रद्धया न त्याज्यः,
तयोरिव ब्रह्म-शब्दयोस्तथा दर्शनात् प्रज्ञा-शब्दश्च इन्द्रियेष्वमुख्यः, जीवेषु
तु मुख्यः तेषां ज्ञानस्वरूपत्वात्, प्रज्ञा-शब्दोऽपि तत्तदर्थविषयज्ञानपर इति
चेत्तर्हि दृष्टान्तविरोधः, शरीरगतानां भूतमात्राणां वैषयिकज्ञानैर्धार्यत्वा-
भावात्,एवमर्थविरोधादिभिर्भिन्नार्थत्वे सति मात्रा-शब्दः संघातैकदेशाभि-
प्रायः, विशिष्टस्य ब्रह्मण एकदेशभूतानि हि चिदचित्तत्त्वानि । किञ्चा-
स्मिन् प्रकरणे प्राण-शब्दस्येव प्रज्ञा-शब्दस्यापि बह्वर्थविषयप्रयोगदर्शना-
न्नैकार्थनियतत्वम् अतश्च जीवविषयत्वं युक्तमाश्रयितुं विशेषतो जीवे

प्रयुक्तत्वाच्च प्राण–शब्दस्तावन्मुख्यप्राणे प्रयुक्तः, यावदस्मिञ्छरीरे प्राणो वसति तावदायुरिति तथेन्द्रियेषु प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्तीति, तथा परमात्मनि "यत्रैतत्पुरुषः स्वप्नं न कथंच न पश्यति अथास्मिन् प्राण एवैकधा भवती"ति तथा जीवेषु एतास्मादात्मनः प्राणाः यथाऽऽयतनं विप्रतिष्ठन्ते[1] प्राणेभ्यो देवा देवेभ्यो लोका"इति, न चात्र बहुवचनान्तः प्राणशब्दः पञ्चवृत्तिप्राणपरः तस्य सुषुप्तौ उपरत्यभावान्निष्क्रमणानुपपत्तेः, नापीन्द्रियपरः देवशब्देन पृथगुक्तत्वात्, न च देव–शब्दः प्रकाशरूपज्ञानवाची लोक–शब्देन तदुक्तेः अस्वारस्याच्च । न च लोक–शब्दो लोकनीयविषयपरः देवेभ्योलोका इत्यत्र विषयाणां ज्ञानतो निष्क्रमणाभावात्, ज्ञानैर्ग्राह्य इत्यर्थ इति चेन्न पञ्चम्यर्थैकरूप्यभङ्गादस्वारस्यात् । ग्राह्यपदाध्याहारप्रसङ्गाच्च अतोऽस्मिन् वाक्ये बहुवचनान्तः प्राणशब्दो जीवपरः प्राणसाहचर्याज्जीवे प्रयोगः, परमात्मनि तु प्राणशरीरकत्वात् तथा प्रज्ञा–शब्दश्च जीवे तावत्प्रयुक्तः "प्राणोऽस्मि प्रज्ञात्मे"ति, प्रज्ञारूप आत्मा प्रज्ञात्मा तथा "यो वै प्राणस्सा प्रज्ञा या प्रज्ञा स प्राणः स ह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतस्तस्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुषः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवती"ति च । न चायं प्रज्ञा–शब्द उपरितनखण्डगतप्रज्ञाशब्दवन्मनोविषयः सहोत्क्रामत इति वचनात् तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति श्रुत्यन्तरैकार्थ्याच्च, तथा उत्तरत्र वागादीन्द्रियाणां जीवोपकरणत्वप्रपञ्चनेन पृथङ् निर्देशाच्चायं प्रज्ञा–शब्दो जीवपरः, अस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्तीत्युपक्रम्य वागेवास्या एकमङ्गमदूदुहत् प्राण[3] एवास्या एकमङ्गमदूदुहदित्येवमादिपर्यायैः पादपर्यन्तानां करणानां कृत्यमुक्त्वा प्रज्ञैवास्या एकमङ्गमुदूदुहदित्युक्तमत्र ह्यस्या इति चतुर्थ्यन्तं पदं प्रज्ञा–शब्दनिर्दिष्टजीवपरं प्रथमान्तप्रज्ञा–शब्दो हि मनोवाची "नीतिं न विजिज्ञासीत नेतारं विद्यान्न मनो विजिज्ञासीत मन्तारं विद्यादि"ति स्थानप्रमाणात्

१ विप्रतिष्ठन्तीति पा॰

२ श्रवणादिति पा॰ ।

३ प्राण एवास्या इति पा॰ ।

तस्माच्चतुर्थ्यन्तः प्रज्ञा-शब्दः प्रथमान्तप्रज्ञाशब्दवाच्यमनःकरणकजीवविषयः, अतस्सहोत्क्रमणपृथ[1]व्यपदेशाभ्यां यो वै प्राणस्सा प्रज्ञेति प्रज्ञाशब्दो जीवविषयः उत्क्रमणश्रुतिप्रत्यभिज्ञापकत्वात् वागादीनामुपकरणत्वाच्च, बुद्धिपरत्वमप्यनुपपन्नम्, अतो जीवविषयत्वं दृष्टं तथा मनसि च प्रज्ञा-शब्दः प्रयुज्यते न हि प्रज्ञापेता वाक् नाम किञ्चन प्रज्ञापयेदन्यत्र मनो मेऽभूदिति नाहमेतं नाम प्राज्ञासिषमिति, तथा इन्द्रियेषु च दश प्रज्ञामात्रा इति, अतः पूर्वं प्रज्ञा-शब्दनिर्दिष्टो जीवइह प्रज्ञामात्राशब्दोक्तः, जात्यभिप्रायेण एकवचननिर्दिष्टस्य व्यक्त्यभिप्रायेण बहुवचननिर्देश उपपद्यते, यथा "सता सोम्य तदा सम्पन्नो भवति" "सति सम्पद्य न विदुः सति संपत्स्यामहे" इति च। यद्वा मा भूत् प्रज्ञामात्रा-शब्दस्यार्थवैरूप्याश्रयणम् अरनाभिदृष्टान्तवाक्ये प्रज्ञामात्रा-शब्दस्य भूतेन्द्रियाभिमानिदेवतारूपदशविधचेतनपरत्वं स्यात् तदानीमपि तदाधारतया चेतनाधारत्वं परस्यार्थसिद्धम् । एवमेतत्प्रकरणपर्यालोचनासुलभमुपपत्तिजातं सर्वं भाष्य एव व्यक्तीभविष्यति, प्रज्ञामात्रा-शब्देन तदाधारतयेति न हीन्द्रियाणां पृथिव्यादिभूताधारत्वं युक्तमिति भावः । चेतनवर्गमिति प्राकरणिकप्रज्ञा-शब्दैकवचनं जात्यभिप्रायमिति भावः । तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्येति ता वा एता इत्यादि पूर्ववाक्योक्ते परस्परसाकाङ्क्षत्वे दृष्टान्तत्वं न घटते प्रज्ञामात्राणामाधारान्तरकथनादिति भावः । तस्य च परमात्मत्वं कथ? मित्यत्राह—

**सू॰ तमेवानन्दोऽजरोऽमृत इत्युपदिशति तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूते तस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः। अथवाऽध्यात्मसम्बन्धभूमा ह्यस्मिन् परमात्मासाधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः तस्य भूमा बहुत्वमस्मिन् प्रकरणे विद्यते तथा हि प्रथमं त्वमेव मे वरं**

---

१ पृथगुपदेशामिति पा॰ ।

वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति मामुपास्स्वेति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राण-शब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते ।

टी० "तमेवानन्दोजर"इति, एवम् अर्थविरोधदृष्टान्तदार्ष्टान्तिकभाववैघट्यमुख्यत्वप्राकरणिकप्रयोगसाधारण्यैरनुगृहीतस्य श्रुतिवाक्यस्यार्थमुपन्यस्य सूत्रार्थमुपसंहरति 'तदेतदि'ति, एवं प्रथमयोजनायां तद्यथा रथस्यारेष्वित्यादिवाक्यमेकमेव विषयः स्यात् स एष प्राण एवेति एतद्वाक्योदाहरणं वाक्यान्तराण्यपि परब्रह्मपराणि सन्तीति प्रदर्शनार्थं तेन उपक्रमस्वारस्यादपि समुदायस्वारस्यं प्रबलमिति फलितम् । एवमवयविस्वारस्यप्राबल्यस्यार्थसिद्धत्वादपि कण्ठोक्तत्वं युक्तमिति मुखान्तरेण योजयति 'अथवे'ति, पूर्वयोजनायामध्यात्म-शब्दस्य आत्मनीत्यर्थः, अस्यां त्वात्मनि वर्तमानपरोऽध्यात्म-शब्दः उपसंहारवाक्यमुपक्रमबाधितमिति पूर्वपक्षिणोक्तं तत्रेदमुत्तरमुक्तं भवति उपक्रमोपसंहारौ वाक्यावयवौ तयोरवयवभूतयोः परस्परविरोधे उपक्रमप्राबल्यं न त्ववयविविरोधे, अत्र त्वनेकावान्तरवाक्यैः पर्यालोचितैः प्रतिपन्नस्य महावाक्यार्थस्य अवयविनो विरोधे अवयवभूत उपक्रमो दुर्बलः यथा गङ्गायां घोषः प्रतिवसतीत्यादिषु घोषः प्रतिवसतीति पदाभ्यां प्रतिपन्नवाक्यार्थमुपक्रमस्थगङ्गापदं न बाधते अपितु स्वयं तदानुगुणार्थं भवति तद्वदिति । तदेतदभिप्रयन् परमात्मासाधारणधर्मभूयस्त्वं दर्शयति "तथा ही"ति, हिततमं मन्यस इति वाक्यं त्वाष्ट्रवधादेरप्युपक्रमगतस्य उपक्रमोपक्रमस्यापि महावाक्यान्तर्भावात्तदुक्तिः न तु तावन्मात्रस्य साधकत्वाभिप्रायेण लोकाधिपतिः लोकस्वामी सर्वेशः सर्वनियन्ता । ननु पा रक्षण इति धातोः पति-शब्दः तत्कथमत्र शेषिवाचित्वम् ; उच्यते न हि सर्वत्रावयवशक्तिरेव रूढिशक्तिरपि ह्यस्ति अन्यथा गमेर्डोः इति व्युत्पत्त्या गोशब्दस्य सर्वजङ्गमवाचित्वप्रसङ्गात् स्थिताया गोरवाचकत्वप्रसङ्गाच्च, अतः शेषिणि पति-शब्दो रूढः अन्यथा "वृद्धौ च मातापितरौ साध्वी भार्या सुतश्शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीदि"ति

न्यायेन पितुस्संरक्षके पुत्रे पितरं–प्रति पतिशब्दप्रयोगप्रसङ्गादिति। सूत्रार्थं निगमयति "तदेवमि" ति, अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति सूत्रांशः परैरेवं व्याख्यातः, अध्यात्मसम्बन्धः प्रत्यगात्मसम्बन्धः तस्य भूमा बाहुल्यमुपलभ्यते अस्मिन्नध्याये आयुषः प्रभुत्वमिन्द्रियाश्रत्वं शरीरोत्थापकत्वं विषयेन्द्रियादिविज्ञानप्रतिप्रक्षेपेण प्रत्यगात्मवेदनं चोपदिश्यत इति, अपरैश्च प्रज्ञादेहेन्द्रियमनःप्राणात्मनां सम्बन्धोऽध्यात्मसम्बन्धः स भूयानिति व्याख्यातं, तदयुक्तमायुरधिपतित्वादीनां मनःप्राणसम्बन्धित्वादीनां च परमात्मसाधकत्वाभावात् इन्द्रसंज्ञकदेवताविशेषे तात्पर्यनिषेधपरं सूत्रमिति चेन्न इन्द्रस्य शरीरेऽपि प्राणेन्द्रियमनःप्रभृतीनां विद्यमानतया तत्प्रतिक्षेपासामर्थ्यात् अस्मिञ्छरीर इति निर्देशो हीन्द्रशरीरेऽपि हि सम्भवति "सदेव सोम्येदमितीदं शब्दवत् सर्वनामपदस्य साधारणत्वात् प्रत्यगर्थविषयस्योपदेशस्य पराचीनदेवताविषयत्वमयुक्तमिति चेन्न, इन्द्रस्यापि स्वात्मानं प्रत्यहमिति प्रत्यक्तयाऽवभासात् प्राणोऽस्मि मामुपास्वेति हि तद्वाक्यम् इन्द्रमात्रस्य प्राधान्यतः प्रतिपाद्यता प्रतिक्षिप्यत इति चेन्न प्राणेन्द्रियमनआदिसंबन्धानां तत्प्रतिक्षेपासामर्थ्यात्, सौत्रवचनव्यक्त्यनुगुणता च न स्यात् प्राणपरमात्मेति प्रतिज्ञातमाद्यसूत्रे द्वितीयसूत्रस्थेन नञा परमात्मत्वमेव निषेध्यं न परमात्मेति पूर्वपक्षिते तत्प्रतिसमाधानपरेण परमात्मैव प्राण इति प्रतिज्ञाय समर्थनीयं, न परमात्मेति वदन्तं प्रति नेन्द्र इत्युक्ते कः प्रतिक्षेपः न घटोऽस्तीत्युक्ते न पट इतिवत् तयोर्विरोधाभावात्, परमात्मत्वे प्रतिज्ञाते मनःप्राणसम्बन्धादयस्तु न परमात्मत्वसाधनसमर्थाः। ननु नायं परमात्मा अपि त्विन्द्र इति प्रतिज्ञाते सति नेन्द्र इति प्रतिविधानमयुक्तमिति चेन्न त्वदुक्तयुक्तेरिन्द्रप्रतिक्षेपकत्वाभावात्, अस्तुवा तत्प्रतिक्षेपः ततः किं स तु परमसाध्यस्य परमात्मपरत्वस्योप–

सू० तथा "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषती" ति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः

तथा तद्यथा "रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता" इति, सर्वाधारत्वं च तस्यैव धर्मः तथा "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत इत्येतेऽपि परमात्मन एव धर्माः, एष लोकाधिपतिरेष सर्वेश इति च परमात्मन्येव सम्भवति तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः, कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशस्सङ्गच्छत? इत्यत्राह—

सू० श्रीः शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ ३१ ॥

प्रज्ञातजीवभावेनेन्द्रेण मामेव विजानीहि मामुपास्स्वेति उपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपि तु शास्त्रेण स्वात्मदृष्टिकृतः, एतदुक्तम्भवति अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि "ऐतदात्म्यमिदं सर्वम्" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा यः आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहन्त्वमादिशब्दानां परमात्मन्येवपर्य्यवसानं ज्ञात्वा मामेव विजानीहि मामुपास्स्वेति स्वात्मशरीरं परमात्मानमेवोपास्यत्वेनोपदिदेशेति वामदेववत्—

टी० योगीति चेन्न परमसाध्यस्याव्यवहितसाधकहेतूपस्थापकत्वे स-म्भवति परम्परया साधकार्थपरत्वेन निर्वाहानुपपत्तेः । उत्तरसूत्रं शङ्कायामवतारयति "कथं तर्ही" ति, प्रज्ञातजीवभावस्येति "इदि परमैश्वर्ये" इत्यादि-प्रकृतिप्रत्ययविभागेन परमात्मपरत्वमिन्द्रादिशब्दानामयुक्तं त्वाष्ट्रवधादि-लिङ्गनिर्वाहानुपपत्तेः, तत्कथमिन्द्र—शब्देन परमात्मनिर्देश इति भावः । पूर्वं परमात्मपरत्वसाधकहेतुरुक्तः पूर्वपक्षयुक्तेः कः परिहार ? इत्यपेक्षायां सूत्राव-तार इत्यर्थः । सू० श्रीः शास्त्रदृष्ट्या तूपदेशो वामदेववत् कीदृश उपदेश ? इत्यत्राह "प्रज्ञाते" ति, शास्त्रदृष्टिशब्दस्य व्यवच्छेद्यमाह "न प्रमाणा-न्तरे" ति, शास्त्रस्य दृष्टिः शास्त्ररूपा दृष्टिरिति च प्रतीतिः स्यादिति तद्व्या-वृत्त्यर्थमाह "शास्त्रेणे" ति, कस्य दृष्टिरित्यपेक्षायां ? स्वात्म—शब्दः स्वानुभव-प्रत्यक्षेण आत्मावलोकने जीवमात्रप्रकाशः शास्त्रेण तन्मूलयोगेन चा-त्मानुभवे परमात्मपर्यन्ततया प्रकाश इति भावः । न हि प्रमाणविशेषेणा-न्यत्प्रमेयम् अन्यद्भवति । तच्च शास्त्रं किं ? मित्यत्राह "एतदुक्तमि" ति, जीव-वाचिपदानां परमात्मसामानाधिकरण्योपपादिकां श्रुतिमुदाजिहीर्षन्नाम-रूपव्याकरणश्रुतिमाह "अनेने" ति, जीवेऽप्यनुप्रवेशं दर्शयितुमाह "ऐतदा-त्म्यमि" ति, तदेव स्पष्टयति "अन्तःप्रविष्ट" इति, शरीरत्वतल्लक्षणे दर्श-यति "य आत्मनी" ति, पर्यवसानं ज्ञात्वेति नामरूपव्याकरणश्रुतिलब्धार्थ उक्तः, उपदिदेशेत्यन्तेन शास्त्रदृष्ट्या तूपदेश इत्यंशो व्याख्यातः । वामदे-ववदित्यंशं व्याचष्टे—

सू० यथा वामदेवः परस्य ब्रह्मणस्सर्वान्तरात्मत्वं सर्वस्य तच्छ-रीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्यवसानं पश्यन्नहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सा-मानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति "तद्धैतत्पश्य-न् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च अहं कक्षी-वान् ऋषिर्विप्र इत्यादि यथा च प्रह्लादः "सर्वगत्वादन-

न्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातन" इत्यादि वदति, अस्मिन्प्रकरणे जीववाचिभिश्शब्दैश्चिद्विशेषाभिधायिभिस्तोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणञ्चोद्यपूर्वकमाह—

सू० श्रीः जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्या दाश्रितत्वादिह च तद्योगात् ॥ ३२ ॥

"न वाचं विजिज्ञासीत वक्तारं विद्यात्त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम् इत्यादिजीवलिङ्गाद्यावदस्मिन् शरीरे प्राणो वसति तावदायुः अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेतीति चेन्न उपासात्रैविध्याद्धेतोः—उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम्

टी० "यथे"ति, शरीरिणि पर्यवसानं पश्यन्नित्यन्तेन तद्वैतत्पश्यन्नित्येतद्व्याख्यातम्, उक्तार्थविशदीकरणायाह "यथा च प्रह्लाद"इति. उत्तरसूत्रमवतारयति "अस्मिन्नि"ति, जीववाचिभिरित्यादि त्वाष्ट्रवधादिलिङ्गप्रतिपादनकारणमपि कथनीयमित्यभिप्रेतम्, उपरितनग्रन्थानुगुण्यात् कारणं प्रयोजनरूपम् उपदेष्टुमिति हि वक्ष्यते। चोद्यपूर्वकमाह न तूक्तार्थप्रतिक्षेपार्थकं चोद्यं विशेषणांशे तात्पर्यं प्रतीयत इति तस्य योजनमेव प्रष्टव्यन्तच्चोद्यरूपेण पृष्टवान् इत्यर्थः । सू० जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् "न वाचं विज्ञासीत वक्तारं विद्यादिति न केवलं मद्वचनमेव विजानीहि वक्तारं माञ्च विजानीहीत्यर्थः, मुख्यः प्राणः पञ्चवृत्तिः, मुख्य-शब्दः इन्द्रियादिव्यावृत्त्यर्थः । नञो निषेध्याकाङ्क्षायामनतिविप्रकृष्टं सौत्रं पदमध्याहृतम्, अध्यात्मेति हेतुत्वं

विवृणोति "उपासने"ति, उपदेष्टुमित्यनेन प्रयोजनतया हेतुत्वं स्पष्टम् त्रैविध्यं विवृणोति—

सू॰ निखिलकारणभूतब्रह्मणः स्वरूपेणानुसन्धानं—भोक्तृवर्गशरीरकत्वानुसन्धानं भोग्यभोगोपकरणशरीरकत्वेनानुसन्धानञ्चेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः, तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेऽप्याश्रितम् ।

टी॰ 'निखिले'ति, स्वरूपेणानुसन्धानम्—अष्टगुणविशिष्टानुसन्धानं त्रिविधानुसन्धानस्य प्रमाणमूलत्वे सिद्धे ह्ययं निर्वाह उपपन्नः स्यादिति शङ्कायाम् आश्रितत्वादित्येतद्व्याचष्टे "तदिदमि"ति, कुत्रेत्यपेक्षायां प्रकरणान्तरेष्वपीत्युक्तम्, आश्रितं प्रतिपन्नमित्यर्थः तत्स्रष्ट्वेत्यादि सत्यं ज्ञानमनन्तमिति देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणो ब्रह्मविदाप्नोतीति वेद्यत्वविधानात् प्रकरणस्य वेद्यब्रह्मप्रतिपादनपरत्वात् स यः एवं विदिति निगमनवाक्येऽपि पूर्वोक्तसमस्तप्रकारविशिष्टवेदनप्रतीतेश्च चिदचिच्छरीरकत्वानुसन्धानमत्र विवक्षितमिति भाष्याभिप्रायः । ननु स यश्चायम्पुरुषे यश्चासावादित्ये स एक इत्युक्त्वाऽनन्तरं स य एवं विदिति वाक्येन जीवान्तर्यामिण आदित्यान्तर्वर्त्तिनश्च उपासनमुच्यते इति चेत् न स्थानभेदेन विद्याभेदप्रसङ्गात्, स चानुपपन्नः एतमानन्दमयमात्मानमुपसंक्रामतीत्यानन्दमयप्राप्तिफलश्रवणेन ब्रह्मविदाप्नोति परं तस्माद्वा एतस्मादात्मन इत्यादितोऽनन्दमयविषयविद्यैकत्वावगमात् । प्रकरणस्य सम्भवत्येकवाक्यत्वे वाक्यभेदानुपपत्तेश्च स यश्चायमित्यादिवाक्ये किमुच्यत इति चेत् त्रिविधानुसन्धानरूपैकविद्याया मोक्षफलकत्वेन विवक्षितत्वे सति तत्र स्वरूपेणोपास्यतस्य अनुसन्धाने ज्ञानादिगुणवद्दिव्यविग्रहयोगस्याप्यनुसन्धेयतासिद्ध्यर्थं पुण्डरीकाक्षमप्राकृतवपुरतिदिश्यते, तत्र स यश्चायं पुरुष इति विज्ञानमयादन्तरस्यानन्दमयस्यानुवादः, यश्चासावादित्य इति विग्रहातिदेशः । किञ्चानन्दमयप्रतिपादनानन्तरं ब्रह्मविदाप्नोतीत्युपक्रमाभिहितप्राप्तिविशदीकारार्थम् अथातोऽनुप्रश्ना इति प्रश्ना उपक्षिप्ताः पूर्वप्र-

तिपादनस्य बुभुत्साहेतुत्वमतश्शब्देनोच्यते उताविद्वानिति उत विद्वानिति पदं निपातस्येति छान्दसो दीर्घः, अथासपत्नानितिवत् अविद्वानिति पदे सति ह्याद्युदात्तत्वं स्यात् नञ्सुभ्ये तुल्यार्थैरित्यादिश्रवणात् अविद्वान् प्रति गृह्णातीति वत् अन्तोदात्तश्चेदं पदं तस्माद्विद्वानिति पदं कश्चन अविप्रकृष्टहृदयादिस्थानस्यमनवच्छिन्नञ्च ब्रह्मोपासीनो विद्वान् किमतः प्रेत्यामुं लोकं परमे व्योमन्नित्युक्तं लोकङ्गच्छतीत्येकः प्रश्नः उत गत्यनपेक्षमिहैव ब्रह्माप्नोतीत्यर्थसिद्धः प्रश्नः आहो विद्वानिति समश्नुता इति भोक्तृत्वं विवक्षितं कश्चिदहंग्रहेणोपासीनोऽपि विद्वान् अमुं लोकङ्गत्वा किं समश्नुते भोग्यभूतं ब्रह्मानुभवतीत्येकः प्रश्नः । उत ब्रह्मस्वरूपेणैकी भवतीत्यर्थसिद्धः प्रश्नः एवं शास्त्रवैविध्यमूला गतिविशेषस्वरूपभेदभावाभावविषयाः प्रश्नाः बहुवचनविवक्षिताः, एतान् प्रतिवक्तुं जगत्कारणत्वौपायिकगुणविशिष्टस्यैव विलक्षणस्य ब्रह्मणः प्राप्यत्वादिज्ञापनाय सोऽकामयतेत्यादिना जगत्कारणत्वादिकं निरतिशयानन्दपर्यन्तं महिमानमुक्त्वा स यश्चायमित्यादि वदति सन्निकृष्टहृदयस्थं वा विप्रकृष्टरविमण्डलादिस्थानस्थं वा पूर्वोक्तं सत्य-

सू० "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मे"त्यादिषु स्वरूपानुसन्धानं "तत्सृष्ट्वा तदेवानुप्राविशत्" तदनु प्रविश्य सच्च त्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च निलयनं चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च सत्यं चानृतञ्च सत्यमभवदित्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम् इहापि प्रकरणे तत् त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः ।

त्वादिलक्षणमानन्दादिगुणकं वा ब्रह्मोपासीनः सर्वोऽपि विद्वान् अस्माल्लोकात् प्रेत्य अचमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतम्भोक्ता सन् अनुभवतीति प्रश्नस्योत्तरमुक्तम् । अतस्सर्वेषां विद्याविशेषनिष्ठानामर्चिरादिगतिमत्त्वम्भोक्तृभोग्यभावेन अवस्थानञ्च प्रति-

पादयितुं सन्निकृष्टविप्रकृष्टस्थानविशेषोपलक्षणार्थं स यश्चायमित्याद्युक्तं, तस्मादादित्यान्तर्वर्त्तितया उपासनमानन्दवल्ल्यात्र विधित्सितम् । अत उक्तलक्षणत्रिविधोपासनमेव अत्र विवक्षितम् । एवम्भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदित्यादीनि श्रुत्यन्तराणि च विवक्षितानि, त्रिविधोपासनस्य स्फुटतरत्वात् भोक्तृभोग्ययोरीश्वरविधात्वं कथ?-मित्यपेक्षायां चिदचिदनुप्रवेशादीश्वरस्य तत्प्रकारित्वमिति त्रिविधोपासनपरश्रुत्यन्तरार्थविशदीकारहेतुत्वादानन्दवल्लीवाक्यमिहोदाहृतम् । अन्यत्त्वभिप्रेतम् । इह तद्योगादित्येतद्व्याचष्टे "इहापी"ति, आनन्दोऽजरोऽमृत इति स्वेन रूपेणानुसन्धानं, प्राणोऽस्मीत्यचिद्विशिष्टानुसन्धानं, मामुपास्स्वेति चिदचिद्विशिष्टानुसन्धानमिति त्रिविधानुसन्धानमिहोपपद्यत इत्यर्थः । त्रिविधानुसन्धाने कर्तव्येऽप्यत्र चिद्विशेषाविद्विविशिष्टत्वोक्तिः कथं सामानान्येन चिदचिद्विशिष्टानुसन्धानं हि प्रकरणान्तरोक्तमित्यपेक्षां प्रशमयन् अस्यन्यायस्य प्रतर्दनविद्यामात्रविषयत्वं च निवारयन् विशिष्टोपासनपरत्वचिह्नं च दर्शयति—

सू० एतदुक्तम्भवति यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणाञ्च परमात्मासाधारणधर्मयोगस्तदभिधायिनां शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितमिति

टी० "एतदुक्तम्भवती"ति, यत्रेति, अयं न्यायो न प्रतर्दनविद्यामात्रविषयः अपि त्वीदृशसर्वप्रकरणविषय इति भावः । सामान्येन चिदचिद्विशिष्टोपासनं हि विहितत्वात् स्वीक्रियते विधेरवैयर्थ्यार्थञ्च, तथा चिदचिद्विशेषविशिष्टोपासनं विहितञ्चेत् तत्र तत्र चिदचिद्विशेषान्तर्यामित्वमनुसन्धेयमित्यभिप्रायेणाह "हिरण्यगर्भादी"ति, हिरण्यगर्भादिजीवविशेषाणामिति पदेन परमात्म—शब्देन च परमात्मा व्यवस्थितः "स ब्रह्मा स शिवस्सेन्द्र" इति श्रुतिः स्मर्यते । अनन्यपरेण नारायणानुवाकेन सर्व-

विद्यासूपास्यो नारायण एवेति निर्णीतत्वादिन्द्राद्युपासनेपि तदन्तर्यामि-नारायण एवोपास्य इति भावः । पाशुपताधिकरणे तथानुवदिष्यमाणत्वात् । परमात्मपर्यन्तत्वविवक्षाज्ञापकं द्विविधं प्रदर्शयति "परमात्मासाधारणे"ति परमात्मासाधारणधर्मयोगात्तद्वाचिशब्दसामानाधिकरण्याच्च विशिष्टो पासनपरत्वमवगम्यत इत्यर्थः । अधिकरणार्थमुपसंहरति "अत" इति, अत्र कैश्चिदेवं वर्णितं—प्राणव्यापारस्यापि परमात्मायत्तत्वात्तत्सङ्कीर्त्तनं जीव-संकीर्तनं तु तस्यौपाधिकभेदप्रतिक्षेपेण परब्रह्मरूपताज्ञापनार्थम्, अन्यथा त्रिविधमुपासनं प्रसज्येत ततश्च वाक्यभेदः स्यादिति तदयुक्तं नित्योपल-ब्ध्यनुपलब्धिप्रसङ्गः, अपीतौ तद्वत्प्रसङ्गादिति वत् प्रसङ्ग—शब्दस्याश्रुतत्वात् वाक्यभेदाभावाच्च एकवाक्येनैव हि विधीयते तम्मामायुरमृतमित्युपास्स्वे-त्यत्र मामिति जीवविशिष्टता [1]युक्ता आयुरिति प्राणविशिष्टता आयुः प्राण इति श्रुत्यन्तरवाक्यम्, अमृतमिति स्वेन रूपेणावस्थितिरतः एवंविध-परमात्मानमुपास्स्वेत्येकवाक्यत्वमुपासात्रैविध्यविधानस्य वृत्तिकाराभिम-त्वात् तदनतिक्रमाय परैरेवं त्रिविधोपासनपरत्वेन योजनान्तरं कृतं तत्र ज्ञानक्रियाशक्तिद्वयाश्रयबुद्धिप्राणरूपोपाधिधर्मेण स्वधर्मेण च त्रिविधं ब्रह्मोपास्यमिति तदयुक्तं, जीवेश्वरभेदस्यान्तःकरणरूपोपाध्यवच्छेदकक-ल्पितत्वाभावात् "यस्यात्मा शरीरम्मनोमयः प्राणशरीर" इति जीवप्राणयोः परमात्मानं प्रति शरीरतया प्रकारत्वस्य श्रुतत्वेन प्रकारान्तरेण त्रैवि-ध्यकल्पनायोगाच्च । अन्ये त्वेवमाहुः उपासात्रैविध्येन वाक्यैकत्वं प्रज्ञाश-रीरो जीवशरीरः प्राणशरीरश्च परमात्मोपास्यः तत्र प्रज्ञाशरीरो मनोमयः जीवशरीरो वाङ्मयः, वाक्—छन्दः शब्दपरिणामशक्तियोगात् परमाका-शविषयः, अतो वाङ्मयाकाशशरीरः आकाशशरीरत्वं च जीवशरीरत्वप-र्यन्तं तस्यान्ते सुषिरं सूक्ष्मं तस्य मध्ये महानर्भिरिति हृदयाकाशमध्येऽ-

**सू० अतोऽत्रेन्द्रप्राण—शब्दनिर्दिष्टो जीवादर्थान्तरभूतः पर-मात्मैवेति सिद्धम् ॥ समाप्तमिन्द्रप्राणाधिकरणम् ॥**

[1] जीवविशिष्टतोक्ता पा० ।

इति श्रीमद्भगवद्रामानुजाचार्य्यचरणकृतौ शारीरकमीमांसाभाष्ये समन्वयस्य प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

ग्नि-शब्देन जाठराग्निपरमात्मज्वालया संसृष्टं जीवमभिधाय तस्याशिखाया मध्ये परमात्मा व्यवस्थित" इत्याम्नानादिति, तदनुपपन्नं मनोमयादिव्यूहानाम् अप्रामाणिकत्वस्य पूर्वमेव दर्शितत्वात् । किञ्चास्मिन् प्रकरणे प्रज्ञा-शब्दस्य सहोत्क्रमणपृथग्व्यवहाराभ्यां स्थानप्रमाणेन च जीवप्रसिद्धमनोविषयत्वोपपादनेन ईश्वरप्रज्ञाशक्तिवाचित्वाभावात् प्राण-शब्दस्य घटशब्दस्योदकाहरणशक्तिवाचित्वाभाववत्, क्रियाशक्तिवाचित्वाभावाच्च, अतः प्रज्ञाप्राण-शब्दौ न मनोमयप्राणमयवाचकौ । यदि प्रसिद्धमनोवाक्प्राणा एतत्कार्यभूताः विवक्षिताः तर्ह्यस्मिन् प्रकरणे चक्षुःश्रोत्रादीनामपि प्रकृतत्वात्तेषाञ्च परमात्ममयत्वादुपासात्रैविध्यं विरुध्यते आकाशशरीरत्वं जीवशरीरपर्यन्तमित्यप्ययुक्तन्तस्य मध्ये महानग्निरित्यग्नि-शब्दस्य जीववाचित्वाभावात्, तत्र यस्साग्निर्नित्यं स्यात्यामग्निरिवार्पितः आत्मानं तं विजानीयादिति स्मृतिवचनन्तु न जीवस्य श्रुतावग्नि-शब्दवाच्यत्वे प्रमाणं, किन्तु स्थानस्थानिनोर्वैलक्षण्ये दृष्टान्तमात्रसमर्थकं, वाङ्मयस्य जीवशरीरकत्वम्भवत्प्रक्रियया विरुद्धञ्च प्राणमयस्यान्तर्यामित्वाभ्युपगमात्, अन्तर्यामिणो जीवशरीरकत्वश्रवणाच्च "यस्यात्मा शरीरं स त आत्मान्तर्याम्यमृत" इति हि श्रूयते, तमोऽधिष्ठातृतयाऽभ्युपगतस्य वाङ्मयस्य जीवशरीरकत्वं श्रुतिविरुद्धञ्च, यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरमित्यारभ्य एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति समानप्रकरणे नारायणस्यैवान्तर्यामित्वश्रवणात्, धर्मैक्यात्सर्वमुपपन्नमिति चेन्न सर्वेषां व्यूहानां सर्वधर्मसम्भवेन व्यूहत्रयतद्व्यापारविभागव्यवस्थोपन्यासानुपपत्तेरतो यथोक्तमेव उपासात्रैविध्यमिति सिद्धम् ॥

इन्द्रप्राणाधिकरणं समाप्तम् ।

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसे(१)वासमधिगतभगवद्रामानुजाचार्यचरणप्रणीतशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

(१) "गुरुभ्योऽर्थः श्रुतो यस्त्व"ति प्राथमिकप्रतिज्ञानुरोधेन व्याख्यानान्तराणि निबध्नद्भिरिव प्रणीतायामित्येवमादि अविलिख्य प्रकाशिकाकृद्भिर्विलिखितायामिति व्यलेखि ।



अत्र पादे ११ एकादशाधिकरणानि गौणसूत्राणि तु विंशतिः । २० ।
सर्वसंकलने तु एकत्रिंशत् सूत्राणि ।

